प्रकृत्यादिपरीक्षाभिर्निबन्धो यो विजृम्भते । तस्यास्य तत्तदंशेषु सारः संक्षिप्य दर्श्यते ॥

केषां तत्त्वानामिह सङ्ग्रहो यदयं नाम्ना तत्त्वसङ्ग्रहः प्रथते ? । सौगतसमयसिद्धानाम् । ननु न पञ्चस्कन्धाः पदार्थाः प्रदर्श्यन्ते, न वाऽऽयतनानि, न वा धातवः, न वा मार्गः, कथमिह तत्त्वानां सङ्ग्रहः ? । सत्यम् । अप्यवगतैस्ताद्रूप्येण प्रणश्यति मोहबीजमविद्या ? । न । अथ कथं तानि तत्त्वानि ? । ताद्रूप्येणावगतानि न तत्त्वत इति चेत् । कानि तत्त्वं तेषाम् ? । प्रतीत्यसमुत्पादता, क्षणभङ्गुरता, स्वलक्षणता, निरात्मता च । न चैतानि तत्त्वानि दृष्टमात्रेषु स्कन्धेषु, निरूपितेषु वा स्कन्धायतनादिषु लक्षणतः, प्रपञ्चितेषु वाऽवान्तरप्रभेदेन, भवन्त्यवधृतानि । नाप्यनवगतपारमार्थिकापारमार्थिकविभागेषु तेषु । तर्हि तान्येव मुख्यानि, तत्त्वमिति व्यपदेशं च तान्येवार्हन्ति यैः प्रकारैरवगमादविद्या प्रणश्येत्, तानि च नैरात्म्यादितत्त्वानि परीक्षैकसमधिगम्यानि । परीक्षायां प्रवृत्तस्य तु भवति विप्रतिपत्तिः—किं सात्मकानि उत निरात्मकानि, किमनुगतरूपाणि उत स्वलक्षणानि, किं स्थिराणि उत भङ्गुराणि, किं प्रतीत्यसमुत्पादस्वभावानि उत प्रकृतिपुरुषादिसापेक्षाणि, किमेतानि सर्वाणि परमार्थभूतानि उत नेति । मूलं च विप्रतिपत्तिषु लोकवादा वादिवादाश्च । अदुष्टैस्तु तर्कैर्विचारयतः प्रशाम्यन्ति विप्रतिपत्तयः । प्रकाशन्ते च नैरात्म्यादितत्त्वरत्नानि । तदिदमभिप्रेत्यैव चायं निबन्धकारो निःश्रेयसार्थिनां तानि तत्त्वरत्नानि परीक्षामुखेनावगमयन्निबन्धमेनमकरोत् । तस्मादयं तत्त्वसङ्ग्रह इति मुख्यामाख्यां लभते ।

**निबन्धस्यास्य सारविचारः ।**

**तत्र निरालम्बनविज्ञानमात्रपारमार्थ्यम् ।**

यद्बाह्यार्थपरीक्षायां विज्ञानं वस्तु वर्ण्यते ।
तस्यैव सारभूतेति तत्सारे दृष्टिरर्प्यते ॥

योऽयं व्यवहारो भूतभौतिकाद्याश्रयः स सर्वः सांवृतः, न परमार्थः । यदमी न परमार्था बाह्याः पदार्थाः । तथाचोक्तम्—

'बाह्यो न विद्यते ह्यर्थो यथा बालैर्विकल्प्यते । वासनालुण्ठितं चित्तमर्थाकारं प्रवर्तते ॥'

यद्येवं प्रमाणप्रमेयविभागासम्भवात् सर्वव्यवहारोच्छेदः । नैतत् । उपपद्यते हि चित्तमात्रेण स विभागः । कथम् । कथं वा बाह्येऽर्थे सत्युपपद्यते । ग्राह्यो बाह्योऽर्थः प्रमेयं प्रमाणं चित्तमिति । बाह्यो ग्राह्य इति व्याहतम्, नह्यसम्बद्धस्य ग्रहणम् । नच सम्बन्धस्तयोरर्थविज्ञानयोर्बाह्याभ्यन्तरयोः कश्चिदस्ति । सम्बन्धस्तु तादात्म्यमुत्पाद्योत्पादकभावो वा । प्रथमस्तु नेति व्यक्तम् । न द्वितीयः, नहि विज्ञानेनार्थस्योत्पत्तिः, न चार्थेन विज्ञानस्य, स हि स्वस्वपूर्वसमनन्तरविज्ञानहेतुजः । ननु समनन्तरमात्रेण न प्रत्ययसम्पत्तिः । नीलपीतादिविज्ञानवैचित्र्ये हि प्रत्ययकोटौ प्रविशति बाह्योऽर्थः । तर्हीन्द्रियमपि तथेति स्यात्तस्यापि ग्राह्यता । ननु बाह्योऽर्थः स्वं रूपं नीलाद्याकारं विज्ञानेऽर्पयन्भवति वैचित्र्ये हेतुरिति ग्राह्यता बाह्यस्य । अन्याकारस्यान्यत्रार्पणमिति तु दुर्घटम् । नह्याश्रयमपहायान्यत्रापसरेदाकारोऽयम्, नवाऽपसारयेद्विभज्यात्मनो नीलादिराश्रयः । ननु सारूप्यापादनमर्पणमुच्यते । अयं बाह्यो नीलादिः सरूपं नीलं घटयति विज्ञाने । तर्ह्यलीकाः स्युराकारा ज्ञाने समाहिताः । वैषम्यात् बाह्याकारतः, चित्रास्तरणे विद्यमाना ह्याकारा नीलादयोऽन्यान्ये । ज्ञानस्य त्वेकतया तदनन्यानां ज्ञानाकाराणामेकतैव वाच्या । न बाह्याकारबहुत्वनिबन्धनं बहुत्वम् । ज्ञानबहुत्वापत्तेः । यथा बाह्यो न तथाऽयमान्तराकार इत्यलीक एव भवेत् । सर्वथा सारूप्ये जडता च प्रसज्येत । तदलीकानामेवाकाराणामन्ततो ग्राह्यता

प्राप्तेति न समीहितार्थलाभः। सारूप्यापादकतालक्षणं ग्राहकत्वमन्ततो भाक्तमेवेति न मुख्यमपि। बाह्यार्थवादिनाऽप्येवं ग्राह्यतानिर्वाहाय विज्ञानसाकारत्वे आश्रयणीये विज्ञानाकारवैचित्र्येणैव प्रमाण-प्रमेयविभागनिर्वाहे कृतं बाह्येनार्थेन। अनाश्रित्य विज्ञानस्य साकारतां बाह्यार्थस्य ग्राह्यत्ववर्णनं सुतरां न घटते। असम्बन्धात्। ज्ञानाकारवैचित्र्ये च पूर्वपूर्वविज्ञानगता शक्तिः पूर्वपूर्वविज्ञानवैचित्र्योद्भावित-वासनापरिपाकलक्षणा कारणमिति कादाचित्कत्वोपपत्तिराकारवैचित्र्यस्य। अनादित्वाच्च भवचक्रस्य नान्योन्याश्रयणप्रसङ्गावकाशः। तद्विज्ञानमेव वासनावैचित्र्यान्नीलपीताकारमवभासते। न बाह्यो नीलादिः परमार्थः। सहोपलम्भनियमाच्च नीलादिराकारो विज्ञानादभिन्नः। तस्मात्—योऽयं नीलाद्यवभासः स विज्ञानावभास एव। ननु कथमेतत्?, ग्राहकेण हि ग्राह्यादन्येन भाव्यम्। तत्संवित्तावसंवित्तिः। नैतत्। अप्रसिद्धोपलम्भस्य नार्थवित्तिः प्रसिद्ध्यति। अनुभवो ग्राहको न प्रकाशते ग्राह्यस्तु केवलं प्रकाशत इति विप्रतिषिद्धं वचनम्। ग्राह्यस्य प्रकाशो ह्यनुभव एव, स चायमजडात्मा न प्रकाशत इति व्याहतं वचः। जडस्य त्वर्थप्रकाशकता नैवोपपद्यते। तस्मात्—अयं नील इत्यादिजाग्रद्विज्ञानं स्वाप्नविज्ञानवत् स्वावभासमात्रम्। बहिर्वदवभासस्तु वासनाविपर्ययकृतो भ्रम एव। ननु—अनेनेदमुक्तं भवति—विज्ञानं ग्राहकान्तरनिरपेक्षं ग्राह्यान्तरनिरपेक्षं स्वात्मानं स्वस्मादभिन्नमाकारं च गृह्णातीति। इदं चानुपपन्नम्—एकस्यैव कर्तृकर्मक्रियात्मतानुपपत्तेः। सत्यम्। न वयमात्मसंवेदनतां ग्राह्यग्राहकभाव-लक्षणां ब्रूमः। किंतु—

"विज्ञानं जडरूपेभ्यो व्यावृत्तमुपजायते। इयमेवात्मसंवित्तिरस्य याऽजडरूपता॥
क्रियाकारकभावेन न स्वसंवित्तिरस्य तु। एकस्यानंशरूपस्य त्रैरूप्यानुपपत्तितः॥
तदस्य बोधरूपत्वाद्युक्तं तावत्स्ववेदनम्।" [ ५५९ ]

प्रकृत्या प्रकाशात्मतया नभस्तलवर्त्यालोकवद्विज्ञानं समुत्पद्यते स्वप्रत्ययेभ्यः। एतत्स्वभावतै-वास्याः स्वसंवेदनता सेयं विज्ञप्तिः। स्वानन्यनीलाद्याकारा च पूर्वपूर्ववासनापरिपाकात्समुपजायते इति तैश्चाकारैरुपलक्षिता प्रकाशमाना स्वसंवेदनरूपैव। इयांस्तु विशेषः—ये पुनरेते नीलाद्याकारा अपरमार्था नाम ते, अनाद्यविद्यामूलवासनापरिपाककल्पितत्वात्। तत् अभूतानामेषां संवेदनकर्मत्वस्य सुतरां न प्रसङ्गः। "अभूतमाकारं वेत्तीति व्यपदिश्यते विभ्रमात्, नहि तत्त्वेन वेत्ति, निर्विषयं हि तत्"। [५७३]

उक्तं च—

"अभूतकनकाकाशशुद्धिवद्बुद्धिरिष्यते।" इति [ ५७२ ]

तथाच—ग्राह्यग्राहकभावरहिता नभस्तलवर्त्यालोकवत्केवलं प्रकाशस्वभावतया स्वसंवेदनस्वभावा विज्ञप्तिरिति नैकस्य कर्तृकर्मक्रियात्मताप्रसङ्गः। ननु तर्हि ग्राह्यग्राहकभावरहिततया निःस्वभाव-तया शून्यताप्रसङ्गः। स्यान्नामैवंरूपा शून्यता। हन्त माध्यमिकाभिमतः सर्वशून्यवाद एवाहतः स्यात्। यत् विज्ञानमपि निःस्वभावं शून्यमिति पर्यवसितम्। नैतत्। असत्यपि लोकतोऽवगते ग्राह्यग्राहक-स्वभावे यः स्वसंवेदनलक्षणो विज्ञानस्वभावः प्रकाशलक्षणः "इयमेवात्मसंवित्तिरस्य याऽजडरूपते" त्युक्तः, स त्वस्त्येवेति न सर्वात्मना नैरात्म्यमिति न सर्वात्मना शून्यता। येनाहतो विज्ञानपक्षः परि-त्यक्तो भवेत्। अयमपि स्वसंवेदनस्वभावो नेति तु माध्यमिकाग्रेसरः। तथाच बोधिचर्यावतारपञ्जिकायां विज्ञानवादनिरसनप्रकरणे—"न पुनरस्माभिः कर्मकर्तृक्रियाभेदेन ज्ञानस्यात्मप्रकाशनमिष्यते, एकस्य

सतः कर्मादिस्वभावस्यायोगात्। तत्र क्रियादिभेदेन दूषणेऽपि न किञ्चिद्दूषितमस्माकं स्यात्। स्वहेतुजनितस्यात्मप्रकाशनस्यानुपघातात्। इति नात्मसंवेदने प्रतिपादितदोषप्रसङ्गः। तदुक्तम्—"विज्ञानं जडरूपेभ्यो व्यावृत्तमुपजायते। इयमेवात्मसंवित्तिरस्य याऽजडरूपता। क्रियाकारकभेदेन न संवित्तिरस्य तु। एकस्यानंशरूपस्य त्रैरूप्यानुपपत्तित इति" इत्यन्तेन विज्ञानवादिनां मतमनूद्य, अत्रोच्यत इत्यादिना निरस्यते—"अत्रोच्यते—क्रियाकारकभेदेन व्यवहारप्रसिद्धं शब्दार्थमधिगम्य दूषणमुक्तम्, स्वसंवेदनस्य तदर्थाभिधायकत्वात्। यदि पुनर्दोषभयाल्लोकप्रसिद्धोऽपि शब्दार्थः परित्यज्यते तदा लोकत एव बाधा भवतो भविष्यति। इत्थमपि न परमार्थसिद्धिः। तथाहि—हेतुप्रत्ययोपजनितस्य प्रतिबिम्बस्येव निःस्वभावत्वमुक्तम्। (माध्यमिकैः समर्थितमित्येतत्) तथाच सुतरां न स्वसंवेदनं विज्ञानस्य। न चापि जडस्वभावता माध्यमिकवादिनं प्रति कस्यचित्सिद्धा, येन जडव्यावृत्तमजडं स्वसंवेदनं स्यात्। ततो निःस्वभावतया न कथंचिदपि न स्वसंवेदनसिद्धि"रिति।

तत् सिद्धम्—

"विवादास्पदमारूढं विज्ञानत्वादतो मनः। अद्वयं वेद्यकर्तृत्ववियोगात्प्रतिबिम्बवत्॥"

[त. ५८१]

अयमत्र सङ्ग्रहः—

सेयं विज्ञानधारा गगनतलगतालोकवत्स्वप्रकाशा
नानाकारावभासा स्फुरति बहुविधा स्वाप्रवद्वासनातः।
ग्राह्यत्वग्राहकत्वद्वयरहिततया ज्ञप्तिमात्राऽद्वितीया
सूते सैवेयमेका व्यवहृतिमखिलां स्वान्यबाह्यानपेक्षा॥
गृह्णाति ज्ञानमर्थानिति जगति मतो ग्राहकत्वस्वभावः
संवृत्त्यैव प्रवृत्तो नतु विषयितया वस्तुतस्तेन शून्यम्।
नाप्यात्मग्राहकं तत्परमजडतया स्वप्रकाशैकरूपं
तच्चाविच्छिन्नधारं प्रवहति सततं सत्त्वभेदादनन्तम्॥

**परलोकव्यवस्थादि।**

लोकायतपरीक्षादौ विस्तरेणोपवर्णितम्।
परलोकव्यवस्थादि प्रसङ्गादिह वर्ण्यते॥

यद्यपि क्षणभङ्गुरं विज्ञानम्। अथापि न परलोकव्यवस्थाया न वा बन्धमोक्षव्यवस्थाया भङ्गः, न वा कृतनाशाकृताभ्यागमापातः। न वा स्मृत्याद्यनुपपत्तिः। नियतकार्यकारणकानाद्यविच्छिन्नविज्ञानसन्तानसम्पत्तिर्हि घटयति सर्वम्। तथाहि—प्रतिपुद्गलं विज्ञानसन्तानमन्यान्यत्, तत्र पूर्वपूर्वविज्ञानमुत्तरोत्तरं विज्ञानमुपनिबध्नातीति सन्तानसम्पत्तिः। सेयं सन्तानसम्पत्तिर्न जन्ममरणमात्रावधिका, येन परलोकवादोपरोधः स्यात्। जन्मनः प्राक्पश्चादप्यनुबद्धविज्ञानसन्तानसम्बन्धा हि सा। यथा जीवतोऽनुवर्तमानं विज्ञानं पूर्वपूर्वविज्ञानहेतुकमनुवर्तते तथैव गर्भादावादिविज्ञानमपि पूर्वपूर्वक्रमोपनिपतितचित्तहेतुकं हि भवति। कादाचित्केन तु सहेतुकेन भाव्यम्। देह एवायं हेतुरिति तु दुर्वचम्। नहि स्वस्य वा परस्य वा देहो विज्ञानरहितो दृष्टः, येनास्य विज्ञानहेतुत्वं वक्तुं शक्येत। नहि युगपदुपलभ्यमानयोर्मिथो हेतुहेतुमद्भावो भवेत्। या चेन्द्रियसङ्घातसम्पन्नस्य देहस्य रूपादिविज्ञानवैचित्र्यहेतुतो-

पगम्यते साप्यापातत: । स्वाग्रादावतदपेक्षतयैव तदुद्भवात् । वासनावासितविज्ञानानामेव तत्र हेतुता दृष्टेति सर्वत्र तेषामेव हेतुता समुचिता । वासनावेष्टितैरेव पूर्वपूर्वविज्ञानैरुत्तरोत्तरविज्ञानोत्पादे स्थिते मरणकालिकं विज्ञानमप्यनपेतवासनतया विज्ञानान्तरमुत्पादयेदेव पश्चादपि । तच्चेदं मनोविज्ञानं विविधवासनाध्यासितं जन्मनः पूर्वं मरणतः पश्चादनुबद्धसन्तानक्रममेवेत्यनाद्यनन्तं विज्ञानसन्तानमिति सिद्धम् । अतएव स्तनपानादिप्रवृत्त्युपपत्तिः ।

आहच—

"भिन्नदेहाश्रितत्वेऽपि तद्विशेषानुसारतः । एकसन्ततिसम्बद्धं प्राच्यज्ञानं प्रबन्धवत् ॥
अपि च स्तनपानादावभिलाषे प्रवर्तते । उद्वेग उपघाते च सद्यो जन्मभृतामपि ॥
तन्नामसंस्तवाभ्यासवासनाबलभाव्यसौ । तेषां विकल्परूपत्वाद्विकल्प इव सम्प्रति ॥
यन्नामसंस्तवाभ्यासवासनापरिपाकजः । विकल्पो वर्तते तेषां तत्प्रसिद्धं भवान्तरम् ॥"

इति [ त० ५४३ ]

या चेयं विज्ञानसन्ततेरनाद्यनन्तायाः काचिदेव वर्षशताद्यवधिरूपा मर्यादाव्यवस्था सैव परलोकः पूर्व इहेति च व्यवस्थाप्यते । न विज्ञानसन्ततेरन्यः परलोकः ।

आहच—

"काचिन्नियतमर्यादावस्थैव परिकीर्त्यते । तस्याश्चानाद्यनन्तायाः परः पूर्व इहेति चे"ति

[ त. ५२३ ]

तन्नैरात्म्यवादेपि परलोकव्यवस्थाया न काप्यनुपपत्तिः । यस्तु बन्धः क्लेशमलोपश्लेषलक्षणो रागादिकृतः पूर्वपूर्वकारणोपनिपातेनोत्तरोत्तरमनुक्षणमुत्पद्यमानोऽनुवर्तते स बन्धश्चित्तस्य । विद्यया तदपगमेन या निर्मलता चित्तस्य स मोक्षः ।

आहच—

"कार्यकारणभूताश्च तत्राविद्यादयो मताः । बन्धस्तद्विगमादिष्टो मुक्तिर्निर्मलता धियः ॥"
"चित्तमेव हि संसारो रागादिक्लेशवासितम् । तदेव तैर्विनिर्मुक्तं भवान्त इति कथ्यते ॥"

[ त० १८४ ]

ननु चित्तं नैकम्, प्रतिक्षणभङ्गुरं हि । किं तावता । यो बद्धो न मुक्तः सः, अन्यस्तु बद्धोऽन्यस्तु मुक्तः । सत्यम् । अनाद्यनन्तेऽस्मिंश्चित्तसन्ताने अविद्यारागादिवासनावासितेभ्यः स्वस्वप्रत्ययेभ्यः पूर्वपूर्वेभ्यश्चित्तान्युत्तरोत्तराण्युत्पद्यन्ते क्लेशमयान्येव । क्लेशमयतेयं बन्ध उच्यते । यदा च दानादिकुशलपरम्परया प्रज्ञानिष्पत्तिस्तदाऽविद्यावासनोच्छेदेनापगतक्लेशमलमत एव निर्मलं चित्तमुत्पद्यते पूर्वपूर्वप्रत्ययेभ्यः, सेयं निर्मलता मुक्तिरुच्यते । तदेवं स्वस्वकारणक्रमोपनिपातनियतकार्यप्रवाहमनात्मकं प्रतीत्यसमुत्पादमभ्युपगच्छतामन्यो बद्धोऽन्यो मुक्त इति तु न दूषणम् । यस्यैकः कर्ता भोक्ता स्यात्तस्यैतद्दूषणम् । अहमिदं करोम्यनेनेदमनुभवामीति तु भ्रमः । सन्तानैक्यारोपमूलकस्तु कर्तृभोक्तृव्यवहारोऽपि । तत्, अविद्यामूलकव्यवहारकृतमतात्त्विकं किमप्याश्रित्य येयमाशङ्का—कथमेको बध्यतेऽपरस्तु मुच्यते करोत्येको भुंक्ते चापर इति, सा भ्रान्तानामेव । अत एव कृतनाशाकृताभ्यागमावपि न स्तः ।

यस्मिन्नेव हि सन्ताने आहिता कर्मवासना । फलं तत्रैव बध्नाति कार्पासे रक्तता यथा ॥

तत् कृतं न नष्टम्, यदुत्पादयत्येव फलम् । परिपाकापेक्षा त्वन्यस्याप्यस्त्येव । एकस्मिन्नित्यात्मनीति तु परः । वयं तु सन्तान इति विशेषः । अत एव न स्मृत्यनुपपत्तिरपि । ये तु वेदान्तिनो विज्ञानमात्रवादमाश्रयन्तोऽपि क्षणभङ्गुरत्वे विद्विष्यन्तो विद्विष्यन्तश्च प्रतिसत्त्वं भेदे नित्यमेकमद्वितीयं सकलविवर्तोपादानं प्रकाशैकस्वभावं विज्ञानमभ्युपगच्छन्ति । न तैः सह विज्ञानस्वरूपे विवादः । नित्यैकतादि तु तदभिमतं न घटेत । तथा सति नीलपीतादिधीवैचित्र्यानुपपत्तेः । बन्धमोक्षव्यवस्था च न घटेत नित्यस्यैकस्वभावस्य तद्विभागो हि दुरुपपादः । अस्माकं च विज्ञानसन्तानानन्त्येन संक्लिष्टासंक्लिष्टविभागेन तदुपपत्तेः ।

उक्तंच—

"संक्लिष्टा च विशुद्धा च समला निर्मला च सा ।
संक्लिष्टा चेद्भवेन्नासौ मुक्ताः स्युः सर्वदेहिनः ।
विशुद्धा चेद्भवेन्नासौ व्यायामो निष्फलो भवेत् ॥ इति ॥" [ १२४ ]

निष्फलश्चास्मिन्पक्षे योगाभ्यासः, तत्त्वज्ञानस्य नित्यविज्ञानात्मस्वरूपादभिन्नत्वेन नित्यसिद्धतयाऽसाध्यत्वात् । तदस्मदभिमत एव विज्ञानवादः समीचीन इति ।

इदमिह नः प्रतिभाति—

मतं दूषयताऽनेन नित्यविज्ञानवादिनाम् । नीलपीतादिवैचित्र्यानुपपत्तिप्रदर्शनम् ॥
अस्थान एव रचितं हार्दं तस्य त्वजानता । वैचित्र्याच्चित्तवृत्तीनां तद्वैचित्र्यं हि जायते ॥
त्रिगुणायाः परिणतिश्चित्तमर्थेन सङ्गतम् । अर्थाकारमनुप्राप्य वृत्तिभेदं प्रपद्यते ॥
ततस्तु ज्ञानवैचित्र्यव्यवहारसमुद्भवः । नित्यं विज्ञानमात्मा यः स गुणेभ्यस्तु भिद्यते ॥
गुणानां यत्तु वैचित्र्यं कथं स्यादात्मदूषकम् । बन्धमोक्षव्यवस्था तु व्यवहारसमाश्रया ॥
चित्तवृत्तिविशेषत्वात्तत्त्वज्ञानस्य साध्यता । तन्मन्ये दूषणं नैतत्परेषां पक्षमाविशेत् ॥
नैरात्म्यदृष्टिं दृढयन्नैःश्रेयससुखावहाम् । आक्षपादाद्यभिमतानात्मवादान्प्रशामयन् ॥
याः परीक्षाः समकरोत् तासां सारविवेचने । वाचां विस्तार एव स्यादिति मत्वा विरम्यते ॥
प्रकृत्यादिपरीक्षासु प्रतिष्ठारहितासु नः । प्रत्यर्थिनां प्रमथनान्नान्यः सारः प्रकाशते ॥
आसामपि परीक्षाणां प्रकाश्येत यदाऽऽशयः । अन्य एव निबन्धः स्यात् वाग्विसर्गस्तु केवलम् ॥
अथापि तासां दिङ्मात्रमग्रे संगृह्य वक्ष्यते । यत्तु सौगतसार्वज्ञसाधनं सारगोचरम् ॥
प्रदर्श्यतेऽधुना तावन्निबन्धाशयसङ्ग्रहे ।

**सौगतसार्वज्ञ्य-समर्थनम् ।**

समापयति निबन्धं मधुरेण । मधुरा हि सेयं सर्वज्ञपरीक्षा । यत्रान्यत्रेव न परनिरसनमात्रे पर्यवसानम् । येन क्लेशभूयस्त्वैव केवलं स्यात् । अतीतसकलक्लेशज्ञेयावरणमविरलसत्त्वदुःखोन्मूलनैकान्तं बुद्धपदं हि सर्वतः स्वादुतमं सौगतानां प्रज्ञाकरुणाप्रकर्षफलं सर्वज्ञसमर्थनप्रसङ्गेन निरूप्यते । अत्र कुमारिलप्रभृतयो जैमिनीया न सहन्ते सर्वज्ञपदम् । एषामिमं सर्वज्ञनिरसनप्रकारमखिलमनूद्य निरस्यैकैकशो भगवतो बुद्धस्य सर्वज्ञता सोपपत्तिकं प्रतिष्ठाप्यते । नच कणादादिभिरिवाद्वितीयो नित्यसर्वज्ञः कश्चित्प्रसाध्यते । किन्तु गोत्रविशेषात्प्रकृत्यैव ये

परहितकरणैकाभिरामाः संस्कारादिदुःखत्रयाभिभूतं जगदवेक्ष्य कृपापरतन्त्रतया तद्दुःखदुःखिनः सन्तः सकलानेव संसारिणो दुःखाम्बुधेरुद्धिधीर्षन्तः समाहितबोधिचित्ताः कुशलैकपराः अप्रस्खलितमार्गास्तिरस्कृतफलापत्तयः सादरनिरन्तरदीर्घकालानुस्यूतनैरात्म्यदर्शनाभ्यासपाटवापगतसकलक्लेशावरणज्ञेयावरणाः सदाप्रभास्वरां सम्यक्सम्बोधिमुपगताः, तेहि सर्वज्ञा बुद्धाः।

"साक्षात्कृतिविशेषाच्च दोषो नास्ति सवासनः। सर्वज्ञत्वमतः सिद्धं सर्वावरणमुक्तितः॥" [८७५]

श्रावकप्रत्येकबुद्धाभ्यां समधिकतरः प्रकर्षो बुद्धेषु। तयोर्हि न सर्वज्ञता। अपगतेऽपि नैरात्म्यदर्शनेन क्लेशावरणे नैरात्म्यदर्शनाभ्यासपाटवाभावेन ज्ञेयावरणानपगमात्। तथाचोक्तम्—"अत एव श्रावकादेर्नैरात्म्यदर्शनेऽपि न सर्वज्ञत्वम्। तथाविधान्तराभ्यासविशेषाभावेन ज्ञेयावरणस्याप्रहाणात्" इति। त एते बोधिसत्त्वाः सर्वज्ञा आसंसारमशेषसत्त्वोद्धरणायावतिष्ठन्ति। श्रावकादयस्तु नेतरे। तथाचोक्तम्—"सात्मीभूतमहाकृपाणामासंसारमशेषसत्त्वोद्धरणायावस्थानात् तदाश्रयवर्तिनी चित्तसन्ततिरतितरां स्थिराश्रया। या तु श्रावकादीनां सन्तानवर्तिनी सा न स्थिराश्रया। तेषां शीघ्रतरं परिनिर्वाणान्मन्दत्वात्कृपायास्तेषामवस्थाने यत्नाभावात्" [८९४] इति। न च यावत् संसारमवतिष्ठन्तीत्येतावता न रागादिमलावलेपप्रसङ्ग एषां व्यपगतसर्वावरणा ह्येते। चित्तसन्ततिरेषां सकलविकल्पापेताव्ययगतागन्तुकमला स्वाभाविकप्रज्ञाकरुणाप्रभास्वरा हि प्रवर्तते। न ह्येषामितोऽन्यन्निर्वाणं नाम सम्पाद्यं समधिकतरमस्ति, यत्सकलसत्त्वदुःखोन्मूलनैकान्तचित्तात्स्वयममलात्। यद्येवं व्यपगतसकलविकल्पो बुद्धः कथमुपदिशतो वचनप्रवृत्तिरिति तु नाशङ्क्यम्।

"चक्रभ्रमणयोगेन निर्विकल्पेऽपि तायिनि। सम्भारावेगसामर्थ्याद्देशना संप्रवर्तते"॥

[८८३]

व्याख्यातं च—"भगवति प्रत्यस्तसमस्तकल्पनाजालेऽपि प्रवर्तत एव पूर्वपुण्यज्ञानसम्भारवेगवशाद्देशना" [८८४] इति।

अत्रेदमप्याहुः—

"तस्मिन् ध्यानसमापन्ने चिन्तारत्नवदास्थिते। निःसरन्ति यथाकामं कुड्यादिभ्योऽपि देशनाः॥"

इति। [८४३]

व्याख्यातं च—"नैवासावुपदिशति किञ्चित्। सर्वदा निर्विकल्पकसमाधिस्थत्वात् किन्तु तदाधिपत्येन विचित्रधर्मदेशनाप्रतिभासा विज्ञप्तयो भव्यानां भवन्ति। यस्यां रात्रौ तथागतोऽभिसम्बुद्धो यस्यां च परिनिर्वृत्तः, अत्रान्तरे तथागतेन नैकमप्यक्षरं प्रव्याहृतम्, तत् कस्य हेतोः, सततसमाहितो हि तथागतः, अपि तु येऽक्षरदेशना वैनयिकास्ते तथागतस्य मुखादुष्णीषादूर्णायाः शब्दं निःसरन्तं शृण्वन्ति" [८४३] इति।

कुड्यादिनिस्सृतानां च कस्मान्नाप्तोपदिष्टता। तदाधिपत्यभावेन यदा तासां प्रवर्तनम्।[९१६]

नचास्य मर्त्यभावः। तथाचोक्तम्—

"पञ्चगत्यात्मसंसारबहिर्भावान्न मर्त्यता। बुद्धानामिष्यतेऽस्माभिर्निर्माणं तत्तथामतम्"॥

इति [९१५]

व्याख्यातं च—"नरकप्रेततिर्यग्देवमनुष्यभेदेन पञ्चगत्यात्मकः संसारः, तद्बहिर्भूताश्च भगवन्त

इत्यसिद्धं मर्त्यत्वमेतेषाम्"। कथं तर्हि शुद्धोदनादिकुलोत्पत्तिरेषां श्रूयत इत्यत्राह—"निर्माणं तत्तथामतमिती"ति। इममेवार्थमागमेन द्रढयन्नाह—

"अकनिष्ठे पुरे रम्ये शुद्धावासविवर्जिते। बुद्ध्यन्ते तत्र सम्बुद्धा निर्मितस्त्विह बुध्यते।"

इति [ ९१६ ]

इह तु शुद्धौदनकुलादिषु तदाधिपत्येन तथा निर्माणमुपलभ्यत इति तदाशयः। ये पुनः फलस्थाः स्रोत आपन्नादयश्चत्वारः ( स्रोतं आपन्नः सकृदागामी अनागामी अर्हन् ) तेऽप्यस्यैव बुद्धस्य देशनामवलम्ब्याहतमार्गाः।

तथाचोक्तम्—

"ये च वाहितपापत्वाद्ब्राह्मणाः पारमार्थिकाः। अभ्यस्तामलनैरात्म्यास्ते मुनेरेव शासने॥
इहैव श्रमणस्तेन चतुर्धा परिकीर्त्यते। शून्याः परप्रवादा हि श्रमणैर्ब्राह्मणैस्तथा॥"

इति। [ ९२३ ]

अयमत्र सङ्ग्रहः—

यः स्यात् गोत्रविशेषतः करुणया दुःखी जगद्दुःखतः
तद्दुःखं शमयन् निरन्तरकृपाप्रज्ञाप्रकर्षाश्रयः।
नैरात्म्याद्वयभावनातिशयतः प्रक्षीणसर्वावृतिः
सर्वज्ञो भगवान् स एव जगतां दुःखोपशान्त्यै स्थितः॥
एवमस्यां परीक्षायां सर्वज्ञः सम्प्रसाधितः।

---

अन्तःपातमकृत्वैव निबन्धाभ्यन्तरस्थितिम्। आपाततो दिदृक्षन्ति केचिदायासभीरवः॥१॥
तेषां कृते मया कश्चिद्यत्न आधीयतेऽधुना।

यस्यायं परिपाकस्तु—

## तत्त्वसङ्ग्रहसङ्ग्रहः।

### कापिलाः।

प्रकृतिपरीक्षा।

1 नित्यैका व्यापिनी सर्वशक्तियुक्ता गुणत्रयी।
या प्रसूते स्वयं सर्वान् भावान् गुणमयानिमान्॥ ३॥

2 भावाः शब्दादयश्चैते भवन्ति त्रिगुणात्मकाः।
सर्वो भावस्त्रयाणां च स्वभावैर्लक्ष्यते यतः॥ ४॥

3 यदेव सुखमाभाति तद्दुःखमितरस्य तु।
विमोहात्मकमन्यस्य तत्किमत्रिगुणात्मकम्॥ ५॥

4 इदं सदेव तु तया कार्यमारभ्यतेऽखिलम्।
असतः करणायोगादुपादानग्रहादपि॥ ६॥

असम्भवाच्च सर्वस्मात् शक्तात् शक्यस्य सम्भवात्।

## अत्र सौगताः ।

1 अनित्याऽव्यापिनी नानाऽन्यान्यशक्ता गुणत्रयी ॥ ७ ॥
सा सा प्रसूते कालेन तांस्तान् गुणमयानिमान् ।
एवमन्यान्यहेतुत्वाश्रयणे किन्नु बाधकम् ॥ ८ ॥
गुणात्मता तु कार्यस्य कारणस्य गुणात्मताम् ।
अपेक्षतां किमेकत्वं नित्यत्वं चानपेक्षितम् ॥ ९ ॥

2 भावाः शब्दादयश्चैते न सत्त्वादिगुणात्मकाः ।
ते त्वस्वसंविदो बाह्याः सुखाद्यास्तु स्वसंविदः ॥ १० ॥
तत्सत्त्वादिस्वभावानां सुखादीनामनन्वयात् ।

3 सुखदुःखविमोहैस्तुरूपैस्तैः किमिति त्रिभिः ॥ ११ ॥
एकमेकेनैकदैव नेक्ष्यते त्रिगुणात्मकम् ।
यदेव सुखमाभाति तद्दुःखमितरस्य तु ॥ १२ ॥
विमोहात्मकमन्यस्य भावनाजातिभेदतः ।

4 न सतः स्यात् समुत्पादः करणायोगतः सतः ॥ १३ ॥
दध्नः सत्त्वे किंनु करणमुपादीयेत किन्नु वा ।
सम्भवः कस्य वा कस्मात् शक्तेरर्थक्रिया क्व वा ॥ १४ ॥
सतोऽप्यव्यक्तरूपस्य व्यक्तिः कारणतो यदि ॥ १५ ॥
प्राप्ताऽसतः समुत्पत्तिरन्यथा स्यादनिस्तृतिः ।
भावानां यः स्वभावस्तु पूर्वापरविमुक्तता ॥ १६ ॥
अयमेव समुत्पादो नासतो नापि वा सतः ।
तस्मादसत्कार्यमिति व्यवहारस्तु केवलम् ॥ १७ ॥
सत्कार्यमितिवादस्य प्रतिषेधाय वर्तते ।
परीक्षितोऽव्यक्तवादः सुधीभिरनया दिशा ॥ १८ ॥

## आनुमानिकेश्वरवादिनः ।

ईश्वरपरीक्षा ।

1 अस्तीश्वरो नित्य एकश्चेतनो यदधिष्ठितम् ।
अचेतनं स्वस्वकार्यसमारम्भाय कल्पते ॥ १ ॥
भवन्त्यत्रानुमानानि प्रमाणान्यपराण्यपि ।
यद्यत्स्वकीयावयवसन्निवेशविशेषवत् ॥ २ ॥ अविद्धकर्णमतम् ।

2 बुद्धिमत्पूर्वकं तत्तद्यथा घटपटादिकम् ।
विवादास्पदमेतत्तु क्षित्याद्यपि तथाविधम् ॥ ३ ॥

3 सर्गादावप्रबुद्धानां प्रबुद्धनां सतां ततः ॥ ४ ॥ प्रशस्तमतेर्मतम् ।

प्रत्यर्थनियतो यस्माद्व्यवहारः प्रवर्तते ।
तस्मात्स व्यवहारस्तु ध्रुवमन्योपदेशजः ॥ ५ ॥

वृद्धोपदेशसञ्जातकुमारव्यवहारवत् ।
4 चेतनाधिष्ठितं दृष्टं सुखास्पदमचेतनम् ॥ ६ ॥ उद्योतकरमतम् ।

यथा रथादि यच्चैतन्महाभूताद्यचेतनम् ।
सुखदुःखास्पदं तच्च चेतनाधिष्ठितं तथा ॥ ७ ॥

तथाच कर्ता सर्वज्ञः सर्गादावुपदेशकः ।
महाभूताद्यधिष्ठाता स कश्चित्सिद्ध ईश्वरः ॥ ८ ॥

## अत्र सौगताः ।

1 नास्तीश्वरो नित्य एकश्चेतनेनानधिष्ठितम् ।
अचेतनं स्वस्वकार्यसमारम्भाय कल्पताम् ॥ ९ ॥

2 अस्तु स्वकीयावयवसन्निवेशविशेषवत् ।
बुद्धिमत्कर्तृकं चास्तु सर्वं क्षित्यादि किं ततः ॥ १० ॥

सर्वदर्श्येककर्तृत्वं नहि सिध्यत्यभीप्सितम् ।
विचित्रसन्निवेशा हि गोपुराट्टालकादयः ॥ ११ ॥

अनेककर्तृका एव सम्भाव्यन्ते तथेक्षणात् ।
यदि नित्यैकसर्वज्ञकर्तृकत्वं प्रसाध्यते ॥ १२ ॥

साध्यासिद्धिरनैकान्त्यं विरुद्धमपि वस्तुतः ।
क्रमाक्रमविरोधेन नित्यानां कृत्यसम्भवात् ॥ १३ ॥

असिद्धं साधनं चेदं रूपादिव्यतिरेकिणोः ।
सन्निवेशावयविनोः कुत्राप्यनुपलम्भतः ॥ १४ ॥

3 सर्गादावप्रबुद्धानां प्रबुद्धानां सतां ततः ।
प्रत्यर्थनियतो नैव व्यवहारः प्रवर्तते ॥ १५ ॥

किन्त्वप्रलुप्तस्मृतयः प्रलये पुरुषास्तु ये ।
आभास्वरादिसम्भूतास्त एवेह भवन्ति हि ॥ १६ ॥

4 चेतनाधिष्ठितं यत्तु सुखास्पदमचेतनम् ।
तत्तु नैकाधिष्ठितत्वनियतं, तन्न साधनम् ॥ १७ ॥

## सेश्वरसाङ्ख्याः ।

प्रकृतीशोभय-परीक्षा ।

ईश्वराद्गुणसंयुक्तादीश्वराधिष्ठिताद्गुणात् ।
आरभ्यते जगदिदं न प्रधानात्तु केवलात् ॥ १ ॥

### अत्र सौगताः ।

ईश्वरस्य निरासेन प्रकृतेश्च निरासतः ।
निरस्तेऽप्यत्र पक्षेऽन्या दर्श्यन्तेऽनुपपत्तयः ॥ २ ॥

अनाधेयातिशययोर्नित्ययोः प्रकृतीशयोः ।
परस्परोपकार्यत्वं न घटेत कथञ्चन ॥ ३ ॥

सान्निध्यं तु सदैवास्ति नित्यव्यापकयोस्तयोः ।
कालभेदेन सर्गादिव्यवस्था युज्यते कथम् ॥ ४ ॥

त्रिगुणस्य समस्यापि सत्त्वौत्कट्यादिभेदतः ।
कादाचित्कं तु वैषम्यं नोपपद्येत सर्वथा ॥ ५ ॥

न ह्याभ्यामपरं किञ्चिद्यत्तत्र स्यात्प्रसाधनम् ।
स्वातन्त्र्याद्यद्यहेतुत्वं न कादाचित्कता तदा ॥ ६ ॥

### स्वाभाविकजगद्वादिनः ।

स्वाभाविकजगद्वादपरीक्षा।

जन्मन्यपेक्षा भावानां न स्वस्य न परस्य वा ।
सर्वहेतुनिराशंसं भावाः सर्वे भवन्ति हि ॥ १ ॥

राजीवकेसरादीनां वैचित्र्यं कः करोति हि ।
मयूरचन्द्रकादिर्वा विचित्रः केन निर्मितः ॥ २ ॥

### अत्र सौगताः ।

बीजपङ्कजलादीनामन्वयव्यतिरेकयोः ।
सरोजकेसरादीनामन्वयव्यतिरेकयोः ॥ ३ ॥

प्रत्यक्षानुपलम्भाभ्यां सिद्धेः सिद्धा सहेतुता ।
तत्स्वाभाविकवादोऽयं प्रत्यक्षेण प्रबाध्यते ॥ ४ ॥

### शब्दब्रह्मवादिनः ।

शब्दब्रह्मपरीक्षा ।

अविकारि परं ब्रह्म शब्दतत्त्वमनक्षरम् ।
अविभक्तं तदेवैकं जगद्रूपं विवर्तते ॥ १ ॥

### अत्र सौगताः ।

शब्दभावोपमर्देन नीलभावे विकारिता ।
सा त्वनिष्टा यतः शब्दब्रह्माविकृतमिष्यते ॥ २ ॥

तद्भावेनैव तद्भावे तद्भाने स च भासताम् ।
स शब्दश्चेन्न भासेत नीलं तच्च न भासताम् ॥ ३ ॥

नीलाद्यन्यान्यभावेन शब्दात्मा भिद्यते यदि ।
प्रतिव्यक्तिविभेदेन ब्रह्मानेकं प्रसज्यते ॥ ४ ॥
प्रतिभावं च शब्दात्माऽभिन्न एको यदीष्यते ।
सर्वेषामेकदेशत्वमेकाकारा च विद्भवेत् ॥ ५ ॥

## अथौपनिषद्पुरुषवादिनः ।

पुरुषपरीक्षा ।

1 ऊर्णनाभ इवांशूनां चन्द्रकान्त इवाम्भसाम् ।
सर्वेषामेव भावानां प्रभवः पुरुषः परः ॥ १ ॥
2 अनुकम्पाविशेषेण जगत्सृजति स प्रभुः ।
यद्वा करोति क्रीडार्थं सर्गस्थितिलयानयम् ॥ २ ॥
3 केचित् स्वभाव एवास्य सर्गादाविति चक्षते ।

## अत्र सौगताः ।

1 ईश्वरस्य निरासेन निरस्तः पुरुषोऽप्यसौ ॥ ३ ॥
2 अनुकम्पाविशेषेण सृजतीति न युज्यते ।
सृष्टमात्रमिदं सर्वमाधिव्याधिजरान्वितम् ॥ ४ ॥
दुःखाकुलं दृश्यते तत् कृपाकार्यं कथं भवेत् ।
अदृष्टं तत्र चेद्धेतुः कृपाऽशक्तस्य निष्फला ॥ ५ ॥
आप्तकामस्य का क्रीडा, सर्गादि युगपत्त्रयम् ।
शक्तो न कुरुते कस्मादशक्तश्चेन्न च क्रमात् ॥ ६ ॥
3 स्वभाववादे भावानां युगपत् स्यात्समुद्भवः ।

## वैशेषिका नैयायिकाश्च ।

आत्मा नित्यः प्रतिक्षेत्रमन्यान्यो विभुरेव च ।
मनस्संयोगसम्भूतज्ञानादिगुणसंश्रयः ॥ १ ॥

वैशेषिक-नैयायिकात्म-परीक्षा ।

1 सोऽयं हि मानसाध्यक्षसिद्धोऽहङ्कारगोचरः । ( उद्योतकरस्य )
2 मयैव दृष्टं तद्रूपं मया शब्दः श्रुतोऽपि सः ॥ २ ॥
इति प्रत्यभिसन्धानात् रूपशब्दादिगोचराः ।
प्रत्यया देवदत्तस्य त्वेकानेकनिमित्तकाः ॥ ३ ॥
निमित्तमेको यस्त्वत्र सोऽयमात्मेति सिद्ध्यति ।
3 किञ्चात्मेति पदं देहाद्यतिरिक्तार्थगोचरम् ॥ ४ ॥
यदतत्परपर्यायपदमेकमिदं पदम् ।
4 जीवद्देहो निरात्मा चेन्निष्प्राणः स्याद्घटादिवत् ॥ ५ ॥

5 इच्छादि कार्यवस्तुत्वाद्रूपवत्कंचिदाश्रितम् ।

6 मदीया वित्तयः सर्वा वित्तित्वात्परवित्तिवत् ॥ ६ ॥ (शङ्करस्वामिनः)

मद्देहेन्द्रियबुद्धिभ्यो वेद्यन्तेऽन्येन केनचित् ।

## अत्र सौगताः ।

1 सर्वे धर्मा निरात्मानो न प्रमाणं यदात्मनि ॥ ७ ॥

विभुर्नित्योऽहमिति वा नाहङ्कारः प्रकाशते ।

किन्तु गौरः कृश इति, तन्नाध्यक्षस्य सम्भवः ॥ ८ ॥

किञ्चाध्यक्षेण सिद्धस्य विवादः संशयः कुतः ।

2 मयेति प्रतिसन्धानं नात्मनित्यत्वसाधकम् ॥ ९ ॥

यथैव वेद्ये क्षणिके तथाऽस्मिन्नपि वेत्तरि ।

एकत्वप्रतिसन्धानं नैरन्तर्यकृतो भ्रमः ॥ १० ॥

3 नाप्यात्मशब्दो बुद्ध्यादेरन्यमर्थमपेक्षते ।

पर्यायता प्रसिद्धा यच्चित्तमात्मेति शब्दयोः ॥ ११ ॥

4 जीवद्देहो निरात्मैव, न निष्प्राणस्तथाऽप्यसौ ।

न तादात्म्यतदुत्पत्ती प्रतिबन्धोऽनयोस्तु कः ॥ १२ ॥

5 किमक्रियस्याश्रयेण पतनप्रतिरोधिना ।

तन्नेच्छादेः साश्रयत्वं कार्यत्वेऽपि प्रसिद्ध्यति ॥ १३ ॥

6 त्वद्वित्तयस्त्वदीयेभ्योऽन्येन सर्वज्ञचेतसा ।

वेद्यन्त इत्युपगमाच्चरमे सिद्धसाधनम् ॥ १४ ॥

## अथ जैमिनीयाः ।

मीमांसकात्मपरीक्षा ।

1 व्यावर्तमाना आत्मानः सुखदुःखाद्यवस्थया ।

निसर्गसिद्धचैतन्यस्वभावानुगता अमी ॥ १ ॥

2 कुण्डलत्वाद्यवस्थाभिर्व्यावृत्तोऽपि यथा ह्यहिः ।

सर्पत्वानुगमान्नान्यः स्थिरः किन्तु तथा स्थिराः ॥ २ ॥

3 प्रमातृप्रत्यभिज्ञानात् स्थिरत्वं तच्च सिद्ध्यति ।

चैतन्यलक्षणा बुद्धिरेकैवानुगता स्थिरा ॥ ३ ॥

4 विषयोपाधिभेदात्तु धीवैचित्र्यं प्रतीयते ।

अत एव तु बोधात्मप्रत्यभिज्ञोपपद्यते ॥ ४ ॥

अनादिनिधनाश्चैते कर्तारः कर्मणां फलम् ।

भुञ्जते तन्न नः पक्षे कृतनाशाकृतागमौ ॥ ५ ॥

## अत्र सौगताः ।

1 व्यावृत्त्यनुगमात्मानं मन्यन्ते मन्दबुद्धयः ।
न ह्येकस्मिन् घटेतार्थे विरुद्धोभयरूपता ॥ ६ ॥
अवस्थाभिर्विरुद्धाभिरन्यान्यत्वे स्थिते सति ।
अनन्यैकात्मता तत्र घटेत व्याहता कथम् ॥ ७ ॥
सुखदुःखाद्यवस्थानां नाशोत्पादौ विरुद्धता ।
नित्यैकतां सहेरन्वा स्वानन्यस्यात्मनः कथम् ॥ ८ ॥
अत्यन्तभेदेऽवस्थानामवस्थावत आत्मनः ।
तस्य या ह्यात्मकत्वोक्तिः सा भवेद्बालभाषितम् ॥ ९ ॥

2 अत एव च सर्पोऽपि न स्थिरः, क्षणभङ्गुरः ।
असर्पेतरतामात्रादनुवृत्तत्वविभ्रमः ॥ १० ॥

3 प्रत्यभिज्ञा प्रमा स्याच्चेत्तस्याः स्यान्मानता तदा ।
वासनामात्रबीजोत्थाः प्रत्यभिज्ञा भवन्ति हि ॥ ११ ॥
अविद्यावासनामात्रप्रभवो यस्त्वहंग्रहः ।
कथं विषयसत्तां स प्रसाधयितुमर्हति ॥ १२ ॥
विना विषयसत्तां च भवन्ति प्रत्ययाः खलु ।
उत्प्रेक्षसे कं विषयं भक्तानामीश्वरग्रहे ॥ १३ ॥

4 विषयोपाधिभेदेन धीवैचित्र्योपपादनम् ।
निरस्तमतएवेदं भ्रान्तिषु व्यभिचारतः ॥ १४ ॥
तथा चोत्पत्तिनाशादेः स्वतस्तत्र प्रसङ्गतः ।
चैतन्यलक्षणा बुद्धिः स्थिरैकेति न युज्यते ॥ १५ ॥
अत एव च बोधात्मप्रत्यभिज्ञा न च प्रमा ॥ १६ ॥

## अथ कापिलाः ।

कापिलात्मपरीक्षा ।

1 बुद्धिरन्या चेतनोऽन्यः सा करोति भुनक्ति सः ।

2 सा जडा विक्रियाभूमिरजडः स त्वविक्रियः ॥ १ ॥

3 गुणमय्याऽनया सोऽयमात्मोपक्रियतेऽगुणः ।

## अत्र सौगताः ।

1 बुद्धिरन्या चेतनोऽन्य इति मूढस्य कल्पना ॥ २ ॥
बुद्धिर्धीश्चेतना ज्ञानमित्यनर्थान्तरं वचः ।
करोत्यन्या भुनक्त्यन्य इत्यप्युच्छृङ्खलं वचः ॥ ३ ॥

तथा सति प्रसजतः कृतहान्यकृतागमौ ।
यश्चेतनः स नो कर्ता यः कर्ता स न चेतनः ॥ ४ ॥
इति स्वभाववैषम्यकल्पना हन्त साहसम् ।
2 अविक्रियस्य भोक्तृत्वं न घटेत कथञ्चन ॥ ५ ॥
नीलादिज्ञानवैचित्र्यं विना चैतन्यविक्रियाम् ।
कथं घटेत, तद्बुद्धेरिति चेत् सा जडा कथम् ॥ ६ ॥
3 अविक्रियस्य नित्यस्य तया का चोपकार्यता ।

### अथ जैनाः ।

दिगम्बरात्म-परीक्षा ।

चिल्लक्षणेनानुगतो व्यावृत्तस्तु सुखादिभिः ।
द्रव्यपर्यायरूपाभ्यामात्मा द्व्यात्मक इष्यते ॥ १ ॥

द्व्यात्मकं सर्वमेवेदं पर्यायानुगतात्मना ।
रूपादयस्तु पर्याया घटाद्यनुगतं खलु ॥ २ ॥

न चाप्यात्यन्तिको भेदः पर्यायानुगतात्मनोः ।
तस्माद्भिन्नमभिन्नं च द्व्यात्मकं वस्तु सिध्यति ॥ ३ ॥

### अत्र सौगताः ।

अन्योन्यप्रतिषेधैकप्रतिष्ठितनिजात्मनाम् ।
पर्यायानुगतादीनां विरोधो दुरपह्नवः ॥ ४ ॥

तद्द्विरूपत्वमाश्रित्य यत् स्थिरात्मप्रसाधनम् ।
न तद्विचारशीलानां सुधियां हृदयंगमम् ॥ ५ ॥

सुखदुःखादिपर्यायव्यतिरिक्तशरीरकः ।
न चाप्यनुगतात्मैकः प्रत्यक्षेणोपलभ्यते ॥ ६ ॥

### अथौपनिषदा अद्वैतदर्शनावलम्बिनः ।

औपनिषदात्म-परीक्षा ।

अस्त्यात्मा यद्विवर्तोऽयं प्रपञ्चो भासतेऽखिलः ।
स च नित्यैकविज्ञानस्वरूपो भासते स्वतः ॥ १ ॥

रज्जुस्वरूपे विज्ञाते यथा सर्पो निवर्तते ।
तथाऽऽत्मतत्त्वे विज्ञाते जगदेतन्निवर्तते ॥ २ ॥

### अत्र सौगताः ।

नास्त्यात्मा न च तस्यायं विवर्तो यस्य मन्यते ।
नहि नित्यैकविज्ञाने प्रमाणमुपलभ्यते ॥ ३ ॥

किंतु नित्यैकविज्ञानमुपलम्भपराहतम् ।
अनित्यानेकविज्ञानधारैव ह्युपलभ्यते ॥ ४ ॥

रूपादिज्ञानवैचित्र्यं बन्धमोक्षव्यवस्थितिः ।
नित्यैकज्ञानवादेऽस्मिन् न घटेत कथञ्चन ॥ ५ ॥

विज्ञानमात्रवादांशे सख्यमेभिस्तु नः स्थितम् ।

## अथ वात्सीपुत्रीयाः ।

वात्सीपुत्रीयात्मपरीक्षा ।

आत्माऽनुवर्तते कश्चित् पुद्गलव्यपदेशभाक् । ( बौद्धैकदेशिनः )
पूर्वस्कन्धपरित्यागात् स्कन्धान्तरपरिग्रहात् ॥ १ ॥

स्वकर्मफलभोगाय संसरत्येष सर्वतः ।
स्कन्धादन्यतया वाच्यो न, नानन्यतयाऽप्ययम् ॥ २ ॥

परक्रोडनिपातः स्याद्यद्यन्योऽयमितीष्यते ।
अनन्यत्वे त्वनेकत्वमुच्छेदादि प्रसज्यते ॥ ३ ॥

कर्तृभोक्त्रैक्यमिच्छंस्तु भगवानब्रवीदिदम् ।
एकः पुद्गल इत्यादि तत्तस्यावाच्यतोचिता ॥ ४ ॥

## अत्र सुधियः सौगताः ।

एते तु सौगतम्मन्यास्तत्त्वतो न तु सौगताः ।
अद्वितीयं शिवद्वारं ननु नैरात्म्यदर्शनम् ॥ ५ ॥

कथं स्यात् सौगतः सोऽयं विप्रतीपमितो वदन् ।
क्वचित्क्वचित्प्रवृत्तानां देशनानां तथा तथा ॥ ६ ॥

अविरोधेन नयनं सुधीभिरुपवर्णितम् ।
अवाच्यत्वेऽपि वस्तुत्वमित्यपि व्याहतं वचः ॥ ७ ॥

नहि तत्त्वतदन्यत्वे विना स्याद्वस्तुता क्वचित् ।
नहि स्वभावो भावानामुभाभ्यामपरो भवेत् ॥ ८ ॥

उभावेव विकल्पौ हि तत्त्वं किंवा तदन्यता ।
तस्मादसङ्गता सेयं पुद्गलात्मोपकल्पना ॥ ९ ॥

स्थिरभावपरीक्षा ।

परेषामात्मवादादीनक्लेशेन निरस्यता ।
सर्वेषामेव वस्तूनां क्षणभङ्गः प्रसाध्यते ॥ १ ॥

## अथात्र स्थिरभाववादिनः ।

1 व्योमादि यदिदं नित्यं गवाश्वादि यदस्थिरम् ।
चिरानुवर्त्तिनामेषां क्षणभङ्गप्रसाधनम् ॥ २ ॥

हन्त साहसमात्रं तु प्रत्यक्षादिविरोधतः ।
2 दुर्घटः क्षणभङ्गोऽपि नाशकस्य व्यपेक्षया ॥ ३ ॥

अहेतुकस्य नाशस्य सम्भवो नैव सम्भवी ।
तथा सति हि कार्याणां सर्वतः सम्भवो भवेत् ॥ ४ ॥

3 किञ्च क्षणिक इत्यत्र कोऽयमर्थोऽभिमन्यते ।
क्षणोऽस्यास्तीति मत्वर्थः क्षणभङ्गे न युज्यते ॥ ५ ॥
सोऽस्यास्तीत्ययमर्थो हि क्षणभेदमपेक्षते ।

## अत्र सौगताः ।

1 इदं तु साहसं यत्तन्नित्यं व्योमादि वस्त्विति ॥ ६ ॥
अर्थक्रियासमर्थं हि वस्तु, नान्यदतद्विधम् ।
न च नित्यस्य सामर्थ्यं सदा कार्यप्रसङ्गतः ॥ ७ ॥
सहकारिव्यपेक्षायां नित्यता नैव युज्यते ।
अपूर्वातिशयाधानाद्यत्स्याद्यस्योपकारकम् ॥ ८ ॥
तत्तस्य सहकारि स्यात्तथा चानित्यता स्थिता ।
अपूर्वातिशयप्राप्तौ प्राग्रूपं खलु हीयते ॥ ९ ॥
ननु सत्यमपूर्वोऽयं हेतावतिशयो भवन् ।
हेतुस्वरूपाद्भिन्नत्वात् न रुन्ध्याद्धेतुनित्यताम् ॥ १० ॥
हन्त तर्हि ततो भिन्नो योऽसावतिशयः श्रितः ।
अन्वयव्यतिरेकाभ्यां युक्ता तस्यैव हेतुता ॥ ११ ॥
ननु नाहेतुता तस्य तदीयोऽतिशयो ह्ययम् ।
यस्यातिशयकार्यं यत् तत्स्यात् कार्यं न तस्य किम् ॥ १२ ॥
सत्यं तदीयतासिद्धौ स्यादेतत्सा तु दुर्घटा ।
तादात्म्यं वा तदुत्पत्तिः कः सम्बन्ध इहोच्यताम् ॥ १३ ॥
ततो भेदान्न तादात्म्यमुत्पत्तिश्चेद्दिशोक्तया ।
यौगपद्यप्रसङ्गः स्यात्सदा नित्यस्य सन्निधेः ॥ १४ ॥
सहकारिव्यपेक्षायां प्रसजेदनवस्थितिः ।
ननु हेतोर्नोपकारः सहकारिभिरिष्यते ॥ १५ ॥
सहैव कार्यं कुर्वन्ति ततस्ते सहकारिणः ।
सा तस्य प्रकृतिर्हेतोः कारणान्तरसन्निधौ ॥ १६ ॥
कार्याधायकता येयं, तथैव सहकारिणाम् ।
ननु सा प्रकृतिर्नित्ये कादाचित्की कथं भवेत् ॥ १७ ॥
साकल्य इव वैकल्ये सा नित्यस्यानपायिनी ।
गले गृहीत्वा गृह्णीयात्सर्वांस्तान् सहकारिणः ॥ १८ ॥

आकृष्टे निगडाबद्धे निगडो नहि दूरगः ।
क्षणिकेषु तु भावेषु नैव चोद्यमिदं समम् ॥ १९ ॥
क्षितिबीजजलादीनां क्षणिकानां हि सन्ततौ ।
भावेभ्यः पूर्वपूर्वेभ्योऽप्यविशिष्टेभ्य एव तु ॥ २० ॥
जायमानेषु भावेषु विशिष्टा एव केचन ।
अङ्कुरोत्पादने शक्ता जायन्ते प्रकृतिस्तु सा ॥ २१ ॥
एकक्रियासमर्थत्वान्मिथस्ते सहकारिणः ॥ २२ ॥
2 सुघटः क्षणभङ्गोऽयं नाशकस्यानपेक्षणात् ।
प्रतिषेधात्मको नाशो ह्यवस्तुत्वादहेतुकः ॥ २३ ॥
भावात्मकस्य नाशस्य कोऽन्यो हेतुरपेक्ष्यते ।
क्षणान्तरस्थित्यनर्हाः सर्वे भावाः स्वहेतुतः ॥ २४ ॥
जायन्ते तत्पदार्थानामुच्यते क्षणभङ्गिता ।
3 क्षणान्तरस्थित्यनर्हस्वभावे भाव एव तु ॥ २५ ॥
विभेदमनपेक्ष्यैव प्रकृतिप्रत्ययार्थयोः ।
प्रवर्तते हि सङ्केतात् शब्दः क्षणिक इत्ययम् ॥ २६ ॥
एतेनास्मिन्नसावस्ति क्षणस्तु क्षयलक्षणः ।
इत्यसत्यर्थभेदेऽपि शब्दः क्षणिक इत्ययम् ॥ २७ ॥
प्रवर्तेत कथं वेति शङ्का सेयं पराहता ।
प्रत्यक्षादिविरोधोऽपि ननु भ्रान्त्यैव भाव्यते ॥ २८ ॥
यत्तु तत्प्रत्यभिज्ञानं विकल्पैः कल्पनान्वितम् ।
भ्रान्तिमात्रं चार्थभेदाद्दीपज्वालैक्यबुद्धिवत् ॥ २९ ॥
कल्पनापोढमभ्रान्तमिति प्रत्यक्षलक्षणम् ।
नान्वेति प्रत्यभिज्ञाने तन्न प्रत्यक्षबाधितम् ॥ ३० ॥
तथाच सिद्धं वस्तूनां क्षणिकत्वमबाधितम् ।
चिरानुवर्तितायां तु व्योमतामरसादिवत् ॥ ३१ ॥
अर्थक्रियास्वसामर्थ्यादवस्तुत्वं प्रसज्यते ।

## अथ कुमारिलादयः ।

कर्मतत्फलसम्बन्धपरीक्षा ।

1 ननुचेत् क्षणिका भावाः कर्ता भोक्ता च दुर्घटः ।
न ह्यन्यस्योपभोगाय परः कर्म समाचरेत् ॥ १ ॥
स्यातां लोकविरुद्धौ च कृतनाशाकृतागमौ ।
* 2 कार्यकारणभावश्च कथं क्षणिकवस्तुनोः ॥ २ ॥

जन्मक्षणाव्यवहितक्षण एव विनश्यतः ।
क्व नु स्थितिक्षणो येन कुर्यात् कार्यं क्वचित् स्थितः ॥ ३ ॥
स्थित्वा हि कारणं सर्वं कार्यमाधातुमर्हति ।
3 किञ्च कार्यं जनयति व्यापृत्यैव हि कारणम् ॥ ४ ॥
क्षणभङ्गुरपक्षे तु व्यापारस्य क्व सम्भवः ।
व्यापारार्थं स्थितौ तस्य क्षणिकत्वं पराहतम् ॥ ५ ॥
4 बन्धमोक्षव्यवस्थाऽपि क्षणिकत्वे न युज्यते ।
य एव बद्धो मुच्येत स चेद्युज्येत सा तदा ॥ ६ ॥

## अत्र सौगताः ।

1 कर्तुरेव तु भोक्तृत्वं वस्तुतो नैव वर्त्तते ।
स्वकृतस्य फलं भुङ्क्ते इति वादस्तु लौकिकः ॥ ७ ॥
एकसन्तानसम्बन्धनैयत्येन प्रवर्तते ।
एतेन दोषौ प्रत्यस्तौ कृतनाशाकृतागमौ ॥ ८ ॥
न कारणं कार्यहीनं कार्यं वा न ह्यकारणम् ।
2 कार्यकारणभावश्च युक्तः क्षणिकयोरपि ॥ ९ ॥
न ब्रूमो वयमुत्पत्तिं नष्टाद्वा नच भविनः ।
किन्तु हेतोर्वर्तमानात्, क्षणिकः किंन वर्तते ॥ १० ॥
स्थितिक्षणः स किं न स्याद्वस्तुनो यो जनिक्षणः ।
किञ्च नापेक्ष्यते हेतोः कार्योत्पत्तिक्षणे स्थितिः ॥ ११ ॥
किन्तु कार्याव्यवहितप्राक्क्षणेऽपेक्ष्यते स्थितिः ।
3 यश्चानन्तर्यनियमः कार्ये कारणवस्तुनः ॥ १२ ॥
सैव कार्यसमुत्पादे कारणापेक्षिता मता ।
सत्तातो व्यापृतिर्नान्या कारणे कार्यसाधिका ॥ १३ ॥
नह्यङ्कुरादौ बीजादेर्व्यापारः कोऽपि दृश्यते ।
4 य एव बद्धो मुक्तः स इति लोकस्य कल्पना ॥ १४ ॥
अप्रकम्प्यं हि भावानां क्षणिकत्वं समर्थितम् ।
पूर्वपूर्वप्रत्ययकक्षणिकज्ञानसन्ततेः ।
रागादिमलसंश्लेषो बन्धो मुक्तिस्तदत्ययः ॥ १५ ॥
स्वस्वप्रत्ययजन्यत्वात्तयोर्नैवाव्यवस्थितिः ।
स्मृतिसंस्कारयोर्बोध्या व्यवस्थाऽप्यनया दिशा ॥ १६ ॥
परैः क्षणिकवादेऽस्मिन् यत्किञ्चिद्यच्च शङ्कितम् ।
सुधीभिस्तत्तदखिलं विस्तरे सुसमाहितम् ॥ १७ ॥

षड्भाव-परीक्षा । स्थिरभावनिरासेन क्षणभङ्गप्रसाधने ।
षड्भाववादः काणादः प्रतिक्षिप्तोऽप्ययत्नतः ॥ १ ॥
परीक्ष्यते विविच्यापि पुनस्तत्त्वविशुद्धये ।

## अथ काणादाः ।

तत्र द्रव्य-परीक्षा । (1) द्रव्यं गुणाश्रयः, (2) तत्र नित्यं व्योमादिपञ्चकम् ॥ २ ॥
(3) पृथिव्यादिचतुष्कं तु नित्यं चानित्यमेव च ।
परमाणुतदारभ्यावयवावयवित्वतः ॥ ३ ॥
(4) कर्तृकालक्रियासंज्ञासङ्ख्यामानादिभेदतः ।
तन्त्वाद्यवयवेभ्योऽन्यः पटाद्यवयवी भवन् ॥ ४ ॥

## अत्र सौगताः ।

1 अयं गुण इदं द्रव्यमिति भेदो न युज्यते ।
शुक्लात्मनो नेतरस्तु पटः कश्चन दृश्यते ॥ ५ ॥
अभिभूतेऽपि शुक्ले स्वे जपाकुसुमसन्निधौ ।
स्फटिकोऽनभिभूतस्तु ननु रक्तः प्रकाशते ॥ ६ ॥
नैतद्युक्तं यतो भ्रान्तिः सा च निर्विषया यतः ।
न सता स्फटिकेनास्या भास्वरेणावभासिता ॥ ७ ॥
किञ्चान्यस्यान्यरूपेण भानमित्यप्यसङ्गतम् ।
शुक्लरूपस्य वा सेयमन्यथाख्यातिरिष्यताम् ॥ ८ ॥
2 नच प्रमाणं व्योमादौ शब्दादिस्त्वप्रयोजकः ।
नियता नहि शब्दस्य विभुनित्यैकधर्मता ॥ ९ ॥
विशिष्टसमयोद्भूतमनस्कारान्न चापरम् ।
परापरत्वविज्ञानं साधनं समपेक्षते ॥ १० ॥
प्रागेवात्मा प्रतिक्षिप्तो विज्ञानान्नेतरन्मनः ।
3 आरम्भकाणां नित्यत्वे सदाऽऽरम्भप्रसङ्गतः ॥ ११ ॥
आरम्भकतयेष्टानां नाणूनां नित्यतोचिता ।
अणुभ्यो नेतरः स्थूलस्तदारभ्यस्तु यो भवेत् ॥ १२ ॥
4 तत्तत्संहतिभेदात्तु संज्ञाभेदादि कल्पितम् ।
कर्तृकालक्रियाभेदोऽप्यत एवोपपद्यते ॥ १३ ॥
पूर्वपूर्वप्रत्ययकक्षणिकाणुसमुच्चयात् ।
सन्तानक्रमसम्बद्धात् को वाऽवयवीतरः ॥ १४ ॥

**गुणपरीक्षा ।**

आश्रये निहते द्रव्ये हत एव गुणोऽपि सः ।
बाधकं चापरं तत्र दिङ्मात्रेण निरूप्यते ॥ १ ॥
समवेतं घटे स्थूलं यद्येकं रूपमिष्यते ।
अंशतस्तु घटे दृष्टे रूपमीक्ष्येत सर्वतः ॥ २ ॥
अनंशे न समाधिः स्यादंशभेदव्यवस्थया ।
आश्रयस्येव तस्यापि सांशत्वे द्रव्यमेव तत् ॥ ३ ॥
आपत्तिरेषाऽनिष्टस्य त्रिषु बोध्या रसादिषु ।
विष्फारितेक्षणेनापि पश्यता पुरतः स्थितम् ॥ ४ ॥
दृश्यते नैव नीलादेरन्यत्सङ्ख्यादि किञ्चन ।
सङ्केताहितसंस्कारवैचित्र्यादेव केवलात् ॥ ५ ॥
एको महान् दीर्घ इति व्यवहारः प्रवर्तते ।
अपेक्षाबुद्धिमेवायं द्वित्वादौ शरणं श्रयन् ॥ ६ ॥
बुद्धिवैचित्र्यतोऽन्यत् किं कार्यं द्वित्वादि पश्यति ।
गुणादावपि सङ्ख्यादिव्यवहारे समे सति ॥ ७ ॥
द्रव्यमात्रे तु तत्सत्तास्वीकृतिर्विषमैव ते ।
आश्रयस्यैव चेत् सङ्ख्या गुणादाववभासते ॥ ८ ॥
एकस्यानेकविज्ञाने कस्य सङ्ख्याऽवभासते ।
निरासोऽनेन सम्पन्नः परिमाणपृथक्त्वयोः ॥ ९ ॥
संयोगादिनिरासस्तु सुधीभिरुपदर्शितः ।
अन्तःपातं निबन्धस्य कुर्वतां सुगमस्तु सः ॥ १० ॥
अवकाशो न तस्यास्मिन् सङ्ग्रहस्यापि सङ्ग्रहे ।

**कर्मपरीक्षा ।**

भावानां क्षणभङ्गित्वात् कर्म क्वापि न संभवेत् ।
नहि जन्मक्षणे कर्म न द्वितीयः स्थितिक्षणः ॥ १ ॥
वियोज्य देशादेकस्मात्संयोजयति या परम् ।
सा क्रिया गमनं सा हि स्थिरमेकमपेक्षते ॥ २ ॥
स्थिराणामेकरूपाणां कथं स्यात्कार्यकारिता ।

**सामान्य-परीक्षा ।**

अनेकानुगतं नित्यं सामान्यं यत्तु कल्प्यते ।
अपास्तप्रायमेवैतदाश्रयाणां निरासतः ॥ १ ॥
प्रमाणं यत्परैस्तत्र व्याहृतं तन्निरस्यते ।
जातिः प्रत्यक्षगम्येति भ्रान्तानां खलु भाषितम् ॥ २ ॥
या नाम जात्युपहिता गौरश्वोऽयमितीह धीः ।
न सा चक्षुःसम्प्रयोगसमनन्तरभाविनी ॥ ३ ॥

किंतु सङ्केतसम्भूतसंस्काराहितसंस्मृतेः ।
सा हि व्यवहिता स्मार्ती तस्मात् सा कल्पनैव हि ॥ ४ ॥

प्रत्यक्षं कल्पनापोढं विकल्पाः कल्पनात्मकाः ।
चक्षुषा स्पृष्टमात्रं तु निर्विकल्पं हि गृह्यते ॥ ५ ॥

न चागृहीतसङ्केतः पिण्डमेकं विलोकयन् ।
नाम्ना जात्याऽपि तं वेत्ति, तत् सामान्यं न चाक्षुषम् ॥ ६ ॥

धियोऽप्यनुगतत्वं यत् न जातिं समपेक्षते ।
धीः पाचकोऽयमिति या न सा जात्याऽनुगामिनी ॥ ७ ॥

न वा क्रियाविशेषेण यतो नानुगतो हि सः ।
सङ्केतान्नापरं किञ्चिन्निमित्तं तत्र दृश्यते ॥ ८ ॥

यान्यन्यान्यनुमानानि दर्शितानि परैरिह ।
अनयैव दिशा तेषां ज्ञेयो निरसनक्रमः ॥ ९ ॥

आश्रयाश्रयिभावोऽपि व्यक्तिजात्योर्न सिध्यति ।
पतनप्रतिरोधेन कुण्डो हि बदराश्रयः ॥ १० ॥

अपतिष्णोरमूर्तस्य सामान्यस्य किमाश्रयैः ।
स्वभावप्रच्यवाशङ्का न स्यात् नित्येऽप्यनाश्रये ।
ययाऽऽश्रयव्यपेक्षा स्यात् स्वभावस्यापरिच्युतौ ।
अप्रच्युतस्वभावं तु परैर्नित्यं तदिष्यते ॥ ११ ॥

पिण्डेषु जायमानेषु तेषु तेषु तदा तदा ।
नित्यं तदेकं सामान्यं सम्बध्नाति कथं वद ॥ १२ ॥

क्व स्थितं कुत आयातममूर्तमिदमक्रियम् ।
अथ पिण्डप्रदेशेषु व्याप्तं प्रागेव तद्यदि ॥ १३ ॥

विभुत्वमभ्युपेयं स्यात् तद्वादोऽयमसङ्गतः ॥ १४ ॥

विशेष-परीक्षा ।

नित्यद्रव्येष्वपास्तेषु विशेषाणां क्व सम्भवः ।
तेषु सत्स्वपि तेषां तु सिद्धिर्न स्यात् कथञ्चन ॥ १ ॥

व्यावर्तका विशेषाश्चेत्कल्प्यन्ते परमाणुषु ।
ते विशेषाः कैर्विशेषैर्व्यावर्त्यन्ते मिथोऽपरैः ॥ २ ॥

व्यावृत्ताश्चेत्स्वतस्तर्हि किं न वाच्यास्तथाऽणवः ।
तस्मादन्या विशेषाः स्युरित्येतद्दुर्वचं वचः ॥ ३ ॥

समवाय-परीक्षा ।

निरस्तः समवायोऽपि द्रव्यादीनां निरासतः ।
सम्बन्धिषु निरस्तेषु सम्बन्धस्य क्व सम्भवः ॥ १ ॥

समवायाख्यसम्बन्धकल्पनाऽपि च दुर्घटा ।
प्रवर्तते कुण्डदध्नोरिहेदमिति धीर्यथा ॥ २ ॥

न तथा तन्तुपटयोः कुतः सम्बन्धकल्पना ।
आधाराधेयबुद्ध्या हि सम्बन्धः स समर्थ्यते ॥ ३ ॥

प्रत्युत प्रतिकूलैव लौकिकी धीः प्रवर्तते ।
वृक्षे शाखाः शिलाः शैले द्वाराणि सदनेष्विति ॥ ४ ॥

अनयाऽवयवानां हि गम्येताधेयता परम् ॥ ५ ॥

सम्बन्धिष्वप्यनित्येषु नानाभूतेषु सत्स्वपि ।
हन्त नित्यैकसंसर्गकल्पनायां कुकौशलम् ॥ ६ ॥

नित्यैकसमवायेऽस्मिन् सदा सर्वत्र संस्थिते ।
रूप्यरूप्यादिधीभेदव्यवस्था दुर्घटैव हि ॥ ७ ॥

## भावानां शब्दार्थत्ववादिनः ।

**शब्दार्थ-परीक्षा ।**

1 ननु द्रव्यादयो न स्युस्तत्त्वतो यद्युपाधयः ।
दण्डी नीलोऽयमित्याद्याः प्रवर्तेरन् कथं गिरः ॥ १ ॥

निमित्तनिरपेक्षा हि न प्रवृत्तिर्गिरां क्वचित् ।
शब्दार्थस्य व्यवस्थित्यै यदपोहानुधावनम् ॥ २ ॥

भावेषु द्वेषमेषां तु प्रकाशयति केवलम् ।
लोके स्वरसतः सिद्धा ननु भावे गिरां गतिः ॥ ३ ॥

श्रुते गवादिशब्दे हि भावः स्फुरति चेतसि ।
निषेधस्तु न कस्यापि, शाब्दोऽपोहः कथं भवेत् ॥ ४ ॥

2 अगोनिवृत्तिः शब्दार्थौ यदि गौः केन गम्यताम् । ( भामहः । )
गोशब्दं शृण्वतः पूर्वमगौः स्फुरतु चेतसि ॥ ५ ॥
यन्निवृत्तिरपोहोऽयं गोशब्दार्थतयेष्यते ।

3 अपोहो यो गिरामर्थः पर्युदासात्मकः स चेत् ॥ ६ ॥ ( कुमारिलः । )
नामान्तरेण वाच्यत्वं सामान्ये स्वीकृतं भवेत् ।
यदेव गोत्वं सामान्यमगोऽपोहः स एव हि ॥ ७ ॥

अभावः खलु भावोऽन्यो गोभेदो योऽश्व एव सः ।
प्रसज्यप्रतिषेधश्चेदपोहोऽर्थः कथं गिराम् ॥ ८ ॥

शून्यात्मनो निषेधस्य वाच्यता न घटेत हि ।
बाह्यार्थस्य पदार्थत्वनिषेधे पर्यवस्यति ॥ ९ ॥

पदजन्योपस्थितीनां स्वात्मांशग्राहिता भवेत् ।
तथासति तु वाच्यत्वं मुधाऽपोहस्य कल्प्यते ॥ १० ॥

प्रतिभाख्यं तु वाक्यार्थं बाह्यार्थानवधीरयन् ।
यः कल्पयति किं तस्य पदार्थे व्यर्थचिन्तया ॥ ११ ॥

वाक्यार्थे या गतिर्दृष्टा पदार्थे सा भवेन्न किम् ।
वाक्यात्पदमपोद्धृत्य व्यर्थोऽपोहार्थताश्रयः ॥ १२ ॥

4 सर्वशब्दस्य को वाऽर्थो न ह्यसर्वं प्रसिध्यति । (उद्योतकरः ।)
यद्व्यवच्छेदतोऽपोहे सर्वशब्दार्थता भवेत् ॥ १३ ॥
असर्वात्मकमेकं चेदपोहस्तस्य दुर्घटः ।
न ह्येकस्माद्व्यवच्छेदः सर्वस्मिन्नुपपद्यते ।
प्रत्येकानतिरिक्तं तत् समुदायात्मकं यतः ॥ १४ ॥
एवं द्व्यादिपदानां च व्याहताऽपोहवाच्यता ।
अगोऽपोहे कथं तावद्युक्ता गोशब्दवाच्यता ॥ १५ ॥
अगोत्वमप्रसक्तं हि प्रसक्तं तु व्यपोह्यते ।
अगोरपोहः शब्दार्थो गोरन्योऽनन्य एव वा ॥ १६ ॥
अन्यस्तस्यैव धर्मश्चेत् गमनादेरनन्वयात् ।
गौर्गच्छतीत्यादि वाक्यं व्याहतार्थं तदा भवेत् ॥ १७ ॥
अनन्यश्चेत् कोनु लाभः प्राप्तोऽपोहार्थकल्पनात् ।

## अत्र सौगताः ।

सत्यं निमित्तसापेक्षाः प्रवर्तन्तां गिरोऽखिलाः ।
किंतु तेषां निमित्तानां तात्त्विकत्वमसाधनम् ॥ १८ ॥

1 अन्तर्मात्रासमारूढवासनाबलसम्भवः ।
निमित्तमेषां विषयो धीध्वनीनां न चेतरः ॥ १९ ॥
निमित्तं न घटेतापि व्यवहारेषु तात्त्विकम् ।
यतः स्वलक्षणादीनां तत्त्वतो न पदार्थता ॥ २० ॥
व्यवहाराय सङ्केतो व्यवहारक्षणेऽसति ।
स्वलक्षणेऽननुगते क्रियमाणो निरर्थकः ॥ २१ ॥
स्वलक्षणानां व्यक्तीनां परस्परमनन्वयात् ।
देशकालादिभेदेन भिन्नभिन्नात्मनां कथम् ॥ २२ ॥
नियमेन भवेद्योगः सङ्केतव्यवहारयोः ।
देशकालाद्यनुगतो मेर्वादिर्यैः परैर्मतः ॥ २३ ॥
क्षणिकाणुसमूहोऽयमिति प्राज्ञैः समर्थितः ।
व्यक्त्याकृत्योः पदार्थत्वमेतेनैव निराकृतम् ॥ २४ ॥

जातेश्च समवायस्य प्रागेव तु निरासनात् ।
शब्दार्थता निरस्तैव जातितद्योगतद्वताम् ॥ २५ ॥

2 अपोहे यत्स्वरूपे तु यादृग्वाच्यत्वमिष्यते ।
तदेतदपरिज्ञाय दूषयन् दुष्यति स्वयम् ॥ २६ ॥
अर्थात्मनि न चापोहे वाच्यतास्माभिरिष्यते ।
किंतु बुद्ध्यात्मकेऽपोहे, स चापोहो निरूप्यते ॥ २७ ॥
अर्थाकाराध्यवसितं यदर्थप्रतिबिम्बकम् ।
ज्ञाने विकल्पके भाति सोऽपोहो बुद्धिलक्षणः ॥ २८ ॥
अर्थाकारान्तराभासाद्बुद्धेरस्या व्यपोहनात् ।
अपोह इति शब्दोऽस्यां मुख्यवृत्त्यैव वर्तते ॥ २९ ॥
अर्थाकारावभासिन्या बुद्धेः शब्दस्तु कारणम् ।
तद्धेतुहेतुमद्भावात्सम्बन्धो नान्य एनयोः ॥ ३० ॥
तद्बुद्धिलक्षणापोहे या स्थिता शब्दजन्यता ।
नेतरा तामृते क्वाऽपि सम्भवेत् शब्दवाच्यता ॥ ३१ ॥
तद्बुद्ध्यात्माऽपोह एव शब्दार्थ इति नो मतम् ।
अगोनिवृत्तिः शब्दार्थो यदि गौः केन गम्यते ॥ ३२ ॥
गोशब्दं शृण्वतः पूर्वमगौः स्फुरतु चेतसि ।
इति यद्दूषणं प्रोक्तं तस्य नावसरोऽधुना ॥ ३३ ॥
अगोनिवृत्तिः साक्षात्तु नहि शब्देन बोध्यते ।
जन्यते किन्तु शब्देन साक्षात् गोबुद्धिरेव हि ॥ ३४ ॥

3 उक्तो बुद्ध्यात्मकोऽपोहः पर्युदासात्मकोऽप्ययम् ।
पराभिमतसामान्ये वाच्यत्वं न प्रसज्जयेत् ॥ ३५ ॥
स हि बुद्धेरनन्ये तु सामान्ये तत्प्रसज्जयेत् ।
बहुष्वनुगतं ह्येकं वस्तुसत्तत्परैर्मतम् ॥ ३६ ॥
सर्वत्र शाबलेयादौ गौर्गौरिति समोदयात् ।
बाह्यरूपतयाऽध्यस्तबुद्ध्यारूढावभासनात् ॥ ३७ ॥
सामान्यं नापरं किञ्चित्परमार्थसदिष्यते ।
प्रसज्यप्रतिषेधात्मा नापोहोर्थो गिरां मतः ॥ ३८ ॥
तदस्वीकृतपक्षस्य दूषणं नो न दूषणम् ।
प्रतिभाख्यः पदार्थोऽपि वाक्यार्थ इव नो मतः ॥ ३९ ॥
प्रतिबिम्बात्मकेऽपोहे पदार्थत्वं हि साधितम् ।
4 न वैषम्यप्रसङ्गो नस्तद्वाक्यार्थपदार्थयोः ॥ ४० ॥

4 नचापोहार्थदौर्घट्यं सर्वशब्दे प्रसज्यते ।
तथाहि केवलः सर्वशब्दो नैवार्थबोधकः ॥ ४१ ॥
पदान्तरेण संसृष्टः स समर्थोऽर्थबोधने ।
यदा तु तस्य सामर्थ्यं तदापोहस्तु बोध्यते ॥ ४२ ॥
सर्वे धर्मा निरात्मान इतिवाक्यगतो हि सः ।
केषांचिदेव नैरात्म्यं यन्मन्दैरुपकल्पितम् ॥ ४३ ॥
व्यावर्तयति तत्तस्य सिद्धाऽपोहार्थवाचिता ।
अस्यापि सर्वशब्दस्य गोहस्त्यश्वादिशब्दवत् ॥ ४४ ॥
अर्थावबोधसामर्थ्यमवाक्यस्थस्य चेद्भवेत् ।
असर्वात्मकमेकं चेदपोहस्तस्य दुर्घटः ॥ ४५ ॥
न ह्येकस्माद्व्यवच्छेदः सर्वस्मिन्नुपपद्यते ।
इतीयमापतेत् शङ्का न तथा शक्तिरस्य हि ॥ ४६ ॥
ये चान्ये बहवो दोषास्तैस्तैरुद्भाविताः परैः ।
तेषां निरासो बोद्धव्यो निबन्धान्तःप्रवेशतः ॥ ४७ ॥

प्रत्यक्ष-परीक्षा ।

गुणद्रव्यक्रियाजातिसमवायादिसिद्धये ।
परैः प्रत्यक्षमिष्टं यत्तन्न मानमतत्त्वतः ॥ १ ॥
न पराभिमतं न्याय्यं यत्तु प्रत्यक्षलक्षणम् ।
जडाः प्रत्यक्षमिच्छन्ति ये केचिज्जडमिन्द्रियम् ॥ २ ॥
परायत्तप्रकाशस्य प्रामाण्यावसरः कथम् ।
विकल्पाः कल्पनामूला ये विशिष्टावभासिनः ॥ ३ ॥
तत्र गौरयमित्यादेः सविकल्पस्य मानता ।
प्रत्यक्षं कल्पनापोढमभ्रान्तं सुधियो विदुः ॥ ४ ॥
इयं तु कल्पना, या स्यात्प्रतीतिरभिलापिनी ।
या नामयोजना सेयं कल्पना त्वभिलापिनी ॥ ५ ॥
परदृष्ट्या तु जात्यादियोजना, साऽपि कल्पना ।
तत्कल्पनानात्मकस्तु नैकः स्यात् सविकल्पकः ॥ ६ ॥
कल्पनानात्मकं यत्तु वैशिष्ट्यानवभासकम् ।
असिद्धमिति नाशङ्क्यं यदन्यासक्तचेतसाम् ॥ ७ ॥
जायते किञ्चिदध्यक्षमभिलापसमुज्झितम् ।
यत्तु चेतस्सङ्गभूम्ना विकल्पो जायते तदा ॥ ८ ॥
नामान्तराभिलापेन नासावाक्षार्थभासकः ।
किं तु चक्षुःसम्प्रयोगात् चेतःसङ्गविवर्जितात् ॥ ९ ॥

चक्षुःसंयोगरहिताच्चेतस्सङ्गाच्च साधनात् ।
जायेते युगपत्कार्ये अविकल्पविकल्पके ॥ १० ॥
विकल्पो वाऽविकल्पो वा, यौगपद्ये न बाधकम् ।
नर्तकीं पश्यतः पुंसस्ताम्बूलं चर्वतस्तथा ॥ ११ ॥
जायन्ते रूपशब्दादिविकल्पा बहवः खलु ।
आक्षस्य निर्विकल्पत्वं न घटेतेत्यसङ्गतम् ॥ १२ ॥
सविकल्पकभावे हि निमित्तं नात्र वर्तते ।
विशिष्टार्थग्राहिता तु निमित्तं सविकल्पके ॥ १३ ॥
अतात्त्विकत्वाज्जात्यादेः क्व तद्वैशिष्ट्यसम्भवः ।
न च नाम्नोऽस्ति सम्बन्धः कश्चिदर्थेन तात्त्विकः ॥ १४ ॥
तज्जात्यादिविशिष्टार्थग्रहणं कल्पनैव तु ।

## सुमतिः ।

1 नन्वाक्षमखिलं ज्ञानं विशिष्टस्यैव भासकम् ॥ १५ ॥
सत्तासामान्ययोगेन यदर्थमवभासयत् ।
आक्षं भवति विज्ञानं निर्विकल्पं तदीर्यते ॥ १६ ॥
विशेषजातियोगेन यत्तत्स्यात्सविकल्पकम् ।
सत्तासामान्ययोगेन न चेन्नार्थावभासनम् ॥ १७ ॥
सदात्मनाऽगृहीतो हि निषेधक्रोडमापतन् ।
आक्षस्य विषयो न स्यात्तद्विशिष्टावभासि तत् ॥ १८ ॥
तद्विशिष्टावभासित्वे सत्याक्षं कल्पना न किम् ।
न चेत्तत्कल्पना, नामयोजना कल्पना कथम् ॥ १९ ॥

## कुमारिलः ।

2 अस्ति ह्यालोचनाज्ञानं धर्मिमात्रावभासकम् ।
नापि सामान्यरूपेण यस्मिन् धर्म्यवभासते ॥ २० ॥
यदेतदाक्षं प्रथमं निर्विकल्पं तदिष्यते ।
तस्मादेवाक्षसंयोगात्ततस्तस्यैव धर्मिणः ॥ २१ ॥
विशेषधर्मयोगेन यद्भवत्यवभासकम् ।
सविकल्पकमप्येतत्प्रत्यक्षं ह्यक्षहेतुकम् ॥ २२ ॥
3 प्रत्यक्षस्याविकल्पत्वे व्यवहाराङ्गता कथम् । भाविविक्तः
विकल्पे विषयैक्येन व्यवहाराङ्गता स्थिता ॥ २३ ॥

## अत्र सौगताः ।

1 यदक्षसम्प्रयोगोत्थमविकल्पकमेव तत् ।
सत्ताधर्मं पुरस्कृत्य तद्धि नार्थावभासकम् ॥ २४ ॥

सत्त्वेनाप्यगृहीतश्चेत् गृहीतः कथमित्यसत् ।
व्यावृत्तात्मा विजातीयान्नीलादिः पुरतः स्थितः ॥ २५ ॥

सति चक्षुःसम्प्रयोगे सपद्येव प्रकाशते ।
अतस्तदाक्षं विज्ञानं विशिष्टविषयं स्वतः ॥ २६ ॥

न विशेषणयोगेन, तस्मात्तत्कल्पना नहि ।
यद्विशेषणयोगेन विशिष्टविषयं भवेत् ॥ २७ ॥

तत्तु नाक्षं, कल्पनैव, यस्मात्तत्सविकल्पकम् ।
2 जात्यादीनां निरासेन तद्वैशिष्ट्यावभासिनः ॥ २८ ॥

प्रामाण्यं सविकल्पस्य दूरोत्सारितमेव हि ।
स्वलक्षणादभिन्नस्य जात्यादेरवभासने ॥ २९ ॥

यथैवालोचनाज्ञानमनाविष्टाभिलापकम् ।
निर्विकल्पं, तथैवेदं स्याज्ज्ञानं निर्विकल्पकम् ॥ ३० ॥

स्वलक्षणस्यावाच्यत्वं प्रागेव हि समर्थितम् ।
आत्यन्तिको विभेदश्चेत् जातेरिष्टः स्वलक्षणात् ॥ ३१ ॥

कथं विशेष्यं रज्येत जातिबुद्ध्या स्वलक्षणम् ।
3 निर्विकल्पादपि ज्ञानात्सविकल्पस्य सम्भवात् ॥ ३२ ॥

तद्द्वारेणाविकल्पस्य व्यवहाराङ्गतोचिता ।
यदाक्षं कल्पनापोढं व्यावृत्तार्थावभासकम् ॥ ३३ ॥

तेन काचित्कल्पनेयं मानसी संप्रवर्तते ।
गौरयं नाश्व इति या व्यवहारस्य साधनम् ॥ ३४ ॥

प्रवृत्तिस्तु भवत्यैक्यग्रहाद्दृश्यविकल्पयोः ।
तन्निर्विकल्पहेतुत्वमविकल्पस्य नेत्यसत् ॥ ३५ ॥

कल्पनापोढमभ्रान्तं प्रत्यक्षमिति सुस्थितम् ।
मानतत्फलमेयानां बोध्यात्रेत्थं व्यवस्थितिः ॥ ३६ ॥

मानं स्यादर्थसारूप्यं मेयस्त्वर्थो बहिःस्थितः ।
फलं त्वर्थपरिच्छेद इति बाह्यार्थवादिनः ॥ ३७ ॥

स्वसंवित्तिः फलं स्वात्मा मेयो मानं तु संविदः ।
स्वसंवेदनयोग्यत्वमिति विज्ञानवादिनः ॥ ३८ ॥

अनुमान-परीक्षा ।

अनुमाने द्विधा भिन्ने परार्थस्वार्थभेदतः ।
स्वार्थं त्रिरूपलिङ्गोत्थमनुमेयार्थवेदनम् ॥ १ ॥

पक्षे सत्त्वं, सपक्षे च, व्यावृत्तिस्तु विपक्षतः ।
इमानि त्रीणि रूपाणि यैः स्याल्लिङ्गस्य लिङ्गता ॥ २ ॥

नह्यन्यतमहीनं तु साधनाय प्रकल्पते ।
अविनाभावनियमोऽप्येतै रूपैस्तु सिद्ध्यति ॥ ३ ॥

एतेनैतदपि प्रास्तं त्रयाणां किं व्यपेक्षया ।
लिङ्गस्य साधुता सिद्ध्यत्यविनाभावमात्रतः ॥ ४ ॥

पात्रस्वामिमतनिरासः

किं साध्येनाविनाभावो हेतोर्धर्मिणि गम्यते ।
किंवा निदर्शने नाद्यः प्राक्साध्यस्याविनिश्चयात् ॥ ५ ॥

न द्वितीयोंऽशतो ज्ञातादविनाभावमात्रतः ।
धर्मिण्यदृष्टसम्बन्धो हेतुः साध्यं न साधयेत् ॥ ६ ॥

न च सामान्यतो ज्ञातादविनाभावतः फलम् ।
सामान्यतश्चाक्षुषत्वेऽनित्यत्वेनाविनास्थितिः ॥ ७ ॥

ज्ञातेऽपि न ततस्तेन तत्र सिद्ध्यत्यनित्यता ।
अथ तस्यापि सद्भावो यदि धर्मिण्यपेक्ष्यते ॥ ८ ॥

अनिच्छतोऽपि त्रैरूप्यमापतेद्धन्त ते मते ।
त्रिरूपलिङ्गवचनं परार्थमथ कीर्त्यते ॥ ९ ॥

तच्च द्व्यवयवं यो यो धूमवान् सोऽग्निमान् यथा ।
महानसस्तथा चायं पर्वतो धूमवानिति ॥ १० ॥

वैशेषिकमतनिरासः

परे निगमनान्तं तत् प्रतिज्ञाहेतुपूर्वकम् ।
इच्छन्ति तन्न युक्तं यत् साधनाङ्गं न तत्त्रयम् ॥ ११ ॥

प्रतिज्ञावचसः साक्षात्स्वार्थे नैव प्रमाणता ।
शब्दानामर्थसम्बन्धवैधुर्यात्संशयोदयात् ॥ १२ ॥

वैयर्थ्यं च प्रतिज्ञाया दृष्टान्तोपनयद्वयात् ।
विनैव वचनं पक्षे साध्यवत्ता हि गम्यते ॥ १३ ॥

हेतोरुपनयेनैव स्वीकृतेन गतार्थता ।
हेतुना पौनरुक्त्यं स्यात्पूर्वेणोपनयस्य च ॥ १४ ॥

भाविविक्तप्रत्यवस्थानपरिहारः

अपि तत्पक्षधर्मत्वं हेतुनैव तु गम्यते ।
पक्षधर्मत्वतात्पर्यराहित्ये किं नु हेतुना ॥ १५ ॥

प्रतिज्ञया गतार्थत्वाद्व्यर्थो निगमनाश्रयः ।
पूर्वेणोपनयान्तेन हेतोरङ्गे सुसंस्थिते ॥ १६ ॥ उद्योतकरप्रत्यवस्थानपरिहारः

कुतो विपर्ययाशङ्का निगमो यत्प्रशान्तये ।
तस्मात्तथेति वाङ्मात्रात्कथं वा सा प्रशाम्यति ॥ १७ ॥

न वा निगमनापेक्षा विशिष्टैकार्थवित्तये । **अविद्धकर्णप्रत्यवस्थानपरिहारः**
अपि वाक्यैर्विप्रकीर्णैः पूर्वैरेव मिथोऽन्वितैः ॥ १८ ॥

सम्बद्धैकार्थबोधो हि निराबाधः प्रजायते ।
पञ्चावयववादोऽयं तदयुक्तः परैः श्रितः ॥ १९ ॥

तस्य ह्यवयवस्यास्य प्रामाण्यं श्रोत्रपेक्षया ।
अनेन सूच्यते लिङ्गं त्रिरूपं श्रोतुरेव हि ॥ २० ॥

अनेनैव निमित्तेन समयात्सनिमित्तकात् ।
सिद्धाऽनतिप्रसक्ताऽस्य नः परार्थानुमानता ॥ २१ ॥

**प्रमाणान्तर-परीक्षा ।**

आभ्यां परं न प्रमाणं, मानत्वे, नातिरिच्यते ।
प्रामाण्यं यत्परैरिष्टं शब्दस्यार्थावबोधने ॥ १ ॥

शब्दार्थयोरसम्बन्धात्तत्कथञ्चन दुर्घटम् । **शब्दस्य प्रमाणान्तरत्वनिरासः**
न तादात्म्यतदुत्पत्ती सम्बन्धश्चापरो नहि ॥ २ ॥

सङ्केतस्तद्ग्रहो वाऽपि क्षणिकेषु सुदुर्घटः ।
अकर्तृकस्य वेदस्य प्रामाण्यं दुरपह्नवम् ॥ ३ ॥

इति यन्मन्यते कैश्चित्तदेतेन पराहतम् ।
शक्ताशक्तविकल्पे तु नित्यवादः प्रणश्यति ॥ ४ ॥

किन्तु शब्दो विवक्षायां लिङ्गभावं समश्नुते ।
वक्तुर्विवक्षां श्रोता हि लिङ्गादस्मात्प्रपद्यते ॥ ५ ॥

कार्यकारणभावस्तु विवक्षाशब्दयोः स्फुटः ।
अत एव हि सम्बन्धादविनाभाव एनयोः ॥ ६ ॥

विवक्षायां तु कस्याञ्चित्कश्चिच्छब्दस्तु कारणम् ।
भावस्वभाववैचित्र्यान्नातः स्यादव्यवस्थितिः ॥ ७ ॥

गवयं पश्यतः पुंसः कदाचिद्विपिने क्वचित् । **उपमानप्रामाण्यनिरासः**
ज्ञानं यज्जायते तुल्या गौरनेनेति सोपमा ॥ ८ ॥

तया यः स्मार्यमाणोऽर्थः सादृश्येन विशेषितः ।
तस्याः सोर्थः प्रमेयं स्यात् तत्स्थं सादृश्यमेव वा ॥ ९ ॥

तन्मानमुपमानं स्यादिति केचित्प्रचक्षते ।
सादृश्यं यदि वस्तु स्यात्स्यान्मानमुपमा तदा ॥ १० ॥

भूयोऽवयवसामान्ययोगरूपं हि तन्मतम् ।
सामान्यस्य निरस्तत्वादस्य सिद्धा ह्यवस्तुता ॥ ११ ॥

किञ्चात्र स्मृतिसामग्र्या स्मृतिरेवोपजायते ।
गवयावयवांशैर्हि दृष्टैस्तौल्यविकल्पकैः ॥ १२ ॥
बहुशो दृष्टपूर्वायाः स्मृतिर्गोरुपजायते ।
उपमानप्रमाणस्य तदिह क्व नु सम्भवः ॥ १३ ॥
गवयो यस्तु गोतुल्य इति केनाऽपि बोधितः ।
प्रविष्टो जातु विपिनं विलोक्य गवयं पुरः ॥ १४ ॥
स्मृतातिदेशवाक्यार्थः सोऽयं गवयसंज्ञकः ।
इति संज्ञासंज्ञिभावमध्यवस्यति, तत्र तु ॥ १५ ॥
उपमानं वाक्यजन्यसादृश्यज्ञानलक्षणम् ।
फलं तूपमितिः संज्ञासंज्ञिभावावधारणम् ॥ १६ ॥
प्रामाण्यमुपमानस्य केचिदेवं प्रचक्षते ।
न चेदं युज्यतेऽर्थस्य यस्मात् शब्दो न वाचकः ॥ १७ ॥
वाच्यवाचकभावो हि प्रतिक्षिप्तः पदार्थयोः ।
इष्यतां वा स नैवात्र मानान्तरमपेक्ष्यते ॥ १८ ॥
गोसादृश्यं त्रिरूपं हि लिङ्गं वाक्येन गम्यते ।
अर्थे गवयसंज्ञत्वं साध्यं येनानुमीयते ॥ १९ ॥
अतोऽनुमानात्पार्थक्यमुपमाने न सम्भवेत् ।
किञ्च संज्ञासंज्ञिभावः प्रागेव ह्यवधारितः ॥ २० ॥
यत्तदारण्यकं वाक्यं किं नावगमयत्यमुम् ।
तत्प्रामाण्यं कथं वा स्यादस्य स्मृतिसधर्मणः ॥ २१ ॥
यान्यन्यानि प्रमाणानि तैस्तैः प्रोक्तानि वादिभिः ।
तेषां निरासो विज्ञेयो निबन्धान्तःप्रवेशतः ॥ २२ ॥

## जैनाः ।

**स्याद्वाद-परीक्षा ।**

एकैकमप्यत्र यतस्यादनेकात्मकमेव तत् ।
य एव पिण्डः खण्डात्मा स गवात्माऽपि दृश्यते ॥ १ ॥
खण्डो विशेषो व्यावृत्तेरनुवृत्तेस्तु गौः पुनः ।
सामान्यं, तदयं पिण्डो नैकात्मा नरसिंहवत् ॥ २ ॥
मुण्डाद्भिन्नेऽपि खण्डे हि धीर्मुण्ड इव गौरिति ।
खण्डोऽयं न तु मुण्डोऽयमिति व्यावृत्तिधीरपि ॥ ३ ॥
एवं तत्तद्विशेषेषु भाव इत्यनुवृत्तिधीः ।
गोर्नायं नाश्व इति च मिथो व्यावृत्तिधीरपि ॥ ४ ॥

भिन्नस्वभावसामान्यविशेषात्मतया त्वतः ।
एकस्यानेकरूपत्वं लोकेनैव व्यवस्थितम् ॥ ५ ॥
कारकद्वयरूपत्वमेकस्यापि हि लक्ष्यते ।
विद्योततेऽभ्रमभ्रादित्यपि लोके प्रयुज्यते ॥ ६ ॥
विरोधं वाऽविरोधं वा वैषम्यं वा स्वभावतः ।
उल्लङ्घ्य लोकमर्यादां कः प्रसाधयितुं क्षमः ॥ ७ ॥

## अत्र सौगताः ।

का नु सा लोकमर्यादा योपपत्तिपराहता ।
बालमूढमयो लोको नोपपत्तिमपेक्षते ॥ ८ ॥
एकत्वमप्यनेकत्वं भिन्नतां चाप्यभिन्नताम् ।
विनाशेमविनाशं च कोन्वेकस्य वदेद्बुधः ॥ ९ ॥
यदेकस्यैव सामान्यविशेषोभयरूपता ।
अविरुद्धमिदं सर्वमिति तु व्याहतं वचः ॥ १० ॥
स्वभावभेदे नानात्वं स्यात्सामान्यविशेषयोः ।
तदात्मतायां नानात्वादेकत्वं नैव सम्भवेत् ॥ ११ ॥
एकवस्त्वात्मतायां च तत्सामान्यविशेषयोः ।
मिथः स्वभावभेदस्तु न घटेत कथञ्चन ॥ १२ ॥
स्वभावभेदे त्वसति नानात्वं न तयोर्भवेत् ।
तथा च नैव नानात्वं वस्तुनोऽपि तदात्मनः ॥ १३ ॥
एकस्य तात्त्विकी नापि कारकद्वयरूपता ।
विवक्षाभेदमात्रात्तु व्यवहारः प्रवर्तते ॥ १४ ॥
तस्मादेकत्वनानात्वाद्यनेकान्तस्वभावता ।
एकस्य वस्तुनो नैव कथञ्चिदपि सम्भवेत् ॥ १५ ॥
न वा नृसिंहे द्वैरूप्यं किन्त्वणुप्रचयात्मके ।
तस्मिन्नेकांशगं नृत्वं सिंहत्वमपरांशगम् ॥ १६ ॥

## सौगतैकदेशिनः ।

**त्रैकाल्य-परीक्षा ।**

वस्तूनां सौगताः केचित्त्रैकाल्यमभिमन्वते ।
त्रैकाल्यवादिनस्तेऽपि मतभेदाच्चतुर्विधाः ॥ १ ॥
1 भावान्यथात्वमात्रेण कश्चिदध्वत्रयान्वयम् । **धर्मत्रातमतम् ।**
हेम्नः कुण्डलकेयूरगुणभेद इवेच्छति ॥ २ ॥

अतीतादिव्यवहृतिर्भावैर्वस्तुगुणैस्तु यैः ।
एषामेवान्यथाभावस्त्रिष्वध्वसु न वस्तुनः ॥ ३ ॥
एकस्यामनुरक्तस्याविरक्तस्यापरास्विव । घोषमतम् ।
अव्यक्तलक्षणस्यापि लक्षणान्तरयोगतः ॥ ४ ॥
अध्वसु त्रिषु वस्तूनामन्वयं मन्यते परः ।
ते च वृत्तिविशेषाः स्युर्यैरतीतादिलक्षणैः ॥ ५ ॥
अतीतादिव्यवहृतिर्भवत्येकस्य वस्तुनः ।
माता च दुहिता चेति नार्येकैव यथोच्यते ॥ ६ ॥ बुद्धदेवमतम् ।
पूर्वापरमपेक्ष्यैवमेकोऽप्यन्यान्य उच्यते ।
यस्य पूर्वापरे स्तः स वर्तमान इतीर्यते ॥ ७ ॥
पूर्वापरे ययोर्न स्तस्त्वतीतानागतौ क्रमात् ।
2 त्रैकाल्यं निर्वहत्येवमन्यथान्यथिकः परः ॥ ८ ॥
त्रैकाल्यं निर्वहत्यन्यः कारित्रस्य व्यपेक्षया । वसुमित्रमतम् ।
या फलाक्षेपशक्तिः सा कारित्रमिति कथ्यते ॥ ९ ॥
क्षिप्ता सती मृद्गुटिका ह्यङ्कत्र्यङ्कादिषु क्रमात् ।
द्वित्र्यादिव्यवहाराणां भवत्येका पदं यथा ॥ १० ॥
कारित्रेऽवस्थितेः, तस्माच्च्युतेः, तदनवाप्तितः ।
वर्ततेऽयमतीतोऽय, मनागत, इति क्रमात् ॥ ११ ॥
अन्यान्यव्यवहाराणामेकमप्यास्पदं तथा ।
तदतीतानागतयोरवस्तुत्वं पराहतम् ॥ १२ ॥
अतीतानागतज्ञानं नो चेन्निर्विषयं भवेत् ।
अप्रतीत्य द्वयं नैव विज्ञानमुपजायते ॥ १३ ॥
चक्षू रूपं मनो धर्मा इत्याद्येतत्तु तद्द्वयम् ।
इति द्वयाश्रयत्वोक्तिस्तायिनो व्याहता भवेत् ॥ १४ ॥
अवस्तुत्वादतीतस्य वैफल्यं कर्मणो भवेत् ।
अतीतानागतज्ञानं विभक्तं यत्तु योगिनाम् ॥ १५ ॥
तयोर्वस्तुत्वविरहे तद्घटेत कथं पुनः ।

## अत्र सौगताः सुधियः ।

1 साङ्ख्यप्रक्रियया तौल्यात्प्रथमस्तु पराहतः ॥ १६ ॥
यः स्वभावान्यथाभावः परिणामो हि वस्तुनः ।
त्यक्तपूर्वस्वभावस्य स चे, द्वस्त्वन्तरं भवेत् ॥ १७ ॥

पूर्वस्वभावात्यागेन स्वभावान्तरसङ्गतौ ।
हन्त स्वभावसाङ्कर्यं द्वितीयोऽप्यत एव न ॥ १८ ॥
किञ्च दृष्टान्तवैषम्यान्न तृतीयस्य सङ्गतिः ।
2 कारित्रवादो यश्चायं चतुर्थः सोऽपि नोचितः ॥ १९ ॥
अध्वव्यवस्थासंसिद्ध्यै धर्माणां यत्प्रकल्प्यते ।
कारित्रं यद्यभिन्नं स्याद्धर्मेभ्यो विफलः श्रमः ॥ २० ॥
धर्मस्वरूपवत्तच्च ननु स्यात् सार्वकालिकम् ।
ततश्च्युतिस्तदप्राप्तिर्धर्माणां क्व नु सम्भवेत् ॥ २१ ॥
धर्मेभ्यो यदि तद्भिन्नमपसिद्धान्त आपतेत् ।
स्कन्धायतनधातुभ्यः प्रास्तं भगवतेतरत् ॥ २२ ॥
धर्माणां वर्तमानानां प्रागूर्ध्वं चास्वभावता ।
कारित्रस्यैव हेतुत्वात् संस्कृतत्वाच्च सिद्ध्यति ॥ २३ ॥
अन्यथा नित्यतापत्त्या हेतुत्वादि विरुध्यते ।
यत्त्वनालम्बनं ज्ञानं नेति तन्नियतं न हि ॥ २४ ॥
नित्येश्वरादिविज्ञानमनालम्बनमेव हि ।
यदुक्तं तायिना तत्तु चित्ते सालम्बने स्थितम् ॥ २५ ॥
सालम्बननिरालम्बभेदात्तद्धि द्विधेष्यते ।
अप्यनालम्बनस्यास्य ज्ञानत्वमजडत्वतः ॥ २६ ॥
तच्चाजडत्वं ज्ञानस्य प्रकाशैकस्वभावता ।
अतीतं कर्म यत्तत्तु साक्षान्न फलसाधनम् ॥ २७ ॥
किन्तु तद्वासिताच्चित्तसन्तानात्फलमिष्यते ।
अतीतानागतज्ञानं जायते योगिनां तु यत् ॥ २८ ॥
न तद्विषयसापेक्षं चक्षुर्विज्ञानवद्भवेत् ।
किन्तु रूपं वर्तमाने स्यादसाधारणं तु यत् ॥ २९ ॥
सन्तानक्रमसङ्गत्या कार्यकारणलक्षणम् ।
ज्ञात्वा तद्योगिनः पश्चाल्लौकिकैः साविकल्पकैः ॥ ३० ॥
भूतं भावि च सन्तानं यद्धेतोः स्यात्फलस्य च ।

## चार्वाकाः ।

लोकायत-परीक्षा ।

1 कालत्रयेऽप्यनुगतं यद्येकमपि नेष्यते ।
परलोकाद्यभावेन वरं लोकायतं मतम् ॥ १ ॥
2 चैतन्यं भौतिको धर्मो यतो भूतचतुष्टयात् ।
कायशब्दाभिलप्यात्तज्जायते व्यज्यतेऽथवा ॥ २ ॥

विज्ञानधारा काऽप्यस्ति यस्या जन्मान्तरान्वयः ।
इत्येषा कल्पना याऽपि सोपपत्तिविवर्जिता ॥ ३ ॥
विच्छेदाजन्ममृत्युभ्यां विच्छेदात्स्वापमूर्च्छयोः ।
3 कार्यकारणभावोऽपि पूर्वापरवपुःस्थयोः ॥ ४ ॥
चैतन्ययोर्न घटते भिन्नदेहाश्रयत्वतः ।
विज्ञानयोर्वर्तमानगवाश्वगतयोरिव ॥ ५ ॥

4 न हेतुर्म्रियमाणस्य चित्तं चित्तान्तरोद्भवे ।
म्रियमाणस्य चित्तत्वादर्हच्चरमचित्तवत् ॥ ६ ॥

5 नापि ज्ञानप्रसङ्गोऽस्ति कललादिदशास्वपि ।
अनिन्द्रियस्येन्द्रियार्थभानं नैव हि सम्भवेत् ॥ ७ ॥
अर्थावगतिरूपाच्च नान्यद्विज्ञानलक्षणम् ।
अत एव च मूर्च्छादौ स्थितिरस्य पराहता ॥ ८ ॥

6 ज्ञानं त्वाश्रयसापेक्षं देहादन्यो न चाश्रयः ।
आश्रये निहते तच्च नश्येन्न स्यान्निराश्रयम् ॥ ९ ॥
नित्यविज्ञानमात्मानमपहायापसर्पताम् ।
प्रवेशे किमनौचित्यं लोकायतगृहान्तरे ॥ १० ॥

## अत्र सौगताः ।

1 अस्ति विज्ञानधारा सा या पुनर्भवभाविनी ।
पूर्वपूर्वप्रत्ययकक्षणिकज्ञानलक्षणा ॥ ११ ॥
वासनान्वितसन्तानसमाबद्धफलान्वया ।
दूरोत्सारितनास्तिक्या सुधीभिः सुसमर्थिता ॥ १२ ॥
सर्वथा परलोकस्तु नास्त्येवेति न नो मतम् ।
आरम्भकारभ्यभूततत्तज्ज्ञानादिसन्ततेः ॥ १३ ॥
काञ्चिन्नियतमर्यादामवस्थामवलम्ब्य तु ।
पूर्वापरविभागेन परलोकः प्रकीर्त्यते ॥ १४ ॥

2 चैतन्यं न च भूतेभ्यो जायते व्यज्यतेऽपि वा ।
स्थैर्यं खल्विष्यते भूतेष्वथ ते हेतवः कथम् ॥ १५ ॥
सदैव हेतुसान्निध्यान्नित्यं कार्यप्रसङ्गतः ।
सहकारिण्यपेक्षाऽपि नित्यस्य न घटेत हि ॥ १६ ॥
आधेयातिशयत्वे हि नित्यतैषां विलुप्यते ।
नाधीयतेऽथातिशयः किं कृतं सहकारिणा ॥ १७ ॥

क्षणिकत्वं यदीष्येत स्वपक्षाच्च्युतिरेव तु ॥ १८ ॥
कार्यकारणभावे किं प्रमाणं वर्तते तयोः ।
अन्वयो व्यतिरेकश्च देहबुद्ध्योर्हि दुर्ग्रहः ॥ १९ ॥
देहश्चेदणुसङ्घातो दुर्घटाऽणुषु हेतुता ।
प्रत्येकं यदि हेतुत्वं विकल्पानन्त्यमापतेत् ॥ २० ॥
संहत्य चेदेकमात्रह्रासे न स्याच्च मानसम् ।
न च सोऽवयवी, तस्य प्रागेव तु निराकृतेः ॥ २१ ॥
अनयैव दिशा बाह्यवस्तूनामप्यसम्भवः ।
न्याय्यमार्गानुसारेण क्षणिकत्वमिवेष्यताम् ॥ २२ ॥

3 एवं हेत्वन्तरे प्राप्ते स्वयमुत्पत्त्यसम्भवात् ।
स्वोपादानबलोद्भूतं विज्ञानं यत्तदादिमम् ॥ २३ ॥
पूर्वविज्ञानसम्भूतमिति सिध्यत्ययत्नतः ।
चित्तान्तरारम्भकत्वमन्त्यचित्तस्य चाक्षतम् ॥ २४ ॥
आरम्भकारभ्यभावनियमानतिलङ्घनात् ।

4 अर्हच्चरमचित्तस्य या निदर्शनतोदिता ॥ २५ ॥
न सा स्वमतसंसिद्ध्या परसिद्ध्या तु सा कथम् ।
परेष्वपि न सर्वेषु सिद्धमेतन्निदर्शनम् ॥ २६ ॥

5 विज्ञानस्य स्वभावस्तु नार्थावगतिरूपता ।
स्वाप्ने हि मानसं ज्ञानं नेन्द्रियार्थावभासकम् ॥ २७ ॥
किन्तु स्वपूर्वविज्ञानवासनापरिपाकतः ।
यथास्वप्रत्ययबलं विज्ञानमुपजायते ॥ २८ ॥
इत्थञ्चेन्द्रियशून्येऽपि विज्ञानं कलिले भवेत् ।
अन्वेति स्वापमूर्च्छादौ तस्माद्विज्ञानमीदृशम् ॥ २९ ॥
एकं विज्ञानसन्तानं पूर्वापरशरीरयोः ।
कथं स्यादिति नाशङ्क्यं प्रत्यययाद्यनुवर्तते ॥ ३० ॥
अत एव च विज्ञानमाद्यं प्राग्वासनानुगम् ।
रुदितस्तनपानादि कार्यं स्यात्कथमन्यथा ॥ ३१ ॥

6 आश्रये निहते देहे नश्येद्विज्ञानमित्यसत् ।
ज्ञानस्य काऽऽश्रयापेक्षा, तत्किं मूर्तं, पतिष्यति ॥ ३२ ॥
न तादात्म्यं न हेतुश्च कथं देहस्तदाश्रयः ।
अज्ञातशाक्यसिद्धान्तरहस्यो ननु मन्दधीः ॥ ३३ ॥
लोकायतमतेऽसारे सारमन्वेष्टुमिच्छति ।

बाह्यार्थ-
परीक्षा ।

न बाह्यं नीलपीतादि, ज्ञानं यद्ग्राहकं भवेत् ।
न बाह्यग्राहकं ज्ञानं येन बाह्यस्य वेद्यता ॥ १ ॥

नीलपीतादि यद्वेद्यं वेदनात्तन्न भिद्यते ।
तस्माद्विज्ञानमेवैकमजडं परमार्थसत् ॥ २ ॥

## अत्र बाह्यार्थवादिनः ।

1 अस्ति बाह्यो घटाद्यर्थो यद्विभक्तोऽयमीक्ष्यते ।
2 गृह्णाति बाह्यानप्यर्थान् यत्तद्विज्ञानमान्तरम् ॥ ३ ॥
3 नीलपीतादि यद्वेद्यं वेदनात्तत्तु भिद्यते ।
नीलपीतादि संवित्तावपि वित्तेरवेदनात् ॥ ४ ॥

## अत्र विज्ञानवादिनः सौगताः ।

1 बाह्यस्यार्थस्य सद्भावो घटादेर्घटते कथम् ।
किमनेकाणुरूपोऽयमेको वाऽवयवी मतः ॥ ५ ॥
नचानेकाणुरूपोऽयमप्रत्यक्षात्तदात्मना ।
नह्यनंशानेकमूर्ताकारधीप्रतिवेदनम् ॥ ६ ॥
किन्तु स्थूलैकरूपेण प्रत्यक्षमुपजायते ।
यस्मात्समुदिता एव जायन्ते परमाणवः । भदन्तशुभगुप्तः ।
अतो न तेषां प्रत्यक्षं प्रत्येकं स्वात्मना भवेत् ॥ ७ ॥
निरन्तरसजातीयग्रहणाक्रान्तमानसैः ।
गृह्येते स्थूलतैकत्वे इत्येकस्त्वत्र मन्यते ॥ ८ ॥
यत्सामान्यविशेषाभ्यामेकानेकस्वभावता । सुमतिर्दिगम्बरः ।
वस्तुमात्रे वर्त्तमाना साऽणूनां सहजैव हि ॥ ९ ॥
गृह्यते तत्र सामान्यं विशेषस्तु न गृह्यते ।
अणोर्विशेषरूपं तु योगिदृष्ट्येकगोचरम् ॥ १० ॥
अतोऽनंशत्वनानात्वे न गृह्येते इतीतरः ।
किं सम्भूय समुत्पादमात्रेण स्याद्भिदाऽऽत्मनि ॥ ११ ॥
स्वेनानंशात्मनाऽध्यक्षे भासेरन्न कुतोऽणवः ।
कथं स्यात् स्थूलधीर्भ्रान्तिर्न सिद्धास्त्वणवो यतः ॥ १२ ॥
किञ्च भूधरभावेन येऽणवः प्रचयाश्रयाः ।
तेषु मध्ये यो ह्यणुः स्यादणुभिर्बहुभिर्वृतः ॥ १३ ॥
तस्यानेकाणुसांमुख्यं न स्याद्दिग्भेदमन्तरा ।
विना दिग्भेदनियमं तच्चेदेकात्मनेष्यते ॥ १४ ॥

न सिद्ध्येत्प्रचयस्तस्मादणोरपि स आपतेत् ।
दिग्भेदे सत्यनंशत्वमपगच्छेदणावपि ॥ १५ ॥
तस्यापि यदि सांशत्वमनवस्था प्रसज्यते ।
तदणूनां प्रतिक्षेपादणोरध्यक्षता हता ॥ १६ ॥
या सामान्यविशेषाभ्यामेकानेकस्वभावता ।
दुर्घटा सा हि वस्तूनां द्वैरूप्यानुपपत्तितः ॥ १७ ॥
द्वे चेद्रूपे वस्तुनी द्वे ह्यपरस्पररूपतः ।
अयं द्वैरूप्यवादस्तु परेषां प्राक्पराहतः ॥ १८ ॥
नचाप्यवयवी कश्चिद्बाह्यः प्रत्यक्षगोचरः ।
परमाणुभिरारब्धो यः परैरुपगम्यते ॥ १९ ॥
परमाणुप्रतिक्षेपादयमप्यपसारितः ।
2 बाह्यार्थग्राहिता ज्ञाने घटेत न कथञ्चन ॥ २० ॥
न हि कश्चन सम्बन्धो बाह्याभ्यन्तरयोस्तयोः ।
साकारं नच विज्ञानं स्याद्बाह्यस्यावभासकम् ॥ २१ ॥
स्वानन्याकारमात्रस्य तद्धि स्यादवभासकम् ।
निराकारं तु नितरां न बाह्यार्थावभासकम् ॥ २२ ॥
ननु स्वभावो ज्ञानस्य यदर्थस्यावभासनम् । भदन्तशुभगुप्तः ।
ज्ञानं परिच्छिनत्त्यर्थानत्र किंनु विकल्पितैः ॥ २३ ॥
ज्ञानं चेत्सत्तयैवार्थपरिच्छेदकमिष्यते ।
सर्वस्य सर्वं विज्ञानं स्यात्परिच्छेदकं तदा ॥ २४ ॥
अर्थेन जन्यते ज्ञानं तत्परिच्छेदकं यदि ।
चक्षुषोऽपि परिच्छेदः स्यात्तेन हि जन्यते ॥ २५ ॥
3 अर्थवित्तावप्यवित्तिर्वित्तेनैव हि सम्भवेत् ।
नीलादि भासयत्येषा भासमानैव यत्स्वयम् ॥ २६ ॥
ज्ञानं चेन्नावभासेत भासेतार्थोऽपि नैव सः ।
अप्रत्यक्षोपलम्भस्य नार्थदृष्टिर्हि सिद्ध्यति ॥ २७ ॥
अर्थप्रकाशने कार्ये व्यापृता वित्तिरस्ति या । कुमारिलः ।
सा तदैव व्याप्रियेत कथं स्वात्मप्रकाशने ॥ २८ ॥
रूपप्रकाशकं चक्षुर्न च स्वात्मप्रकाशकम् ।
तद्वित्तिरात्मसंवित्तौ वित्त्यन्तरमपेक्षते ॥ २९ ॥
इति कस्यचिदाशङ्का साऽप्यनेन पराहता ।
किं कार्यं व्यापृतिः काऽत्र व्यापारान्तररोधिनी ॥ ३० ॥

अर्थप्रकाशनात्मैव वित्तिः सा नान्यलक्षणा ।
ज्ञानद्वारतया चक्षुरुपचारात्प्रकाशकम् ॥ ३१ ॥
ज्ञानस्य स्वप्रकाशस्य कथमेतन्निदर्शनम् ।
तस्माद्विज्ञानमजडं स्वात्मनैव प्रकाशते ॥ ३२ ॥
तस्मात्सहैव संवित्तेरभेदो नीलतद्धियोः ।
यौ पृथङ्नोपलभ्येते तयोर्भेदो न चैव हि ॥ ३३ ॥
यथा जनैस्तैमिरिकैश्चन्द्रयोर्दृश्यमानयोः ।
यथाच स्वात्मनो भेदो विज्ञाने नच वर्तते ॥ ३४ ॥
तथाच सिद्धं स्वानन्यनीलाद्याकृति वेदनम् ।
आकारभेदनियमं विज्ञाने घटयन् परः ॥ ३५ ॥
बाह्यमिच्छति विज्ञाने स्वाकारस्य समर्पकम् ।
परास्तमेतद्बाह्यार्थासम्भवस्य प्रसाधनात् ॥ ३६ ॥
स्वाकारार्पकता चेयं दुर्घटा बाह्यवस्तुनः ।
विज्ञानाकारवैचित्र्यं वासनापरिपाकजम् ॥ ३७ ॥
ननु बाह्यार्थसद्भावसापेक्षं स्वाप्नभेदवत् ।
स्वानन्यैः कल्पिताकारैर्नीलाद्यैरुपलक्षितम् ॥ ३८ ॥
स्वस्वपूर्वप्रत्ययजं विज्ञानमजडात्मकम् ।
प्रकाशते स्वात्मनैव न ग्राह्यं ग्राहकं नच ॥ ३९ ॥
तथाच सिद्धं विज्ञानमद्वयं परमार्थसत् ।

## जैमिनीयाः ।

श्रुतिपरीक्षा ।

विज्ञानमात्रवादादि सर्वमेतदसङ्गतम् ।
अबाधितार्थया श्रुत्या पक्षोऽयं ननु बाध्यते ॥ १ ॥
1 कर्तृदोषाद्धि वाक्यानामप्रामाण्यस्य सम्भवः ।
श्रुतेरकर्तृकत्वात्तु प्रामाण्यमनपह्नवम् ॥ २ ॥
2 नचोपलभ्यते किञ्चित्प्रमाणं तत्र कर्त्तरि ।
न प्रत्यक्षानुमाने स्तो नोपमानागमावपि ॥ ३ ॥
नार्थापत्तिरतः कर्तृराहित्यं सिद्ध्यति श्रुतेः ।
3 वेदप्रामाण्यमुच्छेत्तुमाहतातिपरिश्रमाः ॥ ४ ॥
ये त्वकर्तृकताक्षिप्तां प्रास्यन्तो नित्यतां श्रुतेः ।
अनित्यतां शब्दमात्रे साधयन्त्यनुमानतः ॥ ५ ॥
प्रत्यक्षादिविरुद्धार्थप्रतिज्ञाद्यभिधायिनाम् ।
तेषां सिषाधयिषितलाभो मन्दधियां कथम् ॥ ६ ॥

सोऽयं गोशब्द इत्येषा प्रत्यभिज्ञा ह्यबाधिता ।
अन्यकालान्यदेशेष्वप्यनया जायमानया ॥ ७ ॥

शब्दानां खलु नित्यत्वं विभुत्वमपि सिद्ध्यति ।
4 गोशब्दप्रत्ययाः सर्वे नैव नानावलम्बनाः ॥ ८ ॥

एकाकारोपग्रहत्वात्सम्प्रत्युत्पन्नबुद्धिवत् ।
अनुमानैरेवमाद्यैर्नित्यत्वं तस्य सिद्ध्यति ॥ ९ ॥

नचानुमानतौल्यं स्यादीदृक्त्वेऽर्थधियामपि ।
व्यक्त्येकता गवादीनां प्रत्यक्षेण हि बाधिता ॥ १० ॥

मन्दतीव्रादिभेदस्तु वर्णव्यञ्जकनादगः ।
अत एव प्रात्यभिज्ञं गाद्येकत्वं न हीयते ॥ ११ ॥

5 व्यञ्जकस्थविशेषेण व्यङ्ग्यं भ्रान्तैस्तु गृह्यते ।
यथा पित्तस्य पीतिम्ना शङ्खः पीतोऽवबुध्यते ॥ १२ ॥

एतेन शङ्का प्रास्तेयं यो नादो भवतेष्यते ।
स वायवीयसंयोगविभागात्मा न गृह्यते ॥ १३ ॥

अथ तद्गुणयोगेन कथं स्याद्व्यङ्ग्यधीरिति ।
अपि सन्निहितं पित्तद्रव्यं नैव तु गृह्यते ॥ १४ ॥

अथापि तस्य पीतिम्ना–शङ्खो भ्रान्तैस्तु गृह्यते ।
अभिव्यञ्जकता चास्य श्रोत्रसंस्कारतो मता ॥ १५ ॥

शब्दसंस्कारतः कैश्चिदभिव्यञ्जकता मता ।
श्रोत्रसंस्कारपक्षस्तु मान्यो भाष्यकृता मतः ॥ १६ ॥

श्रोत्रं तु कश्चिद्व्योम्नोंऽशः कर्णशष्कुलिमध्यगः ।
न चानवयवं व्यापि व्योमैकमुपगम्यते ॥ १७ ॥

वायवीयाः केचिदंशा अभिघातसमुत्थिताः ।
स्वदेशात् सर्वतोदिक्काः प्रसर्पन्तस्ततस्ततः ॥ १८ ॥

प्रबाधमाना वाय्वंशांस्तिमितान्वर्त्मनि स्थितान् ।
यथावेगं श्रोत्रदेशं तं तं प्राप्य सपद्यमी ॥ १९ ॥

श्रोत्राकाशे विदधति शक्तिमेकामतीन्द्रियाम् ।
ईदृशातिशयाधानात् श्रोत्रं नादेन संस्कृतम् ॥ २० ॥

प्रागेव नादोपरमात् शब्दान् गृह्णाति कांश्चन ।
व्यङ्ग्यव्यञ्जकभावोऽयं वैलक्षण्याद्व्यवस्थितः ॥ २१ ॥

वैजात्येन व्यवस्थेयं वर्णनिष्पत्तिवादिनाम् ।
तुल्याऽन्यथाऽन्यवाय्वंशाद्वर्णोऽन्यो न कुतो भवेत् ॥ २२ ॥

एकानवयविव्यापिव्योमपक्षेऽपि न क्षतिः ।
कर्णशष्कुल्यवच्छेदभेदाच्छ्रोत्रव्यवस्थितेः ॥ २३ ॥
कर्णशष्कुल्यवच्छिन्नदिग्भेदो वा तदिष्यते ।
श्रूयते हि दिशः श्रोत्रमिति सेयं लयश्रुतिः ॥ २४ ॥
अवच्छेदकभेदेन तुल्याऽत्रापि व्यवस्थितिः ।
इत्थं च व्यञ्जकैर्नादैः श्रोत्रसंस्कारकारकैः ॥ २५ ॥
शब्दानां व्यज्यमानत्वात्तेषां नित्यत्वमक्षतम् ।
6 किञ्च–शब्दो यद्यनित्यस्तस्य बोधकता कथम् ॥ २६ ॥
न चागृहीतसम्बन्धो भवेदर्थस्य बोधकः ।
नहि जातविनष्टस्य सम्बन्धज्ञानसम्भवः ॥ २७ ॥
सम्बन्धग्रहणं यावत्तावत् स्थैर्यं यदीष्यते ।
तावत्कालं सतस्तस्य पश्चात्स्यात्को नु नाशकः ॥ २८ ॥
स्वयं चेन्नश्यति, पुनस्तदर्थे शाब्दधीः कथम् ।
नष्टो गृहीतसम्बन्धो जातस्य तु न तद्ग्रहः ॥ २९ ॥
तथाच सिद्धा शब्दानामर्थापत्त्याऽपि नित्यता ।
ननु यद्वाचकं तस्य नित्यत्वं नोपपद्यते ॥ ३० ॥
पदं हि वाचकं तच्च वर्णक्रमसमाहितम् ।
स्वतो न क्रमरूपत्वं वर्णानां सर्वतस्सताम् ॥ ३१ ॥
क्रमश्चोच्चारणायत्तस्तत्पदे नित्यता कथम् ।
वर्णानां केवलानां तु किं स्यान्नित्यत्वतः फलम् ॥ ३२ ॥
नैतत् यत्पदमत्यन्तं वर्णेभ्यो न विभिद्यते ।
सुस्थिते वर्णनित्यत्वे पदस्यापि हि तत्स्थितम् ॥ ३३ ॥
क्रमश्चात्यन्ततो नैव वर्णेभ्यः प्रविभिद्यते ॥ ३४ ॥
नचानुपूर्वमात्रस्य क्रमस्यार्थाभिधायिता ।
क्रमयोगेन वर्णानां वाचकानां पदात्मनाम् ॥ ३५ ॥
नित्यत्वमक्षतं, किञ्च क्रमेऽपि व्यवहारतः ।
क्वाप्यपूर्वः क्रमः कश्चित्केनचिन्न प्रयुज्यते ॥ ३६ ॥
वेदे कर्तृस्मृतिर्याऽपि साऽर्थवादनिबन्धना ।
इत्थं च शब्दनित्यत्वं शब्दशक्तेश्च नित्यता ॥ ३७ ॥
वेदस्यापौरुषेयत्वाददृष्टार्थावबोधिनः ।
प्रामाण्यं स्वावबोध्यार्थे सर्वमेतद्व्यवस्थितम् ॥ ३८ ॥

## अत्र सौगताः ।

1 श्रुतेरकर्तृकत्वेऽपि प्रामाण्यं नैव सिद्ध्यति ।
यथा कर्तुरभावेन न स्याद्दोषपदं श्रुतिः ॥ ३९ ॥
तथा कर्तुरभावेन न स्याद्गुणपदं च सा ।
अप्रामाण्यं यथा दोषात् प्रामाण्यं तु गुणात् खलु ॥ ४० ॥
दोषो भ्रमप्रमादादि गुणः सार्वज्ञतादि तु ।
तदेतद्द्वयराहित्ये षडपूपादिवाक्यवत् ॥ ४१ ॥
आनर्थक्यादप्रमात्वमनिवार्यं समापतेत् ।
सत्यत्वस्य गुणापेक्षा निबन्धे हि सकर्तृके ॥ ४२ ॥
अपौरुषेये वेदे तु स्वतः सत्यार्थबोधके ।
अतद्व्यपेक्षं सत्यत्वमिति चेन्मन्यते भवान् ॥ ४३ ॥
अयं विशेषो मिथ्यात्वे तुल्यो ननु विमृश्यताम् ।
दोषव्यपेक्षं मिथ्यात्वं निबन्धे हि सकर्तृके ॥ ४४ ॥
अपौरुषेये वेदे तु स्वतो मिथ्यार्थबोधके ।
अतद्व्यपेक्षं मिथ्यात्वमिति वक्तुं हि शक्यते ॥ ४५ ॥
किञ्च तस्य स्वतः सत्यबोधसामर्थ्यमप्यसत् ।
युगपत्सर्वविज्ञानप्रसङ्गात् हेतुसन्निधेः ॥ ४६ ॥
कदाचिदसमर्थश्चेत् समर्थो न कदाचन ।
नित्यात् समर्थात्तस्मात्तु सदा सर्वं प्रबुध्यताम् ॥ ४७ ॥
सहकारिव्यपेक्षायां नित्यत्वं ननु दुर्घटम् ।
किञ्च व्यपेक्ष्य व्याख्यादीन् क्रमिकान् सहकारिणः ॥ ४८ ॥
बोधकत्वे वृथा तस्यापौरुषेयत्वकल्पना ।
भूतार्थबोधकत्वाय ह्याश्रिता सा तु कल्पना ॥ ४९ ॥
तच्च तस्याद्य सम्पन्नं व्याख्यातृपुरुषाश्रयम् ।
2 अकर्तृकत्वं वेदस्य निश्चेतुं नैव शक्यते ॥ ५० ॥
कर्ताऽगृहीतो मानैश्चेत्तत्सत्तायाः क्षतिः कुतः ।
न प्रमाणनिवृत्तिर्हि वस्तुसत्तानिवर्त्तिका ॥ ५१ ॥
सत्येव विप्रकृष्टादौ प्रमाणं हि निवर्तते ।
नोत्पत्तिर्नच तादात्म्यं प्रमाणेनास्ति वस्तुनः ॥ ५२ ॥
तत्प्रमाणनिवृत्त्या स्यान्निवृत्तिर्वस्तुनः कथम् ।
सा प्रमाणनिवृत्तिर्वा भवता निश्चिता कथम् ॥ ५३ ॥
असङ्ख्याताः प्रमातारो ह्यनादौ भवमण्डले ।
सर्वेषां तन्निवृत्तिस्तत्रन्वसर्वज्ञदुर्ग्रहा ॥ ५४ ॥
एकस्य तन्निवृत्तिस्तु नालमर्थनिवर्त्तने ।
क्रियाकारकभावेन विभक्तार्थावबोधकः ॥ ५५ ॥

वेदः सकर्तृकः किन्तु कर्ता न स्मर्यतेऽधुना ।
आख्यायिका अनेका हि सन्त्यविज्ञातकर्तृकाः ॥ ५६ ॥

3 नच शब्दस्य नित्यत्वं सिद्ध्यति प्रत्यभिज्ञया ।
प्राक्प्रत्यभिज्ञामात्रस्य भ्रमत्वं हि निदर्शितम् ॥ ५७ ॥

प्रत्यभिज्ञाबलात्सर्वशब्दानां यदि नित्यता ।
पौरुषेयापौरुषेयविभागोऽपि न युज्यते ॥ ५८ ॥

लौकिकानां हि शब्दानां वैदिकेभ्यो न चान्तरम् ।
नराकृताः सर्व एते व्यज्यन्ते व्यञ्जकैः खलु ॥ ५९ ॥

न चानुपूर्वीनैयत्यनिमित्ताऽपौरुषेयता ।
व्यञ्जकक्रमनैयत्यात्तन्नैयत्यं स्वतो नहि ॥ ६० ॥

नैयत्यं पुरुषाधीने नच स्याद्व्यञ्जकक्रमे ।
सर्वे स्वतन्त्राः पुरुषाः स्वस्वताल्वादिकर्मणि ॥ ६१ ॥

तत् कोष्ठ्यवायोस्ताल्वादिसंश्लेषाश्लेषलक्षणाः ।
नादाः पुरुषतन्त्रास्तु कथं स्युर्नियतक्रमाः ॥ ६२ ॥

4 यदुक्तं शब्दनित्यत्वे लिङ्गं तच्च न साधकम् ।
विरोधे बाधकाभावादनैकान्त्यप्रसङ्गतः ॥ ६३ ॥

अतद्रूपपरावृत्तिमवलम्ब्य भवन्त्यमी ।
एकाकाराः प्रत्ययास्तद्व्यक्तीनां स्यान्नचैकता ॥ ६४ ॥

प्रात्यक्षिकं तु नानात्वं गादिव्यक्तिष्वबाधितम् ।
माधुर्यादिविभेदेन वर्णभेदो हि लक्ष्यते ॥ ६५ ॥

व्यञ्जकस्थविशेषेण व्यङ्ग्यं गृह्यत इत्यसत् ।
5 न चान्यस्यान्यरूपेण ग्रहणं क्वापि सम्भवेत् ॥ ६६ ॥

यश्च पीतः शङ्ख इति भ्रमो निर्विषयो हि सः ।
वासनापादिताकारो भ्रमो नार्थमपेक्षते ॥ ६७ ॥

भ्रान्तेः सालम्बनत्वं तु न घटेत कथञ्चन ।
निराकारज्ञानपक्षे भ्रान्तिः किंविषया भवेत् ॥ ६८ ॥

पीताकारो भासमानः, शङ्खश्चेदतदात्मकः ।
साकारज्ञानपक्षेऽपि न स्याद्बाह्यावलम्बिनी ॥ ६९ ॥

सारूप्यापादकं भ्रान्तौ बाह्यमस्ति न किञ्चन ।
इत्थञ्च श्रौत्रविज्ञानं मन्दतीव्रावभासकम् ॥ ७० ॥

शब्दस्य ग्राहकं न स्यादतद्रूपावभासतः ।
श्रौत्रोपलम्भे शब्दः किं योग्यो वाऽयोग्य इष्यते ॥ ७१ ॥

श्रोत्रसंस्कारवैयर्थ्यं पक्षयोरुभयोरपि ।
योग्यश्चेदुपलभ्येत किं संस्कारव्यपेक्षया ॥ ७२ ॥

अयोग्यो नोपलभ्येत संस्कारेऽपि कृते सति ।
ननु शब्दे विचारोऽयमहेतौ घटतां कथम् ॥ ७३ ॥
योग्यायोग्यविचारो हि हेतावेवेति चेन्न तत् ।
विषयो यद्यहेतुः स्यात्प्रत्यक्षे ग्राह्यता कथम् ॥ ७४ ॥
शक्तिराधीयते श्रोत्रे या नभोभागलक्षणे ।
सा श्रोत्राव्यतिरिक्ता चेत् श्रोत्रस्य स्याज्जनिस्तदा ॥ ७५ ॥
शक्तेः प्राग्वाऽपि सत्त्वं स्यात् स्थिरश्रोत्रात्मतावशात् ।
सा श्रोत्रव्यतिरिक्ता चेत्तया शब्दग्रहोदयात् ॥ ७६ ॥
श्रोत्रस्य तु ततोऽन्यस्य शब्दग्राहकता कथम् ।
सा ततोऽन्याऽपि तस्यैवेत्यस्ति तस्यापि हेतुता ॥ ७७ ॥
एषा दुराशा, सम्बन्धः शक्तेः श्रोत्रेण को भवेत् ।
न तादात्म्यतदुत्पत्ती, तत् संस्कारः सुदुर्वचः ॥ ७८ ॥
कोष्ठ्यो वायुः समुत्पत्त्य कर्णाभ्यन्तरमाविशन् ।
संस्करोति नभोभागलक्षणं श्रोत्रमित्यसत् ॥ ७९ ॥
कर्णाभ्यन्तरमाविष्टः स चेत्, कस्मान्न गृह्यते ।
तत्तदानीतभूतांशस्पर्शो वा किं न गृह्यते ॥ ८० ॥
अव्यापिनोऽपि शब्दस्य भिन्नदेशे सतः क्वचित् ।
अयस्कान्तो विप्रयुक्तलोहस्याकर्षको यथा ॥ ८१ ॥
श्रोत्रं तथा ग्राहकं स्यात् विचित्रा वस्तुशक्तयः ।
तुल्या दिक् श्रोत्रपक्षेऽपि संस्कारानुपपन्नता ॥ ८२ ॥

6 शब्दार्थयोस्तु सम्बन्धो नैव, यज्ज्ञानसिद्धये ।
शब्दनित्यत्वचिन्ता स्यात्, स च प्रागेव खण्डितः ॥ ८३ ॥
शब्दार्थयोर्न कोऽप्यस्ति सम्बन्धः पारमार्थिकः ।
विवक्षायाः सूचकत्वात् शब्दो बोधक उच्यते ॥ ८४ ॥
सर्वत्र दृष्टमेवैतत् कार्यं कारणसूचकम् ।
विवक्षया कयाचित्तु कोऽपि शब्दः प्रयुज्यते ॥ ८५ ॥
तस्माच्चेष्टेव शब्दोऽपि सूचको न तु वाचकः ।
निबन्धे विस्तृतं बोध्यं दिङ्मात्रमिह दर्शितम् ॥ ८६ ॥

## जैमिनीयाः ।

स्वतःप्रामाण्यपरीक्षा ।

1 ननु प्रमाणं सकलं स्वतःप्रामाण्यमश्नुते ।
स्वकार्येऽर्थपरिच्छेदे स्वप्रामाण्यविनिश्चये ॥ १ ॥
यस्मादनन्यसापेक्षं प्रमाणं वर्त्तते स्वतः ।
उत्पत्तौ हेत्वपेक्षोऽपि स्वकार्ये जलधारणे ॥ २ ॥

वर्त्ततेऽनन्यसापेक्षः कलशो हि यथा स्वयम् ।
तथा प्रमाणं सकलं समुत्पन्नं स्वहेतुतः ॥ ३ ॥
स्वकार्येऽनन्यसापेक्षं पूर्वोक्ते वर्त्तते स्वयम् ।
यथा ह्यर्थपरिच्छित्त्यै प्रमाणं कल्पते स्वयम् ॥ ४ ॥
स्वप्रामाण्यपरिच्छित्त्यै तथा प्रभवति स्वयम् ।
यदि प्रमाणसापेक्षमनवस्था प्रसज्यते ॥ ५ ॥
प्रामाण्यग्रहणायान्यद्यत्प्रमाणं प्रगृह्यते ।
तत्रापि तत्परिच्छित्त्यै पुनरन्यदपेक्ष्यते ॥ ६ ॥
एवं क्रमेण प्रामाण्यग्राहकस्य गवेषणा ।
न विश्रान्तिपदं गच्छेदन्यान्यस्य व्यपेक्षणात् ॥ ७ ॥
प्रामाण्यग्राहकं यत्स्यात् प्रामाण्यं तस्य चेत्स्वतः ।
पूर्वतः को विशेषोऽस्य तदेव तु तथेष्यताम् ॥ ८ ॥
प्रास्तं तत् गुणविज्ञानात् संवादज्ञानतोऽपि वा ।
स्वतःप्रमाणात्प्रामाण्यं गृह्यते परतस्त्विति ॥ ९ ॥
अपि स्वतःप्रमाणत्वे स्वतःप्रामाण्यधीः क्वचित् ।
बाधकारणदुष्टत्वज्ञानाभ्यामुपरुध्यते ॥ १० ॥
अतः स्वतःप्रमाणत्वमौत्सर्गिकमिदं मतम् ।
2 सति सर्वप्रमाणानां स्वतःप्रामाण्यवैभवे ॥ ११ ॥
वेदस्यापौरुषेयस्य तथात्वे किमु कथ्यताम् ।
गुणदोषविसंवादाः सम्भवन्ति न यत्र हि ॥ १२ ॥
3 इतोऽपि वा प्रमाणानां स्वतःप्रामाण्यमुच्यते ।
शक्तिः स्वाभाविकी तेषां यतोऽर्थग्रहणादिषु ॥ १३ ॥
सा हि स्वाश्रयसामग्रेर्नान्यं हेतुमपेक्षते ।

## अत्र सौगताः ।

1 जन्मानन्तरसत्ताकं प्रमाणं यदि सम्भवेत् ।
घटस्येव तदाऽस्यापि स्यात्स्वकार्ये स्वयं स्थितिः ॥ १४ ॥
क्षणिकं ननु विज्ञानं भवताऽप्यभिमन्यते ।
असतो जन्मनः पश्चाद्व्यापारस्तस्य कः पुनः ॥ १५ ॥
जन्मातिरिक्तव्यापारो ज्ञाने नेति हि वो मतम् ।
किञ्चाक्षणिकमेवास्तु स्थित्वा व्याप्रियतामपि ॥ १६ ॥
प्रमाणे संशयो माभूत्प्रामाण्यस्य विनिश्चयात् ।
प्रमाणेष्वपि सन्देहसम्भवः सार्वलौकिकः ॥ १७ ॥
2 एवं हते प्रमाणानां स्वतःप्रामाण्यवैभवे ।
चोदनालक्षणे वेदे क्व तदाशाऽवधार्यताम् ॥ १८ ॥

वेदस्यापौरुषेयत्वं प्रागेव ह्यपसारितम् ।
नवापरहितैकार्थः सर्वज्ञो भवतो मते ॥ १९ ॥

यस्य कर्तुर्गुणेनायं वेदः प्रामाण्यमर्हति ।
सन्देहश्च विसंवादो जागर्त्ति तु पदे पदे ॥ २० ॥

व्याख्यातारः के नु नाम रागद्वेषादिदूषिताः ।
येषां विरच्यते श्लाघा ते हि मन्वादयस्त्विति ॥ २१ ॥

3 शक्तिः स्वाभाविकी काचिद्या प्रमाणेषु कल्प्यते ।
सा चेत् स्वाश्रयहेतुभ्यो नान्यं कञ्चिदपेक्षते ॥ २२ ॥

न विशेषस्ततः कश्चित् यल्लाभात्स्यात्समीहितम् ।
सर्वं ज्ञानं स्वहेतुभ्यः शक्तमेव हि जायते ॥ २३ ॥

तैरेव हेतुभिः पश्चात् शक्तिर्जायत इत्यसत् ।
प्रागशक्तं ततः पश्चान्न हि शक्तं भवेत्क्वचित् ॥ २४ ॥

स्वभावभेदे वस्तूनां भेद एव हि सिध्यति ।
क्षणिकत्वं च विज्ञाने भवताऽप्यभिमन्यते ॥ २५ ॥

अस्माभिः सर्ववस्तूनां क्षणभङ्गस्तु साधितः ।
स्याद्भूतार्थपरिच्छित्तिः प्रमाणाच्छक्तिमत्तया ॥ २६ ॥

तत्परिच्छेत्तृता तस्य स्वात्मना नहि गृह्यते ।
अन्यथा तुल्ययुक्त्या स्यान्मिथ्यात्वस्य स्वतो ग्रहः ॥ २७ ॥

वयं त्वनियमं ब्रूमः प्रामाण्यस्य स्वतो ग्रहे ।
योगिज्ञानादिकं यत्तु चोदनाजनितादि यत् ॥ २८ ॥

प्रामाण्यस्य स्वतो वित्तिः परतस्तु तयोः क्रमात् ।
एतेनार्थक्रियाज्ञाने स्वतःप्रामाण्यनिश्चयात् ॥ २९ ॥

प्रामाण्यनिश्चयः प्राच्ये नानवस्था च सम्भवेत् ।
प्रामाण्यमविसंवादः स चास्त्यर्थक्रियात्मकः ॥ ३० ॥

अर्थक्रियावभासस्तु स्पष्टाभ उपजायते ।
दाहपाकादिविज्ञानं किंवा कस्यचिदस्फुटम् ॥ ३१ ॥

तस्मादर्थक्रियाज्ञानप्रामाण्यस्य स्वतो ग्रहः ।
प्रत्यक्षमाद्यमपि यदभ्यासातिशयोत्थितम् ॥ ३२ ॥

स्फुटाभत्वात्स्वतस्तस्य प्रामाण्यमुपगृह्यते ।
स्वतःप्रामाण्यनियमे यद्ययं स्याद्दुराग्रहः ॥ ३३ ॥

स्वतोऽप्रामाण्यनियमे किं न कार्यो दुराग्रहः ।
उत्सर्गतस्तु ज्ञानानामप्रामाण्यावबोधिता ॥ ३४ ॥

बाधकारणदुष्टत्वज्ञानाभावात्तु बाध्यते ।
इत्येवमपि वक्तुं हि सुशकं युक्तितौल्यतः ॥ ३५ ॥

## जैमिनीयाः ।

सर्वज्ञ-परीक्षा ।

1 प्रामाण्यं शाक्यवाक्यानामिच्छद्भिस्तत्पथानुगैः ।
सर्वज्ञसाधने यत्नो व्यपेतार्थो वितन्यते ॥ १ ॥

सर्वं सामान्यरूपेण वेत्ति सर्वोऽपि मानवः ।
ताद्रूप्येण तु सर्वाणि न कश्चिद्वेत्तुमर्हति ॥ २ ॥

नहि वेत्तुं प्रभवति कश्चित् सर्वान् रजःकणान् ।
परीक्षितैः काकदन्तैरिव ज्ञातैश्च किन्तु तैः ॥ ३ ॥

किञ्च स्याद्यदि सर्वज्ञः सर्वसाक्षात्कृतिक्षमः ।
साक्षात्कृताशुचिद्रव्यरसत्वाद्दोषभाक् भवेत् ॥ ४ ।

2 अतीन्द्रियार्थदर्शित्वं घटते नच कस्यचित् ।
अर्थेन्द्रियस्वभावो हि मर्यादां नातिवर्त्तते ॥ ५ ॥

शक्तिप्रकर्षः शक्येषु, नाशक्येषु प्रवर्त्तते ।
अभ्यास इव योगोऽपि सतीं शक्तिं हि वर्द्धयेत् ॥ ६ ॥

3 धर्माधर्मौ स्वतो वेत्तीत्येतन्नाप्यर्थसाधनम् ।
तत्स्वरूपे ह्यनियते कापिलादिविवादतः ॥ ७ ॥

4 प्रमाणपञ्चकाभावात्सर्वज्ञो नैव सिध्यति ।
किन्त्वभावप्रमाणेन तदभावस्तु सिध्यति ॥ ८ ॥

अनपेक्षितसर्वज्ञात्स्वतो मानादकर्तृकात् ।
भवत्यबाधितो वेदाद्धर्माधर्मविनिश्चयः ॥ ९ ॥

5 नच सौगतसार्वज्ञ्ये प्रमाणमुपलभ्यते ।
स्वशिष्यहार्दविज्ञानान्न सार्वज्ञ्यस्य सम्भवः ॥ १० ॥

अतीतानागतानन्तपरहार्दानवेक्षणात् ।
6 यश्चायमिष्यते बुद्धः सर्वावरणसंक्षयात् ॥ ११ ॥

शुद्धस्फटिकसङ्काशज्ञानेन सकलानिमान् ।
याथातथ्येन संबुध्यन् धारणायां समास्थितः ॥ १२ ॥

सदा समाहितः सोऽयं परानुपदिशेत् कथम् ।
तस्माद्यदोपदेष्टाऽयमसर्वज्ञस्तदा पुनः ॥ १३ ॥

## अत्र सौगताः ।

हन्त सौगतसार्वज्ञ्यप्रद्वेषग्लपिताशयः ।
सर्वज्ञमात्रे विद्वेषं कुरुते मन्दधीरयम् ॥ १४ ॥

1 सर्वं सामान्यतः सत्यं वेत्ति सर्वोऽपि मानवः ।
ताद्रूप्येण तु सर्वाणि संबुद्धो बोद्धुमर्हति ॥ १५ ॥

रजःकणादौ सार्वज्ञ्यं सिषाधयिषितं नच ।
काकदन्तपरीक्षावद्येन स्याद्विफलः श्रमः ॥ १६ ॥
धर्माद्यशेषयाथात्म्यविज्ञानं तु विवक्षितम् ।
बुद्धस्य तद्धटेतैव ज्ञेयावरणसंक्षयात् ॥ १७ ॥
मद्यादीनां रासनेन वेद्यता खलु दूषणम् ।
रागावलेपरहितचित्तमात्रेण वेद्यता ॥ १८ ॥
नैरात्म्यादिस्वभावेन सा कथं दूषणं भवेत् ।
विज्ञानमात्रवादे तु दोषस्यास्य नचोत्थितिः ॥ १९ ॥
2 अतीन्द्रियार्थदर्शित्वं न घटेतेत्यसद्वचः ।
चक्षुःपथातिगोऽप्यर्थो मनसा खलु दृश्यते ॥ २० ॥
न सोऽस्त्यर्थः क्वचित् कश्चिदपदं मनसोऽपि यः ।
स्मार्तादिज्ञानगम्यत्वं सर्वैः सर्वत्र सम्मतम् ॥ २१ ॥
किन्त्वभ्यासोत्कर्षकाष्ठागतेः सातिशयं मनः ।
स्फुटावभासं भवति तत्तदा तेन पश्यति ॥ २२ ॥
नचात्र किञ्चिदक्षार्थमर्यादाव्यतिलङ्घनम् ।
तदतीतान् व्यवहितांश्चक्षुरादेरगोचरान् ॥ २३ ॥
क्षणिकत्वादिभिर्धर्मैः सम्यक् भावयतः सदा ।
अभ्यासाज्जायते तेषामपरोक्षं हि मानसम् ॥ २४ ॥
वासनाभेदभूयिष्ठं यावच्चित्तं प्रवर्तते ।
तावदेव त्विन्द्रियार्थनियमेन नियन्त्रितम् ॥ २५ ॥
वासनायां व्यपेतायां व्यपेतनियमं तु तत् ।
सर्वं सर्वार्थसम्बद्धं जायते वस्तुतः खलु ॥ २६ ॥
परस्य न च निस्तारो विनाऽतीन्द्रियदर्शिनम् ।
प्रामाण्यं ननु वेदानां वाच्यं तत्कर्तृकत्वतः ॥ २७ ॥
अकर्तृकत्ववादस्तु प्रागेव हि निराकृतः ।
3 धर्माधर्मपरिज्ञानं बुद्धादन्यस्य कस्य वा ॥ २८ ॥
सर्व एव हि विभ्रान्ताः स्थिरवस्त्वभिमानिनः ।
वस्तुसत्ताविवादेन न विपर्येति कुत्रचित् ॥ २९ ॥
4 प्रमाणानां निवृत्त्या तु प्रमेयं न निवर्तते ।
अव्यापकनिवृत्त्या स्यान्नाव्याप्यस्य निवर्त्तनम् ॥ ३० ॥
सा प्रमाणनिवृत्तिश्च क्वचिद्दृष्टा न साधनम् ।
सर्वप्रमातृसन्दोहे तद्दृष्टिस्तु सुदुर्ग्रहा ॥ ३१ ॥
सर्वज्ञे बाधकं नापि प्रमाणमुपलभ्यते ।
तथाच निहताऽसिद्धिः सर्वज्ञस्य परोदिता ॥ ३२ ॥

5 सुगतस्य तु सार्वज्ञ्ये प्रमाणं तस्य देशनाः ।
या ह्यभ्युदयनिःश्रेयसार्थधर्मावबोधकाः ॥ ३३ ॥

परेषां देशनाः काश्चिद्यद्यप्यभ्युदयावहाः ।
नतु निःश्रेयसैकान्ताः क्लेशमूलसमन्वयात् ॥ ३४ ॥

ते हि सर्वे सत्त्वदृष्ट्या क्लेशमूलेन सङ्गताः ।
समस्तधर्मनैरात्म्यं यत्तच्छिवमनुत्तमम् ॥ ३५ ॥

सर्वक्लेशोपशमनं व्यक्तं सौगतशासने ।
तत् सार्वज्ञ्यं नचान्यस्थं बुद्ध एव व्यवस्थितम् ॥ ३६ ॥

ये नाम बोधिसत्त्वाः स्युः प्रकृत्यैव कृपामयाः ।
अशेषधर्मनैरात्म्यभावनाभ्यासपाटवात् ॥ ३७ ॥

व्यपेतसर्वावरणा रागादिमलवर्जिताः ।
प्रज्ञाप्रकर्षयोगेन सार्वज्ञ्यं समुपागताः ॥ ३८ ॥

कृपाप्रकर्षयोगेन सर्वसत्त्वोद्दिधीर्षया ।
आसंसारं वर्त्तमानाः स्वच्छस्फटिकनिर्मलाः ॥ ३९ ॥

दोषवातैरप्रकम्प्यास्ते बुद्धा जगतो हिताः ।
6 अस्ताशेषविकल्पेऽपि स्वयं भगवति स्थिते ॥ ४० ॥
कृपाप्रकर्षसम्भूतपुण्यसम्भारवेगतः ।

देशनाः सम्प्रवर्त्तन्ते वेगाच्चक्रे यथा भ्रमिः ॥ ४१ ॥
याभिर्विनेयलोकोऽयं विशत्यान्तिकं शिवम् ।

प्रकृत्यादिपरीक्षाणां दिङ्मात्रमिह दर्शितम् ॥ ४२ ॥
स्खालित्यमिह चेत् सा तु प्रकृतिर्ननु मादृशः ।
एषा सर्वोन्नता काचिद्गुणग्रहणलक्षणा ॥ ४३ ॥
जागर्त्त्यनन्यसामान्या प्रकृतिर्विबुधस्य हि ।

न नः प्रगल्भं पाण्डित्यमस्मिन् सौगतदर्शने ॥ ४४ ॥
तादृङ्निबन्धनिर्माणसामर्थ्यस्य क्व सम्भवः ।
अथाप्यस्य निबन्धस्य स्वरूपमतिविस्तृतम् ॥ ४५ ॥
संक्षिप्य सन्दर्शयितुं रचिता कारिकावलिः ।

---

**पारिभाषिक-पदविवरणम् ।**

इमं तत्त्वसङ्ग्रहसङ्ग्रहं परिशीलयतां व्यक्तं हृदयपथमवतरेदेव निबन्धोऽयं परमतनिरसनैकान्त इति । अन्तः प्रविश्य पश्यतामपि निबन्धशरीरं विशेषतस्तथा । तदस्मिन्निबन्धे स्वसमयसम्प्रतिपन्नार्थविशेषविवेचनमत्यल्पं नाम । तत् पारिभाषिकपदप्रसङ्गोऽप्यल्पतरः । तत् पारिभाषिकपदविवरणे पार्थक्येन प्रयत्नमनपेक्षितं मत्वा इहैव निबन्धमुखेऽनतिप्रसिद्धकतिपयपारिभाषिकपदविवरणं विरच्यते नाम—

पत्र.

१० १२५ **पुद्गलाः**—जीवाः प्राणिन इति च लोके व्यवह्रियमाणाः स्कन्धेभ्यो नान्ये । वात्सीपुत्रीयास्तु पुद्गलात्मवादिनः स्कन्धेभ्योऽन्यत्वानन्यत्वाभ्यामवाच्या इत्याहुः ।

१० **धर्माः**—बीजाङ्कुरादिः कार्यकारणभावलक्षणः ।

११ **पञ्च स्कन्धाः** भूमिकायां व्याख्याताः ।

१३ ८७३ **गोत्रम्**—द्विधा भवति गोत्रं नियतमनियतं चेति । नियतं तु श्रावकगोत्र-प्रत्येकबुद्धगोत्र-बोधिसत्त्वगोत्रभेदेन त्रिविधम् । येषां श्रावकयाने स्वरसतो नैसर्गिकी रुचिर्भवति तेषां गोत्रविशेषः श्रावकगोत्रमुच्यते, येषां तु प्रत्येकबुद्धयाने तेषां गोत्रविशेषः प्रत्येकबुद्धगोत्रमुच्यते, येषां तु बुद्धयाने तेषां गोत्रविशेषो बोधिसत्त्वगोत्रमुच्यते । अन्यदनियतम् । लङ्कावतारसूत्रादौ व्यक्तमेतत् ।

१३ **अध्वानः**—अतीतादयस्त्रयः कालाः ।

१४ **आर्यमार्गः**—सम्यग्दृष्टिः सम्यक्सङ्कल्पः सम्यग्वाक् सम्यक्कर्मान्तः सम्यगाजीवः सम्यग्व्यायामः सम्यक्स्मृतिः सम्यक्समाधिश्चेति । धर्मसङ्ग्रहेऽन्यत्र च व्यक्तमेतत् ।

५११ ९२३ **फलस्थाः**—स्रोतआपत्तिफलम् सकृदागामिफलम् अनागामिफलम् अर्हत्फलं चेति चत्वारि फलानि । क्लेशोपशमपर्वक्रमेणोत्तरोत्तरमभ्यर्हितानि । तत्तत्फलप्राप्त्या फलस्थाश्चत्वारः स्रोतआपन्नः सकृदागामी अनागामी अर्हंश्चेति ।

**प्रतिपन्नकास्तु**—तत्तत्फलाकाङ्क्षया तत्तत्फलप्रापकेषु मार्गेषु प्रवृत्ताः । ते च स्रोतआपत्तिफलप्रतिपन्नकः सकृदागामिफलप्रतिपन्नकः अनागामिफलप्रतिपन्नकः अर्हत्फलप्रतिपन्नकश्चेति चत्वारः।

तत्र फलपर्वणि क्लेशप्रहाणलक्षणे तारतम्यं प्रहातव्यानुशयभेदाद्भवति । दर्शनप्रहातव्या भावनाप्रहातव्याश्चेत्यनुशया द्विधा भिद्यन्ते । ये भावनानिरपेक्षं दर्शनमार्गेणैव प्रहीयन्ते ते दर्शनप्रहातव्याः । ये तु भावनया ते भावनाप्रहातव्याः । तत्र दर्शनमार्गे—दुःखसमुदयनिरोधमार्गलक्षणार्यसत्येषु चतुर्षु प्रत्येकं धर्मज्ञानक्षान्तिक्षणधर्मज्ञानक्षणान्वयज्ञानक्षान्तिक्षणान्वयज्ञानक्षणभेदेन चतुर्धा भिन्ने आहत्य षोडशक्षणलक्षणे क्रमशश्चरतो मार्गे मार्गे प्रक्षीयमाणसत्कायदृष्ट्यादितत्तदनुशयस्य अन्तिमे षोडशे अन्वयज्ञानक्षणलक्षणे चरतः अपगतेषु चापरेष्वनुशयेषु प्रक्षीणाशीत्यनुशयत्वं भवति सोऽयं स्रोतआपन्नः । आपन्नदशां तु स्रोत आपत्तिफलप्रतिपन्नक उच्यते। अयं निर्वाणप्रापकप्रवाहमनुप्रविष्ट इति स्रोतआपन्न इति व्यपदिश्यते । ये तु भावनाप्रहातव्यास्ते दश । तत्रैकैकं क्रमाद्वाभ्यां द्वाभ्यां ज्ञानक्षणाभ्यां क्षीयते, तदेवं विंशतिक्षणलक्षणे भावनामार्गे आषष्ठात् ( षष्ठात्प्राक् ) सकृदागामिफलप्रतिपन्नक उच्यते । षष्ठे क्षणे ( मार्गे ) प्रक्षीणानुशयविशेषः सकृदागामीत्युच्यते । सोऽयं सकृदिमं

पत्र.

लोकमागम्य परिनिर्वास्यतीति तथोच्यते षष्ठान्मार्गक्षणादूर्ध्वं नवमक्षणलक्षणमार्गतः प्राक् मार्गे स्थितः अनागामिफलप्रतिपन्नक उच्यते । नवमे तु स्थितः अनागामीत्युच्यते । सोऽयमिमं लोकमनागम्य लोकान्तर एव स्थितो मार्गेणोत्तरोत्तरेणाधिगतेन प्रक्षीणानुशयावशेषः परिनिर्वास्यतीति अनागामिपदेन निर्दिश्यते । नवमलक्षणमार्गत ऊर्ध्वं नवमक्लेशप्रकारप्रहाण-क्षणादर्वाग्ज्ञानक्षणेषु वर्तमान अर्हत्फलप्रतिपन्नक उच्यते । नवमक्लेशप्रकारप्रहाणे त्वर्हन्नु-च्यते । सोऽयं सर्वैरेव देवमानुषासुरलोकैः क्रियमाणां पूजामर्हतीत्यर्हन्नुच्यते । त एते फलस्थप्रतिपन्नकभेदेनाष्टौ महापुरुषपुद्गला उच्यन्ते । प्रपञ्चितोऽयमर्थो माध्यमिकवृत्तावार्य-सत्यपरीक्षायाम् ।

५२९ **अरूपधातुः** कामधातुः रूपधातुः अरूपधातुश्चेति त्रिधा लोकविभागः । चक्षुरादिलक्षण-विज्ञानद्वारसम्पत्त्यसम्पत्तिभेदेनायं भेदः ।

५३८ **आस्रवः**—आस्रवति (संसृतौ) अनेनेत्यास्रवः रागादिमलकलङ्कः । अयमेवासव इत्यपि परिभाष्यते मोहापादकत्वेनासवसाम्यात् । विभक्तश्चायं चतुर्धा कैश्चित्—कामासवो भवासवो दृष्ट्यासवोऽविद्यासवश्चेति ।

८४२ } ९२३ } ९१६ } **दशभूमयः**—प्रमुदिता विमला प्रभाकरी अर्चिष्मती सुदुर्जया अभिमुखी दूरङ्गमा चला साधुमती धर्ममेधा चेति दशैता भूमयः, बोधिसत्त्वावस्थां यावत् । बुद्धभावप्राप्तौ तु तत ऊर्ध्वम् ।

८४७ **माराः**—बुद्धपदस्य प्रतिहतिकरा माराः परिभाष्यन्ते । ते च चत्वारः—स्कन्धमारः क्लेशमारः देवपुत्रमारः मृत्युमारश्चेति ।

८७७ **त्रियानम्**—श्रावकयानं प्रत्येकयानं बुद्धयानं चेति ।

,, **चतुःसत्यम्**—दुःखं समुदयो निरोधो मार्गश्चेति प्रस्तावनायां व्याख्यातम् ।

८८९ **चातुर्महाराजकायिकादयः**—षट् कामावचरा देवाः ते यथा चातुर्महाराजकायिकाः त्रायस्त्रिंशाः तुषिताः यामाः निर्माणरतयः परनिर्मितवशवर्त्तिनश्चेति । अष्टादश रूपावचराः—ब्रह्म-कायिकादयः । चत्वारोऽरूपावचरा देवाः—आकाशानन्त्यायतनोपगादयः । व्यक्तमेतद्धर्मसङ्ग्रहे ।

८९५ **मार्गः**—सम्यग्दृष्टिप्रभृतिः सम्यक्समाधिपर्यन्तः आर्याष्टाङ्गिको मार्गः प्रस्तावनायां व्याख्यातः।

९०९ **ज्ञानत्रय**सुगतिप्रतिष्ठापनम्—तत्र ज्ञानत्रयम्—अविकल्पकम् विकल्पसमभावबोधकम् सत्यार्थोपायपरोक्षं चेति । धर्मसङ्ग्रहे ।

९१६ **अकनिष्ठाः**—रूपावचरदेवेष्वकनिष्ठानाम देवा निर्दिष्टाः, यथा—ब्रह्मकायिकाः ब्रह्मपुरोहिताः ब्रह्मपार्षद्याः महाब्रह्माणः परित्ताभाः अप्रमाणाभाः अभास्वराः परीत्तशुभाः शुभकृत्स्नाः अनभ्रकाः पुण्यप्रसवाः बृहत्फलाः असंज्ञिसत्त्वाः अबृहाः अतपाः सुदृशाः सुदर्शना अकनिष्ठा-श्चेत्यष्टादश रूपावचरादेवा इति । तेषामेव देश अकनिष्ठ इत्युच्यते ।

पत्र.

१३० **भाजनलोकः—सत्त्वलोकः** सत्त्वानि प्राणिनः, तल्लक्षणो लोकः सत्त्वलोकः, सत्त्वानामाश्रयभूतदेशलक्षणो लोको भाजनलोकः ।

१३२ **दुःखधर्मज्ञानक्षान्त्यादयः**—दुःखं समुदयो निरोधो मार्गश्चेति चत्वार्यार्यसत्यानि । तेषु दुःखे धर्मज्ञानक्षान्तिः दुःखे धर्मज्ञानम् दुःखेऽन्वयज्ञानक्षान्तिः दुःखेऽन्वयज्ञानम्, एवमेकैकस्मिन्नार्यसत्ये क्षान्तिद्वयज्ञानद्वयभेदादष्टौ क्षान्तयोऽष्टौ ज्ञानानि; तत् आहत्य षोडशभिन्नोऽयं सत्याभिसमयः । अयं भेदो व्यक्तो धर्मसङ्ग्रहे ।

एवमस्य निबन्धस्य भावं दर्शयता मया ।
प्रसङ्गात् कतिचिच्छब्दा व्याख्याताः पारिभाषिकाः ॥

**ग्रन्थकर्तुः समयः ।**

पुरा खलु सौगतदर्शनमिदं भारतवर्षे परितः संप्रवृद्धं वसुबन्धुदिङ्नागधर्मकीर्तिभिरप्रतिहततर्कमार्गैरन्यैश्च तैस्तैरनेकनिबन्धनिर्माणमुखेन प्रतिष्ठां नीतमतिप्रवृद्धतैर्थिकवादवाताहतिभिरप्यप्रकम्प्यमभूत् । सपदि सञ्जातैरुद्योतकरभट्टकुमारिलप्रभृतिभिस्तैर्थिकैरप्रतिद्वन्द्वैस्तर्कशरवर्षैः शिथिलीकृतमूलं तदिदमवलोक्य सोऽयं **शान्तरक्षितः** सकलतैर्थिकप्रवादोन्मूलनपूर्वकमात्मनो दर्शनं द्रढयन् निबन्धमेनमकरोत् । मन्ये समयः स तादृशः, यत् स्वसिद्धान्तप्रकाशनाय परमतं प्राधान्येन निरसनीयमभूत् । अत एव च वादरूपो निबन्धः परिणतोऽयम् । भट्टकुमारिलनिरसन एव चास्य निबन्धस्याष्टमो भागः प्रायः प्रवर्त्तते । सोऽयं **शान्तरक्षितः** वङ्गदेशे जाहोराख्ये ग्रामे (Zâhôr or Sâbhâr in the Pargana of Vikrampur, Dacca District) क्षत्रियवंशे क्रैस्ते अष्टमे शतके आदिमे भागे सञ्जातः । कालेनायमाचार्यबोधिसत्त्वाख्यया प्रख्यातः तदानीन्तनेन टिबटदेशाधिपतिना स्वदेशं सादरं नीतस्तत्र सौगतसमयप्रचारमकारयत् । अनेनापरेऽपि निबन्धाः वादन्यायविपञ्चितार्थप्रभृतयः प्रणीताः । तत्रैव च देशेऽस्य निर्याणमप्यभूत् । अयं चास्य जीवितसमयः—A. D. 705—762 प्रायः षष्टिहायनपरिमितः सम्भाव्यते ।

**कमलशीलश्च** पञ्जिकाकारः शान्तरक्षितस्यास्य शिष्यः नालन्दाविश्वविद्यालये तन्त्रशास्त्रेऽध्यापकपदमधिगतस्तस्मिन्नेव समये आसीत् । अनेन न्यायबिन्दुपूर्वपक्षसंक्षेपप्रभृतयः प्रबन्धाः प्रणीताः । अनयोश्चरितं कालनिर्णयः, ये चास्मिन्निबन्धकारा अनूदितास्तेषां कालनिर्णयश्च विस्तरेण श्रीमता महाशयेन अप्रतिमविद्यावैभवेन सुगृहीतनामधेयेन विनयतोषभट्टाचार्येण (Benoytosh Bhattacharya, M. A, Ph. D. General Editor of the Gaekwar Oriental series) प्रकाशित इति तत्प्रकाशनारम्भात्प्रत्यावृत्त्योपसंह्रियते नाम प्रस्तावना । हस्तगतोऽप्यर्थोऽवसर एव शोभेत प्रकाश्यमानः । न च संस्कृतभाषया तस्यैव प्रकाशने कश्चित्स्याद्विशेषः ।

उदयति सहस्रभानौ प्राग्भागे सार्वलौकिकालोके ।
प्रज्वालयन् प्रदीपान् भवति जनानां परं हास्यः ॥

तरैवे च महाशयैः शाक्यदर्शनरहस्यं जिज्ञासमानानां नः शाक्यदर्शननिबन्धावलोकनौपयिकं साहाय्यं तत्तन्निबन्धवितरणादिलक्षणं समापादितम् । यत एव नः शाक्यसमयविज्ञानमियदपि । प्रस्तावनामिमामारचयितुं प्रवृत्तैरस्माभिः प्रज्ञापारमिता सद्धर्मपुण्डरीककरुणापुण्डरीकचतुःशतिका माध्यमिककारिका बोधिचर्यावतारप्रभृतयः परिशीलिता नाम । ग्रन्थसंशोधनारम्भसमये तु नैतावती सहायसम्पत्तिरभूत् । स्याच्च क्वचित्प्रमादः संशोधनकर्मणि । अपिच—अस्य निबन्धस्य संशोधनं एकमेव पुस्तकमवलम्ब्य प्रवृत्तम् । तच्च पुस्तकं पाटण् वाडीपार्श्वनाथभण्डारे सुपरिरक्षितं समानीतं च गायकवाडराज्यस्थपुस्तकालयाधिकारिभिः। यस्यायमन्तिमो वाक्यलेखः—"कमलशीलसूत्रं समाप्तम् संवत् १४९२ वर्षे आषढ वदि १४ शुक्रे लेखिता" इति ( मूलस्यायं ) "कमलशीलाभिधानपुस्तकं समाप्तम् संवत् १४९२ वर्षे कार्तिक वदि ३ रविवासरे अणहिल्लपुरपत्तने" इति च ( टीकायाम् ) तच्च क्वचित्क्वचिदतिजीर्णं संरक्षणैकान्तैर्दृश्यवर्णरेखैः सूक्ष्मतमपत्रैस्समाच्छादितमत एवानभिव्यक्तवर्णं क्वचित्क्वचिदशुद्धसंवलितं पदवाक्यविश्रान्तिचिह्नरहितं चेति संशोधने क्लेशाधिक्यावहमभूत् । अतश्च स्यादपि स्खालित्यानामवकाशः । संशोधनपत्रे च तत्तदशुद्धिपरिहरणं विहितमस्माभिः ।

शान्तरक्षितोऽयं निबन्धेऽस्मिन् कारिकात्मके तत्र तत्र कुमारिलभर्तृहरिभामहप्रभृतीनां मतमनुवदंस्तदीयाभिरेव कारिकाभिरनुवदति । न स्वयं तदनुवादाय कारिका अपरा विरचयति । अतोऽस्य शैली विज्ञायते—परस्य चेत् कारिकाः स्युः, तन्मतं तत्कारिकाभिरेव नियतमनुवदेत् न पृथक् कारिकानिर्माणप्रयासमपार्थकं वहेदिति । ततश्च सम्भाव्यते शुभगुप्तप्रभृतीनां मतमनुवदता तेषामेव कारिकाः संग्रथिताः स्युरिति । तन्निबन्धश्च कारिकात्मक इति व्याख्यानतोऽवगम्यते । एवंविधे सम्भावनास्पदे स्थाने अस्येयं कारिकेति निर्णयाधायकस्तत्तन्निबन्धो नोपलभ्यते । येन श्लोकवार्त्तिकादिष्विवान्यत्रोपलभ्य निर्णयः कर्तुं शक्येत । अतश्चानुपलम्भादाकरे न तासां परिगणनावकाशः । **किञ्च**—अत्र सर्वज्ञपरीक्षायां "एतावत् कुमारिलेनोक्तं पूर्वपक्षीकृतमिति वचनेन ( ८४४ ) कुमारिलवचनतया ज्ञाप्यमाने ( मूले ), "किंवा क्षुद्रपिशाचाद्यै"रित्येतदन्ते "धर्मज्ञत्वनिषेधश्चे"दित्यादौ कारिकाजाते काश्चन कारिकाः समुपलभ्यन्ते श्लोकवार्त्तिके, काश्चन नोपलभ्यन्ते । सन्दर्भतश्च कुमारिलस्यैव कृतिरिति च विज्ञायते । तत् कुमारिलस्यैवापरा कृतिः स्यात्, यत्र सर्वज्ञनिरसनं विस्तृतं स्यात् । यत एवौद्धत्यानुवाद इह कृतः स्यात् इति सम्भाव्यते । स्वतःप्रामाण्यपरीक्षायामप्येवमुपलभ्यते ।

क्वचित्प्रमादात्परकारिका अपि निबन्धकारस्येत्यवधृत्य प्रकृतस्थाने स्वमत्या पूरिता नाम । स च प्रमादः शुद्धिपत्रे परिहृतः । यानि प्रमदादनुपलम्भाद्वा आकरानुक्रमणिकायां विगलितानि स्युः, तानि पुनर्मुद्रणावसरे सत्यवसरे प्रकाश्येरन् ।

परिशील्य बहून् ग्रन्थान् शाक्यसिद्धान्तबोधकान् ।
भूमिकाऽस्य निबन्धस्य रचिता नातिविस्तृता ॥
अनेकतन्त्रकान्तारे बहुशो विशतो मम ।
विष्णुरव्याहतः पन्था हृदयान्मापसर्पतात् ॥

**पं-कृष्णमाचार्यः ( श्रीरंगम् )**
वडताल् संस्कृतपाठशालाप्रधानपण्डितः ।

# प्रथमभागस्य विषयानुक्रमणिका ।

श्रीः ।

# तत्त्वसङ्ग्रहः ।

## पञ्जिकासमेतः ।

---

प्रकृतीशोभयात्मादिव्यापाररहितं चलम् ।
कर्म तत्फलसंबन्धव्यवस्थादिसमाश्रयम् ॥ १ ॥
गुणद्रव्यक्रियाजातिसमवायाद्युपाधिभिः ।
शून्यमारोपिताकारशब्दप्रत्ययगोचरम् ॥ २ ॥
स्पष्टलक्षणसंयुक्तप्रमाद्वितयनिश्चितम् ।
अणीयसाऽपि नांशेन मिश्रीभूतापरात्मकम् ॥ ३ ॥
असंक्रान्तिमनाद्यन्तं प्रतिबिम्बादिसन्निभम् ।
सर्वप्रपञ्चसन्दोहनिर्मुक्तमगतं परैः ॥ ४ ॥
स्वतन्त्रश्रुतिनिस्संगो जगद्धितविधित्सया ।
अनल्पकल्पासङ्ख्येयसात्मीभूतमहादयः ॥ ५ ॥
यः प्रतीत्यसमुत्पादं जगाद गदतांवरः ।
तं सर्वज्ञं प्रणम्यायं क्रियते तत्त्वसंग्रहः ॥ ६ ॥

## (पञ्जिका)

ज्ञेयाम्भोनिधिमन्थनादधिगतैस्तत्त्वामृतैर्यो जग-
ज्जातिव्याधिजरादिदुःखशमनैः कारुण्यतोऽतर्पयत् ।
तस्मै तत्त्वविदांवराय जगतः शास्त्रे प्रणम्यादरा-
त्तत्त्वानामिह सङ्ग्रहे स्फुटतरा प्रारभ्यते पञ्जिका ॥ १ ॥

वक्तुं वस्तु न मादृशा जडधियोऽपूर्वं कदाऽपि क्षमाः
क्षुण्णो वा बहुधा बुधैरहरहः कोऽसौ न पन्थाः क्वचित् ।
किन्तु स्वार्थपरस्य मे मतिरियं पुण्योदयाकाङ्क्षिणः
तत्त्वाभ्यासमिमं शुभोदयफलं कर्तुं समभ्युद्यता ॥ २ ॥

इह हि शास्त्रे प्रेक्षावतामभिधेयप्रयोजनावसायपूर्विका प्रवृत्तिर्महत्सु च प्रसादः सर्वश्रेयोऽधिगतेः कारणं प्रथममित्यालोच्य भगवति प्रसादोत्पादनार्थं शास्त्रे चास्मिन्नादरेण श्रोतुः प्रवृत्त्यर्थं स्वशास्तृपूजाविधिपूर्वकमस्य शास्त्रस्य प्रकृतीत्यादिभिः श्लोकैस्तत्त्वसङ्ग्रह इत्येतत्पर्यन्तैरभिधेयप्रयोजने प्राह ॥

तथाहि—यद्यभिधेयमस्य न कथ्येत तदोन्मत्तादिवाक्यवदानर्थक्यं सम्भावयन् प्रेक्षावान्न प्रवर्त्तेतापि श्रोतुमित्यभिधेयमस्यावश्यवचनीयम् । तथा सत्यभिधेये काकदन्तादिपरीक्षाशास्त्रवदभिमतप्रयोजनरहितं शास्त्रं प्रेक्षावन्तः श्रोतुमपि नाद्रियन्त इति ततस्तत्प्रवृत्त्यर्थमादौ प्रयोजनमभिधानीयम् । प्राधान्येन तु प्रयोजनमेव प्रवृत्त्यङ्गम् । तदर्थितयैव शास्त्रेषु श्रोतृजनस्य प्रवृत्तेः । तच्चाभिधेयशून्येन शास्त्रेणाशक्यं सम्पादयितुमिति शास्त्रस्य प्रयोजनोपायतासंदर्शनार्थमभिधेयकथनम् । तच्च प्रयोजनमनुगुणोपायमुपदर्शनीयं न पुनरशक्यतत्साधनानुष्ठानम् । अन्यथा विषहरतक्षकचूडारत्नालङ्कारोपदेशशास्त्रवत्सत्यपि प्रयोजने तत्साधनानुष्ठानाशक्यतां मत्वा न प्रवर्त्तेत प्रेक्षावान् । अत एवोक्तम्—"संबद्धानुगुणोपायं पुरुषार्थाभिधायकम् । परीक्षाऽधिकृतं वाक्यमतो न विकृतं परम् ॥" इति । तस्माच्छास्त्रेषु प्रवृत्त्यर्थमभिधेयादिकथनम् ॥

**ननु** प्रेक्षावतां प्रवृत्तिर्निश्चयादेव । निश्चयश्च प्रमाणादेव । न चास्य प्रयोजनवाक्यस्यात्राभिधेयादौ बाह्येऽर्थे प्रामाण्यमस्ति । तत्रास्य प्रतिबन्धाभावात् । तथा हि—न तावत्तादात्म्यलक्षणः प्रतिबन्धो(द्धो?)त्पन्नभेदात् । नापि तदुत्पत्तिलक्षण इच्छामात्रप्रतिबद्धत्वाद्वाक्यस्य । न चाप्रतिबद्धाद्वाक्याज्जिज्ञासितेऽर्थे ज्ञानमुत्पद्यमानं प्रमाणं युक्तमतिप्रसङ्गात् । विवक्षायां च यद्यपि प्रामाण्यं वाक्यस्य । तथापि न तत्प्रेक्षावतः प्रवृत्त्यङ्गम् । नहि ये यथा विवक्षन्ति ते तथैवानुष्ठानकाले कुर्वन्ति विसंवादना(द)भिप्रायस्य । अन्यथा प्रतिज्ञायाऽप्यन्यथा शास्त्ररचनासम्भवात् ॥ अपि च यः प्रमाणान्तरादधिगतशास्त्रप्रयोजनस्तं प्रति प्रयोजनवाक्योपन्यासोऽनर्थक एव । तस्य प्रमाणान्तरादेव प्रवृत्तत्वात् ॥ यश्चापि प्रमाणान्तरेण बाधितशास्त्रप्रयोजनस्तं प्रति सुतरामनर्थक एव, तस्य प्रमाणान्तरेण बाधितत्वादेव प्रवृत्त्यसम्भवात् । एतच्च द्वयमभ्युपगम्योच्यते । न तु किंचिदर्वाग्दृशां प्राक्प्रवृत्तेः प्रयोजनादिसाधकं तद्बाधकं वा प्रमाणमस्ति । येनामी तत्सदसत्तामवगच्छेयुः । तस्याः प्रवृत्तिसमधिगम्यत्वात् । किं तु योऽनधिगत-

शास्त्रप्रयोजनादिस्तं प्रति वाक्यमिदमारभ्यते । तस्य च प्रेक्षावतः संशय एव वाक्यतोऽस्मादुपजायते न निश्चयोऽप्रमाणत्वात् । स च संशयः प्रागपि वाक्योपन्यासादस्तीति व्यर्थः प्रयोजनादिवाक्योपन्यासः ॥

तदत्राभिधीयते । यत्तावदुक्तं निश्चयेनैव प्रेक्षावतां प्रवृत्तिरिति तदसत् । संशयेनापि प्रवृत्तिदर्शनात् । यथा कृषीवलादीनाम् । स्यादेतद्यद्यपि कृषीवलादेर्भाविनि फले संशयस्तथापि तत्फलसाधननिश्चयस्तेषां विद्यत एव । तेन निश्चयपूर्विकैव तेषां प्रवृत्तिरिति । तदसम्यक् । यदर्थं हि यस्य प्रवृत्तिः सा तत्संशयेऽपि तस्य भवतीत्येतावदिह प्रकृतम् । न च कृषीवलादयः साधनार्थं तेषु प्रवर्त्तन्ते येन साधनविषयनिश्चयसद्भावान्निश्चयपूर्विका प्रवृत्तिरेषामुपवर्ण्यते । किं तर्हि । फलार्थं ते तत्र प्रवर्त्तन्ते । तत्र च फले प्रतिबन्धादिसम्भवान्न निश्चयोऽस्तीत्यतः संशयपूर्विकैव तेषां प्रवृत्तिः । याऽपि चाऽऽद्यायां प्रवृत्तौ साधननिश्चयार्था प्रवृत्तिरेषाम् । तत्रापि न साधननिश्चयः । तदर्थत्वादेव प्रवृत्तेः । अपिच—साधननिश्चयोऽपि तेषां भाविफलापेक्षयाभवन्नवश्यमेतदनागतमेवंविध फलं साधयिष्यतीत्येवंरूपो भवेत्, यद्वा प्रतिबन्धकसहकारिवैकल्ययोरसम्भवे सत्यवश्यमभिमतफलसम्पादनायालमेतदित्येवंरूपः । न तत्र तावदाद्यो युक्तरूपः सम्भवत्सहकारिवैकल्यप्रतिबन्धकोपनिपातस्य कस्यचिदुपलब्धतथाविधफलस्यापि शाल्यादेरनागतफलं प्रत्यसाधनत्वदर्शनेन सर्वत्राऽऽशङ्काया अव्यावृत्तेर्यदाह—"सामग्रीफलशक्तीनां परिणामानुबन्धिनि । अनैकान्तिकता कार्ये प्रतिबन्धादिसम्भवात् ॥" इति । अथ द्वितीयस्तदा युक्ततरमेतत् । एवंरूपत्वादेव सर्वस्याः प्रमाणपूर्विकायाः प्रवृत्तेः । अत एव चाचार्यास्तत्र योग्यतानुमानेन विशेषणं विदधति । असति प्रतिबन्धे योग्यमेतदिति । किं तु फलमप्यनेन रूपेण निश्चितमेवेति न साधनस्यैव निश्चयः । न चाप्येवंप्रवृत्तौ परमार्थतः फलनिश्चयपूर्विका प्रवृत्तिः सिद्ध्यति । प्रतिबन्धाद्यसत्वस्यैवापरदर्शनैर्निश्चेतुमशक्यत्वात् ॥

स्यादेतत्—यद्यपि परमार्थतः प्रतिबन्धाभावो निश्चेतुमशक्यस्तथापि यदि प्रतिबन्धो न स्यात्, तदावश्यमस्मात् फलप्राप्तिर्नियमेनेत्येवंविधो निश्चयः प्रमाणपूर्विकायां प्रवृत्तौ विद्यत एव, नत्वप्रमाणपूर्विकायामन्यथा प्रमाणाप्रमाणपूर्विकयोः प्रवृत्त्योर्विशेषो न स्यात्; स च तथाविधोऽपि निश्चयो वाक्यान्न सम्भवत्येव; बाह्येऽर्थे तत्र तस्याप्रतिबन्धेनाप्रमाणत्वादिति । सत्यमेवैतत् । किं तु—यदि वाक्यान्न कस्यचित्प्रे-

क्षावतः प्रवृत्तिरस्तीत्येतत्सिद्धं भवेत्तदा सर्वमेवैतत्स्यात्; यावता दृश्यन्ते हि केचिदप्रत्यक्षफलानां केषांचित्प्रवृत्तिनिवृत्त्योर्महाशंसापायश्रवणादनाश्रित्यागमप्रामाण्यमासितुमशक्नुवन्तो वचनात्प्रवर्त्तमानाः । न चैतावता तेषां प्रेक्षावत्ताहानिः, अभ्युपायेनैव प्रवृत्तेः; न ह्यागमादृतेऽत्यन्तपरोक्षार्थविषये प्रवृत्तावन्योऽभ्युपायोऽस्ति । अवश्यं च प्रवर्त्तितव्यं त्वागमात् । व्याहतागमपरिग्रहं हि कुर्वाणा अप्रेक्षापूर्वकारिणः स्युः । अव्याहतागमसमाश्रयेण तु प्रवृत्तौ कथं न प्रेक्षावन्तो भवेयुस्तस्यैव सम्यगुपायत्वात् । न चागमस्य पुरुषातिशयप्रणीततया यथार्थत्वमवधार्य तत्र निश्चयादेव प्रवर्त्तन्त इति युक्तं वक्तुम् । पुरुषातिशयस्यैवापरदर्शनैर्निश्चेतुमशक्यत्वात् । न चागमान्न प्रवर्त्तन्ते प्रेक्षावन्तोऽपि । तद्वदिहापि । अव्याहतप्रयोजनादिवाक्यश्रवणाच्छास्त्रेषु प्रवर्त्तमानाः प्रेक्षापूर्वकारिणो भविष्यन्ति । उपायेनैव प्रवृत्तेः । न ह्यत्रापि प्रवृत्तावभ्युपायान्तरमस्ति । शास्त्रार्थस्य प्राक् प्रवृत्तेरत्यन्तपरोक्षत्वात् ॥

यच्चाप्युक्तं विवक्षायां यद्यपि प्रामाण्यमित्यादि । तदप्यसारम्, यतो यथाविवक्षितमप्यर्थं शास्त्रेण परिसमापयन्त उपलभ्यन्ते; तद्वदिहापि कदाचिद्यथा प्रतिज्ञातार्थपरिसमाप्तिर्भविष्यतीति मत्त्वा प्रेक्षावतः प्रवृत्तिः केन वार्येत । न चाप्यसम्भवाशङ्कया निवृत्तिर्युक्ता; अर्थसंशयेनापि प्रवृत्तेः । अन्यथा प्रमाणपूर्विकायामपि प्रवृत्तौ फलासम्भवाशङ्कायाः सम्भवात्क्वचिदपि प्रवृत्तिर्न स्यात् । नाप्यनर्थावाप्तिशङ्का, शास्त्रादनिष्टफलावाप्त्यसम्भवात् । न चाप्यभिमतफलाप्राप्तिसम्भावनालक्षणानर्थावाप्तिशङ्केति युक्तं वक्तुं, तस्याः सर्वत्र प्रवृत्तौ तुल्यत्वात् ॥

यच्चोक्तं योऽनधिगतशास्त्रप्रयोजनस्तं प्रति वाक्यमिदमारभ्यत इति । वयमप्येवं ब्रूमः । किं तु—यद्यपि प्रयोजनवाक्योपन्यासात्प्राक्तस्य संशयोऽस्ति । स तु प्रयोजनसामान्ये, किमिदं प्रयोजनवदाहोस्विन्नेति । न च प्रयोजनमात्रसन्देहात्प्रवृत्तिर्युक्ता, सर्वत्रैव प्रवृत्तिप्रसङ्गात् । प्रयोजनमात्रस्य चानर्थितत्वात् । किं तु प्रतिनियतसाधनोपादानहेतोः प्रयोजनविशेषविषयात्संशयात्प्रवृत्तिर्दृश्यते । क्वचिदेव साधनेऽर्थिनां प्रवृत्तेः प्रयोजनविशेषस्य चाकाङ्क्षितत्वात् । न चान्यः प्रयोजनवाक्यात्प्राक् प्रयोजनविशेषविषयसंशयोत्पत्तिहेतुः कश्चिदस्ति येन शास्त्रान्तरपरिहारेण प्रतिनियतशास्त्रपरिग्रहं कुर्वीत ॥

**ननु** प्रयोजनविशेषार्थितैव पुंसः प्रयोजनविशेषसंशयोत्पत्तिहेतुः प्राग्विद्यत एव। तथाहि प्रयोजनविशेषाकाङ्क्षापरिगतमनसः प्रथमतरमेवं भवत्येव, किमिदमस्मदधिगतप्रयोजनेन सप्रयोजनम्? आहोस्विदन्येन? किं वा निष्प्रयोजनमिति; तत्साधकबाधकप्रमाणाभावे तस्य न्यायप्राप्तत्वात् । प्रयोजनविशेषप्रतिपादकशास्त्रान्तरोपलब्धेश्च। अतो भवत्येव प्रागपि प्रयोजनविशेषविषयसंशय इति व्यर्थः प्रयोजनवाक्योपन्यासः। **नैतदस्ति।** यद्यपि प्रयोजनविशेषार्थितापि संशयविशेषहेतुर्भवति। तथापि न सा सर्वेषां संमुखीभवति । अव्युत्पन्नपुरुषार्थानां मूढधियां केषांचिदसंमुखीभावात्। तथाहि—मोक्षः परमपुरुषार्थतया सिद्धः, अथ च सन्ति केचिद्व्युत्पन्ना ये तमपि परमपुरुषार्थं पुरुषार्थतया न जानन्ति । प्राग्ये न तं प्रार्थयिष्यन्ते ते। न वा संमुखीभूता प्रयोजनविशेषाकाङ्क्षा प्रयोजनविशेषविषयसन्देहोत्पत्तिहेतुर्युक्ता, कारणसत्ताधीनत्वात्कार्याणाम्। यदि नाम सा केषांचिदपि संमुखीभवति, तथाप्यसौ साधनान्तरपरित्यागेन प्रतिनियतसाधनोपादानहेतोः संशयविशेषस्य हेतुर्न भवति; सर्वत्र साधकबाधकप्रमाणाभावेन तस्यास्तद्धेतुत्वेन न्यायप्राप्तत्वात्। न चैतावन्मात्रेण प्रवृत्तिर्युक्ता। सर्वत्र प्रवृत्तिप्रसङ्गात्। न च शक्यं केनचित्सर्वत्र प्रवर्त्तितुमित्यतः फलविशेषार्थिनोऽपि प्रतिनियतसाधनपरिग्रहनिबन्धनाभावादुदासीरन् । तस्मात्प्रतिनियतसाधनपरिग्रहहेतुप्रयोजनविशेषविषयसंशयोत्पादनायात्यन्तपरोक्षार्थविषयागमप्रणयनवत् फलविशेषार्थिना प्रतिनियतसाधनपरिग्रहायाभिधानीयमेव प्रयोजनवाक्यम्। तथा हि तेनास्यैव शास्त्रस्यार्थविशेष उपदर्श्यते नान्यस्य। अतोऽनेन प्रतिनियतसाधनसाध्यफलविशेषविषयः संशयो जन्यते। स च श्रोता कदाचिन्ममायमर्थविशेषो निष्पत्स्यत इति प्रयोजनवाक्योपजनितात् प्रयोजनविशेषविषयादत्यन्तपरोक्षार्थविषयागमोपजनितादिव संशयात्प्रवर्त्तेतापीत्यतः प्रयोजनवाक्योपन्यासः ॥

अवश्यं चैतदेवं विज्ञेयम्, अन्यथाऽत्यन्तपरोक्षार्थविषयागमप्रणयनमपि व्यर्थं स्यात्; प्रागप्यागमप्रणयनाद्दानादिषु फलविशेषार्थिनां साधकबाधकप्रमाणाभावेन तत्संशयस्य विद्यमानत्वात्। किं त्वसावव्युत्पन्नस्वर्गादिफलानां नैवोत्पद्यते। तत्कारणभूतायाः फलविशेषार्थिताया असंमुखीभावात्। येषां चोपजायते तेषामपि सर्वत्रोपलादिभक्षणेऽपि प्रवृत्तिहेतुतया साधारणत्वादुपलादिभक्षणपरिहारेण (न) प्रतिनियतदानादिपरिग्रहहेतुर्भवतीति मत्वा तदर्थमागमप्रणेतृभिरागमः प्रणीयते तद्वत्प्रयो-

जनवाक्यमपि शास्त्रकारैरित्यचोद्यमेतत् । न चापि जिज्ञासितप्रयोजनविशेषप्रतिपादकं शास्त्रान्तरमुपलब्धम्, येन तदुपलब्धिबलादभिमतप्रयोजनविशेषविषयः सन्देहो भवेत् । न ह्यभिमतप्रयोजनविशेषसाधने शास्त्रान्तरे सम्भवति कश्चित्प्रेक्षावान् परं शास्त्रान्तरमारभते । प्रेक्षावत्त्वहानिप्रसङ्गात् । अतो न शास्त्रान्तरोपलब्धिरपि विवक्षितप्रयोजनविशेषसन्देहहेतुर्भवति । तस्माच्छ्रोतृजनप्रवृत्त्यर्थः प्रयोजनादिवाक्योपन्यास इति स्थितम् ॥

**यस्तु** मन्यते न श्रोतृजनप्रवृत्त्यर्थं प्रयोजनादिकथनम्, ततः संशयोत्पत्तेः; संशयेन तु प्रेक्षावतः प्रवृत्त्यसम्भवात् । किंतु यत्प्रयोजनरहितमनर्थकं वा तन्नारब्धव्यम्, यथा काकदन्तपरीक्षोन्मत्तादिवाक्यम्; प्रयोजनरहितं चेदं शास्त्रमतो न श्रोतुं कर्तुं वा प्रारब्धव्यमित्येवं व्यापकानुपलब्ध्या यः प्रत्यवतिष्ठते तस्य हेतोरसिद्धतोद्भावनार्थमादौ प्रयोजनादिवाक्योपन्यास इति । **तदसम्यगिव** लक्ष्यते । संशयेनापि प्रवृत्तेः प्रसाधितत्वात् । असिद्धतोद्भावनस्य च वैयर्थ्यात् । एवं हि तदर्थवद्भवेत् । यदि तस्य परस्यातो वाक्यात्प्रवृत्तिर्भवेत् । यावतोद्भावितायामप्यनेन वाक्येनासिद्धतायां नातो वाक्यात्प्रेक्षावतो यथोक्तव्यापकात्तत्वनिश्चयः समुत्पद्यते येनासौ प्रवर्त्तितो भवेत् । पूर्ववद्वाक्यस्यास्याप्रमाणत्वात् । संशयेन च प्रेक्षापूर्वकारिणो भवन्मतेन प्रवृत्त्यसम्भवात् । अतो विफलमेवासिद्धतोद्भावनम् । नापि कश्चित्प्रेक्षावानविदितशास्त्रशरीरोऽकस्माद्व्यापकाभावं निश्चित्यानेन प्रत्यवतिष्ठते । नापि तत्प्रत्यवस्थानात् स्वयं विदितशास्त्रप्रयोजनोऽपि शास्त्रकृन्नारभेत कर्तुं श्रोता वा प्रेक्षापूर्वकारी निर्निबन्धनाद्वाक्यान्निवर्त्तते येन तयोः प्रवृत्त्यर्थमसिद्धतोद्भावनं स्यात् । अथापि स्याद्योऽप्रेक्षापूर्वकारी सोऽनिबन्धनमकस्मादपि यथोक्तव्यापकाभावं गृह्णीयात् । परैश्च ग्राहयेदपि, अतस्तं प्रत्यसिद्धतोद्भावनं क्रियत इत्येतदप्ययुक्तम् ॥

यदि तत्तेषां प्रवृत्त्यङ्गं शास्त्रेषु न भवति, तदा विफलमेव तं प्रत्यसिद्धतोद्भावनम्; अन्यथा ह्यतिप्रसङ्गः स्यात् । सन्ति हि बहुतरा असम्बद्धप्रलापिनः केचित्, तेषामप्ययुक्ताभिधायित्वप्रतिपादनाय बहुतरं शास्त्रप्रवृत्तावनुपयुज्यमानकमपि वक्तव्यमापद्येत । तस्मादवश्यमेव हेत्वसिद्धतोद्भावनं शास्त्रारम्भे माभूद्विफलमतिप्रसङ्गो वेति श्रोतृजनप्रवृत्तिफलमेव वर्णनीयम् । ततश्च योऽपि व्यापकानुपलब्ध्या न प्रत्यवतिष्ठेत न चाश्रुत्वा प्रयोजनं प्रवर्त्तेत तं प्रत्यपि सार्थकमेव किं न भवेत् । यथा वि-

भक्तं प्राक्। तस्मान्न श्रो(तस्मात् श्रो ?)तृजनप्रवृत्त्यर्थमेवाभिधेयादिकथनमिति स्थितम्। न तु पुनः स्वार्थम्, ततः स्वयमप्रवृत्तेरन्यथोन्मत्तकप्रलापवदसम्बद्धमेव स्यात्। यत्पुनरुक्तमाचार्येण न्यायविन्दौ—"स्वयमप्येवं प्रतिपत्तिर्भवतीति स्वार्थानुमानेऽप्यस्याः प्रयोग" इति, न तद्बहिर्भूतं प्रयोगमधिकृत्य। किं तर्हि अन्तर्जल्पात्मकमेव। स्वार्थानुमानस्य ज्ञानात्मकत्वात्। यच्च "प्रायः प्राकृतशक्ती"त्यादिकमुक्तं। तदपि वक्रोक्त्या परेषामीर्ष्यादिमलोपहतचेतसां भाजनीकरणार्थमित्यलं बहुना॥

शास्तृपूजाविधानं तु भगवति सर्वश्रेयोधिगतिहेतोः प्रसादस्योत्पादनार्थम्। तथाहि गुणगणाख्यानविधिनाऽमुना भगवतो माहात्म्यमुद्भाव्यते। तदुपश्रुत्य च श्रद्धानुसारिमनसां तावदसंशयं भगवति झगिति चित्तप्रसादः समुदेति। येऽपि प्रज्ञानुसारिणस्तेऽपि तथाविधेषु बाधमपश्यन्तः प्रज्ञादीनां च गुणानामभ्यासात्प्रकर्षमवगच्छन्तो वक्ष्यमाणादप्यतीन्द्रियार्थदृक्साधकात्प्रमाणान्नूनं जगति संभाव्यन्त एव तथाविधाः सूरय इत्यवधार्य भगवति प्रसादमुपजनयन्त्येव। तत्प्रसादाच्च तद्गुणास्तत्प्रवचनेषु तदाश्रिते च शास्त्रादौ परीक्षापुरःसरमुद्ग्रहणाद्यर्थमाद्रियन्ते ततः श्रुतमय्यादिप्रज्ञोदयक्रमेण यावत्परं श्रेयोऽधिगच्छन्तीति महत्सु प्रसादः सर्वश्रेयोधिगतेः प्रधानं कारणम्। अत एव प्रायेण प्रसिद्धशास्तृकप्रवचनाश्रयेण प्रणीयमानेषु शास्त्रेषु शास्त्रकृतः शास्त्रस्यादौ तावत् स्वशास्तृपूजामेव विदधति। तस्यास्तत्प्रवृत्तावप्यङ्गभावस्य लेशतो विद्यमानत्वात्। अतएवोक्तम्—"शास्त्रं प्रणेतुकामः स्वशास्तुर्माहात्म्यज्ञापनार्थं तस्मै नमस्कारमारभत" इति। अतो नानर्थकं शास्तृपूजाविधानमिति स्थितम्॥

तत्र तं प्रणम्येत्येतत्पर्यन्तेन शास्तृपूजाविधानं निर्दिष्टम्। क्रियते तत्त्वसङ्ग्रह इत्यनेनाभिधेयप्रयोजने प्राह—तथाह्यभिधेयमस्य शास्त्रस्य प्रकृत्यादिव्यापाररहितत्वादीनि प्रतीत्यसमुत्पादविशेषणानि तत्त्वानि। तानि च सामर्थ्यात्तत्त्वशब्देन दर्शितान्येव, अन्येषां तत्त्वार्थत्वानुपपत्तेः। **ननु** च वाक्यस्यैवाभिधेयवत्त्वं नान्यस्येति न्यायः, न च सकलं शास्त्रं वाक्यमपि तु वाक्यसमूहस्तत्कुतोऽस्याभिधेयसंभवः। **नैतदस्ति**। यद्यपि वाक्यसमूहात्मकं शास्त्रं तथाऽपि तानि वाक्यानि परस्परव्यपेक्षासंबन्धावस्थितानि, अन्यथोन्मत्तादिवाक्यसमूहवदसङ्गतार्थमेव स्यात्। ततश्च परस्परसंबद्धानेकशब्दसमूहात्मकत्वात् तदन्यवाक्यवद्वाक्यमेव शास्त्रम्। न हि पदैरेव वाक्यमारभ्यतेऽपि तु वाक्यैरपि। अतो महावाक्यत्वादभिधेयवदेव शास्त्रमित्यचोद्यम्।

प्रयोजन तु सङ्ग्रहशब्देन दर्शितम् । तथाहि—प्रयोजनमुपदर्श्यमानं शास्त्रेषु प्रवृत्तिकामानां शास्त्रगतमेवोपदर्शनीयं नान्यगतम्, अन्यथा ह्यसङ्गताभिधानं स्यात् । उक्तञ्च—शास्त्रेषु हि परं प्रवर्त्तयितुकामो वक्ता शास्त्रादौ प्रयोजनमभिधत्ते न व्यसनितया (इति) । कथं च परः प्रयोजनोपदेशाच्छास्त्रेषु प्रवर्तितो भवति । यदि तद्गतमेव प्रयोजनमभिधीयते नान्यगतम् । नह्यन्य(दपि) (गत?) प्रयोजनाभिधानादन्यत्र प्रेक्षावतः प्रवृत्तिर्भवेत् । विशिष्टार्थप्रतिपादनसमर्थं च वचनं शास्त्रमुच्यते। नाभिधेयमात्रं नापि शब्दमात्रमर्थप्रतिपादनसामर्थ्यशून्यमतो नाभिधेयादिगतं प्रयोजनमुपदर्शनीयम् । यत्पुनः सम्यग्ज्ञानपूर्विका सर्वज्ञत्वेनार्थसिद्धिरि(ति, तत् ·····················?) इत्यनेनाभिप्रायेण प्रयोज(नम् ।) (न?) प्रयोजनस्य कथनं नाभिधेयप्रयोजनस्य सम्यग्ज्ञानव्युत्पत्तेरेव सम्यग्ज्ञानशब्देन विवक्षितत्वात् । सम्यग्ज्ञानव्युत्पत्ते (स्तदर्थत्व एव सर्वज्ञत्वेनार्थसिद्धिः?) इत्येतत्प्रयोजनाभिधानं सङ्गतार्थं भवेत् । अन्यथा दुःश्लिष्टमेव स्यात् । तच्च प्रयोजनं शास्त्रस्य त्रिविधं क्रियारूपं क्रियाफलं क्रियाफलस्य फलम् । तथा हि—शास्त्रस्य परप्रतिपादनायाऽऽरभ्यमाणस्य कारणत्वं वा भवेत् । कर्तृत्वं वा, कर्तृकरणयोश्च साधनत्वान्न यथोक्तप्रयोजनव्यतिरिक्तं प्रयोजनमस्ति, क्रियापेक्षत्वात्साधनस्य । त्रिविधस्यापि च क्रियादेस्तदविनाभावित्वात्तत्प्रयोजनत्वं युक्तमेव । साक्षात्पारम्पर्यकृतस्तु विशेषः । फलाख्यं तु प्रयोजनं प्रधानम्, तदर्थत्वात्क्रियारम्भस्य । तत्र सर्ववाक्यानां स्वाभिधेयप्रतिपादनलक्षणा क्रिया साधारणा । सा चातिप्रतीततया न प्रयोजनत्वेनोपदर्शनीया तस्यां शास्त्रस्य व्यभिचाराभावात्। अनभिधेयत्वाशङ्काव्युदासार्थमुपदर्शनीयेति चेत् । न । अभिधेयकथनादेव तदाशङ्काया व्युदस्तत्वात् । नाप्यभिधेयविशेषप्रतिपिपादयिषया तदुपदर्शनम्, अभिधेयविशेषकथनादेव तस्य प्रतिपादितत्वात् । तस्मादसाधारणा या क्रिया सोपदर्शनीया सा त्वस्य शास्त्रस्य विद्यत एव तत्त्वसङ्ग्रहलक्षणा । यतोऽनेन शास्त्रेण तेषां तत्त्वानामितस्ततो विप्रकीर्णानामेकत्र बुद्धौ विनिवेशलक्षणः सङ्ग्रहः क्रियते । अतस्तामेव सङ्ग्रहशब्देन दर्शितवान् । अस्याश्च तत्त्वसङ्ग्रहक्रियायाः प्रतिपाद्य(पत्तृ?)सन्तानगतस्तत्त्वसुखावबोधः फलम् । तदपि सङ्ग्रहशब्देन प्रकाशितमेव । एकत्र हि सङ्क्षिप्तस्य तत्त्वस्य प्रतिपत्तुः सुखेनोद्ग्रहो जायते, दुःखेन तु विप्रकीर्णस्येति कृत्वा सुखोद्ग्रहकारणं सङ्ग्रहं सङ्ग्रहशब्देन प्रतिपादयंस्तत्त्वसुखावबोधार्थमिदमारभ्यत इति प्रकाशयति । न तु तत्त्वावबोधमात्रमस्य फलम्, एवं हि शास्त्रस्य प्रणयनवैयर्थ्यं

पूर्वाचार्यैरेव तत्त्वनिश्चयस्य कृतत्वात् । अतो विशेषतः परानुग्रहस्यापि भावात् । परार्थत्वाच्च शास्त्रस्य । तस्मात्पूर्वाचार्यैः प्रतिपादितान्यपि तत्त्वानि यो मन्दधीरतिविप्रकीर्णतया सुखमवधारयितुमशक्तस्तं प्रति सुखावधारणाय तत्त्वसङ्ग्रह आरभ्यमाणो न विफलतामेष्यतीति मन्यमानः शास्त्रमिदमारभते । अत एव तत्त्वसङ्ग्रह इत्याह । अन्यथा क्रियते तत्त्वनिश्चय इत्येवमुक्तं स्यात् । एवं हि यथाविवक्षितार्थप्रतिपादनं स्फुटमेव कृतं भवेत्तस्मात्तत्त्वसुखावबोध एव तत्त्वसङ्ग्रहक्रियायाः फलम् । तस्यापि च सुखावबोधस्याचिरेणाभ्युदयनिःश्रेयसावाप्तिः प्रयोजनम् । तच्चातिप्रतीतमेवेति नोक्तम्, तत्त्वज्ञानादभ्युदयनिःश्रेयसावाप्तिर्भवतीति सर्वास्तिकानां प्रसिद्धत्वात् ॥

अथवा—जगद्धितविधित्सयेत्येतस्योत्तरत्रानुवृत्तेस्तदपि दर्शितमेव । तथाहि—तदनुवृत्तौ जगद्धितविधित्सया तत्त्वसङ्ग्रहः क्रियत इति वाक्यार्थो जायते । जगद्धितविधित्सा च तत्त्वसङ्ग्रहक्रियायाः कथं हेतुर्भवति । यदि जगद्धितविधानं तत्त्वसङ्ग्रहक्रियायाः फलं स्यात् । यथा पिपासया सलिलमानयतीत्यत्र सलिलपानं तदानयनक्रियायाः फलमिति गम्यते, तद्वदिहापि; ततश्च जगद्धितविधानार्थं तत्त्वसङ्ग्रहः क्रियत इत्यर्थः संतिष्ठते । एतच्चानुगुणोपायमेव प्रयोजनमुपदर्शितम् । तथाह्यभ्युदयनिःश्रेयसावाप्तिर्जगद्धितमुच्यते । तस्य चाविपर्यासो हेतुः, सर्वसंक्लेशस्य विपर्यासमूलत्वात्; संक्लेशविपरीतत्वाच्च जगद्धितस्य । अतस्तद्धेतुविपरीतोऽस्य हेतुरवतिष्ठते । अविपर्यासश्च यथावत्कर्मफलसंबन्धाभिसम्प्रत्ययः, अविपरीतपुद्गलधर्मनैरात्म्यावबोधश्च । स चास्मादविपरीतप्रतीत्यसमुत्पादसंप्रकाशकाच्छास्त्राच्छ्रवणचिन्ताभावनाक्रमेणोपजायत इत्यतोऽवगम्यत एव तत्त्वसङ्ग्रहक्रियातो जगद्धितमपि सम्पद्यत इति । अभ्युदयनिःश्रेयसावाप्तौ च सत्यामभिमतार्थपरिसमाप्त्या पुरुषस्याकाङ्क्षाविच्छेदादतो नापरमूर्ध्वं प्रयोजनं मृग्यमिति प्रयोजननिष्ठा ॥

संबन्धस्त्वभिधेयप्रयोजनाभ्यां न पृथगुपदर्शनीयो निष्फलत्वात् । तथाहि—सम्प्रदर्श्यमानः शास्त्रप्रयोजनयोः साध्यसाधनभावलक्षणो दर्शनीयो नान्यो गुरुपर्वक्रियादिलक्षणस्तस्यार्थिप्रवृत्तेरनन्तत्वात् । स च साध्यसाधनभावः प्रयोजनाभिधानादेव दर्शितः । तथाहीदमस्य प्रयोजनमिति दर्शयता दर्शितं भवतीदमस्य साधनमिति । न हि यो यन्न साधयति तत्तस्य प्रयोजनं भवत्यतिप्रसङ्गात् । तस्मात्सामर्थ्यलभ्यत्वान्नासौ प्रयोजनाभिधेयाभ्यां पृथगभिधानीयः । स हि नाम तस्मात्पृथगुपा-

दानमर्हति यो यस्मिन्ननभिहितेऽपि न गम्यते । यथाऽभिधेयप्रयोजनयोरन्यतराभिधानेऽपि नेतरावगतिर्भवति न च संभवोऽस्ति, यत्प्रयोजनाभिधानेऽपि यथोक्तः संबन्धो नाभिहितः स्यादिति द्वे एवाभिधेयप्रयोजने वाच्ये । एतच्चाभिधेयादि न वाक्यार्थतया विभक्तमस्माभिः । अपि तु वाक्यादवयवानपोद्धृत्य तदर्थतया । वाक्यार्थस्तु यथोक्तसङ्ग्रहकरणमेव । यदा गुणीभूतस्याप्यभिधेयादेर्वाक्यादस्मात्प्रतीयमानत्वाद्वाक्यार्थत्वमविरुद्धमेव । प्राधान्येन हि वाक्यस्यानेकार्थाभिधानं विरुद्धम् । न तु गुणप्रधानभावेन ॥

**अथापरिमितगुणगणाधारे भगवति किमिति प्रतीत्यसमुत्पाददेशनयैव स्तोत्राभिधानम्। तदेतदचोद्यम्।** सर्वत्रैव तुल्यपर्यनुयोगत्वात् । न च शक्यमपरिमितगुणोद्भावनया पूजाभिधानं कर्तुमिति गुणैकदेशोद्भावनयैव सा विधेया । तेन प्रतीत्यसमुत्पाददेशनोद्भावनया वा सा विहिताऽन्यथा वेति न कश्चिद्विशेषः ॥

तथाप्युच्यते विशेषः । तथाहि—यथाभूतगुणसंपद्योगादभ्युदयनिःश्रेयसप्रापणतो जगतः शास्ता भवति भगवान् स एवाभ्युदयनिःश्रेयसार्थिनां भगवच्छरणादिगमनहेतुरभिधानीयः । प्रतीत्यसमुत्पाददेशनया चाभ्युदयादिसम्प्रापको भगवान् । तथाहि—अविपरीतप्रतीत्यसमुत्पाददेशनातस्तदर्थावधारणात्सुगतिहेतुरविपरीतकर्मफलसंबन्धादिसंप्रत्यय उपजायते, पुद्गलधर्मनैरात्म्यावबोधश्च निःश्रेयसहेतुः श्रुतचिन्ताभावनाक्रमेणोत्पद्यते, तदुत्पत्तौ ह्यविद्या संसारहेतुर्निवर्त्तते, तन्निवृत्तौ च तन्मूलं सकलं क्लेशज्ञेयावरणं निवर्त्तत इति सकलावरणविगमादपवर्गसंप्राप्तिर्भवति । तेन प्रतीत्यसमुत्पादप्रधानमिदं भगवतः प्रवचनरत्नमित्यविपरीतप्रतीत्यसमुत्पादाभिधायित्वेन भगवतः स्तोत्राभिधानम् । स चायं प्रतीत्यसमुत्पादः परैर्विषमहेतुः प्रमाणव्याहतपदार्थाधिकरणश्चेष्यते । अतस्तन्निरासेन यथावदेव भगवतोक्त इति दर्शनार्थं वक्ष्यमाणसकलशास्त्रप्रतिपाद्यार्थतत्त्वोपक्षेपार्थं च बहूनां यथोक्तप्रतीत्यसमुत्पादविशेषणानामुपादानमिति समुदायार्थः । अवयवार्थस्तूच्यते । तत्र प्रकृतीशोभयात्मादिव्यापाररहितमित्यादौ सर्वत्र यः प्रतीत्यसमुत्पादं जगादेति संबन्धः । तत्र प्रकृतिः साङ्ख्यपरिकल्पितं सत्त्वरजस्तमोरूपं प्रधानम्, ईशः—ईश्वरः, उभयम्—एतदेव द्वयम्, आत्मा—सृष्टिसंहारकारक एकः पुरुषस्तदन्यश्च संसारी-आदिग्रहणेन कालादिपरिग्रहः—तेषां व्यापारः—कारणभावः, तेन रहितम्—तद्व्या-

पारशून्यमित्यर्थः। तत्रेदमुक्तं भगवता—"स चायमङ्कुरो न स्वयं कृतो नोभयकृतो नेश्वरनिर्मितो न प्रकृतिसंभूतो नैककारणाधीनो नाप्यहेतुः समुत्पन्न" इति। एतेन प्रधानेश्वरोभयाहेतुकशब्दब्रह्मात्मपरीक्षाणामुपक्षेपः। अथ स तमेवंभूतं प्रतीत्यसमुत्पादं किमक्षणिकं जगाद? नेत्याह—**चलमिति**। चलम्—अस्थिरम्, क्षणिकमिति यावत्। अन्यस्य चलत्वायोगादिति भावः। तत्रेदमुक्तं भगवता—"क्षणिकाः सर्वसंस्कारा अस्थिराणां कुतः क्रिया। भूतिर्येषां क्रिया सैव कारकं सैव चोच्यत"इति। अयं च स्थिरभावपरीक्षोपक्षेपः। यद्येवं कर्मफलसंबन्धादिव्यवस्थायाः प्रतीत्यसमुत्पाद आश्रयो न प्राप्नोति चलत्वादित्यत आह—**कर्मेत्यादि**। एतच्च पश्चात्प्रतिपादयिष्याम इति भावः। तत्र कर्म—शुभाशुभम्, तत्फलं चेष्टानिष्टम्, तयोः संबन्धो जन्यजनकभावलक्षणः, तस्य व्यवस्था संस्थितिः, व्यवहार इति यावत्। आदिशब्देन स्मृतिप्रत्यभिज्ञानसंशयनिश्चयस्वयंनिहितप्रत्यनुमार्गणदृष्टार्थकुतूहलविरमणकार्यकारणभावतदधिगन्तृप्रमाणबन्धमोक्षादिव्यवस्थापरिग्रहः तेषां समाश्रय इति विग्रहः। तत्रोक्तं भगवता—"इति हि भिक्षवोऽस्तिकर्मास्तिफलं कारकस्तु नोपलभ्यते य इमान् स्कन्धान्विजहात्यन्यांश्च स्कान्धानुपादत्तेऽन्यत्र धर्मसंकेतात्। तत्रायं धर्मसंकेतो यदुतास्मिन्सतीदं भवती"त्यादि। अयं च कर्मफलसंबन्धपरीक्षोपक्षेपः। स पुनरयं प्रतीत्यसमुत्पादः स्कन्धधात्वायतनानां द्रष्टव्यः, तेषामेव प्रतीत्यसमुत्पन्नत्वात्॥ १॥

ननु द्रव्यगुणकर्मादयो वस्तुभूताः सन्ति तेषां कस्मान्न भवतीत्यत्राह—**गुणेत्यादि**। गुणाश्च द्रव्याणि च क्रियाश्च जातिश्च समवायश्चेति द्वन्द्वः। जातिशब्देन परमपरं च द्विविधमपि सामान्यं गृह्यते। आदिशब्देन अन्त्यद्रव्यवर्त्तिनां विशेषाणाम्, ये च धर्मिव्यतिरेकिणो धर्माः कैश्चिदुपवर्ण्यन्ते यथा षण्णामपि पदार्थानामस्तित्वं सदुपलम्भकप्रमाणविषयत्वमित्येवमादयस्तेषां ग्रहणम्। गुणादयश्च ते उपाधयश्च विशेषणानीति विशेषणसमासः। तैः शून्यं रहितमित्यर्थः। तत्रेदमुक्तं भगवता—"सर्वं सर्वमिति ब्राह्मण? यावदेव पञ्च स्कन्धा द्वादशायतनान्यष्टादश धातव"इति। अयं च षट्पदार्थपरीक्षोपक्षेपः। ननु चोपाध्यभावे कथं प्रतीत्यसमुत्पादः शब्दविकल्पाभ्यां विषयीक्रियते, न च ताभ्यामविषयीकृतमभिधातुं पार्यते, न च शब्दविकल्पयोरुपाधिमन्तरेण प्रवृत्तिरस्ति, तत्कथं तं भगवान् जगादेत्याह—**आरोपिताकारेत्यादि**।

आरोपितो—बाह्यत्वेनाध्यारोपित आकारः—स्वभावो यस्य शब्दप्रत्यययोर्गोचरस्य स तथोक्तः, आरोपिताकारः—शब्दप्रत्यययोर्गोचरो—विषयो यत्र प्रतीत्यसमुत्पादे स तथोक्तः । प्रत्ययशब्दः शब्दशब्दसन्निधानादाविष्टाभिलापात्मके प्रत्ययविशेषे विकल्पे द्रष्टव्यः, तयोरेकविषयत्वाव्यभिचारित्वेन सहचरितत्वात् । तेनैतदुक्तं भवति । यद्यप्युपाधयो न सन्ति, तथापीतरेतरव्यावृत्तवस्तुदर्शनद्वारायातो बहीरूपत्वेनाध्यवसितो विकल्पः प्रतिबन्धात्मकः शब्दार्थस्तत्रास्ति । नहि परमार्थतः शब्दानामसौ गोचरः, तत्र सर्वविकल्पानामतीतत्वात् । किंतु यथैवाविचारितरमणीयतया लोके शब्दार्थः सिद्धस्तथैव भगवद्भिरपि समु(म ?)पेक्षिततत्त्वार्थैर्गजनिमीलिकया परमार्थावताराय तद्भावनासंवृत्त्या प्रकाश्यते, उपायान्तराभावात् । समारोपिताकारत्वेऽपि शब्दार्थस्य पारम्पर्येण वस्तुप्रतिबन्धात्तदधिगमे हेतुत्वमस्त्येवेति तथाविधं वस्तु तेषां सामर्थ्यात्प्रकाशितमेव भवतीति न विप्रलम्भसंभवः । तत्रेदमुक्तं तायिना—"येन येन हि नाम्ना वै यो यो धर्मोऽभिलप्यते । नासौ संविद्यते तत्र धर्माणां सा हि धर्मता ।"इति । अयं च शब्दार्थपरीक्षोपक्षेपः ॥ २ ॥

अथ किमयं तीर्थिकपरिकल्पितपदार्थवत्प्रतिपादकप्रमाणद्रविणदरिद्रतया वचनरचनामात्रसार आहोस्विदस्ति किंचिदस्य प्रतिपादयितृ प्रमाणम्? अस्तीत्याह—**स्पष्टे**त्यादि। स्पष्टं च तल्लक्षणं चेति विशेषणसमासः। स्पष्टत्वं च लक्षणस्यासंभवाव्याप्त्यतिव्याप्तिदोषरहितत्वात्। तीर्थिकप्रमाणलक्षणं त्वस्पष्टमिति दर्शनार्थं स्पष्टलक्षणमित्याह। तेन संयुक्तम्—समन्वितं यत्प्रमाद्वितयम्—प्रत्यक्षानुमानाख्यं तेन निश्चितम्। एतच्च सर्वपरीक्षासु प्रतिपादयिष्यति । एतदपि भगवतोऽनुमतम्; यथोक्तम्—"तापाच्छेदाच्च निकषात्सुवर्णमिव पण्डितैः। परीक्ष्य भिक्षवो ग्राह्यं मद्वचो नतु गौरवात् ॥" इति। तत्र प्रत्यक्षस्य लक्षणं भ्रान्तिकल्पनाभ्यां रहितत्वम्। तच्च भगवतोक्तमेव। यदाह—"चक्षुर्विज्ञानसङ्गी नीलं विजानाति, नो तु नील"मिति । तथाहि नीलं विजानातीत्यनेनाविपरीतविषयत्वख्यापनादभ्रान्तत्वमुक्तम्, नो तु नीलमित्यनेन नामानुविद्धार्थग्रहणप्रतिक्षेपात् कल्पनारहितत्वम्। अनुमानस्यापि लक्षणमुक्तमेवानुमानाश्रयं लिङ्गं दर्शयता। तथाहि—"साध्यार्थाविनाभूतं लिङ्गं विनिश्चितं सदनुमानज्ञानस्य कारणम्, तच्च यत्किंचिद्भिक्षवः समुदयधर्मकं सर्वत्र निरोधधर्मक"मिति। एवं साध्येन हेतोर्व्याप्तिमुपदर्शयता स्फुटतरमेव प्रकाशितम् । यथोक्तम्—"अनुमानाश्रयो

लिङ्गमविनाभावलक्षणम्" । व्याप्तिदर्शनाद्धेतोः । साध्ये(ध्यो?)नोक्तः स च स्फुट इति । तच्च लिङ्गं स्वभावकार्यानुपलम्भविशेषभेदेन त्रिधा भिद्यते । तत्र यत्किंचिद्भिक्षवस्समुदयधर्मकमित्यनेन स्वभावाख्यं लिङ्गमुपदर्शितमेव । कार्याख्यमपि—"धूमेन ज्ञायते वह्निः सलिलं च बलाकया । निमित्तैर्ज्ञायते गोत्रं बोधिसत्वस्य धीमतः ॥" इति ब्रुवता दर्शितम् । अनुपलम्भविशेषाख्यमपि दर्शितमेवानुपलम्भमात्रस्य प्रामाण्यं प्रतिक्षिपता । यथोक्तम्—"मा भिक्षवः पुद्गलः पुद्गलं प्रमिणोतु पुद्गले वा प्रमाणमुद्गृह्णातु, क्षण्यते हि भिक्षवः पुद्गलः पुद्गलं प्रमिण्वन्, अहं वा पुद्गलं प्रमिणुयां यो वा स्यान्मादृश"इति । एतेन हि स्वभावविप्रकृष्टेष्वनुपलम्भमात्रस्य प्रामाण्यं प्रतिक्षिप्तम्, अहं वेत्यादि ब्रुवताऽनुपलम्भविशेषस्यैव प्रामाण्यमित्येतदपि स्फुटतरमेव दर्शितम् । अयं च प्रत्यक्षानुमानप्रमाणान्तरपरीक्षाणामुपक्षेपः । अथ किमयं प्रतीत्यसमुत्पादः केनचिद्वस्तुत्वादिना रूपेण सान्वयः? यथाहुः स्याद्वादिनः, आहोस्विदसंकीर्णस्वभावः, किं चातः सान्वयत्वे प्रत्यक्षादीनां लक्षणसांकर्यम्, कार्यकारणयोश्च स्वभावाभेदादजन्यजनकत्वम्, ततश्च न स्पष्टलक्षणयोगिप्रमाद्वितयनिश्चितत्वम् । नापि प्रतीत्यसमुत्पादार्थो युक्तः । असङ्कीर्णस्वभावत्वेऽपि सहकारिणां भेदाविशेषादजनकाभिमतपदार्थवदेकार्थक्रियाकारित्वं न भवेत्; अत्राह—**अणीयसापी**त्यादि । एवं मन्यते, उत्तर एवात्र पक्षो न चात्र यथोक्तदोषावसर इति, पश्चात्प्रतिपादयिष्यामः । मिश्रीभूतः—सङ्कीर्णः अपरात्मा यत्रेति विग्रहः । अपरस्य कारणादेः स्वभावस्य यत्र लेशतोऽपि कार्याद्यात्मन्यनुगमो नास्तीत्यर्थः । अणीयसापीति—सूक्ष्मतरेणापि । न केवलं बहुभिः सत्वज्ञेयत्वादिभिरित्यपिशब्देन दर्शयति । एकस्यापि हि रूपस्यानुगमे सर्वात्मनानुगतिः स्यादिति भावः । एतच्च पश्चात्प्रतिपादयिष्यति । स चायमुक्तो भगवता—"कथं नु शाश्वतोऽङ्कुरः, यस्मादन्याङ्कुरोऽन्यद्बीजम् । न तु य एवाङ्कुरस्तदेव बीजम् । तथा विसदृशो बीजादङ्कुर इति, अतो न संक्रमत" इति । अयं च स्याद्वादपरीक्षोपक्षेपः ॥ ३ ॥

अथ किमसङ्कीर्णस्वभावा अपि स्कन्धादयोऽध्वस्वजहत्स्वभावा एव वर्त्तन्ते? यथाहुरेके संक्रान्तिवादिनः सर्वास्तिवादाः । नैवमित्याह—**असंक्रान्ति**मिति—यदि तु संक्रान्तिः स्यात्तदा सर्वात्मना सत्वान्न किंचिज्जन्यमस्तीति प्रतीत्यसमुत्पादस्यैवायोग इति भावः । न विद्यते संक्रान्तिः—अध्वसु सञ्चारः स्कन्धादीनां

यत्रेति विग्रहः । एतच्चाभिहितं भगवता । यथोक्तम्—"चक्षुरुत्पद्यमानं न कुतश्चिदागच्छति निरुध्यमानं न क्वचित्सन्निचयं गच्छति । इति हि भिक्षवश्चक्षुरभूत्वा भवति भूत्वा च प्रतिविगच्छती"ति । अयं च त्रैकाल्यपरीक्षोपक्षेपः । अथ किमयं दृष्टमात्रकालभावी? यथाहुश्चार्वाकाः—"भस्मीभूतस्य शान्तस्य पुनरागमनं कुतः" इति । नेत्याह—**अनाद्यन्त**मिति । अविद्यमानावाद्यन्तावस्मिन्निति विग्रहः । एतदपि निर्दिष्टं भगवता—"अनवराग्रो हि भिक्षवो जातिसंसार" इत्यादिना । अवरमित्यन्तोऽभिधीयते, अग्रमिति चादिः, तयोः प्रतिषेधादनवराग्र इत्युच्यते । एतच्चानुत्पन्ना(र्य)मार्गानधिकृत्योक्तं, उत्पन्नार्यमार्गाणां तु शान्त एव संसारः । अतएवोक्तम्—"दीर्घो बालस्य संसारः सद्धर्ममविजानतः" इति । अयं च लोकायतपरीक्षोपक्षेपः । अथ किमयं प्रतीत्यसमुत्पादो बहिरर्थात्मक आहोस्विच्चित्तमात्रशरीर इति, आह—**प्रतिबिम्बादिसन्निभ**मिति । एतेन चित्तमात्रात्मक एवेति दर्शयति । तथाहीदमुक्तं भवति । यथाहि प्रतिबिम्बालातचक्रगन्धर्वनगरादयश्चित्तमात्रशरीरास्तथाऽयमपीति । एतच्चोक्तं भगवता—"बाह्यो न विद्यते ह्यर्थो यथा बालैर्विकल्प्यते । वासनालुठितं चित्तमर्थाभासं प्रवर्त्तते ॥" इति । अयं च बहिरर्थपरीक्षोपक्षेपः । तदेवं यथोक्तासदर्थकल्पनाजालरहितत्वं प्रतीत्यसमुत्पादस्य प्रतिपाद्योपसंहरन्नाह—**सर्वप्रपञ्चे**त्यादि । सर्वेषां यथोक्तानां प्रकृतिहेतुत्वादीनां प्रपञ्चानां सन्दोहः—समूहः, तेन निर्मुक्तः । अथ किमयमन्यैरपि हरिहरहिरण्यगर्भादिभिरेवमभिसम्बुद्धः? नेत्याह—**अगतं परै**रिति । सर्वतीर्थानां वितथात्मदृष्ट्यभिनिविष्टत्वाद्भगवत एवायमावेणिकोऽभिसम्बोध इति दर्शयति । एतच्च सर्वपरीक्षासु प्रतिपादयिष्यति ॥ ४ ॥

अथायमेवंभूतः प्रतीत्यसमुत्पादः किं स्वयमभिसम्बुध्य गदितो भगवता, आहोस्वित्पराभिमतापौरुषेयवेदाश्रयेण, यथाहुर्जैमिनीयाः—"तस्मादतीन्द्रियार्थानां साक्षाद्द्रष्टा न विद्यते । वचनेन तु नित्येन यः पश्यति स पश्यति ॥" इति । नैवमित्याह—**स्वतन्त्रश्रुतिनिःसङ्ग** इति—स्वतन्त्रा श्रुतिः—स्वतःप्रमाणभूतो वेदः, नित्यं वचनमिति यावत् । तस्या निःसङ्गः—निरास्थः, तन्निरपेक्ष एव साक्षाद्दर्शी प्रतीत्यसमुत्पादं गदितवानित्यर्थः । न चाप्यपौरुषेयं वाक्यमस्ति । यथोक्तं भगवता—"इत्येते आनन्दपौराणा महर्षयो वेदानां कर्त्तारो मन्त्राणां प्रवर्त्तयितार" इति । एतच्च पश्चात्प्रतिपादयिष्याम इति भावः । अयं च श्रुतिपरीक्षायाः स्वतन्त्रप्रामाण्य-

परीक्षायाश्चोपक्षेपः । अथ समधिगताशेषस्वार्थसम्पत्तेर्भगवतः किमर्थमियं प्रतीत्यसमुत्पाददेशनेत्याह—**जगद्धितविधित्सयेति** । जगते हितं जगद्धितं । तत्पुनरविपरीतप्रतीत्यसमुत्पादावबोधोपायमशेषक्लेशज्ञेयावरणप्रहाणम्, तद्विधातुमिच्छा जगद्धितविधित्सा, सा तद्देशनायाः कारणम्। साऽपि जगद्धितविधित्सा कुतोऽस्य जायेतेत्याह—**अनल्पेत्यादि** । अनल्पैः कल्पासङ्ख्येयैः सात्मीभूता महादया यस्येति विग्रहः । सा च महादया भगवतः समधिगताशेषस्वार्थसम्पत्तेरपि परार्थकरणव्यापारापरित्यागादवगम्यते ॥ ५ ॥

अथासौ सात्मीभूतमहादयः किं कृतवानित्याह—**य** इत्यादि । य इति सामान्यवचनोऽपि बुद्धे भगवति प्रवर्त्तते, अन्यस्य यथोक्तगुणासंभवात् । **प्रतीत्यसमुत्पाद**मिति । हेतून्प्रत्ययान्प्रतीत्य—समाश्रित्य यः स्कन्धादीनामुत्पादः स प्रतीत्यसमुत्पादः । एतदुक्तं भवति । हेतुप्रत्ययबलेनोत्पन्नान्स्कन्धादीन्यो जगादेति । यद्यपि समुत्पाद इति व्यतिरेकीव निर्देशस्तथापि प्रतीत्यसमुत्पन्नमेव वस्तु भेदान्तरप्रतिक्षेपमात्रजिज्ञासायां तथा निर्दिश्यते । यद्वा—समुत्पद्यत इति समुत्पादः कृत्यल्युटो वहुलमिति वचनात्कर्त्तरि घञ्। ततः प्रतीत्यशब्देन सुप्सुपेति मयूरव्यंसकादित्वाद्वा समासः । असमस्तमेव वा । एतेन च सर्वेण भगवतः सम्यक्परहितानुष्ठानसम्पत्सोपाया परिदीपिता भवति । तथाहि—यः प्रतीत्यसमुत्पादमेवंभूतं जगादेत्यनेन यथावत्परहितानुष्ठानं भगवतो दर्शितम्। इदमेव हितानुष्ठानं भगवतो यत्परेषामविपरीतस्वर्गापवर्गमार्गोपदेशः । यथोक्तम्—"युष्माभिरेव कर्त्तव्यमाख्यातारस्तथागताः" इति। अस्याश्चाविपरीतपरहितानुष्ठानसम्पद उपायो धर्मेषु साक्षाद्दर्शित्वं महाकरुणा च, यतः कृपालुरपि यथाभूतापरिज्ञानान्न सम्यक्परहितमुपदेष्टुं समर्थः, परिज्ञानवानपि कृपाहीनो नैवोपदिशेत्, उपदिशन्नप्यहितमप्युपदिशेत् । तस्मात्प्रज्ञाकृपे द्वे अपि सम्यक् परहितानुष्ठानोपायो भगवतः। तच्च साक्षाद्दर्शित्वं स्वतन्त्रश्रुतिनिःसङ्गत्वेन दर्शितम्; सात्मीभूतमहादयत्वेन च महाकरुणायोगः । ननु चाविपरीतः प्रतीत्यसमुत्पादो बोधिसत्वश्रावकादिभिरपि निर्दिष्टः, तत् कोऽत्रातिशयो भगवत इत्याह—**गदतांवर** इति । यद्यपि ते श्रावकादयः प्रतीत्यसमुत्पादं गदन्ति, तथापि भगवानेव तेषां गदतांवरः। भगवदुपदिष्टस्यैव धर्मतत्वस्य प्रकाशनान्नहि तेषां स्वतो यथोक्तप्रतीत्यसमुत्पाददेशनायां शक्तिरस्ति । सर्वगुणदोषप्रकर्षापकर्षनिष्ठाधिष्ठान-

त्वाद्वा भगवानेव श्रेष्ठो नेतरे । तेषां तद्विपरीतत्वात् । एतेन च भगवतः श्रावकादिभ्यो विशिष्टत्वप्रतिपादनेन सवासनाशेषक्लेशज्ञेयावरणप्रहाणलक्षणा स्वधि(धी ?)सम्पत्परिदीपिता भवति । अन्यथा कथमिव तेभ्यो विशिष्टो भवेत्, यदि यथोक्तगुणयोगिता न स्याद्भगवतः । अतएवाह—**तं सर्वज्ञमिति** । अयं च सर्वज्ञसिद्ध्युपक्षेपः । अथ तं प्रणम्य किं क्रियत इत्याह—**क्रियते तत्त्वसङ्ग्रह** इति । यथोक्तान्येव प्रतीत्यसमुत्पादविशेषणानि तत्त्वानि, अविपरीतत्वात्, तेषामितस्ततो विप्रकीर्णानामेकत्र हि सङ्क्षेपः सङ्ग्रहः, तत्प्रतिपादकत्वाद्ग्रन्थस्यापि तथा व्यपदेशः । सीताहरणं काव्यमिति यथा । अथवा सम्यक् समन्ताद्वा गृह्यन्ते अनेन तत्वानीति सङ्ग्रहो ग्रन्थ एवोच्यते क्रियत इति प्रारब्धापरिसमाप्तकालापेक्षया वर्तमानकालनिर्देशः ॥ ६ ॥

तत्र प्रकृतिव्यापाररहितत्वप्रतिपादनाय साङ्ख्यमतमुपदर्शयन्नाह—**अशेषशक्तिप्रचिता**दित्यादि ।

**अशेषशक्तिप्रचितात्प्रधानादेव केवलात् ।**
**कार्यभेदाः प्रवर्त्तन्ते तद्रूपा एव भावतः ॥ ७ ॥**

यदशेषाभिर्महदादिकार्यग्रामजनिकाभिरात्मभूताभिः शक्तिभिः, प्रचितम्—युक्तं सत्वरजस्तमसां साम्यावस्थालक्षणं प्रधानम्, तत एवैते महदादयः कार्यभेदाः प्रवर्त्तन्ते इति कापिलाः । प्रधानादेवेत्यवधारणं कालपुरुषादिव्यवच्छेदार्थम् । केवलादिति वचनं सेश्वरसाङ्ख्योपकल्पितेश्वरनिरासार्थम् । **प्रवर्त्तन्त** इति—साक्षात्पारम्पर्येण वोत्पद्यन्त इत्यर्थः । तथाहि तेषां प्रक्रिया । प्रधानाद्बुद्धिः प्रथममुत्पद्यते, बुद्धेश्चाहङ्कारः, अहङ्कारात्पञ्चतन्मात्राणि शब्दस्पर्शरसरूपगन्धात्मकानि, इन्द्रियाणि चैकादशोत्पद्यन्ते । पञ्च बुद्धीन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणलक्षणानि, पञ्च कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्था मनश्चैकादशमिति । पञ्चभ्यश्च तन्मात्रेभ्यः पञ्च भूतानि । शब्दादाकाशम्, स्पर्शाद्वायुः, रूपात्तेजः, रसादापः, गन्धात्पृथिवीति । यथोक्तमीश्वरकृष्णेन—"प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोडशकः । तस्मादपि षोडशकात्पञ्चभ्यः पञ्च भूतानि ॥" इति । तत्र महानिति बुद्धेराख्या । बुद्धिश्चायं घटः पट इति विषयाध्यवसायलक्षणा । अहङ्कारस्तु—अहं सुभगोऽहं दर्शनीय इत्याद्यभिधानलक्षणः । मनस्तु सङ्कल्पलक्षणम् । तद्यथा—कश्चिदेवं बटुः शृणोति ग्रामान्तरे भोजनमस्तीति, तत्र तस्य सङ्कल्पः स्यात्, यास्यामीति, किं तत्र गुडद-

धि स्यादुतस्विद्धीति । एवं सङ्कल्पवृत्ति मन इति । तदेवं बुद्ध्यहङ्कारमनसां परस्परं विशेषो बोद्धव्यः । शेषं सुबोधम् । एते च महदादयः प्रधानपुरुषौ चेति पञ्चविंशतिरेषां तत्त्वानि । यथोक्तम्—"पञ्चविंशतितत्त्वज्ञो यत्र यत्राश्रमे रतः । जटी मुण्डी शिखी वाऽपि मुच्यते नाऽत्र संशयः ॥" इति । एते यथोक्ताः कार्यभेदाः प्रधानात्प्रवर्त्तमाना न बौद्धाद्यभिमता इव कार्यभेदाः कारणादत्यन्तभेदिनो भवन्ति, किंतु तद्रूपा एव—तत्—प्रधानम् रूपम्—आत्मा येषामिति विग्रहः । त्रैगुण्यादिरूपेण प्रकृत्यात्मभूता एवेति । तथाहि—लोके यदात्मकं कारणं भवति तदात्मकमेव कार्यमुपलभ्यते । यथा कृष्णैस्तन्तुभिरारब्धः पटः कृष्णो भवति शुक्लैस्तु शुक्लः । एवं प्रधानमपि त्रिगुणात्मकम्, तथा बुद्ध्यहङ्कारतन्मात्रेन्द्रियभूतात्मकं व्यक्तमपि त्रिगुणमुपलभ्यते तस्मात्तद्रूपम् । किंच—अविवेकि । तथाहीमे सत्त्वादयः इदं च महदादि व्यक्तमिति पृथङ्न शक्यते कर्तुम् । किंतु ये गुणास्तद्व्यक्तं यद्व्यक्तं ते गुणा इति । किंच—द्वयमपि व्यक्तमव्यक्तं च विषयः । भोग्यस्वभावत्वात् । सामान्यं च सर्वपुरुषाणाम् । भोग्यत्वात् । मल्लदासीवत् । अचेतनात्मकं च । सुखदुःखमोहावेदकत्वात् । प्रसवधर्मि च । तथाहि—प्रधानं बुद्धिं जनयति, बुद्धिरप्यहङ्कारम्, अहङ्कारोऽपि तन्मात्राणीन्द्रियाणि चैकादश, तन्मात्राणि महाभूतानि जनयन्तीति । तस्मात्त्रैगुण्यादिरूपेण तद्रूपा एवामी कार्यभेदाः प्रवर्त्तन्ते । यथोक्तम्—"त्रिगुणमविवेकिविषयः सामान्यमचेतनं प्रसवधर्मि । व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान् ॥" इति । ननु यदि तद्रूपा एव कार्यभेदास्तत्कथं शास्त्रे व्यक्ताव्यक्तयोर्वैलक्षण्यमुपवर्णितम् । तथाहीश्वरकृष्णोक्तम्—"हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् । सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम् ॥" इति । तत्र ह्ययमर्थः हेतुमत्—कारणवत्, व्यक्तमेव । तथाहि—प्रधानेन हेतुमती बुद्धिः, अहङ्कारो बुद्ध्या हेतुमान्, पञ्चतन्मात्राण्येकादशेन्द्रियाण्यहङ्कारेण हेतुमन्ति, भूतानि तन्मात्रैः । नत्वेवमव्यक्तम् । तस्य कुतश्चिदप्यनुत्पत्तेः । तथा व्यक्तमनित्यम्, उत्पत्तिधर्मकत्वात् । नत्वेवमव्यक्तम्, तस्यानुत्पत्तिमत्त्वात् । यथा च प्रधानपुरुषौ दिवि भुवि चान्तरिक्षे च सर्वत्र व्यापितया वर्त्तेते न तथा व्यक्तं वर्त्तते, किंतु तदव्यापि । यथा च संसारकाले त्रयोदशविधेन बुद्ध्यहङ्कारेन्द्रियलक्षणेन शरीरेण करणेन संयुक्तं सूक्ष्मशरीराश्रितं व्यक्तं संसरति नत्वेवमव्यक्तम्, तस्य विभुत्वेन सक्रियत्वायोगात् । बुद्ध्यहङ्कारादिभेदेन चानेकविधं व्यक्तमुपलभ्यते, नाव्यक्तम्, तस्यैकस्यैव सतो लोकत्रय-

कारणत्वात् । आश्रितं च व्यक्तम्, यद्यस्मादुत्पद्यते तस्य तदाश्रितत्वात् । नत्वेवमव्यक्तम्, तस्याकार्यत्वात्, लिङ्गं च व्यक्तम्, लयं गच्छतीति कृत्वा । तथाहि—प्रलयकाले भूतानि तन्मात्रेषु लीयन्ते, तन्मात्राणीन्द्रियाणि चाहङ्कारे, अहङ्कारो बुद्धौ, बुद्धिश्च प्रधाने, न त्वेवमव्यक्तं क्वचिदपि लयं गच्छति; तस्याविद्यमानकारणत्वात् । सावयवं च व्यक्तम्, शब्दस्पर्शरसरूपगन्धात्मकैरवयवैर्युक्तत्वात् । नत्वेवमव्यक्तम्, प्रधानात्मनि शब्दादीनामनुपलब्धेः । किंच—यथा पितरि जीवति पुत्रो न स्वतन्त्रो भवति तथा व्यक्तं सर्वदा कारणायत्तत्वात्परतन्त्रम्, नत्वेवमव्यक्तम्, तस्य नित्यमकारणाधीनत्वात् । तदेतत्सर्वमाशङ्क्याह—**भावत** इति । भावतः—परमार्थतः, ताद्रूप्यम् । प्रकृतिविकारभेदेन तु परिणामविशेषाद्भेदो यथोक्तो न विरुध्यत इत्यर्थः । अथवा—**भावत** इति । स्वभावतस्त्रैगुण्यरूपेण तद्रूपा एव प्रवर्त्तन्ते । सत्वरजस्तमसां तूत्कटानुत्कटत्वविशेषात्सर्गवैचित्र्यं महदादिभेदेनाविरुद्धमेवेत्यर्थः । तदनेन कारणात्मनि कार्यमस्तीति प्रतिज्ञातं भवति ॥ ७ ॥

तत्र कथमवगम्यते प्रागुत्पत्तेः सत्कार्यमित्याह—**यदीत्यादि**—

**यदि त्वसद्भवेत्कार्यं कारणात्मनि शक्तितः ।**
**कर्तुं तन्नैव शक्येत नैरूप्याद्वियदब्जवत् ॥ ८ ॥**

सत्कार्यत्वप्रसिद्धये परैः पञ्च हेतव उक्ताः—"असदकरणादुपादानग्रहणात्सर्वसंभवाभावात् । शक्तस्य शक्यकरणात्करणभावाच्च सत्कार्यम्" इति तत्र प्रथमहेतुसमर्थनार्थमिदमुच्यते । यदि त्वसद्भवेत्कार्यमित्यादि । यदि हि कारणात्मनि प्रागुत्पत्तेः कार्यं नाभविष्यत्तदा तन्न केनचिदकरिष्यत यथा गगननलिनम् । प्रयोगः—यदसत्तन्न केनचित्क्रियते । यथा गगनाम्भोरुहम् । असच्च प्रागुत्पत्तेः परमते न कार्यमिति व्यापकविरुद्धोपलब्धिप्रसङ्गः । न चैवं भवति । तस्माद्यत्क्रियते तिलादिभिस्तैलादिकार्यं तत्तस्मात्प्रागपि सदिति सिद्धम् । **शक्तित** इति । शक्तिरूपेण; व्यक्तिरूपेण तु कापिलैरपि प्राक् सत्वस्यानिष्टत्वात् । **नैरूप्यादिति** । निःस्वभावत्वात् ॥ ८ ॥

द्वितीयहेतुसमर्थनार्थमाह—**कस्माच्चेत्यादि**—

**कस्माच्च नियतान्येव शालिबीजादिभेदतः ।**
**उपादानानि गृह्णन्ति तुल्यसत्वेऽपरं न तु ॥ ९ ॥**

यदि त्वसद्भवेत्कार्यं तदा पुरुषाणां प्रतिनियतोपादानग्रहणं न स्यात् । तथाहि—शालिफलार्थिनः शालिबीजमेवोपाददते न कोद्रवबीजम् । तथा श्वो मे ब्राह्मणा भोक्तार इति दध्यर्थिनः क्षीरमुपाददते न सलिलम् । तत्र यथा शालिबीजादिषु शाल्यादीनामसत्त्वं तथा कोद्रवबीजादिष्वपीति, तत्किमिति तुल्येऽपि सर्वत्र शालिफलादीनामसत्त्वे प्रतिनियतान्येव शालिबीजादीन्युपादीयन्ते । यावता कोद्रवादयोऽपि शालिफलार्थिभिरुपादीयेरन्, असत्त्वाविशेषात् । अथ तत्फलशून्यत्वात्तैस्तैर्नोपादीयन्ते । यद्येवं शालिबीजमपि शालिफलार्थिना नोपादेयं स्यात्तत्फलशून्यत्वात् । कोद्रवबीजवत् न चैवं भवति । तस्मात्तत्र तत्कार्यमस्तीति गम्यते ॥ ९ ॥

तृतीयहेतुसमर्थनार्थमाह—**सर्वं** चेत्यादि—

**सर्वं च सर्वतो भावाद्भवेदुत्पत्तिधर्मकं ।**
**तादात्म्यविगमस्येह सर्वस्मिन्नविशेषतः ॥ १० ॥**

यदि चासदेव कार्यमुत्पद्यत इति भवतां मतम्, तस्मात्सर्वस्मात्पदार्थात्तृणपांसुलोष्टादिकात्सर्वं सुवर्णरजतादि कार्यमुत्पद्येत । कस्मात्? तादात्म्यविगमस्य सर्वस्मिन्नविशिष्टत्वात् । विवक्षिततृणादिभावात्मताविरहस्य सर्वस्मिन्नुत्पत्तिमति भावे निर्विशिष्टत्वादित्यर्थः । पूर्वं कारणमुखेन प्रसङ्ग उक्तः, सम्प्रति तु कार्यद्वारेणेति विशेषः । न च सर्वं सर्वतो भवति । तस्मादयं नियमस्तत्रैव तस्य संभवादिति गम्यते ॥ १० ॥

स्यादेतत्कारणानां प्रतिनियतेष्वेव कार्येषु शक्तयः प्रतिनियताः, तेन कार्यस्यासत्त्वेऽपि किंचिदेव कार्यं क्रियते न गगनाम्भोरुहम्, किंचिदेवोपादानमुपादीयते । यदेव समर्थम्, नतु यत्किंचित्, किंचिदेव तु कुतश्चिद्भवति नतु सर्वं सर्वत इत्येतच्चोद्यमुत्थाप्योत्तराभिधानव्याजेन चतुर्थहेतुसमर्थनार्थमाह—**शक्तीना**मित्यादि ।

**शक्तीनां नियमादेषां नैवमित्यप्यनुत्तरं ।**
**शक्यमेव यतः कार्यं शक्ताः कुर्वन्ति हेतवः ॥ ११ ॥**

**एषा**मिति । कारणाभिमतानां भावानाम् । **नैव**मिति । यथोक्तं दूषणं न भवतीत्यर्थः । तदेतदनुत्तरं बौद्धादेः । कस्मात्? यस्माच्छक्ता अपि हेतवः कार्यं कुर्वाणाः शक्यक्रियमेव कुर्वन्ति, नाशक्यम् ॥ ११ ॥

ननु केनैतदुक्तमशक्यं कुर्वन्तीति, येनैतत्प्रतिषिध्यते भवता; किंत्वसदपि कार्यं कुर्वन्तीत्येतावदुच्यते । तच्च तेषां शक्यक्रियमेवेत्यत आह—**अकार्यातिशय**मित्यादि ।

**अकार्यातिशयं यत्तु नीरूपमविकारि च ।**
**विकृतावात्महान्यासेस्तत्क्रियेत कथं नु तैः ॥ १२ ॥**

एवं मन्यते । असत्कार्यकारित्वाभ्युपगमादेवाशक्यक्रियं कुर्वन्तीत्युक्तं भवति । तथाहि—यदसत् तन्नीरूपं निःस्वभावम्, यच्च नीरूपं तच्छशविषाणादिवदकार्यातिशयम्—अनाधेयातिशयम्, यच्च नाधेयातिशयं तदाकाशवदविकारि । तत्तथाभूतमसमासादितविशेषरूपं कथं केनचिच्छक्यते कर्तुम् । अथापि स्यात्सदवस्थाप्रतिपत्तेर्विक्रियत एव तदित्यत आह—विकृतावात्महान्यासेरिति । यस्माद्विकृताविष्यमाणायां यस्तस्यात्मा स्वभावो नीरूपाख्यो वर्ण्यते, तस्य हानिः प्राप्नोति । नह्यसतः स्वभावापरित्यागे सति तद्रूपतापत्तिर्युक्ता । परित्यागे वा न तर्हि असदेव सद्रूपतां प्रतिपन्नमिति सिद्ध्येत् । अन्यदेव हि सद्रूपमन्यच्चासद्रूपम्; परस्परपरिहारेण तयोरवस्थितत्वात् । तस्माद्यदसत्तदशक्यक्रियमेव । तथाभूतपदार्थकारित्वाभ्युपगमे हि कारणानामशक्यकारित्वमेवाभ्युपगतं स्यात् । न चाशक्यं केनचित्क्रियते यथा गगनाम्भोरुहम् । अतः शक्तिप्रतिनियमादित्यनुत्तरमेतत् ॥ १२ ॥

पञ्चमहेतुसमर्थनार्थमाह—**कार्यस्यैव**मित्यादि ।

**कार्यस्यैवमयोगाच्च किंकुर्वत्कारणं भवेत् ।**
**ततः कारणभावोऽपि बीजादेर्न विकल्पते ॥ १३ ॥**

एवम्—अनन्तरोक्तया नीत्या । यद्वा—यथोक्ताद्धेतुचतुष्टयात् । असत्कार्यवादे सर्वथापि कार्यस्यायोगात्, किंकुर्वद्बीजादि कारणं भवेत् । ततश्चैवं शक्यते वक्तुम् । न कारणं बीजादिरविद्यमानकार्यत्वाद्गगनाब्जवदिति । न चैवं भवति । तस्माद्विपर्यय इति सिद्धं प्रागुत्पत्तेः सत्कार्यमिति ॥ १३ ॥

स्यादेतद्यद्यपि नाम सत्कार्यमित्येवं सिद्धम् । प्रधानादेवैते कार्यभेदाः प्रवर्त्तन्ते इत्येतत्तु कथं सिद्ध्यतीत्याह—**सुखाद्यन्वित**मित्यादि ।

**सुखाद्यन्वितमेतच्च व्यक्तं व्यक्तं समीक्ष्यते ।**
**प्रसादतापदैन्यादिकार्यस्येहोपलब्धितः ॥ १४ ॥**

तत्र प्रधानास्तित्वसाधने पञ्चामी वीतप्रयोगाः परैरुक्ताः । यथोक्तम्—"भेदानां परिमाणात्समन्वयात् शक्तितः प्रवृत्तेश्च । कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य । कारणमस्त्यव्यक्तम् ।" इति । अयमर्थः । अस्ति प्रधानम्, भेदानां परिमाणात् । इह

लोके यस्य कर्त्ता भवति तस्य परिमाणं दृष्टम्। यथा कुलालः परिमितान्मृत्पिण्डात्परिमितं घटं करोति प्रस्थग्राहिणमाढकग्राहिणम्। इदं च महदादि व्यक्तं परिमितं दृष्टम्, एका बुद्धिरेकोऽहङ्कार; पञ्च तन्मात्राण्येकादशेन्द्रियाणि पञ्चभूतानि (इति)। अतोऽनुमानेन साधयामोऽस्ति प्रधानं यत्परिमितं व्यक्तमुत्पादयतीति। यदि प्रधानं न स्यान्निष्परिमाणमिदं व्यक्तं स्यात्। इतश्चास्ति प्रधानम्, भेदानामन्वयदर्शनात्। यज्जातिसमन्वितं हि यदुपलभ्यते, तत्तन्मयकारणसम्भूतम्। यथा घटशरावादयो भेदा मृज्जात्यन्वितास्ते मृदात्मककारणसम्भूताः। सुखदुःखमोहादिजातिसमन्वितं चेदं व्यक्तमुपलभ्यते। कुतः? प्रसादतापदैन्यादिकार्योपलब्धेः। तथाहि—प्रसादलाघवाभिष्वङ्गोद्धर्षप्रीतयः सत्वस्य कार्यम्। सुखमिति च सत्वमेवोच्यते। तापशोषभेदस्तम्भोद्वेगापद्वेगा रजसः कार्यम्। रजश्च दुःखम्। दैन्यावरणसादनाध्वंसबीभत्सगौरवाणि तमसः कार्यम्। तमश्च मोहशब्देनोच्यते। एषां च महदादीनां प्रसादतापदैन्यादिकार्यमुपलभ्यते। तस्मात्सुखदुःखमोहानां त्रयाणामेते सन्निवेशविशेषा इत्यव(नु?)मीयते। तेन सिद्धमेषां प्रसादादिकार्यतः सुखाद्यन्वितत्वम्, तदन्वयाच्च तन्मयप्रकृतिसम्भूतत्वं सिद्धम्, तत्सिद्धौ च सामर्थ्याद्याऽसौ प्रकृतिस्तत्प्रधानमिति सिद्धमस्ति प्रधानं भेदानामन्वयदर्शनादिति। इतश्चास्ति प्रधानम्, शक्तितः प्रवृत्तेः। इह लोके यो यस्मिन्नर्थे प्रवर्त्तते स तत्र शक्तो यथा तन्तुवायः पटकरणे। अतः साधयामः। प्रधानस्यास्ति शक्तिर्यया व्यक्तमुत्पादयतीति। सा च शक्तिर्निराश्रया न संभवति। तस्मादस्ति प्रधानं यत्र शक्तिर्वर्त्तत इति। इतश्चास्ति प्रधानम्, कारणकार्यविभागात्। इह लोके कार्यकारणयोर्विभागो दृष्टः, तथाहि—मृत्पिण्डः कारणं घटः कार्यं सच मृत्पिण्डाद्विभक्तस्वभावः, तथाहि—घटो मधूदकपयसां धारणसमर्थो, न मृत्पिण्डः। एवमिदं महदादिकार्यं दृष्ट्वा साधयामोऽस्ति प्रधानं यस्मान्महदादिकार्यमुत्पन्नमिति। इतश्चास्ति प्रधानम्, वैश्वरूप्यस्याविभागात्। वैश्वरूप्यमिति त्रयो लोका उच्यन्ते। एते हि प्रलयकाले क्वचिदविभागं गच्छन्ति। तथाहि—पञ्चभूतानि पञ्चसु तन्मात्रेष्वविभागं गच्छन्ति, तन्मात्राणि पञ्चेन्द्रियाणि चाहङ्कारे, अहङ्कारो बुद्धौ, बुद्धिः प्रधाने, तदेवं प्रलयकाले त्रयो लोका अविभागं गच्छन्ति। अविभागो नाम अविवेकः, यथा क्षीरावस्थायामन्यत्क्षीरमन्यद्दधीति विवेको न शक्यते कर्तुं तद्वत्प्रलयकाले इदं व्यक्तमिदमव्यक्तमिति विवेको न

शक्यते कर्तुम् । अतो मन्यामहेऽस्ति प्रधानं यत्र महदादिलिङ्गमविभागं गच्छतीति । तदत्राचार्येण समन्वयादित्ययमेव हेतुरुक्तः परिशिष्टानामुपलक्षणार्थः । तत्र सुखादीत्यादिशब्देन दुःखमोहयोर्ग्रहणम् । व्यक्तमिति महदादिभूतपर्यन्तम् । **व्यक्तं समीक्ष्यत** इति । स्पष्टमुपलभ्यत इत्यर्थः । कथमित्याह—**प्रसादे**त्यादि । आदिशब्दः प्रत्येकमभिसम्बध्यते । एतच्चास्माभिः पूर्वमेव व्याख्यातम् ॥ १४ ॥

एवं समन्वयादित्यस्य हेतोः सिद्धिमुपदर्श्य प्रमाणं रचयन्नाह—**तत** इत्यादि ।

**ततस्तन्मयसम्भूतं तज्जात्यन्वयदर्शनात् ।**
**कुटादिभेदवत्तच्च प्रधानमिति कापिलाः ॥ १५ ॥**

**तन्मयसम्भूत**मिति । सुखादिमयं यत्कारणं तस्मात्सम्भूतमित्यर्थः । अयं च साध्यनिर्देशः । तज्जात्यन्वयदर्शनादिति हेतुः । तया त्रैगुण्यलक्षणया जात्या अनुगतत्वदर्शनादित्यर्थः । **कुटादिभेदव**दिति । घटादिभेदवत् । यच्च तन्मयं कारणं तत्प्रधानमिति कापिलाः—साङ्ख्या वर्णयन्ति ॥ १५ ॥

**तदत्रे**त्यादिना प्रतिविधानमारभते—

**तदत्र सुधियः प्राहुस्तुल्या सत्त्वेऽपि चोदना ।**
**यत्तस्यामुत्तरं वः स्यात्तत्तुल्यं सुधियामपि ॥ १६ ॥**

तत्र यत्तावदुक्तं प्रधानादेरमी कार्यभेदास्तद्रूपा एव प्रवर्त्तन्त इति तत्रेदं निरूप्यते । यद्यमी कार्यभेदाः प्रधानस्वभावा एव तत्कथमेषां ततः कार्यतया प्रवृत्तिर्भवति । नहि यद्यस्मादव्यतिरिक्तं तत्तस्य कारणं कार्यं वा युक्तम्, भिन्नलक्षणत्वात्कार्यकारणयोः । अन्यथा हीदं कार्यमिदं कारणं वेत्यसङ्कीर्णव्यवस्था कथं भवेत् । ततश्च यद्भवद्भिर्मूलप्रकृतेः कारणत्वमेव, भूतेन्द्रियलक्षणस्य षोडशकस्य गणस्य कार्यत्वमेव, बुद्ध्यहङ्कारतन्मात्राणां च पूर्वोत्तरापेक्षया कार्यत्वं कारणत्वं चेति व्यवस्थानं कृतं तन्न स्यात् । यथोक्तम्—"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥" इति । सर्वेषामेव हि परस्पराव्यतिरेकात्कार्यत्वं कारणत्वं वा प्रसज्येत । यद्वाऽऽपेक्षिकत्वात्कार्यकारणभावस्य रूपान्तरस्य चापेक्षणीयस्याभावात्सर्वेषां पुरुषवन्न प्रकृतित्वं नापि विकृतित्वं स्यात् । अन्यथा पुरुषस्यापि प्रकृतिविकारव्यपदेशः स्यात् । आह च—"यदेव दधि तत्क्षीरं यत्क्षीरं तद्दधीति च । वदता रुद्रिलेनैव ख्यापिता विन्ध्यवासिता" इति । **यच्चेदं** हेतुमत्त्वादि-

धर्मयोगि व्यक्तं विपरीतमव्यक्तमिति वर्णितं तदपि बालप्रलपितमेव । नहि यद्यस्मादभिन्नस्वभावं तत्तद्विपरीतं युक्तम्, रूपान्तरत्वलक्षणत्वाद्वैपरीत्यस्य । अन्यथा भेदव्यवहारोच्छेद एव स्यात् । ततश्च सत्वरजस्तमसां चैतन्यानां च परस्परं भेदाभ्युपगमो निर्निबन्धन एव स्यात् । सर्वमेव च विश्वमेकरूपं स्यात् । ततश्च सहोत्पत्तिविनाशप्रसङ्गः, एकयोगक्षेमलक्षणत्वादभेदव्यवस्थानस्य, तस्माद्व्यक्तरूपाव्यतिरिक्तत्वादव्यक्तमपि हेतुमत्त्वादिधर्मयोगि प्राप्नोति व्यक्तस्वरूपवत्, व्यक्तं वा हेतुमत्त्वादिधर्मयुक्तं स्यादव्यक्तरूपाव्यतिरेकात्तत्स्वरूपवदित्येकान्त एव । अन्यथाऽतिप्रसङ्गः स्यात् । किंचान्वयव्यतिरेकनिश्चयसमधिगम्यो लोके कार्यकारणभावः प्रसिद्धः । नच प्रधानादिभ्यो महदाद्युत्पत्तिव्यवहारः । नचापि नित्यस्य कारणभावोऽस्ति । येन प्रधानात्कार्यभेदानामुत्पत्तिः सिद्ध्येत् । नित्यस्य क्रमाक्रमाभ्यामर्थक्रियाविरोधात् । स्यादेतत्—नास्माभिरपूर्वस्वभावोत्पत्त्या कार्यकारणभावोऽभीष्टो येन स्वरूपाभेदे सति स विरुध्यते यावता प्रधानं सर्पकुण्डलादिवन्महदादिरूपेण परिणामं गच्छत्तेषां महदादीनां कारणमिति व्यपदिश्यते, ते च महदादयस्तत्परिणामरूपत्वात्तत्कार्यतया व्यपदिश्यन्ते । परिणामश्चैकवस्त्वधिष्ठानत्वादभेदेऽपि न विरुध्यत इति । तदेतदसम्यक् । परिणामासिद्धेः । तथाहि परिणामो भवेत्पूर्वरूपपरित्यागाद्वा, भवेदपरित्यागाद्वा । यद्यपरित्यागात्तदाऽवस्थासाङ्कर्यं स्यात्, बृहत्त्वाद्यवस्थायामपि युवत्वाद्यवस्थोपलब्धिप्रसङ्गात् । अथ परित्यागात्तदा स्वभावहानिप्रसङ्गः, ततश्च पूर्वकं स्वभावान्तरं निरुद्धमपूर्वं स्वभावान्तरमुत्पन्नमिति न कस्यचित्परिणामः सिद्ध्येत् । किंच तस्यैवान्यथाभावलक्षणः परिणामो वर्ण्यते, तच्चान्यथात्वमेकदेशेन वा भवेत्, सर्वात्मना वा । न तावदेकदेशेन, एकस्यैकदेशासम्भवात् । नापि सर्वात्मना, तदर्थान्तरोत्पादे पूर्वविनाशप्रसङ्गात् । तस्मान्न तस्यैवान्यथात्वं युक्तम्, स्वभावान्तरोत्पादनिबन्धनत्वात्तस्येति । अथापि स्याद्व्यवस्थितस्य धर्मिणो धर्मान्तरनिवृत्त्या धर्मान्तरप्रादुर्भावः परिणामो वर्ण्यते नतु स्वभावस्यान्यथात्वादिति । तदेतदसम्यक् । तथाहि—स प्रवर्त्तमानो निवर्त्तमानश्च धर्मो धर्मिणोऽर्थान्तरभूतो वा स्यादनर्थान्तरभूतो वा । यद्यर्थान्तरभूतस्तदा धर्मी तदवस्थ एवेति कथमसौ परिणतो नाम । नह्यर्थान्तरभूतयोः पटाश्वयोरुत्पादविनाशे सत्यविचलितात्मस्वरूपस्य घटादेः परिणामो भवत्यतिप्रसङ्गात् । एवं हि पुरुषोऽपि परिणामी स्यात् । तत्सम्बद्धयोर्धर्मयोरुत्पादवि-

नाशात्तस्य परिणामो व्यवस्थाप्यते नान्यस्येति चेन्न। सदसतोः सम्बन्धाभावेन तत्सम्बन्धित्वासिद्धेः । तथाहि—सम्बन्धो भवेत्सतो वा, भवेदसतो वा । न तावत्सतस्तस्य, समधिगताशेषस्वभावसम्पत्तेरनपेक्षतया क्वचिदपि पारतन्त्र्यायोगात् । नाप्यसतस्तस्य, सर्वोपाख्याविरहलक्षणतया क्वचिदप्याश्रितत्वानुपपत्तेः । नहि शशविषाणादिः कचिदाश्रितो युक्तः । न चापि व्यतिरिक्तधर्मान्तरोत्पादविनाशे सति परिणामो व्यवस्थाप्यते भवद्भिः । किं तर्हि? यत्रात्मभूतैकस्वभावानुवृत्तिरवस्थाभेदश्च तत्र भवतां परिणामव्यवस्था । नच धर्मिणः सकाशाद्धर्मयोर्व्यतिरेके सति एकस्वभावानुवृत्तिरस्ति । धर्म्येव हि तयोरेक आत्मा स च व्यतिरिक्त इति नात्मभूतैकस्वभावानुवृत्तिः । नचापि प्रवर्त्तमाननिवर्त्तमानधर्मद्वयव्यतिरिक्तो धर्म उपलब्धिलक्षणप्राप्तो दर्शनपथमवतरति कस्यचिदित्यतः स तादृशोऽसद्व्यवहारविषय एव विदुषाम् । अथानर्थान्तरभूत इति पक्षस्तथाप्येकस्माद्धर्मिस्वरूपादव्यतिरिक्तत्वाद्विनाशोत्पादवतोर्द्धर्मयोरपि धर्मिस्वरूपवदेकत्वमेवेति केनाश्रयेण धर्मी परिणतः स्याद्धर्मो वा । अवस्थातुश्च धर्मिणः सकाशादव्यतिरेकाद्धर्मयोरवस्थातृस्वरूपवन्न निवृत्तिर्नापि प्रादुर्भावः । धर्माभ्यां च धर्मिणोऽनन्यत्वाद्धर्मस्वरूपवदपूर्वस्योत्पादः पूर्वस्य च विनाश इति नैकस्य कस्यचित्परिणामः सिद्ध्यति । तस्मान्न परिणामवशादपि भवतां कार्यकारणव्यवहारो युक्त इति । एतच्च स्पष्टमेव दूषणमिति कृत्वा तदुपेक्ष्य यश्चायमसत्कार्यवादे दोषः परैरुक्तस्तं पश्चात्प्रतिविधास्याम इति मन्यमानस्तुल्यदोषापादनव्याजेन सत्कार्यवादमेव तावद्दूषयते—**तदत्रेत्यादि** । **सुधिय** इति सौगतास्ते प्राहुः । येयमसदकरणादित्यादिना पञ्चधा चोदना कृता सा सत्वेऽपि सत्कार्यवादपक्षेऽपि तुल्या । तथाहि—शक्यमिदमित्थमभिधातुम् । **न सदकरणादुपादानग्रहणात्सर्वसंभवाभावात् । शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्यमिति** । न सत्कार्यमिति व्यवहितेन सम्बन्धः । कस्मात्? सदकरणादुपादानग्रहणादित्यादेर्हेतोः । यश्चोभयोर्दोषो न तमेकश्चोद्यो युक्त (श्चोदयेदिति?) भावः । **ननु** च कथमियं समता भवति । यावता तत्रासदकरणादित्येवं चोदना, अन्यत्र सदकरणादिति । **न** । अभिप्रायापरिज्ञानात् । अकरणनियतोपादानपरिग्रहादिमात्रविवक्षया हीदमुक्तम् । सत्कार्यवादेप्यकरणादीनां तुल्यत्वात् । तस्यां च चोदनायां यदुत्तरं भवतां सत्कार्यवादिनां तदसत्कार्यवादिनां सुधियां बौद्धानां भविष्यति ॥ १६ ॥

कथमसौ तुल्येत्याह—**यदीत्यादि** ।

**यदि दध्यादयः सन्ति दुग्धाद्यात्मसु सर्वथा ।**
**तेषां सतां किमुत्पाद्यं हेत्वादिसदृशात्मनाम् ॥ १७ ॥**

सदकरणादित्येतत्समर्थनार्थमिदम् । यदि दुग्धाद्यात्मसु क्षीरादीनां स्वभावेषु दध्यादिलक्षणानि कार्याणि सर्वथा सर्वात्मना विशिष्टरसवीर्यविपाकादिना विभक्तेन रूपेण मध्यावस्थावत्सन्ति, तदा तेषां सतां किमुत्पाद्यं रूपमस्ति, येन ते कारणैर्दुग्धादिभिर्जन्याः स्युः । हेत्वादिसदृश आत्मा येषामिति विग्रहः । हेतुः—प्रकृतिः, आदिशब्देन चैतन्यम्, तेषां च मध्यावस्थाभाव्यपुनर्जन्यं निष्पन्नं रूपं गृह्यते । एतेन कार्यकारणभाव(भङ्ग)प्रसङ्गसाधनं प्रमाणद्वयं सूचितम् ॥ १७ ॥

साम्प्रतं स्फुटमेव प्रमाणयन्नाह—**हेतुजन्यमित्यादि** ।

**हेतुजन्यं न तत्कार्यं सत्तातो हेतुवित्तिवत् ।**
**अतो नाभिमतो हेतुरसाध्यत्वात्परात्मवत् ॥ १८ ॥**

हेतुः—प्रधानं लोकप्रसिद्धं च क्षीरादि । **तत्कार्यमिति** । महदादि लोकप्रसिद्धं च दध्यादि । **सत्तात इति** । सत्वात् । **हेतुवित्तिवदिति** । हेतुः—प्रधानं लोकप्रसिद्धं च क्षीरादि । वित्तिः—चैतन्यम् । ताभ्यां तुल्यं वर्तत इति हेतुवित्तिवत् । प्रयोगः—यत्सर्वाकारेण सन्न तत्केनचिज्जन्यम्, यथा प्रकृतिश्चैतन्यं वा । सदेव च कार्यं मध्यावस्थायाम् । सच्च सर्वात्मना परमतेन दध्यादीति व्यापकविरुद्धोपलब्धिप्रसङ्गः । न वाऽनैकान्तिकताहेतोः । अनुत्पाद्यातिशयस्यापि जन्यत्वे सर्वेषां जन्यत्वप्रसङ्गोऽनवस्थाप्रसङ्गश्च बाधकं प्रमाणम् । जनितस्यापि पुनर्जन्यत्वप्रसङ्गात् । एवं तावत्कार्यत्वाभिमतानामकार्यत्वप्रसङ्गापादनं कृतम् । इदानीं कारणाभिमतानामकारणत्वप्रसङ्गापादनं कुर्वन्नाह—**अतो नाभिमत** इत्यादि । अभिमतः—पदार्थ इति शेषः । तेनायमर्थो भवति । मूलप्रकृत्यादिर्बीजदुग्धादिश्चाभिमतः पदार्थो विवक्षितस्य महदादेर्दध्यादेश्च न हेतुः—जनकव्यवहारयोग्यो न प्राप्नोतीत्यर्थः । कस्मात्? असाध्यत्वात्—नास्य साध्यमस्तीत्यसाध्यस्तद्भावस्तत्त्वम् । एतच्चानन्तरोक्तात्कार्यत्वप्रतिषेधात्सिद्धम् । अतएवात इत्युक्तम् । **परात्मवदिति** । अन्यस्वभाववत् । अकारणाभिमतपदार्थस्वभाववदित्यर्थः । अकारणाभिमतश्च पदार्थश्चैतन्यम् । "न प्रकृतिर्न विकृतिः पुरुष" इति वचनात् । प्रयोगः—यदविद्यमानसाध्यं न तत्कारणं यथा चैतन्यम् ।

अविद्यमानसाध्यश्चाभिमतः पदार्थ इति व्यापकानुपलब्धिः । एतच्च द्वयमपि प्रसङ्गसाधनमतो नोभयसिद्धोदाहरणेन किंचित् । यस्तु मन्यते साङ्ख्यः पुरुषस्यापि प्रतिबिम्बोदयन्यायेन भोगं प्रति कर्तृत्वमस्तीति । तं प्रत्येवं व्याख्या । परश्चासावात्मा च—मुक्त इत्यर्थः । तस्य हि मुक्तत्वाद्भोगं प्रत्यपि कर्तृत्वं नास्तीति नोदाहरणासिद्धिः ॥ १८ ॥

**अथेत्या**दिना परमते हेत्वोरसिद्धिमाशङ्कते ।

**अथास्त्यतिशयः कश्चिदभिव्यक्त्यादिलक्षणः ।**
**यं हेतवः प्रकुर्वाणा न यान्ति वचनीयताम् ॥ १९ ॥**

तत्र यदि प्रथमो हेतुः सर्वात्मनाऽभिव्यक्तयादिरूपेणापि सत्वादिति सविशेषणः क्रियते, तदा न सिद्ध्यति । नह्यस्माभिरभिव्यक्त्यादिरूपेणापि सत्वमिष्यते कार्यस्य । किं तर्हि ? । शक्तिरूपेण । अथ सामान्येन निर्विशेषणस्तदाऽनैकान्तिकः, यस्मादभिव्यक्त्यादिलक्षणस्यातिशयस्योत्पद्यमानत्वात्, न सर्वस्य कार्यत्वप्रसङ्गो भविष्यति । अतएव द्वितीयोऽपि हेतुरसिद्धः, साध्यस्य विद्यमानत्वात् । **अभिव्यक्त्यादिलक्षण** इति । आदिशब्देनोद्रेकाद्यवस्थाविशेषपरिग्रहः । **यमि**ति—अतिशयम् । **वचनीयता**मिति—वाच्यताम् । नाभिमतो हेतुरसाध्यत्वादित्यादिर्दोषो न भवतीति यावत् ॥ १९ ॥

**प्रागासी**दित्यादिना प्रतिविधत्ते—

**प्रागासीद्यद्यसावेवं न किंचिद्दत्तमुत्तरं ।**
**नो चेत्सोऽसत्कथं तेभ्यः प्रादुर्भावं समश्नुते ॥ २० ॥**

तत्र विकल्पद्वयम्, कदाचिदसावतिशयोऽभिव्यक्त्याद्यवस्थातः प्राक् प्रकृत्यवस्थायामप्यासीद्वा न वा, यद्यासीत्तदा भवद्भिर्द्वयोरपि हेत्वोर्न किंचिदसिद्धत्वादिकमुक्तमुत्तरम्, नो चेत्प्रागासीदेवमपि सोऽतिशयः कथं तेभ्यो हेतुभ्यः प्रादुर्भावमश्नुवीत, असदकारणादिति भवतां न्यायान्न युक्तमेतदित्यभिप्रायः ॥ २० ॥

एवं तावत्सदकरणादित्ययं हेतुः समर्थितः । साम्प्रतमुपादानपरिग्रहादित्यादिहेतुचतुष्टयसमर्थनार्थमाह—**नातः साध्य**मित्यादि ।

**नातः साध्यं समस्तीति नोपादानपरिग्रहः ।**
**नियतादपि नो जन्म न च शक्तिर्न च क्रिया ॥ २१ ॥**

यथोक्तया नीत्या साध्यस्याभावादुपादानपरिग्रहो न प्राप्नोति, तत्साध्यफलवाञ्छ-

यैव तेषां प्रेक्षावद्भिः परिग्रहात् । नियतादेव क्षीरादेर्दध्यादीनां जन्मेत्येतदपि न प्राप्नोति, साध्यस्यासंभवादेव । एतच्च सर्वसंभवाभावादित्येतस्य समर्थनम् । तथाहि— सर्वस्मात्संभवाभाव एव नियताज्जन्मेत्युच्यते, तच्च सत्कार्यवादपक्षे साध्याभावान्न युज्यते । तथा शक्तस्येति शक्यकरणमित्येतदपि द्वयं न युज्यते । साध्यस्याभावादेव । यदि हि केनचित्किंचिदभिनिर्वर्त्येत तदा निर्वर्त्तकस्य शक्तिर्व्यवस्थाप्यते । निवर्त्त्यस्य च करणं सिध्येत् । नान्यथा । तद्दर्शयति **नच शक्तिर्नच क्रियेति** ॥ २१ ॥

कारणभावोऽपि पदार्थानां न युक्तः, साध्यभावादेव । तद्दर्शयति—**सर्वात्मनेत्यादि** ।

**सर्वात्मना च निष्पत्तेर्न कार्यमिह किंचन ।**
**कारणव्यपदेशोऽपि तस्मान्नैवोपपद्यते ॥ २२ ॥**

एतच्च कारणभावादित्येतस्य हेतोः समर्थनम् । नचैवं भवति, तस्मान्न सत्कार्यमिति सर्वहेतुषु प्रसङ्गप्रत्ययो योज्यः ॥ २२ ॥

भूयः प्रकारान्तरेण सत्कार्यवादं दूषयन्नाह—**सर्वं चेत्यादि** ।

**सर्वं च साधनं वृत्तं विपर्यासनिवर्तकं ।**
**निश्चयोत्पादकं चेदं न तथा युक्तिसङ्गतम् ॥ २३ ॥**

**वृत्तमिति** । प्रवृत्तम् । विपर्यासग्रहणेन संशयोऽपि गृह्यते, तस्योभयांशावलम्बेनारोपकत्वसंभवात् । सर्वमेव हि साधनं स्वविषये प्रवृत्तं द्वयं करोति । प्रमेयार्थविषये प्रवृत्तौ संशयविपर्यासौ निवर्त्तयति, निश्चयं च तद्विषयमुत्पादयति । तदेतत्सत्कार्यवादे युक्त्या न सङ्गच्छते ॥ २३ ॥

कथमित्याह—**न सन्देहेत्यादि** ।

**न सन्देहविपर्यासौ निवर्त्त्यौ सर्वदा स्थितेः ।**
**नापि निश्चयजन्मास्ति तत एव वृथाऽखिलम् ॥ २४ ॥**

तथाहि—सन्देहविपर्यासौ भवतां मतेन चैतन्यात्मकौ वा स्यातां बुद्धिमनःस्वभावौ वा । पक्षद्वयेऽपि न तयोर्निवृत्तिः संभवति । चैतन्यबुद्धिमनसां नित्यत्वेन तयोरपि नित्यत्वात् । नापि निश्चयोत्पत्तिः साधनात्संभवति । तत एव सर्वदा स्थितेः कारणात् । तस्माद्यदेतत्साधनमुक्तं भवता तदखिलं सर्वमेव वृथा । एतेन स्ववचनविरोध उद्भावितो भवति । तथाहि—निश्चयोत्पादनाय साधनं ब्रुवता नि-

श्चयस्यासत उत्पत्तिरङ्गीकृता भवेत्। सत्कार्यमिति च प्रतिज्ञया सा निषिद्धेति स्ववचनव्याघातः ॥ २४ ॥

**अथाऽपि निश्चयोऽभूतस्समुत्पद्येत साधनात्।**
**ननु तेनैव सर्वेऽमी भवेयुर्व्यभिचारिणः ॥ २५ ॥**

अथ माभूत्साधनप्रयोगवैयर्थ्यमिति। निश्चयोऽभूतोऽसन्नेव साधनादुत्पद्यत इत्यङ्गीक्रियते। एवं तर्हि, असद्करणादित्यादेर्हेतुगणस्य समस्तस्यैवानैकान्तिकता प्राप्नोति, निश्चयवदसतोऽप्युत्पत्त्यविरोधात्। ततश्च यथा निश्चयस्यासतोऽपि करणं तन्निष्पत्तये च यथा विशिष्टसाधनपरिग्रहः, यथा च तस्य न सर्वस्मात्साधनाभासादेः संभवः, यथा चासावसन्नपि शक्तैर्हेतुभिः क्रियते, तत्रच यथा हेतूनां कारणभावोऽस्ति, तथाऽन्यत्रापि भविष्यति ॥ २५ ॥

**अव्यक्तो व्यक्तिभाक्तेभ्य इति चेद्व्यक्तिरस्य का।**
**न रूपातिशयोत्पत्तिरविभागादसङ्गतेः ॥ २६ ॥**

अथापि स्याद्यद्यपि प्राक्साधनप्रयोगात्सन्नेव निश्चयः, तथापि न साधनवैयर्थ्यम्, यतः प्रागनभिव्यक्तोऽसौ पश्चात्तेभ्यः साधनेभ्योऽभिव्यक्तिमासादयति। तस्मादभिव्यक्त्यर्थं साधनानि व्याप्रियन्त इति नानर्थक्यमेषामिति। तदेतदयुक्तम्। व्यक्तेरसिद्धत्वात्तथाहि—व्यक्तिः स्वभावातिशयोत्पत्तिर्वा भवेत्, यद्वा तद्विषयं ज्ञानम्, तदुपलम्भावरणापगमो वा। तत्र न तावत्स्वभावातिशयोत्पत्तिः। तथाहि—असौ स्वभावातिशयो निश्चयस्वरूपादपृथग्भूतो वा, पृथग्भूतो वा। यद्यपृथग्भूतस्तदा तस्य निश्चयादविभागादपृथक्त्वान्निश्चयस्वरूपवत्सर्वदैवावस्थितेर्नोत्पत्तिर्युक्ता। अथ पृथग्भूतः, एवमपि तस्यासाविति सम्बन्धानुपपत्तिः। तथाहि—आधाराधेयलक्षणो वा सम्बन्धो भवेत्, जन्यजनकभावलक्षणो वा। न तावदाद्यः परस्परानुपकार्योपकारकयोस्तदसंभवात्। उपकारे वा तस्याप्युपकारस्य व्यतिरेकित्वे सम्बन्धासिद्धेरनवस्थाप्रसङ्गात्। अव्यतिरेकित्वे च साधनप्रयोगवैयर्थ्यम्, निश्चयादेवोपकाराव्यतिरिक्तस्यातिशयस्योत्पत्तेः। अमूर्त्तत्वाच्चातिशयस्याधःप्रसर्पणासंभवान्न तस्य कश्चिदाधारो युक्तः, अधोगतिप्रतिबन्धकत्वेनाधारस्य व्यवस्थानात्। नापि जन्यजनकभावलक्षणः, सर्वदैव निश्चयाख्यस्य कारणस्य सन्निहितत्वान्नित्यमतिशयोत्पत्तिप्रसङ्गात्। नच साधनप्रयोगापेक्षया निश्चयस्यातिशयोत्पादकत्वं युक्तम्। अनुपकारि-

ण्यपेक्षानुपपत्तेः । उपकारित्वे वा पूर्ववद्दोषोऽनवस्था च । अपिच योऽसावतिशयः पृथग्भूतः क्रियते स किमसन्नाहोस्वित्सन्निति विकल्पद्वयमत्राप्यवतरत्येव । तत्रासत्वे पूर्ववत्साधनानामनैकान्तिकतापत्तिः । सत्वे च साधनवैयर्थ्यम् । तत्राप्यभिव्यक्ताविष्यमाणायां केयमभिव्यक्तिरित्यनवस्थाप्रसङ्गो दुर्निवारः । तस्माद्व्यतिरेकपक्षेऽप्यसङ्गतेरसम्बन्धान्न रूपातिशयोत्पत्तिर्युज्यते ॥ २६ ॥

**न तद्विषयसंवित्तिर्नोपलम्भावृतिक्षयः ।**
**नित्यत्वादुपलम्भस्य द्वितीयस्याप्यसंभवात् ॥ २७ ॥**

नापि तद्विषयज्ञानोत्पत्तिलक्षणाभिव्यक्तिर्युक्ता, नित्यत्वात्तद्विषयायाः संवित्तेः । तथाहि—याऽसौ तद्विषया संवित्तिः सा भवतः सत्कार्यवादिनो मतेन नित्यैवेति किं तस्या उत्पाद्यं ( उत्पाद्यत्वं ? ) स्यात् । द्वितीयस्योपलम्भस्यासंभवाच्च न तद्विषयज्ञानोत्पत्तिलक्षणाभिव्यक्तिर्युक्ता । अपिशब्दः समुच्चये, भिन्नक्रमश्च, असम्भवादित्यस्यानन्तरं द्रष्टव्यः । तेनैतदुक्तं भवति । एकैव भवतां मतेन संवित्, आसर्गप्रलयादेका बुद्धिरिति सिद्धान्तात्, सैव च निश्चयः, तत्र कोऽपरस्तदुपलम्भोऽभिव्यक्त्याख्योऽस्ति, यः साधनैः क्रियेत । स्यादेतत्, न बुद्धिस्वभावा तद्विषयसंवित्तिः, किं तर्हि ? । मनःस्वभावेति । तदसम्यक्, बुद्धिरुपलब्धिरध्यवसायो मनःसंवित्तिरित्यादीनामनर्थान्तरत्वात् । एतच्च पश्चान्निवेदयिष्यते । नापि तद्विषयोपलम्भावरणक्षयलक्षणाभिव्यक्तिः, अतएव कारणद्वयात् । तथाहि—यत्तदुपलम्भावरणं तस्य नित्यत्वान्न क्षयः सम्भवति । नापि तिरोभावलक्षणः क्षयो युक्तः, अत्यक्तपूर्वरूपस्य तिरोभावासम्भवात् । द्वितीयस्य चोपलम्भस्यासम्भवान्नोपलम्भावरणमस्ति । नह्यसत आवरणं युक्तम्, वस्तुसद्विषयत्वात्तस्य । तस्मान्न तत्क्षयो युक्तः । अथवा—**नित्यत्वा**दिति तद्विषयायाः संवित्तेर्नित्यत्वान्नावरणं सम्भवति तदसम्भवान्न क्षयो युक्त इत्यर्थः । न चाप्यावरणक्षयः केनचित्क्रियते । तस्य निःस्वभावत्वात् । न केवलं सत्कार्यवादपक्षे साधनप्रयोगवैयर्थ्यम्, बन्धमोक्षाभावप्रसङ्गः सर्वलोकव्यवहारोच्छेदप्रसङ्गश्चानिवार्यः । तथाहि—प्रधानपुरुषयोः कैवल्योपलम्भलक्षणस्य तत्वज्ञानस्योत्पत्तौ सत्यां मोक्षो भवद्भिरिष्यते । तच्च तत्वज्ञानं सर्वदावस्थितमेवेति मुक्ताः सर्व एव देहिनः स्युः, अतो न बन्धः । मिथ्याज्ञानवशाच्च बन्ध इष्यते तस्य च सर्वदाऽवस्थितत्वेन सर्वदा सर्वेषां बद्धत्वात्कुतो मोक्षः, लोकश्च हिताहितप्राप्तिपरिहारार्थं प्र-

वर्त्तेते । सत्कार्यवादपक्षे च न किंचिदप्राप्यमहेयं वास्तीति निरीहमेव जगत्स्यात्, अन्ततस्सर्वव्यवहारोच्छेदप्रसङ्गः ॥ २७ ॥

एवं तावत्सत्कार्यवादं निराकृत्यासत्कार्यवादपक्षभाविनो दोषान्परिहर्तुमाह—**त्रैगुण्यस्ये**त्यादि ।

**त्रैगुण्यस्याविभेदेऽपि न सर्वं सर्वकारकम् ।**
**यद्वत्तद्वदसत्त्वेऽपि न सर्वं सर्वकारकम् ॥ २८ ॥**

सत्कार्यनिषेधादेव सामर्थ्यादसत्कार्यमिति सिद्धमेव, सदसतोरन्योन्यपरिहारस्थितलक्षणत्वेन प्रकारान्तरासम्भवात् । तथाऽपि परोपन्यस्तस्य दूषणस्य दूषणाभासताप्रतिपादनायोच्यते । तत्र यत्तावदुक्तम् "कर्तुं तन्नैव शक्येत नैरूप्या"दिति, तदसिद्धम्, वस्तुस्वभावस्यैव क्रियमाणत्वाभ्युपगमात् । तस्य च वस्तुस्वभावस्य नीरूपत्वासिद्धेः । प्रागुत्पत्तेस्तन्निःस्वभावमेवेति चेन्न । तस्यैव निःस्वभावत्वायोगात् । नहि स्वभाव एव निःस्वभावो युक्तः, वस्तुस्वभावप्रतिषेधलक्षणत्वान्निःस्वभावत्वस्य । नचाप्युत्पादात्प्राक् तदस्ति । क्रियमाणं वस्तु येन तदेव निःस्वभावं सिद्ध्येत् । अथ वस्तुविरहलक्षणमेव नीरूपं धर्मिणं पक्षीकृत्य नैरूप्यादिति हेतुः क्रियते, तदा सिद्धसाध्यता । नहि वस्तुविरहः केनचित्क्रियमाणतयाऽभ्युपगतः । अपि च नैकान्तिकोऽपि हेतुः । विपक्षे बाधकप्रमाणानुपदर्शनात् । यतः कारणशक्तिप्रतिनियमात्किंचिदेवासत्क्रियते यस्योत्पादकं कारणमस्ति, यस्य तु वियदब्जादेर्नास्ति कारणं तन्न क्रियत इत्यनेकान्त एव । नहि सर्वं सर्वस्य कारणमिष्टम् । नापि यद्यदसत्तत्तत्क्रियत एवेति व्याप्तिरिष्टा । किंतर्हि ? । यत्क्रियते तत्प्रागुत्पत्तेरसदेवेति । स्यादेतत्तुल्येप्यसत्कारित्वे कारणानां किमिति सर्वं सर्वस्यासतः कारणं न भवतीति । तदेतद्भवतोऽपि समानं चोद्यम्, तुल्ये हि सत्कारित्वे किमिति सर्वं सर्वस्य सतः कारणं न भवतीति । नच भवतां मतेन किंचिदसदस्ति येन तन्न क्रियेत । कारणशक्तिप्रतिनियमात्सदपि शशविषाणादि न क्रियत इति चेत् । तदितरत्रापि समानम् । अपिच यथा भवतां त्रैगुण्यस्य सर्वत्राविशेषेऽपि न सर्वं सर्वकारकं भवति, शक्तिप्रतिनियमात् । सर्वस्य कारकं सर्वं वा कारकमस्येति विग्रहः । तद्वदसत्वेपि कार्यस्यान्वयिनो वा कस्यचिद्रूपस्य न सर्वं सर्वकारकं भविष्यति । एतच्चाभ्युपगम्योक्तं **यद्वत्तद्व**दिति । न पुनः साम्यमिति । तथाहि—सत्यपि भेदे कस्यचित्कश्चिदेव हेतुर्भवति । स्वहेतुपरम्परास-

मायातत्वात्तथाभूतस्वभावभेदप्रतिनियमस्येत्यविरुद्धम् । अभेदे त्वेकस्यैकस्मिन्नेव काले हेतुत्वमहेतुत्वं च परस्परविरुद्धं कथं सम्भाव्यते । विरुद्धधर्माध्यासनिबन्धनत्वाद्वस्तुभेदस्य । तथाचाह—"भेदे हि कारणं किंचित् वस्तुधर्मतया भवेत् । अभेदे तु निरुध्येते तस्यैकस्य क्रियाक्रिये ॥" इति ॥ २८ ॥

**अवधीना**मित्यादिना परः शक्ति(क्त्य ?)नियमं सम्भावयन्प्रत्यवतिष्ठते—

**अवधीनामनिष्पत्तेर्नियतास्ते न शक्तयः ।**
**सत्वे तु नियमस्तासां (युक्तः)सावधिको न नु ॥ २९ ॥**

**त** इति तव बौद्धस्यासत्कार्यवादिनः, न कारणानां नियताः शक्तयो घटन्ते । कस्मात् ? अवधीनां कार्यभूतानामनिष्पत्तेः । नह्यवधिमन्तरेणावधिमतोऽस्ति सद्भावः प्रयोगः । ये सद्भूतकार्यावधिशून्या न ते नियतशक्तयो यथा शशविषाणादयः, सद्भूतकार्यावधिशून्याश्च शालिबीजादयो भावा इति व्यापकानुपलब्धिः । स्वपक्षस्य सौस्थित्यं दर्शयन्नाह—**सत्व** इति । कार्याणां सद्भावे सतीत्यर्थः । **तासा**मिति शक्तीनाम् ॥ २९ ॥

**नैव**मित्यादिना हेतोरनैकान्तिकतामाह—

**नैवं तेषामनिष्पत्त्या माभूच्छब्दस्तथापरम् ।**
**सर्वोपाधिविविक्तस्य वस्तुरूपस्य न क्षतिः ॥ ३० ॥**

तथाहि—तेषामवधीनामनिष्पत्तौ यदि परं क्षीरस्य दध्युत्पादने शक्तिरित्येष व्यपदेशो माभूत्, यत्पुनस्तथाविधं सर्वोपाधिशून्यमध्यारोपितं वस्तु यदनन्तरमदृष्टपूर्वं वस्त्वन्तरमुदेति, तस्याप्रतिषेध एव ॥ ३० ॥

स्यादेतद्यत्र शब्दविकल्पानामप्रवृत्तिस्तत्र वस्तुस्वभावोऽपि निवर्त्तेत एवेत्याह—**न नामरूप**मित्यादि ।

**न नाम रूपं वस्तूनां विकल्पा वाचकाश्च यत् ।**
**विश्वकल्पाः प्रवर्त्तन्ते यथाऽभ्यासमभेदिनि ॥ ३१ ॥**

स्वभाव एव हि व्यापको निवर्त्तमानः स्वं व्याप्यं निवर्त्तयति, कारणं वा कार्यं, प्रतिबन्धसद्भावात् । नत्वन्योऽतिप्रसङ्गात् । नच क्षीरस्य दध्नि शक्तिरित्येवमादिनामव्यपदेशो वस्तूनां रूपं स्वभावो भवति । येन तन्निवर्तमानं तथाविधं वस्तु निवर्त्तयेत् । नामग्रहणमुपलक्षणम् । विकल्पोऽपि तत्संसृष्टो गृह्यते । रूपग्रहणं चोपलक्ष-

णम् । ( कारणं गृह्यते ) कारणमपि वस्तूनां नाम न भवत्येव, तदन्तरेणापि वस्तुसम्भवात् । अत्र कारणमाह—**विकल्पा** इत्यादि । यत्—यस्मात्, नामसंसर्गभाजो विकल्पा वाचकाश्च शब्दा विश्वकल्पाः—नानाप्रकाराः, अभेदिनि—निरंशैकस्वभाववस्तुनि यथाभ्यासं वर्त्तन्ते । तथाहि—एक एव शब्दादिर्भावो नित्यादिरूपेण भिन्नसमयस्थायिभिः प्रवादिभिर्विकल्प्यते व्यपदिश्यते च । तेषां च शब्दविकल्पानां तादात्म्ये तद्विषयत्वे वा वस्तुनश्चित्रत्वं प्राप्नोति । वस्तुस्वरूपवदेव वा शब्दविकल्पानामेकरूपत्वप्रसङ्गः । नह्येकं चित्रमिति युक्तमतिप्रसङ्गात् । तस्माच्छक्तिप्रतिनियमात्किंचिदेवासत्क्रियते न सर्वमित्यतो नैरूप्यादित्यनैकान्तिकोऽपि हेतुः । अतएवोपादानग्रहणादित्यादिकस्य हेतुचतुष्टयस्यानैकान्तिकत्वम् । तथाहि—यदि कार्यसत्ताकृतमेव प्रतिनियतोपादानग्रहणं क्वचित्सिद्धं स्यात्तदैतत्स्यात् । यावता कारणशक्तिनियमकृतमपि नियतोपादानग्रहणं युज्यत एव । कारणशक्तिप्रतिनियमादेव च न सर्वस्य सर्वस्मात्सम्भवः, सर्वस्य सर्वार्थक्रियाकारित्वस्वभावासम्भवात् । यत्पुनरुक्तमकार्यातिशयं यत्त्वित्यादि तदप्यभिप्रायापरिज्ञानादुक्तम् । नह्यस्माभिरभावः क्रियत इत्यभिधीयते । येन विकृतौ सत्यां तस्य स्वभावहानिप्रसङ्गः स्यात् । किंतु वस्त्वेव क्रियत इति पूर्वं प्रतिपादितम् । तच्च वस्तु उपलब्धिलक्षणप्राप्तस्यानुपलब्धेर्निष्पन्नस्य च कार्यत्वानुपपत्तेः प्रागुत्पादादसदित्युच्यते, यस्य च कारणस्य सन्निधानमात्रेण तत्तथाभूतमुदेति तेन तत्क्रियत इति व्यपदिश्यते, नतु व्यापारसमावेशात्केनचित्किंचित्क्रियते, निर्व्यापारत्वात्सर्वधर्माणाम् । नाप्यसन्नाम किंचिदस्ति, यद्विक्रियते, न वा वस्तुस्वभावः, प्रतिषेधमात्रलक्षणत्वादसत्वस्य । अपिच यद्यकार्यातिशयत्वादसन्न क्रियत इत्यभिधीयते । सदपि च स्वभावनिष्पत्तेरकार्यातिशयमेवेति तत्कथं क्रियते । तस्माच्छक्तस्य शक्यकरणादित्येषोनैकान्तः । असत्कार्यवादे च कारणभावस्य युज्यमानत्वात्कारणभावादित्ययमप्यनैकान्तिकः । यद्वा पूर्वं सतः कार्यत्वासम्भवस्य प्रतिपादितत्वात्, असत्कार्यवाद एव चोपादानग्रहणादिनियमस्य युज्यमानत्वात्, उपादानग्रहणादित्यादेर्हेतुचतुष्टयस्य विरुद्धता; साध्यविपर्ययसाधनात् ॥ ३१ ॥

ननु यद्यसदेवोत्पद्यत इति भवतां मतं तत्कथं सूत्रे सदसतोरुत्पादः प्रतिषिद्धः । यथोक्तम्, "अनुत्पन्ना महामते सर्वधर्माः, सदसतोरनुत्पन्नत्वात्" इति अत्राह—**उत्पाद** इत्यादि ।

**उत्पादो वस्तुभावस्तु सोऽसता न सता तथा।**
**सम्बध्यते कल्पिकया केवलं त्वसता धिया॥ ३२॥**

तुशब्दोऽवधारणार्थः। वस्तूनां पूर्वापरकोटिशून्यक्षणमात्रावस्थायी स्वभाव एवोत्पाद इत्युच्यते। भेदान्तरप्रतिक्षेपेण तन्मात्रजिज्ञासायाम्। नतु वैभाषिकविकल्पिता जातिः संस्कृतलक्षणम्। तस्याः प्रतिषेत्स्यमानत्वात्। नापि वैशेषिकपरिकल्पितः सत्तासमवायः स्वकारणसमवायो वा, तयोरपि निषेत्स्यमानत्वात्। परमतेन च तयोर्नित्यत्वात्। नित्यस्य च जन्मानुपपत्तेः। यथोक्तम्—"सत्तास्वकारणाश्लेषकरणात्कारणं किल। सा सत्ता स च सम्बन्धो नित्यौ कार्यमथेह किम्॥" इति। स एवमात्मक उत्पादो नासता तादात्म्येन सम्बध्यते। सदसतोर्विरोधात्। नह्यसद्भवति। नापि सता पूर्वभाविना सम्बध्यते। तस्य पूर्वमसत्वात्। कथमिदानीमसत्कार्यवादिनो यूयमित्याह—**कल्पिकये**त्यादि। कल्पिकया धिया कर्तृभूतया करणभूतया वा, केवलमसता कर्त्रा सम्बध्यते—सम्बन्धमुपनीयत इत्यर्थः। नह्यसन्नाम किंचिदस्ति यदुत्पत्तिमाविशेत्, किं तु काल्पनिकोऽयं व्यवहारो यदसदुत्पद्यत इति यावत्॥ ३२॥

किं पुनरिह कल्पनाया बीजं येनायमेवं व्यवहार इष्यत इत्याह—**यदिद**मित्यादि।

**यदिदं वस्तुनो रूपमेकानन्तरमीक्ष्यते।**
**प्रागासीन्नेति तद्बीजं प्राग्भूते त्विदमस्ति न॥ ३३॥**

यदेतदेकस्य प्रतिनियतस्य कस्यचित्पदार्थस्यानन्तरमदृष्टपूर्वं वस्तुरूपमुपलभ्यते, तन्मध्यावस्थातः प्राङ्नासीत्, उपलब्धिलक्षणप्राप्तस्यानुपलब्धेः। तस्मादिदं प्रागसत्समुत्पद्यत इत्यस्याः कल्पनाया बीजम्। कस्मादित्याह—**प्राग्भूत** इत्यादि। मध्यावस्थातः प्राक्, मध्यावस्थातद्भूते विद्यमाने सति वस्तुरूपे, नास्तीदं कल्पनानिबन्धनमुत्पद्यत इति। तथाहि—उत्पद्यत इत्यनेन मध्यावस्थभाव्येव प्रतिनियतं स्वरूपमुच्यते। यदि च तस्य प्रागपि भावः स्यात्तदा तस्य मध्यावस्थाभाव्येवेति यदेतन्नियतं स्वरूपं तस्य हानिः स्यात्। आकाशवत्सर्वदाऽवस्थितस्य पूर्वापरमध्यावस्थाभावात्। ततश्च सर्वदा सर्वमुत्पद्यत इत्येवं व्यपदिश्येत, विशेषाभावात्॥ ३३॥

पुनरपि सत्कार्यवादं प्रकारान्तरेण दूषयन्नाह—**क्षीरादिषु चे**त्यादि।

**क्षीरादिषु च दध्यादि शक्तिरूपेण यन्मतम्।**
**का शक्तिस्तत्र दध्यादि यदि दृश्येत दुग्धवत्॥ ३४॥**

कारणे कार्यमस्तीति यदुच्यते भवद्भिस्तत्र कोऽर्थोऽभिप्रेतः । किं व्यक्तिरूपेण? तन्न । क्षीराद्यवस्थायामपि दध्यादीनां पश्चाद्वदुपलब्धिप्रसङ्गात् । अथ शक्तिरूपेण? तथाऽपि यत्तच्छक्तिरूपं दध्यादेः कार्यरूपादुपलब्धिलक्षणप्राप्तादन्यत्, आहोस्वित्तदेव। यदि तदेव तदा पूर्ववदुपलब्धिप्रसङ्गः ॥ ३४ ॥

**अन्यच्चेत्कथमन्यस्य भावेऽभक्त्यान्यदुच्यते ।**
**नहि सत्वस्य सद्भावः सद्भावो दुःखमोहयोः ॥ ३५ ॥**

अथान्यदिति पक्षः, तदा कारणात्मनि कार्यमस्तीति पक्षस्त्यक्तो भवेत्; कार्यव्यतिरिक्तस्य शक्त्याख्यस्य पदार्थान्तरस्य भावाभ्युपगमात् । तथाहि—यदेवाविर्भूतं विशिष्टरसवीर्यविपाकादिगुणोपेतं रूपं तदेव दध्यादिकं कार्यमुच्यते । तच्च क्षीरावस्थायामुपलम्भयोग्यस्यानुपलब्धेरसद्व्यवहारविषयः । यच्चान्यदस्ति शक्तिरूपं तत्कार्यमेव न भवति । न चान्यस्य भावेऽन्यदस्त्यतिप्रसङ्गात् । ननु चायुर्घृतम्, नड्वलोदकं पादरोग, इत्यन्यस्य सद्भावेऽन्यदुच्यमानं दृष्टमेवेत्याह—**अभक्त्येति** । अभक्त्या—अनुपचारेणेत्यर्थः । कारणे हि कार्योपचारादायुर्घृतमित्युच्यते । न मुख्यतः । यदि तु भवताऽप्युपचारात्कारणे कार्यमस्तीत्युच्यते, तदा न कश्चिद्विरोधः । मुख्यतस्तु विरोध उच्यते । एतदेव दृष्टान्तेनोपपादयन्नाह—**नहीत्यादि** । नहि यदेव सत्वरूपं तदेव दुःखमोहयोर्भवद्भिर्व्यवस्थाप्यते, तेषां परस्परं भिन्नलक्षणव्यवस्थानात् ॥ ३५ ॥

साम्प्रतं भेदानामन्वयदर्शनादित्यस्य हेतोरसिद्धत्वं प्रतिपादयन्नाह—**सत्वाद्यनुगतमित्यादि** ।

**सत्वाद्यनुगतं व्यक्तं न सिद्धं नः कथंचन ।**
**आन्तरत्वात्सुखादीनां व्यक्तत्वात्तत्स्वसंविदः ॥ ३६ ॥**

शब्दादिलक्षणं व्यक्तम्—सुखादिरूपम्, नः—अस्माकमसिद्धम् । कस्मात्? सुखादीनामान्तरत्वात्—संविद्रूपत्वात् । शब्दादीनां चाचेतनत्वात्कथमेते सुखाद्यन्विता भवेयुः । प्रयोगः—ये संविद्रूपा न भवन्ति न ते सुखादिमयाः, यथा परोपगतोऽचेतनः पुरुषः । संविद्रूपरहिताश्च शब्दादय इति व्यापकानुपलब्धिः । स्यादेतत्संविद्रूपत्वेन सुखादिमयत्वस्य यदा व्याप्तिः सिद्धा भवेत्तदा तन्निवर्त्तमानं शब्दादिषु सुखादिमयत्वं निवर्त्तयेद्यावता सैव न सिद्धा, पुरुषस्यैव संविद्रूपत्वेनेष्टत्वादित्यत आह—**व्यक्तत्वात्तत्स्वसंविद** इति । तत्—संविद्रूपत्वं सुखादीनां सिद्धम्

कस्मात्? सुखादीनां स्वसंविदः—स्वसंवेदनस्य व्यक्तत्वात्। अतिस्पष्टेयं सुखप्रीतितापादिरूपेण सत्यसति वा शब्दादिविषयसन्निधाने प्रकाशान्तरनिरपेक्षा स्वयंप्रकाशात्मलक्षणा स्वसंवित्तिः। यदेव हि प्रकाशान्तरनिरपेक्षं सातादिरूपतः स्वयं सिद्धम्, तच्चैतन्यं सुखं संवेदनं ज्ञानमित्यादिभिः पर्यायैः कथ्यते। यदि च सुखादीनामन्येन संवेदनेनानुभवादनुभवख्यातिः स्यात्तदा तेषां संवेदनमसातादिरूपं स्यात्, स्वयमतदात्मकत्वात्। यथा योगिनोऽनुमातुश्च परकीयं सुखादि संवेदयतः। अन्यथा तेऽपि योग्यादयः साक्षात्सुखाद्यनुभाविन इवातुरादयः स्युः। योग्यादिवद्वाऽन्येषामप्यनुग्रहोपघातौ न स्यातामविशेषात्। संवेदनस्य च सातादिरूपत्वेऽभ्युपगम्यमाने सिद्धं सुखादेः संविद्रूपत्वम्। इदमेव हि नः सुखं दुःखं च, यत्सातमसातं च संवेदनम्। तस्मान्नानैकान्तिकता हेतोर्नाप्यसिद्धता। बाह्यार्थवादिनां सर्वेषामेव शब्दादिषु संविद्रूपरहितत्वस्य सिद्धत्वात्। अन्यथा विज्ञानवादिमतमेवाङ्गीकृतं स्यात्। तच्चेष्टमेव। नापि विरुद्धता हेतोः सपक्षे भावात्॥ ३६॥

स्यादेतत्—यथा बहिरवस्थितनीलादिसन्निधानादनीलादिरूपमपि संवेदनं नीलादिरूपनिर्भासं भवति, तथा बाह्यसुखाद्युपधानवशादसातादिरूपमपि सातादिरूपमिव लक्ष्यते, तेन संवेदनस्य सातादिरूपत्वेऽपि न सुखादीनां संविद्रूपत्वं सिध्यत्यतो नैकान्तिकता मौलस्य हेतोरित्याशङ्क्याह **एकत्रेत्यादि**।

**एकत्रैव च शब्दादौ भावनाजातिभेदतः।**
**सङ्गादयः संभविनो लक्ष्यन्ते नियताः स्फुटम्॥ ३७॥**

**भावनाजातिभेदत** इति। भावनाः—अभ्यासाः, जातिस्तु—निजा प्रकृतिः, तयोर्भेदो—विशेषः। **सङ्गादय** इति। सङ्गोऽभिलाषः, आदिशब्देन प्रीत्यादयो द्वेषोद्वेगादयो दैन्यावरणादयश्च त्रैगुण्यकार्यगणा गृह्यन्ते। नियता इति चैकाकाराः। तथाहि—भावनाविशेषान्मद्याङ्गनादिषु भावितशुभाशुभादिनिमित्तानां कामुकादीनाम्, जातिविशेषाच्च कुरङ्गकरभादीनां केषांचिदेव प्रतिनियताः प्रीत्यादयः सम्भवन्ति। न सर्वेषाम्, एतच्च शब्दादीनां सुखादिरूपत्वे सति न युक्तम्॥ ३७॥

कस्मादित्याह—**एकवस्त्वनुपातित्व** इत्यादि।

**एकवस्त्वनुपातित्वे चित्रा संवित्प्रसज्यते।**
**अदृष्टादिवशान्नो चेन्न स्याद्वस्त्वनुयायिनी॥ ३८॥**

सर्वेषामेव हि तेषामभिन्नवस्तुविषयत्वान्नीलादिविषयसंवेदनवत्प्रत्येकं चित्रा संविस्प्रसज्येत । स्यादेतद्यद्यपि त्र्यात्मकं वस्तु, तथाऽप्यदृष्टादेर्धर्मादिलक्षणस्य सहकारिणो वशेन कस्यचित्किंचिदेव रूपं प्रतिभासते, न सर्वं सर्वस्येति । आदिशब्देन भावनाजातिभेदजिघृक्षादीनां ग्रहणम् । यद्येवं न स्याद्वस्त्वनुयायिनी—वस्त्वालम्बना सा संविन्न प्राप्नोति, तदाकारशून्यत्वादिति भावः ॥ ३८ ॥

तदेव तदाकारशून्यत्वं दर्शयन्नाह—**त्र्याकार**मिति ।

**त्र्याकारं वस्तुनो रूपमेकाकाराश्च तद्विदः ।**
**ताः कथं तत्र युज्यन्ते भाविन्यस्तद्विलक्षणाः ॥ ३९ ॥**

सत्वरजस्तमसां रूपम् । **एकाकाराश्च तद्विद** इति । तेषां—पुरुषाणां विदः—संवित्तयः प्रत्येकमभिष्वङ्गादिमात्रैकरूपनियमादेकाकाराः संवेद्यन्त इत्यर्थः । **ता** इति—संविदः, **तत्रे**ति—शब्दादौ, **भाविन्य** इति—पारमार्थिक्य इत्यर्थः । कस्मान्न युज्यन्त इत्याह—**तद्विलक्षणा** इति । तदालम्बनवस्तुविलक्षणा इत्यर्थः । प्रयोगः—यद्यदाकारसंवेदनं न भवति न तत्तद्विषयं यथा चक्षुर्ज्ञानं न शब्दविषयम् । त्र्यात्मकवस्त्वाकारशून्याश्च यथोक्ताः संविद इति व्यापकानुपलब्धिरतिप्रसङ्गापत्तिविपर्यये बाधकं प्रमाणम् । **स्यादेत**द्यथा प्रत्यक्षेण गृहीतेऽपि सर्वात्मना शब्दादिके वस्तुनि भावनादिवशेन क्वचिदेव क्षणिकत्वादौ निश्चयोत्पत्तिर्भवति न सर्वत्र, तद्वददृष्टादिवशेनैकाकारा संविद्भविष्यतीति । तदेत**दसम्यक्** । न हि क्षणिकादिविकल्पस्यादि(ल्पास्पदे?)-परमार्थतो वस्तुविषयत्वमस्माकमिष्टम् । सर्वविकल्पातीतत्वाद्वस्तुनः । पारम्पर्येण तु वस्तुनि प्रतिबन्धात्तथाविधवस्तुप्राप्तिहेतुतया तस्य प्रामाण्यम् । प्रीत्यादीनां तु परैर्वस्तुविषयत्वमेव परमार्थत इष्टम् । अन्यथा हि निरालम्बनत्वे सति सुखाद्यात्मनां शब्दादीनामनुभवात्सुखाद्यनुभवख्यातिरित्येतन्न स्यात् । तेषां च प्रीत्यादीनां सविकल्पकत्वादनिश्चितं न किंचिद्रूपमस्तीति सर्वात्मनानुभवख्यातिः स्यात् । इयमेव हि निश्चयानां स्वार्थप्रतिपत्तिर्यत्तन्निश्चयनं नाम ॥ ३९ ॥

यच्चोक्तम्, "प्रसादतापदैन्यादिकार्योपलम्भात्सुखाद्यनुगतत्वं शब्दादीनां सिद्ध"-मिति । तदनैकान्तिकमिति दर्शयन्नाह—**प्रसादोद्वेगे**त्यादि ।

**प्रसादोद्वेगवरणान्येकस्मिन्पुंसि योगिनाम् ।**
**जायन्ते न च तद्रूपः पुमानभिमतः परैः ॥ ४० ॥**

तथा हि कापिलयोगिनां पुरुषं प्रकृतिविभक्तं भावयतां पुरुषमालम्ब्य स्वभ्यस्तयोगानां प्रसादो भवति प्रीतिश्च । अजितयोगानां क्षिप्रतरमपश्यतां उद्वेगः, ये च प्रकृत्या जडमतयस्तेषां वरणमुपजायते । न चासौ पुरुषस्तद्रूपस्त्रिगुणात्मकोऽभीष्टः परैः । तस्मात्प्रसादतापदैन्यादिकार्योपलब्धेरित्यनैकान्तिकमेतत् । सङ्कल्पात्तानि प्रीत्यादीनि भवन्ति, न पुरुषादिति चेत् । एतच्छब्दादिष्वपि समानम् । ततश्च सङ्कल्पमात्रभावित्वे बाह्याः सुखादयो न सिध्यन्ति । सङ्कल्पस्य संविद्रूपत्वात् । अत एव च बाह्यसुखाद्युपधानवशात्संवेदनस्य सातादिरूपत्वमित्येतदपि व्यभिचारि । अन्तरेणापि बाह्यविषयोपधानं पुरुषालम्बनेन प्रीत्यादीनामुत्पत्तिदर्शनात् । यच्चेष्टानिष्टविकल्पादनपेक्षितबाह्यविषयसन्निधानं सुखादिसंवेदनं प्रसिद्धं तत्कथं परोपधानात्स्यात् । मनोऽपि त्रिगुणं तदुपधानाद्भवतीति चेत् । न । तस्यापि यदेव हि प्रकाशान्तरानपेक्षं स्वयं सिद्धमित्यादिना संविद्रूपत्वस्य प्रतिपादितत्वात् । तस्मात्समन्वयादित्यसिद्धो हेतुः ॥ ४० ॥

इदानीं हेतुसिद्धिमभ्युपगम्यानैकान्तिकत्वं प्रतिपादयन्नाह—**सिद्धेऽपीत्यादि ।**

**सिद्धेऽपि त्रिगुणे व्यक्ते न प्रधानं प्रसिध्यति ।**
**एकं तत्कारणं नित्यं नैकजात्यन्वितं हि तत् ॥ ४१ ॥**

यदि नाम व्यक्तं त्रिगुणात्मकं सिद्धं तथापि तस्य यत्तदभीष्टं कारणं प्रधानाख्यं तन्न सिध्यति । तथाभूतेन कारणेन क्वचिदपि हेतोरन्वयासिद्धेरिति भावः । तथाहि—त्रिगुणात्मकमेकं नित्यं व्यापि च तस्य कारणं साधयितुमिष्टम् । न चैवंभूतेन कारणेन क्वचिद्धेतोः प्रतिबन्धः सिद्धः । नापि यदात्मकं कार्यमुपलभ्यते कारणेनावश्यं तदात्मना भवितव्यम् । कार्यकारणयोर्भेदात् । तथाहि—हेतुमत्त्वानित्यत्वाव्यापितादिभिर्धर्मैः समन्विते व्यक्ताख्यं कार्यमिष्यते भवद्भिः, नच तत्कारणस्य ताद्रूप्यमिष्टम्, तस्मादनैकान्तिको हेतुः । धर्मविशेषविपरीतभावनाद्विरुद्धोऽपीति दर्शयन्नाह—**एकं तत्कारण**मित्यादि । एको नित्यस्त्रिगुणात्मकः कारणभूतो धर्मः साधयितुमिष्टः, स च तथाभूतो न सिध्यति, किं तर्हि, विपरीत इति भावः । कस्मादित्याह—**नैकजात्यन्वितं हि** तदिति । हिशब्दो हेतौ । तस्मात्तद्व्यक्ताख्यं कार्यं नैकया त्रिगुणात्मकया स्वात्मभूतया जात्या समन्वितं सिद्धम् । किं तर्हि? अनेकत्वानित्यत्वादिधर्मान्वितमेवोपलभ्यते । यदि हि व्यक्तमेकया यथोक्तया जात्या समन्वितं भवेत्तदा

तत्कारणमपि यथोक्तधर्मविशिष्टं सिध्येत् । यावता कार्यस्यानित्यत्वानेकत्वधर्मान्वयदर्शनात्तत्कारणमपि तथैवानुमीयते । नित्यस्य क्रमाक्रमाभ्यामर्थक्रियाविरोधात् । कारणभेदकृतत्वाच्च कार्यवैचित्र्यस्य । अन्यथा निर्हेतुकत्वप्रसङ्गात् । तस्मान्न नित्यैकरूपप्रधानसिद्धिः । यदि पुनरनित्यानेकरूप एव कारणं प्रधानमिति संज्ञा क्रियेत, तदा नास्ति विवाद इति भावः ॥ ४१ ॥

कस्मात्पुनरेकजात्यन्वितं व्यक्तं न भवतीत्याह—**अयःशलाकाकल्पा**—इत्यादि ।

**अयःशलाकाकल्पा हि क्रमसङ्गतमूर्त्तयः ।**
**दृश्यन्ते व्यक्तयः सर्वाः कल्पनामिश्रितात्मिकाः ॥ ४२ ॥**

यथा ह्ययोमय्यः शलाकाः परस्परमसङ्गतास्तद्वदिमाः शब्दादिव्यक्तयः स्वस्वभावव्यवस्थिततया देशकालशक्तिप्रतिभासादिभेदान्न परस्परमन्वाविशन्ति । एतेनानेकत्वं प्रतिपादितम् । अनित्यत्वप्रतिपादनायाह—**क्रमसङ्गतमूर्त्तय** इति । उत्पादक्रमेण सङ्गता—समालिङ्गिता मूर्त्तिर्यासामिति विग्रहः । कथं तर्हि (क्षि)त्यादिनैकेन रूपेण तथा स एवायमिति च स्थिरेण स्वभावेनानुगता व्यवसीयन्ते भावा इत्याह—**कल्पनामिश्रितात्मिका** इति । मिथ्याविकल्पोऽयमर्थेष्वेकात्मताग्रह इत्यर्थः । एतच्च पश्चात्प्रतिपादयिष्यते क्षणभङ्गादौ ॥ ४२ ॥

एवं तावत्समन्वयादित्यस्य हेतोरसिद्धविरुद्धानैकान्तिकत्वं प्रतिपादितम्, अधुना कुटादिभेदवदिति दृष्टान्तस्य साध्यसाधनधर्मानन्वयत्वं प्रतिपादयन्नाह—**मृद्विकारादय** इत्यादि ।

**मृद्विकारादयो भेदा नैकजात्यन्वितास्तथा ।**
**सिद्धा नैकनिमित्ताश्च मृत्पिण्डादेर्विभेदतः ॥ ४३ ॥**

आदिशब्देन कनकादिविकाराणां च ग्रहणम् । तथेति दूषणान्तरसमुच्चये सादृश्ये वा । नैकजात्यन्विता इत्यनेन साधनधर्मवैकल्यं दर्शितम् । **नैकनिमित्ताश्चेति ।** सिद्धा इति प्रकृतेन सम्बन्धः । अनेन साध्यधर्मानन्वयो दर्शितः । ननु चैकं मृत्पिण्डकनकादि कारणं तेषां सिद्धमेव, तथा मृत्सुवर्णत्वादिजातिश्चैषामेषाऽनुगामिनी दृष्टा, तत्कथमुभयवैकल्यमित्याह—**मृत्पिण्डादेर्विभेदत** इति । नह्येकोऽवयवी मृत्पिण्डादिरस्ति, एकदेशावृतौ सर्वावरणप्रसङ्गात् । नाप्येका जातिः प्रतिव्यक्ति प्रतिभासभेदात् ॥ ४३ ॥

पुनरपि समन्वयादित्यस्य हेतोः स्वतोऽनैकान्तिकत्वमिति प्रतिपादयन्नाह—**चैतन्येत्यादि** ।

**चैतन्याद्यन्वितत्वेऽपि नैकपूर्वत्वमिष्यते ।**
**पुरुषाणाममुख्यं चेत्तदिहापि समं न किम् ॥ ४४ ॥**

तथाहि—चेतनत्वभोक्तृत्वादिभिरपरिमितैर्धर्मैरन्विताः पुमांसोऽभीष्टाः, न च ते तथाविधैककारणपूर्वका भवद्भिरिष्यन्ते । अथापि स्याच्चैतन्याद्यन्वितत्वं पुरुषाणां न मुख्यमिष्टम्, किं तर्हि? गौणम्, यतोऽचैतन्यादिव्यावृत्ताः सर्व एव पुमांसस्तेनार्थान्तरव्यावृत्तिरूपा चैतन्यं जातिस्तदनुगामिनी कल्प्यते, नत्वेका तात्विकी साऽस्तीति । यद्येवं तदमुख्यम्, सुखाद्यन्वितत्वमसत्यपि तथाभूतैककारणपूर्वत्वे पुरुषवदिहापि व्यक्ते किमिति समम्—तुल्यं न कल्प्यते । तस्मादनैकान्तिको हेतुः । पुरुषाणामित्युपलक्षणम् । तथा सुखादयो मूलप्रकृत्यवस्थाभाविनो गुणत्वाचेतनत्वाभोक्तृत्वादिभिरन्विताः, प्रधानपुरुषाश्च नित्यत्वादिभिर्युक्ताः, न च ते तथाभूतैककारणपूर्वका इत्यनैकान्तिक एव ॥ ४४ ॥

एवं तावत्समन्वयादित्ययं हेतुः प्रतिषिद्धः । साम्प्रतं निगमनव्याजेन परिशिष्टहेतुदूषणार्थं दिङ्मात्रमाह—**प्रधानहेत्वभावेऽपीत्यादि** ।

**प्रधानहेत्वभावेऽपि ततः सर्वं प्रकल्पते ।**
**शक्तेर्भेदेन वैचित्र्यं कार्यकारणतादिकम् ॥ ४५ ॥**

तत्र यत्तावदुक्तं "परिमाणाच्छक्तितः प्रवृत्तेः कार्यकारणभावाच्चास्ति प्रधान"मिति । एते त्रयोऽपि हेतवोऽनैकान्तिकाः, साध्यविपर्यये । बाधकप्रमाणानुपदर्शनात् । प्रधानाख्यस्य हेतोरभावेऽप्येषां परिमाणादीनामविरोधात् । तथाहि—यदि तावत्कारणमात्रस्यास्तित्वं साध्यते, तदा सिद्धसाध्यता, न ह्यस्माकं कारणमन्तरेण कार्यस्योत्पादोऽभीष्टः; कारणमात्रस्य च प्रधानमिति संज्ञाकरणे न किंचिद्बाध्यते । अथैवं साध्यते—अस्ति प्रेक्षावत्कारणम्, यदेतन्नियतपरिमाणं व्यक्तिमुत्पादयति, शक्तितश्च प्रवर्त्तत इति । तदाऽनैकान्तिकता, विनाऽपि हि प्रेक्षावता कर्त्रा स्वहेतुसामर्थ्यप्रतिनियमात्प्रतिनियतपरिमाणादियुक्तस्योत्पत्त्यविरोधात् । न चापि प्रधानं प्रेक्षावद्युक्तं तस्याचेतनत्वात् । प्रेक्षायाश्च चैतन्यपर्यायत्वात् । किंच—शक्तितः प्रवृत्तेरित्यनेन यद्यव्यतिरिक्तशक्तियोगि कारणमात्रं साध्यते, तदा सिद्धसाध्यता । अथ व्यतिरिक्तविचित्र-

शक्तियुक्तमेकं नित्यं कारणं तदाऽनैकान्तिकता हेतोः । तथाभूतेन क्वचिदप्यन्वयासिद्धेरसिद्धश्च हेतुः, न हि व्यतिरिक्तशक्तिवशात्कस्यचित्कारणस्य क्वचित्कार्ये प्रवृत्तिः सिद्धा, शक्तीनां स्वात्मभूतत्वात् । यच्चोक्तम्, "अविभागाद्वैश्वरूपस्येति" तदसिद्धम् । निरन्वयविनाशधर्मत्वात्सर्वभावानां क्वचिदपि लयासिद्धेः । तथाहि—लयो भवन्पूर्वस्वभावप्रच्युतौ वा सत्यां भवेदप्रच्युतौ वा, यदि तावत्प्रच्युतौ तदा निरन्वयविनाशप्रसङ्गः, अथाप्रच्युतौ तदा लयानुपपत्तिः, न ह्यविकलमात्मतत्वमनुभवतः कस्यचिल्लयो युक्तोऽतिप्रसङ्गात् । तस्मात्परस्परविरुद्धमिदमविभागो वैश्वरूप्यं चेति । तदेवं प्रधानहेत्वभावेऽपि कारणस्य शक्तिभेदेन हेतुना कार्यस्य परिमाणादिरूपेण वैचित्र्यं कार्यकारणविभागादिश्चोत्पद्यत इत्यनैकान्तिकता हेतूनाम् । आदिशब्देन शक्तितः प्रवृत्तेरित्येतस्य ग्रहणम् । अथवा प्रधानहेत्वभावेऽपीत्यपिशब्दोऽवधारणे । तेनायमर्थो भवति । प्रधानहेत्वभाव एव कारणशक्तिभेदेन हेतुना कार्यस्य परिमाणादिरूपेण वैचित्र्यं(त्र्यस्य ?) कार्यकारणतादेश्चोपपद्यमानत्वाद्विरुद्धता हेतूनामिति । तथाहि —यदि प्रधानं व्यक्तस्य कारणं स्यात् तदा तदात्मत्वेन सर्वमेव विश्वं तत्स्वरूपवदेकमेव द्रव्यं स्यात् । ततश्चैका बुद्धिरहङ्कारपञ्चतन्मात्राणीत्यादिपरिमाणविभागो न स्यात् । तथा च सति निष्परिमाणमेव जगत्स्यात् । तथा कुलालादीनां घटादिकरणे शक्तितः प्रवृत्तिः प्रधानहेत्वभाव उपपद्यते, न तु तद्भावे । यथोक्तं प्राक् "न च शक्तिर्न च क्रिये"ति । कार्यकारणविभागोऽपि प्रधानहेत्वभाव एव सति युक्तः । पूर्वमावेदितं वैश्वरूप्यं च प्रधाने सति नोपपद्यत एव । तन्मयत्वेन सर्वस्य जगतः तत्स्वरूपवदेकत्वप्रसङ्गादित्युक्तम्, ततश्च वैश्वरूप्यमादित एव नास्तीति कुतस्तस्याविभागः स्यादिति ॥ ४५ ॥

## इति प्रकृतिपरीक्षा ।

इदानीमीशव्यापाररहितत्वं प्रतिपादयन्नाह—**सर्वोत्पत्तिमतामित्यादि** ।

**सर्वोत्पत्तिमतामीशमन्ये हेतुं प्रचक्षते ।**
**नाचेतनं स्वकार्याणि किल प्रारभते स्वयम् ॥ ४६ ॥**

अनुत्पत्तिमतामण्वाकाशादीनां नित्यत्वान्न किंचित्कारणमस्तीत्यत उत्पत्तिमतामित्युक्तम् । **ईशमिति** ईश्वरम् । **अन्य** इति नैयायिकादयः । तत्र विशिष्टगुणमात्मान्तरमेव सर्वस्य जगतः कर्तृ सर्वज्ञमीश्वरमिति केचित् । आत्मव्यतिरिक्तं नित्यैकसर्वार्थ-

विषयबुद्ध्युपेततया भिन्नगुणत्वाद्द्रव्यान्तरमेवेत्यपरे । ननु धर्माधर्मपरमाण्वादि जगतः कारणमस्त्येव तत्किमर्थमीश्वरमपरं कारणत्वेन कल्पयन्तीत्यत आह—**नाचेतनमि-त्यादि** । यद्यपि धर्मादि कारणं तथाऽपि तदचेतनत्वादधिष्ठायकमन्तरेण न स्वयं स्वकार्यमारब्धुमुत्सहत इत्यतस्तदधिष्ठायकेन केनचित्कर्त्रा भवितव्यम्, न हि किंचिदचेतनं स्वतन्त्रमधिष्ठायकं दृष्टमिति । प्रयोगः—यदचेतनं तदधिष्ठातारमन्तरेण न स्वकार्यमारभते, यथा मृत्पिण्डदण्डसलिलसूत्रादयः कुम्भकाररहिताः कुम्भम्, अचेतनं च धर्मादीनीति व्यापकविरुद्धोपलब्धिः । तस्माद्योसावधिष्ठाता (स) ईश्वर इति सिद्धम् । न चैवं सति धर्माधर्मादीनां वैयर्थ्यम्, निमित्तकारणत्वादीश्वरस्येति । **स्यादेत**द्यदात्मसमवेतौ धर्माधर्मौ स एवात्माऽधिष्ठाता भविष्यति । तत्किमीश्वरेण परिकल्पितेनेति । **तदसम्यक्** । तस्यात्मनस्तदानीमज्ञत्वात्, यावद्धि तस्य शरीरेन्द्रियादिः कार्यकारणसंघातो नोत्पद्यते तावदयमज्ञ उपलभ्यानपि रूपादीन्विषयान्नोपलभते, कुतोऽनुपलभ्यौ धर्माधर्मावुपलप्स्यत इति । यथोक्तम् "अज्ञो जन्तुरनीशोयमात्मनः सुखदुःखयोः । ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वे"ति ॥ ४६ ॥

तत्राविद्धकर्णोपन्यस्तमीश्वरसाधने प्रमाणद्वयमाह—**यत्स्वारम्भके**त्यादि ।

**यत्स्वारम्भकावयवसन्निवेशविशेषवत् ।**
**बुद्धिमद्धेतुगम्यं तत्तद्यथा कलशादिकम् ॥ ४७ ॥**
**द्वीन्द्रियग्राह्यमग्राह्यं विवादपदमीदृशम् ।**
**बुद्धिमत्पूर्वकं तेन वैधर्म्येणाणवो मताः ॥ ४८ ॥**

तदुक्तम्—"द्वीन्द्रियग्राह्याग्राह्यं विमत्यधिकरणभावापन्नं बुद्धिमत्कारणपूर्वकं स्वारम्भकावयवसंनिवेशविशिष्टत्वात्, घटादिवत्, वैधर्म्येण परमाणव इति । तत्र—द्वाभ्यां दर्शनस्पर्शनेन्द्रियाभ्यां ग्राह्यं महदनेकद्रव्यवत्त्वरूपाद्युपलब्धिकारणोपेतं पृथिव्युदकज्वलनसंज्ञितं त्रिविधं द्रव्यं द्वीन्द्रियग्राह्यम् । अग्राह्यं वाय्वादि, यस्मान्महत्वमनेकद्रव्यवत्त्वं रूपसमवायादिश्चोपलब्धिकारणमिष्यते, तच्च वाय्वादौ नास्ति । यथोक्तम्—महत्त्वादनेकद्रव्यवत्त्वाद्रूपाच्चोपलब्धिः । अद्रव्यवत्त्वात्परमाणाव(द्य ?)नुपलब्धिः । रूपसंस्काराभावाद्वायो(र)नुपलब्धिः । रूपसंस्कारो रूपसमवायः । द्व्यणुकादीनां त्वनुपलब्धिरमहत्त्वा"दिति । अत्र सामान्येन द्वीन्द्रियग्राह्याग्राह्यस्य बुद्धिमत्कारणपूर्वत्वसाधने सिद्धसाध्यता दोषो घटादिषु । उभयसिद्धेः । विवादाभावात् ।

अभ्युपेतबाधा च, अण्वाकाशादीनां तथाऽनभ्युपगमात् । तेषां च नित्यत्वात्प्रत्यक्षादिबाधा । अतस्तदर्थं विमत्यधिकरणभावापन्नग्रहणम् । विविधा मतिर्विमतिर्विप्रतिपत्तिरिति यावत्, अस्या अधिकरणभावापन्नं विवादास्पदीभूतमित्यर्थः । एवंविधे सति शरीरेन्द्रियभुवनादय एव पक्षीकृता इति नाण्वादिषु प्रसङ्गः । कारणमात्रपूर्वत्वेऽपि साध्ये सिद्धसाध्यता माभूदिति बुद्धिमत्कारणग्रहणम् । सांख्यं प्रति बुद्धिसत्त्वानुपपत्तेर्न सिद्धसाध्यता, अव्यतिरिक्ता हि बुद्धिः प्रधानात्सांख्यैरिष्यते । न च तेनैव तदेव तद्भवति । स्वारम्भकाणामवयवानां संनिवेशः प्रचयात्मकः संयोगः । तेन विशिष्टं व्यवच्छिन्नं तद्भावस्तस्मात् । अवयवसन्निवेशविशिष्टत्वं गोत्वादिभिर्व्यभिचारीत्यतः स्वारम्भकग्रहणम् । गोत्वादीनि तु द्रव्यारम्भकावयवसन्निवेशेन विशेष्यन्ते, नतु स्वारम्भकावयवसन्निवेशेनेति । तेन योऽसौ बुद्धिमान् स ईश्वर इति । तदेतत्प्रमाणं यदित्यादिश्लोकद्वयेन निर्दिष्टम् । स्वारम्भकावयवसंनिवेश एव विशेषो—विशेषणं सोऽस्यास्तीति तत्तथोक्तम् । तेन विशिष्टमित्यर्थः । एतेन हेतोर्व्याप्तिर्दर्शिता । पक्षधर्मत्वादि दर्शयन्नाह—**द्वीन्द्रियेत्यादि** । **विवादपद**मिति । विवादाधिकरणापन्नमित्यर्थः ॥ ४७ ॥ ४८ ॥

द्वितीयं च तदुक्तं प्रमाणं बोधयन्नाह—तत्त्वादीनामित्यादि ।

**तत्त्वादीनामुपादानं चेतनावदधिष्ठितम् ।**
**रूपादिमत्त्वात्तन्त्वादि यथा दृष्टं स्वकार्यकृत् ॥ ४९ ॥**

तत्त्वादीनां—शरीरादीनाम्, उपादानं परमाण्वादि चेतनेन कारणेनाधिष्ठितं सत्स्वकार्यकृदिति संबन्धः । रूपादिमत्त्वादिति हेतुः । तन्त्वादीति दृष्टान्तः । यथोक्तम्—"तनुभुवनकरणोपादानानि चेतनावदधिष्ठितानि स्वकार्यमारभन्त इति प्रतिजानीमहे । रूपादिमत्वात्तन्त्वादिवदि"ति ॥ ४९ ॥

उद्योतकारस्तु प्रमाणयति—"भुवनहेतवः प्रधानपरमाणवदृष्टाः स्वकार्योत्पत्तावतिशयबुद्धिमन्तमधिष्ठातारमपेक्षन्ते स्थित्वा प्रवृत्तेस्तन्तुतुर्यादिव"दिति । एतदेव दर्शयति—**धर्माधर्माणव** इत्यादि ।

**धर्माधर्माणवस्सर्वे चेतनावदधिष्ठिताः ।**
**स्वकार्यारम्भकाः स्थित्वा प्रवृत्तेस्तुरितन्तुवत् ॥ ५० ॥**

सुबोधम् ॥ ५० ॥

प्रशस्तमतिस्त्वाह—"सर्गादौ पुरुषाणां व्यवहारोऽन्योपदेशपूर्वकः, उत्तरकालं प्रबुद्धानां प्रत्यर्थनियतत्वात् । अप्रसिद्धवाग्व्यवहाराणां कुमाराणां गवादिषु प्रत्यर्थनियतो वाग्व्यवहारो यथा मात्राद्युपदेशपूर्वक" इति । प्रबुद्धानां प्रत्यर्थनियतत्वादिति । प्रबुद्धानां सतां प्रत्यर्थनियतत्वादित्यर्थः । यदुपदेशपूर्वकः सर्गादौ व्यवहारः स ईश्वरः प्रलयकालेप्यलुप्तज्ञानातिशय इति सिद्धं दर्शयति—**सर्गादावित्यादि** ।

**सर्गादौ व्यवहारश्च पुंसामन्योपदेशजः ।**
**नियतत्वात्प्रबुद्धानां कुमारव्यवहारवत् ॥ ५१ ॥**

सर्गः सृष्टिरुत्पाद इति यावत् । तस्यादिः प्रथमः कालः । शेषं तु सुबोधम् ॥५१॥

तथा अपराण्युद्योतकारोक्तानि प्रमाणानि "बुद्धिमत्कारणाधिष्ठितं महाभूतादिकं व्यक्तं सुखदुःखनिमित्तं भवति । अचेतनत्वात्कार्यत्वाद्विनाशित्वाद्रूपादिमत्त्वात्, वाश्यादिव"दिति । एतानि दर्शयति—**महाभूतादिकमित्यादि** ।

**महाभूतादिकं व्यक्तं बुद्धिमद्धेत्वधिष्ठितम् ।**
**याति सर्वस्य लोकस्य सुखदुःखनिमित्तताम् ॥ ५२ ॥**
**अचेतनत्वकार्यत्वविनाशित्वादिहेतुतः ।**
**वास्यादिवदतस्स्पष्टं तस्य सर्वं प्रतीयते ॥ ५३ ॥**

( बुद्धिमद्धेत्वधिष्ठितम्— ) चेतनावताऽधिष्ठितम् । **अत** इति । यथोक्ताद्धेतुकदम्बकात् । **तस्येति** । ईश्वरस्य सर्वजगद्धेतोः ॥ ५२ ॥ ५३ ॥

अथ सर्वज्ञत्वं कथं तस्य सिद्धं येनासौ निःश्रेयसाभ्युदयकामानां भक्तिविषयतां यायादित्याह—**सर्वकर्तृत्वसिद्धौ चेत्यादि** ।

**सर्वकर्तृत्वसिद्धौ च सर्वज्ञत्वमयत्नतः ।**
**सिद्धमस्य यतः कर्ता कार्यरूपादिवेदकः ॥ ५४ ॥**

तथाचाहुः प्रशस्तमतिप्रभृतयः—सकलभुवनहेतुत्वादेवास्य सर्वज्ञत्वं सिद्धम् । कर्तुः कार्योपादानोपकरणप्रयोजनसंप्रदानपरिज्ञानात् । इह हि यो यस्य कर्त्ता भवति स तस्योपादानादीनि जानीते । यथा कुलालः कुम्भादीनां कर्त्ता तदुपादानं मृत्पिण्डमुपकरणानि च चक्रादीनि प्रयोजनमुदकाहरणादि कुटुम्बिनं च संप्रदानं जानीत इत्येतत्प्रसिद्धम्, तथेश्वरः सकलभुवनानां कर्त्ता स तदुपादानानि परमाण्वादिलक्षणानि तदुपकरणानि धर्माधर्मदिक्कालादीनि व्यवहारोपकरणानि सामान्यविशेषसम-

वायलक्षणानि प्रयोजनमुपभोगं संप्रदानसंज्ञाकांश्च पुरुषान् जानीत इति । अतः सिद्धमस्य सर्वज्ञत्वमिति । **कार्यरूपादिवेदक** इति । कार्यस्य ये रूपादयः—स्वभावादयः, आदिशब्देनोपादानादीनां ग्रहणम्, तेषां वेदक इति समासः । याजकादेराकृतिगणत्वात्, कर्मण्यणं वा विधाय स्वार्थिकः को विधेयः । शेषं सुबोधम् ॥ ५४ ॥

तथा—अपरं प्रमाणकदम्बकं तैरुक्तम् । विचित्रोदयप्रस्पन्दास्पदानास्पदं विमत्यधिकरणभावापन्नं द्वितीयादिप्रमाणपञ्चकव्यतिरिक्तप्रमाणान्तरावच्छेद्यम् । वस्तुत्वादिभ्यो रूपादिवत् । वैधर्म्येण कूर्मरोमादय इति । तत्र विचित्रोदयो गुणपदार्थ उच्यते, विचित्र उदयोऽस्येति कृत्वा, प्रस्पन्दः कर्मपदार्थः, तयोरास्पदं समवायिकारणं द्रव्यम्, अनास्पदं गुणादयः पञ्च समवायपर्यन्ताः, द्वितीयादिप्रमाणपञ्चकमनुमानमारभ्याभावपर्यन्तं, तद्व्यतिरिक्तं प्रमाणान्तरं प्रत्यक्षं, शेषं सुबोधम् । अयमपरो हेतुस्तैरुक्तः । सदाद्यविशेषास्कन्दितानास्कन्दितं विमत्यधिकरणभावापन्नं कस्यचित्प्रत्यक्षं सत्त्वाद्रूपादिवदिति । तत्र सदादयः षडविशेषाः—सदनित्यं द्रव्यवत्कार्यं कारणं सामान्यविशेषवदिति द्रव्यगुणकर्मणां विशेषाः, तैरास्कन्दितमाक्रान्तं यथासंभवं द्रव्यगुणकर्मात्मकं पदार्थत्रयमनास्कन्दितं सामान्यादि । शेषं सुगमम् । तदेतत्प्रमाणकदम्बकं दर्शयति—**विमते**त्यादि ।

**विमतेरास्पदं वस्तु प्रत्यक्षं कस्य चित्स्फुटम् ।**
**वस्तुसत्त्वादिहेतुभ्यः सुखदुःखादिभेदवत् ॥ ५५ ॥**

तदत्रासिद्धतेत्यादिनोत्तरपक्षमारभते ।

**तदत्रासिद्धता हेतोः प्रथमे साधने यतः ।**
**सन्निवेशो न योगाख्यः सिद्धो नावयवी तथा ॥ ५६ ॥**

तत्र यदचेतनं तदधिष्ठातारमन्तरेण न स्वकार्यमारभत इत्यादौ प्रयोगे साध्यविपर्यये हेतोर्बाधकप्रमाणाभावात्संदिग्धविपक्षव्यावृत्तिकतया हेतोरनैकान्तिकतेति भावः । यश्चायं स्वारम्भकावयवसंनिवेशविशिष्टत्वादितिहेतुः प्रथमे साधनप्रयोगे, सोऽसिद्धः, कथमित्याह—**यत** इत्यादि । अवयवसंनिवेशशब्देन हि संयोगविशेषोऽभिप्रेतः, तद्विशिष्टत्वं चावयव्याख्यस्य द्रव्यस्य, तयोरपि विशेषणविशेष्ययोरसिद्धत्वाद्द्विध हेत्वसिद्धिः ॥ ५६ ॥

कथं पुनर्द्वयमसिद्धमित्याह—**दृश्यत्वे**नेत्यादि ।

**दृश्यत्वेनाभ्युपेतस्य द्वयस्यानुपलम्भनात् ।**
**साधनानन्वितं चेदमुदाहरणमप्यतः ॥ ५७ ॥**

तत्र संक्षेपेण स्वभावानुपलम्भाख्यमेव प्रमाणं बाधकमाह । विस्तरेण षट्पदार्थ-परीक्षायामनयोर्दूषणमभिधास्यते—**द्वयस्यापीति** । संनिवेशावयविसंमतस्य । तथाहि—संनिवेशो दृश्यत्वेनाभ्युपेतः, "संख्यापरिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे कर्म च रूपिसमवायाचाक्षुषाणी"ति वचनात् । अवयवी च दृश्यत्वेनेष्टः, "महत्यनेकद्रव्यवत्त्वाद्रूपाच्चोपलब्धि"रिति वचनात् । न रूपादिव्यतिरेकेणापरः संयोगोऽवयवी च दृश्यत्वेनेष्टो बुद्धौ प्रतिभासत इति । अत उपलब्धिलक्षणप्राप्तस्यानुपलब्धेः शशविषाणवदसद्व्यवहारविषयता । न च परमाणूनामतीन्द्रियत्वाद्रूपादीनामनुपलब्धिप्रसङ्गः, विशिष्टानामिन्द्रिय(गम्य)त्वाभ्युपगमादतीन्द्रियत्वासिद्धेः । अत एव संयोगावयविनोरभावात्साधर्म्यदृष्टान्तो घटः साधनधर्मविकल इति दर्शयति—**साधनानन्वितमित्यादि** ॥ ५७ ॥

एवं तावद्विशेषणविशेष्यासिद्ध्या स्वरूपतोऽसिद्धत्वं हेतोः प्रतिपादितमिदानीमाश्रयैकदेशासिद्ध्याऽप्यसिद्धत्वमिति दर्शयति—**चक्षुरित्यादि** ।

**चक्षुःस्पर्शनविज्ञानं भिन्नाभमुपजायते ।**
**एकालम्बनता नास्ति तयोर्गन्धादिवित्तिवत् ॥ ५८ ॥**

अत्र हि द्विविधो धर्मी निर्दिष्टो द्वीन्द्रियग्राह्यमग्राह्यं च । तत्र द्वीन्द्रियग्राह्यो न कश्चिद्धर्मी सिद्धः । तथाहि—चक्षुर्ज्ञानं स्पर्शज्ञानं चोभयं यथाक्रमं नीलादिरूपमात्रप्रतिभासित्वात्कर्कशादिस्प्रष्टव्यभेदमात्रप्रसिद्धत्वाच्च भिन्नाभमुपजायते । ततश्च तयोश्चक्षुःस्पर्शनविज्ञानयोरेकविषयता नास्ति भिन्नाभत्वाद्गन्धरसादिवित्तिवत् । प्रयोगोऽयम्—भिन्नप्रतिभासे ज्ञाने ते नैकविषये, यथा गन्धरसविज्ञाने, भिन्नाभे च चक्षुःस्पर्शनविज्ञाने, इति व्यापकविरुद्धोपलब्धिः । आभासभेदेप्येकविषयत्वे रूपशब्दादिवित्तीनामप्येकविषयत्वप्रसङ्ग इत्येतदत्र बाधकं प्रमाणम् ॥ ५८ ॥

यदि तर्हि नैकविषयताऽनयोस्तत्कथमिदं प्रतिसन्धानज्ञानं भवति । यः प्रकाशे मया दृष्टो घटः स एवान्धकारे स्पृश्यत इति, तस्मादनुमानबाधितेयं प्रतिज्ञा, तत्रेदमनुमानमुद्योतकारोक्तम्—विवादविषयापन्नौ दर्शनस्पर्शनप्रत्ययावेकविषयौ प्रतिसन्धीयमानत्वान्नीलोत्पलप्रत्ययवदिति तत्राह—**तत्सामर्थ्येत्यादि** ।

**तत्सामर्थ्यसमुद्भूतकल्पनानुगतात्मकम् ।**
**प्रतिसन्धानविज्ञानं समुदायं व्यवस्यति ॥ ५९ ॥**
**जलानलादि नैवेदं द्वीन्द्रियग्राह्यमस्त्यतः ।**
**आश्रयासिद्धताऽसिद्धेर्यथाऽभिहितधर्मिणः ॥ ६० ॥**

तयोः—वर्णस्प्रष्टव्यमात्रप्रतिभासिनोश्चक्षुःस्पर्शनविज्ञानयोः सामर्थ्यम्—शक्तिः, ततः समुद्भूतः कल्पनानुगत आत्माऽस्येति विग्रहः । तदनेन प्रतिसन्धानप्रत्ययस्याप्रत्यक्षत्वं प्रतिपादितं भवति । अनेकस्मिन्नेकत्वाध्यवसायित्वेनास्य भ्रान्तित्वात्, कल्पनानुगतात्मत्वाच्च । नापि प्रमाणान्तरम्, पूर्वज्ञानपरिच्छिन्नविषयावसायित्वेन गृहीतग्रहणात्, भ्रान्तत्वाच्च । तस्मात्प्रतिसंधीयमानत्वादित्यनैकान्तिको हेतुः । यदि हि प्रतिसन्धानप्रत्ययस्य प्रामाण्यं सिद्धं भवेत्तदा न स्याद्धेतोरनैकान्तिकता, यावता येषु रूपादिषु साधारणा(:) सामर्थ्यप्रकाशनाय घटादिप्रज्ञप्तयः कृतास्तेषु यथास्वं चक्षुःस्पर्शनाभ्यामनुभूतेषूत्तरकालं यथापरिदृष्टविषयमनुरूपसङ्केताहितसंस्कारभेदमेकत्वाध्यवसायि प्रकृतिभ्रान्तं स्मार्त्तमिदं ज्ञानमुत्पद्यते । तथा हि—तथा समन्वाहारे तत्र वर्णोऽपि नीलादिः प्रतिभासते । न च स्पर्शनविज्ञाने वर्णप्रतिभासनं युक्तम्, तस्य चक्षुर्विज्ञानविषयत्वात् । तस्माद्यदेतदाचार्यैरुक्तम्—"चक्षुःस्पर्शनाभ्यां यथास्वं भिन्नं विषयमुपलभ्यान्यदेव तत्सहचरं समुदायविषयं स्मार्त्तभेदज्ञानमुत्पद्यत" इति तदेव न्याय्यम् । **ननु** यदि समुदायः प्रागनुभूतः स्यात्तदा स्मार्त्तमिदं युक्तम्, यावता न रूपादिव्यतिरिक्तः समुदायो भवतामभीष्टो येनासावनुभूयेत, रूपादिषु चानुभूतेषु रूपादिरिति स्यात्, न घट इति, न चाननुभूते स्मृतिर्युक्ता, तत्कथमिदं समुदायविषयं स्मार्त्तं ज्ञानमुत्पद्यते । **नैतदस्ति** । न हि रूपादिभ्योऽन्यः समुदायः प्रागनुभूत इत्युच्यते, येनैतत्स्यात्, किं तु त एव रूपादयः सलिलादिधारणार्थक्रियाकारिणः समुदायो घट इति व्यपदिश्यन्ते । तेषु च प्रत्येकमिन्द्रियज्ञानानुभूतेषु यथासङ्केताहितमिदं घट इति स्मरणमुत्पद्यत इत्यभिधीयते । अथवा कल्पितः समुदायः कल्पनाज्ञानात्मकत्वात्स्वसंविदाऽनुभूयत एवेति किमिति तस्य स्मरणं नोत्पद्यत इति । अतः स्वारम्भकावयवसंनिवेशविशिष्टत्वादित्यस्य हेतोराश्रयासिद्धता कस्मादित्याह—**असिद्धेर्यथाऽभिहितधर्मिण** इति । यथाऽभिहितस्य द्वीन्द्रियग्राह्यधर्मिणोऽसिद्धेः कारणादाश्रयैकदेशासिद्ध्या हेतोरसिद्धिः ॥ ५९ ॥ ६० ॥

तदेवं विशेष्यविशेषणाश्रयाणामसिद्धेस्त्रिविधा हेतोरसिद्धतोक्ता, चतुर्थमप्याचार्यनिर्दिष्टमसिद्धप्रकारमाह—सन्निवेशेत्यादि ।

**सन्निवेशविशिष्टत्वं यादृग्देवकुलादिषु ।**
**कर्त्तर्यनुपलब्धेऽपि यद्दृष्टौ बुद्धिमद्गतिः ॥ ६१ ॥**
**तादृगेव यदीक्ष्येत तन्वगादिषु धर्मिषु ।**
**युक्तं तत्साधनादस्माद्यथाऽभीष्टस्य साधनम् ॥ ६२ ॥**

यो हि संनिवेशविशेषो बुद्धिमत्पुरुषव्यापारपूर्वकत्वेन देवकुलादिष्वन्वयव्यतिरेकाभ्यां लोके प्रसिद्धो यस्य दर्शनाददृष्टतत्कर्तृकस्याऽपि बुद्धिमत्कारणावगतिर्भवति, तथाभूतो यदि तनुतरुगिरिप्रभृतिषु साध्यधर्मिषु हेतुत्वेनोपादीयते, तदा स्याद्भवतामभिमतसाध्यसिद्धिः । नह्यन्वयव्यतिरेकाभ्यां सुविवेचितं कार्यं कारणं व्यभिचरति, तस्याहेतुकत्वप्रसंगात् । न च तथाभूतसन्निवेशविशेषस्तरुगिरिप्रभृतिषु प्रसिद्धः, केवलं संनिवेश इति प्रलापमात्रं प्रसिद्धम् । न च प्रकृत्या परस्परमर्थान्तरत्वेन व्यवस्थितोऽपि धर्मः शब्दमात्रेणाभेदी हेतुत्वेनोपादीयमानोऽभिमतसाध्यसिद्धये पर्याप्तो भवति । साध्यविपर्ययेऽपि तस्य भावाविरोधात् । यथा वल्मीके धर्मिणि कुम्भकारकृतत्वसिद्धये मृद्विकारमात्रं हेतुत्वेनोपादीयमानमिति समुदायार्थः । अवयवार्थस्तूच्यते । **यद्दृष्टौ बुद्धिमद्गति**रिति । यस्य सन्निवेशस्य दृष्टौ सत्यां बुद्धिमतः कारणस्य गतिरनुमितिर्भवतीत्यर्थः । **तन्वगादि**ष्विति । तनुः—शरीरम्, अगाः—पर्वता वृक्षा वा, आदिशब्देन सागरादयो गृह्यन्ते । **यथाऽभीष्टस्ये**ति । बुद्धिमत्पूर्वकत्वस्य । **साधन**मिति । सिद्धिः ॥ ६१ ॥ ६२ ॥

कथं युक्तमित्याह—अन्वयेत्यादि ।

**अन्वयव्यतिरेकाभ्यां यत्कार्यं यस्य निश्चितम् ।**
**निश्चयस्तस्य तद्दृष्टाविति न्यायो व्यवस्थितः ॥ ६३ ॥**
**सन्निवेशविशेषस्तु नैवामीषु तथाविधः ।**
**न तु तर्वादिभेदेषु शब्द एव तु केवलः ॥ ६४ ॥**
**तादृशः प्रोच्यमानस्तु सन्दिग्धव्यतिरेकताम् ।**
**आसादयति वल्मीके कुम्भकारकृतादिषु ॥ ६५ ॥**

**यत्कार्य**मिति—धूमादि । **यस्ये**ति—अनलादेः । **निश्चयस्तस्ये**ति—अनलादे-

रेव। तद्दृष्टाविति—धूमादिकार्यदृष्टौ सत्याम्। यद्येवमिहापि तथैव भविष्यतीत्याह—**सन्निवेशविशेषस्त्वित्यादि**। यस्तर्हि शब्दसामान्यतः सिद्धः सन्निवेशः स एव हेतुर्भविष्यतीति चेदाह—**तादृश** इत्यादि। तादृशः—शब्दमात्रेणाभेदी। **कुम्भकारकृताविवेति**। मृद्विकारत्वमात्रमिति शेषः। तदेवं सन्निवेशविशेषस्यासिद्धिः, सन्निवेशमात्रस्य त्वनैकान्तिकत्वमिति प्रतिपादितं भवति ॥ ६३ ॥ ६४ ॥ ६५ ॥

नन्वित्यादिना परो जात्युत्तरमुद्भावयति।

**ननु जात्युत्तरमिदं धर्मभेदविकल्पनात्।**
**सामान्यमेव कार्यादि साधनं प्रतिपादितम् ॥ ६६ ॥**

कार्यसमं जात्युत्तरमेतत्। तथाहि कृतकत्वादनित्यः शब्द इत्युक्ते जातिवादी चोदयति। किमिदं घटादिगतं कृतकत्वं हेतुत्वेनोपादीयते। किं वा शब्दगतमथोभयगतमिति। आद्ये पक्षे हेतोरसिद्धिः। न ह्यन्यधर्मोऽन्यत्र विद्यते। द्वितीयेऽपि साधनविकलो दृष्टान्तः। तृतीयेऽप्येतावेव दोषाविति। एतच्च कार्यसमं नाम जात्युत्तरमिति प्रतिपादितम्। यथोक्तम्—"कार्यत्वान्यत्वलेशेन यत्साध्यासिद्धिदर्शनं तत्कार्यसम"मिति। यतः कार्यत्वसामान्यमेव गृहीत्वाऽनित्यत्वानुमानमिष्यते न विशेषम्। तेन सामान्येन साधनेऽभीष्टे धर्मविशेषविकल्पेन यदुत्तरं तत्कार्यसमं जात्युत्तरमिति व्यवस्थितम्। एतच्च धर्मभेदेन विकल्पनमतो जात्युत्तरमिति ॥ ६६ ॥

**अतद्रूपे**त्यादिना परिहरति।

**अतद्रूपपरावृत्तं वस्तुमात्रमनित्यताम्।**
**तादात्म्यात्साधयत्येष न न्यायोऽस्तीह साधने ॥ ६७ ॥**

युक्तमेतत्। यतः कृतकत्वमात्रमनित्यतां साधयति। तस्य तादात्म्यलक्षणप्रतिबन्धसद्भावादिति। इह तु स्वारम्भकावयवसन्निवेशविशिष्टत्वमात्रसाधने नायं न्यायोऽस्ति। सन्निवेशसामान्यस्य विपर्यये बाधकाभावात्प्रतिबन्धासिद्धेः, यस्य तदुत्पत्तिलक्षणः प्रतिबन्धः सिद्धः, यदुपलम्भादक्रियादर्शिनोऽपि कृतबुद्धिर्भवति तस्यासिद्धेरिति भावः ॥ ६७ ॥

अथ तदुत्पत्त्याप्रतिबन्धविशेषं परित्यज्य सामान्यमेव लिङ्गमुच्यते तदा व्यभिचारितेति दर्शयन्नाह—**धूमे**त्यादि।

**धूमात्मा धवलो दृष्टः पावकाव्यभिचारवान्।**
**सिताभिधेयतामात्रान्न हिमादपि तद्गतिः ॥ ६८ ॥**

कथं तर्हि कार्यसमं जात्युत्तरमुदाहृतमित्याह—**सामान्येत्यादि** ।

**सामान्यप्रतिबन्धे तु विशेषाश्रयणी यदा ।**
**चोदना क्रियते तत्र जात्युत्तरमुदाहृतम् ॥ ६९ ॥**

साध्येन सह सामान्येन साधनधर्मस्य विपक्षे बाधकप्रमाणवृत्त्या प्रतिबन्धे सिद्धेऽपि सति यत्र धर्मविशेषमाश्रित्य चोदना क्रियते, तज्जात्युत्तरम्, न चेह सामान्येन प्रतिबन्धः सिद्धः, यस्य तु सन्निवेशविशेषप्रतिबन्धोऽस्ति सोऽसिद्ध इति न जात्युत्तरमेतत् ॥ ६९ ॥

अथाप्रतिबद्धमपि सामान्यं गमकं स्यात्, तदातिप्रसङ्गः स्यादिति दर्शयन्नाह—**गोशब्देत्यादि** ।

**गोशब्दवाच्यतामात्राद्दिगादीनां विषाणिता ।**
**संसिद्ध्येदन्यथा ह्येष न्यायो नाश्रीयते यदि ॥ ७० ॥**

एवं हि स्वर्गदिग्वचनलोचनकिरणकुलिशभूपयसामपि गोशब्दाभिधेयतामात्राद्बाहुलेयादिवद्विषाणवत्तानुमानप्रसङ्गः ॥ ७० ॥

स्यादेतत्कृतकत्वादिवदस्यापि सन्निवेशविशिष्टत्व(त्वेन ?) बुद्धिमत्कारणपूर्वकत्वमेव, प्रतिबन्धोऽस्त्येवेत्याह—**यदि त्वित्यादि** ।

**यदि तु प्रतिबन्धोऽस्मिन्प्रमाणे नोपपद्यते ।**
**तदत्र युक्तितः सिद्धे न विवादोऽस्ति कस्यचित् ॥ ७१ ॥**

किं तु स एव प्रतिबन्धो न सिद्ध इति दर्शयन्नाह—**किंत्वित्यादि** ।

**किन्तु नित्यैकसर्वज्ञनित्यबुद्धिसमाश्रयः ।**
**साध्यवैकल्यतोऽव्याप्तेर्न सिद्धिमुपगच्छति ॥ ७२ ॥**

न हि भवतां बुद्धिमत्पूर्वकत्वमात्रं साधयितुमिष्टं किं तु नित्य एकः, सर्वज्ञाया बुद्धेर्नित्याया आश्रयः सकलभुवनहेतुर्बुद्धिमानीश्वराभिधानो यः पदार्थः, तत्पूर्वकत्वमस्य साधयितुमिष्टम् । तस्यैव विवादास्पदीभूतत्वात्, स च तथाभूतो न सिद्धिमुपगच्छति । कस्मात् ? साध्यवैकल्यतोऽव्याप्तेः । घटादेः साधर्म्यदृष्टान्तस्य यथोक्तसाधर्म्यवैकल्यात्तथाभूतेन साध्यधर्मेण हेतोर्व्याप्त्यसिद्धेः । न हि यथोक्तसाध्यधर्मेण कचिद्दृष्टान्ते हेतोः प्रतिबन्धोऽस्तीति यावत् ॥ ७२ ॥

तदेव दर्शयन्नाह—तथाहीत्यादि ।

**तथाहि सौधसोपानगोपुराट्टालकादयः ।**
**अनेकानित्यविज्ञानपूर्वकत्वेन निश्चिताः ॥ ७३ ॥**

किंच न केवलमसिद्धोऽनैकान्तिकश्च हेतुः, अपि तु विरुद्धोऽपीति दर्शयति—अत एवेत्यादि ।

**अत एवायमिष्टस्य विघातकृदपीच्य (ष्य?) ते ।**
**अनेकानित्यविज्ञानपूर्वकत्वप्रसाधनात् ॥ ७४ ॥**

**अत एवेति** । साध्यविपरीतधर्मव्याप्तितः । न केवलं पूर्वोक्तेन विधिनाऽसिद्धोऽनैकान्तिकश्चेत्यपिशब्देनाह ॥ ७४ ॥

ननु च विपर्यये प्रतिबन्धसद्भावे सति विरुद्धः स्यात् । अस्य च बुद्धिमत्पूर्वकमात्रेऽपि न प्रतिबन्धोऽस्ति, तत्कथं तद्विशेषे स्यादित्याह—**बुद्धिमद्धेतुमात्रे** हीत्यादि ।

**बुद्धिमद्धेतुमात्रे हि प्रतिबन्धस्त्वयोदितः ।**
**द्वितीये पुनरस्माभिर्विस्पष्टमभिधीयते ॥ ७५ ॥**

त्वयेश्वरवादिना बुद्धिमद्धेतुमात्रे प्रतिबन्धो वर्णितः । अन्यथा सामान्येनापि प्रतिबन्धासिद्धौ कथमीश्वरहेतुकत्वं भावानां सिद्ध्येत् । तस्माद्भवदभिप्रायतो बुद्धिमत्पूर्वकत्वमात्रस्य सिद्धस्य सिद्धत्वमभ्युपेत्य भवदभिमतात्साध्यविशेषाद्यदेतद्द्वितीयमनित्यानेकविज्ञानपूर्वकत्वलक्षणमिष्टविपरीतसाध्यं तस्मिन्द्वितीये साध्यविशेषेऽस्माभिर्हेतोर्विस्पष्टं प्रतिबन्धोऽभिधीयते ॥ ७५ ॥

कथमसौ विस्पष्टमभिधीयत इत्याह—**क्रमाक्रमे**त्यादि ।

**क्रमाक्रमविरोधेन नित्या नो कार्यकारिणः ।**
**विषयाणां क्रमित्वेन तज्ज्ञानेष्वपि च क्रमः ॥ ७६ ॥**

न हीश्वरादयो नित्यभावाः कार्यकारिणः, नित्यस्य क्रमयौगपद्याभ्यामर्थक्रियाविरोधात् । तस्मादनित्या एवार्थक्रियाकारिणः । ते च प्रतिक्षणमपरापरस्वभावा भवन्तीति सिद्धमनित्यत्वमनेकत्वं च बुद्धिमतः कर्तुः । यदपीश्वरस्य नित्यैकबुद्ध्युपेतत्वं प्रतिज्ञातं तदप्यनुमानविरुद्धमिति दर्शयन्नाह—**विषयाणा**मित्यादि ॥ ७६ ॥

**क्रमभावी**त्यादिना प्रमाणयति ।

**क्रमभावीश्वरज्ञानं क्रमिविज्ञेयसङ्गतेः ।**
**देवदत्तादिविज्ञानं यथा ज्वालादिगोचरम् ॥ ७७ ॥**

यत्क्रमिविज्ञेयविषयं ज्ञानं तत्क्रमभावि, यथा देवदत्तादिविज्ञानं ज्वालादिगोचरम्, क्रमिविज्ञेयविषयं चेश्वरज्ञानमिति स्वभावहेतुः । प्रसङ्गसाधनं चेदम् । तेनाश्रयासिद्धता हेतोर्नाशङ्कनीया । सामान्यादिपदार्थविषयं देवदत्तादिविज्ञानं साधनधर्मविकलमिति ज्वालादिगोचरमुदाहृतम् । किं पुनरत्र बाधकं प्रमाणम् ? उच्यते—यदि क्रमवता विषयेण तदीश्वरज्ञानं स्वनिर्भासमुपजन्येत, तदा सिद्धमेव क्रमित्वम् । अथ न जन्यते, तदा प्रत्यासत्तिनिबन्धनाभावान्न तज्जानीयात् । विषयमन्तरेणापि भवतः प्रामाण्यं वाऽभ्युपगतं हीयेत । नष्टाजाते च विषये निर्विषयत्वप्रसङ्गः स्यादिति । इदमत्र बाधकं प्रमाणम् ॥ ७७ ॥

यच्चोक्तं "वैधर्म्येणाणवो मताः" इति तदपि वैधर्म्योदाहरणमनिवृत्तसाध्यधर्मकमित्यादर्शयन्नाह—अणुसंहतिमात्रमित्यादि ।

**अणुसंहतिमात्रं च घटाद्यस्माभिरिष्यते ।**
**तत्कारकः कुलालादिरणूनामेव कारकः ॥ ७८ ॥**
**न व्यावृत्तस्ततो धर्मः साध्यत्वेनाभिवाञ्छितः ।**
**अणूदाहरणादस्माद्वैधर्म्येण प्रकाशितात् ॥ ७९ ॥**

अवयविनो विस्तरेण प्रतिषेत्स्यमानत्वात् प्रतिषिद्धत्वाच्चेत्यतः कुलालादेरणूनामेव कारकत्वं प्रसिद्धम् । अतो बुद्धिमत्पूर्वकत्वं साध्यधर्मोऽणुभ्यो वैधर्म्येण प्रकाशितेभ्यो न व्यावृत्त इत्यव्यावृत्तसाध्यधर्मता दोषो वैधर्म्यदृष्टान्तस्य ॥ ७८ ॥ ७९ ॥

स्यादेतत्—यद्यस्माभिर्विशेषः साधयितुमिष्टः स्यात्तदा साध्यविकलता साधर्म्यदृष्टान्तस्य पूर्वोक्ता स्यात्, यावता सामान्येन बुद्धिमत्पूर्वकत्वमात्रं साध्यते, तस्मिंश्च सिद्धे तर्वादीनां सामर्थ्यादीश्वरः कर्ता सिद्ध्यति, न हि घटादिवत्तेषां कुलालादिः कर्त्ता संभवति, तेन सामान्यस्य विशेषविशिष्टत्वात्, तर्वादिषु चान्यस्य कर्तुरसंभाव्यमानत्वात्, सामर्थ्याद्विशेषपरिग्रहमन्तरेणापीश्वर एव कर्त्ताऽमीषां सिध्यतीत्याह—बुद्धिमत्पूर्वकत्वेत्यादि ।

**बुद्धिमत्पूर्वकत्वं च सामान्येन यदीष्यते ।**
**तत्र नैव विवादो नो वैश्वरूप्यं हि कर्मजम् ॥ ८० ॥**

एवं हि सिद्धसाध्यतादोषः । कस्मादित्याह—वैश्वरूप्यं हीत्यादि—वैश्वरूप्यम्—सत्वभाजनलोकस्य वैचित्र्यम्, कर्मजमिति । साधारणासाधारणशुभाशुभकर्मजनितम् । अतः शुभाशुभकर्मकारिणः पुरुषा बुद्धिमन्तोऽस्य कारणतामापद्यन्त इति सिद्धसाध्यता ॥ ८० ॥

विशेषेण तर्हि साध्यत इति चेदाह—**नित्येत्यादि** ।

**नित्यैकबुद्धिपूर्वत्वसाधने साध्यशून्यता ।**
**व्यभिचारश्च सौधादेर्बहुभिः करणेक्षणात् ॥ ८१ ॥**

एतच्च पूर्वमुक्तमपि निगमनार्थं पुनरभिहितम् । एका बुद्धिरस्येत्येकबुद्धिः, नित्यश्चासावेकबुद्धिश्चेति विग्रहः । यद्वा—नित्यैका बुद्धिरस्येति समासः । **साध्यशून्यतेति** । साधर्म्यदृष्टान्तस्येति शेषः । **व्यभिचारश्चेति** । हेतोरित्यध्याहारः । कथमित्याह ? **सौधेत्यादि** ॥ ८१ ॥

यच्चोक्तं तर्वादीनामित्यादि; तत्राह—**एतदेवेत्यादि** ।

**एतदेव यथायोग्यमवशिष्टेषु हेतुषु ।**
**योज्यं दूषणमन्यच्च किञ्चिन्मात्रं प्रकाश्यते ॥ ८२ ॥**

तत्रापि हि रूपादिमत्त्वादित्यादिसाधनेष्वेतदेव हि यथासंभवं दूषणं वाच्यम् । **एतदेवेति** । असिद्धत्वं, प्रतिबन्धाभावाद्व्यभिचारः, सति प्रतिबन्धे विरुद्धत्वं, साध्यवैकल्यम्, सामान्येन सिद्धसाध्यतेत्यादि । तथाहि—तत्रापि यादृशं रूपादिमत्त्वं चेतनावदधिष्ठितं तादृशं तर्वादिषु न सिद्धम्, रूपादिमत्त्वमात्रस्य प्रतिबन्धासिद्धेर्व्यभिचारः, प्रतिबन्धाभ्युपगमे सति इष्टविपरीतसाधनाद्विरुद्धत्वम्, साधर्म्यदृष्टान्तस्य साध्यविकलता, नित्यैकचेतनाधिष्ठितत्वेन साध्यधर्मेणान्वयासिद्धेः, सामान्येन सिद्धसाध्यता, विशेषेण व्यभिचारो घटादिष्वन्यथादर्शनादिति । एवमन्येष्वपि हेतुषु योज्यम् ॥ ८२ ॥

यच्च स्थित्वा प्रवृत्तेरिति साधनमुक्तं तत्राधिकं दूषणमाह—**स्थित्वेत्यादि** ।

**स्थित्वा प्रवृत्तिरणवादेर्न सिद्धा क्षणभङ्गतः ।**
**व्यभिचारश्च तेनैव तस्यापि क्रमवृत्तिता ॥ ८३ ॥**

सर्वभावानामुदयसमनन्तरापवर्गितया क्षणमात्रमपि न स्थितिरस्तीति कुतः स्थित्वा प्रवृत्तिर्भविष्यति, तस्मात्प्रतिवाद्यसिद्धो हेतुः । अनैकान्तिकश्च तेनैवेश्वरेण, यत ईश्वरः क्रमवत्सु कार्येषु स्थित्वा प्रवर्त्तते । अथ च नासौ चेतनावदधिष्ठितोऽनवस्थाप्रसङ्गात् । अथाचेतनत्वे सतीति सविशेषणो हेतुः क्रियते, यथा प्रशस्तमतिना कृतः, तथाऽपि संदिग्धविपक्षव्यावृत्तिकतयाऽनैकान्तिकत्वमनिवार्यमेव । यदेव हि विशेषणं विपक्षाद्धेतुं निवर्त्तयति तदेव न्याय्यम्, यत्पुनर्विपक्षे सन्देहं न व्यावर्तयति तदुपात्तमप्यसत्कल्पमेव । पूर्वोक्तश्चासिद्धतादिदोषः सविशेषणत्वेऽपि तदवस्थ एव ॥ ८३ ॥

यच्चोक्तं सर्गादौ व्यवहारश्चेत्यादि, तत्राह—**प्रलय** इत्यादि ।

**प्रलये लुप्तविज्ञानस्मृतयः पुरुषा न नः ।**
**आभास्वरादिसम्भूतेस्तत एवेह संभवात् ॥ ८४ ॥**

उत्तरकालं प्रबुद्धानामित्येतद्विशेषणमसिद्धम्, तथाहि—नास्मन्मतेन प्रलयकाले प्रलुप्तज्ञानस्मृतयो वितनुकरणाः पुरुषाः सन्तिष्ठन्ते, किन्त्वाभास्वरादिषु स्पष्टज्ञानातिशययोगिषु देवनिकायेषूत्पद्यन्ते; ये तु प्रतिनियतनिरयादिविपाकसंवर्त्तनीयकर्माणस्ते लोकधात्वन्तरेषूत्पद्यन्त इति विवर्त्तकालेऽपि तत एवाभास्वरादेश्च्युत्वेहालुप्तज्ञानस्मृतय एव संभवन्ति । तस्मादुत्तरकालं प्रबुद्धानामिति विशेषणमसिद्धम् । अनैकान्तिकश्च हेतुः, सन्दिग्धविपक्षाव्यावृत्तिकत्वात् । किंचान्योपदेशपूर्वकत्वमात्रे साध्ये सिद्धसाध्यता, अनादेर्व्यवहारस्य सर्वेषामेवान्योपदेशपूर्वकत्वस्येष्टत्वात् । अथेश्वरलक्षणपुरुषोपदेशपूर्वकत्वं साध्यते, तदाऽनैकान्तिकत्वम् । अन्यथाऽपि व्यवहारसंभवाद्दृष्टान्तस्य साध्यविकलता । एतच्च पूर्वमेव सामान्यं दूषणमुक्तम् ॥ ८४ ॥

विरुद्धश्च हेतुरभ्युपेतबाधा च प्रतिज्ञाया इति दर्शयन्नाह—**विमुखस्योपदेष्टृत्व**मित्यादि ।

**विमुखस्योपदेष्टृत्वं श्रद्धागम्यं परं यदि ।**
**वैमुख्यं वितनुत्वेन धर्माधर्मविवेकतः ॥ ८५ ॥**

यदीश्वरोपदेशपूर्वकत्वं व्यवहारस्य संभवेत्तदा स्यादविरुद्धता हेतोः, यावताऽसौ विमतमुखत्वादुपदेष्टा न युक्तः । तच्च विमुखत्वं वितनुत्वेन—शरीरविरहादित्यर्थः । तच्च विमततनुत्वमस्य कथं सिद्धमित्याह—**धर्माधर्मविवेकत** इति । शरीरकारणधर्माधर्मविरहादित्यर्थः । तथाचोद्योतकारेणोक्तम् । "यथा बुद्धिसत्तायामीश्वरस्य प्रमाणसंभवो नैवं धर्मादिसत्त्वे प्रमाणमस्ती"ति तस्मादीश्वरस्योपदेष्टृत्वासंभवात्तदुपदेशकत्वं व्यवहारस्य न सिद्ध्यति, किं त्वीश्वरव्यतिरिक्तान्यपुरुषोपदेशपूर्वकत्वमत इष्टविघातकारित्वाद्विरुद्धो हेतुः । अथेश्वरस्योपदेष्टृत्वमङ्गीक्रियते, तदा विमुखत्वमभ्युपेतं हीयत इत्यभ्युपेतबाधा । महाभूतादिकं व्यक्तमित्यादौ तु प्रयोगे हेतूनां पूर्ववदनेकान्तिकत्वं विपक्षे बाधकप्रमाणाभावात्, सामान्येन सिद्धसाध्यता, विशेषेण दृष्टान्तस्य साध्यविकलतेति योजनीयम् ॥ ८५ ॥

एवं विस्तरेणेश्वरसाधकानि प्रमाणानि निराकृत्य साम्प्रतं व्याप्तिदोषोद्भावनमुखेन तद्बाधकं प्रमाणं स्वपक्षसिद्ध्यर्थमुपदर्शयितुमाह—**अनुमानविरोधे**त्यादि ।

**अनुमानविरोधश्च व्याप्तेः सर्वत्र साधने ।**
**न विरुद्धेन धर्मेण व्याप्तिर्हेतोः प्रकल्पते ॥ ८६ ॥**

सर्वत्र यथोक्ते साधने साध्येन या हेतोर्व्याप्तिस्तस्या अनुमानविरोधो वक्ष्यमाणः। अथ प्रतिज्ञायाः कस्मादनुमानविरोधो नोद्भाव्यते ? यदि प्रतिज्ञा साधनाङ्गं स्यात्तदा तद्दोषोद्भावनं स्यात्, यावता साक्षात्पारम्पर्येण वाऽसौ न साध्यसिद्धेरङ्गभावं प्रतिपद्यते, ततश्च साधनदोषाभिधाने प्रस्तुते यत्प्रतिज्ञादोषोद्भावनं तददोषोद्भावनं वादिनो निग्रहस्थानं स्यात्, तस्मान्न साधनप्रयोगेषु प्रतिज्ञादोषो वाच्यः । यत्र तु क्वचित्प्रतिज्ञाविरोध उद्भाव्यते, तत्र तन्मुखेन व्याप्तेरेव तद्विघटनं क्रियत इति ग्रहीतव्यम् । यद्वा—साधनप्रयोगादन्यत्र तद्द्रष्टव्यम् । अथ व्याप्तिकालेऽपि कथमनुमानविरोधो भवतीत्याह—**न विरुद्धे**नेत्यादि । **विरुद्धे**नेति । प्रमाणव्याहतेन तस्याऽसंभवादेव न युक्ता व्याप्तिः, न ह्यसता व्याप्तिरवकल्प्यत इति यावत् ॥ ८६ ॥

किं तदनुमानं येन व्याप्तिर्बाध्यत इत्याह—**नेश्वरो जन्मिना**मित्यादि ।

**नेश्वरो जन्मिनां हेतुरुत्पत्तिविकलत्वतः ।**
**गगनाम्भोजवत्सर्वमन्यथा युगपद्भवेत् ॥ ८७ ॥**

यदुत्पत्तिविकलं न तत्कस्यचित्कारणम्, यथा गगनाम्भोजम्, उत्पत्तिविकलश्चेश्वर इति व्यापकविरुद्धोपलब्धिः । प्रसङ्गसाधनं चेदम्, तेनाश्रयासिद्धता न चोदनीया । **सर्वमन्यथा युगपद्भवे**दिति । अप्रतिबद्धसामर्थ्यकारणत्वादेककालाभिमतकार्यग्रामवत्सर्वं युगपद्भवेदित्यर्थः । एतदत्रबाधकं प्रमाणम्, अथवाऽर्थकथनमात्रमेतत् । एवं तु प्रसङ्गसाधनं कर्त्तव्यम् । यदविकलकारणं तद्भवत्येव । यथाऽन्त्यावस्थाप्राप्तायां सामग्र्यामविकलकारणो भवन्नङ्कुरः । अविकलकारणं च सर्वमीश्वरहेतुकं जगदिति युगपद्भवेत् । **स्यादेतत्**—नेश्वर एव केवलं कारणमपि तु धर्मादिसहकारिकारणान्तरमपेक्ष्य करोति, निमित्तकारणत्वादीश्वरस्य, तेन धर्मादेः कारणान्तरस्य वैकल्यादविकलकारणत्वमसिद्धमिति । **तदेतदसम्यक्** । यदि हि तस्य सहकारिभिः कश्चिदुपकारिभिः कश्चिदुपकारः कर्त्तव्यो भवेत्, तदा तस्य सहकारिणि व्यपेक्षा, यावता नित्यत्वात्परैरनाधेयातिशयस्य न किंचित्तस्य सहकारिभ्यः प्राप्तव्यमस्तीति

किमिति तांस्तथाभूताननुपकारिणः सहकारिणोऽपेक्षेत । किं च येऽपि ते सहकारिणस्तेऽपि सर्व एवेश्वरस्यायत्तजन्मतया नित्यं समवहता एवेति कथमसिद्धता हेतोः । न चानैकान्तिकता, अविकलकारणत्वहानिप्रसङ्गात्, अविकलकारणस्याप्यनुत्पत्तौ सर्वदैवानुत्पत्तिप्रसङ्गोऽविशेषात् । उद्योतकरस्त्वाह—यद्यपि नित्यमीश्वराख्यं कारणमविकलं भावानां संनिहितम् । तथाऽपि न युगपदुत्पत्तिरीश्वरस्य, बुद्धिपूर्वकारित्वात् । यदीश्वरसत्तामात्रेणैवाबुद्धिपूर्वं भावानामुत्पादकः स्यात्तदा स्यादेतच्चोद्यम् । यदा तु बुद्धिपूर्वकं करोति तदा न दोषः, तस्य स्वेच्छया कार्येषु प्रवृत्तेः । अतोऽनैकान्तिकतैव हेतोरिति । तदेतदयुक्तम् । न हि कार्याणां कारणस्येच्छाभावाभावापेक्षया प्रवृत्तिनिवृत्ती भवतः, येनाप्रतिबद्धसामर्थ्येऽपीश्वराख्ये कारणे सदा सन्निहिते तदीयेच्छाऽभावान्न प्रवर्त्तन्त इति स्यात् । किं तर्हि? कारणगतसामर्थ्यभावाभावानुविधायिनो भावाः । तथाहि—इच्छावतोऽपि कर्तुरसमर्थान्नोत्पद्यन्ते, समर्थाच्च बीजादेरनिच्छावतोऽपि समुत्पद्यन्ते । तत्र यदीश्वराख्यं कारणं कार्योत्पादकालवदप्रतिहतशक्ति सदैवावस्थितम्, भावास्तत्किमिति तदीयामनुपकारिणीं तामिच्छामपेक्षन्ते, येनोत्पादकालवद्युगपत्त उत्पद्येरन् । एवं हि तैरविकलकारणत्वमात्मनो दर्शितं भवेत्, यदि युगपद्भवेयुः । न चापीश्वरस्य परैरनुपकार्यस्य काचिदपेक्षाऽस्ति, येनेच्छामपेक्षेत । अपि च—बुद्धिव्यतिरेकेण नान्येच्छाऽस्ति, बुद्धिश्चेश्वरस्य भवद्भिर्नित्यैकरूपाऽभीष्टा, ततश्च बुद्धिपूर्वकारित्वेऽपीश्वरस्य किमिति भावानां युगपदुत्पादो न भवति । ईश्वरवत्तद्बुद्धेरपि सदा सन्निहितत्वात् । अथाप्यनित्या तस्य बुद्धिरङ्गीक्रियते, तथाऽपीश्वरसत्तामात्रभावित्वात्तस्या ईश्वरवत्सदाभाव एवेति, स एव दोषः । तस्माद्बुद्धिमत्वादिति विशेषणमकिंचित्करमेवेति नानैकान्तिकता हेतोः । न चापि विरुद्धता सपक्षे भावात् न चैवं भवति, तस्माद्विपर्ययः । प्रयोगः—यद्यदा न भवति, न तत्तदानीमविकलकारणम्, यथा कुशूलस्थितबीजावस्थायामनुत्पद्यमानोऽङ्कुरः । न भवति चैकपदार्थोत्पादकाले सर्वं विश्वमिति, व्यापकानुपलब्धिः । न च सिद्धसाध्यता, ईश्वरस्य कारणत्वे सति विकलकारणत्वानुपपत्तेः प्रसाधितत्वात् ॥ ८७ ॥

अपरमपि प्रमाणमाह—ये वा क्रमेणेत्यादि ।

**ये वा क्रमेण जायन्ते ते नैवेश्वरहेतुकाः ।**
**यथोक्तसाधनोद्भूता जडानां प्रत्यया इव ॥ ८८ ॥**

**तेषामपि तदुद्भूतौ विफला साधनाभिधा ।**
**नित्यत्वादचिकित्स्यस्य नैव सा सहकारिणी ॥ ८९ ॥**

यथोक्तेभ्यः स्वारम्भकावयवसन्निवेशविशिष्टत्वादिभ्यः साधनेभ्य उद्भूता इष्टसाध्यधर्मिविषया जडानामीश्वरकारणाभिनिवेशिनां प्रत्ययाः—निश्चया इवेत्यर्थः । ननु यथोक्तदोषदुष्टत्वान्नैतेभ्य इष्टे साध्ये प्रत्ययाः समुत्पद्यन्त इति न दृष्टान्तधर्मिसिद्धिः । सत्यमेतत् । अत एव जडानामित्युक्तम् । जडानां हि साधनाविवेकाक्षमतया साधनाभासेभ्योऽपि तेषां प्रत्ययाः समुत्पद्यन्त एव । नन्वेवमपि साध्यविकलो दृष्टान्तः, तेषामपि जडप्रत्ययानामीश्वरस्य निमित्तकारणत्वेनेष्टत्वादित्यत आह—**तेषामपी**त्यादि । तेषामपि—जडप्रत्ययानाम्, **तदुद्भूता**विति । ईश्वरादुद्भूताविष्यमाणायाम्, विफला साधनाभिधा—साधनाभिधानं व्यर्थं स्यात् । ईश्वरादेव तेषामुत्पत्तेरिति भावः । ननु साधनाभिधां सहकारिणीमपेक्ष्य तेषामीश्वरो जनको भविष्यति न केवलस्तेनासौ विफला न भविष्यतीत्यत आह—**नित्यत्वा**दित्यादि । यद्यसौ साधनाभिधा तस्येश्वरस्यासमर्थं स्वभावमपनीय समर्थमादधीत, तदा स्यात्सा तस्य सहकारिणी, यावता नित्यत्वादीश्वरोऽनुत्पाद्यानिवर्त्त्यस्वभावतया न केनचित्किंचित्स नीयत इति न साधनाभिधा तस्यासौ सहकारिणी युक्ता ॥ ८८ ॥ ८९ ॥

अपि च—यथा परिदृष्टसामर्थ्यसाधनादिकारणव्यतिरेकेणापरिदृष्टसामर्थ्यस्यापीश्वरस्य कारणभावे कल्प्यमानेऽतिप्रसङ्गो भवतां प्राप्नोति, यतस्तमपीश्वरं परिकल्प्यापरमपि ढेट्क्षकादिकं (?) कल्पनीयमेव, विशेषाभावादिति दर्शयन्नाह—**येष्वि**त्यादि ।

**ये तु सत्सु भवद्दृष्टमसत्सु न कदाचन ।**
**तस्यान्यहेतुताक्लृप्तावनवस्था कथं न ते ॥ ९० ॥**

भवद्दृष्टं यदित्युपस्कारः । **अन्यहेतुताक्लृप्ता**विति । यथा परिदृष्टसामर्थ्येभ्यो हेतुभ्योऽन्यो हेतुस्तद्भावोऽन्यहेतुता, तस्याः क्लृप्तिः—कल्पनेति विग्रहः ॥ ९० ॥

यदुक्तं सर्वकर्तृत्वसिद्धौ चेत्यादि तत्राह—**कर्तृत्वे**त्यादि ।

**कर्तृत्वप्रतिषेधाच्च सर्वज्ञत्वं निराकृतम् ।**
**बोद्धव्यं तद्बलेनैव सर्वज्ञत्वोपपादनात् ॥ ९१ ॥**

सर्वकर्तृत्वबलेनासौ सर्वज्ञो भवद्भिरिष्यते, तेन तन्निराकरणात्सर्वज्ञत्वमपि तस्यायत्नतो निराकृतमेव ॥ ९१ ॥

अभ्युपेत्य साधनानामदुष्टत्वं दूषणान्तरमाह—यथोक्तेत्यादि।

**यथोक्तदोषदुष्टानि माभूवन्साधनानि वा।**
**तथाऽपि कर्तुर्नैकत्वं व्यभिचारोपदर्शनात्॥ ९२॥**
**एककर्तुरसिद्धौ च सर्वज्ञत्वं किमाश्रयम्।**

यथोक्ता दोषा अनुमानविरोधपर्यन्ताः। अयमत्र समुदायार्थः। यद्यपि तनुगिरिप्रभृतीनामेभ्यः साधनेभ्यो बुद्धिमान्कर्त्ता सिद्ध्यति। तथाऽप्यसौ य एवैकस्य हेतुः स एवान्यस्यापीति न निश्चित एवेति प्रतिकार्यं भिन्नस्यापि कर्तुः संभाव्यमानत्वात्सौधादेश्चैकस्यापि बहुभिः करणेक्षणादतो नैकः कर्त्ता प्रतिपादयितुं शक्यते, यावच्चैकः कर्त्ता न सिद्धस्तावत्कुतः सर्वज्ञत्वसिद्धिरिति। अत्र **प्रशस्तमतिरेककर्तृत्वसिद्धये** प्रमाणयति। "एकाधिष्ठाना ब्रह्मादयः पिशाचान्ताः परस्परातिशयवृत्तित्वात्, इह येषां परस्परातिशयवृत्तित्वं तेषामेकायत्तता दृष्टा, यथेह लोके गृहग्रामनगरदेशाधिपतीनामेकस्मिन्सार्वभौमे नरपतौ, तथा च भुजगरक्षोयक्षप्रभृतीनां परस्परातिशयवृत्तित्वम्, तेन मन्यामहे तेषामप्येकस्मिन्नीश्वरे पारतन्त्र्य"मिति। तत्र यद्येत ईश्वराख्येनाधिष्ठिता इत्ययमर्थः साधयितुमिष्टस्तदाऽनैकान्तिकता। विपर्यये बाधकप्रमाणाभावात्। प्रतिबन्धासिद्धेः। दृष्टान्तस्य च साध्यविकलता। अथाधिष्ठायकमात्रेण साधिष्ठानेति साध्यते, तदा सिद्धसाध्यता, यत इष्यत एवास्माभिर्भगवता संबुद्धेन सकललोकचूडामणिना सर्वमेव जगत्कारुण्यवशादधिष्ठितम्। यत्प्रभावादद्याप्यभ्युदयनिःश्रेयससंपदमासादयन्ति साधवः। इदं चापरं तेनैव साधनमुक्तम्। "सप्तभुवनान्येकबुद्धिनिर्मितानि, एकवस्त्वन्तर्गतत्वात्। एकावसथान्तर्गतापवरकवत्। यथैकावसथान्तर्गतानामपवरकाणां सूत्रधारैकबुद्धिनिर्मितत्त्वं दृष्टं तथैकस्मिन्नेव भुवनेऽन्तर्गतानि सप्तभुवनानि। तस्मात्तेषामप्येकबुद्धिनिर्मितत्वं निश्चीयते। यद्बुद्धिनिर्मितानि चैतानि स भगवान्महेश्वरः सकलभुवनैकसूत्रधार" इति। तदत्र हेतुरसिद्धः, नैकं भुवनमावसथादि वाऽस्ति, व्यवहारलाघवार्थं बहुष्वियं संज्ञा कृता। अत एव दृष्टान्तोऽपि साधनविकलः। एकसौधान्तर्गतानामपवरकादीनामनेकसूत्रधारघटितत्वदर्शनाच्चानैकान्तिको हेतुः। एवमन्येष्वपि साधनेषु यथायोगं दूषणं वाच्यम्॥ ९२॥

यच्चोक्तं विमतेरास्पदं वस्त्वित्यादि। तत्राह—**तत्सिद्धौ साधनमि**त्यादि।

**तत्सिद्धौ साधनं प्रोक्तं जैमनीयेषु राजते॥ ९३॥**

## इतीश्वरपरीक्षा।

यदि सामान्येनास्ति कश्चित्सर्वज्ञ इति साध्यते, तदा नास्मान्प्रतीदं भवतां साधनं राजते । सिद्धसाध्यतादोषात् । किंतु ये सर्वज्ञापवादिनो जैमिनीयास्तेष्वेव शोभते । अत्रेश्वराख्यः सर्वज्ञः साध्यते, तदा प्रतिबन्धासिद्धेर्हेतोरनैकान्तिकता, दृष्टान्तस्य साध्यविकलतेति । अतो नास्मान्प्रति साधनमेतद्राजत इति भावः । यच्चापि विचित्रोदयेत्यादि धर्मिविशेषणमुपात्तं तस्य न कश्चिदुपयोगोऽस्ति । केवलं परव्यामोहनाय स्वप्रक्रियाघोषणमिदं क्रियते भवद्भिः । तथाहि—विना धर्म्यादिविशेषणेनैवंविधेन यदि साधनमसिद्धतादिदोषरहितं तदा भवत्येवाभिमतसाध्यसिद्धिः । अथासिद्धतादिदोषदुष्टं साधनम्, तदैवंविधविशेषणोपादानेऽपि न साध्यसिद्धिरस्तीति, सर्वथा व्यर्थमेव विशेषणम् । यत्पुनर्विपक्षाद्धेतुं व्यावर्त्तयति तदेव विशेषणं न्याय्यम् । किंचाश्रयासिद्धो हेतुः । न हि यथोक्तविशेषणविशिष्टो धर्मी प्रसिद्धोऽस्ति प्रतिवादिनः, तस्मान्न शास्त्रप्रसिद्धो धर्मी कर्त्तव्यः ॥ ९३ ॥

## इतीश्वरपरीक्षा ।

उभयव्यापाररहितत्वप्रतिपादनार्थमाह—**प्रकृतीश्वरयो**रित्यादि ।

**प्रकृतीश्वरयोरेवं हेतुत्वप्रतिषेधनात् ।**
**प्रत्येकं सहितं कर्तृ नोभयं जन्मिनामिदम् ॥ ९४ ॥**

तत्र केचित्साङ्ख्या आहुः—न प्रधानादेव केवलादमी कार्यभेदाः प्रवर्तन्ते, तस्याचेतनत्वात् । न ह्यचेतनोऽधिष्ठायकमन्तरेण स्वकार्यमारभमाणो दृष्टः । न च पुरुषोऽधिष्ठायको युक्तस्तस्य तदानीमज्ञत्वात् । तथा हि—बुद्ध्यध्यवसितमेवार्थं पुरुषश्चेतयते । बुद्धिसंसर्गाच्च पूर्वमसावज्ञ एव, न जातु कंचिदर्थं विजानाति । न चाविज्ञातमर्थं शक्तः कश्चित्कर्तुमिति नासौ कर्त्ता । तस्मादीश्वर एव प्रधानापेक्षः कार्यभेदानां कर्त्ता, न केवलः । न हि देवदत्तादिः केवलः पुत्रं जनयति नापि केवलः कुलालो घटं करोतीति । तदेतदपि प्रत्येकं प्रकृतीश्वरयोर्हेतुत्वनिषेधात्सहितमपि नेदमीश्वरप्रधानाख्यमुभयं जन्मिनाम्—उत्पत्तिमताम्, कर्तृ—जनकम्' इति सिद्धम् ॥ ९४ ॥

ननु यदि नाम प्रत्येकमनयोः कर्तृत्वं निषिद्धम्, तथाऽपि सहितयोरनिषिद्धमेव, न हि केवलानां चक्षुरादीनां चक्षुर्ज्ञानोत्पत्तिं प्रति सामर्थ्याभावे सहितानामपि न भवतीत्याशङ्क्याह—**साहित्य**मित्यादि ।

**साहित्यं सहकारित्वादेतयोः कल्पिते च यत् ।**
**तत्स्यादतिशयाधानादेकार्थक्रिययाऽपि वा ॥ ९५ ॥**
**न युक्ता कल्पनाऽऽद्यस्य निर्विकारतया तयोः ।**
**न द्वितीयस्य कार्याणां यौगपद्यप्रसङ्गतः ॥ ९६ ॥**

साहित्यं नाम सहकारित्वं तच्च द्विविधम्, परस्परातिशयाधानाद्वा स्यादेकार्थकारित्वाद्वा । तत्र न तावदाद्यस्यातिशयाधानलक्षणस्य सहकारित्वस्य कल्पना युक्ता, कस्मात् ? तयोरीश्वरप्रधानयोर्नित्यत्वेन निर्विकारत्वात् । नापि द्वितीयस्य, कल्पना युक्तेति प्रकृतेन संबन्धः । कस्मात् ? कार्याणां यौगपद्यप्रसङ्गात् । अविकलाप्रतिहतसामर्थ्यस्येश्वरप्रधानाख्यकारणस्य सदा सन्निहितत्वेनाविकलकारणात् । अत्र च पूर्ववद्यदविकलकारणमित्यादि प्रसङ्गसाधनं वाच्यम् ॥ ९५ ॥ ९६ ॥

**अथोच्यत** इत्यादिना परमतेन यदविकलकारणमित्यस्य हेतोरसिद्धतामुद्भावयति ।

**अथोच्यते प्रधानस्य त्रिरूपत्वं व्यवस्थितम् ।**
**तत्रायं रजसा युक्तः सर्गहेतुर्महेश्वरः ॥ ९७ ॥**
**उद्भूतवृत्तिसत्त्वं तु यदा संश्रयते पुनः ।**
**तदा सर्वस्य लोकस्य स्थितेर्याति निमित्तताम् ॥ ९८ ॥**
**उद्भूतशक्तिरूपेण तमसा युज्यते यदा ।**
**प्रलयं सर्वजगतस्तदा किल करोत्ययम् ॥ ९९ ॥**
**रजःसत्वादिरूपादि तदेवं सहकारिणः ।**
**क्रमेणैवास्य वर्तन्ते कार्याणां नाक्रमस्ततः ॥ १०० ॥**

यद्यपि कारणद्वयमेतन्नित्यसन्निहितम् । तथाऽपि क्रमेणैवाऽमी कार्यभेदाः प्रवर्त्तिष्यन्ते, यत ईश्वरस्य प्रधानगतास्त्रयो गुणाः सत्वादयः सहकारिणः, तेषां च क्रमवृत्तित्वात्तत्कार्येष्वपि क्रमो भवति । तथा हि—यदोद्भूतवृत्तिना रजसा युक्तो भवति महेश्वरस्तदा सर्गहेतुः प्रजानां भवति, प्रसवकार्यत्वाद्रजसः । यदा तु सत्त्वं समुद्भूतवृत्ति संश्रयते तदा लोकानां स्थितिकारणं भवति, सत्वस्य स्थितिहेतुत्वात् । यदा तु तमसोद्भूतशक्तिना समायुक्तो भवति तदा प्रलयं नाशं सर्वजगतः करोति, तमसः प्रत्ययहेतुत्वात् यथोक्तम्—रजोजुषे जन्मनि सत्त्ववृत्तये स्थितौ प्रजानां प्रलये तमःस्पृशे । अजाय सर्गस्थितिनाशतत्रिणे त्रयीमयाय त्रिगुणात्मने नमः ॥ इति । किलशब्दोऽसंभावनायाम् ॥ ९७ ॥ ९८ ॥ ९९ ॥ १०० ॥

**इहोच्यत** इत्यादिना प्रतिविधत्ते ।

**इहोच्यते तयोरेकक्रियाकाले समस्ति किम् ।**
**तदन्यकार्यनिष्पत्तिसामर्थ्यं यदि वा न तत् ॥ १०१ ॥**
**यद्यस्ति सर्गकालेऽपि द्वयमप्यपरं भवेत् ।**
**एवमन्यस्य सद्भावे द्वयमन्यत्प्रसज्यते ॥ १०२ ॥**

**तयोरिति** । प्रकृतीश्वरयोः । **एकक्रियाकाल** इति । सर्गस्थितिप्रलयानामन्यतमस्यैकस्य क्रियाकाले तदपरकार्यद्वयोत्पादनसामर्थ्यं किमस्त्युत नास्तीति विकल्पद्वयम् । तत्र यद्यस्ति तदा सर्गकालेष्वविकलकारणत्वादपरं कार्यद्वयं स्थितिप्रलयात्मकं भवेदुत्पादवत् । एवं स्थितिकालेऽप्युत्पादविनाशौ प्राप्नुतः । प्रलयकाले च स्थित्युत्पादौ स्याताम् । न चैवं युक्तम् । न हि परस्परपरिहारेणावस्थितानामेकत्र धर्मिण्येकदा सद्भावो युक्तः ॥ १०१ ॥ १०२ ॥

स्यादेतत्तदेककार्योत्पादकाले तयोः प्रकृतीश्वरयोरपरकार्यद्वयोत्पादनाय रूपान्तरं न सन्निहितमिति, तेन तदानीं तयोर्न प्रसङ्ग इत्याह—**न हीत्यादि** ।

**न हि तत्पररूपेण पुनरन्यस्य कारकम् ।**
**स्वरूपं च तदेवास्य तत्क्रियाविरतिः कुतः ॥ १०३ ॥**

**तदिति** । प्रकृतीश्वराख्यं कारणम्—**अन्यस्येति** । पाश्चात्त्यस्य कार्यद्वयस्य । न पररूपेण, किं तर्हि ? स्वरूपेणैव कारणमिति भावः ॥ १०३ ॥

स्यादेतद्यद्यपि तत्पररूपेण न कारणं तथाप्येककार्योत्पादकाले परिशिष्टकार्यद्वयोत्पत्तये सामर्थ्यमस्य नास्ति । तेन कार्यद्वयस्य तदानीमनुत्पाद इत्याह—**तत्सामर्थ्येत्यादि** ।

**तत्सामर्थ्यवियोगे तु नैव तज्जनकं भवेत् ।**
**अन्यदा शक्तिशून्यत्वाद्वियदम्भोरुहादिवत् ॥ १०४ ॥**

**अन्यदेति** । अभिमतकार्यारम्भकाले ॥ १०४ ॥

स्यादेतद्यद्यपि प्रधाने सर्वा शक्तिः सन्निहिता, तथाऽपि योद्भूतवृत्तिर्भवति । सैव कारणतां प्रतिपद्यते, नान्या, तेन यौगपद्यं कार्याणां न भविष्यतीत्याह—**उत्कटमित्यादि** ।

**उत्कटं शक्तिरूपं च यदि तन्मात्रकारणम् ।**
**सर्वदा तद्भवेद्धेतोर्नित्यरूपस्य सन्निधेः ॥ १०५ ॥**

इदं हि सर्वा(त्वा?)दीनामुत्कटं रूपं न तावन्नित्यं युक्तं वक्तुम्, कादाचित्कत्वात्। ततश्चास्य भावः कदाचित्प्रकृतीश्वरादेव कारणादन्यतो वा हेतोः स्वतन्त्रो वा स्यादिति त्रयो विकल्पाः। तत्र प्रथमे पक्षे तदुत्कटं रूपं सर्वदा भवेत्, प्रकृतीश्वराख्यस्य हेतोर्नित्यरूपत्वेन सदा सन्निहितत्वात् ॥ १०५ ॥

द्वितीयेऽपि पक्षे प्राह—**न चापर**मित्यादि ।

**न चापरंपरैरिष्टमतो नैवान्यतोऽपि तत् ।**
**नापि स्वतन्त्रमेवेदं कादाचित्कत्वसंभवात् ॥ १०६ ॥**

**न हि** प्रकृतीश्वरव्यतिरिक्तमपरं कारणमिष्टम्, येनान्यतस्तदुद्भवेत् । नापि तृतीयः पक्षो युक्त इत्याह—**नापी**त्यादि ॥ १०६ ॥

अथ स्वातन्त्र्ये सति कादाचित्कत्वस्य को विरोध इत्याह—**स्वत** इत्यादि ।

**स्वतो भावे ह्यहेतुत्वं स्वक्रियाया विरोधतः ।**
**अपेक्षया हि भावानां कादाचित्कत्वसंभवः ॥ १०७ ॥**

स्वतः—स्वभावात्, भावे—जन्मनि सति, अहेतुकत्वं नियमतो भवेत् । ननु स्वभावादुत्पद्यमानः कथमहेतुको भवति यावता स्वभाव एव तस्य हेतुः प्रतीयत इत्याह—**स्वक्रियाया विरोधत** इति स्वस्मिन्स्वरूपे क्रियाया हेतुभावस्य विरोधात्। स्यादेतद्भवत्वहेतुकत्वम्, तथाऽपि किमिति कादाचित्कत्वं न युज्यत इत्याह—**अपेक्षया ही**त्यादि । स्वभावान्तरायत्तवृत्तयो हि भावाः कादाचित्का युक्ताः । परभावाभावप्रतिबद्धत्वात्तेषां सदसत्तयोः । ये पुनरपरायत्तवृत्तयस्तेषामपेक्षणीयस्य कस्यचिदभावात्किमिति कदाचिद्भवेयुः ॥ १०७ ॥

अथ स्वक्रियाविरोध एव कथं सिद्ध इत्याह—**तथा ही**त्यादि ।

**तथा हि न ह्यभावस्य स्वात्मनि व्यापृतिर्मता ।**
**निष्पन्नस्यात्मनोऽप्यस्यामवस्थायां प्रसिद्धितः ॥ १०८ ॥**

आत्मानं हि जनयन्स्वभावो निष्पन्नो वा न वा । न तावन्निष्पन्नः । तस्यामवस्थायामात्मनोऽपि निष्पन्नरूपाव्यतिरेकित्वेन प्रसिद्धेर्निष्पन्नत्वात्, स्वभाववत् । ततश्च जन्यासंभवात्कुत्रासौ भावो व्याप्रियेत ॥ १०८ ॥

नाप्यनिष्पन्न इति दर्शयति—**अनिष्पन्ने**त्यादि ।

**अनिष्पन्नात्मतत्वस्तु नैव व्याप्रियते क्वचित् ।**
**सर्वशक्तिवियुक्तत्वादाकाशकमलादिवत् ॥ १०९ ॥**

## इत्युभयपरीक्षा ।

कचिदिति सामान्यवचनम् । न स्वात्मभूते नापि परभूत इत्यर्थः । सति व्यापारे निष्पन्नात्सतत्व एव स्यात् । एतावन्मात्रलक्षणत्वान्निष्पन्नस्येति भावः ॥ १०९ ॥

## इत्युभयपरीक्षा ।

आदिशब्दोपात्तस्वभाववादिवादमल्पवक्तव्यतया क्रममनाश्रित्यैव निराकुर्वन्नाह—सर्वेत्यादि ।

**सर्वहेतुनिराशंसं भावानां जन्म वर्ण्यते ।**
**स्वभाववादिभिस्ते हि नाहुः स्वमपि कारणम् ॥ ११० ॥**

स्वभाववादस्तु यद्यप्यादिशब्देनाहत्यनोपात्तः । तथाऽपि स्वभाववादिन(म?)तोपादानात्सूचित एव । तत्र ये स्वत एव भावा जायन्त इति वर्णयन्ति । ते स्वक्रियाया विरोधत इत्यादिना निरस्ताः । साम्प्रतं स्वभाववादिनो निरस्यन्ते । त एवमाहुर्न स्वतो नापि परतो भावानां जन्म किं तर्हि ? सर्वहेतुनिराशंसम्—स्वपरकारणनिरपेक्षमित्यर्थः । ननु ये स्वत एव भावा भवन्तीति वर्णयन्ति, तेभ्य एषां को भेद इत्याह—ते हीत्यादि । ते—स्वभाववादिनः, स्वमिति । स्वरूपम् । अपिशब्दात्पररूपमपि । पूर्वकास्तु स्वभावं कारणमिच्छन्ति, एते तमपि नेच्छन्तीति भेदः ॥ ११० ॥

अत्र च युक्तिं वर्णयन्ति—यदुपलब्धिलक्षणप्राप्तं सदनुपलभ्यमानसत्ताकम्, तत्प्रेक्षावतामसद्व्यवहारविषयः । यथा शशविषाणमनुपलभ्यमानसत्ताकं च भावानां कारणमिति स्वभावानुपलब्धिः । न चायमसिद्धो हेतुरित्यादर्शयन्नाह—राजीवेत्यादि ।

**राजीवकेसरादीनां वैचित्र्यं कः करोति हि ।**
**मयूरचन्द्रकादिर्वा विचित्रः केन निर्मितः ॥ १११ ॥**

राजीवम्—पद्मम्, तस्य केसरादय इति विग्रहः । आदिग्रहणान्नालदलकर्णिकादीनां कण्टकतैक्ष्ण्यादीनां च ग्रहणम् । वैचित्र्यमिति । संस्थानवर्णकार्कश्यादिभेदम् । **कः करोती**ति । नैव कश्चित् । ईश्वरादेः कारणस्यानुपलभ्यमानत्वादिति भावः॥१११॥

स्यादेतत्—यदि नाम बाह्यानां भावानां कारणानुपलब्धेरहेतुत्वं सिद्धम्, आध्यात्मिकानां तु कथं सिद्धमित्याह—यथैवेत्यादि ।

**यथैव कण्टकादीनां तैक्ष्ण्यादिकमहेतुकम् ।**
**कादाचित्कतया तद्वद्दुःखादीनामहेतुता ॥ ११२ ॥**

यदि नाम प्रत्यक्षतो निर्हेतुकत्वं दुःखादीनां न सिद्धं तथाऽप्यनुमानतः सिद्धमेव। तथा हि—यत्कादाचित्कं तदहेतुकं निश्चितं यथा कण्टकतैक्ष्ण्यादि, कादाचित्कं च दुःखादीनीति स्वभावहेतुः। न चापि यस्य भावाभावयोर्यस्य भावाभावौ नियमेन भवतः, तत्तस्य कारणमिति युक्तम्, व्यभिचारात्। तथाहि—सति स्पर्शे चक्षुर्विज्ञानं भवत्यसति च न भवति। अथ च नासौ चक्षुर्विज्ञानकारणम्। तस्मात्कार्यकारणभावलक्षणमेतद्व्यभिचारीत्यतः सिद्धं सर्वहेतुनिराशंसं भावानां जन्मेति॥ ११२॥

**सरोजकेसरादीना**मित्यादिना प्रतिविधत्ते।

**सरोजकेसरादीनामन्वयव्यतिरेकवत्।**
**अवस्थातिशयाक्रान्तं बीजपङ्कजलादिकम्॥ ११३॥**
**प्रत्यक्षानुपलम्भाभ्यां निश्चितं कारणं यदा।**
**किमित्यन्यस्तदा हेतुरमीषां परिपृच्छ्यते॥ ११४॥**

अनेन हेतोरसिद्धिं प्रत्यक्षविरोधं च प्रतिज्ञार्थस्य दर्शयति। यदुक्तं राजीवकेसरादीनां कारणं नोपलभ्यत इति, तदसिद्धम्, प्रत्यक्षानुपलम्भाभ्यां बीजपङ्कजलादेरन्वयव्यतिरेकवतः कारणत्वेन निश्चितत्वात्। तथाहि—यस्मिन्सत्येव यस्य जन्म भवति यस्य च विकाराद्यस्य विकारस्तत्तस्य कारणमुच्यते। तच्चैवंभूतं बीजादिकमुच्छूनादिविशिष्टावस्थाप्राप्तं राजीवकेसरादीनामन्वयव्यतिरेकवत्—भावाभाववत्। प्रत्यक्षानुपलम्भाभ्यां निश्चितमित्यसिद्धो हेतुः। यच्चाप्युक्तं कार्यकारणलक्षणं व्यभिचारीति, तदसिद्धम्। स्पर्शस्यापि रूपहेतुतया चक्षुर्विज्ञानेऽपि निमित्तभावस्येष्टत्वात्। तथाहि—स्पर्श इति भूतान्युच्यन्ते। तानि चोपादायोपादाय रूपं वर्त्तते, ततश्चक्षुर्विज्ञानं प्रति स्पर्शस्य निमित्तभावोऽस्त्येव। केवलं साक्षात्पारंपर्यकृतो विशेषः। न चापि व्यतिरेकमात्रमस्माभिः कार्यकारणभावनिश्चयहेतुत्वेनाभ्युपगतम्। किं तर्हि? विशिष्टमेव। तथा हि—येषु सत्सु समर्थेषु तदन्येषु हेतुषु यस्यैकस्याभावाद्यन्न भवति तत्तस्य कारणमिति वर्ण्यते। न तु यस्याभावे यन्न भवतीति व्यतिरेकमात्रम्। अन्यथा मातृविवाहोचितदेशजन्मनः पिण्डखर्जूरस्य मातृविवाहाभावे सत्यभावप्रसङ्गात्। न चैवंभूतस्य व्यतिरेकस्य स्पर्शेन व्यभिचारोऽस्ति। तथा हि—यदि रूपादिसन्निधानं प्रदर्श्य स्पर्शस्यैकस्याभावाच्चक्षुर्विज्ञानं न भवतीत्येवं प्रदर्श्येत तदा स्या-

द्व्यभिचारो न चैतच्छक्यं प्रदर्शयितुम् । अतो नास्ति कार्यकारणभावलक्षणस्य व्यभिचारः ॥ ११३ ॥ ११४ ॥

न केवलं बीजादिः कारणत्वेन निश्चितो भावानां देशकालावपि प्रतिनियतौ निश्चिताविति दर्शयति—**नियतावित्यादि** ।

**नियतौ देशकालौ च भावानां भवतः कथम् ।**
**यदि तद्धेतुता नैषां स्युस्ते सर्वत्र सर्वदा ॥ ११५ ॥**
**क्वचित्कदाचित्कस्मिंश्चिद्भवन्तो नियताः पुनः ।**
**तत्सापेक्षा भवन्त्येते तदन्यपरिहारतः ॥ ११६ ॥**

यदि हि राजीवादीनां तद्धेतुता—प्रतिनियतदेशकालहेतुता, न स्यात्, तदा येयमुपलादिदेशपरिहारेण सलिलादावेव प्रतिनियतदेशे वृत्तिः, या च शिशिरादिसमयपरिहारेण निदाघादिसमये वृत्तिः, सा न प्राप्नोति । किं तु सर्वत्र देशे काले च ते राजीवादयो भावा भवेयुस्तन्निरपेक्षत्वात् । तदन्यदेशकालपरिहारान्नियमेन प्रतिनियतदेशादौ वर्त्तमानास्तत्सापेक्षा भवन्तीति निश्चीयते ॥ ११५ ॥ ११६ ॥

ननु निरभिप्रायाणां भावानां केयमपेक्षेत्याह—**तदपेक्षा तथावृत्तिरिति** ।

**तदपेक्षा तथावृत्तिरपेक्षा कार्यतोच्यते ।**
**प्रत्यक्षा च तथा वृत्तिः सिद्धास्तेनेह हेतवः ॥ ११७ ॥**

तदन्यदेशादिपरिहारेण नियते देशादौ या वृत्तिरियमेवापेक्षेत्युच्यते । नत्वभिप्रायात्मिका । स्यादेतद्यदि नाम तदपेक्षा तेषाम्, तथाऽपि तत्कार्यता कथमवसितेत्याह—**अपेक्षा कार्यतोच्यत** इति । न ह्यन्या तत्कार्यता, किं तर्हि ? येयं तथावृत्तिलक्षणाऽपेक्षा सैव तत्कार्यतोच्यते । सा च तथावृत्तिरेषां कथं सिद्धेति चेदाह—**प्रत्यक्षे**त्यादि ॥ ११७ ॥

**तत्स्वाभाविकवादोऽयं प्रत्यक्षेण प्रबाध्यते ।**
**प्रत्यक्षानुपलम्भाभ्यां हेतुरूपस्य निश्चयात् ॥ ११८ ॥**

तदिति । तस्मात् । तेषु वा राजीवादिषु स्वाभाविकवाद इति समासः । **प्रत्यक्षेण प्रबाध्यत** इति । अनुपलम्भस्याप्यन्योपलम्भनतया प्रत्यक्षात्मकत्वात् । यत्पुनः सुखादीनामहेतुकत्वसाधनाय कादाचित्कत्वादिति साधनमुक्तं तत्साध्यविपरीतसाधनाद्विरुद्धम् । अहेतोरनपेक्षस्य कादाचित्कत्वानुपपत्तेः । दृष्टान्तस्य च साध्यविकलतेति भावः ॥ ११८ ॥

एवं तावत्प्रत्यक्षविरुद्धत्वं प्रतिज्ञार्थस्य हेतोश्चासिद्धतोद्भाविता । सांप्रतमभ्युपगम्य-हेतोः सिद्धिमनैकान्तिकत्वं प्रतिपादयन्नाह—**मा वेत्यादि** ।

**मा वा प्रमाणसत्ता भूद्धेतुसद्भावसिद्धये ।**
**तथाऽपि मानाभावेन नैवार्थासत्त्वनिश्चयः ॥ ११९ ॥**

यद्यनुपलम्भमात्रं हेतुत्वेनोपादीयते तदाऽनैकान्तिकता । यतो मानाभावेन प्रमाणाभावमात्रेण हेतुना नैवार्थसत्ताया अभावनिश्चयः ॥ ११९ ॥

कस्मान्न भवतीत्याह—**यस्मादित्यादि** ।

**यस्मादर्थस्य सत्ताया व्यापकं न च कारणम् ।**
**प्रमाणं भेदसद्भावाद्व्यभिचारात्तदुद्भवात् ॥ १२० ॥**

व्यापको हि स्वभावो निवर्त्तमानः स्वं व्याप्यं निवर्त्तयति, कारणं वा कार्यम् । तत्र तादात्म्यतदुत्पत्तिभ्यां व्याप्यकार्ययोः प्रतिबद्धत्वात् । न च प्रमाणार्थसत्तयोरभेदो भिन्नाभासत्वात् । नापि प्रमाणमर्थस्य कारणं व्यभिचारात् । प्रमाणमन्तरेणापि भावात् । तथाहि—देशकालस्वभावविप्रकृष्टानामर्थानां प्रमाणेनाविषयीकृतानामपि सत्त्वमविरुद्धमेव । न च येन विनाऽपि यद्भवति तत्तस्य कारणं युक्तमतिप्रसङ्गात् । कारणत्वाभ्युपगमे वा स्वपक्षपरित्यागः । तदुद्भवाच्च न प्रमाणमर्थसत्ताकारणम् । तथा हि—अर्थादेव विषयभूतात्प्रमाणमुद्भवति । न पुनः प्रमाणात्प्रमेयोऽर्थः ॥ १२० ॥

अथापि स्यादप्रतिबद्धमपि प्रमाणमर्थसत्ताया निवर्त्तकं भविष्यतीत्याह—**यश्चेत्यादि** ।

**यश्च नैवंविधो भावस्तस्य नैव निवृत्तितः ।**
**ऐकान्तिकमसंबन्धाद्गम्यतेऽन्यनिवर्त्तनम् ॥ १२१ ॥**

**नैवंविध** इति । न कारणं नापि व्यापकम् । न ह्यप्रतिबद्धस्य निवृत्त्याऽन्यस्य नियमेन निवृत्तिर्युक्ता, अतिप्रसङ्गात् । एवं ह्यश्वनिवृत्तौ गोरपि निवृत्तिः स्यात् ॥ १२१ ॥

**सर्वादृष्टिश्च सन्दिग्धा स्वादृष्टिर्व्यभिचारिणी ।**
**विन्ध्याद्रिरन्ध्रदूर्वादेरदृष्टावपि सत्वतः ॥ १२२ ॥**

अपि चानुपलब्धेर्हेतुत्वेनोपादीयमाना सर्वपुरुषोपलम्भनिवृत्तिलक्षणा वोपादीयते ? स्वोपलम्भनिवृत्तिलक्षणा वा ? न तावदाद्या, तस्या अर्वाग्दर्शनेन निश्चेतुमशक्यतया

संदिग्धत्वात् । न हि सर्वैः पुरुषैर्मयूरचन्द्रिकादीनामदृष्टं कारणं नोपलभ्यत इत्यत्रार्वाग्दर्शिनः किंचिदस्ति प्रमाणम् । याऽपि स्वेनादृष्टिः सा व्यभिभारिणी, कस्मात् ? गिरिकुहरान्तर्गतस्य दूर्वाप्रवालशिलाशकलादेरनुपलब्धस्यापि सत्वतः—सत्वाविरोधादित्यर्थः । तन्न निश्चितमेवासत्त्वं सन्देहात् ॥ १२२ ॥

**अहेतुकत्वसिद्ध्यर्थं न चेद्धेतुः प्रयुज्यते ।**
**न चाप्रमाणिकी सिद्धिरतः पक्षो न सिद्ध्यति ॥ १२३ ॥**
**तत्सिद्ध्ये च हेतुश्चेत्प्रयुज्येत तथाऽपि न ।**
**सिद्धेस्तद्धेतुजन्यत्वात्पक्षस्ते संप्रसिद्ध्यति ॥ १२४ ॥**

अपि चैवं भवान्पर्यनुयोज्यः । किं निर्हेतुका भावा इत्यस्य स्वपक्षस्य सिद्धये भवता हेतुः कश्चिदुपादीयते आहोस्विन्न । तत्र यदि नोपादीयते, तदा पक्षस्ते न सिद्ध्यति । न हि प्रमाणमन्तरेणार्थस्य सिद्धिरस्ति । अथोपादीयते, तथाऽपि न हि पक्षस्ते संप्रसिद्ध्यतीति वक्ष्यमाणेन संबन्धः । कस्मात् ? । सिद्धेस्तद्धेतुजन्यत्वात्—प्रमेयार्थविषयायाः सिद्धेर्निश्चयस्य तेन हेतुना जन्यमानत्वात् । तथा चोक्त**माचार्यसूरिपादैः** । "न हेतुरस्तीति वदन्सहेतुकं ननु प्रतिज्ञां स्वयमेव सादयेत् । अथापि हेतुः प्रणयालसो भवेत्प्रतिज्ञया केवलयाऽस्य किं भवेत्" इति ॥ १२३ ॥ १२४ ॥

स्यादेतत्—ज्ञापको हेतुर्मया प्रयुज्यते न कारकः । तत्कस्मात्पक्षो मे न सिध्यतीत्याह—**तथा** हीत्यादि ।

**तथाहि ज्ञापको हेतुर्वचो वा तत्प्रकाशकम् ।**
**सिद्धेर्निमित्ततां गच्छन्साध्यज्ञापकमुच्यते ॥ १२५ ॥**

**ज्ञापको** हेतुरिति । त्रिरूपं लिङ्गं स्वार्थानुमानकाले । **वचो** वेति । परार्थानुमानकाले । **तत्प्रकाशक**मिति । तस्य हेतोः प्रकाशकम् । **सिद्धे**रिति । प्रमेयार्थनिश्चयस्य । अन्यथा यदि सिद्धेरपि निमित्तभावं न यायात्तदा कथं न ज्ञापकं भवेत् । एवं हि सर्वं सर्वस्य ज्ञापकं प्रसज्यते ॥ १२५ ॥

यद्येवं कथमयमाचार्यैर्विभागः कारकाज्ज्ञापकस्य क्रियते ? । अत्र च ज्ञानवशादर्थनिर्देशो नोत्पादकवद्भूतार्थवशादित्याह—

**अतः कारक एवायं ज्ञापको हेतुरुच्यते ।**
**साध्यानुत्पादकत्वात्तु कारको न प्रकाश्यते ॥ १२६ ॥**

साध्यानुत्पादकत्वादसौ ज्ञापक उच्यते न कारक इति, यस्तु साध्यस्याङ्कुरादेरुत्पा-

दकः स कारक उच्यत इत्यदोषः । एतेन सर्वेण यदाचार्यसूर्युक्तदूषणस्योपरिचोद्यमापतति तत्प्रतिविहितं भवति । तथाहि—तत्रेदं चोद्यं भवति । न हेतुरस्तीति सहेतुकं वदन्नपि किमिति प्रतिज्ञां सादयेत् । स हि ज्ञापकं हेतुं ब्रूते कारकं तु प्रतिक्षिपतीति । तदत्रोत्तरम्—ज्ञापकोऽपि कारक एव ज्ञानहेतुत्वादिति । एतेन स्ववचनविरोध उद्भाव्यते । न त्वहेतुत्वसाधकः कश्चिद्धेतुरस्ति व्याप्तेः प्रत्यक्षादिबाधितत्वात् ॥ १२६ ॥

तस्मादित्यादिनोपसंहारव्याजेनानुमानबाधितत्वं च प्रतिज्ञार्थस्य दर्शयति—

**तस्मात्सहेतवोऽन्येऽपि भावा नियतजन्मतः ।**
**साध्यार्थविषयं यद्वज्ज्ञानं साधनभावि ते ॥ १२७ ॥**

## इति स्वाभाविकजगद्वादपरीक्षा ।

**अन्येऽपीति** । साध्यार्थविषयज्ञानव्यतिरेकिणो राजीवकेसरादयः । **नियतजन्मत** इति । नियतपदार्थसन्निधाने सतीति शेषः । प्रयोगः—ये नियतपदार्थसन्निधाने सति नियतजन्मानस्ते सहेतुकाः । यथा—भवत्साधनसन्निधानभाविसाध्यार्थविषयं ज्ञानम्, तथा च राजीवादयो भावा इति स्वभावहेतुः ॥ १२७ ॥

## इति स्वाभाविकवादपरीक्षा ।

**नाशोत्पादे**त्यादिना शब्दब्रह्मवादिनो ब्रुवते—

**नाशोत्पादासमालीढं ब्रह्म शब्दमयं परम् ।**
**यत्तस्य परिणामोऽयं भावग्रामः प्रतीयते ॥ १२८ ॥**

पूर्वापरादिविभागरहितमनुत्पन्नमविनाशि यच्छब्दमयं ब्रह्म तस्यायं रूपादिर्भावग्रामः परिणाम इति प्रतीयते यथोक्तम् । अनादिनिधनं ब्रह्म शब्दतत्वं यदक्षरम् । विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥ इति । तत्र—आदिः—उत्पादः, निधनम्—नाशः, तदभावादनादिनिधनम् । अक्षरमिति । अकाराद्यक्षरस्य निमित्तत्वात् । एतेनाभिधानरूपेण विवर्त्तो दर्शितः । अर्थभावेनेत्यादिना पुनरभिधेयविवर्त्तः । प्रक्रियेति भेदाः । ब्रह्मेति नामसंकीर्त्तनम् । अस्यैव श्लोकस्यार्थं निर्दिशति—**नाशोत्पादासमालीढमिति** । नाशोत्पादग्रहणमुपलक्षणम् । इदमप्यत्र बोद्धव्यम्, पूर्वापरदेशविभागरहितमिति । तथाहि—अनादिनिधनत्वं पूर्वापरदेशविभागरहितत्वमपि तत्र निर्दिष्टम् । **शब्दमयमिति** । शब्दस्वभावम्, अत एव शब्दस्तत्त्वमस्य शब्दतत्त्वं

तदुच्यते । शब्दोऽस्याविपरीतं रूपमित्यर्थः । **परमिति** । प्रणवात्मकम् । प्रणवो हि किल सर्वेषां शब्दानां सर्वेषां चार्थानां प्रकृतिः स च वेदः । अयं तु वर्णपदक्रमेणावस्थितो वेदस्तदधिगमोपायस्तस्य प्रतिच्छन्दकन्यायेनावस्थितः । तं तु परमं ब्रह्माणमभ्युदयनिःश्रेयसफलधर्मानुगृहीतान्तः(करणाः)पश्यन्तीति । अत्र च प्रमाणयन्ति । ये यदाकारानुस्यूतास्ते तन्मया यथा घटशरावोदञ्चनादयो मृद्विकाराः मृदाकारानुगताः पदार्था मृण्मयत्वेन प्रसिद्धाः । शब्दाकारानुस्यूताश्च सर्वभावा इति स्वभावहेतुः । यतः प्रत्यक्षत एव सर्वार्थानां शब्दाकारानुगमः सिद्धः । तथा हि—शब्द एव प्रत्ययोऽर्थेषूपजायमानः शब्दोल्लेखानुगत एवोपजायते । यथोक्तम्—न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते । अनुविद्धमिव ज्ञानं सर्वं शब्देन वर्त्तते ॥ इति । ज्ञानाकारनिबन्धना च वस्तूनां स्वभावप्रज्ञप्तिः । अतः सिद्धमेषां शब्दाकारानुस्यूतत्वं तत्सिद्धौ च तन्मयत्वमपि सिद्धमेव, तन्मात्रभावित्वात्तन्मयत्वस्येति ॥ १२८ ॥

**ते वाच्या** इत्यादिना प्रतिज्ञार्थं....दूषयति ।

**इति संचक्षते येऽपि ते वाच्याः किमिदं निजम् ।**
**शब्दरूपं परित्यज्य नीलादित्वं प्रपद्यते ॥ १२९ ॥**
**न वा तथेति यद्याद्यः पक्षः संश्रीयते तदा ।**
**अक्षरत्ववियोगः स्यात्पौरस्त्यात्मविनाशतः ॥ १३० ॥**
**अथाप्यनन्तरः पक्षस्तत्र नीलादिवेदने ।**
**अश्रुतेरपि विस्पष्टं भवेच्छब्दात्मवेदनम् ॥ १३१ ॥**

अत्र कदाचिच्छब्दपरिणामरूपत्वाद्वा जगतः शब्दमयत्वं साध्यत्वेनेष्टम्, कदाचिच्छब्दादुत्पत्तेर्वा । यथाऽन्नमयाः प्राणा इति हेतौ मयड्विधानात् । अत्र न तावदाद्यः पक्षः, परिणामस्यैवानुपपत्तेः । तथा हि—शब्दात्मकं ब्रह्म नीलादिरूपतां प्रतिपद्यमानं कदाचिन्निजं स्वाभाविकं शब्दरूपं परित्यज्य प्रतिपद्येतापरित्यज्य वा । तत्र यदि परित्यज्येत्याद्यः पक्ष आश्रीयते, तदाऽनादिनिधनमित्यनेन वचनेन यदक्षरत्वमविनाशित्वमभ्युपगतं तस्य हानिः स्यात्, पौरस्त्यस्वभावविनाशात् । अथापरित्यज्येत्यनन्तरः पक्षः, तदा नीलादिसंवेदनकालेऽप्यश्रुतेर्बधिरस्य शब्दः संवेदनं प्राप्नोति । नीलादिसंवेदनवत्तदव्यतिरेकात् । प्रयोगः—यद्यदव्यतिरिक्तं तत्तस्मिन्संवेद्यमाने संवेद्यते, यथा नीलादिसंवेदनावस्थायां तस्यैव नीलादेरात्मा, नीलादव्यतिरिक्तश्च शब्द

इति स्वभावहेतुः। अन्यथा भिन्नयोगक्षेमत्वात्तत्स्वभावत्वमेव प्रसिध्येदित्येतदत्र बाधकं प्रमाणम् ॥ १२९ ॥ १३० ॥ १३१ ॥

एतदेव विस्तरेण प्रतिपादयन्नाह—येनेत्यादि।

**येन शब्दमयं सर्वं मुख्यवृत्त्या व्यवस्थितम्।**
**शब्दरूपापरित्यागे परिणामाभिधानतः ॥ १३२ ॥**

येन—यस्मात्, भवद्भिर्मुख्यत एव शब्दस्वभावं जगदिति वर्ण्यते। कस्मादित्याह—**शब्दरूपापरित्याग** इति ॥ १३२ ॥

यदि नाम मुख्यतः शब्दमयमवस्थितं ततः किमित्याह—**अगौणे चे**त्यादि।

**अगौणे चैवमेकत्वे नीलादीनां व्यवस्थिते।**
**तत्संवेदनवेलायां कथं नास्त्यस्य वेदनम् ॥ १३३ ॥**

**एकत्वे नीलादीना**मिति। शब्देन सहेति शेषः। **तत्संवेदनवेलाया**मिति। तेषां नीलादीनां संवेदनावस्थायाम्। **कथं नास्त्यस्य वेदन**मिति। तस्यापि नीलादिस्वभाववदुपलब्धिलक्षणप्राप्तत्वाद्युक्तमेव संवेदनमित्यभिप्रायः ॥ १३३ ॥

**अस्यावित्तौ हि नीलादेरपि न स्यात्प्रवेदनम्।**
**ऐकात्म्याद्भिन्नधर्मत्वे भेदोऽत्यन्तं प्रसज्यते ॥ १३४ ॥**

अथास्य वेदनं नेष्यते, तदा नीलादेरपि शब्दस्वरूपवदसंवेदनप्रसङ्गः। ऐकात्म्यात्—शब्देन सह नीलादीनामेकस्वभावत्वादित्यर्थः। अन्यथा नीलादीनां शब्देन सह भिन्नधर्मत्वेऽभ्युपगम्यमानेऽत्यन्तभेदोऽङ्गीकर्त्तव्यः ॥ १३४ ॥

कस्मादित्याह—

**विरुद्धधर्मसङ्गो हि बहूनां भेदलक्षणम्।**
**नान्यथा व्यक्तिभेदानां कल्पितोऽपि भवेदसौ ॥ १३५ ॥**

न ह्येकस्यैकदैकप्रतिपत्त्रपेक्षया ग्रहणमग्रहणं च युक्तम्। एकत्वहानिप्रसङ्गात्। अन्यथा हि यदि विरुद्धधर्माध्यासेऽप्येकत्वं स्यात्तदा घटादीनां यः कल्पित इष्टो व्यक्तिभेदः सोऽपि न भवेत्। न केवलं ब्रह्मणः स्वरूपभेदो नास्तीत्यपिशब्दः। यतस्तस्य स्वात्मनि व्यवस्थितस्य नास्ति भेदो विकारविषयत्वादस्येति सिद्धान्तः। तथा हि—न घटाद्यात्मना तस्यानादिनिधनत्वमिष्यते। किं तर्हि? । परमात्मना घटादयो हि दृश्यमानोदयव्ययाः परिच्छिन्नदेशाश्चोपलभ्यन्त इति। अयं चाश्रुतेः स्पष्टं

शब्दसंवेदनं स्यादिति यः प्रसङ्ग उक्तः स यदि ब्रह्मणो रूपमुपलब्धिलक्षणप्राप्तमिष्यते तदा द्रष्टव्यः । यदि पुनरतिसूक्ष्ममतीन्द्रियमिति वर्ण्यते तदाऽयमदोषः । किं तु नीलादीनामपि ताद्रूप्यात्तत्स्वरूपवदग्रहणप्रसङ्ग इत्ययं दोषो वाच्यः । ततश्चायं नियमो नोपपद्यते । उदयव्ययवतीमेवार्थमात्रामपरदर्शनाः प्रतियन्तीति । **स्यादेत**-द्यथा भवतां क्षणिकत्वं नीलाद्यव्यतिरिक्तं नीलादिसंवेदनेऽपि न संवेद्यते तद्वच्छब्दरूपमिति । **तदेतदसम्यक्** । न हि नीलादिसंवेदने क्षणिकत्वं न संवेद्यते । किं तु गृहीतमपि निर्विकल्पेन चेतसा भ्रान्तिनिमित्तेन गुणान्तरसमारोपान्न विनिश्चीयत इत्युच्यते । तेनानुभवापेक्षया तद्गृहीतमेव निश्चयज्ञानापेक्षया त्वगृहीतमिति ज्ञानभेदेनैकस्य गृहीतत्वमगृहीतत्वं चाविरुद्धमेव । न चैवं भवतां पक्षे शब्दस्य ग्रहणाग्रहणे युक्ते । सर्वज्ञानानां सविकल्पकताऽभ्युपगमात् । एकेनैवज्ञानेन सर्वात्मना तस्य निश्चितत्वात् । अगृहीतस्वभावान्तरानुपपत्तेः । यथोक्तम्—"निश्चयः । यन्न निश्चीयते रूपं तत्तेषां विषयः कथ"मिति । अथ किञ्चिदविकल्पमपि ज्ञानमभ्युपगम्यते । न तर्हि वक्तव्यं—"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते" । इति । शब्दाकारानुस्यूतत्वादिति च हेतुर्न सिद्ध्येत् । ततश्च प्रमाणाभावाच्छब्दात्मकत्वव्यवस्थानं भावानामनिबन्धनमेव स्यात् । किंच क्षणिकत्वं भावानां प्रमाणान्तरतः सिद्धेरनुभूतमपि न निश्चीयत इति व्यपदिश्यते । शब्दात्मता तु भावानां कुतः सिद्धा येन साऽप्येवं व्यवस्थाप्यते ॥ १३५ ॥

अपरमपि दूषणमार्गमाह—प्रतिभावं चेत्यादि ।

**प्रतिभावं च यद्येकः शब्दात्मा भिन्न इष्यते ।**
**सर्वेषामेकदेशत्वमेकाकारा च विद्भवेत् ॥ १३६ ॥**

स हि शब्दात्मा परिणामं गच्छन् प्रतिपदार्थं भेदं वा प्रतिपद्यते न वा । तत्र यदि न भिन्न इति पक्षस्तदा सर्वेषां नीलादीनामेकदेशत्वं प्राप्नोति । एकदेशत्वमित्युपलक्षणम् । कालपरिणामव्यापारावस्थाविशेषाद्यपि ग्राह्यम् । एकाकारा च, वित्—प्रतिभासः, भवेत्—प्राप्नोति । सर्वेषां नीलादीनामेकशब्दरूपाव्यतिरेकात् ॥ १३६ ॥

**प्रतिव्यक्ति तु भेदेऽस्य ब्रह्मानेकं प्रसज्यते ।**
**विभिन्नानेकभावात्मरूपत्वाद्व्यक्तिभेदवत् ॥ १३७ ॥**

अथ प्रतिव्यक्ति भेदोऽस्य शब्दात्मनोऽङ्गीक्रियते । तदा ब्रह्मणोऽनेकत्वं प्राप्नोति ।

विभिन्नानेकभावात्मरूपत्वात्—विभिन्नोऽनेकभावात्माऽनेकपदार्थस्वभावो रूपं स्वभावो यस्येति विग्रहः, तद्भावस्तत्त्वम् । एकं च परमब्रह्मेष्यते । अतोऽभ्युपेतबाधाप्रतिज्ञाया इति भावः ॥ १३७ ॥

दूषणान्तरमप्याह—**नित्यशब्दमयत्वे** चेत्यादि ।

**नित्यशब्दमयत्वे च भावानामपि नित्यता ।**
**तद्यौगपद्यतः सिद्धेः परिणामो न सङ्गतः ॥ १३८ ॥**

नित्यशब्दमयत्वे—नित्यशब्दस्वभावत्वे, जगतः शब्दः स्वरूपं चेद्भावानामपि नित्यत्वं प्राप्नोति । ततश्च सर्वकालं भावानां शब्देन सह यौगपद्यतः सिद्धेः—सिद्धत्वात्, परिणामात्मा न प्राप्नोति । तदिति तस्मादित्यर्थे, तेषां वा नीलादीनां यौगपद्यं तद्यौगपद्यमिति विग्रहः ॥ १३८ ॥

अथ यौगपद्यतः सिद्धस्यापि कस्मात्परिणामो न भवतीत्याह—**एकरूपे**त्यादि ।

**एकरूपतिरोभावे ह्यन्यरूपसमुद्भवे ।**
**मृदादाविव संसिध्येत्परिणामस्तु नाक्रमे ॥ १३९ ॥**

नाक्रमे तु वस्तुनि परिणामः सिद्ध्येदिति भिन्नक्रमस्तुशब्दः । एवं तावत्परिणामकृतं शब्दमयत्वं भावानां न युक्तम् ॥ १३९ ॥

नापि द्वितीयः पक्षो युज्यत इति दर्शयन्नाह—**अथापी**त्यादि ।

**अथापि कार्यरूपेण शब्दब्रह्ममयं जगत् ।**
**तथाऽपि निर्विकारत्वात्ततो नैव क्रमोदयः ॥ १४० ॥**

एवमपि शब्दस्य नित्यत्वेनाविकारित्वात्ततः क्रमेण कार्योदयो न प्राप्नोति । सर्वेषामविकलाप्रतिबद्धसामर्थ्यकारणाद्युगपदेवोत्पादः स्यात् । कारणवैकल्याद्धि कार्याणि प्रतिलम्बन्ते, तच्चेदविकलं तत्किमपरमपेक्षेरन् । येन युगपन्न भवेयुः ॥ १४० ॥

**अन्योऽन्यरूपसंभूतौ तस्मादेकस्वरूपतः ।**
**विवृत्तमर्थरूपेण कथं नाम तदुच्यते ॥ १४१ ॥**

अपि च—यदि तस्मादेकस्वभावाच्छब्दात्मनोऽन्यान्यस्य स्वभावस्योत्पत्तिरङ्गीक्रियते, तदा तद्ब्रह्म विवृत्तमर्थरूपेणेत्येतन्न सिद्ध्येत्, न ह्यर्थान्तरस्योत्पादेऽन्यस्य तत्स्वभावमनाविशतस्ताद्रूप्येण विवर्तो युक्तः । तस्मात्सर्वथाऽपि प्रतिज्ञार्थो नावकल्पते ॥ १४१ ॥

शब्दाकारानुस्यूतत्वादिति च हेतुरसिद्ध इति दर्शयन्नाह—**अतद्रूपेत्यादि** ।

**अतद्रूपपरावृत्तमृद्रूपत्वोपलब्धितः ।**
**कुम्भकोशादिभेदेषु मृदात्मैकोऽत्र कल्पते ॥ १४२ ॥**
**नीलपीतादिभावानां नत्वेवमुपलभ्यते ।**
**अशब्दात्मपरावृत्तिरबीजा कल्पनाऽपि तत् ॥ १४३ ॥**

न हि भावानां परमार्थेनैकरूपानुगमोऽस्ति । सर्वेषां स्वस्वभावव्यवस्थिततया समानजातीयव्यावृत्तस्वभावत्वात् । काल्पनिकं तु विजातीयव्यावृत्तिकृतमेकाकारानुस्यूतत्वमेषां व्यवस्थाप्यते । यथा घटशरावोदञ्चनादिषु परमार्थतो भिन्नेष्वप्यमृदात्मकपदार्थव्यावृत्तिकृतो मृदात्मा कल्प्यते तत्र । तदपि काल्पनिकमेषां नीलादीनां शब्दाकारानुस्यूतत्वं न संभवति । न हि नीलपीतादिषु शब्दरूपमुपलभामहे । अनुपलभमानाश्च कथमशब्दात्मकव्यवच्छेदकृतं शब्दाकारानुस्यूतत्वं कल्पयामः । तस्मादबीजेयं कल्पनेत्यसिद्धो हेतुः ॥ १४२ ॥ १४३ ॥

यदुक्तम्—सर्वेषामेकदेशत्वमेकाकारा च विद्भवेदिति, तत्र परमतमाशङ्कते । **अथाविभागमेवेत्यादि**—

**अथाविभागमेवेदं ब्रह्मतत्त्वं सदा स्थितम् ।**
**अविद्योपप्लवाल्लोको विचित्रं त्वभिमन्यते ॥ १४४ ॥**

अथाऽपि स्यादविभक्तमेव सदा ब्रह्मात्मकं तत्वमविकारि परमार्थतोऽवस्थितम् । न तस्य परमार्थेन परिणामः, किन्त्वविद्यातिमिरोपहतबुद्धिलोचना नीलादिभेदेन विचित्रमिव मन्यन्ते । यथोक्तम्—यथा विशुद्धमाकाशं तिमिरोपप्लुतो जनः । सङ्कीर्णमिव मात्राभिश्चित्राभिरभिमन्यते ॥ तथेदममृतं ब्रह्म निर्विकारमविद्यया । कलुषत्वमिवापन्नं भेदरूपं विवर्त्तते ॥ इति । तेन सर्वेषामेकदेशत्वप्रसङ्गो न भविष्यति तेषामवस्तुरूपत्वात् । संविद्भेदश्च भविष्यति, अविद्योपप्लवकृतत्वात्तस्येति भावः ॥१४४॥

**तत्रापीत्यादिना** प्रतिविधत्ते—

**तत्रापि वेद्यते रूपमविद्योपप्लुतैर्जनैः ।**
**यन्नीलादिप्रकारेण त्यागादाने निबन्धनम् ॥ १४५ ॥**
**तद्रूपव्यतिरेकेण ब्रह्मरूपमलक्षितम् ।**
**कथं व्युत्थितचेतोभिरस्तित्वेन प्रतीयते ॥ १४६ ॥**

प्रमाणवशाद्धि प्रमेयसत्ताव्यवस्थितिः, न चैवं रूपस्य ब्रह्मणः सिद्धये किंचन प्रमाणमस्ति । तथाहि—न तावत्प्रत्यक्षतस्तस्य सिद्धिः । न हि नीलादेर्हिताहितप्राप्तिपरिहाराधिष्ठानाद्व्यतिरिक्तमपरं ब्रह्मरूपं प्रतिभासते । अप्रतिभासमानं च कथं तद्व्युत्थितचेतोभिन्र्यायमार्गावस्थितैरस्तित्वेन प्रतीयताम् ॥ १४५ ॥ १४६ ॥

**न तत्प्रत्यक्षतः सिद्धमविभागमभासनात् ।**
**नित्यादुत्पत्त्ययोगेन कार्यलिङ्गं च तत्र न ॥ १४७ ॥**
**धर्मिसत्वाप्रसिद्धेस्तु न स्वभावः प्रसाधकः ।**
**न चैतद्‌तिरेकेण लिङ्गं सत्ताप्रसाधकम् ॥ १४८ ॥**

स्यादेतत् । स्वसंवेदनप्रत्यक्षत एव तत्सिद्धं ज्ञानात्मरूपत्वात् । तथाहि—ज्योतिस्तदेव शब्दात्मकत्वाच्चैतन्यरूपत्वाच्चेति । तदेतत्स्वसंवेदनविरुद्धम् । तथा ह्यन्यत्रगतमानसोऽपि चक्षुषा रूपमीक्षमाणोऽनाधिष्ठा(दिष्टा?)भिलापमेव नीलादिप्रत्ययमनुभवतीति । एतच्च विस्तरेण प्रतिपादयिष्यते । एतेन यदुक्तम्—“न सोऽस्ति प्रत्ययो लोके” इत्यादि, तदपि प्रत्युक्तं भवति । तस्मादविभागं शब्दमयं ब्रह्म न प्रत्यक्षतः सिद्धम् । तस्य तथाभूतस्याप्रतिभासनात् । नाप्यनुमानतः । तथा ह्यनुमानं भवत्कार्यलिङ्गं भवेत् ? स्वभावलिङ्गं वा ? अनुपलब्धेस्तु प्रतिषेधविषयत्वाद्विधावनधिकार एव । तत्र न तावत्कार्यलिङ्गम्, नित्यात्कस्यचित्कार्यस्यानुपपत्तेः, क्रमयौगपद्याभ्यां नित्यस्यार्थक्रियाविरोधात् । नापि स्वभावलिङ्गमस्ति । तस्यैव ब्रह्माख्यस्य धर्मिणोऽसिद्धेः । न ह्यसिद्धे धर्मिणि तत्स्वभावभूतो धर्मः स्वातन्त्र्येण सिद्ध्येत् । अन्यत्तर्हि लिङ्गं भविष्यतीत्याह—**न चैत**दित्यादि । स्वभावकार्यव्यतिरेकेणान्यस्य साध्यार्थप्रतिबन्धाभावात् । न चाप्रतिबद्धं लिङ्गं युक्तमतिप्रसङ्गात् । यदपि च शब्दरूपान्वयत्वं भावानामुक्तम् । तदसिद्धत्वादलीकत्वाच्च न शब्दरूपत्वं पारमार्थिकं ब्रह्मणः साधयितुमलम् । नाप्यागमात्तस्य सिद्धिस्तस्यानवस्थितत्वात् । यद्यप्यनुपलम्भाख्यमस्ति लिङ्गम् । तत्तु स्वभावहेतावेवान्तर्गतमिति भावः । यद्वा—सत्ताप्रसाधकस्य विवक्षितत्वादत एवाह—**सत्ताप्रसाधक**मिति ॥ १४७ ॥ १४८ ॥

अपि च—ज्ञानमात्रार्थकरणेऽप्ययोग्यं ब्रह्म गम्यताम् । तदयोग्यतया रूपं तद्ध्यवस्तुत्वलक्षणम् । इत्येतत्प्रतिपादयन्नाह—**ज्ञानं ज्ञेयक्रमात्सिद्ध**मित्यादि ।

**ज्ञानं ज्ञेयक्रमात्सिद्धं क्रमवत्सर्वमन्यथा ।**
**यौगपद्येन तत्कार्यं विज्ञानमनुषज्यते ॥ १४९ ॥**

**ज्ञानमात्रेऽपि नैवास्य शक्र(क्य?)रूपं ततः परम् ।**
**भवतीति प्रसक्ताऽस्य वन्ध्यासूनुसमानता ॥ १५० ॥**

एतच्च पूर्वमीश्वरपरीक्षायां प्रसाधितम् । **ततः परम**िति । त्यागादाननिबन्धनान्नीलादेः परमन्यदित्यर्थः । यदि वा—तत इति निगमनम् । परमिति त्यागादाननिबन्धनान्नीलादेः परमन्यदित्यर्थः । यदि वा—तत इति निगमनम् । परमिति तात्विकम् । **वन्ध्यासूनुसमान**तेति । न हि वन्ध्यासूनोरवस्तुत्वव्यवस्थायामर्थक्रियासामर्थ्यविरहव्यतिरेकेणान्यन्निबन्धनमस्ति ॥ १४९ ॥ १५० ॥

अथेदमुच्यते । तं तु परमं ब्रह्मात्मानमभ्युदयनिःश्रेयसफलधर्मानुगृहीतान्तःकरणा योगिन एव पश्यन्तीति, तदपि नोपपद्यत इति दर्शयति—**विशुद्धे**त्यादि ।

**विशुद्धज्ञानसन्ताना योगिनोऽपि ततो न तत् ।**
**विदन्ति ब्रह्मणो रूपं ज्ञाने व्यापृत्य सङ्गतेः ॥ १५१ ॥**

यदि हि ज्ञाने योगजे तस्य व्यापारः स्यात्तदा योगिनस्तस्य रूपं पश्यन्तीति स्यात् । यावता यथोक्तेन प्रकारेण ज्ञाने तस्य व्यापाराभावादयुक्तमेतत् । स्यादेतन्न तद्विषयज्ञानोत्पत्त्या योगिनस्तं पश्यन्ति । तद्व्यतिरिक्तस्य योगिनो योगिज्ञानस्य चाभावात् । किन्तु योगित्वावस्थायां स्वमात्मानं ज्योतीरूपं तत्प्रकाशमानं योगिनस्तं पश्यन्तीति । उच्यते । यद्येवं प्रागयोगित्वावस्थायां किं तस्य रूपमिति वाच्यम् । यदि सदैव ज्योतीरूपं तदा तर्हि न कदाचिदयोगित्वावस्थाऽस्ति, सदैवात्मज्योतीरूपत्वाद्ब्रह्मणः । ततश्चायत्नतः सर्वेषां मोक्षप्रसङ्गः । अथापि स्याद्यथा भवतां स्वप्नाद्यवस्थासु ज्ञानमद्वयमपि विचित्राकारपरिग्रहेण प्रतिभासते तथा तदद्वयमप्यविद्यावशादविशुद्धसन्ततीनां तथा प्रकाशत इति । तदसम्यक् । न हि तद्व्यतिरेकेणान्ये केचिदविशुद्धसन्ततयः सन्ति येषां तत्तथा प्रतिभासते । स्वयमेव तथा प्रतिभासत इति चेत्, एवं तर्हि मोक्षाभावप्रसङ्गः । सर्वदैव ब्रह्मणोऽद्वयरूपप्रतिभासात्मकत्वात् । अस्माकं तु विशुद्धज्ञानान्तरोदयान्मुक्तिर्युज्यत एव । न चापि भवतां तद्व्यतिरेकिण्यविद्याऽस्ति । यद्वशात्तत्तथा प्रतिभासत इति स्यात् । अव्यतिरेके चाविद्यायास्तद्वशात्तदेव तथा प्रतिभासत इति सुव्याहृतमेतत् । अथापि स्यादविद्यावशात्ख्यातीत्यनेनाविद्यात्मकत्वमेव तस्य ख्याप्यत इति । यद्येवं सुतरां मोक्षाभावप्रसङ्ग एव ख्यापितो भवति । न हि नित्यैकरूपे ब्रह्मण्यविद्यात्मके स्थिते सति तदात्मिकाया अविद्याया व्यपगमः संभवति । येनाविद्याव्यपगमान्मुक्तिर्भवेत् । अथ व्यतिरिक्ताऽविद्याऽङ्गीक्रियते, एवमपि नित्यत्वादनाधेयातिशयस्य

ब्रह्मणः सा (न) तत्किंचित्करोतीति, न युक्तमविद्यावशात्तथा प्रतिभासनम् । ततश्चाविद्यया सह तस्य संबन्धाभावात्संसाराभावप्रसङ्गः । न चापि सा तत्वान्यत्वाभ्यां निर्वक्तुं शक्यत इति युक्तं वक्तुम्, वस्तुधर्मस्य गत्यन्तराभावात् । अन्यथा वस्तुत्वमेव न स्यात् । न चावस्तुवशात्तथा तस्य ख्यातिर्युक्ताऽतिप्रसङ्गात् । तथाभूतस्य चार्थक्रियाकारिणः स्वभावस्यावस्थितिनामकरणे न ना(नो ?)स्ति विवादः । अस्माकं तु वितथाभिनिवेशवासनैवाविद्या सा च वासना शक्तिरुच्यते । शक्तिश्च कारणात्मकज्ञानात्मभूतैवेति । तेन पूर्वपूर्वतः कारणभूतादविद्यात्मनो ज्ञानादुत्तरोत्तरकार्यज्ञानस्य वितथाकाराभिनिवेशिन उत्पत्तेरविद्यावशात्तथाख्यातिर्युक्ता । तस्याश्चाविद्याया योगाभ्यासादसमर्थतरतमक्षणोत्पादक्रमेण व्यपगमात्परिशुद्धज्ञानसन्तानोदयादपवर्गप्राप्तिरित्यतो बन्धमोक्षव्यवस्था युक्तिमती । नत्वेवं भवतां संभवति, नित्यैकरूपत्वाद्ब्रह्मणोऽवस्थाद्वयासंभवात् । एकत्वाच्च तस्य ब्रह्मण एकस्य मुक्तौ सर्वेषां मुक्तिप्रसङ्गः, एकस्यामुक्तौ सर्वेषाममुक्तिप्रसङ्गश्चानिवार्यः । न चाप्ययोगित्वावस्थायामात्मज्योतीरूपत्वेऽस्य किंचित्प्रमाणमस्ति । प्रसाधकं ज्ञानं हि प्रकाशात्मतया स्वसंवेदनप्रसिद्धम् । न त्वेवं शब्दात्मा सर्वत्र प्रत्ययात्मनि संवेद्यत इति निर्दिष्टमेतत् । अथायोग्यवस्थायामात्मज्योतिष्ट्वमस्य नाङ्गीक्रियते, एवमपि प्रागविद्यमानं तदात्मज्योतिष्ट्वमत्यक्तपूर्वरूपस्य ब्रह्मणः पश्चाद्योग्यवस्थायां कुतः संभूतमिति वाच्यम् । तस्मान्मिथ्याप्रवादोऽयं शब्दब्रह्मवादो भवतामित्यलं बहुना ॥ १५१ ॥

प्रधानेत्यादिना पूर्वोक्तं दूषणमार्गमिहाप्यतिदिशति ।

**प्रधानपरिणामेन समं च ब्रह्मदर्शनम् ।**
**तद्दूषणानुसारेण बोद्धव्यमिह दूषणम् ॥ १५२ ॥**

## इति शब्दब्रह्मपरीक्षा ।

तत्रैवं दूषणं वाच्यम्—न शब्दजन्यं तत्कार्यं सत्तातो हेतुवित्तिवत् । अतो नाभिमतो हेतुरसाध्यत्वात्परात्मवत् ॥ इत्यादि ॥ १५२ ॥

## इति शब्दब्रह्मपरीक्षा ।

**अन्य** इत्यादिना वेदवादिमतमुपक्षिपति ।

**अन्ये त्वीशसधर्माणं पुरुषं लोककारणम् ।**
**कल्पयन्ति दुराख्यातसिद्धान्तानुगबुद्धयः ॥ १५३ ॥**

**समस्तवस्तुप्रलयेऽप्यलुप्तज्ञानशक्तिमान् ।**
**ऊर्णनाभ इवांशूनां स हेतुः किल जन्मिनाम् ॥ १५४ ॥**

त एवमाहुः—पुरुष एवैकः सकललोकस्थितिसर्गप्रलयहेतुः प्रलयेप्यलुप्तज्ञानातिशयशक्तिरिति । तथा चोक्तम्—ऊर्णनाभ इवांशूनां चन्द्रकान्त इवाम्भसाम् । प्ररोहाणामिव प्लक्षः स हेतुः सर्वजन्मिनाम् ॥ इति । तथा "पुरुष एवैतत्सर्वं यद्भूतं यच्च भाव्यमि"ति । ईशसधर्माणम्—ईश्वरतुल्यधर्माणम्, द्वयोरपि विश्वसर्गस्थितिप्रलयनिमित्तत्वात् । एतावांस्तु विशेषः, ईश्वरव्यतिरिक्तमन्यदप्यात्मादिकं समवाय्यादिकारणमीश्वरकारणकैरिष्यते । पुरुषवादिभिस्तु पुरुष एव कारणम्, विश्वसर्गस्थितिप्रलयनिमित्तभावस्तु द्वयोरपि समानः । **दुराख्यातसिद्धान्तानुगबुद्धय** इति । दुराख्यातसिद्धान्तानुगा बुद्धिर्येषामिति विग्रहः । ऊर्णनाभो मर्कटकः॥१५३॥१५४॥

**अस्यापी**त्यादिना दूषणमारभते—ईश्वरवदिति ।

**अस्यापीश्वरवत्सर्वं वचनीयं निषेधनम् ।**
**किमर्थं च करोत्येष व्यापारमिममीदृशम् ॥ १५५ ॥**

षष्ठ्यन्ताद्वतिः । अत्राप्येवं दूषणं वाच्यम्—पुरुषो जन्मिनां हेतुर्नोत्पत्तिविकलत्वतः । गगनाम्भोजवत्सर्वमन्यथा युगपद्भवेत् । इत्यादि । यदि चेश्वरसिद्धये यथा परैः साधनान्युक्तानि । तथैव पुरुषसिद्धयै पुरुषवादिभिरुपादीयन्ते । तदा तद्वदेवासिद्धतादिदोषो वाच्यः । अन्यदपि दूषणप्रकारमाह—**किमर्थं चे**त्यादि । प्रेक्षापूर्वकारिप्रवृत्तेः प्रयोजनवत्तया व्याप्तत्वादतः किमर्थमयं पुरुषो जगद्रचनाव्यापारमीदृशं करोतीति वक्तव्यम् ॥ १५५ ॥

**यद्यन्येन प्रयुक्तत्वान्न स्यादस्य स्वतन्त्रता ।**
**अथानुकम्पया कुर्यादेकान्तसुखितं जगत् ॥ १५६ ॥**
**आधिदारिद्र्यशोकादिविविधायासपीडितम् ।**
**जनं तु सृजतस्तस्य काऽनुकम्पा प्रतीयते ॥ १५७ ॥**

यद्यन्येनेश्वरादिना प्रयुक्तोऽनिच्छन्नपि करोति तदाऽस्य यत्स्वातन्त्र्यमभ्युपगतं तद्धीयेत । अथ कृपया परानुग्रहार्थं करोति तदा नारकादिदुःखितसत्त्वनिर्माणं न दैकान्तसुखितमेव कुर्यात् ॥ १५६ ॥ १५७ ॥

**सृष्टेः प्रागनुकम्पानामसत्त्वे नोपपद्यते ।**
**अनुकम्पाऽपि यद्योगाद्धाताऽयं परिकल्प्यते ॥ १५८ ॥**

किं च सृष्टेः—सर्गात्प्रागनुकम्प्यसत्त्वाभावात् । यस्या अनुकम्पाया वशादयं धाता—स्रष्टा कल्प्येत ॥ १५८ ॥

**न चायं प्रलयं कुर्यात्सदाऽभ्युदययोगिनाम् ।**
**तददृष्टव्यपेक्षायां स्वातन्त्र्यमवहीयते ॥ १५९ ॥**

यदि चायमनुकम्पया कुरुते तदा यदेव मनुष्याः सदाऽभ्युदययोगिनस्तेषां किमिति प्रलयं करोति । ये दुःखितसन्ततय आपायिकाः सत्त्वास्तेषामेव कामं करोतु प्रलयमिति भावः । अथापि स्यात्तेषामनुकम्प्यानां यददृष्टं धर्माधर्मलक्षणं तदपेक्ष्य सुखदुःखसमन्वितं लोकं करोति । नैतदस्ति । एवं हि स्वातन्त्र्यमभ्युपगतं हीयते । न चापि समर्थस्य काचिदपेक्षा । असामर्थ्ये वाऽपेक्ष्यादेव लोकस्योत्पत्तेस्तत्कारणत्वमस्य हीयते ॥ १५९ ॥

**पीडाहेतुमदृष्टं च किमर्थं स व्यपेक्षते ।**
**उपेक्षैव पुनस्तत्र दयायोगेऽस्य युज्यते ॥ १६० ॥**

भवतु नाम तस्यादृष्टापेक्षा । तथाऽपि यददृष्टं धर्माधर्मात्मकं पीडाहेतुस्तदपेक्षा कृपालोर्न युक्ता, किन्त्ववधीरणमेव तत्र तस्य कृपापरतन्त्रतया युक्तं कर्तुम् । न हि कृपालवः परदुःखहेतुमेवान्विच्छन्ति, तेषां परदुःखवियोगेच्छयैव प्रवृत्तेः ॥ १६० ॥

**क्रीडार्था तस्य वृत्तिश्चेत्क्रीडायां न प्रभुर्भवेत् ।**
**विचित्रक्रीडनोपायव्यपेक्षातः शिशुर्यथा ॥ १६१ ॥**

अथ नानुकम्पया करोति । किं तर्हि ? । क्रीडार्थम् । एतदप्यसम्यक् । एवं क्रीडोत्पादे स्वातन्त्र्यमस्य न स्यात्, सर्गस्थितिप्रलयात्मकस्य विचित्रक्रीडनोपायस्यापेक्षणात् ॥ १६१ ॥

**क्रीडासाध्या च या प्रीतिस्तस्या यदपि साधनम् ।**
**तत्सर्वं युगपत्कुर्याद्यदि तत्कृतिशक्तिमान् ॥ १६२ ॥**
**क्रमेणापि न शक्तः स्यान्नो चेदादौ स शक्तिमान् ।**
**नाविभक्तस्य युज्येते शक्त्यशक्ती हि वस्तुनः ॥ १६३ ॥**

किं च ये ते विचित्राः क्रीडनोपायाः, तत्कारणे यदि शक्तिरस्यास्ति तदा युगपदेव कुर्यात् । अथादौ तस्य न शक्तिस्तदा क्रमेणापि न कुर्यात् । अशक्तावस्थाया अविशिष्टत्वात् । न ह्येकस्यैकत्र वस्तुनि शक्तत्वमशक्तत्वं च परस्परविरुद्धं धर्मद्वयं युक्तम् ।

किमर्थं च व्यापारमीदृशमारभत इत्यादि सर्वो विकल्प ईश्वरेऽपि साधारणः। तेन— यदाह प्रशस्तमतिः "परानुग्रहार्थमीश्वरः प्रवर्त्तते। यथा कृतार्थः कश्चिन्मुनिरात्महिताहितप्राप्तिपरिहारार्थासंभवेऽपि परहितार्थमुपदेशं करोति। तथेश्वरोप्यात्मीयामैश्वर्यविभूतिं विख्याप्य प्राणिनोऽनुग्रहीष्यन्प्रवर्त्तत इति। अथ वा शक्तिस्वाभाव्यात्, यथा कालस्य, वसन्तादीनां पर्यायेणाभिव्यक्तौ स्थावरजङ्गमविकारोत्पत्तिः स्वभावतः। तथेश्वरस्याप्याविर्भावानुग्रहसंहारशक्तीनां पर्यायेणाभिव्यक्तौ प्राणिनामुत्पत्तिस्थितिप्रलयहेतुकत्व"मिति। तदप्यनेनैव प्रतिविहितम्। तथा हि—परानुग्रहार्थं प्रवर्त्तत इत्यत्रेदमेव प्रतिविधानम्। अनुग्रहः परः कुर्यादेकान्तसुखितं जगदित्यादि। शक्तिस्वाभाव्यादित्यत्रापीदमेव दूषणम्। सर्गस्थित्युपसंहारान्युगपद्व्यक्तशक्तिकः। युगपज्जगतः कुर्यान्नो चेत्सोऽव्यक्तशक्तिकः॥ न व्यक्तशक्तिरीशोऽयं क्रमेणाप्युपपद्यते। व्यक्तशक्तिरतोऽन्यश्चेद्भावो ह्येकः कथं भवेत्॥ इति। कालस्यापि वसन्ताद्यभिव्यक्तौ पर्यायेण प्रवृत्तावयमेव दोषः। शीतोष्णान्वयभेदभाजस्तु भावा एव हि प्रतिक्षणविनाशिनः काल इत्येतत्पश्चात्प्रतिपादयिष्यते॥ १६२॥ १६३॥

**अथ स्वभावतो वृत्तिरित्यादिनोद्योतकरमतमाशङ्कते।**

**अथ स्वभावतो वृत्तिः सर्गादावस्य वर्ण्यते।**
**पावकादेः प्रकृत्यैव यथा दाहादिकर्मणि॥ १६४॥**
**यद्येवमखिला भावा भवेयुर्युगपत्ततः।**
**तदुत्पादनसामर्थ्ययोगिकारणसन्निधेः॥ १६५॥**

स ह्याह—नहि भगवतः क्रीडार्था प्रवृत्तिः। अपि तु यथा पृथिव्यादीनां महाभूतानां स्वभाव एव स तादृशो यत्स्वकार्येषु प्रवृत्तिः, तथेश्वरस्यापीति। तदेतदयुक्तम्। एवं हि सर्वभावानां तद्व्यापारमात्रभाविनां समर्थाविकलकारणसन्निधानाद्युगपदेवोत्पादः स्यात्। न चापि बुद्धिमत्त्वं विशेषकं युक्तमिति पूर्वमेवास्माभिः प्रतिपादितम्॥ १६४॥ १६५॥

यद्येवं पावकादिकार्याणामपि किं न यौगपद्यं भवतीत्याह—**स्वहेतुबलसंभूता** इत्यादि।

**स्वहेतुबलसंभूता नियता एव शक्तयः।**
**असर्वकालभाविन्यो ज्वलनादिषु वस्तुषु॥ १६६॥**

**अन्यथा यौगपद्येन सर्वं कार्यं समुद्भवेत् ।**
**तेषामपि न चेदेष नियमोऽभ्युपगम्यते ॥ १६७ ॥**

**तेषामिति** । पावकादीनाम् । न केवलमीश्वरस्येत्यपिशब्दः । **एष नियम** इति । स्वहेतुबलसंभवकृतः ॥ १६६ ॥ १६७ ॥

स्यादेतदूर्णनाभः स्वभावतः प्रवृत्तः किमिति स्वकार्याणि जालादीनि युगपन्न करोतीत्याह—**प्रकृत्यैवे**त्यादि ।

**प्रकृत्यैवांशुहेतुत्वमूर्णनाभेऽपि नेष्यते ।**
**प्राणिभक्षणलाम्पट्याल्लालाजालं करोति यत् ॥ १६८ ॥**

ऊर्णनाभोऽपि न स्वभावतः प्रवर्त्तते । किं तर्हि प्राणिभक्षणलाम्पट्यात्कादाचित्कात्प्रतिनियतहेतुसंभूतादित्यभिप्रायः । न ह्यसौ नित्यैकरूपः, तस्यापि स्वहेतुबलभावित्वेन कादाचित्की शक्तिः ॥ १६८ ॥

अथापि स्यात् । नानुकम्पया न क्रीडया किन्त्वबुद्धिपूर्वकमेव यथाकथंचित्प्रवर्त्तेत इत्याह—यथाकथंचिदित्यादि ।

**यथाकथंचिद्वृत्तिश्चेद्बुद्धिमत्ताऽस्य कीदृशी ।**
**नासमीक्ष्य यतः कार्यं शनकोऽपि प्रवर्त्तते ॥ १६९ ॥**

एवं हि कैवर्त्तादेः प्राकृतपुरुषादप्यत्यन्तानभिज्ञतया कथमसौ प्रेक्षावतामवधेयवचनः स्यात् । **बुद्धिमत्ते**ति । प्रेक्षावत्ता । शनकः—कैवर्त्तः । एतेनैव पुरुषदूषणेन ये वा शौरिप्रभृतयः परैर्जगतो धातारः कल्पितास्तेऽपि निरस्ता बोद्धव्या इति दर्शयति ॥ १६९ ॥

**शौर्यात्मजादय** इत्यादि ।

**शौर्यात्मजादयो येऽपि धातारः परिकल्पिताः ।**
**एतेनैव प्रकारेण निरस्तास्तेऽपि वस्तुतः ॥ १७० ॥**

## इति पुरुषपरीक्षा ।

तत्र शौरिर्विष्णुः । आत्मजो ब्रह्मा । आदिशब्देन यो बुद्धिमान्कालः परैरिष्यते तस्य ग्रहणम्........ । यथोक्तम् ॥ १७० ॥

## इति पुरुषपरीक्षा ।

**अन्ये पुनरिहात्मानमिच्छादीनां समाश्रयम् ।**
**स्वतोऽचिद्रूपमिच्छन्ति नित्यं सर्वगतं तथा ॥ १७१ ॥**

शुभाशुभानां कर्त्तारं कर्मणां तत्फलस्य च ।
भोक्तारं चेतनायोगाच्चेतनं न स्वरूपतः ॥ १७२ ॥
ज्ञानयत्नादिसम्बन्धः कर्तृत्वं तस्य भण्यते ।
सुखदुःखादिसंवित्तिसमवायस्तु भोक्तृता ॥ १७३ ॥
निकायेन विशिष्टाभिरपूर्वाभिश्च सङ्गतिः ।
बुद्धिभिर्वेदनाभिश्च जन्म तस्याभिधीयते ॥ १७४ ॥
प्रागात्ताभिर्वियोगस्तु मरणं जीवनं पुनः ।
सदेहस्य मनोयोगो धर्माधर्माभिसत्कृतः ॥ १७५ ॥
शरीरचक्षुरादीनां वधाद्धिंसाऽस्य कल्प्यते ।
इत्थं नित्येऽपि पुंस्येषा प्रक्रिया विमलेक्ष्यते ॥ १७६ ॥

(..........................................................................................................................) ॥ १७१ ॥ १७२ ॥ १७३ ॥ १७४ ॥ १७५ ॥ १७६ ॥

( सदाद्यविशेषविषयाविषयोभयात्मकज्ञेयप्रत्यक्षानुमानोपमानशाब्दसिद्धदर्शनप्रातिभज्ञानारेकविपर्यय )स्वप्नस्वप्नान्तिकाः प्रज्ञानविशेषा मदीयशरीरादिव्यतिरिक्तसंवेदकसंवेद्याः स्वकारणायत्तजन्मवत्त्वसामान्यविशेषवत्त्वबोधात्मकत्वाशुतरविनाशित्वसंस्काराधायकत्वप्रत्ययत्वेभ्यः पुरुषान्तरप्रत्ययवत् वैधर्म्येण प्रशस्तमिता(?) घटादय इति। तत्र सदादयः षडविशेषाः पूर्वं व्याख्याताः । तेषां सदादीनां षण्णां विषयो द्रव्यगुणकर्माणि । अविषयः सामान्यविशेषसमवायाः । तदेतदुभयात्मकं ज्ञेयं विषयः प्रत्यक्षादीनां ज्ञानविशेषाणां ते तथोक्ताः । प्रत्यक्षानुमानोपमानेत्यादिस्तु द्वन्द्वनिर्देशः । सिद्धदर्शनं ज्योतिःशास्त्राद्युपनिबद्धम् । तद्धि सिद्धानां दर्शनं सिद्धं वा दर्शनमिति कृत्वा सिद्धदर्शनमुच्यते । प्रातिभं तु ज्ञानमार्षं यथाश्वो मे भ्राता गमिष्यतीति । तद्धि प्रायेणर्षीणां भवतीति कृत्वार्षमुच्यते । आरेकः संशयः । विपर्ययो विपर्यासः । प्रथमस्वप्नावस्थाभावी प्रत्ययः स्वप्नः । तद्विषयं स्वप्नेऽपि यदपरं ज्ञानं भवति स स्वप्नान्तिकः । एत एव प्रज्ञानविशेषाः । शेषं सुबोधम् । तदेतत्प्रमाणमर्थतो निर्दिशन्नाह—
**ज्ञानानि** चेत्यादि ।

**ज्ञानानि च मदीयानि तत्वादिव्यतिरेकिणा ।**
**संवेदकेन वेद्यानि प्रत्ययत्वात्तदन्यवत् ॥ १७७ ॥**

तत्वादीत्यत्रादिशब्देन बुद्धीन्द्रियवेदनाः परिगृह्यन्ते । प्रत्ययत्वादित्युपलक्षणम् । तदन्येऽपि स्वकारणायत्तजन्मवत्त्वादयो ग्राह्याः ॥ १७७ ॥

शङ्करस्वामी पुनरन्यथा प्रमाणयति, इच्छादयः क्वचिदाश्रिताः वस्तुत्वे सति कार्यत्वाद्रूपादिवदिति, तद्दर्शयति—इच्छादयश्चेत्यादि ।

**इच्छादयश्च सर्वेऽपि क्वचिदेते समाश्रिताः ।**
**वस्तुत्वे सति कार्यत्वाद्रूपवत्स च नः पुमान् ॥ १७८ ॥**
**वस्तुत्वग्रहणादेष न नाशे व्यभिचारवान् ।**
**हेतुमत्त्वेऽपि नाशस्य यस्मान्नैवास्ति वस्तुता ॥ १७९ ॥**

**वस्तुत्वग्रहणा**दित्यादिना वस्तुत्वे सतीति विशेषणस्य साफल्यं दर्शयति ॥ १७८ ॥ १७९ ॥

उद्द्योतकरस्तु प्रमाणयति, देवदत्तस्य रूपरसगन्धस्पर्शप्रत्यया एकानेकनिमित्ताः, मयेति प्रत्ययेन प्रतिसन्धीयमानत्वात् । कृतसमयानामेकस्मिन्नर्तकीभ्रूक्षेपे युगपदनेकपुरुषाणां प्रत्ययवत् । अस्यायमर्थः—यथा किल नर्त्तकीभ्रूभङ्गानन्तरमस्माभिर्वस्त्राणि प्रक्षेप्तव्यानीत्येवं कृतसमयानां बहूनां नानाकर्त्तृका नानाभूताः प्रत्यया निमित्तस्य भ्रूभङ्गस्यैकत्वान्मया दृष्टो मया दृष्ट इति प्रतिसन्धीयन्ते, तथेहापि नानाविषयाः प्रत्यया निमित्तस्यैकत्वात्प्रतिसन्धास्यन्ते । यच्च तदेकं निमित्तं स आत्मेति । प्रतिसन्धानं पुनर्मया दृष्टं मया श्रुतमित्येवमादीनां प्रत्ययानामेकज्ञातृनिमित्तत्वेन घटनम् । नर्त्तकीभ्रूक्षेपे तु प्रत्ययानामेकविषयत्वापादनम् । सर्वथा प्रतिसन्धानमुच्यते यदेकमर्थं निमित्तीकृत्य प्रत्ययानां संबन्धनम् । तदेतत्प्रमाणं दर्शयन्नाह—**रूपादिप्रत्यया** इति ।

**रूपादिप्रत्ययाः सर्वेऽप्येकानेकनिमित्तकाः ।**
**मयेति प्रत्ययेनैषां प्रतिसन्धानभावतः ॥ १८० ॥**
**नर्त्तकीभ्रूलताभङ्गे बहूनां प्रत्यया इव ।**
**अन्यथा प्रतिसन्धानं न जायेतानिबन्धनम् ॥ १८१ ॥**

सुबोधम् ॥ १८० ॥ १८१ ॥

अयमपरस्तदीयः प्रयोगः—आत्मेति पदं शरीरेन्द्रियमनोबुद्धिवेदनासंघातव्यतिरिक्तवचनं प्रसिद्धपर्यायव्यतिरिक्तत्वे सत्येकपदत्वात् घटादिशब्दवत् । तदाह—**बुद्धीन्द्रियादी**त्यादि ।

**बुद्धीन्द्रियादिसंघातव्यतिरिक्ताभिधायकम् ।**
**आत्मेति वचनं यस्मादिदमेकपदं मतम् ॥ १८२ ॥**

**सिद्धपर्यायभिन्नत्वे यच्चैवं परिनिश्चितम् ।**
**यथानिर्दिष्टधर्मेण तद्युक्तं पटशब्दवत् ॥ १८३ ॥**

**सिद्धपर्यायभिन्नत्व** इति । बुद्धीन्द्रियादीनां ये सिद्धाः पर्याया धीप्रभृतयस्तेभ्यो भिन्नत्वे सतीत्यर्थः । **यच्चैवं परिनिश्चित**मिति । सिद्धपर्यायभिन्नत्वे सत्येकपदत्वेन । **यथानिर्दिष्टधर्मेणे**ति । बुद्ध्यादिव्यतिरिक्तार्थाभिधायित्वेन ॥ १८२ ॥ १८३ ॥

पुनः स एव व्यतिरेकिणं हेतुमात्मसिद्धये प्रयुक्तवान् । नेदं निरात्मकं जीवच्छरीरमप्राणादिमत्त्वप्रसङ्गाद्घटादिवदिति । तद्दर्शयति—**प्राणादिभि**रित्यादि ।

**प्राणादिभिर्वियुक्तश्च जीवदेहो भवेदयम् ।**
**नैरात्म्याद्घटवत्तस्मान्नैवास्त्यस्य निरात्मता ॥ १८४ ॥**

**अस्य निरात्मते**ति । जीवदेहस्य । यद्वा—अस्यात्मनो निरात्मता निःस्वभावता नास्ति, अपि तु सत्त्वं सिद्धमित्यर्थः ॥ १८४ ॥

अथ नित्यत्वविभुत्वे कथमस्य प्रतिपत्तव्ये इत्यत्राविद्धकर्णस्तावत्प्रमाणयति—मातुरुदरनिष्क्रमणोत्तरकालं मदीयाद्यप्रज्ञानसंवेदकसंवेद्यान्यतत्कालानि मदीयानि प्रज्ञानानि मदीयप्रज्ञानत्वात् आद्यमदीयप्रज्ञानवत् । एवं दुःखादयोऽपि पक्षीकर्त्तव्याः । एतच्च नित्यत्वेऽनुमानम्, तदेतद्दर्शयति—**सद्योजाताद्ये**त्यादि ।

**सद्योजाताद्यविज्ञानवेदकेनैव वेद्यते ।**
**सर्वमुत्तरविज्ञानं मज्ज्ञानत्वात्तदाद्यवत् ॥ १८५ ॥**

**तदाद्यव**दिति । तस्योत्तरकालभाविनो ज्ञानस्याद्यं तदाद्यम् ॥ १८५ ॥

विभुत्वसिद्धये प्रमाणयति । अवनिजलानिलमनांसि विप्रतिपत्तिविषयभावापन्नानि दूरतरवर्त्तीनि मदीयेनात्मना सह संबध्यन्ते । मूर्त्तत्ववेगवत्त्वपरत्वापरत्वमिथःसंयोगविभागवत्त्वेभ्यो मदीयशरीरादिवदिति । तद्दर्शयति—**मदीये**त्यादिना ।

**मदीयेनात्मना युक्तं दूरदेशनिवर्त्त्यपि ।**
**क्षित्यादिमूर्त्तिमत्त्वादेरस्मदीयशरीरवत् ॥ १८६ ॥**

**एवमित्या**दिनोपसंहरति ।

**एवं च सत्त्वनित्यत्वविभुत्वानां विनिश्चये ।**
**आत्मनो न निरात्मानः सर्वधर्मा इति स्थितम् ॥ १८७ ॥**

**तदत्रे**त्यादिना प्रतिविधत्ते ।

**तदत्र प्रथमे तावत्साधने सिद्धसाध्यता ।**
**सर्वज्ञादिप्रवेद्यत्वं त्वज्ज्ञानस्येष्यते यतः ॥ १८८ ॥**

**प्रथमे साधन** इति । ज्ञानानि च मदीयानीत्यादौ । तत्र सिद्धसाध्यता भवदीयप्रत्ययानामस्माभिर्भवच्छरीरादिव्यतिरेकिणा सर्वविदा श्रावकप्रत्येकबुद्धैस्तदन्यैश्च परिचित्तवेदिभिर्वेदनाभ्युपगमात् ॥ १८८ ॥

यश्चापि पुरुषान्तरप्रत्ययवदिति साधर्म्यदृष्टान्तः स साध्यविकल इति दर्शयन्नाह—**प्रकाशकानपेक्षं** चेत्यादि ।

**प्रकाशकानपेक्षं च स्वचिद्रूपं प्रजायते ।**
**अन्यविज्ञानमप्येवं साध्यशून्यं निदर्शनम् ॥ १८९ ॥**

यतः पुरुषान्तरीयकमपि ज्ञानं प्रकाशकान्तरानपेक्षं स्वसंविद्रूपमेवोपजायते । तेन तत्वादिव्यतिरिक्तसंवेदकसंवेद्यत्वेन साध्येन शून्यमिदं निदर्शनम् ॥ १८९ ॥

अथापि स्यान्नान्यदीयं चित्तमात्रमुदाहरणत्वेनाभिप्रेतं किन्तु यस्मिन्विषये विज्ञानमागृहीततदाकारमुपजायते तदिहोदाहरणमिष्टमित्याह—**तदाकारोपरक्तेने**त्यादि ।

**तदाकारोपरक्तेन यदन्येन प्रवेद्यते ।**
**तस्योदाहरणत्वेऽपि भवेदन्येन संशयः ॥ १९० ॥**

एवमपि यत्स्वसंविद्रूपमेव ज्ञानं ज्ञानान्तरसंवेदनरहितमुत्पद्यते तेन संशयो भवेद(तो) नैकान्तिको हेतुरिति यावत् । अथ तदपि स्वव्यतिरिक्तसंवेदकसंवेद्यमुदयव्ययधर्मकत्वप्रमेयत्वस्मर्यमाणप्रमाणत्वेभ्यो विषयवदिति मतम् । तदत्रापि साध्यविपर्यये बाधकाभावाद्व्यतिरेको न निश्चितः । उत्तरोत्तरज्ञानानुभवे चानवस्था । न ह्यव्यक्तव्यक्तिको विषयः सिद्ध्येत् । ततश्चैकविषयसिद्ध्यर्थं ज्ञानपरम्परामनुसरतः सकलमेव पुरुषायुषमुपयुज्येत । अथापि किंचिज्ज्ञानमनवस्थाभयात्स्वसंविदितरूपमेवोत्पद्यत इति । तथा तेनैवोदयव्ययधर्मकत्वादीनां हेतूनामनैकान्तिकता । तद्वदेवान्येषामपि ज्ञानानां स्वसंवेदनत्वाभ्युपगमे कः प्रद्वेषः । अथ तदसंविदितरूपमेवेष्यते । एवमपि तदसिद्धौ सर्वेषां पूर्वज्ञानानामप्रसिद्धिरनभिव्यक्तव्यक्तिकत्वात् । ततश्च विषयोऽपि न प्रसिद्ध्येत् । येषां तु विज्ञानवादिनां मतं सर्वमेव ज्ञानं ग्राह्यग्राहकवैधुर्यात्स्वयमेव प्रकाशते—न तु ज्ञानान्तरेण वेद्यत इति, तान्प्रति साध्यविकलता दोषोऽकम्प्य एव । एवमन्येष्वपि कारणायत्तजन्मवत्त्वादिषु साधनेषु सिद्धसाध्यतादिदोषा वाच्याः । यच्चापि सदादीत्यादि धर्मिविशेषणं कृतं तत्पूर्ववदनर्थकं, न ह्यस्य प्रस्तुतसाध्यसिद्धावङ्ग-

भावोऽस्ति । तथाहि—एतावता किं न गतम्, मदीयाः प्रत्यक्षादिप्रत्यया मदीयशरीरादिव्यतिरिक्तसंवेदकसंवेद्या इति । प्रत्यक्षानुमानादिप्रविभागेनापि धर्मिप्रभेदोऽनर्थक एव, मदीयाः प्रत्यया इत्येतावतैव गतत्वात् । न चापि प्रतिवादिनो यथोक्तविशेषणविशिष्टो धर्मी सिद्ध इत्याश्रयासिद्धता च हेतूनाम् । अथाऽपि विफलं विशेषणमुपादाय तत्साधनार्थमन्यदेव साधनमुच्यते । तथा सति प्रकृतादर्थादप्रकृतसंबद्धार्थमर्थान्तरं निग्रहस्थानं भवेत् ॥ १९० ॥

**क्वचित्समाश्रितत्वं च यदीच्छादेः प्रसाध्यते ।**
**तत्र कारणमात्रं चेदाश्रयः परिकल्प्यते ॥ १९१ ॥**
**इष्टसिद्धिस्तदाधारस्त्वाश्रयश्चेन्मतस्तव ।**
**तथाऽपि गतिशून्यस्य निष्फलाऽऽधारकल्पना ॥ १९२ ॥**

यच्चोक्तम्—इच्छादयश्चेत्यादि, तत्र यदि कारणमात्रमाश्रय इच्छादीनां साध्यते, तदा सिद्धसाध्यता, न हि निष्कारणा इच्छादयोऽस्माभिरिष्यन्ते । चतुर्भिश्चित्तचैत्ता हीति वचनात् । **परिकल्प्यत** इति । वर्ण्यत इत्यर्थः । अथाधारलक्षण आश्रयः साध्यते तदाऽपि प्रतिज्ञार्थस्यानुमानबाधितत्वान्न तेन हेतोर्व्याप्तिः सिद्ध्यतीति दर्शयति—**तदाधार** इत्यादि । तेषामिच्छादीनामाधारस्तदाधारः । मूर्त्तानां हि भावानां प्रसर्पणधर्माणां स्यादधःपातप्रतिबन्धादाधारकल्पना । ये तु सुखादयो गतिशून्यास्तेषामधःपतनासंभवात्किंकुर्वन्नात्मादिराधारः स्यात् ॥ १९१ ॥ १९२ ॥

ननु यथा घटादयो बदरादीनामकिंचित्करा अप्याधारास्तद्वदात्मा सुखादीनामाधारो भविष्यतीत्याह—**आश्रय** इत्यादि ।

**आश्रयो बदरादीनां कुण्डादिरुपपद्यते ।**
**गतेर्विबन्धकरणाद्विशेषोत्पादनेन वा ॥ १९३ ॥**

गतेर्विबन्धकरणादित्यक्षणिकपक्षे । विशेषोत्पादनेन वेति क्षणिकपक्षे । उपादानकारणसमानदेशोत्पादनं तत् । अयं द्विविधोऽपि प्रकार इच्छादीनां न संभवतीति न तेषां कश्चिदाधारो युक्तः ॥ १९३ ॥

यच्चापि वस्तुत्वे सतीति विशेषणं तदनर्थकमेव व्यवच्छेद्याभावादिति दर्शयन्नाह—**नीरूपस्ये**त्यादि ।

**नीरूपस्य च नाशस्य कार्यत्वं नैव युक्तिमत् ।**
**अतो विशेषणं व्यर्थं हेतावुक्तं परैरिह ॥ १९४ ॥**

यदि हि विनाशस्य कार्यत्वं संभवेत्तदा तद्व्यवच्छेदाय वस्तुत्वे सतीति विशेषणं सार्थकं भवेत्। यावता तस्यावस्तुतया हेतुभिर्न किंचित्क्रियत इति कथं हेतुमत्ता भवेत्। प्रयोगः—यदवस्तु न तत्कस्यचित्कार्यम्, यथा शशविषाणम्। अवस्तु च नाश इति व्यापकविरुद्धोपलब्धेः। कार्यत्वे सति वस्तुत्वप्रसङ्गः सुखादिवदितीदमत्र बाधकं प्रमाणम्। किंचाभ्युपगमविरोधो भवताम्। तथाहि—कार्यमित्यात्मलाभाख्यात्स्वकारणसमवायात्सत्तासमवायाद्वाऽभिधानप्रत्ययौ भवतः। न च विनाशस्य द्रव्यादिस्वभावरहितस्य स्वकारणे समवायोऽस्ति। तत्र वा सत्तायाः। तस्य नीरूपत्वात्। अन्यथा ह्यसौ द्रव्यादिवदाश्रितोऽपि स्याद्वस्तु चेति न हेतुविशेषणेन व्यवच्छेद्यो भवेत्। अतो वस्तुत्वे सतीति विशेषणं व्यर्थम् ॥ १९४ ॥

रूपादिप्रत्यया इत्यादावाह—**मयेत्यादि**।

**मयेति प्रतिसन्धानमविद्योपप्लवादिदम्।**
**क्षणिकेष्वपि सर्वेषु कर्त्रेकत्वादिभासतः ॥ १९५ ॥**
**मिथ्याविकल्पतश्चास्मान्न युक्ता तत्त्वसंस्थितिः।**
**सामर्थ्यभेदाद्भिन्नोऽपि भवत्येकनिबन्धनम् ॥ १९६ ॥**

मया दृष्टं मया श्रुतमित्येवं यदेकज्ञातृनिमित्तत्वेन प्रत्ययानां घटनलक्षणं प्रतिसन्धानं तदेतदनैकान्तिकम्। यतः क्षणिकेष्वपि भावेषु भ्रान्तादेककर्तृत्वाभिमानतः प्रतिसन्धानसंभवात्। तस्मादेवंभूतात्प्रतिसन्धानान्न युक्ता वस्तुव्यवस्था। कथं पुनर्भवतः क्षणाः प्रतिसन्धाननिमित्ततामुपगच्छन्तीत्याह—**सामर्थ्यभेदादित्यादि**। सामर्थ्यभेदात्—सामर्थ्यविशेषात्। अनेकोऽप्यर्थ एकाकारपरामर्शादिकार्यस्यैकस्य निबन्धनम्—कारणम्, यथा गुडूच्यादयो ज्वरादिशमन इति पश्चाद्विस्तरेण प्रतिपादयिष्यति ॥ १९५ ॥ १९६ ॥

अथ भ्रान्तत्वमेव कथमस्य निश्चितमित्याह—**एकानुगामीत्यादि**।

**एकानुगामिकार्यत्वे पौर्वापर्यं विरुध्यते।**
**रूपशब्दादिचित्तानां शक्तकारणसन्निधेः ॥ १९७ ॥**

यदि ह्येकस्य पूर्वोत्तरकालानुयायिन आत्मादेर्नित्यस्य कार्यत्वमेषां नीलादिप्रत्ययानां स्यात्तदा क्रमभावित्वमेषां विरुध्येत। अविकलकारणत्वेन युगपदेवोत्पादप्रसङ्गात्। न चापि नित्यस्य परापेक्षाऽस्ति। तस्य केनचिदनुपकार्यत्वात् ॥ १९७ ॥

किं च सामान्येन कारणपूर्वकत्वमात्रं प्रसाध्यते तदा सिद्धसाध्यतेति दर्शयति—**एकानन्तरे**त्यादि ।

**एकानन्तरविज्ञानात् षड्विज्ञानसमुद्भवः ।**
**युगपद्वेद्यते व्यक्तमत इष्टप्रसाधनम् ॥ १९८ ॥**

यत एकस्मादनन्तरविज्ञानात्समनन्तरप्रत्ययात् षण्णां चक्षुरादिविज्ञानानामुत्पादः स्पष्टं संवेद्यते । तथा हि—यदैव नर्त्तकीरूपं पश्यति, तदैव मुरजादिशब्दं शृणोति, कुवलयादिगन्धं च जिघ्रति, कर्पूरादिरसमास्वादयति, व्यजनानिलादिस्पर्शं चानुभवति, वस्त्रादि च मनसाऽऽदातुं चिन्तयति । न चालातचक्रदर्शनवत्तद्दृष्टिराशुसंचारादिति युक्तं वक्तुम् । अस्पष्टप्रतिभासितत्वप्रसङ्गात् । तथा हि—दर्शनानां प्रतिसन्धानादयं सकृद्ग्रहाभिमानो भवता वर्ण्यते । प्रतिसन्धानं च स्मृत्या क्रियते । सा चातीतविषयत्वादस्पष्टा । स्पष्टश्चायं सकृद्रूपादिप्रतिभासः संवेद्यते । किंच सरो रस इत्यादौ सुतरामाशु सकारादिवर्णग्राहिणां ज्ञानानामुदयोऽस्तीति । अत्राऽपि सकृद्ग्रहाभिमानः स्यात् । ततश्च न कचित् क्रमो व्यवसीयेत । एतच्च पश्चाद्विस्तरेण प्रतिपादयिष्यते । इह तु व्यक्तमिति वचनात्परिहारदिक् प्रदर्शितैव ॥ १९८ ॥

अथ नित्यैकरूपपदार्थहेतुत्वादेषामेकनिमित्तत्वं प्रसाध्यते, तदा व्याप्तेरनुमानबाधेति दर्शयति—**क्रमिणा**मित्यादि ।

**क्रमिणां त्वेकहेतुत्वं नैवेत्युक्तमनन्तरम् ।**
**अतोऽनुमानबाधाऽस्मिन्व्याप्तेर्व्यक्तं समीक्ष्यते ॥ १९९ ॥**

**अनन्तर**मिति । एकानुगामीत्यादिना । तत्रेदं बाधनम्, ये सन्निहिता अप्रतिबद्धसामर्थ्यकारणास्ते युगपदेव भवन्ति । यथा समग्रसामग्रीकाः सकृद्भाविनोऽङ्कुरादयः । सन्निहिताप्रतिबद्धसामर्थ्यकारणाश्च देवदत्तस्य रूपादिविषयाः प्रत्यया इति स्वभावहेतुः । न चैवं संभवति । तस्माद्विपर्ययः ॥ १९९ ॥

दृष्टान्तस्यापि साध्यविकलतेति दर्शयति—**नर्त्तकी**त्यादि ।

**नर्त्तकीभ्रूलताभङ्गो नैवैकः परमार्थतः ।**
**अनेकाणुसमूहत्वादेकत्वं तस्य कल्पितम् ॥ २०० ॥**

न हि नर्त्तकीभ्रूलतादिरेकोऽस्ति तस्यानेकाणुसमूहत्वात् । यद्येवं कथमेकशब्दविषयत्वं तस्य भवतीत्याह—**एकत्वं तस्य कल्पित**मिति ॥ २०० ॥

अथ कल्पनायाः किं निबन्धनमित्याह—**एककार्योपयोगित्वा**दित्यादि ।

**एककार्योपयोगित्वादेकशब्दस्य गोचरः ।**
**साध्योऽप्येवंविधोऽभीष्टो यदि सिद्धप्रसाधनम् ॥ २०१ ॥**

यस्मादसौ भ्रूलताभङ्ग एकस्मिन्कार्ये चक्षुर्विज्ञानादिक उपयुज्यते, तस्माद्भिन्नोऽप्येकशब्दविषयो भवति । अथापि स्यादस्माभिरेवंविध एव कल्पितैकत्वः साध्योऽभिप्रेतः (अतः) साध्यविकलता दृष्टान्तस्य न भवतीत्याह—**साध्योऽपी**त्यादि । एवं हि सिद्धसाध्यता, पूर्वापरीभूतानां संस्काराणामेकप्रत्ययनिमित्तानेकसत्वप्रज्ञप्तिविषयत्वात् ॥ २०१ ॥

यच्चोक्तं बुद्धीन्द्रियादीत्यादि, अत्राह—**बुद्धिचित्ते**त्यादि ।

**बुद्धिचित्तादिशब्दानां व्यतिरिक्ताभिधायिता ।**
**नैवैकपदभावेऽपि पर्यायाणां समस्ति नः ॥ २०२ ॥**
**अतोऽनैकान्तिको हेतुर्नन्रूक्तं तद्विशेषणम् ।**
**उच्यते नैव सिद्धं तच्चेतःपर्यायतास्थितेः ॥ २०३ ॥**
**अहङ्काराश्रयत्वेन चित्तमात्मेति गीयते ।**
**संवृत्त्या वस्तुवृत्त्या तु विषयोऽस्य न विद्यते ॥ २०४ ॥**

एकपदत्वादित्यनैकान्तिको हेतुः । तथाहि—बुद्धिश्चित्तं ज्ञानमिन्द्रियमक्षं वेदना चित्तनुः कायः शरीरमित्यादीनां बुद्धीन्द्रियवेदनाशरीरपर्यायाणामेकपदत्वेऽपि नास्मन्मतेऽस्ति तद्व्यतिरिक्तपदार्थाभिधायितेति ततो विपक्षाद्व्यावृत्त्यसिद्धेरनैकान्तिकत्वम् । ननु चेदमेवाशङ्क्य सिद्धपर्यायभिन्नत्वे सतीति तस्य हेतोर्विशेषणमुक्तं तत्कथमनैकान्तिकता भवति, तदत्राभिधीयते । असिद्धमेतद्धेतुविशेषणम्, कस्मात् ? चेतःपर्ययतास्थितेः । आत्मेत्येतस्य चित्तपर्यायत्वव्यवस्थानात् । यथोक्तम्, "चित्तमेवाहङ्कारसंश्रयत्वादात्मेत्युपचर्यते" इति । आत्मेत्युपचर्यते—व्यवह्रियत इत्यर्थः । तेन यदुक्तमुद्द्योतकारेण मुख्यासंभवादुपचारो न युक्त इति तदभिप्रायापरिज्ञानादिति ग्रहीतव्यम् । एतदेव गीयत इत्यनेन स्पष्टयति । तस्मादसिद्धविशेषणो हेतुः । एतच्च संवृत्त्या सविषयत्वमुपगम्यास्य हेतोरनैकान्तिकत्वमुक्तम् । यदि तु परमार्थेन तु बुद्ध्यादिव्यतिरिक्तार्थाभिधायित्वं प्रसाध्यते तदा व्याप्तेरनुमानबाधितत्वादयुक्त एवायं हेतुरिति दर्शयन्नाह—**वस्तुवृत्त्ये**त्यादि । अध्यारोपितार्थविषयत्वात्सर्वस्यैव शाब्दस्य

व्यवहारस्येति पश्चात्प्रतिपादयिष्यते । तेनास्यात्मशब्दस्य विषयो नास्त्येवेति कथं हेतोः साध्येन व्याप्तिर्भवेदिति भावः ॥ २०२ ॥ २०३ ॥ २०४ ॥

सविशेषणोऽप्यनैकान्तिको हेतुरिति दर्शयन्नाह—**नभस्तलारविन्दादा**वित्यादि ।

**नभस्तलारविन्दादौ यदेकं विनिवेश्यते ।**
**कारकादिपदं तेन व्यभिचारोऽपि दृश्यते ॥ २०५ ॥**

यथा हि गगनकुसुमादावत्यन्ताभावेन केनचित्कारकादिपदं निवेश्यते तदा तस्योभयप्रसिद्धेः शरीरादिवाचकव्यतिरिक्तत्वे सत्येकपदत्वमस्ति, न च शरीरादिव्यतिरिक्तवस्तुविषयत्वमपीत्यनैकान्तिको हेतुः ॥ २०५ ॥

कथं पुनः कारकादिपदं निरुपाख्ये शक्यं नियोक्तुमित्याह—**सङ्केतमात्रभाविन्य** इत्यादि ।

**सङ्केतमात्रभाविन्यो वाचः कुत्र न सङ्गताः ।**
**नैवात्मादिपदानां च प्रकृत्याऽर्थप्रकाशनम् ॥ २०६ ॥**

स्वतन्त्रेच्छामात्रभावी हि सङ्केतः, तन्मात्रवाचिन्यश्च वाचः, तत्कथमासां क्वचिदपि प्रवृत्तिप्रसररोधो भवेत् । अथापि स्यादसामयिकैकपदत्वादित्ययं हेत्वर्थो विवक्षितस्तेन व्यभिचारो न भविष्यतीत्याह—**नैवे**त्यादि । न हि सङ्केतमन्तरेण शब्दानां प्रकृत्याऽर्थप्रकाशनमस्ति, अव्युत्पन्नस्यापि ततोऽर्थप्रतीतिप्रसङ्गात् । स्वेच्छया च नियोगाभावप्रसङ्गात् । सङ्केतवैयर्थ्यप्रसङ्गाच्च । तस्मादात्मादिपदानां नैव प्रकृत्याऽर्थप्रकाशनं सिद्धमित्यसिद्धो हेतुः । अथाविशेषास्पदपदार्थान्तर्भूतज्ञेयविषयत्वे सतीत्यपरं विशेषणमुपादीयते । यथोक्तं भाविविक्तेन । एवमपि यथोक्तविशेषणासिद्धेरसिद्धो हेतुर्व्याप्त्यभावाच्चानैकान्तिकः ॥ २०६ ॥

यच्चोक्तं प्राणादिभिर्वियुक्तश्चेत्यादि, तत्राह—**प्राणादीनां चे**त्यादि ।

**प्राणादीनां च सम्बन्धो यदि सिद्धः सहात्मना ।**
**भवेत्तदा प्रसङ्गोऽयं युज्यते सङ्गतोऽन्यथा ॥ २०७ ॥**
**न वन्ध्यासुतशून्यत्वे जीवदेहः प्रसज्यते ।**
**प्राणादिविरहे ह्येवं तवाप्येतत्प्रसञ्जनम् ॥ २०८ ॥**

यदि हि प्राणादीनामात्मना सह तादात्म्यलक्षणस्तदुत्पत्तिलक्षणो वा कश्चित्संबन्धः सिद्धो भवेत्तदाऽऽत्मनिवृत्तौ शरीरे प्राणादिनिवृत्तिप्रसङ्गो युक्तिमान्भवेत् । अन्यथा

ह्यप्रतिबद्धस्य निवृत्तावन्यनिवृत्तिप्रसङ्गोऽसङ्गत एव स्यादतिप्रसङ्गात्। न हि वन्ध्यापुत्रनिवृत्तौ तदसंबद्धानां प्राणादीनां निवृत्तिर्भवति। तस्माद्यथा वन्ध्यासूनुनिवृत्तौ तदसंबद्धानामपि प्राणादीनां निवृत्तिः प्राप्नोति घटादिवदिति केनचित्प्रसङ्गापादनं क्रियमाणमनैकान्तिकं भवति, एवं तवाप्येतदात्मनिवृत्तौ प्राणादिनिवृत्तिप्रसञ्जनमनैकान्तिकमेव, संबन्धासिद्धेरिति भावः ॥ २०७ ॥ २०८ ॥

कथं पुनः संबन्धासिद्धिरित्याह—**न तावदित्यादि**।

**न तावदिह तादात्म्यं भेदाङ्गीकरणात्तयोः।**
**कार्यकारणता नापि यौगपद्यप्रसङ्गतः ॥ २०९ ॥**
**तदात्मनो निवृत्तौ हि तत्सम्बन्धविवर्जिताः।**
**किममी विनिवर्तन्ते प्राणापानादयस्तनोः ॥ २१० ॥**

**भेदाङ्गीकरणात्तयोरिति**। तयोरात्मप्राणादिकयोर्न तादात्म्यलक्षणः संबन्धोऽस्ति, स्वभावभेदाभ्युपगमात्। तथाहि—अनित्या अव्यापिनो मूर्ताश्च प्राणादयः, तद्विपरीतस्त्वात्मा। नापि तदुत्पत्तिलक्षणः, प्राणादीनामविकलकारणत्वेन यौगपद्यप्रसङ्गात्। न चैतद्व्यतिरेकेण संबन्धान्तरमस्ति। तस्मात्संबन्धरहिताः प्राणादयः किमिति तनोः शरीराज्जीवनविशिष्टाद्विनिवर्त्तन्ते। नैव। तेनानैकान्तिको हेतुरिति भावः। एतेनेच्छाद्वेषप्रयत्नसुखदुःखज्ञानादीनि यान्यात्मलिङ्गत्वेन परैरुक्तानि तानि प्रतिषिद्धानि द्रष्टव्यानि, संबन्धासिद्धेः। प्रयोगः—ये यत्र न प्रतिबद्धास्ते तस्य गमका न भवन्ति, यथा तिलादेर्बलाकादयः, न प्रतिबद्धाश्च प्राणादय आत्मनीति व्यापकानुपलब्धिः। न चासिद्धो हेतुः। पूर्वं द्विविधस्यापि संबन्धस्य निरस्तत्वात्। न चाप्यनैकान्तिकः, सर्वस्य सर्वगमकत्वप्रसङ्गात्। न चापि विरुद्धः, सपक्षे भावादिति। यच्चाप्याह—"कर्तुः प्रसिद्धिः करणप्रसिद्धे"रिति, तदसिद्धम्। न हि चक्षुरादीनां परमार्थेन करणत्वं सिद्धम्, विज्ञानोत्पत्तौ सर्वेषां हेतुभावस्य तुल्यत्वात्। स्वेच्छामात्रपरिकल्पितत्वाच्च कर्तृकरणव्यवहारस्येति। कर्तृत्वमात्रसाधने सिद्धसाध्यता, परिकल्पितस्यानिरस्तत्वात्। पारमार्थिककर्तृत्वसाधनेऽनैकान्तिकता। तथाभूतेन कर्त्रा क्वचिदपि चक्षुरादीनां प्रतिबन्धासिद्धेः ॥ २०९ ॥ २१० ॥

यच्चोक्तं सद्योजाताद्यविज्ञानेत्यादि, तत्राह—**एवं चेत्यादि**।

**एवं च साधनैः सर्वैरात्मसत्वाप्रसिद्धितः।**
**नित्य(व्यापित्वयो)रुक्तं साध्यहीनं निदर्शनम् ॥ २११ ॥**

आद्यज्ञानवत्, मदीयशरीरवत्, इति यदेतन्निदर्शनमुक्तं तद्यथोक्तसाध्यधर्मविकलमात्मनोऽसिद्धत्वात् । अतोऽनैकान्तिकता हेतोः ॥ २११ ॥

अन्यैरित्यादिना पुनरप्युद्द्योतकरभाविविक्तादेर्मतमाशङ्कते ।

**अन्यैः प्रत्यक्षसिद्धत्वमात्मनः परिकल्पितम् ।**
**स्वसंवेद्यो ह्यहङ्कारस्तस्यात्मा विषयो मतः ॥ २१२ ॥**

ते ह्येवमाहुः—प्रत्यक्षत एवात्मा सिद्धः, तथाहि—लिङ्गलिङ्गिसंबन्धस्मृत्यनपेक्षमहमिति ज्ञानं रूपादिज्ञानवत्प्रत्यक्षम् । अस्य च न रूपादिर्विषयः, तद्विज्ञानभिन्नप्रतिभासत्त्वात् । तस्मादन्य एव विषय इति ॥ २१२ ॥

तदयुक्तमित्यादिना प्रतिविधत्ते ।

**तदयुक्तमहङ्कारे तद्रूपानवभासनात् ।**
**न हि नित्यविभुत्वादिनिर्भासस्तत्र लक्ष्यते ॥ २१३ ॥**
**गौरवर्णादिनिर्भासो व्यक्तं तत्र तु विद्यते ।**
**तत्स्वभावो न चाऽऽत्मेष्टो नायं तद्विषयस्ततः ॥ २१४ ॥**

असिद्धमहङ्कारस्यात्मविषयत्वं तदाकारशून्यत्वात् । प्रयोगः—यद्यदाकारशून्यं न तद्विषयम् । यथा चक्षुर्ज्ञानं न शब्दविषयम् । आत्माकारशून्यं चाहमिति ज्ञानमिति व्यापकानुपलब्धिः । न चायमसिद्धो हेतुरिति दर्शयति—**न हीत्यादि** । तथा हि—नित्यविभुत्वचेतनत्वादिगुणोपेत आत्मेष्यते । न चात्राहम्प्रत्यये नित्यत्वादिप्रतिभासो लक्ष्यते । किंतु गौरोऽहं मन्दलोचनः परिक्लशस्तीव्रवेदनाभिन्न इत्यादिदेहावस्थासंस्पर्शेनोत्पत्तेर्गौरवर्णादिलक्षणः प्रतिभासः प्रतीयते । तस्माद्देहाद्यवस्थासंस्पर्शेनोत्पद्यमानोऽहङ्कारो देहाद्यालम्बन एवेति ज्ञायते । **व्यक्तमिति** । स्पष्टमस्खलद्वृत्तित्वात् । ततश्च यदुक्तमुद्द्योतकरप्रभृतिभिः—उपभोगायतने शरीरेऽयमात्मोपचारः, यथाऽनुकूले भृत्ये राजा ब्रूते, य एवाहं स एवायं मे भृत्य इति । तदपास्तं भवति । तथा हि—यद्ययं गौणः स्यात्तदा स्खलद्वृत्तिर्भवेत् । न हि लोके सिंहमाणवकयोर्मुख्यारोपितयोर्द्वयोरपि सिंह इत्यस्खलिता बुद्धिर्भवति । मदीयाः शरीरादय इति व्यतिरेकदर्शनात् स्खलद्वृत्तिरहङ्कारः शरीरादिष्विति चेत् । न । आत्मन्यपि स्खलद्वृत्तित्वप्रसङ्गात् । तत्रापि हि मदीय आत्मेति व्यतिरेको दृश्यते । कल्पितोऽत्र भेद इति चेत् । इतरत्रापि समानमस्तु । तर्हि गौरोऽहमित्यादिप्रत्ययो मुख्यस्तथाऽपि कस्मा-

दात्माऽस्य विषयो न भवतीत्याह—**तत्स्वभाव** इति । गौरादिस्वभावः । तस्य रूपादिगुणासंभवात् ॥ २१३ ॥ २१४ ॥

एवं तावत्तदाकारशून्यत्वान्नात्मविषयोऽहङ्कारो युक्त इति वर्णितम् । तत्र विवादाभावप्रसङ्गाच्च न युक्त इति दर्शयति—**यदीत्यादि** ।

**यदि प्रत्यक्षगम्यश्च सत्यतः पुरुषो भवेत् ।**
**तत्किमर्थं विवादोऽयं तत्सत्त्वादौ प्रवर्त्तते ॥ २१५ ॥**

तस्यात्मनः सत्त्वनित्यत्वविभुत्वादौ ॥ २१५ ॥

स्यादेतद्यथा भवतां प्रत्यक्षीकृतेऽपि नीलादौ तत्स्वभावाव्यति(रिक्ते)क्षणिकत्वादौ विवादः प्रवर्त्तते । तथाऽऽत्मन्यपि भविष्यतीत्याह—**तथा हीत्यादि** ।

**तथा हि निश्चयात्माऽयमहङ्कारः प्रवर्त्तते ।**
**निश्चयारोपबुद्ध्योश्च बाध्यबाधकता स्थिता ॥ २१६ ॥**

युक्तो हि नीलादौ प्रत्यक्षेण गृहीतेऽपि तदव्यतिरिक्ते क्षणिकत्वादौ विवादः, तस्य प्रत्यक्षस्य निर्विकल्पत्वेनानिश्चायकतया क्षणिकत्वादेरनिश्चितत्वात् । भवत्पक्षे तु न युक्तोऽहम्प्रत्ययस्य सविकल्पकत्वेन निश्चयात्मकतयाऽऽत्मनो निश्चितत्वात् । न च निश्चयेन विषयीकृते वस्तुनि तद्विपरीताकारग्राहिणः समारोपप्रत्ययस्य प्रवृत्तिरस्ति, येन विवादो भवेत् । तयोः सहावस्थायित्वेन बाध्यबाधकभावात् । इयमेव हि निश्चयानां स्वार्थप्रतिपत्तिर्यत्तन्निश्चयनं ते चेन्न निश्चिन्वन्ति, न गृह्णन्त्येवेति प्राप्तम् ॥ २१६ ॥

तदेवं परपक्षं निराकृत्य स्वपक्षं स्थापयन्नाह—**तस्मादित्यादि** ।

**तस्मादिच्छादयः सर्वे नैवात्मसमवायिनः ।**
**क्रमेणोत्पद्यमानत्वाद्बीजाङ्कुरलतादिवत् ॥ २१७ ॥**
**अथ वाऽऽध्यात्मिकाः सर्वे नैरात्म्याक्रान्तमूर्त्तयः ।**
**वस्तुसत्त्वादिहेतुभ्यो यथा बाह्या घटादयः ॥ २१८ ॥**

प्रयोगः—ये क्रमेणोत्पद्यन्ते ते नात्मसमवायिनो यथा बीजाङ्कुरलतादयः, क्रमेणोत्पद्यन्ते च सुखादय इति विरुद्धव्याप्तोपलब्धेः । आत्मसमवायित्वविरुद्धेनानात्मसमवायित्वेन क्रमोत्पत्तेर्व्याप्तत्वात् । सन्निहिताविकलकारणत्वाद्युगपदुत्पत्तिप्रसङ्गो विपर्यये बाधकं प्रमाणम् । अथवा—ये वस्तुत्वकृतकत्वोत्पत्तिमत्त्वादिधर्मोपेतास्ते सर्वे निरात्मानो यथा बाह्या घटादयः, वस्तुत्वादिधर्मोपेताश्चाध्यात्मिका जीवशरीरमनोबुद्धिदुःखसुखादय इति स्वभावहेतुः ॥ २१७ ॥ २१८ ॥

कथं पुनरत्र व्याप्तिः सिद्धेत्याह—सात्मकत्वेत्यादि ।

**सात्मकत्वे हि नित्यत्वं तद्धेतूनां प्रसज्यते ।**
**नित्याश्चार्थक्रियाऽशक्ता नातः सत्त्वादिसम्भवः ॥ २१९ ॥**

यदि सात्मकत्वम्—आत्माधिष्ठितत्वं देहादीनां भवेत्, तदैषामात्मा हेतुः स्यात् । न ह्यकारणमधिष्ठाता युक्तोऽतिप्रसङ्गात् । ततश्च तद्धेतूनाम्—आत्महेतुकानां शरीरादीनामविकलकारणतया नित्यत्वम्—अक्रमित्वं प्रसज्येत । स्यादेतद्यदि नाम नित्यत्वमेषां प्रसक्तम्, तथाऽपि वस्तुत्वादिकमनुवृत्तमेवेत्याह—**नित्याश्चे**त्यादि । नित्याश्च सन्तः शरीरादयोऽर्थक्रियायामशक्ताः, प्रसज्यन्त इति प्रकृतमर्थाद्वचनपरिणामेन संबध्यते । नित्यस्य क्रमयौगपद्याभ्यामर्थक्रियाविरोधादिति भावः । अर्थक्रियासामर्थ्यनिवृत्तौ च वस्तुत्वनिवृत्तिरर्थक्रियासामर्थ्यलक्षणत्वाद्वस्तुनः । वस्तुत्वनिवृत्तौ सत्त्वादीनामपि वस्तुधर्माणां निवृत्तिरिति सिद्धा व्याप्तिः ॥ २१९ ॥

उद्द्योतकरस्त्वाह—अथ निरात्मकमिति कोऽर्थः साध्यत्वेनेष्टः । यदि तावदात्मनोऽनुपकारकमिति, न दृष्टान्तोऽस्ति । न हि किंचिदात्मनोऽनुपकारकमस्ति । अथात्मप्रतिषेध आत्मा शरीरं न भवतीति । कस्य चात्मा शरीरम्, उत्तरपदविषयत्वाच्च निसः, किं सात्मकमिति वाच्यम् । न ह्यसत्युत्तरपदे निसः प्रयोगं पश्यामः, यथा निर्मक्षिकमिति । अथ शरीर आत्मा प्रतिषिध्यते, सिद्धं साधयसि । कस्य वा शरीर आत्मा विद्यते । अथ शरीरमात्मसंबन्धे(न्धि?)न भवतीति । पुनर्दृष्टान्तो नास्ति । सर्वे चैते विशेषप्रतिषेधाः, विशेषप्रतिषेधाच्च सामान्यं गम्यते । एवं सति यत्प्रतिषेद्धव्यं तदभ्यनुज्ञातं भवति । अथात्मशब्दः शब्दत्वादनित्यविषय इति साध्यते । तथाऽपि नित्यशब्देनानैकान्तिकः । शरीरादीनां चोपचारादात्मवाच्यत्वात्सिद्धसाधनम् । अथ शरीरादिव्यतिरिक्तानित्यपदार्थविषयत्वेनानित्यविषय आत्मशब्दः साध्यते । तथापि रूपादिव्यतिरिक्तविषयाभ्युपगमाद्विरोध इति । तदेतत्प्रतिविधत्ते—**घटादिष्वि**त्यादि ।

**घटादिषु समानं च यथैरात्मा(यन्नैरात्म्यं?)निषिध्यते ।**
**परैर्जीवच्छरीरेऽस्मिंस्तदस्माभिः प्रसाध्यते ॥ २२० ॥**

तदेतद्भवतोऽपि तुल्यं चोद्यम् । तथाहि—घटादिषु बाह्येषु आत्मानधिष्ठितत्वेन तदुपभोगानायतनत्वेन वा नैरात्म्यं भवद्भिरपीष्यत एव । अन्यथा नेदं निरात्मकं जीवशरीरमप्राणादिमत्त्वप्रसङ्गाद्घटादिवदिति प्रसङ्गे दृष्टान्तत्वेन तेषामुपादानं न

स्यात् । ततश्च तत्रापि घटादिषु तुल्यं चोद्यं "कथमेषां नैरात्म्यं यदि तावदात्मानुपकारक"मित्यादि । तस्माद्येन प्रकारेणात्मानधिष्ठितत्वेन वा तदुपभोगानायतनत्वेन वा तेषु घटादिषु बाह्येषु सर्वेषु साधारणं नैरात्म्यं भवतामपि प्रसिद्धम् । यच्च जीवच्छरीरे भवद्भिर्निषिध्यते नेदं निरात्मकं जीवच्छरीरमिति, यस्य निषेधाज्जीवच्छरीरमेव सात्मकमुपगम्यते न मृतशरीरघटादय इति, तदेवास्माभिः प्रसाध्यते, निरात्मकं जीवच्छरीरं वस्तुत्वादिभ्य इति । तस्मादात्मनोऽनुपकारकमित्यादिविकल्पोऽनास्पद एव, भवतामपि नैरात्म्यस्य प्रसिद्धत्वात् । किंच—यत्तावदुक्तमात्मानुपकारित्वसिद्धौ न दृष्टान्तोऽस्तीति, तदसम्यक् । तथाहि—शक्यमेवं प्रसाधयितुम्, यो यस्य स्वभावातिशयं नाधत्ते नासौ तस्योपकारी, यथा विन्ध्यो हिमवतः, नाधत्ते चात्मनो नित्यैकरूपस्य स्वभावातिशयं शरीरादय इति व्यापकानुपलब्धेः । न चासिद्धो हेतुः । स्वभावातिशयस्यात्माव्यतिरिक्तत्वात् । तदाधाने सत्यात्मन एवाऽऽधानं स्यात् । ततश्चानित्यत्वप्रसङ्गः । व्यतिरेके च स्वभावातिशयस्य संबन्धनिबन्धनाभावात्तदीयोऽसाविति संबन्धो न सिद्ध्येत् । तस्मान्नित्यस्य न कश्चिदुपकारी संभवति, तस्य तत्राकिंचित्करत्वात् । यच्चोक्तम्—कस्य चात्मा शरीरमिति, तदप्यसम्यक् । सन्ति हि केचिदेवंविधा ये शरीरादीनात्मपरिणामरूपान्वर्णयन्ति । यथोपनिषद्वादिनः । अतस्तान्प्रति(प्रति)षिध्यते । यच्चोक्तम्—उत्तरपदार्थविषयत्वान्निसः किं सात्मकमिति वाच्यमिति । तदप्यसङ्गतम् । न ह्युत्तरपदार्थः सन्नेव निषिध्यते । किं तर्हि ? । समारोपितः । सतः प्रतिषेद्धुमशक्यत्वात् । ततश्च योऽसौ परेण भ्रान्त्या समारोपितोऽर्थः स एवोत्तरपदार्थो भवति । यतस्तमेवानूद्य परस्य मिथ्याज्ञानत्वमाख्यापयितुं प्रतिषेधः क्रियते । अन्यथा ह्यक्षणिकाः प्रदीपादय इत्यादौ बौद्धपरिकल्पितक्षणिकत्वनिषेधे भवता क्रियमाणे चोद्यमेतदापतत्येव, न ह्यसत्युत्तरपदे नञः प्रयोगं पश्याम इति । यच्चोक्तम्—कस्य वा शरीरे आत्मा विद्यत इति, तदप्यसम्यक् । तथा हि—येषां दर्शनमङ्गुष्ठपर्वार्द्धश्यामकादिफलप्रमाण आत्मेति, तेषां मतेनात्मनो मूर्त्तत्वाच्छरीरस्थितिरस्त्येवेति, तान्प्रति (प्रति)षेधो युज्यत एव । यच्चोक्तम्—शरीरस्यात्मसंबन्धित्वनिषेधे दृष्टान्तो नास्तीति, तदसिद्धम् । परस्परमुपकार्योपकारकत्वाभावाद्विन्ध्यहिमवतोरिव नात्मशरीरयोः संबन्धोऽस्तीति पूर्ववत्प्रसाधयितुं शक्यत्वात् । यच्चोक्तम्—विशेषप्रतिषेधाच्च सामान्यं गम्यत इति, तदनेकान्तम् । भवद्भिः प्रदीपादीनां क्षणिकत्वप्रतिषेधेऽपि कस्यचित्क्षणिकत्वसामान्येनानभ्युपगमात् । अथाऽपि स्यादिष्यत एवा-

स्माभिरचिरकालावस्थायित्वनिबन्धना प्रदीपादौ क्षणिकशब्दप्रवृत्तिरतः सामान्येन क्षणिकत्वं सिद्धमेवेति । यद्येवमात्मशब्दप्रवृत्तिरप्यस्माभिरहङ्कारसंमिश्रिते चेतसीष्टैवेति सिद्धः सामान्येनात्मा । यच्चोक्तम्—अथात्मशब्दोऽनित्यत्वविषय इत्यादिपक्षद्वयम्, तदप्यसङ्गतमेव । अनभ्युपगमात् । न ह्यात्मशब्दस्य कश्चित्परमार्थेन विषयोऽभ्युपगतः । नापि रूपादिव्यतिरिक्तः । न चापि नित्यशब्दस्य परमार्थेन क्वचिन्नित्ये वस्तुनि वृत्तिः सिद्धा, येन व्यभिचारः स्यात् । नापि शरीरादिष्वात्मशब्दस्योपचाराद्वृत्तिरस्खलद्वृतित्वादित्युक्तमतो न प्रसिद्धसाधनम् ॥ २२० ॥

**इत्थमात्माप्रसिद्धौ च प्रक्रिया तत्र या कृता ।**
**निरास्पदैव सा सर्वा वन्ध्यापुत्र इव स्थिता ॥ २२१ ॥**

## इति नैयायिकवैशेषिकपरिकल्पितात्मपरीक्षा ।

तदेवमात्माख्यस्य धर्मिणः प्रमाणव्याहतत्वेनाप्रसिद्धत्वात्तत्र या कर्तृत्वभोक्तृत्वादिप्रक्रिया भवद्भिरुपचरिता सा वन्ध्यापुत्र इव निरास्पदेति न पृथग्दूषणमस्याः क्रियते । आश्रयनिराकरणेनैवास्याः प्रतिक्षिप्तत्वात् । कृतनाशाकृताभ्यागमदोषश्च यथा न भवति तथा कर्मफलसंबन्धपरीक्षायां प्रतिपादयिष्यते ॥ २२१ ॥

## इति नैयायिकवैशेषिकपरिकल्पितात्मपरीक्षा ।

मीमांसकपरिकल्पितात्मनिराकरणमाह—**व्यावृत्त्यनुगमात्मान**मित्यादि ।

**व्यावृत्त्यनुगमात्मानमात्मानमपरे पुनः ।**
**चैतन्यरूपमिच्छन्ति चैतन्यं बुद्धिलक्षणम् ॥ २२२ ॥**

व्यावृत्तिः—सुखदुःखाद्यवस्थानां परस्परतो भेदाः, अनुगमः—चैतन्यद्रव्यत्वसत्त्वादीनामनुवृत्तिः, तावेतौ व्यावृत्त्यनुगमावात्मा स्वभावो यस्येति विग्रहः । एतदुक्तं भवति—सुखादिरूपेण व्यावृत्तं सत्त्वादिरूपेणानुगतमात्मानं चिद्रूपमपरे जैमिनीया वर्णयन्ति । तच्च चैतन्यं न बुद्धिव्यतिरेकेणान्यत्, यथा साङ्ख्यैरिष्यते, किं तर्हि ? बुद्धिरेवेति दर्शयति—**चैतन्यं बुद्धिलक्षण**मिति । बुद्धिलक्षणम्—बुद्धेः स्वरूपमित्यर्थः । बुद्धिव्यतिरेकेणापरस्य चिद्रूपत्वाप्रतीतेरिति भावः ॥ २२२ ॥

कथं पुनरेकस्यात्मनः परस्परविरुद्धं व्यावृत्त्यनुगमात्मकं स्वभावद्वयं युज्यत इत्याह—**यथाऽहे**रित्यादि ।

**यथाऽहेः कुण्डलावस्था व्यपैति तदनन्तरम् ।**
**संभवत्यार्जवावस्था सर्पत्वं त्वनुवर्त्तते ॥ २२३ ॥**
**तथैव नित्यचैतन्यस्वभावस्यात्मनोऽपि न ।**
**निःशेषरूपविगमः सर्वस्यानुगमोऽपि वा ॥ २२४ ॥**
**किन्त्वस्य विनिवर्त्तन्ते सुखदुःखादिलक्षणाः ।**
**अवस्थास्ताश्च जायन्ते चैतन्यं त्वनुवर्त्तते ॥ २२५ ॥**

यथा किलाहेः—सर्पस्यैकस्यापि सतः कुण्डलावस्थानिवृत्तावार्जवावस्थाप्रादुर्भावः, सर्पत्वं पुनरवस्थाद्वयेऽप्यनुवर्त्तते, तथाऽऽत्मनोऽपि नित्यचैतन्यस्वभावस्यैकस्यापि सतो नाशेषस्वभावविगमो नापि नैयायिकादिपरिकल्पितात्मवदशेषस्वभावानुगमः, किं तर्हि ? सुखाद्यवस्था निवर्त्तन्ते प्रवर्त्तन्ते च, चैतन्यरूपं तु सर्वत्रानुयायीत्यतो न विरोध इति समुदायार्थः । अवयवार्थस्तूच्यते—**नित्यचैतन्यस्वभावस्येति** । नित्यं चैतन्यं स्वभावो यस्येति विग्रहः । **सर्वस्येति** । रूपस्येति शेषः । **अनुगमोऽपि वेति** । नेति प्रकृतेन संबन्धः । **ताश्चेति** । सुखदुःखाद्यवस्थाः ॥ २२३ ॥ २२४ ॥ २२५ ॥

अथ कस्मादेकान्तेन व्यावृत्तिपक्ष एव नाश्रीयते यथा बौद्धैर्निरन्वयविनाशवादिभिरिष्यते, एकान्तिको वाऽन्वयो यथा नैयायिकादिभिराश्रीयत इत्याह—**स्याता**मित्यादि ।

**स्यातां ह्यत्यन्तनाशे हि कृतनाशाकृतागमौ ।**
**सुखदुःखादिभोगश्च नैव स्यादेकरूपिणः ॥ २२६ ॥**

यदि हि निरन्वयो विनाशः स्यात्, तदा कृतस्य कर्मणो नाशः स्यात्, कर्तुः फलानभिसंबन्धात् । अकृताभ्यागमश्च स्यादकर्तुः फलाभिसंबन्धनात् । एकरूपत्वे चात्मनः सुखदुःखादिभोगो न स्यात्, आकाशवत् । अभोक्त्रवस्थातो भोक्त्रवस्थायां विशेषाभावात् । तथा चोक्तं कुमारिलेन—"तस्मादुभयहानेन व्यावृत्त्यनुगमात्मकः । पुरुषोऽभ्युपगन्तव्यः कुण्डलादिषु सर्पव"दिति ॥ २२६ ॥

ननु चोभयरूपे पुंसि याऽवस्था कर्त्री न सा भोक्त्रीति, तावेव कृतनाशाकृताभ्यागमाविहापि प्राप्तावित्याह—**न चे**त्यादि ।

**न च कर्तृत्वभोक्तृत्वे पुंसोऽवस्थां समाश्रिते ।**
**ततोऽवस्थासु तत्त्वत्वात्कर्त्तैवाप्नोति तत्फलम् ॥ २२७ ॥**

न हि पुंसः कर्तृत्वभोक्तृत्वे अवस्थां समाश्रिते, किन्तु पुरुषमेव । यस्मात्पुमानेव करोति भुङ्क्ते च, न त्ववस्था । ततः—तस्मात्, (तस्य) अवस्थावतः पुरुषस्य, तत्त्वात्—परित्यक्तपूर्वरूपत्वात्, कर्त्तैव तत्फलम्—तस्य कर्मणः फलमाप्नोतीत्यदोषः ॥ २२७ ॥

किं पुनरस्यात्मनोऽस्तित्वे साधकं प्रमाणमित्याह—पुमानित्यादि ।

**पुमानेवंविधश्चायं प्रत्यभिज्ञानभावतः ।**
**प्रमीयते प्रबाधा च नैरात्म्यस्यामुनैव हि ॥ २२८ ॥**

अहमेव ज्ञातवानहमेव वेद्मीत्यादेरेककर्तृविषयस्य प्रत्यभिज्ञानस्य—भावतः सत्त्वात, आत्मा प्रसिद्धः । अमुनैव च प्रत्यभिज्ञानेन बौद्धादिपरिकल्पितस्य नैरात्म्यस्य बाधाऽपि सिद्धा । यथोक्तम्—"तेनास्मात्प्रत्यभिज्ञानात्सर्वलोकावधारितात् । नैरात्म्यवादबाधः स्यात्" इति ॥ २२८ ॥

कथं पुनः प्रत्यभिज्ञानप्रत्ययत एतद्द्वयं प्रसिध्यतीत्याह—अहमित्यादि ।

**अहं वेद्मीत्यहंबुद्धिर्ज्ञातारं प्रतिपद्यते ।**
**स चात्मा यदि वा ज्ञानं स्यादेकान्तविनश्वरम् ॥ २२९ ॥**
**यद्यात्मा विषयस्तस्याश्चतुरस्रं तदाऽखिलम् ।**
**क्षणिकज्ञानपक्षे तु सर्वमेवातिदुर्घटम् ॥ २३० ॥**
**तथा हि ज्ञातवान्पूर्वमहमेव च सम्प्रति ।**
**अहमेव प्रवेद्मीति या बुद्धिरुपजायते ॥ २३१ ॥**
**तस्या ज्ञानक्षणः को नु विषयः परिकल्प्यते ।**
**अतीतः साम्प्रतः किं वा किं वाऽसावथ सन्ततिः ॥ २३२ ॥**
**तत्राऽऽद्ये विषये ज्ञाते ज्ञातवानिति युज्यते ।**
**जानामीति न युक्तं च नेदानीं वेत्त्यसौ ततः ॥ २३३ ॥**
**वर्त्तमाने तु विषये प्रवेद्मीत्युपपद्यते ।**
**ज्ञातवानित्यसत्यं तु नैवासीत्प्रागिदं यतः ॥ २३४ ॥**
**अत एव द्वयं ग्राह्यं नैव तस्याः प्रकल्प्यते ।**
**न ह्युभौ ज्ञातवन्तौ वा जानीतो वाऽधुना पुनः ॥ २३५ ॥**
**सन्तानोऽपि न तद्ग्राह्यो द्वितयस्याप्यसंभवात् ।**
**न ह्यसौ ज्ञातवान्पूर्वमवस्तुत्वान्न वाऽधुना ॥ २३६ ॥**

**तस्मादयमहङ्कारो वर्त्तते यत्र गोचरे ।**
**उक्तादन्यत्र सिद्धोऽसावात्मा शाश्वतरूपवान् ॥ २३७ ॥**

अहं वेद्मीत्ययमहम्प्रत्ययो ज्ञातारं प्रतिपद्यत इत्यत्राविवाद एव, वेद्मीति कर्तृप्रत्ययसामानाधिकरण्यात् । स च ज्ञाता भवन्नात्मा वा भवेत् ज्ञानं वा भवत्परिकल्पितमेकान्तविनश्वरं क्षणिकमिति कल्पनाद्वयम् । तत्र यद्यात्मेति पक्षस्तदाऽखिलं चतुरस्रम्, अभिमतार्थप्रसिद्धेः । अथ ज्ञानमिति पक्षस्तदा सर्वमतिदुर्घटम् । तथा हि—अहं ज्ञातवानहमेव च सांप्रतं वेद्मीति योऽयमेककर्तृप्रत्यवमर्शेनाहम्बुद्धिरुपजायते तस्याविज्ञानक्षणो विषयत्वेन कल्प्यमानः कदाचिदतीतो वा कल्प्यते यद्वा साम्प्रतो वर्तमान उतातीतसाम्प्रतो यद्वा सन्ततिरिति चत्वारः पक्षाः । तत्राद्ये—अतीते ज्ञाने विषयत्वेन कल्प्यमानो ज्ञातवानित्ययमाकारावसायो युज्यते, पूर्वं तेन ज्ञातत्वात् । संप्रति जानामीत्येतत्तु न युक्तम्, न ह्यसावतीतज्ञानक्षण इदानीं वर्त्तमानकाले वेत्ति, तस्य पूर्वनिरुद्धत्वात् । अथ वर्त्तमानं विषय इति द्वितीयः पक्षस्तदा वेद्मीत्येतद्युक्तम्, इदानीं तस्य वेदकत्वात् । ज्ञातवानित्येवमाकारग्रहणं तु न युक्तम् । कस्मात्? नैवासीत्प्रागिदं यतः । इदमिति वर्त्तमानं ज्ञानम् । अत एव—अस्या बुद्धेर्वैमुख्येन प्रवृत्तेः, नातीतं सांप्रतं च विज्ञानद्वयं ग्राह्यमिति सिद्धम् । न हि वर्त्तमानातीतावुभौ ज्ञानलक्षणौ ज्ञातवन्तौ, नापि सांप्रतं जानीतः । किं तर्हि? एको ज्ञातवानपरो जानाति । अत एव सन्तानोऽपि तयाऽहम्बुद्ध्या ग्राह्यो न भवति, द्वितयस्य—अतीतवर्त्तमानज्ञानक्रियाद्वयस्यासंभवात् । तथाहि—नासौ सन्तानो ज्ञातवान्पूर्वं, नाप्यधुना जानाति, तस्य कल्पितत्वेनावस्तुत्वात्, न चावस्तुनो ज्ञातृत्वं भवति, तस्य वस्तुधर्मत्वात् । तस्माद्यथोक्तज्ञानव्यतिरेकेण यत्र विषयेऽयमहङ्कारो वर्त्तते स आत्मेति सिद्धम् ॥ २२९ ॥ २३० ॥ २३१ ॥ ॥ २३२ ॥ २३३ ॥ २३४ ॥ २३५ ॥ २३६ ॥ २३७ ॥

अथ शाश्वतरूपत्वमस्य कथं सिद्धमित्याह—व्यतीतेत्यादि ।

**व्यतीताहङ्कृतिश्चाद्यो ज्ञाताऽद्याप्यनुवर्त्तते ।**
**अहम्प्रत्ययगम्यत्वादिदानीन्तनबोद्धृवत् ॥ २३८ ॥**
**एष वा ह्यस्तनो ज्ञाता ज्ञातृत्वात्तत एव वा ।**
**ह्यस्तनज्ञातृवत्तेषां प्रत्ययानां च साध्यता ॥ २३९ ॥**

योऽहम्प्रत्ययगम्यः सोऽद्याप्यनुवर्त्तते, यथेदानीन्तनो बोद्धा । अहम्प्रत्ययगम्यश्चायमिदानीन्तनो बोद्धेति स्वभावहेतुः । **एष वेति** । इदानीन्तनो बोद्धा । **तत एवेति** । अहम्प्रत्ययगम्यत्वात् । एवं ज्ञातारं धर्मिणं कृत्वा प्रयोगो दर्शितः । सांप्रतमहम्प्रत्ययानां साध्यधर्मितां कृत्वा प्रयोगान्तरं दर्शयन्नाह—**तेषामित्यादि** । तेषामिति—अतीताद्यतनानामहम्प्रत्ययानाम्, **साध्यतेति** । साध्यधर्मितेत्यर्थः ॥ २३८ ॥ २३९ ॥

कथमित्याह—**एकसन्तानेत्यादि** ।

**एकसन्तानसम्बन्धज्ञात्रहम्प्रत्ययत्वतः ।**
**ह्यस्तनाद्यतनाः सर्वे तुल्यार्था एकबुद्धिवत् ॥ २४० ॥**

ह्यस्तनाद्यतनाः सर्वे अहम्प्रत्यया इत्ययं साध्यधर्मिनिर्देशः । तुल्यार्था इति साध्यधर्मः । एकविषया इत्यर्थः । एकेन देवदत्तादिसन्तानेन संबद्धो यो ज्ञाता तत्र तस्य वा येऽहम्प्रत्यया एकसन्तानसंबद्धज्ञात्रहम्प्रत्ययाः, तद्भावस्तत्त्वम् । अयं च हेतुनिर्देशः । अहम्प्रत्ययत्वमात्रं पुरुषान्तरीयेष्वप्यहङ्कारेषु प्रवर्त्तत इत्यतोऽनैकान्तिकत्वपरिहारार्थमेकसन्तानसंबद्धज्ञातृविषयत्वं हेतुविशेषणं कृतम् । एकबुद्धिवदिति दृष्टान्तः । तेषामेवाहम्प्रत्ययानां मध्ये विवक्षितैकबुद्धिवदित्यर्थः ॥ २४० ॥

**तदत्रेत्यादिनोत्तरपक्षमारभते** ।

**तदत्र चिन्त्यते नित्यमेकं चैतन्यमिष्यते ।**
**यदि बुद्धिरपि प्राप्ता तद्रूपैव तथा सति ॥ २४१ ॥**

यदि हि चैतन्यं नित्यैकरूपमङ्गीक्रियते तदा बुद्धिरपि चैतन्यरूपाव्यतिरेकान्नित्यैकरूपा प्राप्नोति । न चैवमिष्टमतोऽभ्युपगमविरोधः प्रतिज्ञायाः । तथा हि भाष्यकारेणोक्तम्—क्षणिका हि सा न बुद्ध्यन्तरकालमवतिष्ठत इति । तथा जैमिनिनाऽप्युक्तम्—सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमिति । नित्यत्वे सति जन्मायोगात् । स्ववचनविरोधश्च कुमारिलस्य, यथोक्तं तेनैव—"न हि तत्क्षणमप्यास्ते जायते वाऽप्रमात्मकम् । येनार्थग्रहणे पश्चाद्व्याप्रियेतेन्द्रियादिवत्" ॥ इति । एकत्वाच्च बुद्धेः प्रमाणषट्काभ्युपगमविरोधश्च । तथा प्रत्यक्षविरोधोऽपि, निरन्तरमध्यारोपितानेकविधार्थचिन्तायामुदयव्ययानुषङ्गिणीनां बुद्धीनामतिविस्पष्टमनुभूयमानत्वात् ॥ २४१ ॥

कुमारिलस्तु सर्वं विरोधराशिमपश्यन्नाह—**बुद्धीनामित्यादि** ।

**बुद्धीनामपि चैतन्यस्वाभाव्यात्पुरुषस्य च ।**
**नित्यत्वमेकताचेष्टा भेदश्चेद्विषयाश्रयः ॥ २४२ ॥**

बुद्धीनां पुरुषस्य च नित्यत्वमेकता चेष्टा, कस्मात्? चैतन्यस्वाभाव्यात्—बुद्धिलक्षणचैतन्यस्वाभाव्यात्पुरुषस्यास्मन्मतेनेत्यर्थः । कथं तर्हि रूपबुद्धी रसबुद्धिरित्यादिभेदः प्रतीयत इत्याह—**भेदश्चेद्विषयाश्रय** इति । चेच्छब्दः परमताभ्युपगमे । यद्येवं कल्प्यत इत्यर्थः ॥ २४२ ॥

स्यादेतद्यदि नित्यैका बुद्धिस्तदा किमिति क्रमेण रूपादीन्प्रतिपद्यते । यावता सकृदेव प्रतीयाद्विशेषाभावादित्याह—**स्वरूपेणे**त्यादि ।

**स्वरूपेण तथा वह्निर्नित्यं दहनधर्मकः ।**
**उपनीतं दहत्यर्थं दाह्यं नान्यन्न चान्यदा ॥ २४३ ॥**

यथा किल वह्निर्नित्यं दहनात्मकोऽपि सन्न सर्वदा सर्वं दहति, किं तर्हि? उपनीतम्—ढौकितमेव दहति । तत्रापि यदेव दाह्यं दग्धुं शक्यं तदेव दहति नाभ्रादिकमित्यतो दाह्यमित्याह ॥ २४३ ॥

**यथा वे**त्यादिना दृष्टान्तान्तरमाह ।

**यथा वा दर्पणः स्वच्छो यथा वा स्फटिकोपलः ।**
**यदेवाऽऽधीयते तत्र तच्छायां प्रतिपद्यते ॥ २४४ ॥**
**तथैव नित्यचैतन्याः पुमांसो देहवृत्तयः ।**
**गृह्णन्ति करणानीतान् रूपादीन्धीरसौ च नः ॥ २४५ ॥**

मलिनस्य च्छायाप्रतिपत्त्यभावात्स्वच्छ इत्युक्तम् । **आधीयत** इति । ढौक्यत इत्यर्थः । **तथैवे**ति दार्ष्टान्तिकोपदर्शनम् । यद्यपि पुमांसो व्यापिनस्तथाऽप्यदृष्टवशाद्देह एव वर्त्तमानाश्चक्षुरादिकरणोपनीतान्विषयान् गृह्णन्ति, नान्यत्र । यत्त्वेतन्नित्यं चैतन्यमसावस्माकं धीः—बुद्धिः, न तु साङ्ख्यवत्तद्व्यतिरेकिणी बुद्धिः॥२४४॥२४५॥

यद्येवं कथमसौ धीर्भङ्गिनी प्रसिद्धेत्येतदाशङ्क्य **तेने**त्यादिना सूचितमेव कारणमुपदर्शयन्बुद्धेर्भङ्गिनीत्वं समर्थयते ।

**तेनोपनेतृसंरम्भभङ्गित्वाद्भङ्गिनी मतिः ।**
**न नित्यं दाहको वह्निर्दाह्यासन्निधिना यथा ॥ २४६ ॥**

उपनेतारः रूपादीनां विषयाणां प्रापयितारश्चक्षुरादयः, तेषां संरम्भः—व्यापारः, तस्य भङ्गित्वात्–विनाशित्वात्, भङ्गिनी मतिर्लक्ष्यते । न त्वसौ स्वतो विनाशिनी । यदि तर्हि न स्वतो विनाशिनी, तदा सर्वमर्थमुपलभेतेति तदवस्थमेव चोद्यमित्यत

आह—न नित्यं दाहक इत्यादि । तथा न नित्यं बुद्धिः सर्वमर्थमुपलभते, सर्वदा सर्वस्य विषयस्यासन्निधानादिति भावः ॥ २४६ ॥

अथ नित्यत्वमस्याः कथमवगम्यत इत्याह—तत्रेत्यादि ।

**तत्र बोधात्मकत्वेन प्रत्यभिज्ञायते मतिः ।**
**घटहस्त्यादिबुद्धित्वं तद्भेदाल्लोकसंमतम् ॥ २४७ ॥**

तत्रेति वाक्योपन्यासे । बोधात्मकत्वेन—बुद्धिर्बुद्धिरिति, प्रत्यभिज्ञायमानत्वात्, शब्दवन्नित्या बुद्धिः । यद्येवमियं घटबुद्धिरियं पटबुद्धिरिति कथमिदं बुद्धीनां वैलक्षण्यं लोके प्रतिपत्तृभिरुपगतमित्याह—**घटेत्यादि** । **तद्भेदादिति** । घटहस्त्यादिभेदात् ॥ २४७ ॥

सैवेत्यादिना, एतदेव स्पष्टयति ।

**सैवेति नोच्यते बुद्धिरर्थभेदानुसारिभिः ।**
**न चास्त्यप्रत्यभिज्ञानमर्थभेद उपाश्रिते ॥ २४८ ॥**

**अर्थभेदानुसारिभिरिति** । प्रतिपत्तृभिः । अनेनान्वयव्यतिरेकाभ्यां अर्थभेदकृत एव बुद्धेर्भेद इति दर्शयति । **न चास्त्यप्रत्यभिज्ञानमिति** । अस्त्येव प्रत्यभिज्ञानमित्यर्थः ॥ २४८ ॥

नन्वित्यादिना प्रतिविधत्ते ।

**ननु हस्त्यादिशून्यायां भूमावारोपकारिणः ।**
**प्रत्यया ये प्रवर्त्तन्ते भेदस्तत्र किमाश्रयः ॥ २४९ ॥**

यदि ह्यर्थभेदकृत एव बुद्धेर्भेदस्तदा ये हस्त्यादिशून्यायां भुवि क्रमेण गजतुरगादीनवस्थितान्समारोपयन्तः प्रत्ययाः प्रवर्त्तन्ते तेषु भेदः किमाश्रयः प्रतीयेत । नैव कश्चिद्भेदव्यवस्थाश्रयोऽस्तीति यावत् । तथा हि—न स्वतो भेदोऽस्ति । सर्वबुद्धीनामेकत्वाभ्युपगमात् । नाप्युपधानभूतविषयनानात्वात्, तत्रोपधायकस्य कस्यचिदर्थस्याभावात् ॥ २४९ ॥

स्यादेतत्—अर्थशून्यत्वमसिद्धम्, तथाचोक्तं कुमारिलेन—स्वप्नादिप्रत्यये बाह्यं सर्वथा नहि नेष्यते । सर्वत्रालम्बनं बाह्यं देशकालान्यथात्मकम् ॥ इति तदेतदाशङ्कते—**अन्यदेशादिभाविन्य** इत्यादि ।

**अन्यदेशादिभाविन्यो व्यक्तयश्चेन्निबन्धनम् ।**
**सर्वत्रालम्बनं यस्माद्देशकालान्यथात्मकम् ॥ २५० ॥**

**निबन्धन**मिति । बुद्धेर्भेदव्यवस्थानं प्रति कारणमित्यर्थः । देशकालावन्यथात्मकावन्यप्रकारौ यस्य तत्तथोक्तम्, देशकालाभ्यां वाऽन्यथाऽऽत्मा यस्येति विग्रहः ॥ २५० ॥

**नन्वि**त्यादिना प्रतिविधत्ते ।

**ननु तद्देशसम्बन्धो नैव तासां तथाऽस्ति तत् ।**
**किमिति प्रतिभासन्ते तेन रूपेण तत्र च ॥ २५१ ॥**

यस्मिन्हि देशे येन क्रमेण ताः समारोपिता व्यक्तयस्तदा प्रतिभासन्ते तेन देशेन संबन्धो नैव तासां देशान्तरकालान्तरगतानां तथा तेन क्रमेणास्ति, तत्किमिति तेन स्वेच्छासमारोपितरूपेण प्रतिभासन्ते । न ह्यन्येन रूपेणान्यस्य प्रतिभासनं युक्तमतिप्रसङ्गात् । एवं हि सर्वमेव ज्ञानं सर्वविषयं प्रसज्येत । ततश्च प्रतिनियतार्थव्यवस्थोच्छेद एव स्यात् ॥ २५१ ॥

**भवन्मते हि नाकारो बुद्धेर्बाह्यस्तु वर्ण्यते ।**
**न विवक्षितदेशे च गजयष्ट्यादयः स्थिताः ॥ २५२ ॥**

किं च भवतो मीमांसकस्य मते यो भासमानः स आकारो न बुद्धेः, किन्त्वसौ बाह्यार्थस्वभावो वर्ण्यते । आकारवान्बाह्योऽर्थो निराकारा बुद्धिरिति वचनात् । यदि नामैवंभूतं ततः किमित्याह—**न विवक्षिते**त्यादि । विवक्षितो देशो यत्र तत्समारोपः कृतः । ततश्च यद्देशकालसंबद्धास्ते गजादयस्तद्देशसंबन्धित्वेनैव प्रतिभासेरन् । स्वविरहिणि तु देशान्तरे कालान्तरे च किमिति प्रतिभासन्ते । तस्मान्निरालम्बना एवैते प्रत्ययाः परमार्थतोऽसङ्कीर्णस्वभावाश्चलात्मानश्च, कादाचित्कत्वादिति सिद्धम् । तत्स्वभावस्य च पुंसोऽनित्यत्वानेकत्वे च सिद्धे । **स्यान्मतम्**—प्रत्ययस्तस्य पुरुषस्य धर्मः, तेन तस्य भेदेऽपि न पुंसो भेदो धर्मित्वात्तस्येति । **तदयुक्तम्** । प्रत्ययश्चैतन्यं बुद्धिर्ज्ञानमित्यनर्थान्तरत्वात् । न हि नामभेदमात्रेण वस्तूनां स्वभावो भिद्यते । किं च नामभेदेऽपि तेषां प्रत्ययानां चैतन्यात्मकमेकमनुगामिरूपमिष्टमेव । तस्य च चैतन्यस्याभेदे प्रत्ययानामपि तत्स्वभावानामविभाग एव । अन्यथा हि विरुद्धधर्माध्यासादैकान्तिको भेद एव स्यात् । एतेनैव निरालम्बनप्रत्ययप्रतिपादनेनाप्रत्यक्षत्वं बुद्धेः प्रत्युक्तम् । तथा हि—स परिस्फुरन्नाकारो न बाह्यो गजादिरिति साधितम्, ततश्च तं तथा परिस्फुरन्तमाकारमात्मभूतमेव प्रतिपद्यमाना बुद्धयः स्वयंप्रकाशरूपत्वात् स्वसंविद्रूपाः सिद्ध्यन्ति ॥ २५२ ॥

यच्चोक्तम्—स्वरूपेण यथा वह्निरित्यादि, तद्दूषणार्थमत्रैवोपचयन्नाह—**सर्वार्थेत्यादि** ।

**सर्वार्थबोधरूपा च यदि बुद्धिः सदा स्थिता ।**
**सर्वदा सर्वसंवित्तिस्तत्किमर्थं न विद्यते ॥ २५३ ॥**

यदि सर्वार्थबोधरूपा सदा बुद्धिरवस्थिता तदा सर्वदा सर्वार्थवेदनप्रसङ्गः ॥२५३॥

कथमित्याह—**शब्दोपधानेत्यादि** ।

**शब्दोपधाना या बुद्धी रसरूपादिगोचरा ।**
**सैव हीति न चेद्भेदास्त्वया चैवोपपादिताः ॥ २५४ ॥**

तथा हि—या शब्दोपधाना—शब्दविषया, बुद्धिः, सैव रसरूपादिविषया, नान्या, ततश्चैकार्थानुभववेलायामशेषार्थानुभवप्रसङ्गः, तदुपलम्भात्मिकाया बुद्धेः सर्वदा व्यवस्थितत्वात् । यथोक्तम्—"एकयाऽनेकविज्ञाने बुध्येत सकृदेव तत् । अविशेषात्क्रमेणापि माभूत्तदविशेषतः" ॥ इति । **न चेदिति** । यदि या शब्दोपधाना बुद्धिः सैव रसादिगोचरा नाङ्गीक्रियते, एवं सति भेदो बुद्धीनां भवता स्ववाचैवोपपादितः स्यात् ॥२५४॥

यश्चायं वह्निदृष्टान्तः सोऽप्यसिद्ध इति दर्शयन्नाह—**समस्तेत्यादि** ।

**समस्तदाह्यरूपाणां न नित्यं दहनात्मकः ।**
**कृशानुरपि निःशेषमन्यथा भस्मसाद्भवेत् ॥ २५५ ॥**

न ह्यशेषदाह्यदहनस्वभावो दहनो नित्यमवस्थितोऽन्यथा सकलमेव दाह्यं भस्मसाद्भवेत्, दहनज्वालानुषक्तदाह्यवत्सदासन्निहितस्वदाहकत्वात् । न केवलं बुद्धिः सर्वार्थबोधस्वभावा न भवतीत्यपिशब्देन दर्शयति ॥ २५५ ॥

यद्येवं नित्यदहनात्मकः कृशानुर्न भवति, कथं तर्ह्युपनीतमप्यर्थं दहेदित्याह—**दाह्यार्थसन्निधावित्यादि** ।

**दाह्यार्थसन्निधावेव तस्य तद्दाहकात्मता ।**
**युक्ता सर्वार्थदाहो हि सकृदेवं न सज्यते ॥ २५६ ॥**

**एवमिति** । समनन्तरोदितार्थाभ्युपगमे सति, सर्वार्थदाहो युगपन्न सज्यते—न प्रसज्यत इत्यर्थः । यच्चोक्तम्—यथा वा दर्पण इत्यादि । तदपि दर्पणादेर्नित्यैकरूपत्वे सति न युज्यत इति दर्शयन्नाह ॥ १५६ ॥

नीलोत्पलादिसंबन्धादित्यादि ।

नीलोत्पलादिसम्बन्धाद्दर्पणस्फटिकादयः ।
तच्छायाविभ्रमोत्पादहेतवः क्षणभङ्गिनः ॥ २५७ ॥
सोपधानेतरावस्थ एक एवेति सर्वदा ।
तच्छायस्तद्वियुक्तो वा स दृश्येतान्यथा पुनः ॥ २५८ ॥

स्फटिकदर्पणादिः प्रतिक्षणध्वंसी सन् नीलोत्पलादिसंपर्काद्विपर्यस्तज्ञानोत्पत्तावाधिपत्यं प्रतिपद्यते । अन्यथा—यद्यक्षणिकः सन् छायां प्रतिपद्येत, तदा य एव सोपधानावस्थः स एवानुपधानावस्थितिरिति कृत्वा, नीलाद्युपधानवियुक्तोऽपि नीलादिच्छायः समुपलभ्येत, अपरित्यक्तपूर्वरूपत्वात् । यद्वोपधानावस्थायामपि नीलाद्याकारवियुक्तो दृश्येत, पूर्वरूपाविशेषादिति । एतेन—अक्षणिकपक्षे सामान्येन सर्वेषामेव स्फटिकदर्पणादीनां छायाप्रतिपत्तिरपास्ता ॥ २५७ ॥ २५८ ॥

संप्रति क्षणिकाक्षणिकपक्षयोश्छायाप्रतिपत्तिं प्रत्येकं निराकरोति—**स्थिरत्वादित्यादि** ।

स्थिरत्वान्निर्विभागत्वान्मूर्त्तानामसहस्थितेः ।
बिभर्त्ति दर्पणतलं नैव च्छायां कदाचन ॥ २५९ ॥

स्थिरत्वात्—अक्षणिकत्वात्, दर्पणतलं पूर्वच्छायां बिभर्त्तीति संबन्धः । क्षणिकत्वेऽपि निर्विभागत्वान्न बिभर्त्तीति संबन्धनीयम् । तथा हि—कूपान्तर्गतोदकवद्दर्पणतले प्रतिबिम्बकमन्तर्गतमुपलभ्यते, न च दर्पणतलस्य विभागः—रन्ध्रमस्ति, निबिडतरावयवसन्निवेशात्, तस्माद्भ्रान्तिरियम् । अथवा—निर्विभागत्वं पूर्वोत्तरावस्थायामनानात्वम् । अत्र कारणं स्थिरत्वादिति । तेनायमर्थो भवति । स्थिरत्वेन निर्विभागत्वात्—पूर्वोत्तरावस्थारहितत्वादित्यर्थः । किं च—मूर्त्तानामसहस्थितेः, नैव दर्पणतलं छायां बिभर्त्तीति संबध्यते । तथा हि—दर्पणतले तद्देशान्येव पर्वतादिप्रतिबिम्बान्युपलभ्यन्ते, न च मूर्त्ताः पदार्थाः कदाचिदेकदेशतामापद्यन्ते, ऐकात्म्यप्रसङ्गात् । एतच्च क्षणिकाक्षणिकत्वे साधारणं दूषणम् ॥ २५९ ॥

स्फटिकस्यापि भावतो नोपधानच्छायाप्रतिपत्तिरस्तीति दर्शयति—**पार्श्वेत्यादि** ।

पार्श्वद्वितयसंस्थाश्च सुशुक्लं स्फटिकोपलम् ।
समीक्ष्यन्ते तदेषोऽपि न च्छायां प्रतिपन्नवान् ॥ २६० ॥

तथाहि—यदैवाग्रतः स्थितः प्रतिपत्ता जपाकुसुमसंपर्काद्रक्तं स्फटिकमुपलभते, तदैव ये पार्श्वद्वितयावस्थितास्ते सकलमेव स्फटिकोपलं सुशुक्लमुपलभन्ते, न भागशः। ततश्च यदि छायाप्रतिपत्तिस्तस्याभविष्यत्तदा पुरोऽवस्थितपुंस इव पार्श्वद्वितयावस्थितयोरपि प्रतिपत्त्रो रक्तावभासा प्रतिपत्तिरभविष्यत्। अयं च क्षणिकाक्षणिकपक्षयोरपि साधारणो दोषः ॥ २६० ॥

**भेदः प्रत्युपधानं** चेत्यादिना त्वक्षणिकत्वपक्ष एव दोषमाह ।

**भेदः प्रत्युपधानं च स्फटिकादेः प्रसज्यते ।**
**तच्छायाप्रतिपत्तिश्चेत्तस्य विद्येत तात्त्विकी ॥ २६१ ॥**

यदि हि परमार्थतः स्फटिकादेरुपधानोपरागप्रतिपत्तिर्भवेत्तदा यथाक्रमभाविनीनामुपधानमुपधानं छायानां स्वभावभेदान्नैकात्म्यम्। तद्वत्तदात्मनः स्फटिकादेरप्युपधानमुपधानं प्रति—प्रत्युपधानं—भेदः प्रसज्येत। यदि पुनर्भ्रान्तिरियमित्यङ्गीक्रियते तदाऽयमदोष इति ज्ञापनार्थं **तात्त्विकी**त्याह ॥ २६१ ॥

**तस्माद्भ्रान्तिरियं तेषु विचित्राचिन्त्यशक्तिषु ।**

यतश्चैवं पक्षद्वयेऽपि छायाप्रतिपत्तिर्न युज्यते तस्माद्भ्रान्तिरियमिति स्थितम्। यद्येवं कस्मात्स्फटिकादावेव सा भ्रान्तिर्भवति न कुड्यादावित्याह—**विचित्राचिन्त्यशक्तिष्विति**। विचित्राः—नानाप्रकाराः, अचिन्त्याः शक्तयो येषां ते तथोक्ताः। न हि भावानां शक्तिप्रतिनियमः पर्यनुयोगमर्हति, स्वहेतुपरम्पराकृतत्वात्तस्य। भवतामपि चात्रांशे नास्ति विवादः। यथोक्तम्—"अग्निर्दहति नाकाशं कोऽत्र पर्यनुयुज्यताम्"। इति।

यद्येवं बुद्धावपि तर्हि विषयच्छायाप्रतिपत्तिर्भ्रान्तिरेवास्तु माभूच्छायाप्रतिपत्तिरित्याह—

**न बुद्धौ भ्रान्तिभावोऽपि युक्तो भेदवियोगतः ॥ २६२ ॥**

न बुद्धौ भ्रान्तिसद्भावो युक्तः। न केवलं छायाप्रतिपत्तिर्न युक्तेत्यपिशब्दः। कस्मात्? भेदवियोगतः—भेदाभावात्। स्फटिकादिषु हि भ्रान्तिर्युक्ता, तेभ्यो भिन्नाया बुद्धेर्भ्रान्तायाः संभवात्, नत्वेवं बुद्धावपरा भ्रान्तिरूपा बुद्धिरस्ति, यस्मादेकैव बुद्धिरिष्टा। न च स्वयमेव विभ्रमरूपा जायते धीरिति युक्तं वक्तुम्, बुद्धेर्नित्यत्वाभ्युपगमात् ॥ २६२ ॥

यत्पुनरेकत्वनित्यत्वसाधनार्थं तत्र बोधात्मकत्वेन प्रत्यभिज्ञायते मतिरित्युक्तं तत्राह—**अबोधरूपभेदं** त्वित्यादि ।

**अबोधरूपभेदं तु समानं सर्वबुद्धिषु ।**
**आरोप्य प्रत्यभिज्ञानं नानात्वेऽपि प्रवर्त्तते ॥ २६३ ॥**

अनैकान्तिकमेतत्प्रत्यभिज्ञानम्, यस्मादबोधरूपेभ्यो घटादिभ्यो भेदम्—व्यावृत्तिं समारोप्य प्रत्यभिज्ञानं सर्वबुद्धिषु नानात्वे सत्यपि प्रवर्त्तमानमविरुद्धमेव । अवश्यं चैतद्विज्ञेयम्—यन्नानात्व एव सति विजातीयव्यावृत्तिनिबन्धनकृतमेतत्प्रत्यभिज्ञानम्, न पुनरनानात्व एवेति । तथाहि—निरालम्बनासु समारोपबुद्धिष्वर्थभेदेऽनुपाश्रिते-ऽप्यप्रत्यभिज्ञानमस्त्येव, न हि तत्रैवं भवति, यैव गजबुद्धिरासीत्सैव तुरङ्गस्यन्दन-बुद्धिरिति । प्रसाधितं चानालम्बनत्वमासां बुद्धीनामिति न पुनरुच्यते । तेन यदु-क्तम्—"न चास्त्यप्रत्यभिज्ञानमर्थभेदेऽनुपाश्रिते" इति, तदसिद्धमिति ग्रहीत-व्यम् ॥ २६३ ॥

किं च—यदि नित्यैकरूप आत्मेष्यते भवद्भिस्तदा सुखाद्यवस्थाभेदो न प्राप्नोति । अथ सुखाद्यवस्थाभेदोऽभ्युपगम्यते, न तर्हि नित्यैकरूपत्वमस्याभ्युपेतव्यम् । न ह्येकस्य भेदाभेदौ परस्परविरुद्धौ स्वभावौ युक्ताविति । एतच्चोद्यपरिहारार्थं यत्कुमारिलेनोक्तं तत्तावद्दूषयितुमुपक्षिपन्नाह—**अवस्थाभेदभेदेन**त्यादि ।

**अवस्थाभेदभेदेन शून्योऽप्येकान्ततः स्थिते ।**
**स्थिरात्मनि ..........यत्परैः परिकल्प्यते ॥ २६४ ॥**

अवस्थानाम्—सुखादीनाम्, भेदः—नानात्वम्, तेन भेदः—पुरुषस्य नानात्वमेव, तेन **शून्य** इति । अवस्थानानात्वेऽप्येकस्वभाव एवेत्यर्थः । अत्र कारणमाह—**स्थिरात्म**नीति । स्थिरः—नित्यः, आत्मा—स्वभावो यस्यात्मनः, स तथोक्तः । यदि वा—अवस्थाभेदाः—अवस्थाविशेषाः सुखादयः, तेभ्य एकान्तेन भेदः—पृथग्भावः, तेन शून्यस्तद्व्यतिरिक्तोऽपीत्यर्थः ॥ २६४ ॥

किं तद्यत्परिकल्प्यत इत्याह—**सुखे**त्यादि ।

**सुखदुःखाद्यवस्थाश्च गच्छन्नपि नरो मम ।**
**चैतन्यद्रव्यसत्त्वादिरूपं नैव विमुञ्चति ॥ २६५ ॥**

**गच्छन्नपी**ति । प्रतिपद्यमानोऽपि । **नर** इति । आत्मा । सत्त्वादीत्यादिशब्देन ज्ञेयत्वप्रमेयत्वकर्तृत्वभोक्तृत्वादिसामान्यधर्मपरिग्रहः ॥ २६५ ॥

नापि विशेषधर्मस्याप्यत्यन्तसमुच्छेद इति दर्शयन्नाह—न चेत्यादि ।

**न चावस्थान्तरोत्पादे पूर्वोऽत्यन्तं विनश्यति ।**
**उत्तरानुगुणार्थं तु सामान्यात्मनि लीयते ॥ २६६ ॥**

पूर्वेति । सुखाद्यवस्था । यद्येवं सुखाद्यवस्थायामपि दुःखावस्था किं न संवेद्यत इत्याह—उत्तरानुगुणार्थमित्यादि । स्वरूपेणैव हि स्थितायां सुखावस्थायां नोत्तरा दुःखावस्था भवतीत्यतः सा लीयमाना सामान्यात्मनि सर्वावस्थानुगामिनि चैतन्यद्रव्यत्वादिलक्षणे उत्तरदुःखावस्थोत्पादानुगुणा भवतीति तदर्थं सा तत्र लीयते ॥२६६॥

यद्येवमवस्थान्तरवत्सामान्यात्मन्यपि लयोऽवस्थानामयुक्तो विरोधादित्याशङ्क्याह—स्वरूपेण हीत्यादि ।

**स्वरूपेण ह्यवस्थानामन्योन्यस्य विरोधिता ।**
**अविरुद्धस्तु सर्वासु सामान्यात्मा प्रतीयते ॥ २६७ ॥**

स्वेन सुखादिरूपेणावस्थानां परस्परं विरोधादन्योन्यं लयो न युक्तः, अवस्थान्तरे तु सामान्यात्मनि लये को विरोधो येनासौ तत्र न भवेत्, तथा ह्यसौ सामान्यात्मा सर्वावस्थास्वविरुद्धोऽनुयायी दृश्यते । सर्वस्यामवस्थायां चैतन्यादीनामुपलम्भात् ॥ २६७ ॥

तत्रेत्यादिना प्रतिविधत्ते ।

**तत्र नो चेदवस्थानामेकान्तेन विभिन्नता ।**
**पुरुषात्तद्व्ययोत्पादे स्यातामस्यापि तौ तथा ॥ २६८ ॥**

यदि हि पुरुषादवस्थानामेकान्तेन भेदो नेष्यते, तदा तद्व्ययोत्पादे—तासामवस्थानां व्ययोत्पादे सति, अस्यापि पुंसस्तौ व्ययोत्पादौ स्याताम् । एकान्तेनेति वचनं कथंचिदप्यव्यतिरेकेऽवस्थावदुदयव्ययप्रसङ्गो दुर्वार इति ज्ञापनार्थम् । प्रयोगः—यो यदव्यतिरिक्तस्तस्य तदुत्पादविनाशे सत्युत्पादविनाशौ भवतः, यथा तेषामेव सुखादीनां स्वरूपस्य । सुखाद्यव्यतिरिक्तस्वभावश्च पुरुष इति स्वभावहेतुः ॥ २६८ ॥

न चायमनैकान्तिको हेतुरित्यादर्शयन्नाह—विरुद्धेत्यादि ।

**विरुद्धधर्मसङ्गे तु भेद एकान्तिको भवेत् ।**
**पुंसामिव स्वभावेन प्रतिस्वं नियतेन ते ॥ २६९ ॥**

यदि ह्यवस्थानामेवोत्पादव्ययौ न पुरुषस्येत्येवमुत्पादानुत्पादलक्षणो विरुद्धधर्मस-

ङ्गोऽभ्युपगम्यते, तदा भेदप्रसङ्गः, यथा पुंसां बहूनां परस्परं प्रतिस्वं नियतेन—प्रत्यात्मनियतेन स्वभावेन परस्परतो भेदः । एतावन्मात्रनिबन्धनत्वाद्भेदव्यवहारस्येति भावः । पुंसामपि वस्त्वादिरूपेण परस्परतो भेदो नास्तीत्यतः साध्यविकलतानिवृत्त्यर्थं प्रतिस्वं नियतेनेत्युक्तम् । प्रत्यात्मनियतं रूपमेषामेकान्तेन भिन्नम्, अन्यथाऽनुभवस्मरणादीनां प्रतिनियमाभावाद्व्यवस्थासङ्करः स्यात् । प्रयोगः—यद्यदेकयोगक्षेमं न भवति न तत्तेन सहाभेदि, यथा पुमांसः परस्परं प्रत्यात्मनियतेन रूपेण भिन्नयोगक्षेमाः । नैकयोगक्षेमाश्च सुखाद्यवस्थाः पुंसा सहेति व्यापकानुपलब्धेः ॥ २६९ ॥

यच्चोक्तम्—न चायमवस्थान्तरोत्पादे पूर्वाऽत्यन्तं विनश्यतीति तत्राह—**स्वरूपेणैवे**त्यादि ।

**स्वरूपेणैव लीयन्ते यद्यवस्थाश्च पुंसि वः ।**
**दुःखाद्यप्यनुभूयेत तत्सुखादिसमुद्भवे ॥ २७० ॥**

अवस्था हि सामान्यात्मनि लीयमानाः स्वरूपेणैव वा लीयेरन्, पररूपेण वा । यद्याद्यः पक्षः, तदा सुखादिसमुद्भवेऽपि—सुखाद्यवस्थानुभवेऽपि, तद्दुःखमप्यनुभूयेत उपलब्धिलक्षणप्राप्तत्वात् ॥ २७० ॥

अथ पररूपेणेति पक्षः, तत्राह—**न चे**त्यादि ।

**न चान्यरूपसङ्क्रान्तावन्यसङ्क्रान्ति( सम्भवः ) ।**
**तादात्म्येन च सङ्क्रान्तिरित्यात्मोदयवान्भवेत् ॥ २७१ ॥**

किं च पुंसि सुखादीनां संक्रान्तिस्तादात्म्येनैवेष्टा । ततश्च दुःखादिवत्तद्व्यतिरेकादात्मा—पुरुष उदयवान्—उत्पत्तिमान् भवेत् ॥ २७१ ॥

यच्चोक्तम्—"न च कर्तृत्वभोक्तृत्वे पुंसोऽवस्थां समाश्रिते" इति तत्राह—**यदी**त्यादि ।

**यदि कर्तृत्वभोक्तृत्वे नैवावस्थां समाश्रिते ।**
**तदवस्थावतस्तत्वान्न कर्तृत्वादिसंभवः ॥ २७२ ॥**

यदि हि पुमांसमेवाश्रितं कर्तृत्वादि स्यात्तदत्यक्तपूर्वरूपस्यात्मनो न संभवेत् । प्रयोगः—योऽपरित्यक्ताकर्त्रभोक्त्रवस्थः स न करोति न चापि भुङ्क्ते, यथाऽऽकाशम्, अपरित्यक्ताकर्त्रभोक्त्रवस्थश्च सर्वदा पुरुष इति व्यापकविरुद्धोपलब्धिः ॥ २७२ ॥

"बुद्धिजन्मनि पुंसश्च विकृतिर्यद्यनित्यता । अथाविकृतिरात्माख्यः प्रमातेति न युज्यते" इति यदेतदाचार्यदिङ्नागपादैरुक्तं तत्र कुमारिलेनोक्तम्—"नानित्यशब्दवाच्यत्वमात्मनो विनिवार्यते । विक्रियामात्रवाचित्वात्तद्व्युच्छेदोऽस्य तावता" ॥ इति तदत्र निगमनव्याजेन दोषमाह—तदित्यादि ।

**तन्नित्यशब्दवाच्यत्वं नात्मनो विनिवार्यते ।**
**स्वरूपविक्रियावत्त्वाद्व्युच्छेदस्तस्य विद्यते ॥ २७३ ॥**

तत्—तस्मात्, नित्यशब्दवाच्यत्वं न वार्यतेऽस्माभिः, स्वोपादानपुरस्सरस्य प्रतिक्षणध्वंसिनश्चैतन्यस्याऽऽसंसारमविच्छेदात् । किन्तु स्वरूपस्य—स्वभावस्य, विक्रियावत्वात्—नियमेन पूर्वस्वभावपरित्यागात्, स्वभावान्तरप्रादुर्भावश्चेति, व्युच्छेदः विनाशोऽस्य स्फुटतरमेवाऽऽसज्यते ॥ २७३ ॥

यश्चापि सर्पादिदृष्टान्त उपात्तः स नित्यैकरूपो न सिध्यतीति दर्शयन्नाह—**सर्पोऽपी**त्यादि ।

**सर्पोऽपि क्षणभङ्गित्वात्कौटिल्यादीन्प्रपद्यते ।**
**स्थिररूपे तु पुंसीव नावस्थान्तरसङ्गतिः ॥ २७४ ॥**

यथैव हि पुंसि स्थिरैकरूपत्वादवस्थान्तरसंभवो न युक्तस्तथा सर्पस्यापि । यदाऽनुक्षणभङ्गिताऽस्य भवेत्तदा युक्तोऽवस्थान्तरसंभवः, स्वभावान्तरोदयलक्षणत्वादवस्थान्तरप्रादुर्भावस्य ॥ २७४ ॥

यच्चोक्तमहं वेद्मीत्यहम्बुद्धिर्ज्ञातारं प्रतिपद्यत इति तदसिद्धमिति दर्शयन्नाह—**निरालम्बन** एवायमित्यादि ।

**निरालम्बन एवायमहङ्कारः प्रवर्त्तते ।**
**अनादिसत्त्वदृग्बीजप्रभावात्क्वचिदेव हि ॥ २७५ ॥**

न ह्यस्याहङ्कारस्य परमार्थतः किंचिदालम्बनमस्ति येनास्य विषयो ज्ञाता स्यात् । यद्येवं किमस्योत्पत्तेर्निबन्धनमित्याह—**अनादी**त्यादि । सत्त्वदृक्—सत्कायदृष्टिः, तस्या बीजम्—वासनाशक्तिरित्यर्थः । अनादि च तत्सत्त्वदृग्बीजं चेति विग्रहः । तस्य प्रभावः—आधिपत्यम् । **क्वचिदेवे**ति । अध्यात्मनियत एव षडायतने ॥२७५॥

अथ सर्वत्र कस्मान्न प्रवर्त्तत इत्याह—**केचिदेव ही**त्यादि ।

**केचिदेव हि संस्कारास्तद्रूपाध्यवसायिनि ।**
**अवेत्यं (आधिपत्यं?) प्रपद्यन्ते तन्न सर्वत्र वर्त्तते ॥ २७६ ॥**

**तद्रूपाध्यवसायिनीति** । पूर्वोत्तरकालानुयायिज्ञातृरूपाध्यवसायिन्यहङ्कारे । **न सर्वत्रेति** । सन्तानान्तरे घटादौ ॥ २७६ ॥

**तुल्यः पर्यनुयोगोऽयमन्यथा पुरुषेऽपि वः ।**
**तच्छक्तिभेदसद्भावात्सर्वमेव निराकुलम् ॥ २७७ ॥**

किं चात्मालम्बनत्वेऽप्यहङ्कारस्य, तुल्यः पर्यनुयोगः किमित्यात्मान्तरेऽपि न प्रवर्त्तत इति । शक्तिप्रतिनियमान्नैवमिति चेत्, यद्येवमस्माकमपि शक्तिनियमात्कचिदेवाध्यात्मिके वस्तुनि प्रवर्त्तते, न सर्वत्रेति व्यवस्थानं सर्वमेव निराकुलम् ॥ २७७ ॥

स्यादेतत्—भवत्वे(त)द्व्यवस्थानम्, किन्तु निरालम्बनत्वमस्य कथं सिद्धमित्याह—नित्येत्यादि ।

**नित्यालम्बनपक्षे तु सर्वाहङ्कृतयस्ततः ।**
**सकृदेव प्रसूयेरन् शक्तहेतुव्यवस्थितेः ॥ २७८ ॥**
**अनित्यालम्बनत्वेऽपि स्पष्टाभाः स्युस्ततः परे ।**
**आलम्बनार्थसद्भावं व्यर्थं पर्यनुयुञ्जते ॥ २७९ ॥**

तथा ह्यस्यालम्बनं भवन्नित्यं वा भवेदनित्यं वा । यदि नित्यम्, तदा सर्वा अहङ्कृतयः—अहङ्कारा युगपद्भवेयुरविकलकारणत्वात् । न ह्यकारणमालम्बनं युक्तमतिप्रसङ्गात् । न चापि शक्तस्य कारणस्य सहकारिकारणापेक्षा भवतीत्यसकृच्चर्वितमेतत् । न चैक एवायमहङ्कार इति शक्यं वक्तुम्, कादाचित्कतयाऽनेकत्वसिद्धेः । तथा हि—गाढस्वापमदमूर्छासु नाहङ्कारः संवेद्यते, पुनरन्यदा च संवेद्यत इति सिद्धमस्य सर्वदाऽनुपलम्भात्कादाचित्कत्वम् । कादाचित्कत्वाच्चानेकत्वमपि सिद्धमिति सर्वा अहङ्कृतयस्तद्भावमात्रभाविन्यो युगपत्प्रसूयेरन् । अथानित्यमालम्बनमिति पक्षः, तदा चक्षुरादिविज्ञानवत्स्फुटतरप्रतिभासाः सर्वा अहङ्कृतयः प्रसज्येरन् । साक्षाद्वस्तुस्वलक्षणग्राहित्वात् । ततः—तस्मात्, परे तीर्थिकाः कुमारिलप्रभृतयो व्यर्थमेवास्यालम्बनं पर्यनुयुञ्जते । तस्याज्ञानलक्षणः को नु विषयः परिकल्पित इत्यादि ॥ २७८ ॥ २७९ ॥

तत्र यदुक्तमनालम्बन एवायमहङ्कारोऽनादिसत्कायदृष्टिवासनाबलाद्भ्रान्तः प्रवर्त्तत इति । अत्र कुमारिलेनोक्तं दूषणमाशङ्कते—ज्ञातरीत्यादि ।

**ज्ञातरि प्रत्यभिज्ञानं वासना कर्तुमर्हति ।**
**नातस्मिन्स इति प्रज्ञां न ह्यसौ भ्रान्तिकारणम् ॥ २८० ॥**

**तन्नाहंप्रत्ययो भ्रान्तिरिष्टश्चेद्बाधवर्जनात् ।**

वासना हि ज्ञातृविषयां प्रत्यभिज्ञां कर्तुमर्हति । न पुनरतस्मिन्—अज्ञातरि, सः—ज्ञाता, इति प्रज्ञाम्—ज्ञानं वासना कर्तुमर्हतीति संबन्धः । कस्मात्? न ह्यसौ भ्रान्तिकारणम्, अपि तु यथाऽनुभूतार्थविषयमेवासौ ज्ञानं जनयति न भ्रान्तमित्यर्थः । तस्मादयमहङ्कारो वासनात उत्पद्यमानत्वात् बाधकप्रमाणाभावाच्च न भ्रान्तो युक्त इति । चेच्छब्दो भिन्नक्रमो बाधवर्जनादित्यस्यानन्तरं द्रष्टव्यः ॥ २८० ॥ = ॥

नेत्यादिना प्रतिविधत्ते ।

**नानन्तरोक्तया युक्त्या तस्य बाधोपदर्शनात् ॥ २८१ ॥**

अनन्तरोक्ता युक्तिर्नित्यालम्बनपक्षे त्वित्यादिः ॥ २८१ ॥

यच्चोक्तम्—न वासना भ्रान्तिकारणमिति तदनैकान्तिकमिति दर्शयन्नाह—ईश्वरादिष्वित्यादि ।

**ईश्वरादिषु भक्तानां तद्धेतुत्वादिविभ्रमाः ।**
**वासनामात्रभावाच्च जायन्ते विविधाः कथम् ॥ २८२ ॥**
**निरालम्बनता चैवमहङ्कारे यदा स्थिता ।**
**तन्नाहंप्रत्ययग्राह्ये ज्ञाता कश्चन विद्यते ॥ २८३ ॥**
**ततः सर्वप्रमाणेषु न दृष्टान्तोऽस्ति सिद्धिभाक् ।**
**हेतवश्चाश्रयासिद्धा यथायोगमुदाहृताः ॥ २८४ ॥**

## मीमांसपरिकल्पितात्मपरीक्षा ।

यदि हि वासना भ्रान्तिकारणं न भवेत्तदानीमीश्वरः सर्वोत्पत्तिमतां हेतुः सर्वज्ञो नित्यबुद्धिसमाश्रय इत्यादयो विभ्रमाः कथमिव वासनामात्रसंभवादुद्भवेयुः । तथा हि कुमारिलेनापीश्वरादिर्जगतः कर्ता प्रतिषिद्ध एव । वासनामात्रभावाच्चेति मात्रग्रहणं तथाभूतालम्बनार्थव्यवच्छेदार्थम् । तस्मादहङ्कारस्य निरालम्बनत्वान्न तद्ग्राह्यो ज्ञाता कश्चित्प्रसिद्धोऽस्तीति न तस्मादात्मा सिध्यतीति । यच्च व्यतीताहंकृतिग्राह्य इत्यादिनित्यसाधनमुक्तम्, तत्राह—तदित्यादि । **कश्चनेति** । नित्योऽनित्यो वा ज्ञाता दृष्टान्तधर्मी नास्तीत्यसिद्धो दृष्टान्तः । तथा हि—प्रथमद्वितीययोः प्रयोगयोर्द्धर्म्यसिद्धिर्दृष्टान्तदोषः, इदानींतनस्य ह्यस्तनस्य चाहंप्रत्ययगम्यस्य ज्ञातुः कस्यचिदभावात् । तृतीये तु प्रयोगे एकबुद्धिवदिति दृष्टान्तः साध्यसाधनविकलः । अभिम-

ताया एकबुद्धेरेकसन्तानसंबद्धज्ञात्रहंप्रत्ययत्वस्य एकविषयत्वस्य चासिद्धत्वात् । अतो धर्मद्वयासिद्धिमुखेनास्याप्यसिद्धत्वमुक्तम् । **यथायोगमुदाहृता** इति । उदाहृताः—पूर्वमुपन्यस्ता ये हेतवः, यथायोगम्—यथासंभवम् । **आश्रयासिद्ध** इति । तथा हि—प्रथमद्वितीययोः प्रयोगयोर्ये हेतवस्त आश्रयासिद्धाः, अहंप्रत्ययग्राह्यस्य कस्यचिदपि धर्मिणो ज्ञातुरसिद्धत्वात् । तृतीये तु प्रयोगे नाश्रयासिद्धिः । प्रत्ययानां धर्मिणां सिद्धत्वात् । किन्तु तेषामेकसन्तानसंबद्धज्ञातृविशेषणमसिद्धम् । निरालम्बनत्वस्य प्रसिद्धत्वात् । अतो यथायोगमित्युक्तम् ॥ २८२ ॥ २८३ ॥ २८४ ॥

## इति मीमांसकपरिकल्पितात्मपरीक्षा ।

सांप्रतं सांख्यपरिकल्पितात्मनिराकरणार्थमाह—चैतन्यमित्यादि ।

**चैतन्यमन्ये मन्यन्ते भिन्नं बुद्धिस्वरूपतः ।**
**आत्मनश्च निजं रूपं चैतन्यं कल्पयन्ति ते ॥ २८५ ॥**
**प्रधानेनोपनीतं च फलं भुङ्क्ते स केवलम् ।**
**कर्तृत्वं नैव तस्यास्ति प्रकृतेरेव तन्मतम् ॥ २८६ ॥**

**अन्य** इति । सांख्याः । ते हि बुद्धिव्यतिरिक्तं चैतन्यमात्मनो निजं रूपं कल्पयन्ति । यतो बुद्धिः प्रधानस्वभावा, चैतन्यं तु पुरुषस्यैव स्वरूपमिति तेषां समयः । स च पुरुषः शुभाशुभकर्मफलस्य प्रधानोपनीतस्य भोक्ता, न तु कर्मणां कर्ता, प्रकृतेरेवाशेषजगत्परिणतिरूपायाः कर्तृत्वस्येष्टत्वात् । अत्र च प्रमाणयन्ति—यत्संघातरूपं वस्तु तत्परार्थं दृष्टम्, तद्यथा शयनादि, संघातरूपाश्च चक्षुरादय इति स्वभावहेतुः । यश्चासौ परः स सामर्थ्यादात्मेति सिद्धम् । इति परस्य भावः ॥ २८५ ॥ ॥ २८६ ॥

तत्रापीत्यादिना प्रतिज्ञार्थं तावद्दूषयति ।

**तत्रापि रूपशब्दादिचेतसां वेद्यते कथम् ।**
**सुव्यक्तं भेदवद्रूपमेका चेच्चेतनेष्यते ॥ २८७ ॥**

तथा हि—चैतन्यं पुरुषस्य निजं रूपमिति ब्रुवता चैतन्यं नित्यैकरूपमिति प्रतिज्ञातं भवति, नित्यैकरूपात्पुरुषात्तस्याव्यतिरिक्तत्वात् । एतच्च प्रत्यक्षविरुद्धम्, यतो रूपशब्दादिचेतसां सुव्यक्तम्—स्फुटतरमेव, स्वसंविदा, भेदवद्रूपम्—भिन्नस्वभावः, वेद्यते । तच्चैकत्वे सति चेतनाया नोपपद्यते ॥ २८७ ॥

अभ्युपगमविरोधं च दर्शयन्नाह—एकरूपेत्यादि ।

**एकरूपे च चैतन्ये सर्वकालमवस्थिते ।**
**नानाविधार्थभोक्तृत्वं कथं नामोपपद्यते ॥ २८८ ॥**

एकरूपश्चात्मा, अथ च नानाविधस्यार्थस्य भोक्तेति, परस्परविरुद्धम् । अभोक्त्रवस्थानिर्विशिष्टत्वात् ॥ २८८ ॥

दिदृक्षादियोगादविरोध इति चेदाह—नेत्यादि ।

**न दिदृक्षादयो भिन्नास्तस्य भोगनिबन्धनम् ।**
**भवन्ति हि तथा भावे पुमानुत्पत्तिमान्भवेत् ॥ २८९ ॥**

यदि रूपादिषु दिदृक्षाशुश्रूषादयस्तस्य परस्परतो भिन्ना भोगनिबन्धनत्वेनोपकल्पितास्तेऽप्यस्यात्मनो न भवन्ति—न जायन्ते । यदि हि जायेरंस्तदा, तथा—भेदेन, भावे—जातौ सत्याम्, पुमानुत्पत्तिमान्भवेत् । दिदृक्षादिवत्तदव्यतिरेकात् ॥ २८९ ॥

एतदेव व्यक्तीकुर्वन्नाह—चैतन्यव्यतिरिक्तं हीत्यादि ।

**चैतन्यव्यतिरिक्तं हि न दिदृक्षादि विद्यते ।**
**तस्योदयव्ययावेशे दुर्वारः पुरुषेऽप्यसौ ॥ २९० ॥**

व्यतिरेके हि तस्य त इति संबन्धानुपपत्तिः । उपकारस्य संबन्धनिबन्धनस्याभावात् । असाविति । उदयव्ययसमावेशः । प्रयोगः—यस्य सद्भावव्यवस्थानिबन्धनं नास्ति, नासौ प्रेक्षावता तद्भावेन व्यवस्थाप्यः, यथाऽऽकाशं मूर्त्तत्वेन । नास्ति च भोक्तृव्यवस्थानिबन्धनं पुरुषादिदृक्षादीति कारणानुपलब्धेः । न चायमसिद्धो हेतुरिति प्रतिपादितम् ॥ २९० ॥

इतश्च कर्तृत्वाभावाद्भोक्तृत्वमपि तस्य न युक्तमिति दर्शयति—शुभाशुभं चेत्यादि ।

**शुभाशुभं च कर्मास्ति नैव चेदात्मना कृतम् ।**
**तदेष भोगभेदोऽस्य कुतः समुपजायते ॥ २९१ ॥**

न ह्यकृतस्य कर्मणः कश्चित्फलमुपभुङ्क्ते, अकृताभ्यागमादिदोषप्रसङ्गात् ॥२९१॥

अत्र परस्योत्तरमाशङ्कते—अभिलाषानुरूपेणेत्यादि ।

**अभिलाषानुरूपेण प्रकृतिश्चेत्प्रयच्छति ।**
**पङ्ग्वन्धवद्धि संबन्धस्तयोरेष व्यवस्थितः ॥ २९२ ॥**

यद्यपि पुरुषः कर्मणां कर्त्ता न भवति, तथाऽपि प्रकृतिरस्य यथाऽभिलषितमर्थमुपनयति, तमसौ भुङ्क्त इत्यदोषः । ननु प्रकृतिरचेतना सती कथं शुभादिकर्मणां कर्त्री भवति येनासौ यथाऽभिमतं कर्मफलं पुरुषस्य सम्पादयतीत्याह—**पङ्ग्वन्धवद्धी**त्यादि । यथा किलान्धस्य चक्षुष्मत्पुरुषसंबन्धादर्थेषु प्रवृत्तिर्भवति, तथा महदादिकं लिङ्गं चेतनपुरुषसंपर्काच्चेतनावदिव धर्मादिषु कार्येष्वध्यवसायं करोतीत्यदोषः । तथा चोक्तम्—"पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य । पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः" इति ॥ २९२ ॥

**यद्येव**मित्यादिना प्रतिविधत्ते ।

**यद्येवमिष्टवाञ्छायां सत्यामपि न सिद्ध्यति ।**
**किमिति प्रकृतिर्नैव किञ्चिदन्यदपेक्षते ॥ २९३ ॥**

यदि हि प्रकृतिरकृतस्यापि कर्मणः फलमभिलषितमुपनयतीति स्यात्तदा सर्वदैवेष्टवाञ्छायां सर्वस्य पुंसोऽभिलषितोऽर्थः किमिति न सिद्ध्येत् । स्यान्मतम्—तत्कारणस्य धर्मस्याभावान्न सिद्ध्यतीति, आह—**प्रकृतिर्नैवे**त्यादि । प्रकृतेर्हि धर्मः कार्यम्, स च तदव्यतिरिक्तत्वात्सदैवास्तीति भवेदेवाभिमतं फलम् । तथा हि—एतदेव सर्वं यदुत प्रकृतिपुरुषौ, तौ च सदा सन्निहिताविति । अतो नित्यमेव फलं भवेत् । किं च यद्यभिलषितमर्थं प्रकृतिः प्रयच्छति तदाऽनिष्टं किमिति प्रयच्छेत्, न ह्यनिष्टं कश्चिदभिलषति ॥ २९३ ॥

अपि च । यदि नाम प्रकृतिरस्यार्थमुपनयति, तथाऽपि भोक्तृत्वमस्यायुक्तमविकारित्वादिति दर्शयति—**अर्थोपभोगकाले चे**त्यादि ।

**अर्थोपभोगकाले च यदि नैवास्य विक्रिया ।**
**नैव भोक्तृत्वमस्य स्यात्प्रकृतिश्चोपकारिणी ॥ २९४ ॥**
**विक्रियायाश्च सद्भावे नित्यत्वमवहीयते ।**
**अन्यथात्वं विकारो हि तादवस्थ्ये च तत्कथम् ॥ २९५ ॥**

यदि हि सुखदुःखादिनाऽऽह्लादपरितापादिरूपां विकृतिं नोपनीयते तदाऽऽकाशवदभोक्तृत्वमेव स्यात् । प्रकृतिश्चोपकारिणी न स्यादिति संबन्धः । अविकृतात्मन्युपकारस्य कर्तुमशक्यत्वात् । अथ विकारित्वमस्याभ्युपगम्यते, तदा नित्यत्वहानिप्रसङ्गः । यतोऽतादवस्थ्यमेवानित्यतां ब्रूमः । तच्च विकारित्वे सत्यस्तीति कथमस्य नित्यता स्यात् । तादवस्थ्यरूपत्वान्नित्यत्वस्य ॥ २९४ ॥ २९५ ॥

स्यान्मतमित्यादिना परमतेनान्यथा भोक्तृत्वमाशङ्कते ।

**स्यान्मतं विषयाकारा बुद्धिरादौ विवर्त्तते ।**
**तया व्यवसितं चार्थं पुरुषः प्रतिपद्यते ॥ २९६ ॥**
**प्रतिबिम्बोदयद्वारा चैवमस्योपभोक्तृता ।**
**न जहाति स्वरूपं तु पुरुषोऽयं कदाचन ॥ २९७ ॥**

न हि विकारापत्त्या भोक्तृत्वमस्येष्टम्, किं तर्हि ? बुद्ध्यवसितस्यार्थस्य प्रतिबिम्बोदयन्यायेन । तथा हि—बुद्धिदर्पणारूढमर्थप्रतिबिम्बकं द्वितीयदर्पणकल्पे पुंसि संक्रामति तदेवास्य भोक्तृत्वम्, न तु विकारापत्तिः । न च प्रतिबिम्बमात्रसंक्रान्तावपि पुरुषः स्वरूपं जहाति, दर्पणवत्तदवस्थत्वात् । अतो यदभोक्त्रवस्थानिर्विशिष्टं (तदभोक्तृ,) इत्यत्र प्रयोगेऽनैकान्तिकता हेतोः ॥ २९६ ॥ २९७ ॥

**उच्यत** इत्यादिना प्रतिविधत्ते ।

**उच्यते प्रतिबिम्बस्य तादात्म्येन समुद्भवे ।**
**तदेवोदययोगित्वं विभेदे तु न भोक्तृता ॥ २९८ ॥**

यत्तद्बुद्धिदर्पणारूढमर्थप्रतिबिम्बकं द्वितीयदर्पणकल्पे पुंसि संक्रामतीतीष्यते, तद्यदि पुरुषाद्व्यतिरिक्तम्, तदा तदेवानन्तरोक्तमुदयव्यययोगित्वं प्रसज्यते । उदयव्यययोगिप्रतिबिम्बरूपवत्तदव्यतिरेकात् । अथ व्यतिरिक्तमिति पक्षस्तदा भोक्तृता न प्राप्नोति, अभोक्त्रवस्थातो विशेषस्य कस्यचिदभावात् । न चाप्यर्थप्रतिबिम्बेन सह पुंसः संबन्धाद्भोक्तृत्वं युक्तम्, परस्परमनुपकारकयोः संबन्धासिद्धेः ॥ २९८ ॥

**दिदृक्षाद्यानुकूल्येन प्रधानं संप्रवर्त्तते ।**
**विचित्ररचनाभेदे कथं वाऽचेतनात्मकम् ॥ २९९ ॥**

किं च यदि प्रधानं पुरुषस्य दिदृक्षादि जानीयात्, तदानुकूल्येन तस्य पुरुषस्यार्थं प्रति प्रवृत्तिर्युक्ता, यावता जडरूपत्वात्सत्यपि चेतनावता संबन्धे पङ्ग्वन्धवत् प्रवृत्तिर्न युक्ता । तथा हि—अन्धो यदि नाम मार्गं नोपलभते, तथाऽप्यसौ पङ्गोर्विवक्षां चेतयत्येव तस्य चेतनावत्त्वात् । न चैवं प्रधानं पुरुषस्य दिदृक्षादि वेत्ति, तस्याचेतनात्मकत्वेन जडरूपत्वात् । न चापि तयोः परस्परमनुपकारिणोः पङ्ग्वन्धवत्संबन्धोऽस्ति ॥ २९९ ॥

**कर्तुं नाम प्रजानाति प्रधानं व्यञ्जनादिकम् ।**
**भोक्तुं च न विजानाति किमयुक्तमतः परम् ॥ ३०० ॥**

अथ पुरुषस्य दिदृक्षादि वेत्ति प्रधानमितीष्यते । तथा च सति भोक्तृत्वमप्यस्य प्रसज्येत। यो हि नाम कर्तुं विजानाति स कथं भोक्तुमपि न जानीयात् । तस्मात्कर्तुं जानाति न भोक्तुमित्यतः परं किमयुक्तमस्ति नैव किंचिदित्यर्थः । न हि सूपकारो व्यञ्जनादेः कर्त्ता तद्भोक्तुं न विजानातीति । अत्रेतिशब्दोऽध्याहार्यः ॥ ३०० ॥

बुद्धिमत्त्वादित्यादिना परस्योत्तरमाशङ्कते ।

**बुद्धिमत्त्वात्प्रधानस्य सर्वमस्याविरोधि चेत् ।**
**बुद्धिमत्त्वेन तु प्राप्तं चैतन्यं पुरुषेष्विव ॥ ३०१ ॥**
**बुद्धिरध्यवसायो हि संवित्संवेदनं तथा ।**
**संवित्तिश्चेतना चेति सर्वं चैतन्यवाचकम् ॥ ३०२ ॥**

**सर्वमिति**। दिदृक्षाद्यानुकूल्येन प्रवर्त्तनम्। **अस्येति** । प्रधानस्य । एतदुक्तं भवति—यदि नाम प्रधानं चिद्रूपं न भवति तथाऽपि बुद्ध्याऽध्यवसायलक्षणया युक्तत्वात्पुरुषगतं दिदृक्षादि परिज्ञाय प्रवर्त्तिष्यत इत्यतः सर्वमविरोधीति । अत्रोत्तरमाह—**बुद्धिमत्त्वेने**त्यादि । यदि हि प्रधानस्य बुद्धिमत्त्वमङ्गीक्रियते तदाऽस्य पुरुषवच्चैतन्यवत्त्वप्रसङ्गः । बुद्ध्यादीनां चैतन्यपर्यायत्वात् । तथा हि—यत्प्रकाशात्मतया स्वसंविदितरूपं परनिरपेक्षमेव प्रकाशते तच्चैतन्यमुच्यते, तत्त्वं बुद्धेरप्यस्तीति किमिति सा चिद्रूपा न भवेत् । न चापि बुद्धिव्यतिरेकेणापरं चिद्रूपमुपलक्षयामः । येन तद्व्यतिरिक्तस्य पुरुषस्य सिद्धिर्भवेत् ॥ ३०१ ॥ ३०२ ॥

अत्र परश्चिद्रूपाद्बुद्धेर्भेदप्रसाधनायाह—**अचेतनात्मिका बुद्धिरित्यादि** ।

**अचेतनात्मिका बुद्धिः शब्दगन्धरसादिवत् ।**
**उत्पत्तिमत्त्वनाशित्वहेतुभ्यामिति चेन्मतम् ॥ ३०३ ॥**

प्रयोगः—यद्यदुत्पत्तिमत्त्वनाशित्वादिधर्मयोगि, तत्तदचेतनम्, यथा रसादयः, तथा च बुद्धिरिति स्वभावहेतुः ॥ ३०३ ॥

**नैतावि**त्यादिना प्रतिविधत्ते ।

**नैतौ हेतू द्वयोः सिद्धौ स्वतन्त्रे साधने मते ।**
**न विपर्ययबाधाऽस्ति प्रसङ्गोऽप्यभिधित्सिते ॥ ३०४ ॥**

कदाचिदिदं स्वातन्त्र्येण साधनं स्यात्प्रसङ्गसाधनं वा । यदि स्वातन्त्र्येण तदाऽन्यतरासिद्धो हेतुः। तथा हि—यथाविधमुत्पत्तिमत्त्वमपूर्वोत्पादलक्षणं नाशित्वं वाऽत्यन्तस-

मुच्छेदात्मकं बौद्धस्य प्रसिद्धं न तथाविधं भवतः साङ्ख्यस्य । तयोः परिणामतिरोधानरूपत्वेन भवद्भिरङ्गीकरणात् । यथा च भवतस्तथा न बौद्धस्य सिद्धमित्यन्यतरासिद्धो हेतुः । न च शब्दमात्रस्य सिद्धौ हेतुसिद्धिः, वस्तुनो हि वस्तुसिद्धेर्वस्तुन एव हेतुत्वात् । यथोक्तम्—"तस्यैव व्यभिचारादौ शब्देऽप्यव्यभिचारिणि । दोषवत्साधनं ज्ञेयं वस्तुनो वस्तुसिद्धितः" ॥ इति । अथ प्रसङ्गसाधनमितिपक्षस्तथाऽपि साध्यविपर्यये बाधकप्रमाणानुपदर्शनादनैकान्तिकता हेत्वोः । को ह्यत्र प्रतिबन्धो यच्चैतन्यस्योत्पत्तिमत्त्वनाशित्वाभ्यां न भवितव्यमिति । याऽपीयं कल्पना, "वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य । पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्ये"ति । साऽप्यकल्पनैव । न हि क्षीरं स्वातन्त्र्येण वत्सविवृद्धिनिमित्तं प्रवर्त्तते । किं तर्हि ? प्रतिनियतेभ्यः कादाचित्केभ्यः स्वहेतुप्रत्ययेभ्यः समुत्पद्यते । तच्चोत्पन्नं सद्वत्सविवृद्धेर्निमित्ततां यातीत्यज्ञमपि प्रवर्त्तत इति निर्दिश्यते । न चैवं प्रधानस्य प्रवृत्तिर्युक्ता । तथा हि—नित्यत्वात्तदन्यहेत्वभावाच्च न तावत्कादाचित्ककारणसंनिधानायत्ता तस्य कादाचित्की शक्तिर्युक्ता । नापि स्वाभाविकी, सदा संनिहिताविकलकारणत्वेन सर्वस्याभ्युदयनिःश्रेयसलक्षणस्य पुरुषार्थस्य युगपदुत्पत्तिप्रसङ्गात् ॥ ३०४ ॥

अथाऽपि स्यान्नवतु बुद्धिचैतन्ययोरभेदस्तथाऽप्यात्मत्वमस्याप्रतिषिद्धमेवेत्याह—**चैतन्ये** इत्यादि ।

**चैतन्ये चात्मशब्दस्य निवेशोऽपि न नः क्षतिः ।**
**नित्यत्वं तस्य दुःसाध्यमक्ष्यादेः सफलत्वतः ॥ ३०५ ॥**
**अक्ष्यर्थाद्यफलं तु स्याच्चैतन्यं शाश्वतं यदि ।**
**न भवेदिन्धनेनार्थो यदि स्याच्छाश्वतोऽनलः ॥ ३०६ ॥**

न ह्यात्मशब्दनिवेशनमात्रमस्माभिश्चैतन्ये प्रतिषिध्यते, किं तर्हि ? यस्तत्र **नित्यत्वलक्षणः** समारोपितो धर्मः स निषिध्यते । कस्मात् ? अक्ष्यालोकमनस्कारादेः **साफल्यात्** । अन्यथा यदि शाश्वतं नित्यं चैतन्यं स्यात्तदाऽक्ष्यादि विफलमेव **स्यात्** । तदुत्पत्त्यर्थत्वात्तेषाम् । नित्यस्य चोत्पत्त्यसंभवात् । अत्रैव दृष्टान्तमाह—**न भवेदित्यादि** । यदि शाश्वतो वह्निर्भवेत्तदा नैव जनोऽनलार्थमिन्धनमुपाददीत तस्मान्न नित्यैकरूपं चैतन्यं युक्तम् ॥ ३०५ ॥ ३०६ ॥

यत्संघातरूपं तत्परार्थं दृष्टमित्यादि । तत्र कोऽसौ परोऽभिप्रेत इति निरूपयन्नाह—**पारार्थ्यमित्यादि** ।

पारार्थ्यं चक्षुरादीनां यत्पुनः प्रतिपाद्यते ।
शय्याशनादिवत्तेन संघातत्वेन हेतुना ॥ ३०७ ॥
आधेयातिशयार्थत्वं यद्येषामुपपाद्यते ।
इष्टसिद्धिर्यदिष्टास्तेऽस्माभिर्ज्ञानोपकारिणः ॥ ३०८ ॥
अविकार्युपकारित्वसाधने साध्यशून्यता ।
दृष्टान्तस्य चलस्यैव युक्तास्तेऽप्युपकारिणः ॥ ३०९ ॥
सामान्येन तु पारार्थ्यं यद्येषां संप्रसाध्यते ।
तथाऽपि साधनं व्यर्थं सिद्धाश्चित्तोपयोगिनः ॥ ३१० ॥

## इति कापिलकल्पितात्मपरीक्षा ।

आधेयातिशयो वा परोऽभिप्रेतो भवेत्, यद्वाऽनाधेयातिशयरूपत्वादविकारी, अथ वा सामान्येन पारार्थ्यमात्रमविचारितरमणीयं साध्यत इति त्रयो विकल्पाः । तत्र प्रथमपक्षे सिद्धसाध्यता, यतस्ते चक्षुरादयोऽस्माभिर्विज्ञानोपकारिण इष्टाः । "चक्षुः प्रतीत्य रूपाणि चोत्पद्यते तच्चक्षुर्विज्ञानम्, यावत्कायं प्रतीत्य स्प्रष्टव्यानि त्यो(चो?)त्पद्यते कायविज्ञान"मिति वचनात् । अथ द्वितीयः पक्षस्तदा विरुद्धता हेतोरित्यादर्शयन्नाह—अविकार्युपकारित्वेत्यादि । अविकारिणो नित्यस्योपकारित्वमविकार्युपकारित्वम्, तस्य चक्षुरादीनां साधने सति दृष्टान्ते साध्यविपर्ययेणैव हेतोर्व्याप्तत्वाद्विरुद्धता, यतस्ते शयनादयश्चलस्यानित्यस्यैवोपकारिणो युक्ताः, अविकारिण्यतिशयस्याधातुमशक्यत्वात् । अथ सामान्येनाधेयातिशयादिविकल्पमपास्य पारार्थ्यमात्रं साध्यत इति तृतीयः पक्षः, तदाऽपि सिद्धसाध्यता, चित्तोपकारित्वेन चक्षुरादीनामिष्टत्वात् । अथ चित्तमपि साध्यधर्मित्वेनाभ्युपगम्यते यथा नैयायिकैरभ्युपगतम् । एवमपि भवतां नेष्टसिद्धिः, चित्तव्यतिरेकेणाऽऽत्मनोऽनिष्टत्वात् । नापि नैयायिकानामभिमतार्थसिद्धिः, परस्परोपकारित्वेन चक्षुरादीनां परोपकारित्वस्येष्टत्वात् । पारावारवदापेक्षिकत्वात्परत्वस्य । चित्तस्य चानेककारणकृतोपकारोपग्रहेणोत्पत्तेः संघातत्वं कल्पितमस्त्येवेति हेतोरपि ना(न?)सिद्धिः ॥ ३०७ ॥ ३०८ ॥ ॥ ३०९ ॥ ३१० ॥

## इति कापिलकल्पितात्मपरीक्षा ।

दिगम्बरपरिकल्पितात्मप्रतिषेधार्थमाह—**जैमिनीया इवे**त्यादि ।

**जैमिनीया इव प्राहुर्जैनाश्चिल्लक्षणं नरम् ।**
**द्रव्यपर्यायरूपेण व्यावृत्त्यनुगमात्मकम् ॥ ३११ ॥**

**जैना** इति । दिगम्बरास्त एवं प्राहुः । चिल्लक्षण एवात्मा स च द्रव्यरूपेण सर्वावस्थास्वभिन्नत्वादनुगमात्मकः, पर्यायरूपेण तु प्रत्यवस्थं भिन्नत्वाद्व्यावृत्त्यात्मकः । एतच्च प्रत्यक्षत एव सिद्धमात्मनो द्वैरूप्यमिति न प्रमाणान्तरतः प्रसाध्यम् । तथा हि—सुखाद्यवस्थाभेदेऽपि यदवस्थातृ सर्वावस्थासु चैतन्यमुपलभ्यते तद्द्रव्यम् । पर्यायस्तु क्रमभाविनः सुखाद्यवस्थाभेदाः । ते च प्रत्यक्षत एव सिद्धा इति परस्य भावः ॥ ३११ ॥

**तत्रापी**त्यादिना प्रतिविधत्ते ।

**तत्राप्यविकृतं द्रव्यं पर्यायैर्यदि सङ्गतम् ।**
**न विशेषोऽस्ति तस्येति परिणामि न तद्भवेत् ॥ ३१२ ॥**

अत्र पक्षद्वयम्—यत्तच्चैतन्यात्मकं द्रव्यं तत्पर्यायैः संबध्यमानं कदाचिदविकृतमत्यक्तपौरस्त्यचैतन्यादिरूपं सत्संबध्यते, यद्वा परित्यक्तपूर्वरूपम् । तत्र यद्यनन्तरः पक्षस्तदा नित्यत्वहानिप्रसङ्गः, अवस्थातुः कस्यचिदप्यभावात् । अथाविकृतमिति प्रथमपक्षस्तदा पूर्वोत्तरयोरवस्थयोर्न विशेषः—अन्यथात्वम्, अस्तीति परिणामि तच्चैतन्यं न भवेत्—न प्राप्नोति । अन्यथात्वलक्षणत्वात्परिणामस्य । इष्टं च परिणामि । प्रयोगः—यत्पूर्वोत्तरावस्थासु न विशिष्यते तत्परिणामि न भवति यथाकाशम्, न विशिष्यते च चैतन्यं सर्वावस्थास्विति व्यापकानुपलब्धेः ॥ ३१२ ॥

**देशकालस्वभावाना**मित्यादिना हेतोः परमतेनासिद्धिमाशङ्कते ।

**देशकालस्वभावानामभेदादेकतोच्यते ।**
**सङ्ख्यालक्षणसंज्ञार्थभेदाद्भेदस्तु वर्ण्यते ॥ ३१३ ॥**
**रूपादयो घटश्चेति सङ्ख्यासंज्ञाविभेदिता ।**
**कार्यानुवृत्तिव्यावृत्ती लक्षणार्थविभेदिता ॥ ३१४ ॥**
**द्रव्यपर्याययोरेवं नैकान्तेनाऽविशेषवत् ।**
**द्रव्यं पर्यायरूपेण विशेषं याति चे(त्स्व)यम् ॥ ३१५ ॥**

तथा हि—यद्येकान्तेन पर्यायेभ्यो द्रव्यं व्यतिरेकि भवेत्तदा स्यात्तस्या विशेषः,

यावता देशकालस्वभावाभेदाद्द्रव्यपर्याययोरैक्यमिष्टम् । सङ्ख्यादिभेदात्तु भेदः । तत्र सङ्ख्या, एकत्वबहुत्वादि । तथा हि—द्रव्यमेकसङ्ख्यायुक्तम्, पर्यायास्तु सुखादयोनेकसङ्ख्याविशिष्टाः । लक्षणमपि भिन्नम् । यतोऽनुवृत्तिलक्षणं द्रव्यम्, पर्यायास्तु व्यावृत्तिलक्षणाः, संज्ञा—नाम, अर्थः—कार्यम् । तथा चोक्तम्—देशकालस्वभावाभेदादभेदो धर्मधर्मिणोः, सङ्ख्यासंज्ञालक्षणकार्यभेदात्तु भेदः, तद्यथा घटस्य रूपादीनां चेति । तथा हि—घटतद्रूपादीनां देशादिभिरभेदः, य एव हि देशकालस्वभावश्च घटस्य स एव रूपादीनाम्, सङ्ख्यादिभिश्च घटात्तेषां भेदः । तथा ह्येको घटो बहवस्तु रूपादय इति सङ्ख्याभेदः । घटो रूपादय इति च संज्ञाभेदः । अनुवृत्तिलक्षणं घटादिद्रव्यं व्यावृत्तिलक्षणास्तु रूपादयः पर्याया इति लक्षणभेदः । घटेनोदकाहरणं कार्यं क्रियते रूपादिभिस्तु वस्त्ररागादीति कार्यभेदः । एवमात्मद्रव्येऽपि चैतन्यात्मके सुखदुःखादिषु पर्यायेषु चोह्यम् । कार्यभेदस्तु तत्रैवं बोद्धव्यः—चैतन्येनार्थानुभवः क्रियते, सुखादिभिस्तु पीडानुग्रहादीति । तदेतद्दर्शयति **रूपादय** इत्यादि । **सङ्ख्यासंज्ञाविभेदितेति** । द्रव्यपर्याययोरिति वक्ष्यमाणं संबध्यते । **कार्यानुवृत्तिव्यावृत्ती लक्षणार्थविभेदितेति** । यथायोगं संबन्धः । कार्यभेदोऽर्थविभेदिता, अनुवृत्तिव्यावृत्तीलक्षणविभेदितेति संबन्धः । द्रव्यपर्याययोरित्यत्र छेदः । **एवमित्यादिना** हेतोरसिद्धिमुपसंहरति । एवं च कृत्वा द्रव्यमेकान्तेन नाविशिष्टं किन्तु पर्यायरूपभेदेन विशेषं प्रतिपद्यते । तेन पर्यायेभ्यो द्रव्यस्यैकान्तेन भेदाभावादित्यसिद्धो हेतुः ॥ ३१३ ॥ ३१४ ॥ ३१५ ॥

**स्वभावाभेद** इत्यादिना प्रतिविधत्ते ।

**स्वभावाभेद एकत्वं तस्मिन्सति च भिन्नता ।**
**कथंचिदपि दुःसाध्या पर्यायात्मस्वरूपवत् ॥ ३१६ ॥**

यदि हि द्रव्यपर्याययोरभेदोऽप्यङ्गीक्रियते । तदा सर्वात्मनैवाभेदोऽयं भवेत्, भेदश्च तद्विपरीतः कथं भवेत्, न ह्येकस्यैकदा विधिप्रतिषेधौ परस्परविरुद्धौ युक्तौ । तथाह्येकमित्यनेन भेदनिषेधनान्तरीयकः स्वभावाभेद उच्यते, तस्मिंश्च स्वभावाभेदे सति कथं तदानीमेव भेदस्तत्प्रतिषेधात्मा भवेत् । प्रयोगः—यत्राभेदस्तत्र तद्विपरीतो न भेदोऽवकाशं लभते, यथा तेषामेव पर्यायाणां द्रव्यस्य च यत्प्रतिनियतमसाधारणमात्मरूपं तस्य न स्वभावाद्भेदः, अभेदश्च द्रव्यपर्याययोरवस्थित इति विरुद्धोपलब्धेः ॥ ३१६ ॥

ततश्च परमार्थेन द्रव्यपर्याययोरभेदे सति लक्षणभेदोऽपि न प्राप्नोतीति दर्शयति । अगौणे चैवमित्यादि ।

**अगौणे चैवमेकत्वे द्रव्यपर्याययोः स्थिते ।**
**व्यावृत्तिमद्भवेद्द्रव्यं पर्यायाणां स्वरूपवत् ॥ ३१७ ॥**
**यदि वा तेऽपि पर्यायाः सर्वेऽप्यनुगतात्मकाः ।**
**द्रव्यवत्प्राप्नुवन्त्येषां द्रव्येणैकात्मता स्थितेः ॥ ३१८ ॥**

यद्व्यावृत्तिमद्रूपाभिन्नस्वभावं तद्व्यावृत्तिमत्, यथा पर्यायाणां स्वरूपम्, व्यावृत्तिमद्रूपाव्यतिरिक्तं च द्रव्यमिति स्वभावहेतुः । अथ वा—यदनुगतात्मरूपाव्यतिरिक्तं तदनुगतात्मकमेव, यथा द्रव्यरूपम्, अनुगतात्मरूपाविभिन्नस्वभावाश्च सुखादयः पर्याया इति स्वभावहेतुरेव । अन्यथा विभिन्नयोगक्षेमत्वाद्भेद एव भवेत् । विरुद्धधर्माध्यासितस्याप्येकत्वे भेदव्यवहारोच्छेद एव स्यादिति विपर्यये बाधकं प्रमाणम् ॥ ३१७ ॥ ३१८ ॥

तत इत्यादिनोपसंहरति ।

**ततो नावस्थितं किञ्चिद्द्रव्यमात्मादि विद्यते ।**
**पर्यायाव्यतिरिक्तत्वात्पर्यायाणां स्वरूपवत् ॥ ३१९ ॥**

आत्मादीति । आदिशब्देन घटव्रीह्यादिपरिग्रहः ॥ ३१९ ॥

न चेत्यादिना द्वितीयप्रसङ्गसाधनफलमाह ।

**न चोदयव्ययाक्रान्ताः पर्याया अपि केचन ।**
**द्रव्याद्व्यतिरिक्तत्वात्तद्द्रव्यनियतात्मवत् ॥ ३२० ॥**

तस्यापि द्रव्यस्य पर्यायरूपेणोदयव्ययाक्रान्तस्येष्टत्वादतो माभूत्साध्यवैकल्यप्रसङ्ग इति नियतात्मवदित्युक्तम् । नियतश्चासावात्मा स्वभावो द्रव्यादिरूपेणेति विशेषणसमासः ॥ ३२० ॥

ततो निरन्वय इत्यादिना निगमयति ।

**ततो निरन्वयो ध्वंसः स्थिरं वा सर्वमिष्यताम् ।**
**एकात्मनि तु नैव स्तो व्यावृत्त्यनुगमाविमौ ॥ ३२१ ॥**

न केवलं पर्यायादभिन्नस्वभावाद्द्रव्यरूपस्यानुगतात्मनोऽसिद्धिः, इतोऽपि पर्यायव्यतिरेकेणोपलब्धिलक्षणप्राप्तस्यानुपलब्धेरसद्व्यवहारविषयत्वमेवास्येति दर्शयन्नाह—न चेत्यादि ।

**न चोपलभ्यरूपस्य पर्यायानुगतात्मनः ।**
**द्रव्यस्य प्रतिभासोऽस्ति तन्नास्ति गगनाब्जवत् ॥ ३२२ ॥**

तेन यदुक्तं प्रत्यक्षत एवानुगतो द्रव्यात्मा सिद्ध इति, तदसिद्धम् । न हि पर्यायव्यतिरिच्यमानशरीरः क्वचिदपि विज्ञाने प्रत्यक्षसंमते प्रतिभासमानोऽनुगतैकरूपो द्रव्यात्मा लक्ष्यते ॥ ३२२ ॥

यद्येवं यदि पर्यायव्यतिरेकेण द्रव्यात्मा नास्ति तदा संख्यादिभेदः कथं सिध्यतीत्याह—विविधार्थेत्यादि ।

**विविधार्थक्रियायोग्यास्तुल्यादिज्ञानहेतवः ।**
**तथाविधार्थसङ्केतशब्दप्रत्ययगोचराः ॥ ३२३ ॥**

विविधाः—नानाप्रकाराः, अर्थक्रियाः—रूपादीनां पर्यायाणां समानासमानभेदात्, तत्र समाना जलसंधारणादिलक्षणाः, असमाना वस्त्ररागलोचनादिज्ञानोत्पादलक्षणाः, तत्र योग्याः समर्था इति विग्रहः । तत्र साधारणे कार्ये सर्वेषामेव यौगपद्येनोपयोग इति समस्तानां हेतुत्वज्ञापनार्थमभिन्नद्रव्यरूपाभावेऽपि त एव भेदिनोऽपि घट इत्यादिना शब्देनैकसङ्ख्याविशिष्टा उच्यन्ते । असाधारणकार्योपयोगित्वविवक्षायां तु नानासङ्ख्यास्त इति सङ्ख्याभेदः कार्यभेदश्च तेषु व्यवस्थाप्यते । लक्षणभेदस्तर्हि कथमित्याह—**तुल्यादिज्ञानहेतव** इति । आमपक्काद्यवस्थासु प्रतिक्षणध्वंसिनोऽपि सदृशसन्निवेशा विशेषा एवोत्पद्यमाना निर्विकल्पानुभवविषया अनुभूयमानाः सर्वावस्थासु घटो घट इत्यादिसदृशप्रत्ययहेतवो भवन्ति । श्यामलोहितादिवर्णवैलक्षण्येन जायमाना अतुल्यप्रत्ययहेतव इत्येवमेकरूपानुगममन्तरेणापि तुल्यातुल्यज्ञानहेतवो भवन्तोऽनुवृत्तिव्यावृत्तिरूपेण व्यवस्थाप्यन्त इति लक्षणभेदो व्यवस्थाप्यते । तुल्यादीत्यादिग्रहणेनातुल्यं ज्ञानं गृह्यते । कस्तर्हि संज्ञाभेद इत्याह—**तथाविधेत्यादि** । तथाविधः—विविधार्थक्रियायोग्यस्तुल्यादिज्ञानहेतुश्च पदार्थो रूपादिः, अर्थः—विषयो यस्य, घट इति रूपादय इति च सङ्केतस्य, स तथोक्तः, तथाविधार्थः सङ्केतो येषां शब्दप्रत्ययानां ते तथोक्ताः, तेषां गोचरा इति विग्रहः ॥ ३२३ ॥

तेन प्रत्यक्षत एव भावानां नैरात्म्यं प्रसिद्धमित्युपसंहारेण दर्शयति—**उदयेत्यादि** ।

**उदयव्ययधर्माणः पर्याया एव केवलाः ।**
**संवेद्यन्ते ततः स्पष्टं नैरात्म्यं चातिनिर्मलम् ॥ ३२४ ॥**

**पर्याया** इति । रूपादयः, स्वसंविदितस्वभावाश्च दुःखादयः । **केवला** इति । अभिन्नैकद्रव्यरूपविरहिणः । नित्यस्य च क्रमयौगपद्याभ्यामर्थक्रियाविरोधात् । अर्थक्रियाकारित्वमेषामुदयव्ययधर्मित्व एव सति युज्यत इत्यनुमानतोऽप्येषामर्थक्रियाकारिणां सत्वलिङ्गान्नैरात्म्यं प्रसिद्धम् ॥ ३२४ ॥

यदुक्तं न चोपलभ्यरूपस्येत्यादि, तत्राथेत्यादिना परस्योत्तरमाशङ्कते ।

**अथ सन्मूर्छितं रूपं द्रव्यपर्याययोः स्थितम् ।**
**तद्विरूपं हि निर्भागं नरसिंहवदिष्यते ॥ ३२५ ॥**

संमूर्छितम्—एकलोलीभूतम्, अतो विवेकेन द्रव्यरूपं न प्रतिभासते विद्यमानमपीति भावः । संमूर्छितत्वे कारणमाह—**तद्विरूपं** हीत्यादि । तत्—आत्मादिकं वस्तु । यस्मात्तद्विरूपमपि सन्निर्भागमिष्यते यथा नरसिंहस्तस्मान्निर्भागत्वात्संमूर्छितोभयरूपं तदिति न पृथगुपलभ्यते ॥ ३२५ ॥

तदेतत्परस्परपराहतमभिधीयते भवतेति दर्शयन्नाह—**नन्वि**त्यादि ।

**ननु द्विरूपमित्येव नानार्थविनिबन्धनः ।**
**निर्देशो रूपशब्देन स्वभावस्याभिधानतः ॥ ३२६ ॥**

यदि हि निर्भागं तदा द्विरूपमित्येतद्व्याहतम्, नानार्थविनिबन्धनत्वादस्य व्यपदेशस्य, कस्मात्? रूपशब्देन स्वभावस्याभिधानात् । तथा हि द्वे रूपे द्वौ स्वभावौ यस्य स द्विरूप उच्यते न चैकस्य स्वभावद्वयं युक्तमेकत्वहानिप्रसङ्गात् । केवलं द्वावेव स्वभावौ भवता प्रतिपादितौ, न पुनरेकं वस्तु द्विरूपम्, परस्परपरिहारस्थितलक्षणत्वादेकत्वानेकत्वयोः ॥ ३२६ ॥

यश्च नरसिंहः सोऽप्येकः सन् द्विरूपो न सिद्ध इति दर्शयति—**नरसिंहोऽपी**त्यादिना ।

**नरसिंहोऽपि नैवैको ह्यात्मकश्चोपपद्यते ।**
**अनेकाणुसमूहात्मा स तथा हि प्रतीयते ॥ ३२७ ॥**

## दिगंबरपरिकल्पितात्मपरीक्षा ।

केवलं विवादास्पदीभूतं नोपपद्यत इत्यपिशब्दः । स इति । नरसिंहः । **तथेति** । अवयववैचित्र्येण, पृथुतरदेशाक्रान्तिरूपेण च । अन्यथैवं न प्रतिभासेत । मक्षिकापदमात्रेणापि च पिधाने तस्य तथाविधस्यावरणप्रसङ्गश्च । एतेन मेचकमणिकल्पा वर्णादयः प्रत्युक्ताः । एतच्च विस्तरेणावयविनिषेधे प्रतिपादयिष्याम इति भावः ॥ ३२७ ॥

## इति दिगम्बरपरिकल्पितात्मपरीक्षा ।

अपरेऽद्वैतदर्शनावलम्बिनश्चौपनिषदिकाः क्षित्यादिपरिणामरूपनित्यैकज्ञानस्वभावमात्मानं कल्पयन्ति । अतस्तेषामेव मतमुपदर्शयन्नाह—नित्येत्यादि ।

**नित्यज्ञानविवर्त्तोऽयं क्षितितेजोजलादिकः ।**
**आत्मा तदात्मकश्चेति सङ्गिरन्तेऽपरे पुनः ॥ ३२८ ॥**

**तदात्मक** इति । क्षित्यादिपरिणामरूपनित्यैकज्ञानात्मक इत्यर्थः । **अपर** इति । औपनिषदिकाः ॥ ३२८ ॥

किमत्र प्रमाणमित्याह—**ग्राह्येत्यादि** ।

**ग्राह्यलक्षणसंयुक्तं न किञ्चिदिह विद्यते ।**
**विज्ञानपरिणामोऽयं तस्मात्सर्वः समीक्ष्यते ॥ ३२९ ॥**

न हि क्षित्यादयो ज्ञानव्यतिरेकेण ग्राह्यलक्षणापन्नाः सन्ति येन ते प्रतिभासेरन्नवयविनः । परमाणूनां चासत्त्वात् । तस्मात्सामर्थ्याद्विज्ञानप्रतिभासरूपा एवामी क्षित्यादय इति व्यवसीयन्ते । अयमिति । क्षित्यादिः ॥ ३२९ ॥

**तेषा**मित्यादिना प्रतिविधत्ते ।

**तेषामल्पापराधं तु दर्शनं नित्यतोक्तितः ।**
**रूपशब्दादिविज्ञानां(ने?) व्यक्तं भेदोपलक्षणात् ॥ ३३० ॥**
**एकज्ञानात्मकत्वे तु रूपशब्दरसादयः ।**
**सकृद्वेद्याः प्रसज्यन्ते नित्येऽवस्थान्तरं न च ॥ ३३१ ॥**

**अल्पापराध**मिति । ज्ञानमात्रस्य युक्त्युपेतस्याभ्युपगमात् । यद्येवं स्वल्पोऽपि किमिति तत्रापराध उच्यत इत्याह—**नित्यतोक्तित** इत्यादि । कस्मात्पुनर्नित्यत्वाभ्युपगमो न युक्त इत्याह—**रूपशब्दादी**त्यादि । नित्यता हि नाम तादवस्थ्यमुच्यते, अतादवस्थ्यं त्वनित्यता, न च रूपशब्दादिप्रतिभासिविज्ञानमेकावस्थं सर्वदाऽनुभूयते, किन्तु क्रमेण कदाचिद्रूपप्रतिभासमन्यदा च शब्दादिप्रतिभासम् । तद्यदि नित्यैकज्ञानप्रतिभासात्मका अमी शब्दादयः स्युस्तदा विचित्रास्तरणप्रतिभासवत्सकृदेव प्रतिभासेरन् । तत्प्रतिभासात्मकस्य ज्ञानस्य सर्वदाऽवस्थितत्वात् । अथापि स्यादवस्थान्तरमेतत्क्रमेण शब्दादिप्रतिभासं ज्ञानस्योत्पद्यते । तेन सकृदेव शब्दादिसंवेदनं न भविष्यतीत्याह—**नित्येऽवस्थान्तरं न चेति** । अवस्थानामवस्थातुरनन्यत्वादवस्थावदवस्थातुरपि नाशोत्पादौ स्याताम् । अवस्थातृवद्वाऽवस्थानामपि नित्य-

त्वप्रसङ्गः। व्यतिरेके चावस्थानां तस्यैता इति संबन्धासिद्धिः, उपकाराभावात्। नित्यैकविज्ञानमात्राभ्युपगमविरोधश्च ॥ ३३० ॥ ३३१ ॥

किंच—नित्यस्य ज्ञानात्मनः प्रत्यक्षतो वा सिद्धिर्भवेदनुमानतो वा न तावत्प्रत्यक्षत इति दर्शयति—रूपेत्यादि।

**रूपादिवित्तितो भिन्नं न ज्ञानमुपलभ्यते।**
**तस्याः प्रतिक्षणं भेदे किमभिन्नं व्यवस्थितम् ॥ ३३२ ॥**

न हि क्रमप्रतिभासिरूपादिसंविद्व्यतिरेकेण नित्यैकरूपमवस्थातृ ज्ञानमनुभूयते, येन प्रत्यक्षतः सिद्धिः स्यात्। तस्याश्च रूपादिसंवित्तेः क्रमेणानुभूयमानायाः प्रतिक्षणं ध्वंसे सिद्धे किमपरमभिन्नमस्तीति वाच्यम्। तस्मादुपलब्धिक्षणप्राप्तस्य तथाविधज्ञानात्मनोऽनुपलब्धेरसद्व्यवहारविषयतैवेति भावः। न चाप्यनुमानतः सिद्धिरिति मन्यते। तथाह्यनुमानं भवत्स्वभावलिङ्गं वा भवेत्, कार्यं वा, न तावत्स्वभावस्तथाभूतस्य ज्ञानात्मनः साधकं प्रमाणमस्ति, बाधकं तु प्रत्यक्षादि विद्यत इत्ययुक्तो नित्यज्ञानविवर्त्तः ॥ ३३२ ॥

किंचास्मिन्पक्षे बन्धमोक्षव्यवस्था न प्राप्नोतीति दर्शयति—विपर्यस्तेत्यादि।

**विपर्यस्ताविपर्यस्तज्ञानभेदो न विद्यते।**
**एकज्ञानात्मके पुंसि बन्धमोक्षौ ततः कथम् ॥ ३३३ ॥**

यस्य हि प्रतिक्षणध्वंसि प्रतिपुरुषमनेकमेव विज्ञानं सन्तानभेदि प्रवर्त्तत इति पक्षस्तस्य विपर्यस्ताविपर्यस्तज्ञानप्रबन्धोत्पादवशाद्बन्धमोक्षव्यवस्था युक्तिमती। योगाभ्यासक्रमेण च परिशुद्धतरतमज्ञानोत्पादादपरिशुद्धज्ञानसंताननिवृत्तेरपवर्गः प्राप्यत इति सफलो मोक्षप्राप्तये प्रयासः। यस्य तु पुनर्भवतो नित्यैकज्ञानस्वभाव आत्मेति पक्षस्तस्य कथमेकज्ञानात्मके पुंसि बन्धमोक्षौ भवतः। तथाहि—यदि विपर्यस्तस्वभावमेकं ज्ञानं सदा तदाऽपरस्यावस्थान्तरस्याभावान्न मोक्षव्यवस्था स्यात्। अथाविपर्यस्तं तदा नित्यं परिशुद्धस्वभावत्वान्न बन्धः स्यात्। अस्माकं तु सन्तानभेदेन विज्ञप्तिः संक्लिष्टा शुद्धा चेष्यत इति युक्ता बन्धमोक्षव्यवस्था। यथोक्तम्—"संक्लिष्टा च विशुद्धा च समला निर्मला च सा। संक्लिष्टा चेद्भवेन्नासौ मुक्ताः स्युः सर्वदेहिनः ॥ विशुद्धा चेद्भवेन्नासौ व्यायामो निष्फलो भवेत्। इति ॥ ३३३ ॥

अथापि स्यात्कल्पितावेव बन्धमोक्षौ न पारमार्थिकाविति, तदत्र कल्पनाया अपि निबन्धनं वाच्यम् । अनित्यज्ञानपक्षे तु निबन्धनमुपदर्शितमेव । ततश्च योऽयं भवतामपवर्गप्राप्तये संसारसमतिक्रमाय च तत्त्वभावनाप्रयत्नः स केवलमायासफल एवेति दर्शयति—किं वेत्यादि ।

**किं वा निवर्त्तयेद्योगी योगाभ्यासेन साधयेत् ।**
**किं वा न हातुं शक्यो हि विपर्यासस्तदात्मकः ॥ ३३४ ॥**
**तत्त्वज्ञानं न चोत्पाद्यं तादात्म्यात्सर्वदा स्थितेः ।**
**योगाभ्यासोऽपि तेनायमफलः सर्व एव च ॥ ३३५ ॥**

## औपनिषदकल्पितात्मपरीक्षा ।

यदि हि तत्त्वभावनया योगी किंचिन्निवर्त्तयेत्प्रवर्त्तयेद्वा तदा स्यादस्य सफलः प्रयासः, यावता न तावदसौ विपर्यासं निवर्त्तयति, यस्मादसौ विपर्यासस्तदात्मकः—नित्यज्ञानात्मकः, तस्मान्न हातुं शक्यः । नित्यस्याविनाशितया त्यागासम्भवात् । नापि तत्त्वज्ञानं भावनया साधयति, नित्यज्ञानात्मतया सर्वदा तत्वज्ञानस्यावस्थितत्वात् । तस्मान्न युक्तमेतत् ॥ ३३४ ॥ ३३५ ॥

## इत्यौपनिषदिकात्मपरीक्षा ।

वात्सीपुत्रीयपरिकल्पितपुद्गलप्रतिषेधार्थमाह—केचित्त्वित्यादि ।

**केचित्तु सौगतम्मन्या अप्यात्मानं प्रचक्षते ।**
**पुद्गलव्यपदेशेन तत्त्वान्यत्वादिवर्जितम् ॥ ३३६ ॥**

केचिदिति । वात्सीपुत्रीयाः । ते हि सुगतसुतमात्मानं मन्यमाना अपि पुद्गलव्याजेन स्कन्धेभ्यस्तत्त्वान्यत्वाभ्यामवाच्यमात्मानं कल्पयन्ति । ये हि नाम भगवतो नैरात्म्यवादिनस्सुगतस्य सुतत्वमभ्युपगतास्ते कथमिव वितथात्मदृष्टिमभिनिविष्टास्युरिति दर्शयन्नुपहासपदमाह—सौगतम्मन्या अपीति । तथाहीदमात्मनो लक्षणम्—यो हि शुभाशुभकर्मभेदानां कर्त्ता स्वकृतकर्मफलस्य चेष्टानिष्टस्य च भोक्ता यश्च पूर्वस्कन्धपरित्यागादपरस्कन्धान्तरोपादानात्संसरति भोक्ता च स आत्मेति । एतच्च सर्वं पुद्गलेऽपीष्टमिति केवलं नाम्नि विवादः ॥ ३३६ ॥

अथ पुद्गलस्यावाच्यत्वे का पुनर्युक्तिरित्याह—स्कन्धेभ्य इत्यादि ।

**स्कन्धेभ्यः पुद्गलो नान्यस्तीर्थदृष्टिप्रसङ्गतः ।**
**नानन्योऽनेकताद्यासेः साध्वी तस्मादवाच्यता ॥ ३३७ ॥**

यदि स्कन्धेभ्योऽन्यः पुद्गलः स्यात्तदानीं तैर्थिकपरिकल्पितात्मदृष्टिर्भवेत्, ततश्च शाश्वतात्मप्रसङ्गः । न च शाश्वतस्यात्मनः कर्तृत्वभोक्तृत्वादि युक्तम्, आकाशवत्तस्य सर्वदा निर्विशिष्टत्वात् । प्रतिषिद्धश्च भगवता शाश्वत आत्मा, निरात्मानः सर्वे धर्मा इति च वचनं व्याहन्येत । अनन्यस्तर्हि भवत्विति चेदाह—**नानन्य** इत्यादि । यदि हि स्कन्धा एव रूपादयः पुद्गलः स्यात्तदा बहुभ्यः स्कन्धेभ्योऽनन्यत्वात्तत्स्वरूपवदनेकता प्राप्नोति पुद्गलस्य । एकश्चेष्यते । यथोक्तम्—"एकः पुद्गलो लोक उत्पद्यमान उ(त्प)द्यते यद्वत्तथा गत" इति (?) । आदिशब्देनानित्यत्वादिपरिग्रहः । एवं च सति उच्छेदित्वं स्कन्धवत्पुद्गलस्यापि स्यात् । ततश्च कृतकर्मविप्रणाशप्रसङ्गः प्रतिषिद्धश्च भवतोच्छेदवाद इत्यतोऽस्त्यवाच्यः पुद्गल इति सिद्धम् ॥ ३३७ ॥

**ते वाच्या** इत्यादिना वस्तुवत्पुद्गलो न भवत्यवाच्यत्वादिति स्ववचनादेव भवद्भिः प्रतिपादितमिति दर्शयति ।

**ते वाच्याः पुद्गलो नैव विद्यते पारमार्थिकः ।**
**तत्त्वान्यत्वादवाच्यत्वान्नभःकोकनदादिवत् ॥ ३३८ ॥**

प्रयोगः—यद्वस्तुनः सकाशात्तत्त्वान्यत्वाभ्यां वाच्यं न भवति न तद्वस्तु, यथा गगननलिनम्, न भवति च वाच्यः पुद्गल इति व्यापकानुपलब्धेः । वैधर्म्येण वेदनादि ॥ ३३८ ॥

कथं पुनरत्र व्याप्तिः सिद्धेत्याह—**अन्यत्वमि**त्यादि ।

**अन्यत्वं वाऽप्यनन्यत्वं वस्तु नैवातिवर्त्तते ।**
**वस्तुतो यत्तु नीरूपं तदवाच्यं प्रकल्प्यते ॥ ३३९ ॥**

वस्तुनो हि सकाशाद्वस्तु नैव तत्त्वान्यत्वे व्यतिक्रामति, गत्यन्तराभावात् । अन्यथा रूपादीनामपि परस्परतोऽवाच्यत्वं स्यात् । तस्मान्नीरूपमस्वभावमेवावाच्यं प्रकल्प्यते, न तु वस्तु ॥ ३३९ ॥

कथमित्याह—**भेदाभेदविकल्पस्ये**त्यादि ।

**भेदाभेदविकल्पस्य वस्त्वधिष्ठानभावतः ।**
**तत्त्वान्यत्वाद्यनिर्देशो निःस्वभावेषु युज्यते ॥ ३४० ॥**
**न वस्तुनि यदेतद्धि तन्नेति प्रतिषेधनम् ।**
**तद्वस्त्वन्तरवत्तस्माद्व्यक्तमन्यत्वमुच्यते ॥ ३४१ ॥**

**अतद्भावनिषेधश्च तत्त्वमेवाभिधीयते ।**
**नातिक्रामति तद्वस्तु तत्त्वं भेदं च वस्तुनः ॥ ३४२ ॥**

वस्त्वेव हि भेदाभेदविकल्पयोरधिष्ठानम्, नावस्तु । तेन तत्त्वान्यत्वाद्यनिर्देशो निःस्वभावेष्वेव—स्वभावविरहितेष्वेव युज्यते । न वस्तुनि तत्त्वान्यत्वाद्यनिर्देशो युज्यत इति संबन्धः । तत्र भेदाभेदाभ्यां गत्यन्तराभावात् । कथं पुनर्गत्यन्तराभाव इत्याह—यदेतद्धीत्यादि । तथा हि—रूपादिस्वभावः पुद्गलो न भवतीति यदेतत्तन्निषेधनम्, तत्तस्माद्रूपादेः सकाशादन्यत्वमेवाभिधीयते । स्वभावान्तरविधिनान्तरीयकत्वाद्वस्तुनो वस्त्वन्तरभावनिषेधस्य । प्रयोगः—यद्वस्तुयत्स्वभावविरहितं तत्ततोऽन्यत्, यथा रूपं वेदनातः, रूपादिस्वभावविरहि च पुद्गलाख्यं वस्तु, इति स्वभावहेतुः । यश्चायं वस्तुनोऽतद्भावनिषेधः—अतद्रूपनिषेधः स तत्त्वमव्यतिरेक एवाभिधीयते । तत्त्वविधिनान्तरीयकत्वाद्वस्तुसतोऽर्थान्तरभावनिषेधस्य । अन्यथा हि यदि तस्य न कश्चित्स्वभावो विधीयते तदा सर्वस्वभावनिषेधादवस्तुत्वमेव स्यात् । सर्वस्वभावनिषेधलक्षणत्वादवस्तुत्वस्येति । प्रयोगः—यद्वस्तु यतोऽर्थान्तरत्वेन प्रतिषिद्धात्मतत्त्वं तत्तदेव, यथा रूपं स्वस्वभावादर्थान्तरत्वेन प्रतिषिद्धात्मतत्त्वम् । प्रतिषिद्धात्मतत्त्वश्च रूपादिभ्योऽर्थान्तरत्वेन पुद्गल इति स्वभावहेतुः । तत्तस्माद्वस्तुनः सकाशात्तत्त्वान्यत्वे वस्तु नातिक्रामतीति सिद्धा व्याप्तिर्मौलस्य हेतोः ॥ ३४० ॥ ३४१ ॥ ३४२ ॥

एवं तावदवाच्यत्वाभ्युपगमे प्रज्ञप्तिसत्वं पुद्गलस्य प्राप्तमिति प्रतिपादितम् । इदानीं वस्तुत्वाभ्युपगमे वा पुद्गलस्यावाच्यत्वमयुक्तमन्यथा स्ववचनविरोधः प्रतिज्ञायाः स्यादिति मन्यमानो निगमयति—स्कन्धेभ्य इत्यादि ।

**स्कन्धेभ्यः पुद्गलो नान्य इत्येषाऽनन्यसूचना ।**
**स्कन्धो न पुद्गलश्चेति व्यक्ता तस्येयमन्यता ॥ ४४३ ॥**

अपि चावाच्यः पुद्गल इति ब्रुवाणैर्भवद्भिः स्फुटतरमेव स्कन्धेभ्यः पुद्गलस्यान्यत्वमुच्चैरुद्घोषितमिति दर्शयति—विरुद्धधर्मसङ्गो हीत्यादि ।

**विरुद्धधर्मसङ्गो हि वस्तूनां भेद उच्यते ।**
**स्कन्धपुद्गलयोश्चैव विद्यते भिन्नता न किम् ॥ ३४४ ॥**

प्रयोगः—यौ परस्परपरिहारस्थितधर्माध्यासितौ तौ परस्परभिन्नौ, यथा रूपवेदने मूर्त्तत्वामूर्त्तत्वयुक्ते, वाच्यत्वावाच्यत्वादिपरस्परविरुद्धधर्माध्यासितौ च स्कन्धपुद्गलाविति स्वभावहेतुः ॥ ३४४ ॥

न चायमसिद्धो हेतुरिति दर्शयन्नाह—तथा हीत्यादि ।

**तथा हि वेदनादिभ्यः पुद्गलोऽवाच्य उच्यते ।**
**तत्त्वान्यत्वेन वाच्यास्तु रूपसंज्ञादयस्ततः ॥ ३४५ ॥**

तथा हि पुद्गलो वेदनासंज्ञादिभ्यस्तत्त्वान्यत्वाभ्यामवाच्य इष्यते । रूपवेदनादयस्तु, ततः—वेदनादिभ्यः, परस्परमन्यत्वेन वाच्या इत्यतो नासिद्धता हेतोः ॥३४५॥

इतोऽपि विरुद्धधर्माध्यासः सिद्ध इत्यादर्शयति—अनित्यत्वेनेत्यादि ।

**अनित्यत्वेन वाच्याश्च रूपस्कन्धादयो मताः ।**
**पुद्गलस्तु तथा नेति ततो विस्पष्टमन्यता ॥ ३४६ ॥**

अनित्याः सर्वसंस्कारा इति वचनाद्रूपादयो ह्यनित्यत्वेन वाच्याः, पुद्गलस्तु तथा नानित्यत्वेन वाच्य इष्टः सर्वप्रकारेण तस्यावाच्यत्वात् । न चाप्यनैकान्तिकता हेतोः, एतावन्मात्रनिबन्धनत्वाद्भेदव्यवहारस्य, अन्यथा हि सकलमेव विश्वमेकं वस्तु स्यात्, ततश्च सहोत्पादविनाशप्रसङ्गः ॥ ३४६ ॥

न केवलं तत्त्वान्यत्वाभ्यामवाच्यत्वादवस्तु पुद्गलोऽयमिति प्रतिपादितम्, इतोऽप्यनित्यत्वेनावाच्यत्वादेवावस्त्विति प्रतिपादयन्नाह—अर्थक्रियास्वित्यादि ।

**अर्थक्रियासु शक्तिश्च विद्यमानत्वलक्षणम् ।**
**क्षणिकेष्वेव नियता तथाऽवाच्ये न वस्तुता ॥ ३४७ ॥**

इदमेव हि विद्यमानत्वलक्षणं वस्तुस्वभावो यदुतार्थक्रियासु शक्तिः, सर्वसामर्थ्यविरहलक्षणत्वादवस्तुत्वस्येति सामर्थ्यादर्थक्रियासामर्थ्यलक्षणमेव वस्तुत्वमवतिष्ठते। सा चार्थक्रिया क्षणिकेष्वेव नियता । क्षणिकत्वेनैव व्याप्तेति यावत् । नित्यस्य क्रमयौगपद्याभ्यामर्थक्रियाविरोधात् । अतस्तथा क्षणिकत्वेनावाच्ये पुद्गले वस्तुता नास्ति । तत्र तद्व्यापकस्य क्षणिकत्वस्य निवृत्तेः वृक्षत्वनिवृत्तौ शिंशपात्वादिनिवृत्तिवदिति । यथोक्तम्—अनित्यत्वेन योऽवाच्यः स हेतुर्नहि कस्यचिदिति । स्यादेतद्यदि पुद्गलो नित्यः स्यात्तदा तस्य क्रमयौगपद्याभ्यामर्थक्रियाविरोधः स्यात्, यावता यथाऽसावनित्यत्वेनावाच्यः तथा नित्यत्वेनापीति, अतोऽर्थक्रियासामर्थ्यमस्याविरुद्धमेवेति । तदसम्यक्, न ह्युभयाकारविनिर्मुक्तं वस्तु स्वलक्षणं युक्तम्, नित्यानित्ययोरन्योन्यवृत्तिपरिहारस्थितलक्षणत्वात् । वस्तुन्येकाकारत्यागपरिग्रहयोस्तदपराकारपरिग्रहत्यागनान्तरीयकत्वात् । न ह्यस्माभिरवाच्यशब्दनिवेशनं पुद्गले प्रतिषिध्यते, स्वतंत्रेच्छा-

मात्रानीतस्य केनचित्प्रतिषेद्धुमशक्यत्वात्, किंत्विदमिह वस्तुरूपं निरूप्यते। किमसौ पुद्गलाख्यस्य वस्तुनः स्वभावः सर्वदाऽस्त्याहोस्विन्नास्तीति, यद्यस्ति तदा नित्य एवासौ, न हि नित्यो नामान्य एव कश्चित्, अपि तु यः स्वभावः सदाऽवस्थायी न विनश्यति स नित्य उच्यते। यथोक्तम्—"नित्यं तमाहुर्विद्वांसो यः स्वभावो न नश्यति" इति। अथ नास्तीति पक्षस्तदाऽप्यनित्य एवासावनवस्थायिस्वभावलक्षणत्वादनित्यस्य। अतः क्षणिकाक्षणिकव्यतिरेकेण गत्यन्तराभावादक्षणिकस्य च क्रमयौगपद्याभ्यामर्थक्रियाविरोधात् क्षणिकत्वेनार्थक्रियासामर्थ्यलक्षणं सत्त्वं व्याप्तमिति पुद्गले क्षणिकत्वनिवृत्तौ सत्त्वनिवृत्तिः सिद्धा ॥ ३४७ ॥

यद्येवं यदि पुद्गलो नास्त्येव कस्माद्भगवता स जीवस्तच्छरीरमन्यो जीवोऽन्यच्छरीरमिति पृष्टे नोक्तमव्याकृतमेतदिति, यावता नास्त्येवेति कस्मान्नोक्तमित्याह—**आगमार्थविरोधे** त्वित्यादि।

**आगमार्थविरोधे तु पराक्रान्तं महात्मभिः।**
**नास्तिक्यप्रतिषेधाय चित्रा वाचो दयावतः॥ ३४८॥**

यदि हि पुद्गलो धर्मी सिद्धो भवेत्तदा तस्य तत्त्वान्यत्वादिधर्मोऽव्याकृतमर्हेत्। यावता स एव धर्मी न सिद्धस्तत्कथमसतस्तस्य धर्मो निर्दिश्येत। न ह्यसतः खरविषाणादेस्तीक्ष्णतादि संभवति येनासौ व्याक्रियते। अतः प्रज्ञप्तिसत्त्वमेव ख्यापयन्पुद्गलस्याव्याकृतमेतदिति भगवानुवाच। नास्तीत्येवं तु नोक्तम्, परेण धर्मिस्वरूपस्यापृष्टत्वात्। अथवा प्रज्ञप्तिसतोऽप्यभावाभिनिवेशपरिहारार्थं शून्यतादेशनायामभव्यविनेयजनाशयापेक्षया नास्तीत्येव नोक्तम्। यथोक्तम्—"दृष्टिदंष्ट्रावभेदं च भ्रंशं चावेक्ष्य कर्मणाम्। देशयन्ति जिना धर्मं व्याघ्रीपोतापहारवत्॥" (?) इति एवमाचार्यवसुबन्धप्रभृतिभिः कोशपरमार्थसप्ततिकादिष्वभिप्रायप्रकाशनात्पराक्रान्तम्, अतस्तत एवावगन्तव्यम्। इह त्वतिग्रन्थविस्तरभिया न लिख्यत इति भावः। यद्येवम्, "अस्ति सत्त्व उपपादुक" इत्येतत्कथं नीयत इत्याह—**नास्तिक्ये**त्यादि। सत्त्वास्तित्वाभिधायिन्यो हि देशनाश्चित्रा दयावतः, न विरुध्यन्त इति वाक्यशेषः। यत्र हि चित्तसन्ताने सत्त्वप्रज्ञप्तिस्तस्यां सत्यामनुच्छेदमभिसन्धायास्ति सत्त्व इत्युक्तं भगवता। अन्यथा ह्यनुपरतकार्यकारणक्षणपरम्पराणामपि संस्काराणामभावावगमात्। परलोकिनोऽसत्त्वात्परलोकासिद्धिरिति नास्तिक्यदृष्टयो भवेयुर्विनेयाः॥ ३४८॥

यत्तर्हीदमुक्तम्—"भारं वो भिक्षवो देशयिष्यामि भारादानं भारनिक्षेपं भारहारं च । तत्र भारः पञ्चोपादानस्कन्धाः, भारादानं तृप्तिः, भारनिक्षेपो मोक्षः, भारहारः पुद्गला इति, तदेतत्कथं नीयते, न हि भार एव भारहारो युक्त इत्याह—समुदायादीत्यादि ।

**समुदायादिचित्तेन भारहारादिदेशना ।**
**विशेषप्रतिषेधश्च तद्दृष्टीन्प्रति राजते ॥ ३४९ ॥**

## इति वात्सीपुत्रीयपरिकल्पितात्मपरीक्षा ।

तत्र समानकालाः स्कन्धा एव सामस्त्येन विवक्षिताः समुदायव्यपदेशभाजः, त एव हेतुफलभूताश्च युगपत्कालभाविनः सन्तान इति व्यपदिश्यन्ते, एकाकारपरामर्शहेतवश्च संभवन्तः संतानिसमुदायिशब्दाभ्यां निर्दिश्यन्त इत्यतः, समुदायादिचित्तेन–समुदायाद्यभिप्रायेण, भारहारादिदेशना, न विरुध्यत इति शेषः । प्रथमेनादिशब्देन सन्तानादिपरिग्रहः, द्वितीयेन भारादेः । तत्र त एव स्कन्धाः समुदायसन्तानादिरूपेण विवक्षिताः पुद्गलो भारहार इति च व्यपदिश्यन्ते । तत्रैव लोके पुद्गलाभिधानात् । अत एव भगवता—"भारहारः कतमः पुद्गल" इत्युक्त्वा, "योऽसावायुष्मन्नेवंनामा, एवंजातिः, एवंगोत्र, एवमाहार, एवं सुखदुःखं प्रतिसंवेदी, एवं दीर्घायु"रित्यादिना पुद्गलो व्याख्यातः । स एवं स्कन्धसमुदायलक्षणः प्रज्ञप्तिः सन्नन्यथा विज्ञायेत नान्यो नित्यो द्रव्यं सन् परपरिकल्पितो विज्ञायेतेति प्रदर्शार्थं ( प्रदेशनार्थः ? ) अवश्यं चैवं विज्ञेयम्, अन्यथा भारादीनामपि स्कन्धेभ्यः पृथग्देशितत्वात्पुद्गलवत्स्कन्धानन्तर्गतं तत्स्यात् । तस्मात्त एव स्कन्धा ये स्कन्धान्तरस्योत्पादाय वर्त्तन्ते पूर्वकास्ते भार इति कृत्वोक्ताः । ये तूपेष्यन्ते फलभूतास्ते भारहारा इत्युक्ताः इत्यज्ञापकमेतत् । उद्योतकरस्त्वाह—आत्मानमनभ्युपगच्छता नेदं तथागतवचनमर्थवत्तायां शक्यं व्यवस्थापयितुम्, यस्मादिदमुक्तम् । रूपं भदन्त नाहम्, वेदना संज्ञा संस्कारो विज्ञानं भदन्त नाहम्, एवमेतद्भिक्षो रूपं न त्वम्, वेदना संज्ञा संस्कारो विज्ञानं न त्व"मिति । एतेन हि रूपादयः स्कन्धा अहङ्कारविषयत्वेन प्रतिषिद्धाः । विशेषप्रतिषेधश्चायं न सामान्यप्रतिषेधः । आत्मानं चानभ्युपगच्छता सामान्येनैव प्रतिषेद्धव्यम् । नैव त्वमसीति । विशेषप्रतिषेधस्त्वन्यविधिनान्तरीयको भवति । यथा वामेनाक्ष्णा न पश्यामीत्युक्ते गम्यत एव दक्षिणेन

पश्यामीति। तेनाप्यदर्शने वामग्रहणमनर्थकम्, न पश्यामीत्येव वाच्यं स्यात्। तथेहापि न रूपमात्मा यावन्नहि विज्ञानमात्मेत्युक्ते तद्विलक्षणोऽस्त्यात्मेति सूचितं भवति। स चावाच्योऽन्यो वा भवतु सर्वथाऽस्त्यात्मेति। अत्राह—**विशेषप्रतिषेधश्चे**त्यादि। एतदुक्तं भवति। विंशतिशिखरसमुद्गतोऽयं सत्कायदृष्टिशैलः कुमतीनां प्रवर्त्तते। यदुत रूपमात्मा, यावद्विज्ञानमात्मा, रूपवानात्मा, यावद्विज्ञानवानात्मा, आत्मनि रूपं यावद्विज्ञानमात्मनीति। तत्राद्यदृष्टिपञ्चकप्रतिषेधाय तद्दृष्टिकान्प्रति विशेषरूपेण प्रतिषेधः शोभते। सारूपमात्मेत्यादिका दृष्टिर्येषां ते तद्दृष्टिकाः। यदेव हि मूढमतेराशङ्कास्थानं तदेवानूद्य निवर्त्त्यते। न त्वत्र कस्यचिद्विधिरभिप्रेतः। अन्यथा ह्यश्रोतृसंस्कारकं वाक्यं ब्रुवाणोऽप्रेक्षावानेव प्रतिपादकः स्यादिति॥ ३४९॥

## इति वात्सीपुत्रीयात्मपरीक्षा।

चलमित्येतद्विशेषणसमर्थनार्थमाह—अथवेत्यादि।

**अथवाऽस्थान एवायमायासः क्रियते यतः।**
**क्षणभङ्गप्रसिद्ध्यैव प्रकृत्यादि निराकृतम्॥ ३५०॥**
**उक्तस्य वक्ष्यमाणस्य जात्यादेश्चाविशेषतः।**
**निषेधाय ततः स्पष्टं क्षणभङ्गः प्रसाध्यते॥ ३५१॥**

निरवशेषपदार्थव्यापिनः क्षणभङ्गस्य प्रसाधनादेव प्रकृतीश्वरादेः परपरिकल्पितस्य सकलपदार्थराशेरेकप्रहारेणैव निरस्यमानस्यापि सतो यदिदमस्माकमतिग्रन्थविस्तरसंदर्भेण प्रतिपदमुच्चार्य दूषणोपक्रमणं तत्केवलमायासफलमेव, स्वल्पोपायेनैव तस्य दूषितत्वादिति भावः। तथा हि—सर्वमेव प्रकृत्यादि परैरुदयानन्तरापवर्गि निरन्वयनिरोधधर्मकं वा कैश्चिन्नेष्यते। ततश्चैतत्समस्तवस्तुव्यापकक्षणभङ्गप्रसाधनेनैव निरस्तं भवतीति मन्यमानैरस्माभिरुक्तस्य प्रकृत्यादेः पुद्गलपर्यन्तस्य वक्ष्यमाणस्य च जातिगुणद्रव्यादेः शब्दार्थयोः प्रमाणप्रमेययोर्मेचकादिमणिप्रख्यचित्रस्य वस्तुनस्त्रिकालानुयायिनो भावस्य चार्वाकाद्युपगतस्य च भूतचतुष्टयस्य जैमिनीयेष्टस्य च वैदिकशब्दराशेर्निरासाय विशेषेण क्षणभङ्गः प्रसाध्यते। **स्पष्ट**मिति। तत्साधकस्य हेतोस्त्रिरूपस्य प्रदर्शनात्। अतोऽस्यामेव स्थिरभावपरीक्षायां सकलशास्त्रार्थपरिसमाप्तिर्भवतीत्युक्तं भवति॥ ३५०॥ ३५१॥

कथमसौ प्रसाध्यत इत्याह—कृतकाकृतकत्वेनेत्यादि ।

**कृतकाकृतकत्वेन द्वैराश्यं कैश्चिदिष्यते ।**
**क्षणिकाक्षणिकत्वेन भावानामपरैर्मतम् ॥ ३५२ ॥**

इह हि नैयायिकादयः क्षणिकमेकमपि वस्तु नास्तीति मन्यमानाः कृतकाकृतकत्वेन भावानां द्वैराश्यमवस्थापयन्ति । तत्र—केचित्कृतका यथा घटादयः, केचिद्-कृतका यथा परमाण्वाकाशादयः । अपरैस्तु वात्सीपुत्रीयादिभिः क्षणिकाक्षणिकत्वेनापि भावानां द्वैराश्यमिष्यते । तथाहि—बुद्धिशब्दार्चिःप्रभृतयस्तन्मतेन क्षणिकाः, क्षितिव्योमादयस्त्वक्षणिका इति ॥ ३५२ ॥

तदेवं दर्शनविभागेऽवस्थिते ये कृतकत्वेनाभीष्टास्तांस्तावत्पक्षीकृत्य प्रमाणमभिधीयत इति दर्शयन्नाह—तत्रेत्यादि ।

**तत्र ये कृतका भावास्ते सर्वे क्षणभङ्गिनः ।**
**विनाशं प्रति सर्वेषामनपेक्षतया स्थितेः ॥ ३५३ ॥**

विनाशं प्रति सर्वेषां हेत्वन्तरानपेक्षतया स्थितत्वादित्यनेन हि त्रिलक्षणो हेतुः सूचितस्तमेव स्पष्टयन्नाह—यद्भावं प्रतीत्यादि ।

**यद्भावं प्रति यन्नैव हेत्वन्तरमपेक्षते ।**
**तत्तत्र नियतं ज्ञेयं स्वहेतुभ्यस्तथोदयात् ॥ ३५४ ॥**
**निर्निबन्धा हि सामग्री स्वकार्योत्पादने यथा ।**
**विनाशं प्रति सर्वेऽपि निरपेक्षाश्च जन्मिनः ॥ ३५५ ॥**

प्रयोगः—ये यद्भावं प्रत्यनपेक्षास्ते तद्भावनियताः । यथा समनन्तरफला सामग्री स्वकार्योत्पादने नियता । विनाशं प्रत्यनपेक्षाश्च सर्वे जन्मिनः कृतका भावा इति स्वभावहेतुः । **हेत्वन्तरमिति** । जनकाद्व्यतिरिक्तम् । नियतमित्यत्र कारणमाह—**स्वहेतुभ्य** इति । तथा—तेन नियतेन रूपेणोत्पन्नत्वादित्यर्थः । ये तु पुनर्यत्र न नियतास्ते तत्रानपेक्षा अपि न भवन्त्येव, यथा घटादयोऽपक्काः पाकादिष्विति इदमत्र वैधर्म्येणोदाहरणम् ॥ ३५३ ॥ ३५४ ॥ ३५५ ॥

ननु चानैकान्तिको हेतुस्तथाहि—यदि नाम विनाशं प्रति हेत्वन्तरानपेक्षा भावास्तथाऽपि स्थित्वा देशान्तरे कालान्तरे च भावस्य विनाशसंभवादुदयानन्तरापवर्गित्वमभीष्टमेषां साधयितुं न सिध्यतीत्याह—**अनपेक्षो**ऽपीत्यादि ।

**अनपेक्षोऽपि यद्येष देशकालान्तरे भवेत् ।**
**तदपेक्षतया नैष निरपेक्षः प्रसज्यते ॥ ३५६ ॥**

**एष** इति । विनाशः । **तदपेक्षतयेति** । देशकालान्तरापेक्षतया । यो हि यत्रानपेक्षः स यदि क्वचिद्भवेत्, कदाचिद्वा, तदा तद्देशकालापेक्षत्वादनपेक्ष एव न स्यादिति कुतो व्यभिचारः । तथा हि—एकदेशकालापरिहारेणान्यत्र देशकालादौ वर्त्तमानः कथमनपेक्षो नाम, यतस्तथावृत्तिरेव तस्यापेक्षा, न तु समीहा, तस्याभिप्रायशून्यत्वात् ॥ ३५६ ॥

यदि तर्हि सर्वथा निरपेक्षत्वादिति हेत्वर्थोऽभिप्रेतः, न तर्हि हेतुः सिद्धः । तथाहि—केचिद्विनाशं प्रति मुद्गरादिकमपेक्षमाणा दृश्यन्ते । यथा घटादयः । येऽपि बुद्धिशब्दादयोऽनपेक्षत्वेन प्रसिद्धास्तेऽपि यदि नाम मुद्गरादिकं नापेक्षन्ते तथाऽपि देशकालावपेक्षन्त इत्यतोऽसिद्धता हेतोरित्याशङ्क्य परिहरन्नाह—**सर्वत्रैवेत्यादि** ।

**सर्वत्रैवानपेक्षाश्च विनाशे जन्मिनोऽखिलाः ।**
**सर्वथा नाशहेतूनां तत्राकिञ्चित्करत्वतः ॥ ३५७ ॥**

**सर्वत्रैवेति** । सर्वस्मिन्देशकालादिके विनाशहेतौ निरपेक्षा जन्मिन इत्यर्थः । नाशहेतुत्वेनाभ्युपेतानामकिंचित्करत्वादनुपकारित्वात्, न चानुपकार्यपेक्षो युक्तोऽतिप्रसङ्गात् ॥ ३५७ ॥

कथमकिंचित्करत्वमित्याह—**तथाहीत्यादि** ।

**तथाहि नाशको हेतुर्न भावाव्यतिरेकिणः ।**
**नाशस्य कारको युक्तः स्वहेतोर्भावजन्मतः ॥ ३५८ ॥**

विनाशो हि क्रियमाणः कदाचिद्वस्तु वा स्यादवस्तु वा, तत्र यदि वस्तु, तदाऽसौ विनाशहेतुना ततो विनाशहेतोर्भावादनर्थान्तरभूतो वा क्रियेत, अर्थान्तरभूतो वा । वस्तुसतो विकल्पद्वयानतिवृत्तेरुभयानुभयपक्षस्त्वयुक्त एव । वस्तुन्येकाकारत्यागपरिग्रहयोस्तदपराकारपरिग्रहत्यागनान्तरीयकत्वात् । एकस्य विधिप्रतिषेधो(भया)योगादित्युक्तम् । तत्र न तावदनर्थान्तरभूत इति पक्षः, भावस्वभावस्य स्वहेतोरेव जन्मत उत्पत्तेः । तस्यापि भाववत्तदव्यतिरेकिणो निष्पन्नत्वात् । न च निष्पन्नस्य कारणं युक्तम्, करणाविरामप्रसङ्गात् ॥ ३५८ ॥

स्यादेतन्नासौ भावः स्वहेतोः सर्वात्मना निष्पन्नोऽतः कारणान्तरतो नाशाख्यं स्वभावान्तरं लभत इत्याह—**न चानंश** इत्यादि ।

**न चानंशो समुद्भूते भवात्मन्यात्महेतुतः ।**
**तदात्मैव विनाशोऽन्यैराधातुं पार्यते पुनः ॥ ३५९ ॥**

न ह्येकस्य स्वभावद्वयमस्ति, येनांशेन निष्पत्तिः स्यात्, किं तु निरंश एव भावः स च स्वहेतोरुत्पद्यमानः सर्वात्मनैवोत्पन्न इति कथं तस्योत्तरकालं कारणान्तरैः स्वभावान्तरमाधीयेत । न हि यन्निष्पत्तौ यो न निष्पन्नः स तस्य स्वभावो युक्तः, एकयोगक्षेमलक्षणत्वादभेदस्य, तस्माद्योऽसावुत्तरकालमुत्पद्यते नाशात्मा भावः सोऽपरः स्वभावः, यश्चापरः स कथं तस्य भवेदिति यत्किंचिदेतत् ॥ ३५९ ॥

अथार्थान्तरभूत इति पक्षस्तत्राप्यकिंचित्कर एव विनाशहेतुर्भावस्येति दर्शयति—**पदार्थव्यतिरिक्त** इत्यादि ।

**पदार्थव्यतिरिक्ते तु नाशनाम्नि कृते सति ।**
**भावे हेत्वन्तरैस्तस्य न किञ्चिदुपजायते ॥ ३६० ॥**
**तेनोपलम्भकार्यादि प्राग्वदेवानुषज्यते ।**
**तादवस्थ्याच्च नैवास्य युक्तमाचरणादपि ॥ ३६१ ॥**

न ह्यन्यस्य करणेऽन्यदुपकृतं नाम, अतिप्रसङ्गात् । नापि तत्संबन्धिनो नाशस्य करणाद्भाव उपकृतो भवतीति युक्तं वक्तुम्, संबन्धासिद्धेः । तथाहि—भेदाभ्युपगमान्न तादात्म्यलक्षणः संबन्धः, नापि तदुत्पत्तिलक्षणः, विनाशहेतोरेव तदुत्पत्तेः, नचान्यो वास्तवः संबन्धोऽस्ति । सत्यपि वा संबन्धे भावस्यावस्थितत्वात्तथैवोपलम्भादिकार्यप्रसङ्गः । उपलम्भ एव कार्यम् । आदिशब्देन जलसंधारणजङ्गाभङ्गादिपरिग्रहः । तेन व्यतिरिक्तेन नाशेनावृतत्वात्प्रतिबद्धत्वाद्वा नोपलम्भादिकार्यं करोतीति चेदाह—**तादवस्थ्या**दित्यादि । न हि भावस्य स्वभावातिशयमखण्डयन्ननुत्पादयन्वा तस्याऽऽवारकः प्रतिबन्धको वा युक्तोऽतिप्रसङ्गात् । तस्मा(द)त्यक्तानावृताप्रतिबद्धपूर्वस्वभावत्वात्तस्यावरणं प्रतिबन्धश्च न युज्यते ॥ ३६० ॥ ३६१ ॥

स्यादेतन्न प्राग्वदुपलब्ध्यादिप्रसङ्गः, तेन व्यतिरिक्तेन नाशेन भावस्य विनाश्यमानत्वादित्याह—**नाशनाम्ने**त्यादि ।

**नाशनाम्ना पदार्थेन भावो नाश्यत इत्यसत् ।**
**अन्यत्वादिविकल्पानां तत्राप्यर्थानुवृत्तितः ॥ ३६२ ॥**

नाशो हि भावं नाशयन्किमन्यमनन्यं वा, यद्वा प्रध्वंसलक्षणं नाशं कुर्वाणो

नाशयति मुद्गरादिवदित्यत्रापि तुल्या एव विकल्पाः पुनरावर्तन्ते । तत्र चोक्तो दोषः, वक्ष्यते च **तत्रापीति** । योऽसौ नाशनाम्नाऽपरो नाशः क्रियते तत्रापि । **अर्थानुवृत्तित** इति । अन्यत्वादिविकल्पानामनुवृत्तेरित्यर्थः । एवं तावद्वस्तुभूतो न क्रियत इति प्रतिपादितम् ॥ ३६२ ॥

नाप्यवस्तुभूत इति दर्शयन्नाह—**भावाभावात्मक** इत्यादि ।

**भावाभावात्मको नाशः प्रध्वंसापरसंज्ञकः ।**
**क्रियते चेन्न तस्यापि करणं युक्तिसंगतम् ॥ ३६३ ॥**
**अभावस्य च कार्यत्वे वस्तुनैवाङ्कुरादिवत् ।**
**प्रसक्ताजन्यरूपस्य हेतुशक्त्या समुद्भवात् ॥ ३६४ ॥**

भावस्य हि करणं भवति नाभावस्य, निमित्तीकर्त्तव्यसकलस्वभावविरहलक्षणत्वान्न किंचिदुत्पाद्यं रूपमस्ति । अतो भावाभावात्मकः—भावनिषेधात्मको नाशो न केनचित्क्रियते, अवस्तुत्वात्, खरविषाणवत् । अन्यथा हि कार्यत्वादङ्कुरादिवद्वस्तुत्वमेव स्यात् । प्रयोगः—यत्कार्यं तद्वस्तु यथाऽङ्कुरादयः, कार्यश्च नाश इति स्वभावहेतुः । व्याप्तिमस्य साधयन्नाह—**हेतुशक्त्या समुद्भवादिति** । तदेव हि कार्यमुच्यते । यत्कारणशक्त्या विशिष्टमात्मातिशयमासादयति । समासादितात्मातिशयमेव च वस्तु । अत्र चार्थे नैयायिकादेरप्यविवादः । तथाहि—सत्तासमवायः स्वकारणसमवायो वा कार्यत्वमुच्यते । न च नाशे सत्तासमवायः स्वकारणसमवायो वा, तस्य द्रव्यादिवदस्तित्वाश्रयत्वप्रसङ्गात् ॥ ३६३ ॥ ३६४ ॥

यद्येवं भवतु वस्तुत्वं नाशस्य तत्र को दोष इत्याह—**विधिनैवमि**त्यादि ।

**विधिनैवमभावश्च पर्युदासाश्रयात्कृतः ।**
**यस्तत्र व्यतिरेकादिविकल्पो वर्त्तते पुनः ॥ ३६५ ॥**

कथं पुनरभावस्य विधिना करणमित्याकाङ्क्षायामिदमुक्तम्—**पर्युदासाश्रयादिति** । पर्युदासस्याश्रयणादित्यर्थः । विवक्षावशाद्धि कुतश्चन भावाद्विलक्षणो भाव एवाभाव इत्याख्यायते, तत्र च व्यतिरेकादिविकल्पे प्राक्तनो दोषः पुनरावर्त्तते ॥ ३६५ ॥

अथैतद्दोषभयान्न पर्युदासात्मकोऽभावो विनाशहेतुभिः क्रियते, किं तर्हि ? प्रसज्य(प्रतिषेधा)त्मक इत्यङ्गीक्रियते । तत्रापि विनाशहेतोः स्फुटतरमेवाकिंचित्करत्वं प्रतिपादितमिति दर्शयन्नाह—**अथे**त्यादि ।

**अथ क्रियानिषेधोऽयं भावं नैव करोति हि ।**
**तथाप्यहेतुता सिद्धा कर्तुर्हेतुत्वहानितः ॥ ३६६ ॥**

तथाहि—प्रसज्यप्रतिषेधे सति नञः करोतिना संबन्धादभावं करोति भावं न करोतीति क्रियाप्रतिषेधादकर्तृत्वं नाशहेतोः प्रतिपादितं भवेत्, यश्चाकर्त्ता स कथं हेतुः स्यादित्यतो न विनाशहेतुः कश्चित् ॥ ३६६ ॥

अत्राविद्धकर्णोक्तानि विनाशस्य हेतुमत्त्वसाधने प्रमाणानि निर्दिदिक्षुराह—**नन्वि**त्यादि ।

**ननु नैव विनाशोऽयं सत्ताकालेऽस्ति वस्तुनः ।**
**न पूर्वं न चिरात्पश्चाद्वस्तुनोऽनन्तरं त्वसौ ॥ ३६७ ॥**
**एवं च हेतुमानेष युक्तो नियतकालतः ।**
**कादाचित्कत्वयोगो हि निरपेक्षे निराकृतः ॥ ३६८ ॥**

तथाहि न वस्तुनः सत्ताकाले विनाशः क्षणमात्रावस्थायिनोऽप्यभावप्रसङ्गात्, नाप्युत्पादात्पूर्वम्, अजातस्य विनाशायोगात्, न हि वन्ध्यापुत्रादयोऽनुत्पन्ना एव विनश्यन्ति, पश्चादपि भवन्नचिराद्भवति, तृतीयादिषु क्षणेषु विनष्टस्य पुनर्विनाशायोगात्, भस्मीकृतज्वलनवत्, किन्तु वस्त्वनन्तरं द्वितीये क्षणे विनाशः । ततश्च नियतकालत्वाद्धेतुमान्विनाशोऽङ्कुरादिवदिति सिद्धम् । **नियतकालत** इति । कादाचित्कत्वादित्यर्थः । व्याप्तिमस्य साधयन्नाह—**कादाचित्कत्वयोगो** हीत्यादि । न ह्यनपेक्षे कादाचित्कत्वं युक्तम्, नित्यं सत्त्वादिप्रसङ्गात् । तस्मात्कादाचित्कत्वात्सिद्धमस्य सहेतुत्वम् ॥ ३६८ ॥

इतोऽपि सिद्धमिति दर्शयति—**वस्त्वनन्तरभावाच्चे**त्यादि ।

**वस्त्वनन्तरभावाच्च हेतुमानेव युज्यते ।**
**अभूत्वाभावतश्चापि यथैवान्यः क्षणो मतः ॥ ३६९ ॥**

तदेवमेते त्रयो हेतव उक्ताः । सहेतुको विनाशः, कादाचित्कत्वात्, वस्तूत्पत्त्यनन्तरभावित्वेन बौद्धैरभ्युपगम्यमानत्वात्, प्रागभूत्वाऽऽत्मलाभाच्च; क्षणान्तरवत् । वैधर्म्येण शशविषाणादय इति ॥ ३६९ ॥

उद्योतकरोक्तामपि युक्तिमाह—**अहेतुकत्वादि**त्यादि ।

**अहेतुकत्वात्किंचायमसन्वन्ध्यासुतादिवत् ।**
**अथवाऽऽकाशवन्नित्यो न प्रकारान्तरं यतः ॥ ३७० ॥**

**असत्त्वे सर्वभावानां नित्यत्वं स्यादनाशतः ।**
**सर्वसंस्कारनाशित्वप्रत्ययश्चानिमित्तकः ॥ ३७१ ॥**
**नित्यत्वेऽपि सह स्थानं विनाशेनाविरोधतः ।**
**अजातस्य च नाशोक्तिर्नैव युक्त्यनुपातिनी ॥ ३७२ ॥**

स ह्येवमाह—विनाशस्य हेतुर्नास्तीति ब्रुवाणः पर्यनुयोज्यः । किमकारणत्वाद्विनाशो नास्ति व्योमोत्पलादिवत्, अथाकारणत्वान्नित्यो व्योमादिवदिति । भवतां हि पक्षे अकारणं द्विधा दृष्टं नित्यमसच्च, न हि सत्त्वासत्त्वव्यतिरेकेण प्रकारान्तरमस्ति । तत्र यद्यकारणत्वादसत् विनाशः, तदा सर्वभावानां नित्यत्वप्रसङ्गः, विनाशाभावात् । किंच सर्वसंस्कारा विनश्यन्तीत्येष प्रत्ययो निर्निमित्तः प्राप्नोति, न ह्यसत्यां गतौ गच्छतीति भवति । अथ नित्यः, तदा भावस्य विनाशेन सहावस्थानं प्राप्नोति, सर्वदाऽवस्थानात् । न चैतद्युक्तं भावाभावयोः परस्परपरिहारस्थितलक्षणत्वात् । अथ सहावस्थानं नेष्यते, तदा कार्यस्योत्पादो न प्राप्नोति, तत्प्रत्यनीकभूतस्य नाशस्य सदाऽवस्थितत्वात् । ततश्चाजातस्य विनाशोऽपि न संगच्छते, न ह्यजाताः शशविषाणादयो विनश्यन्तीति लोके प्रतीतम्, तेनाजातस्य विनाश इति वचनं नैव युक्त्यनुपाति ॥ ३७० ॥ ३७१ ॥ ३७२ ॥

तदत्रेत्यादिना सर्वं प्रतिविधत्ते—

**तदत्र कतमं नाशं परे पर्यनुयुञ्जते ।**
**किं क्षणस्थितिधर्माणं भावमेव तथोदितम् ।**
**अथ भावस्वरूपस्य निवृत्तिं ध्वंससंज्ञिताम् ।**
**पूर्वपर्युनुयोगे हि नैव किञ्चिद्विरुध्यते ॥ ३७४ ॥**

द्विविधो हि विनाशो विधेः प्रतिषेधलक्षणः । तथाहि—क्षणस्थितिधर्मा भाव एव चलो विनश्यतीति कृत्वा विनाश इत्याख्यायते । यद्वा भावस्वभावप्रच्युतिलक्षणप्रध्वंसापरनामा विनशनं विनाश इति । तत्र पूर्वस्मिन्नाशे यद्ययं हेतुमत्वसाधनपर्यनुयोगः क्रियते यथोक्तैर्हेतुभिः, तदा सिद्धसाध्यता ॥ ३७३ ॥ ३७४ ॥

तामेव सिद्धसाध्यतां यो हीत्यादिना दर्शयति—

**यो हि भावः क्षणस्थायी विनाश इति गीयते ।**
**तं हेतुमन्तमिच्छामः पराभावात्त्वहेतुकम् ॥ ३७५ ॥**

यद्येवं कथमहेतुको विनाशो भवतां प्रतीत इत्याह—**पराभावात्त्वहेतुक**मिति। परस्य स्वकारणव्यतिरिक्तस्योत्तरकालं मुद्गरादेर्नाशकस्याभावादहेतुकमिच्छाम इति प्रकृतेन संबन्धः॥ ३७५॥

अत्र चैवंभूते विनाशे धर्मिणि कादाचित्कत्वात्प्रागभूत्वाऽऽत्मलाभादितीमौ हेतू सिद्धौ। वस्त्वनन्तरभावित्वमपि यदि सामान्येन विवक्षितं तदा सिद्धमेव, कारणभूतवस्त्वनन्तरमस्य भावप्रसिद्धेः। अथात्मभूतविनश्वरवस्त्वनन्तरभावित्वमस्य विवक्षितं तदा हेतुरसिद्ध इति दर्शयति—**वस्त्वनन्तरभावित्व**मित्यादि।

**वस्त्वनन्तरभावित्वं न तत्र त्वस्ति तादृशि।**
**चलभावस्वरूपस्य भावेनैव सहोदयात्॥ ३७६॥**

**तादृशी**ति चलवस्तुस्वभावाव्यतिरेकिणि। न हि निरंशवस्तुनो भागोऽस्ति येन तदनन्तरभावित्वमस्य भवेत्। तत्स्वभाववत्तद्व्यतिरेकिणो नाशस्य तन्निष्पत्तावेव निष्पन्नत्वात्। अन्यथा तत्स्वभावत्वमेव तस्य न स्यादित्युक्तम्॥ ३७६॥

यच्चोक्तं "सर्वसंस्कारनाशित्वप्रत्ययश्चानिमित्तक"इति, तदप्यत एव प्रतिक्षिप्तमिति दर्शयति—**अत** इति।

**अतो विनाशसद्भावान्न नित्याः सर्वसंस्कृताः।**
**न विनाशीतिबुद्धिश्च निर्निमित्ता प्रसज्यते॥ ३७७॥**

यत एव हि क्षणस्थितिधर्माणः पदार्थास्तथाऽध्यवसीयमानतनवस्तस्या बुद्धेर्निमित्तमतो नानिमित्तत्वप्रसङ्गः॥ ३७७॥

अथ प्रध्वंसलक्षणो विनाशो धर्म्यभिप्रेतस्तदा त्रयोऽपि हेतवोऽसिद्धा इति दर्शयति—**प्रध्वंसस्ये**त्यादि।

**प्रध्वंसस्य तु नैरात्म्यान्नास्त्यनन्तरभाविता।**
**नाभूत्वाभावयोगस्य गगनेन्दीवरादिवत्॥ ३७८॥**

वस्तुन्येव ह्यनन्तरभावित्वादयो धर्माः समाश्रिता नावस्तुनि यथा शशविषाणादौ, प्रध्वंसश्च निरात्मा—निःस्वभावः, तत्कथमस्यानन्तरभावित्वादयः संभवेयुः। **नाभूत्वा भावयोगश्चे**ति। चकारात्कादाचित्कत्वपरिग्रहः॥ ३७८॥

यद्येवम्—यदि ध्वंसस्यानन्तरभावित्वं नास्ति, तदा भावस्य ध्वंसो भवतीति (कथम्)। न हि यो न भवत्येव तस्य भवतीति स्यादित्याशङ्क्याह—**प्रध्वंस** इत्यादि।

**प्रध्वंसो भवतीत्येव न भावो भवतीत्ययम् ।**
**अर्थः प्रत्याय्यते त्वत्र न विधिः कस्यचिन्मतः ॥ ३७९ ॥**

यद्यपि ध्वंसो विधीयमानतया निर्दिश्यते, तथाऽपि भावनिषेध एव प्रतीयते, न परमार्थतः कस्यचिद्वस्तुरूपस्य विधिः ॥ ३७९ ॥

ननु चैत्रस्य पुत्रो भवतीत्यादिवद्भवतिशब्दप्रयोगादत्रापि भवनमेव विधीयत इत्याह—**न हीत्यादि** ।

**न हि बालेय इत्येवन्नाममात्रे कृते क्वचित् ।**
**सर्वो रासभधर्मोऽस्मिन्प्रसक्तिं लभते नरे ॥ ३८० ॥**

न हि वस्तूनां शब्दप्रयोगमात्रानुविधायिनी सदसत्त्वे, तस्येच्छामात्रप्रतिबद्धप्रवृत्तित्वात् । अन्यथा हि क्वचित्पुंसि केनचिदिच्छावशाद्बालेय इति नाम्नि निवेशिते सर्वस्य गर्दभधर्मस्य तत्र प्रसङ्गः स्यात् । बालेयरासभशब्दौ गर्दभपर्यायौ ॥ ३८० ॥

अवश्यं चैतद्विज्ञेयम्, यदुत वस्तुस्वभावनिषेध एव न तु किंचिद्विधीयत इति—

**ध्वंसनाम्नः पदार्थस्य विधाने पुनरस्य न ।**
**वस्तुनो जायते किञ्चिदित्येतत्किं निवर्त्तते ॥ ३८१ ॥**

अन्यथा ध्वंसाख्यस्य पदार्थान्तरस्य विधाने सति न किंचिद्वस्तुनो जातमिति तद्वस्तु किमिति निवर्त्तते ॥ ३८१ ॥

यच्चोक्तमसत्वे सर्वभावानामित्यादि, तत्राह—**भावध्वंसात्मनश्चैवमित्यादि** ।

**भावध्वंसात्मनश्चैवं नाशस्यासत्त्वमिष्यते ।**
**वस्तुरूपवियोगेन न भावाभावरूपतः ॥ ३८२ ॥**

**एवमिति** । वस्तुस्वभाववियोगरूपत्वात्, न तु भावस्वभावस्य सतः स्वरूपनिवृत्तेरसत्त्वम्, तत्कथं सर्वभावानां नित्यत्वं स्यात्, यदि हि स्वभावनिषेधलक्षणो विनाशस्तेषामसन् स्यात्तदा नित्यत्वमेषां स्यात् । यावता स्वभावनिषेधलक्षणो नाशः स्वयमसद्रूपस्तेषामस्त्येवेति कथं नित्या भवेयुः । सर्वसंस्कारनाशित्वप्रत्ययस्य तु निमित्तमभिहितमेव ॥ ३८२ ॥

यच्चोक्तं नित्यत्वेऽपि सहस्थानमित्यादि, तत्राह—**निवृत्तिरूपतेत्यादि** ।

**निवृत्तिरूपताऽप्यस्मिन्विधिना नाभिधीयते ।**
**वस्तुरूपानुवृत्तिश्च क्षणादूर्ध्वं निषिध्यते ॥ ३८३ ॥**

अतो व्यवस्थितं रूपं विहितं नास्य किंचन।
इति नित्यविकल्पोऽस्मिन्क्रियमाणो निरास्पदः॥ ३८४॥

निवृत्तिर्भवतीत्यनेनापि वचनेनास्मिन्प्रध्वंसे विधिरूपेण निवृत्तिरूपता नाभिधीयते, यतो नास्य विधेयं किंचिद्रूपमस्ति। किं तर्हि? वस्तुस्वरूपस्य क्षणादूर्ध्वं स्वभावानुवृत्तिर्निषिध्यते। तस्मादयमेकान्तेनाभावरूप एवेति नित्यविकल्पोऽनास्पद एव, निःस्वभावत्वादेव सदा व्यवस्थितरूपायोगात्। स्वभावप्रतिबद्धत्वान्नित्यानित्यस्वभावप्रतिबद्धधर्मयोः। यच्चोक्तमकारणं भवतां द्विधा नित्यमसच्चेति तत्परसिद्धान्तानभिज्ञतया, यतो न्यायवादिनां बौद्धानामकारणमसदेव। यथोक्तं भगवता—सधर्मेषु धर्मानुदर्शी विहरन् बोधिसत्त्वोऽणुमपि धर्मं न समनुपश्यति। यः प्रतीत्य समुत्पादविनिर्मुक्त इति। ये च वैभाषिकाः आकाशादिवस्तु सत्त्वेन कल्पयन्ति ते युष्मत्पक्ष एव निक्षिप्ता न शाक्यपुत्रीया इति न तन्मतोपन्यासो न्याय्यः। एवं नाशहेतूनां सर्वेषामकिञ्चित्करत्वान्नासिद्धता हेतोः। इतश्च नाशहेतूनामकिंचित्करत्वं वक्तव्यम्। तथाहि—भावः स्वहेतोरुत्पद्यमानः कदाचित्प्रकृत्या स्वयं नश्वरात्मैवोत्पद्यते, अनश्वरात्मा वा। यदि नश्वरस्तस्य न किञ्चिन्नाशहेतुता, स्वयं तत्स्वभावतयैव नाशात्। यो हि यस्य स्वभावः स स्वहेतोरेवोत्पद्यमानस्तादृशो भवति न पुनस्तद्भावे हेत्वन्तरमपेक्षते। यथा प्रकाशद्रवोष्णकठिनादयस्तदात्मान उत्पन्ना न पुनः प्रकाशादिभाव हेत्वन्तरमपेक्षन्ते। स्यादेतत्—यथा बीजादयोऽङ्कुरादिजननस्वभावाः सन्तोऽपि न केवला जनयन्ति सलिलादिकारणान्तरापेक्षत्वात्, तद्वद्भावोऽनश्वरस्वभावोऽपि नाशे कारणान्तरापेक्षो भविष्यतीति। तदेतदसम्यक्। अन्त्यावस्थाप्राप्तस्यैव जनकस्वभावत्वाभ्युपगमात्, नान्यस्य। तेन योऽसौ तत्स्वभावः स जनयत्येव, नासौ परमपेक्षते। यस्तु कुशूलादिस्थो न जनयति नासौ तत्स्वभावः। कारणकारणत्वात्तु तस्यापि कारणव्यपदेशो न मुख्यत इति नास्ति व्यभिचारः। अथानश्वरात्मेति पक्षस्तदापि नाशहेतुरकिंचित्कर एव। तस्य केनचित्स्वभावान्यथाभावस्य कर्तुमशक्यत्वात्। तथाहि। यदि स्वभाव उत्पादानन्तरं न विनश्येत्तदा पश्चादपि स एव तस्य स्थितिधर्मा स्वभावस्तदवस्थ इति किं नाशहेतुना तस्य कृतम्, येन विनश्येत। अथापि स्यात्—यथा ताम्रादीनां कठिनरूपाणामपि सतामग्न्यादिसंपर्कादन्यथात्वं भवति। तथा भावस्याविनश्वरस्वभावस्यापि सतो विनाशहेतुनाऽन्यथात्वं क्रियते। तेन

विनाशहेतुं प्राप्य विनश्यतीति। तदेतदसम्यक्। न हि स एवान्यथा भवति। स्वभावान्तरोत्पत्तिलक्षणत्वादन्यथात्वस्य। तथाहि—यत्तदन्यथात्वं नाम तत्किं भावादर्थान्तरमाहोस्विद्भाव एव, न तावद्भाव एव, तस्य स्वहेतोरेव पूर्वं निष्पन्नत्वात्। अथार्थान्तरम्, तथा सति भावोऽच्युतिधर्मा तथैवावस्थित इति न तस्यान्यथाभावः। ताम्रादिदृष्टान्तोऽप्यसिद्ध एव तथाहि—ताम्रादीनां पूर्वकस्य कठिनादिक्षणस्य स्वरसनिरोधित्वाद्विनाशे सत्यग्न्यादेः सहकारिकारणान्तरात्स्वोपादानकारणाच्च सामग्र्यन्तराद्द्रवाख्यमपरमेव स्वभावान्तरमुत्पद्यते। पुनरपि द्रवादिस्वभावस्य स्वरसनिरोधितया विनाशे सति सहकारिकारणान्तरात्स्वोपादानकारणाच्च काठिन्याख्यमपरमेव स्वभावान्तरमुत्पद्यत इति नैकस्यान्यथात्वमस्ति। तस्मात्सर्वथाऽप्यकिंचित्कर एव नाशहेतुरिति नासिद्धो हेतुः। नचापि विरुद्धः, स्वपक्षे भावात्। नचाप्यनैकान्तिकः, पूर्वं प्रसाधितत्वात्। स्यादेतत्—यथाऽऽकाशं मूर्त्तत्वाय न परमपेक्षते अथ च तत्र नियतं न भवति, तद्वद्भावः कृतकोऽपि सन्कश्चिन्नैव नाशे नियतो भविष्यतीति। तदेतदसम्यक्। नहि स कश्चित्कृतकोऽस्ति यः परेणानित्यो नेष्यते। हेतुमतः सर्वस्यानित्यत्वाभ्युपगमात्। त एव चेह पक्षीकृता नान्य इति कुतोऽऽनैकान्तिकता। ये तु पुनः कृतका अपि सन्तो नित्या एव भविष्यन्तीत्यविनाशितयेति संभाव्यन्ते ते परमार्थतोऽकृतकराश्यन्तर्गता एवेति तन्निराकरणादेव तन्निराक्रिया बोद्धव्येत्यदोषः। नाप्याकाशादेर्मूर्त्तत्वादिधर्मं प्रत्यनपेक्षा सिद्धा, यस्य हि यो धर्मो नास्ति स तं प्रति सापेक्ष एव, न हि प्राप्तं धर्मं प्रति काचिदपेक्षा भावानां व्यवस्थाप्यते, किं तर्हि? अप्राप्तमेवेत्यसिद्धो दृष्टान्तः॥ ३८४॥

इदानीमकृतकराशिमधिकृत्याह—ये त्वित्यादि।

**ये तु व्योमादयो भावा अकृतत्वेन संमताः।**
**वस्तुवृत्त्या न सन्त्येव ते च शक्तिवियोगतः॥ ३८५॥**
**क्षणिकाक्षणिकत्वादिविकल्पस्तेष्वनास्पदः।**
**तदा वस्त्वेव येन स्यात्क्षणिकं यदिवान्यथा॥ ३८६॥**

यदि हि व्योमादयो भावाः सिद्धसत्ताकाः स्युस्तदा तेषु क्षणिकत्वादिधर्मचिन्ताऽवतरेत्, न हि धर्माणां स्वातन्त्र्येण सिद्धिरस्ति, अन्यथा हि धर्मत्वमेव तेषां हीयते। न चाकाशादयोऽकृतका धर्मिणस्तेषां सर्वसामर्थ्यविरहित्वेन वन्ध्यापुत्रवदस-

द्व्यवहारविषयत्वात् । प्रयोगः—यत्सर्वसामर्थ्यशून्यं तदवस्तु, यथा वन्ध्यापुत्रः, सर्वसामर्थ्यशून्यं चाकाशादीति स्वभावहेतुः । वस्तुतो व्यापकानुपलब्धिर्वा । न चानैकान्तिको हेतुः, एतावन्मात्रनिबन्धनत्वादसद्व्यवहारस्य नाप्यसिद्धिरिति पश्चात्प्रतिपादयिष्यामः । सपक्षे भावान्नापि विरुद्धः ॥ ३८५ ॥ ३८६ ॥

कस्मात्पुनरवस्तुनि क्षणिकाक्षणिकविकल्पो नावतरतीत्याह—**क्षणावस्थितरूपं** हीत्यादि ।

**क्षणावस्थितरूपं हि वस्तु क्षणिकमुच्यते ।**
**स्थिररूपसमाक्रान्तं वस्त्वेवाक्षणिकं पुनः ॥ ३८७ ॥**

सुबोधम् ॥ ३८७ ॥

उद्योतकरस्त्वाह—क्षणिक इति मत्वर्थीयानुपपत्तिः, तथाहि—यदि निरुक्तन्यायेन क्षयः क्षणः सोऽस्यास्तीति क्षणिक इति बोध्यते, तन्न युक्तं कालभेदात्, यदा हि क्षयो न तदा क्षयीति भिन्नकालयोर्न मत्वर्थीयो दृष्टः । अथ पुनर्भावानन्तरविनाशेन विशिष्यमाणः क्षण इत्युच्यते । तदाऽपि स तेनैव तद्वान्न भवतीति न युक्तो मत्वर्थीयः । अथ क्षणस्थितिकालाः क्षणिकाः, सर्वान्त्यो हि कालः क्षणस्तं येऽवतिष्ठन्ते ते क्षणिकाः । एतदपि न युक्तम् । संज्ञामात्रेण कालस्याभ्युपगमात्, न च संज्ञामात्रं वस्तुविशेषणत्वेन युक्तमिति । तत्राह—**उत्पादानन्तरास्थायी**त्यादि ।

**उत्पादानन्तरास्थायि स्वरूपं यच्च वस्तुनः ।**
**तदुच्यते क्षणः सोऽस्ति यस्य तत्क्षणिकं मतम् ॥ ३८८ ॥**

उत्पादानन्तरविनाशिस्वभावो वस्तुनः क्षण उच्यते, स यस्यास्ति स क्षणिक इति । तथाचोक्तम्—आत्मलाभानन्तरविनाशी क्षणः स यस्यास्ति स क्षणिक इति ॥ ३८८ ॥

नन्वेवमपि स्वभावस्यानर्थान्तरत्वात्सोऽस्यास्तीति व्यतिरेकनिबन्धनः प्रत्ययो नोपपद्यत इत्याह—**असत्यपी**त्यादि ।

**असत्यप्यर्थभेदे च सोऽस्त्यस्येति न बाध्यते ।**
**इच्छारचितसङ्केतमात्रभावि हि वाचकम् ॥ ३८९ ॥**

यथा स्वस्य स्वभावः, शिलापुत्रकस्य शरीरम्, इत्यादावसत्यपि वास्तवे भेदे बुद्धिपरिकल्पितं भेदमाश्रित्य व्यतिरेकषष्ठीविभक्तिर्भवति तथेहापि भविष्यति, न हि

विधायिन्यो वाचः । किं तर्हि ? वक्तुरिच्छामनुविदधते ॥ ३८९ ॥

अपिच—यावत्यर्थे यावानेव वक्तृभिर्विनियुज्यते ध्वनिः स तावानेव तमर्थं सङ्केतवशात्प्रत्याययति न तु परमार्थतः प्रकृतिः प्रत्ययो वाऽस्ति। क्षणिक इति चायं शब्द उत्पादानन्तरास्थायिनि वस्तुमात्रे नियुक्तो विद्वद्भिः। तत्र चैवम्भूते वस्तुनि क्षणिकशब्देन विवक्षिते क्षणिकः शब्दः सप्रत्ययो वा प्रयुज्यतां प्रत्ययरहितो वेति नात्रास्माकमिच्छामात्रानुरोधिनि साङ्केतिके वचस्यत्यादर इत्येतद्दर्शयति—**उदयानन्तरास्थायीत्यादि**।

**उदयानन्तरास्थायि वस्त्वेवं तु विवक्षितम्।**
**तत्र सप्रत्ययः शब्दोऽप्रत्ययो वा प्रयुज्यताम्॥ ३९०॥**

**एवमिति**। क्षणिकमित्यनेन। सह प्रत्ययेन मत्वर्थीयेन वर्त्तत इति सप्रत्ययः॥३९०॥

एवं व्योमादीनामकृतकत्वाभ्युपगमे सति नियमेनासद्व्यवहारविषयतैवेति प्रतिपादितम्, इदानीं सत्त्वाभ्युपगमे तु क्षणिकत्वमेवैषां प्रसज्यत इति साधनयन्नाह—**यदि त्वित्यादि**।

**यदि तु व्योमकालाद्याः सन्तः स्युस्ते तथासति।**
**नातिक्रामन्ति तेऽप्येनं क्षणभङ्गं कृता इव॥ ३९१॥**

**कृता इवेति**। कृतका इवेत्यर्थः। एतेन सत्त्वादित्ययं हेतुः सूचितः॥ ३९१॥

तमेव स्पष्टीकुर्वन्नाह—**तथाहीत्यादि**।

**तथाहि सन्तो ये नाम ते सर्वे क्षणभङ्गिनः।**
**तद्यथासंस्कृता भावास्तथासिद्धा अनन्तरम्॥ ३९२॥**
**सन्तश्चामी त्वयेष्यन्ते व्योमकालेश्वरादयः।**
**क्षणिकत्ववियोगे तु न सत्त्वैषां प्रसज्यते॥ ३९३॥**
**क्रमेण युगपच्चापि यस्मादर्थक्रिया कृता।**
**न भवन्ति स्थिरा भावा निःसत्त्वास्ते ततो मताः॥ ३९४॥**

प्रयोगः—यत्सत्तत्सर्वं क्षणिकम्, यथा समनन्तरं प्रतिपादिताः क्षणिकाः पदार्थाः, सन्तश्च भवता व्योमादयो भावा इष्यन्ते, इति स्वभावहेतुः। **तथा सिद्धा** इति। क्षणिकत्वेन। एतेन न साध्यविकलता दृष्टान्तस्याशङ्कनीया, प्रसाधितत्वादिति दर्शयति। त्वयेष्यन्त इत्यनेन प्रसङ्गसाधनमेतदिति दर्शयति। अन्यथा हेतोरन्यतरासिद्धता स्यात्। कथं पुनरस्य हेतोर्व्याप्तिः सिद्धेत्याह—**क्षणिकत्व-**

**वियोगे** त्वित्यादि । अर्थक्रियासामर्थ्यलक्षणमिह सत्त्वं हेतुत्वेनेष्टम्, तच्च क्षणिकत्वनिवृत्तौ निवर्त्तते । तथाहि—भावा अर्थक्रियां कुर्वन्तः क्रमेण वा कुर्वीरन्यौगपद्येन वा, न हि क्रमयौगपद्याभ्यामन्यः प्रकारः संभवति, तयोरन्योन्यव्यवच्छेदरूपत्वात् । एतच्च प्रत्यक्षत एव प्रसिद्धम् । तथाहि—घटो मधूदकादींस्तदन्यद्रव्यव्यतिभिन्नान्क्रमेणाहरन्स्वज्ञानोदकाहरणे न च यौगपद्येन कुर्वन्प्रत्यक्षेणैव परिच्छिद्यते । तत्र यान्कार्यभेदान्क्रमेणाहरन्समुपलभ्यते घटः, कुलालो वा शरावोदञ्चनादीन्, न तदैव तान्यौगपद्येन जनयितुं समर्थः । घटो वा स्वविषये ज्ञानादीन्यौगपद्येन जनयन्नुपलभ्यते, न तदैव तान्क्रमेणेति प्रत्यक्षावसितमेतत्सर्वम् । अतः क्रमस्य यौगपद्यव्यवच्छेदेनैव परिच्छेदाद्यौगपद्यस्य च क्रमव्यवच्छेदेनैवेत्येकप्रमाणवृत्तिर्द्वयोरन्यतरत्परिच्छिन्दती ततः परं प्रतियोगिनं व्यवच्छिनत्ति, प्रकारान्तराभावं च सूचयतीति, प्रत्यक्षप्रमाणावसित एवानयोरन्योन्यवृत्तिपरिहारस्थितलक्षणो विरोधः । तेन तृतीयस्याभावात्क्रमयौगपद्याभ्यामर्थक्रिया व्याप्ता । सा च स्थिरेषु भावेषु स्वव्यापकनिवृत्तौ निवर्त्तमाना तल्लक्षणं सत्त्वं निवर्त्तयतीति सिद्धा व्याप्तिः । न चैतच्छक्यं वक्तुम्, क्रमयौगपद्ये एव भावानां न सिद्धे व्यतिरिक्तकालपदार्थानभ्युपगमादिति । न हि वयं भावानामर्थान्तरभूतकालपदार्थकृतं क्रमयौगपद्यं ब्रूमः । किं तर्हि ? तथातथोत्पादकृतम् । तथाहि—यदि चैकः सत्तामनुभवति तदैव यदा परे तद्वदेव तामनुभवन्ति, त एवं सर्वे तथोत्पद्यमाना अक्रमव्यपदेशनिबन्धनं भवन्ति । तद्यथा—समग्रसामग्रीका बहवोऽङ्कुराः समुत्पद्यमानाः । विपर्ययात्क्रमव्यपदेशभाजो यथाऽङ्कुरकाण्डपत्रादयः । एते च प्रत्यक्षत एव सिद्धास्तथैव च व्यपदिश्यन्ते जनैः । तथाभूतपदार्थविषयोऽपि कारणव्यापारस्तद्विषयक्रमयौगपद्याभ्यां व्यपदिश्यत इत्यचोद्यमेतत् । **ननु** च यदि स्थिरो भावः सिद्धो भवेत्तदा तत्र क्रमयौगपद्यनिवृत्तौ सत्यामर्थक्रियायाः सामर्थ्यनिवृत्तिः सिद्ध्येत् । यथा क्वचित्प्रदेशे धर्मिणि वृक्षनिवृत्तौ शिंशपानिवृत्तिः । अन्यथा ह्यसिद्धे प्रदेशधर्मिणि कुत्र शिंशपाऽभावः प्रतीयेत । न चासौ सिद्धस्तस्यैव प्रतिषेद्धुमिष्टत्वात् । अथापि सिद्धोऽङ्गीक्रियते, न तर्हि तस्य प्रतिक्षेपो युक्तः, तस्य धर्मिणः स्वरूपेण सिद्ध्यभ्युपगमात् । ततश्च सत्त्वादिभ्य(इत्य)यमप्यनैकान्तिक एव हेतुः, विपक्षे वृत्तेरिति । **नैतदस्ति** । न ह्यस्माभिः स्वातन्त्र्येण प्रमाणतया व्यतिरेकसाधिन्या अस्या व्यापकानुपलब्धेः प्रयोगः क्रियते । किं तर्हि ? प्रसङ्गापादनं परं प्रति क्रियते । यदि भवता तेषां स्थिररूपताऽङ्गी-

क्रियते तदाऽर्थक्रियासामर्थ्यमपि नाङ्गीकर्त्तव्यम्, तत्र क्रमयौगपद्ययोगस्य तद्व्यापकस्याभावात् । नहि व्यापकनिवृत्तौ व्याप्यमवस्थातुमुत्सहते । अन्यथा व्याप्यव्यापकभाव एव तयोर्न स्यात् । ततश्चार्थक्रियासामर्थ्यनिवृत्तौ सत्वमपि तेषां नाङ्गीकर्त्तव्यम्, अर्थक्रियासामर्थ्यलक्षणत्वात्सत्वस्येति । अनेनोपायेन तेषामभाव एव प्रतिपाद्यते । न चापि वैधर्म्यदृष्टान्तेऽवश्यं वस्तुभूतो धर्म्याश्रयणीयः, तत्र साध्यनिवृत्तौ साधननिवृत्तिमात्रस्य साधयितुमिष्टत्वात् । तश्च व्याप्यव्यापकभूतयोर्धर्मयोर्व्याप्यव्यापकभावसिद्धौ सत्यां धर्मिविशेषपरिग्रहमन्तरेणैव सामान्येन व्यापकाभावे व्याप्यमपि न भवतीति वचनमात्रादेव प्रतीयते । यथा वृक्षाभावे शिंशपा न भवतीति यथोक्तम्—"तस्माद्वैधर्म्यदृष्टान्ते नेष्टोऽवश्यमिहाश्रयः । तदभावे(तु) तन्नेति वचनादपि तद्गतेः" ॥ इति ॥ ३९२ ॥ ३९३ ॥ ३९४ ॥

न तावत्स्थिरस्य भावस्य क्रमेणार्थक्रिया युक्तेति दर्शयति—**कार्याणी**त्यादि ।

**कार्याणि हि विलम्बन्ते कारणासन्निधानतः ।**
**समर्थहेतुसद्भावे क्षेपस्तेषां हि किङ्कृतः ॥ ३९५ ॥**

नहि कार्यस्य स्वेच्छया भवनमभवनं वा, किन्तु कारणसदसत्तानुविधायिनी तस्य सदसत्त्वे । तत्र यद्यसौ स्थिरैकरूपो भावः सर्वदा सर्वकार्याणां हेतुभावेनावस्थितस्तदा किमिति तत्सत्तामात्राकाङ्क्षीणि सकृदेव सर्वाणि नोत्पद्यन्ते, येन क्रमेण भवेयुः । **क्षेप** इति । परिविलम्बः । तेन पाश्चात्यमपि तदीयं कार्यं प्रागेव भवेत् । अप्रतिबद्धसामर्थ्यकारणत्वादभिमतकार्यवदिति भावः ॥ ३९५ ॥

**अथापी**त्यादिना परस्योत्तरमाशङ्कते ।

**अथापि सन्ति नित्यस्य क्रमिणः सहकारिणः ।**
**यानपेक्ष्य करोत्येष कार्यग्रामं क्रमाश्रयम् ॥ ३९६ ॥**

यद्यपि स्थिरः पदार्थः सर्वदा सन्निहितस्तथापि क्रमेण सहकारीणि तस्य संनिधीयन्ते । अतस्तदपेक्षया क्रमेणासौ कार्याणि जनयिष्यतीति ॥ ३९६ ॥

**साध्वि**त्यादिना प्रतिविधत्ते ।

**साध्वेतत्किंतु ते तस्य भवन्ति सहकारिणः ।**
**किं योग्यरूपहेतुत्वादेकार्थकरणेन वा ॥ ३९७ ॥**
**योग्यरूपस्य हेतुत्वे स भावस्तैः कृतो भवेत् ।**
**स चाशक्यक्रियो यस्मात्तत्स्वरूपं तदा स्थितम् ॥ ३९८ ॥**

**कुतो वा तत्स्वरूपस्य नित्यताऽस्यावहीयते ।**
**विभिन्नोऽतिशयस्तस्माद्यद्यसौ कारकः कथम् ॥ ३९९ ॥**

न हि तस्य नित्यस्य कश्चित्सहकारी संभवति; तथाहि—अतिशयाधानाद्वा सहकारी भवेत्; यथा बीजस्य क्षित्यादय उच्छूनाद्यवस्थाविशेषमादधानाः सहकारिणः । एकार्थक्रियया वा; यथोन्मिषितमात्रेण रूपदर्शने चक्षुषो रूपादयः । तत्र न तावदाद्यः पक्षः । तथाह्यसावतिशयस्तस्य सहकारिभिराधीयमानः कचित्तत्स्वभावादभिन्नो भिन्नो वा भवेत्, यद्वोभयानुभयरूपः, यथाऽऽहुराजीवका इति चत्वारः पक्षाः । तत्र न तावदाद्यः पक्षः, तत्स्वरूपवत्तदव्यतिरेकितया तस्यापि सदाऽवस्थितत्वात्सतश्च करणायोगात्करणे वा तद्वदेव भावस्यापि करणप्रसङ्गात् । ततश्च नित्यत्वहानिः । अथ द्वितीयः पक्षस्तदाऽतिशयादेव कार्योत्पत्तेर्भावस्याकारक(त्व)प्रसङ्गः । असाविति । नित्यः पदार्थः ॥ ३९७ ॥ ३९८ ॥ ३९९ ॥

एतदेव स्पष्टयति—तस्मिन्सतीत्यादि ।

**तस्मिन्सति हि कार्याणामुत्पादस्तदभावतः ।**
**अनुत्पादात्स एवैवं हेतुत्वेन व्यवस्थितः ॥ ४०० ॥**

**तस्मिन्निति** । अतिशये सतीत्यर्थः । **एवमिति** । तद्गतान्वयव्यतिरेकानुविधानात् ॥ ४०० ॥

**अथापी**त्यादिनाऽत्रैव परस्योत्तरमाशङ्कते ।

**अथापि तेन सम्बन्धात्तस्याप्यस्त्येव हेतुना ।**
**कः सम्बन्धस्तयोरिष्टस्तादात्म्येन विभेदतः ॥ ४०१ ॥**
**न च तस्य तदुत्पत्तिर्यौगपद्यप्रसङ्गतः ।**
**ततश्च यौगपद्येन कार्याणामुदयो भवेत् ॥ ४०२ ॥**

**तेने**ति । अतिशयेन । **तस्यापी**ति । नित्यस्य । **कः संबन्ध** इत्यादिनोत्तरमाह । कः संबन्धः—नैव कश्चिदित्यर्थः । द्विविध एव हि संबन्धस्तादात्म्यं तदुत्पत्तिश्च । तत्र न तावत्तादात्म्यलक्षणो भेदस्याङ्गीकृतत्वात् । नापि तदुत्पत्तिलक्षणः सहकारिभ्य एव तस्योत्पत्तेः । ततस्तस्योत्पत्तिरङ्गीक्रियते, तदा तन्मात्रभावित्वादतिशयानां युगपदेवोत्पत्तिः स्यात् । ततश्च सर्वकार्याणां युगपदुत्पत्तिप्रसङ्गः । अतिशयवतः कारणस्य सर्वदाऽवस्थितत्वात् ॥ ४०१ ॥ ४०२ ॥

**तत्राप्यन्यव्यपेक्षायामनवस्था प्रसज्यते ।**
**एकदापि ततः कार्यं नासम्बन्धात्प्रकल्प्यते ॥ ४०३ ॥**

अथ तत्राप्यतिशयोत्पत्तौ, सहकारिकारणापेक्षणात्क्रमेणातिशयोत्पत्तेर्न कार्याणां यौगपद्यं भवतीति स्यात्तदयुक्तम्, एवं ह्यनवस्था स्यात्। तथाहि—तत्रापि सहकारिणामतिशयान्तरकरणात्सहकारित्वं वक्तव्यम्, तस्य चातिशयस्य व्यतिरेकित्वात्संबन्धासिद्धिः, तदुत्पत्तौ सकृदुत्पत्तिप्रसङ्गः, तत्रापि सहकारिव्यपेक्षायां पुनरियमेव चिन्ताऽवतरति। ततश्चानवस्थायां न कदाचिदतिशयेन सह तस्य संबन्धः सिद्ध्येत्। तदसिद्धौ न तस्मात्कार्योत्पत्तिरतिशयादेव कार्योत्पत्तेः ॥ ४०३ ॥

**सम्बन्धः समवायश्चेत्तत्राप्येवं विचिन्त्यते ।**
**उपकारीभवंस्तस्य समवायीष्यते स किम् ॥ ४०४ ॥**
**न वा तथेति प्रथमो विकल्पो यदि गृह्यते ।**
**सैव प्राप्ता तदुत्पत्तिर्व्यपास्ता साऽप्यनन्तरम् ॥ ४०५ ॥**

अथापि स्यान्न तदुत्पत्तिलक्षणस्तस्यातिशयेन सह सम्बन्धः। किं तर्हि? तत्समवायलक्षणः, तत्र नित्ये धर्मिणि तस्यातिशयस्य समवेतत्वात्। तदेतदयुक्तमिति दर्शयन्नाह—**तत्रापी**त्यादि। **न वा तथे**ति। नोपकारी संस्तस्य समवायीष्यत इति संबन्धः। तत्र प्रथमपक्षे उपकारस्योपक्रियमाणपदार्थाव्यतिरेकात् स एव तदुत्पत्तिलक्षणः संबन्धोऽङ्गीकृतः स्यात्। स चानन्तरमेव निरस्तः ॥ ४०४ ॥ ४०५ ॥

अथ द्वितीयः पक्षस्तदा विशेषाभावात्सर्वः सर्वस्य समवायी स्यात्। तद्दर्शयति—**अन्येऽपी**त्यादि।

**अन्येऽपि सर्वभावाः स्युस्तथैव समवायिनः ।**
**अविशेषान्न तस्यायमुपकारी मतो यदि ॥ ४०६ ॥**

**तथैवे**ति। अभिमतपदार्थवदनुपकारित्वेनाविशिष्टत्वात् ॥ ४०६ ॥

उभयानुभयपक्षावधिकृत्याह—**भेदाभेदे**त्यादि।

**भेदाभेदविकल्पस्य प्रत्येकं प्रतिषेधनात् ।**
**द्विरूपोऽतिशयस्तस्य व्यस्तो भवति वस्तुनः ॥ ४०७ ॥**

प्रत्येकपक्षनिराकरणादेवोभयात्मकपक्षस्य निराकरणम्, तद्व्यतिरेकेणोभयात्मकपक्षाभावात्। किंचैकाकारत्यागपरिग्रहयोरपराकारपरिग्रहत्यागानान्तरीयकत्वादयुक्तं वस्तुसत उभयानुभयरूपत्वम्, न ह्येकस्यैकदा विधिप्रतिषेधौ परस्परविरुद्धौ युक्तावेकत्वहानिप्रसङ्गात् ॥ ४०७ ॥

एतच्च पुद्गलादिपरीक्षायां प्रतिपादितं तद्दर्शयति—**पुद्गलादीत्यादि ।**

**पुद्गलादिपरीक्षासु द्वैराश्यप्रतिषेधनात् ।**
**द्विरूपोऽतिशयो नास्ति न वाऽप्यनुभयात्मकः ॥ ४०८ ॥**

अथैकार्थक्रियाकारित्वेन सहकारिणस्तस्येति द्वितीयः पक्ष आश्रीयते । यथाऽहुरेके—नैवासौ सहकारिणोऽपेक्षते, न चापि सहकारिवियुक्तः कार्यस्य कारकः, यत ईदृशस्तस्य निसर्गसिद्धः स्वभावो यत्सन्निहितसकलसहकारिकारण एव कारकोऽन्त्यहेतुवन्न केवलः । तेन तस्य भावेऽपि न कार्यस्य सर्वदोत्पत्तिप्रसङ्ग इति । तदेतद्दर्शयति—**अथेत्यादि ।**

**अथ नापेक्षते नित्यः प्रत्ययान्सहकारिणः ।**
**तथाऽपि तद्वियुक्तोऽयं कारको नान्त्यहेतुवत् ॥ ४०९ ॥**
**निजस्तस्य स्वभावोऽयं तेषामेव हि सन्निधौ ।**
**कारकत्वमतः कार्यं तद्भावेऽपि न सर्वदा ॥ ४१० ॥**

**नेति** । कारक इत्यनेन संबन्धनीयम् । अन्त्यहेतुवदिति वैधर्म्यदृष्टान्तः । यद्वोत्तरेण कारकत्वमित्यनेन साधर्म्यदृष्टान्ततया संबध्यते । षष्ठ्यन्ताच्च वतिः कार्यः । **तद्भावेऽपीति** । तस्य नित्यस्य पदार्थस्य सद्भावेऽपि ॥ ४०९ ॥ ४१० ॥

अस्त्वेवमित्यादिना प्रतिविधत्ते ।

**अस्त्वेवं किन्तु साकल्ये या तस्य प्रकृतिर्मता ।**
**वैकल्ये सैव चेदिष्टा नित्याः स्युः सहकारिणः ॥ ४११ ॥**

भवत्वेवं कल्पना, किंत्विदमिह निरूप्यते या तस्य सहकारिसाकल्यावस्थायां प्रकृतिः किं सैव वैकल्यावस्थायाम्, आहोस्विदन्या, यदि सैव तदा सहकारिणोऽपि नित्याः प्राप्नुवन्ति ॥ ४११ ॥

कथमित्याह—**तत्संबद्धस्वभावस्येत्यादि ।**

**तत्सम्बद्धस्वभावस्य भावे तेषामपि स्थितेः ।**
**अन्यचेद्विकलं रूपमेकत्वमवहीयते ॥ ४१२ ॥**
**व्यपेक्षयाऽप्यतश्चैवं न कार्याणां क्रमोदयः ।**

तैः सहकारिभिः संबद्धः स्वभावो यस्येति विग्रहः । **तेषामपीति** । सहकारिणाम् । निगडबद्धपुरुषाकर्षणे निगडाकर्षणवत्तेषामप्यनुवृत्तेः । एवं हि स एव पूर्व-

स्वभावापरित्यागेनानुवृत्तो भवति । यदि हि सहकारिणा संबद्धं स्वभावं न जहाति, तत्संबद्धस्वभावापरित्यागेन सामर्थ्यात्सहकारिणामप्यपरित्यागः । प्रतियोगिसव्यपेक्षत्वात्संबन्धित्वस्य । अन्यथा सैव तस्य प्रकृतिर्न भवेत् । अथान्येति पक्षस्तत्राह—**अन्यच्चे**त्यादि । यदि हि सहकारिविकलं रूपमस्यान्यदितीष्यते तदा नित्यत्वहानिप्रसङ्गः, रूपस्य भावाव्यतिरेकात् । तस्मात्सहकारिणोऽपेक्षायामपि न स्थिराणां क्रमेणार्थक्रिया युक्ता ॥ ४१२ ॥ = ॥

नापि यौगपद्येनेति दर्शयति—**यौगपद्यं च नैवेष्ट**मित्यादि ।

**यौगपद्यं च नैवेष्टं तत्कार्याणां क्षयेक्षणात् ॥ ४१३ ॥**

परैरपि नित्यपदार्थकार्याणां नैव यौगपद्यमिष्टम् । तथाहि—नित्यानामेतानि कार्याणि वर्ण्यन्ते । आत्मनः सुखदुःखादीनि, नभसः शब्दाः, मनसः क्रमवर्त्तीनि विज्ञानानि, अणूनां द्व्यणुकादिक्रमेण स्थूलाः, कालदिगीश्वरादीनां सर्वाण्येवोत्पत्ति**मन्ती**ति । एषां च प्रत्यक्षादेव क्रमोदयः प्रसिद्धः ॥ ४१३ ॥

तदेवं यौगपद्याभ्युपगमे प्रत्यक्षविरोधोऽभ्युपगमविरोधश्चोक्तो भवति । इदानीमनुमानविरोधं प्रतिपादयन्नाह—**निःशेषाणी**त्यादि ।

**निःशेषाणि च कार्याणि सकृत्कृत्वा निवर्त्तते ।**
**सामर्थ्यात्मा स चेदार्थः सिद्धाऽस्य क्षणभङ्गिता ॥ ४१४ ॥**

तथाहि—युगपदशेषाणि कार्याणि कृत्वा स किं तस्यार्थक्रियासमर्थः स्वभावो निवर्त्तते, आहोस्विदनुवर्त्तेत इति पक्षद्वयम् । तत्र यदि निवर्त्तेत इति पक्षस्तदा तस्य क्षणभङ्गित्वं सिद्धम् । प्रतिक्षणमपरापरस्वभावोत्पत्तेः पूर्वपूर्वस्य च स्वभावस्य स्वरसविनाशात् ॥ ४१४ ॥

**तद्रूपस्यानुवृत्तौ तु कार्यमुत्पादयेत्पुनः ।**
**अकिञ्चित्कररूपस्य सामर्थ्यं चेष्यते कथम् ॥ ४१५ ॥**
**सर्वसामर्थ्यशून्यत्वात्तारापथसरोजवत् ।**
**असन्तोऽक्षणिकाः सर्वे शक्तिर्यद्वस्तुलक्षणम् ॥ ४१६ ॥**

अथ द्वितीयः पक्ष आश्रीयते तदा तद्रूपस्य समर्थात्मनोऽनुवृत्तौ सत्यां पुनः कार्यमुत्पादयेत्, अत्यक्तपूर्वरूपत्वात्, प्रागवस्थावत् । ततश्च स एव क्रमो जात इति यौगपद्याभ्युपगमोऽनुमानविरुद्धः । अथापि स्यान्माभूत्तस्य क्रमयौगपद्याभ्याम-

र्थक्रिया, तथाऽपि सामर्थ्यमस्यास्त्येवेत्याह—**अकिंचित्कररूपस्येत्यादि**। कार्योत्पादनिबन्धनं हि भावानां सामर्थ्यं व्यवस्थाप्यते। यश्च न किंचित्करोति स कथं समर्थः स्यात्। अन्यथा ह्याकाशकुशेशयादेरपि सामर्थ्यं किं न व्यवस्थाप्येत। स्यादेतद्यदि नाम सामर्थ्यमस्य निवृत्तं तथाऽपि सत्त्वमनिवृत्तमेव। ततश्च सत्त्वादित्यनैकान्तिक एव हेतुरित्याह—**असन्त** इत्यादि। इदमेव हि वस्तुलक्षणं यदर्थक्रियासामर्थ्यं तच्चेन्निवृत्तं तत्कथं वस्तुत्वं तल्लक्षणं तेष्ववस्थां लभते। तदेवं क्रमाक्रमाभ्यामर्थक्रियासामर्थ्यशून्यत्वाद्वन्ध्यापुत्रादिवदसद्व्यवहारयोग्या अक्षणिकत्वेनाभिमता आकाशादय इति सिद्धम् ॥ ४१५ ॥ ४१६ ॥

**अथ नाङ्गीक्रियेतेदं वस्तुत्वं शक्तिलक्षणम् ।**
**यदेवमन्यन्निर्दिश्यं वस्तूनां लक्षणं परैः ॥ ४१७ ॥**

अथापि स्याद्यद्यर्थक्रियासामर्थ्यलक्षणमेव वस्तुलक्षणं भवेत्, तदैतत्सर्वं शोभेत। यद्येवं किमन्यद्वस्तुलक्षणमिति वक्तव्यम्। तथाहि—शशविषाणादौ यदवस्तुत्वमिष्टं तत्रार्थक्रियासामर्थ्यविरह एव निबन्धनम्। वस्त्ववस्तुनोश्चान्योन्यव्यवच्छेदरूपत्वात्। सामर्थ्यादवस्तुलक्षणविपरीतमर्थक्रियासामर्थ्यमेव वस्तुलक्षणमवतिष्ठत इति भावः ॥ ४१७ ॥

अत्र परस्योत्तरमाशङ्कते—**सत्तेत्यादि**।

**सत्तासम्बन्ध इष्टश्चेद्वस्तूनां लक्षणं न तत् ।**
**असिद्धेः समवायादेः कथं वाऽन्योऽन्यलक्षणम् ॥ ४१८ ॥**

न ह्यर्थक्रियासामर्थ्यं वस्तुलक्षणम्, किं तर्हि? सत्तासंबन्धः सत्तासमवाय इति यावत्। **न तदिति**। वस्तुलक्षणं युक्तमिति शेषः। समवायादेरसिद्धत्वात्। आदिशब्देन सत्तापरिग्रहः। यदि समवायादिः सिद्धो भवेत्तदा समवायो वस्तुलक्षणं स्यात्। यावता तेषामेव साध्यत्वेन प्रस्तुतत्वात्। वक्ष्यमाणबाधकप्रमाणसद्भावाच्च। यदि वा पूर्वोक्तादेव बाधकात्प्रमाणात्सत्तायाः समवायस्य चासिद्धिः। केनचित्सह सत्तायाः संबन्धासिद्धेस्तस्यानुपकार्यत्वात्। न ह्यनुपकारिणोः परस्परं संबन्धोऽतिप्रसङ्गादित्युक्तम्। किंच तयोरपि सत्तासमवाययोरन्त्यानां च विशेषाणां वस्तुत्वे किं लक्षणमिति वक्तव्यम्। न हि समवाये विशेषेषु च सत्ता समवैति। नापि सत्तायाम्, किं तर्हि? द्रव्यगुणकर्मसु त्रिपदार्थसत्करी सत्तेति समयात्। तस्मादव्यापीदं

वस्तुलक्षणम् । भवतु नाम सत्तादेः सिद्धिः । तथाऽपि न सत्तासमवायो लक्षणं युक्तमर्थान्तरत्वात् । न ह्यर्थान्तरमर्थान्तरस्य स्वरूपम्, येन तस्य तल्लक्षणं भवेत् । तथाहि—वस्तुस्वरूपापरिज्ञानान्मूढधियं प्रति तल्लक्षणे प्रकृते तत्स्वभाव एव कुतश्चिद्व्यावृत्त्या प्रतीतो लक्षणत्वेन वाच्यो येन तदेव वस्तुस्वरूपत्वेनावधारयति, यथा पृथिवी खरकटत्वेन । न चान्यः पदार्थोऽन्यपदार्थस्वरूपमन्यत्वहानिप्रसङ्गात् । तत्कथं तल्लक्षणं भवेत् । लक्षणशब्दस्य स्वभाववचनस्य प्रस्तुतत्वात् ॥ ४१८ ॥

केचिदाहुः—यद्वस्त्वन्तशः सर्वज्ञस्यापि न ज्ञानमुत्पादयति तस्य तादृशस्यास्तितायां किं बाधकं प्रमाणम्, यत इयं व्याप्तिः सर्वोपसंहारेण सिद्ध्येत्, यत्सत्तत्सर्वं क्षणिकमिति । नच तदपरिज्ञाने सर्वज्ञत्वहानिस्तस्य ज्ञेयेष्वेवाधिकारात् । ज्ञानयोग्यस्य हि वस्तुनोऽपरिज्ञाने स्यादसर्वज्ञः, तत्तु न ज्ञेयम् । ज्ञानोत्पादनेऽपि तस्यायोग्यत्वादिति । तान्प्रत्याह—सर्वश्चेत्यादि ।

**सर्वश्चार्थविचारादिव्यापारोऽर्थक्रियार्थिनः ।**
**निराकुलधियो युक्तो नोन्मत्तकतया पुनः ॥ ४१९ ॥**
**तत्र यन्नाम केषाञ्चित्कथञ्चिदुपयुज्यते ।**
**क्वचित्कदाचित्तत्रैव युक्ता सत्ताव्यवस्थितिः ॥ ४२० ॥**
**तद्रूपस्यैव चार्थस्य क्षणिकत्वं प्रसाध्यते ।**
**व्याप्तिः सर्वोपसंहारा तस्मिन्नेवाभिधीयते ॥ ४२१ ॥**

अर्थस्य हि वस्तुमात्रस्य योऽयमस्तित्वनास्तित्वेन विचारः स सर्वोऽर्थक्रियार्थिनः, न व्यसनितया । अन्यथा ह्युन्मत्तः स्यात् । तेन यदेव पदार्थजातं केषांचिदर्थक्रियार्थिनां कथंचित्साक्षात्पारम्पर्येण वा क्वचिद्देशे कदाचित्काल उपयुज्यते तत्रैव वस्तुव्यवस्था युक्ता प्रेक्षावतः । न त्वन्यत्र निबन्धनाभावान्निष्प्रयोजनत्वादिति भावः । आदिग्रहणेनार्थविशेषाणां दहनसलिलादीनां विचारो गृह्यते । ततश्च प्रेक्षापूर्वकारिणां यदेवार्थक्रियाकारि तदेव वस्त्विति यदेतत्प्रसिद्धम्, तस्यैव तद्रूपस्य—अर्थक्रियाकारिरूपस्यास्माभिः क्षणिकत्वं प्रसाध्यते । यतोऽर्थक्रियासामर्थ्यलक्षणस्य हेतुत्वेनाभीष्टत्वान्नास्ति व्यभिचारः । तस्यैवंभूतस्य हेतोः सर्वोपसंहारात्साध्येन व्याप्तिसिद्धेः । या हि पक्षसपक्षविभागमकृत्वा सामान्येन हेतोर्व्याप्तिः प्रदर्श्यते सा सर्वोपसंहारा व्याप्तिः ॥ ४१९ ॥ ४२० ॥ ४२१ ॥

अथार्थक्रियासामर्थ्यशून्यस्यापि कस्माद्वस्तुत्वं नेष्यत इत्याह **निःशेषेत्यादि** ।

**निःशेषशक्तिशून्यं तु यद्वन्ध्यासुतसन्निभम् ।**
**सर्वज्ञचेतसोऽप्येति हेतुत्वं न कदाचन ॥ ४२२ ॥**
**क्रियते तत्र नैवेदं कार्यरूपाद्यदृष्टितः ।**
**निर्निबन्धनमस्तित्वव्यवस्थानं विचक्षणैः ॥ ४२३ ॥**
**न तस्मिन्साधितेनार्थः क्षणिकत्वेन कश्चन ।**
**तत्र पर्यनुयोगश्च क्रियमाणोऽपि निष्फलः ॥ ४२४ ॥**

**सर्वज्ञचेतसोऽपीति** । न केवलं समानजातीयस्य क्षणस्य, जलधारणादेश्च कार्यस्येत्यपिशब्दः । **कार्यरूपाद्यदृष्टित** इति । कार्यम्—तदीयं फलम्, रूपम्—तस्य स्वभावः, आदिशब्देन तस्य देशः कालोऽवस्थाविशेषश्च गृह्यते । तस्य चैवंरूपस्य शशविषाणादिभ्यो न कश्चिद्विशेषोऽस्तीति भावः । नचापि तस्मिंस्तथाभूते वस्तुनि क्षणिकत्वेन साधितेनार्थक्रियार्थिनः किंचित्प्रयोजनमस्ति । तस्य दृष्टादृष्टयोर्हिताहितप्राप्तिपरिहारायोग्यत्वात् । यथोक्तम्—"अर्थक्रियाऽसमर्थस्य विचारैः किं तदर्थिनां । षण्डस्य रूपवैरूप्ये कामिन्याः किं परीक्षया ॥" इति । अतएव कथमिदं गम्यते तत्क्षणिकमित्यादिपर्यनुयोगः प्रतिवादिना क्रियमाणो विफल एव, तस्य वादिना क्षणिकत्वेन साधयितुमनिष्टत्वात् ॥ ४२२ ॥ ४२३ ॥ ४२४ ॥

इदानीं परोऽर्थक्रियासामर्थ्यमपि वस्तुलक्षणमयुक्तमतिव्यापित्वादिति दर्शयति—**ननु चेत्यादि** ।

**ननु चार्थक्रियाशक्ता नभस्तामरसादयः ।**
**स्वज्ञानहेतुभावेन न चैते सन्ति भाविकाः ॥ ४२५ ॥**

तथाहि—नभस्तामरसादयो नभस्तामरसं नभस्तामरसमित्यादिज्ञानोत्पादलक्षणायामर्थक्रियायां समर्थाः, नच ते परमार्थतः सन्ति, अतोऽतिव्यापीदं लक्षणं शक्तिर्भावलक्षणमिति ॥ ४२५ ॥

अत्र परिहारमाह—**निरालम्बनमेवेत्यादि** ।

**निरालम्बनमेवेदमम्बराम्भोरुहादिषु ।**
**तज्जल्पवासनामात्रभावि ज्ञानं प्रवर्त्तते ॥ ४२६ ॥**

असिद्धमाकाशाम्भोरुहादीनामर्थक्रियासामर्थ्यम्, तद्विकल्पानां स्वविकल्पवासनात्वात् ॥ ४२६ ॥

अथाकाशाम्भोरुहादिभ्य उत्पत्तौ किं बाधकं प्रमाणमित्याह—**अभावकारणत्वे त्वित्यादि** ।

**अभावकारणत्वे तु नैरन्तर्येण संभवेत् ।**
**नाभावोऽपेक्षते किञ्चिन्निर्विशेषतया सदा ॥ ४२७ ॥**

अभावो नभस्तामरसादि कारणं यस्य तत्तथोक्तम्, तद्भावस्तत्त्वम्, तस्मिन्सति तन्नभस्तामरसादिज्ञानं सर्वदैव भवेत्—उत्पद्येत, नित्यसन्निहिताविकलकारणत्वात् । नचापि तस्य परैरनुपकार्यस्य तदपेक्षा युक्ता, येन सहकारिवैकल्यात्कदाचिज्जनयेदिति स्यात् ॥ ४२७ ॥

**क्षणिकेष्वपी**त्यादिना भदन्तयोगसेनमतमाशङ्कते ।

**क्षणिकेष्वपि भावेषु ननु चार्थक्रिया कथम् ।**
**विशेषाधायिनोऽन्योन्यं न ह्याद्याः सहकारिणः ॥ ४२८ ॥**
**जातौ सर्वात्मना सिद्धेरजातावस्त्वभावतः ।**
**निर्विशेषाद्विशेषस्य भावे कार्यं न किं भवेत् ॥ ४२९ ॥**
**नचान्यतो विशिष्टास्ते तुल्यपर्यनुयोगतः ।**
**सहकारिकलापानामनवस्था च ते भवेत् ॥ ४३० ॥**
**क्रमेण युगपच्चापि यतस्तेऽर्थक्रियाकृतः ।**
**न भवन्ति ततस्तेषां व्यर्थः क्षणिकताश्रयः ॥ ४३१ ॥**
**सहकारिकृतश्चैवं यदा नातिशयः क्वचित् ।**
**सर्वदा निर्विशेषैव तदा सन्ततिरिष्यते ॥ ४३२ ॥**
**विनाशे यद्यहेतुः स्यादादावेव भवेदयम् ।**
**सम्भवो यदि नास्यादावन्तेऽपि स कथं भवेत् ॥ ४३३ ॥**
**स्वहेतोर्यदि भावानामिष्यतेऽन्यन्न कारणम् ।**
**विनाशस्य कथं तेषां क्वचिदेव विरुद्धता ॥ ४३४ ॥**

स ह्याह—क्षणिकत्वेऽपि भावानां क्रमयौगपद्याभ्यामर्थक्रियाविरोध एव । यतस्ते **स्वयं** समर्था भवेयुरसमर्था वा, यदि समर्थास्तदा सहकारिकारणं नापेक्षेरन् । न हि **समर्थ**स्य काचिदपेक्षा युक्ता । अथासमर्थास्तथाऽपि तेषां तदपेक्षा सुतरामयुक्तिमती । **तथाहि**—ये प्रथमकलापान्तश्चरिष्णवस्ते न परस्परतो विशेषमाप्नुवन्ति । उत्पन्नानु-

त्पन्नावस्थायाः सदसत्त्वेनानुपकार्योपकारकत्वात् । ततश्च प्रथमावस्थायां तेषां निर्विशिष्टत्वात्तेभ्यो विशिष्टक्षणान्तरोत्पादो न स्यात् । निर्विशेषेभ्यश्च तेभ्यः क्षणान्तरस्य विशिष्टस्योत्पत्तौ कार्यमपि किं नोत्पद्येत । न चापि पूर्वकात्कलापाद्विशिष्टात्ते समुत्पन्ना इति युक्तं वक्तुम्, तत्कलापान्तर्गतानामप्यत एव परस्परतो विशेषाभावात् । तेषामप्यन्यतो विशेषोत्पत्तौ सत्यामनवस्था स्यात् । तदेवं विशेषाभावात्कथमविशिष्टात्कारणकलापात्कार्यमुत्पद्येत । अविशिष्टाच्चोत्पत्तौ सर्वं सर्वस्माद्भवेत् । ततश्च क्रमयौगपद्याभ्यामेवमर्थक्रियाविरोधेऽपि यथैते भवन्त्येवार्थक्रियाकारिणस्तथा नित्या अपि सन्तो भविष्यन्तीति व्यर्थस्तेषां क्षणिकताश्रयः । तेन सत्त्वादिति हेतुरनैकान्तिक इति भावः । न चापि सन्ततेरवस्थाविशेषप्राप्तायाः कार्योत्पत्तिर्भविष्यति न सर्वदेति वक्तुं युक्तम् । यथोक्तया नीत्या सहकारिकृतस्य विशेषस्याभावात्सर्वदैव सन्ततेरविशिष्टत्वात् । नचापि स्वोपादानकारणमात्रप्रतिबद्धो विशेषः सन्ततिरिति युक्तं वक्तुम् । दृष्टविरोधात् । तथाहि—सहकारिणामुपायापाययोः कार्यव्यक्तिविरामौ दृष्टौ । यदि च स्वोपादानकारणमात्रप्रतिबद्धो विशेषः स्यात्, तदा सहकारिनिरपेक्षस्यैव जनकत्वं भवेत् । अपिच यथोक्तया नीत्या सन्ततेः सर्वदा निर्विशिष्टत्वात् । घटादीनां कपालादिविशेषोत्पत्त्यसंभवात् । सजातीयक्षणसन्तानोच्छेदलक्षणो विनाशो यदि निर्हेतुकः स्यात्तदा निरपेक्षत्वात्प्रागेव भवेत् । अथादौ न भवेत्, पश्चादपि न भवेत्, प्राग्वद्विशेषाभावात् । किं च यदि भावानां विनाशं प्रति स्वहेतुव्यतिरेकेणान्यत्सन्तानान्तरं कारणं नेष्यते तदाऽनलादयः शीतादीनां कथं विरोधिनो भवेयुः, नह्यकिंचित्करो विरोधी युक्तोऽतिप्रसङ्गापत्तेः, एवं हि सर्वः सर्वस्य विरोधी प्रसज्येत । ततश्च विरोधद्वारेणानुपलब्धिप्रयोगः प्राणातिपातादिव्यवस्थानं चातिदुर्घटमिति भावः ॥ ४२८ ॥ ४२९ ॥ ४३० ॥ ४३१ ॥ ४३२ ॥ ४३३ ॥ ४३४ ॥

उच्यत इत्यादिना प्रतिविधत्ते ।

**उच्यते प्रथमावस्था नैवान्योन्योपकारिणः ।**
**एकार्थक्रियया त्वेते भवन्ति सहकारिणः ॥ ४३५ ॥**
**अन्योन्यानुपकारेऽपि नाविशिष्टा इमे यतः ।**
**स्वोपादानबलोद्भूताः कलापोत्पादकः पृथक् ॥ ४३६ ॥**

समर्थादेव हि कार्योत्पत्तिः, नच सहकारिवैयर्थ्यम् । तथाहि—द्विविधं सहकारित्वं एकार्थक्रियाकारितया परस्परोपकारितया च । तत्र ( अ ? ) व्यवहितकार्यापे-

क्षया एकार्थक्रियाकारित्वमेव, न परस्परोपकारित्वम् । एकस्मिन्क्षणे निर्विभागतया विशेषस्याधातुमशक्यत्वात् । व्यवहितकार्यापेक्षया तु परस्परत उत्तरविशिष्टक्षणोत्पत्तेः, सन्तानापेक्षया परस्परोपकारेण व्यवहितकार्यजनकत्वात्परस्परोपकारित्वलक्षणं सहकारित्वम् । तत्र प्रथमावस्थाभाविनां यद्यपि परस्परतो विशेषो नास्ति, तथापि तेषां सहकारित्वमविरुद्धमेव, एकार्थक्रियाकारित्वात् । नापि ते समनन्तरविशिष्टक्षणोत्पादनं प्रत्यविशिष्टाः, पूर्वकेभ्य एव स्वहेतुप्रत्ययेभ्यस्तथाविधोत्तरकार्यकलापोत्पादनं प्रति प्रत्येकं समर्थानामुत्पन्नत्वात् । तेषामपि हेतुप्रत्ययानामपरेभ्यः स्वहेतुप्रत्ययेभ्यः, तेषामप्यपरेभ्य इत्यनादेर्हेतुपरम्पराया इष्टत्वादनवस्थाऽप्यदुष्टैव । प्रत्येकं च सामर्थ्येऽपि नापरेषां वैयर्थ्यम्, स्वहेतुबलेन तेषां तथोत्पन्नत्वात् । नापि तेषां पृथग्भावः संभवति, तथाविधकारणाभावात् । नापि पश्चात्, क्षणिकत्वात् । **कलापोत्पादकाः पृथगिति** । प्रत्येकं द्वितीयक्षणभाविकलापोत्पादनसमर्था इत्यर्थः । स्वोपादानग्रहणं प्रथमावस्थाभाविसहकारिकृतोपयोगनिषेधपरं द्रष्टव्यम् । नतु स्वोपादानमात्रभावि किंचित्कार्यं संभवति, सामग्रीतः सर्वस्य संभवात् । यथोक्तम्—"न किंचिदेकमेकस्मात्सामग्र्याः सर्वसंभव" इति ॥ ४३५ ॥ ४३६ ॥

**ततः प्रभृति ये जाता विशेषास्ते तु तत्कृताः ।**
**तद्रूपप्रकृतित्वेन तेषां तदुपयोगिनाम् ॥ ४३७ ॥**

ततः प्रभृति—द्वितीयक्षणोत्तरकालमारभ्येत्यर्थः । **तत्कृता इति** । सहकारिकृतविशेषकारणकृताः । कस्मात् ? तद्रूपप्रकृतित्वात्तेषाम्—तद्रूपा—विशिष्टसहकारिकृतविशेषकारणजन्या, प्रकृतिः—स्वभावो येषां ते तथोक्ताः । **तेषां तदुपयोगिनामिति** । तद्रूपप्रकृतित्वादिति संबन्धनीयम् । तदुपयोगिनमित्यत्र चकारो लुप्तनिर्दिष्टस्तेनायमर्थो भवति । तत्र तृतीयावस्थाभाविनि कार्ये ये द्वितीयक्षणभाविनो विशेषा उपयुज्यन्ते कारणभावेन, तेषां च तदुपयोगिनां सहकारिकृतविशेषकारणजन्यकार्योत्पादनयोग्यप्रकृतित्वात्, तृतीयादिक्षणभाविनो विशेषास्तत्कृता भवन्तीति ॥ ४३७ ॥

अयमपि नियमः कथमेषां भवतीत्याह—**नियतेत्यादि** ।

**नियताचिन्त्यशक्तीनि वस्तूनीह प्रतिक्षणम् ।**
**भवन्ति नानुयोज्यानि दहने दाहशक्तिवत् ॥ ४३८ ॥**

न हि भावानां स्वभावाः पर्यनुयोगमर्हन्ति, तेषां स्वहेतुप्रत्ययपरम्परासमायातत्वात्स्वभावभेदस्य, यथाऽग्नेर्दाहकत्वम्, यस्मादेते परापरप्रत्ययोपयोगेन प्रतिक्षणं भिन्नशक्तयः समुत्पद्यन्ते। अतो यद्यप्येते कुतश्चित्साम्यात्समानरूपाः प्रतीयन्ते तथाऽपि भिन्न एवैषां स्वभावः। तेन किंचिदेव कस्यचित्कारणं न सर्वः सर्वस्येति यत्किंचिदेतत्। **भवन्तीति**। जायन्त इत्यर्थः॥ ४३८॥

यदप्युक्तं विनाशो यद्यहेतुः स्यादिति, तत्राह—**सन्तानोच्छेदरूपस्त्वित्यादि**।

**सन्तानोच्छेदरूपस्तु विनाशो यो न हेतुमान्।**
**तस्यान्तेऽपि न भावोऽस्ति तथा जन्म तु वार्यते॥ ४३९॥**
**विलक्षणकपालादेरुत्पादस्तु सहेतुकः।**
**सोऽप्यादौ जायते नैव तदा हेतोरसम्भवात्॥ ४४०॥**

द्विविधो हि विनाशः सन्तानोच्छेदरूपो विसदृशसन्तानोत्पादलक्षणश्च। तत्र यदि सन्तानोच्छेदरूपं विनाशमधिकृत्योच्यते तदयुक्तम्, नहि तस्यान्तेऽपि भावोऽस्तीति, नीरूपत्वात्, तत्किमुच्यते अन्तेऽपि स कथं भवेदिति। तस्मात्तस्य कदाचिदपि भवनानभ्युपगमादादावन्ते च यद्भावाभावप्रसञ्जनं तदसङ्गतमेव। केवलम्, तथा—सदृशक्षणान्तरप्रतिसन्धानेन, जन्म—उत्पादः, तत्र प्रतिषिध्यते। घटादेरुच्छेदो भवति (इत्यस्य ?) स एव न भवतीत्यर्थः। न तु तत्र किंचिद्विधीयते। अथ विसदृशक्षणोत्पादलक्षणो द्वितीयो विनाशोऽभिप्रेतस्तस्याहेतुकत्वमसिद्धम्। वस्तुतया तस्य मुद्गरादिकारणबलेनोत्पादनाभ्युपगमात्। अतएवासावादौ न जायते, स्वहेतोर्मुद्गरादेस्तदानीमभावात्॥ ४३९॥ ४४०॥

विरोधव्यवस्थासमर्थनार्थमाह—**द्विविध** इत्यादि।

**द्विविधाः क्षणिका भावाः केचिद्ध्रासस्य हेतवः।**
**शीतादेरेव वह्न्याद्या अपरे न तथाविधाः॥ ४४१॥**
**अदृष्टतत्त्वो लोकस्तु विरोधमभिमन्यते।**
**कार्यकारणभावेऽपि प्रथमोक्तेष्वनेकधा॥ ४४२॥**
**बाध्यबाधकभावस्तु वस्तुनो नैव तात्त्विकः।**
**विद्यते तत एवोक्तं विरोधगतिरित्यपि॥ ४४३॥**

केचिद्धि भावाः केषांचिन्मन्दतर(त)मक्षणोत्पत्तिक्रमेण यो ह्रासस्तत्र हेतवो

भवन्ति । यथा—वह्न्यादयः शीतादीनाम्, अपरे न तथाविधाः—नापकर्षहेतवः, तद्यथा त एव वह्न्यादयो धूमादीनाम् । तत्र प्रथमोक्तेषु ह्रासहेतुषु कार्यकारणभावेऽपि सत्यज्ञानतिमिरतिरोधीयमानज्ञानालोको लोको विरुद्धत्वमभिमन्यते । **अनेकधेति** । शीतस्याग्निर्विरुद्धः प्रदीपस्य वायुरालोकोऽन्धकारस्येत्यादिना भेदेन । ननु वस्तूनां परमार्थतः कश्चिद्बाध्यबाधकभावोऽस्ति, सतः सर्वात्मना निष्पत्तेः, स्वभावान्यथात्वस्य कर्तुमशक्यत्वात्, तस्य व्यतिरेकाव्यतिरेकविकल्पे सत्युभयथाऽपि करणासंभवात् । असतोऽप्यवस्तुत्वादेव न किंचित्क्रियते, इत्युभयथाऽप्यकिञ्चित्करो विरोधी । अत एवाविकलकारणस्य भवतोऽन्यभावेऽभावाद्विरोधगतिरित्याचार्येणोक्तम् । विरोधगतिः—विरोधव्यवसायः, न तु विरोधस्तात्विक इति भावः । अपिशब्दश्चार्थे । भिन्नक्रमश्च । एवेत्यस्यानन्तरं द्रष्टव्यः ॥ ४४१ ॥ ४४२ ॥ ४४३ ॥

**ननु चे**त्यादिना जैमिनीयादिमतेन क्षणभङ्गप्रतिज्ञायाः प्रत्यक्षबाधितत्वमाशङ्कते ।

**ननु च प्रत्यभिज्ञानं स एवेत्युपजायते ।**
**अक्षव्यापारसद्भावे निष्प्रकम्पमबाधितम् ॥ ४४४ ॥**
**ततः प्रत्यक्षबाधेयं दुर्वारा सर्वहेतुषु ।**
**क्षणभङ्गप्रसिद्ध्यर्थमुपात्तेषु प्रसज्यते ॥ ४४५ ॥**

तथाहि—स एवायमिति गिरितनुवज्रादिष्वक्षव्यापारानन्तरं प्रत्यभिज्ञानाख्यं प्रत्यक्षं प्रमाणं भावानां क्षणभङ्गं निराकुर्वदुदेति । यद्यपि नूनं पुनर्जातनखकेशतृणादिषु प्रत्यभिज्ञानं दृष्टम् । तथापि न वज्रादिविषययोः प्रत्यभिज्ञानयोरप्रामाण्यमबाधितविषयत्वात् । अतएवाह—**निष्प्रकम्पमबाधित**मिति । नहि तिमिरोपहतलोचनोपजनितं केशविज्ञानमप्रमाणमुपलब्धमित्येतावता स्वच्छनेत्रजनितमपि सत्यकेशविषयं चक्षुर्विज्ञानमप्रमाणमिति युक्तं स्वच्छचेतसोऽभिधातुमिति भावः । तत्र निष्प्रकम्पत्वेनासंशयरूपतामाह । स एवायमथान्य इत्येवंविधस्य संशयस्याभावात् । अबाधितमित्यनेनाविपर्यस्तत्वम् ॥ ४४४ ॥ ४४५ ॥

**न खल्वि**त्यादिना प्रतिविधत्ते ।

**न खलु प्रत्यभिज्ञानं प्रत्यक्षमुपपद्यते ।**
**वस्तुरूपमनिर्देश्यं साभिलाषं च तद्यतः ॥ ४४६ ॥**
**भ्रान्तं च प्रत्यभिज्ञानं प्रत्येकं तद्विलक्षणम् ।**
**अभेदाध्यवसायेन भिन्नरूपेऽपि वृत्तितः ॥ ४४७ ॥**

तत्र प्रत्यक्षत्वं तावदसिद्धमस्यास्तथाहि—वस्तुत्वलक्षणस्यानन्वयित्वेनाशक्यसमयत्वात् । तद्ग्राहिज्ञानं मनसि जल्पमेव । अवगृहीतसंबन्धस्यार्थस्य शब्देन संयोज्य ग्रहणा(ण ? )संभवात् । अतोऽवश्यं प्रत्यक्षेण सता स्वलक्षणविषयत्वात्कल्पनापोढेन भवितव्यम् । प्रमाणत्वाच्चाभ्रान्तेन । ततश्च प्रत्येकं कल्पनापोढमभ्रान्तमिति न्यायानुयातमिदं प्रत्यक्षलक्षणमाचक्षते कुशलाः । नच प्रत्यभिज्ञानं कल्पनापोढम्, स एवायमित्येवमतिजल्पाकारतया संवेद्यमानत्वात् । नाप्यभ्रान्तम्, भिन्नेष्वभेदाध्यवसायेन प्रवृत्तेः ॥ ४४६ ॥ ४४७ ॥

कथमित्याह—**पूर्वमित्यादि** ।

**पूर्वं संविहिताकारगोचरं चेदिदं भवेत् ।**
**जायेत पूर्वमेवेदं तादर्थ्यात्पूर्वबुद्धिवत् ॥ ४४८ ॥**

यदि हि पूर्वोपलब्धार्थविषयमिदमभविष्यत्तदा पूर्वमेवोदशिष्यत, तद्विषयत्वेनाविकलकारणत्वात् । पूर्वज्ञानवत्, **तादर्थ्यादिति** । स पूर्वसंविदितो भावोऽर्थो विषयोऽस्येति तदर्थम्, तद्भावस्तादर्थ्यम् ॥ ४४८ ॥

**नचैवमिति** प्रसङ्गविपर्ययमाह ।

**नचैवं तेन नैवेदं तदर्थग्राहकं मतम् ।**
**तज्ज्ञानकाल उत्पादाद्विषयान्तरबुद्धिवत् ॥ ४४९ ॥**
**अभेदाध्यवसायेन भिन्नरूपेऽपि वृत्तितः ।**
**मायागोलकविज्ञानमिव भ्रान्तमिदं स्थितम् ॥ ४५० ॥**

प्रयोगाः—यद्यस्मिन्विकलेऽपि सति न भवति, न तत्तद्विषयम्, यथा रूपेऽविकलेऽपि सति तत्राभवच्छ्रोत्रविज्ञानम्, भवत्यविकलेऽपि वस्त्रादौ तद्विज्ञानवेलायां प्रत्यभिज्ञानमिति व्यापकानुपलब्धेः । तदेवं नित्यत्वे सति वस्त्रादेरनपरापेक्षस्य तद्विषयं प्रत्यभिज्ञानमविकलकारणत्वात्पूर्वमेव भवेत्, नच भवति, तस्मादनित्यत्वमस्य सिद्धम् । ततश्च भिन्नेष्वभेदाध्यवसायेन प्रवृत्तेर्मायागोलकविज्ञानवद्भ्रान्तमिदमित्यविकलमेतत् । अत एवाबाधितविषयत्वमप्यसिद्धम् । यथोक्ताद्भ्रान्तत्वप्रसाधकादेव हेतोर्बाधितविषयत्वात् ॥ ४४९ ॥ ४५० ॥

इतश्च गृहीतग्रहणान्नास्याः प्रामाण्यम्, यथा स्मृतेरिति दर्शयन्नाह—**निष्पादितेत्यादि** ।

**निष्पादितक्रिये चार्थे प्रवृत्तेः स्मरणादिवत् ।**
**न प्रमाणमिदं युक्तं करणार्थविहानितः ॥ ४५१ ॥**

यदेव हि प्रमितिक्रियासिद्धौ प्रकृष्टमुपकरणं तदेव साधकतमं कारकं प्रमाणमुच्यते । यदि च प्रत्यभिज्ञा पूर्वप्रमाणगृहीतार्थविषया स्यात्, तदा निष्पन्नप्रमितिक्रियेऽर्थे प्रवृत्त्याऽसाधकतमत्वात्कथमिव प्रमाणतामश्नुवीत । अन्यथा हि स्मृतेरपि प्रामाण्यं स्यात् । न चानधिगतप्रमाणभावा सती बाधकत्वाय कल्पते, अतिप्रसङ्गात् । स्यादेतत्—मा भूदस्याः पृथक्प्रामाण्यम्, तथाऽप्यनया पूर्वार्थविषयतया क्षणभङ्गित्वं बाध्यत एवेति । तदसम्यक् । न ह्यस्याः परमार्थतः पूर्वार्थविषयत्वमस्ति माभि(मति?)जल्पत्वात् केवलम(ति)विषयाऽपि सती विभ्रमबलात्पूर्वदृष्टार्थाध्यवसायिनी समुत्पद्यत इत्यध्यवसायवशात्पूर्वदृष्टार्थविषयेत्युच्यते तत्कुतोऽस्मात्प्रत्यभिज्ञानात्प्रकृतिभ्रान्तात्क्षणभङ्गनिराक्रिया सिध्येत् ॥ ४५१ ॥

**इदानीन्तन**मित्यादिना कुमारिलमतेन गृहीतग्राहित्वस्यासिद्धिमुद्भावयति ।

**इदानीन्तनमस्तित्वं न हि पूर्वधिया गतम् ।**
**तदस्त्यस्य विशेषश्चेत्स्मरणे यो न विद्यते ॥ ४५२ ॥**
**पूर्वप्रमितमात्रे हि जायते स इति स्मृतिः ।**
**स एवायमितीयं तु प्रत्यभिज्ञाऽतिरेकिणी ॥ ४५३ ॥**

स ह्याह—न हि पूर्वप्रत्यक्षेणार्थस्येदानीन्तनमस्तित्वमधिगतम्, तस्य स एवायमित्येवमाकारोपग्राहेणानुत्पत्तेः । तस्मादस्य प्रत्यभिज्ञानस्य स्मरणादस्ति विशेषः । कथमित्याह—**पूर्वे**त्यादि । स इति हि पूर्वज्ञानाकारोपग्रहेणैव स्मृतिः प्रवर्त्तते । प्रत्यभिज्ञा त्वयमित्येवमतिरिक्तमप्यर्थाकारं गृह्णाति । स्मृतेः सकाशादतिरेकिणी—विशिष्टेत्यर्थः । तस्माद्यौ संशयविपर्ययौ तौ बाधित्वा प्रत्यभिज्ञा प्रमाणतां लभते ॥ ४५२ ॥ ४५३ ॥

कस्मात्तौ बाधत इत्यत्र कारणमाह—**ज्ञाते चाविद्यमानत्वा**दिति ।

**ज्ञाते चाविद्यमानत्वाद्यौ संशयविपर्ययौ ।**
**बाधित्वा तौ लभेतैव प्रत्यभिज्ञा प्रमाणताम् ॥ ४५४ ॥**

ज्ञातेऽर्थे तयोरविद्यमानत्वाद्बहलवह्निशिखाकलापपरिगत इव देशे शीतस्य ॥ ४५४ ॥

ननु यथानुमानप्रसिद्धस्याप्यर्थस्य पुत्रादिगतश्यामत्वादेः पुनः कालान्तरेण प्रत्यक्षेण बाध्यमानस्यान्यथात्वं भवति तथाऽत्रापि यदि नाम प्रत्यभिज्ञा(न)तो नित्यत्वमर्थस्य सिद्धम्, तथाऽप्युत्तरकालं तत्कार्येण क्रमिणा क्रमस्यानुमानतः सिद्धेरन्यथात्वं सिद्धमेव, तत्कथं क्षणभङ्गित्वं बाध्यत इत्याशङ्कयाह—**विज्ञातोऽपीत्यादि**।

**विज्ञातोऽपीतरैरर्थः प्रत्यक्षेणान्यथा भवेत्।**
**प्रत्यक्षेणावरुद्धे तु नेतरोत्पत्तिसंभवः ॥ ४५५ ॥**

**इतरैरिति**। अनुमानादिभिः। यथा किल श्यामस्तत्पुत्रत्वाद्दृश्यमानतत्पुत्रवदित्यादि। **प्रत्यक्षेणान्यथा भवेदिति**। प्रत्यक्षेण करणभूतेन, अन्यथा—अनुमानादिप्रमिताकारविपरीतो भवेदित्यर्थः। **अवरुद्ध** इति। विषयीकृत इत्यर्थः। **नेतरोत्पत्तिसंभव** इति। प्रत्यक्षादितरस्यानुमानादेर्नैव बाधकत्वेनोत्पत्तिः संभवतीत्यर्थः ॥ ४५५ ॥

कस्मादित्याह—**को हीत्यादि**।

**को हि ज्येष्ठप्रमाणेन दृढेनार्थेऽवधारिते।**
**दुर्बलैरितरैः पश्चादध्यवस्येद्विपर्ययम् ॥ ४५६ ॥**

युक्तं हि यदनुमानप्रसिद्धस्यार्थस्य प्रत्यक्षेणान्यथात्वं क्रियत इति। तस्य सर्वप्रमाणज्येष्ठत्वात्। न तु प्रत्यक्षप्रसिद्धस्यान्यथात्वमनुमानादयः कर्तुमीहन्ते, तेषां दुर्बलत्वात्। **दृढेनेति**। संशयविपर्ययाभ्यां रहितेन। **विपर्ययमिति**। अन्यथात्वम् ॥ ४५६ ॥

**नन्वित्यादिना** प्रतिविधत्ते।

**नन्विदानीन्तनास्तित्वं यदि भिन्नं त्वयेष्यते।**
**पूर्वभावात्तदा भेदस्त्वयैव प्रतिपादितः ॥ ४५७ ॥**

यत्तदिदानीन्तनमस्तित्वं प्रत्यभिज्ञानस्य विषयः, किं तत्पूर्वप्रत्यक्षगृहीतादस्तित्वाद्भिन्नमाहोस्वित्तदेव, यदि भिन्नं तदा स्ववचनेनैव भेदस्य प्रतिपादितत्वादभ्युपेतहानिर्भवतो भवेत्। अस्माकं पुनरिष्टसिद्धिः ॥ ४५७ ॥

**अनन्यत्वेऽपि सत्त्वस्य कथं पूर्वधियाऽगतम्।**
**तस्यागतौ हि वस्त्वेव नोपलब्धं प्रसज्यते ॥ ४५८ ॥**

अथानन्यदिति पक्षस्तदा कथं पूर्वधिया तदगतं येनोच्येत, "न हि पूर्वधिया

गत"मिति । स्यादेतत्—यथा क्षणिकत्वं शब्दादेरव्यतिरिक्तमपि सत्तद्ग्रहणे सत्यप्यगृहीतमुच्यते, तद्वदिदमपि भविष्यतीति । तदयुक्तम् । न हि शब्दे धर्मिणि गृहीतेऽपि तदव्यतिरेकि क्षणिकत्वमगृहीतमिति व्यवस्थाप्यते । किं ( तर्हि ? ) गृहीतमपि तन्निश्चयोत्पत्तिकारणाभावादनिश्चितमित्यभिधीयते । न ह्यनुभवमात्रादेव निश्चयो भवति । तस्यार्थित्वाभ्याससाद्गुण्यादिसापेक्षत्वात् । न चैवं भवतः संभवति । पूर्वप्रत्यक्षस्यापि व्यवसायात्मकत्वात् । तेन च वस्तुरूपे निश्चीयमाने तदव्यतिरिक्तमिदानीन्तनमस्तित्वं निश्चितमेव । तदनिश्चये वस्तुस्वरूपस्यापि तद्वदेवानिश्चितरूपाव्यतिरेकादनिश्चितत्वप्रसङ्गः । येऽप्याहुः—सन्दिग्धवस्तुनिर्णयनिबन्धनं प्रत्यभिज्ञाने प्रामाण्यमिति तदप्यनेनैव प्रत्युक्तम् । न चाप्यत्र सन्दिग्धवस्तुसद्भावनिर्णयोऽस्ति, सदृशापरापरोत्पत्तावपि केशादिवत्प्रत्यभिज्ञानदर्शनेन सन्देहात् ॥ ४५८ ॥

यच्चोक्तं विज्ञातोऽपीतरैरर्थ इत्यादि, तत्राह—**प्रत्यक्षेण** चेत्यादि ।

**प्रत्यक्षेण च बाधायामनुमानादिगोचरे ।**
**नानुमानादिमानं स्याद्बाधातस्तैमिरादिवत् ॥ ४५९ ॥**

यस्य त्वत्पुत्रत्वादित्यादिकस्यानुमानादेर्गोचरे विषये प्रत्यक्षेण बाधा संभवेत्तस्य प्रामाण्यमेव नास्ति बाध्यमानविषयत्वेनार्थसंवादाभावात्तैमिरिकादिज्ञानवत् । तेनेतरैर्विज्ञातोऽप्यर्थः प्रत्यक्षेणान्यथा भवेदिति यदुक्तं तदसङ्गतमेव, असंभवात् ॥ ४५९ ॥

यच्च प्रत्यक्षस्य ज्येष्ठत्वमुक्तं तदप्यसद्भूतमेवेति दर्शयन्नाह—**अर्थसंवादकत्वे** चेत्यादि ।

**अर्थसंवादकत्वे च समाने द्वेष्यताऽस्य का ।**
**तदभावे तु नैव स्यात्प्रमाणमनुमादिकम् ॥ ४६० ॥**

इदमेव हि प्रमाणानां प्रमाणत्वम्, यदुतार्थप्रमाणसामर्थ्यम् । तच्चेत्सर्वप्रमाणानामभ्युपगम्यते तत्केनास्य प्रत्यक्षस्य ज्येष्ठता भवेत् । अथापि स्यात्—प्रत्यक्षस्यैवार्थसंवादकत्वं नानुमानादेरित्याह—**तदभाव** इत्यादि । तस्य—अर्थादिसंवादकत्वस्य अभावे सति नैव प्रमाणमनुमानादि स्यात् । अर्थाविसंवादकत्वनिबन्धनत्वात्प्रमाणव्यवहारस्य, तस्य चात्र भावात् ॥ ४६० ॥

**नन्वनेने**त्यादिना भाविविक्तोक्तानि प्रमाणान्याशङ्कते ।

**नन्वनेनानुमानेन बाध्यते सर्वहेतुषु ।**
**व्याप्तिः सर्वोपसंहारा प्रतिज्ञार्थस्य वा क्षतिः ॥ ४६१ ॥**

किं तदनुमानमित्याह—विवक्षितेत्यादि ।

**विवक्षितार्कचन्द्रादिविषयं यत्प्रवर्त्तते ।**
**ज्ञानं तत्कालसम्बद्धसूर्यादिविषयं परम् ॥ ४६२ ॥**
**पार्थिवाविषयत्वे हि तज्ज्ञानत्वाभिधानतः ।**
**तद्यथा प्रथमं ज्ञानं तत्कालार्कादिगोचरम् ॥ ४६३ ॥**

**तदुक्तम्**—विमत्यधिकरणभावापन्नानि चन्द्रार्कग्रहनक्षत्रादिज्ञानानि विवक्षितचन्द्रार्कग्रहतारकादिविषयं यद्देवदत्तादिविज्ञानं तत्कालावच्छिन्नचन्द्रार्कग्रहनक्षत्रतारकादिविषयाण्येव, पृथिवीसंबन्धित्वेनानुपलभ्यमानत्वे सति चन्द्रार्कग्रहनक्षत्रतारकादिज्ञानशब्दवाच्यत्वात्, प्रथमकालभाविदेवदत्ततारकादिज्ञानवदिति । **विवक्षितार्कचन्द्रादिविषयमिति** । तैजसद्रव्यविषयम् । पृथिवीसंबन्धित्वेनानुपलभ्यमानत्वे सतीति विशेषणं चित्रादिगतादित्यादिविषयैर्ज्ञानैर्व्यभिचारपरिहारार्थम् । **परमिति** । तस्मादन्यत् । अतत्कालमित्यर्थः ॥ ४६२ ॥ ४६३ ॥

इदमपरं तदीयमेव प्रमाणम् । ये रूपत्वादिसामान्याश्रयाः, ये च तदाश्रयाः, तद्विषयाश्च ये प्रत्यक्षानुमानोपमानशाब्दस्मृतिप्रत्यभिज्ञानार्थसिद्धदर्शनारेकविपर्ययानुव्यवसायस्वप्नस्वप्नान्तिकाः प्रज्ञानविशेषाः, ते सर्वे स्वात्मलाभानन्तरप्रध्वंसिनो न भवन्ति, ज्ञेयत्वप्रमेयत्वाभिधेयत्वसदसदन्यतरत्वसदसद्व्यतिरिक्तज्ञेयविषयज्ञानावच्छेद्यत्वाग्राह्यविषयग्रहणाग्राह्यत्वानभिधेयाभिधायकानभिधेयत्वसमानासमानजातीयद्रव्यसंयोगविभागजनितशब्दकार्यशब्दाभिधेयत्वेभ्यः, प्रागभावादिवत् । तत्र रूपत्वादिसामान्याश्रया रूपादयः, तेषां च रूपादीनामाश्रयास्तदाश्रयाः, के ते ? घटादयः; सिद्धदर्शनं योगिविज्ञानम्, शेषं पूर्वमेव व्याख्यातम् । सदसदन्यतरत्वं सत्त्वमसत्त्वं वा । सदसद्भ्यां व्यतिरिक्तस्य ज्ञेयस्याभावादेव तद्विषयज्ञानं नास्ति, तस्य चासत्त्वादेव तेनापरिच्छेद्यत्वं सिद्धम् । एवमग्राह्यविषयस्य ग्रहणस्याभावादेव तदग्राह्यत्वसिद्धिः । तथा न विद्यतेऽभिधेयं यस्यासावनभिधेयो योभिधायकस्तेनानभिधेयत्वमनर्थकत्वादेव सिद्धम् । समानजातीयानि द्रव्याण्यधरदशनादीनि, कृतकत्वादिसामान्यात्, असमानजातीयान्याकाशादीनि तेषां यौ मिथःसंयोगविभागौ, ताभ्यां जनितो यः प्रथमः शब्दस्तस्य परम्परया यः कार्यभूतः श्रुतिपथमवतीर्णस्तेनाभिधेयत्वम् । तथाह्येषामियं प्रक्रिया—प्रथमः किल शब्दः संयोगविभागयोनिस्तस्माच्छब्दान्तराणि कदम्बगोलकन्यायेन प्रादुर्भवन्ति । तत्र यः कर्णशष्कुलीमध्यमाकाशदे-

शमाप्नोति स उपलभ्यते नेतर इति। तदेव प्रमाणकदम्बकं दर्शयति—**रूपत्वाद्याश्रयाः सर्वे** इत्यादि।

**रूपत्वाद्याश्रयाः सर्वे ये च तेषां समाश्रयाः।**
**ये च तद्विषयाः केचिज्जायन्ते प्रत्ययास्तथा ॥ ४६४ ॥**
**उत्पादानन्तरं ध्वंसभाजो नैव भवन्ति ते।**
**प्रमेयत्वाभिधेयत्वहेतुतः खारविन्दवत् ॥ ४६५ ॥**

प्रमेयत्वाभिधेयत्वग्रहणमुपलक्षणम्। तदन्येऽपि हेतवो द्रष्टव्याः। खे—नभसि, अरविन्दम्, आकाशकमलमिति यावत् ॥ ४६४ ॥ ४६५ ॥

उद्योतकरस्त्वाह—विप्रतिपन्ना अयु(ग)पत्कालाः प्रत्यया एकविषयाः, अव्युत्थायितत्प्रत्ययसामानाधिकरण्ये सति समानशब्दवाच्यत्वात्, वर्त्तमानलक्षणानेकपुरुषप्रत्ययवत्। तत्र व्युत्थातुम्—अन्यथाभवितुं बाधकप्रमाणवशात् शीलमस्येति व्युत्थायि न व्युत्थायि अव्युत्थायि, तेषां घटादिप्रत्ययानां सामानाधिकरण्यं तत्प्रत्ययसामानाधिकरण्यम्, अव्युत्थायि च तत् तत्प्रत्ययसामानाधिकरण्यं चेति तथोक्तम्। अबाधितसामानाधिकरण्ये सतीत्यर्थः। इदं च विशेषणं प्रदीपादिप्रत्ययैर्व्यभिचारपरिहारार्थम्। समानशब्दवाच्यत्वं चैत्रज्ञानं चैत्रज्ञानमित्यादि। तदेतद्दर्शयति—**विवादविषया** इत्यादि।

**विवादविषया ये च प्रत्ययाः क्रमभाविनः।**
**एकार्थविषयास्तेऽपि सर्वे इत्यवघोषणा ॥ ४६६ ॥**
**अबाधैकाश्रयत्वे हि समानोक्तिनिवेशनात्।**
**वर्त्तमाने यथैकस्मिन्क्षणे नैकविधा धियः ॥ ४६७ ॥**

**अवघोषणे**ति। प्रतिज्ञा। एकाश्रयत्वम्—सामानाधिकरण्यम्, अबाधम्—अविद्यमानबाधं च तदेकाश्रयत्वं चेति विग्रहः ॥ ४६६ ॥ ४६७ ॥

अत्र प्रतिविधत्ते **साध्येने**त्यादि।

**साध्येन विकलं तावदाद्ये हेतौ निदर्शनम्।**
**हेतुत्वाद्विषयः सर्वो न हि स्वज्ञानकालिकः ॥ ४६८ ॥**

**आद्ये हेता**विति। तज्ज्ञानत्वाभिधानत इत्यत्र। प्रथममपि हि चन्द्रादिज्ञानं सत्का(स्वका?)लावच्छिन्नचन्द्रादिविषयं न भवति। हेतुभूतस्यैव विषयत्वात्। समा-

नकालं च कार्यकारणभावानुपपत्तेः। यथोक्तम्—"असतः प्रागसामर्थ्यात्पश्चादनुपयोगतः। प्राग्भावः सर्वहेतूनां नातोऽर्थः स्वधिया सहे"ति ॥ ४६८ ॥

यदेत्यादिना पृथिवीसंबन्धित्वेनानुपलभ्यमानत्वे सतीति सविशेषणेऽपि हेतावनैकान्तिकतेति दर्शयति।

**यदा सूर्यादिशब्दाश्च विवक्षामात्रभाविनः।**
**दीपादौ विनिवेश्यन्ते तज्ज्ञानैर्व्यभिचारिता ॥ ४६९ ॥**

द्वितीयेऽपि हेतुकदम्बके जात्यादेर्धर्मिणोः सत्त्वादेव क्षणभङ्गित्वस्यानिष्टत्वात्तत्र तदभावसाधने सिद्धसाध्यतेति दर्शयति—जात्यादेरित्यादि।

**जात्यादेर्निःस्वभावत्वान्नैवेष्टा क्षणभङ्गिता।**
**तदभावप्रसिद्ध्यर्थं निर्दिष्टं साधनं वृथा ॥ ४७० ॥**

आदिशब्देन तदाश्रयाणां रूपघटादीनां तद्विषयाणां च प्रत्ययानां ग्रहणम्। एषामपि हि यथोक्तविशेषणविशिष्टानामसत्त्वमेव, तस्मात्तेषु तस्याः क्षणभङ्गिताया अभावसिद्ध्यर्थं यदुक्तं साधनं तद्वृथा, तत्र विवादाभावादिति भावः। अत्रापि सूक्ष्मेक्षिका न कृता। यदि सा क्रियते तदा बहुतरमत्र दोषजालमवतरति। तथाहि—यदेतत्सदसदन्यतरत्वं साधनमुक्तं तत्साध्यधर्मिणि दृष्टान्तधर्मिणि चासिद्धम्, विकल्पविषयत्वादन्यतरशब्दस्य, विकल्पश्चानेकपदार्थसंभवे सति भवति, नैकस्मिन्। न च साध्यधर्मिणि द्वयोः सदसत्त्वयोः संभवोऽस्ति। तस्य वस्तुरूपत्वेन सत्त्वस्यैव संभवात्। नापि दृष्टान्तधर्मिणि द्वयसम्भवः। तस्यावस्तुत्वेनासत्त्वस्यैव संभवात्। हेतुश्च व्यर्थविशेषणः। तथाहि—शब्दाभिधेयत्वादित्येवमपि तावदत्र प्रयोगो न युक्तोऽभिधेयत्ववचनादेव शब्दस्य सिद्धेः। यत्पुनः समानजातीयादिपदैर्विशेषणं तदतिपेलवमेव। एवमन्यदपि हेतुविशेषणमनर्थकमेवेति ग्रहीतव्यम्। सर्वे चामी हेतवोऽनैकान्तिकाः। साध्यविपर्ययेऽमीषां बाधकप्रमाणानुपदर्शनात्। एतच्च पश्चादभिधास्यत एव ॥४७०॥

यच्चोक्तं विवादविषया ये चेत्यादि, तत्राह—समानेत्यादि।

**समानशब्दवाच्यत्वं दीपादिप्रत्ययेष्वपि।**
**वर्त्तते व्यभिचार्येष हेतुस्तेन भवत्यतः ॥ ४७१ ॥**

दीपज्ञानमिति दीपादिप्रत्ययेषु भिन्नविषयेष्वपि समानशब्दप्रवृत्तिदर्शनादतस्तेन दीपादिप्रत्ययविषयेण शब्दवाच्यत्वेनैष समानशब्दवाच्यत्वादिति हेतुर्व्यभिचारी।

अथवा काका पाठः । अतस्तेषु वर्त्तमानत्वादेव हेतुस्ते—तव न व्यभिचारी भवति, अपितु भवत्येवेत्यर्थः ॥ ४७१ ॥

सामानाधिकरण्यं चेदिति परमतमाशङ्कते ।

**सामानाधिकरण्यं चेद्बाधितं तेषु कल्प्यते ।**
**विवक्षितेऽपि विस्पष्टा बाधैषा किं न वीक्ष्यते ॥ ४७२ ॥**

अव्युत्थायितत्प्रत्ययसामानाधिकरण्ये सतीति हेतोर्विशेषणं दीपादिप्रत्ययैर्व्यभिचारपरिहारार्थमेव कृतम्, एषां हि दीपादिप्रत्ययानामेकविषयत्वस्य बाधितत्वात् । तथाहि—तत्क्षणमेव दीपो दीर्घशिखो नम्रशिखश्च दीप्रो दीप्रतरश्चोपलभ्यते । तत्कुतो व्यभिचारिता हेतोरिति परस्य भावः । तदेतद्विशेषणमप्यसिद्धमिति दर्शयन्नाह—विवक्षितेऽपीत्यादि । विवक्षितसाध्यधर्मे तत्रापि बाधा किं न वीक्ष्यते । तथाहि चैत्रादावपि बालकुमारतरुणादिभेदेन व्यावर्त्तमानाकार एव प्रत्ययो जायते, पर्वतादौ शीतोष्णादिभेदेन, ततः स्पष्टतरमेवान्यथात्वमेषां प्रदीपादिवत्प्रसिद्धम् । अन्यथा हि य एव शीतसंबद्धः स एव यदि पश्चादुष्णसंबद्धः स्यात्तदाऽवस्थाद्वयेऽपि शीतोष्णयोरुपलम्भः स्यात् । तत्संबद्धस्वभावस्य भावे तयोरपि भावस्य प्रसङ्गापत्तेः । निगडबद्धपुरुषाकर्षणे निगडाकर्षणवदित्युक्तप्रायमेतत् । अतः सविशेषणोऽपि हेतुरसिद्धः ॥ ४७२ ॥

अनुमानबाधामप्याह—विवादपदमित्यादि ।

**विवादपदमारूढा नैकार्थविषया धियः ।**
**क्रमेणोत्पद्यमानत्वाद्विद्युद्दीपादिबुद्धिवत् ॥ ४७३ ॥**
**क्रमभावविरोधो हि ज्ञानेष्वेकार्थभाविषु ।**
**अन्यैरकार्यभेदस्य तदपेक्षाविरोधतः ॥ ४७४ ॥**

प्रयोगः—यत्क्रमभावि तत्सदा सन्निहिताविकलकारणं न भवति यथा विद्युद्दीपादिबुद्धयः, क्रमभाविन्यश्च विवादास्पदीभूता बुद्धय इति व्यापकविरुद्धोपलब्धिः । नचानैकान्तिकत्वं हेतोः, एकवस्तुविषयत्वे सत्यविकलकारणस्य क्रमभावानुपपत्तेः । नापि कारणान्तरापेक्षा नित्यस्य तेनानुपकार्यत्वात् । नचानुपकारिण्यपेक्षा युक्ताऽतिप्रसङ्गात् । उपकारे वा नित्यत्वहानिप्रसङ्ग इति शतशश्चर्चितमेतत् ॥ ४७३ ॥ ॥ ४७४ ॥

सर्वेष्वेव च प्रयोगेषु हेतूनामनैकान्तिकत्वं विपक्षे बाधकप्रमाणाभावादिति दर्शयति—सन्दिग्धेत्यादि ।

**सन्दिग्धव्यतिरेकित्वं सर्वेष्वेतेषु हेतुषु ।**
**विपक्षे वर्त्तमानानां बाधकानुपदर्शनात् ॥ ४७५ ॥**

**इति स्थिरभावपरीक्षा ।**

सुबोधम् ॥ ४७५ ॥

## इति स्थिरभावपरीक्षा ।

इदानीं कर्मतत्फलसंबन्धव्यवस्थादिसमाश्रयमित्येतत्समर्थनार्थं चोद्योपक्रमपूर्वकमाह—क्षणिकेत्यादि ।

**क्षणिकानित्यतालीढं सर्वं चेद्वस्तु तत्कथम् ।**
**कर्मतत्फलसम्बन्धकार्यकारणतादयः ॥ ४७६ ॥**

क्षणिकानित्यताग्रहणं कालान्तरस्थाय्यनित्यताव्यवच्छेदार्थम् । क्षणिकानां सतामनित्यता क्षणिकानित्यता तया लीढम्—समाक्रान्तं यदि सर्वमेव वस्तुजातं प्रतिज्ञायते भवद्भिस्तदा येऽमी कर्मफलसंबन्धादयो लोकशास्त्रयोः प्रतीतास्ते कथं सिद्ध्येयुः । आदिग्रहणाद्धेतुफलाधिगन्तृ प्रमाणम्, अनुभवे प्रत्यभिज्ञानम्, अन्यस्मिन्नर्थे दृष्टेऽर्थान्तरेऽभिलाषः, बन्धमोक्षौ, स्मरणम्, संशयपूर्वको निर्णयः, स्वयं निहितप्रत्यनुमार्गणम्, दृष्टार्थकुतूहलविरमणमित्येवंप्रकाराः कुमतिपरिकल्पिताश्चोद्यराशयो गृह्यन्ते । न हि लोकशास्त्रप्रतीतार्थविरोधेन प्रतिज्ञायमानोऽर्थः सिद्धिमासादयतीत्यभ्युपेतप्रतीतबाधा दोषः प्रतिज्ञाया इति भावः । तथाहि येनैव कृतं कर्म शुभादिकं तेनैव तत्फलमुपभुज्यत इति लोके प्रतीतम् । न हि देवदत्तेन कृते कर्मणि शुभादिके यज्ञदत्तस्तत्फलमिष्टमनिष्टं चोपभुङ्क्ते इति प्रसिद्धम् । नापि शास्त्रे, यथोक्तम्—"अनेनैव कृतं कर्म कोऽन्यः प्रत्यनुभविष्यति" इति । तच्चैतत्क्षणिकपक्षे विरुध्यते । कर्मफलपरिग्राहकस्यैकस्य कर्तुरभावेन कृतनाशाकृताभ्यागमदोषप्रसङ्गात् ॥ ४७६ ॥

कथमित्याह—य इत्यादि ।

**यः क्षणः कुशलादीनां कर्तृत्वेनावकल्प्यते ।**
**फलप्रसवकाले तु नैवासावनुवर्त्तते ॥ ४७७ ॥**

**यः फलस्य प्रसूतौ च भोक्ता संवर्ण्यते क्षणः ।**
**तेन नैव कृतं कर्म तस्य पूर्वमसंभवात् ॥ ४७८ ॥**
**कर्मतत्फलयोरेवमेककर्त्रपरिग्रहात् ।**
**कृतनाशाकृतप्राप्तिरासक्ताऽतिविरोधिनी ॥ ४७९ ॥**

**नैवासावनुवर्त्तत** इति । तस्योत्पादानन्तरमेव निरुद्धत्वात् । **एककर्त्रपरिग्रहा**-दिति । एकेन कर्त्रा तयोः कर्मफलयोरपरिगृहीतत्वादित्यर्थः । कर्तुः फलेनानभिसंबन्धात्कृतनाशः, अकर्तुश्च फलेन योगादकृताभ्यागमः । **अतिविरोधिनीति** । लोकशास्त्रयोरेवमदर्शनादिति भावः ॥ ४७७ ॥ ४७८ ॥ ४७९ ॥

एवं तावत्प्रवृत्तिमभ्युपगम्य कृतनाशाकृताभ्यागमप्रसङ्ग उक्तः । इदानीं प्रवृत्तिरेव न संभवतीति कुमारिलमतोपन्यासेन दर्शयति—**नैरात्म्येत्यादि** ।

**नैरात्म्यवादपक्षे तु पूर्वमेवावबुध्यते ।**
**मद्विनाशात्फलं न स्यान्मत्तोन्यस्यापि वा भवेत् ॥ ४८० ॥**
**इति नैव प्रवर्त्तेत प्रेक्षावान्फललिप्सया ।**
**शुभाशुभक्रियारम्भे दूरतस्तु फलं स्थितम् ॥ ४८१ ॥**

क्षणिकत्वाभ्युपगमे हि सर्वभावानां नैरात्म्यमेवाभ्युपगतं भवेत् । हेतुपरतन्त्रतया सर्वस्यास्वतन्त्रत्वात् । तस्मिन्सति प्रेक्षावान् क्रियाप्रवृत्तेः पूर्वमेवावबुध्यते—अवधारयति । किं तदित्याह—**मद्विनाशादित्यादि** । मम विनाशादूर्ध्वं फलं मम न स्यात्, फलप्रसवकाले ममाभावात् । अथापि फलं भवेत्, तदा मत्तोऽन्यस्य क्षणान्तरस्य स्यादिति ज्ञात्वा प्रवृत्तिरेव प्रेक्षावतो न संभवति, किं पुनः प्रवृत्तिपूर्वककर्मजनितं फलं भविष्यति । तस्य दूरत एवासंभाव्यमानत्वेनावस्थितत्वात् ॥ ४८० ॥ ॥ ४८१ ॥

एवं कर्मफलसंबन्धो नोपपद्यत इति प्रतिपादितम् । इदानीं कार्यकारणभावानुपपत्तिं कुमारिलमतेनैव प्रतिपादयन्नाह—**नाऽनागत** इत्यादि ।

**नाऽनागतो न वाऽतीतो भावः कार्यक्रियाक्षमः ।**
**वर्त्तमानोऽपि तावन्तं कालं नैवावतिष्ठते ॥ ४८२ ॥**

**तावन्तमिति** । उत्पद्य यावता कालेन कार्यं निवर्त्तयति तावन्तं कालं नावतिष्ठते क्षणिकत्वादिति भावः ॥ ४८२ ॥

नाऽनागत इत्यादेर्यथाक्रमं समर्थनमाह—न ह्यलब्धात्मकमित्यादि

**न ह्यलब्धात्मकं वस्तु पराङ्गत्वाय कल्पते ।**
**न विनष्टं नच स्थानं तस्य कार्यकृतिक्षमम् ॥ ४८३ ॥**
**पूर्वक्षणविनाशे च कल्प्यमाने निरन्वये ।**
**पश्चात्तस्यानिमित्तत्वादुत्पत्तिर्नोपपद्यते ॥ ४८४ ॥**

अनागतं हि नामोच्यते यदलब्धात्मतत्त्वम्, यच्चालब्धात्मतत्त्वं तदसत्, यच्चासत्तदशेषसामर्थ्यशून्यम्, यच्चाशेषसामर्थ्यरहितं तत्कथं पराङ्गत्वाय कल्पते—परं प्रति हेतुभावं प्रतिपद्यत इत्यर्थः । समर्थस्यैव हेतुभावसंप्रतिपत्तेः । एवं विनष्टमपि सर्वसामर्थ्यशून्यत्वान्न पराङ्गत्वाय कल्पत इति संबन्धः । न चापि वर्त्तमानस्य स्थानमस्ति, यत्कार्यकृतौ—कार्यकरणे क्षमं भवेत् । किंच—यदि पूर्वकक्षणो निरन्वयं विनश्यतीति कल्प्यते तदा पाश्चात्त्यस्य क्षणस्य निमित्ताभावादुत्पत्तिर्न प्राप्नोति ॥ ४८३ ॥ ४८४ ॥

स्यादेतद्यथा तुलान्तयोर्नामोन्नामौ समं भवतस्तद्वद्धेतुफलयोर्नाशोत्पादाविष्टावतो वर्त्तमानादविनष्टादेव कार्योत्पत्तेरिष्टत्वान्नानिमित्ता तस्योत्पत्तिर्भविष्यतीत्याह—**नाशोत्पादसमत्वेऽपीत्यादि** ।

**नाशोत्पादसमत्वेऽपि नैवापेक्षा परस्परम् ।**
**न कार्यकारणत्वे स्तस्तद्व्यापाराननुग्रहात् ॥ ४८५ ॥**

नाशोत्पादयोः समत्वेऽपि कल्प्यमाने न नाशोत्पादयोस्तद्वतोर्वा कार्यकारणत्वे स्तः—संभवतः, तयोः परस्परानपेक्षत्वात् । कथमनपेक्षत्वमित्याह—**तद्व्यापाराननुग्रहादिति** । तस्य—नाशस्य तद्वतो वा व्यापारेण कार्यस्याननुग्रहात्—अननुगृहीतत्वादित्यर्थः । नाशस्य हि नीरूपत्वाद्व्यापाराभावः, हेत्वभिमतस्यापि वस्तुनः कार्यसत्ताकाले सन्निधानाभावाद्व्यापाराभावः ॥ ४८५ ॥

स्यादेतदन्तरेणापि व्यापारमानन्तर्यमात्रेण हेतुफलभावो भविष्यतीत्याह—**जायमानश्चेत्यादि** ।

**जायमानश्च गन्धादिर्घटरूपे विनश्यति ।**
**तत्कार्यं नेष्यते यद्वत्तथा रूपान्तराण्यपि ॥ ४८६ ॥**

यदि यदनन्तरं यज्जायते तत्तस्य कार्यमिति स्यात्तदा घटादिसन्निवेशिनो रूप-

क्षणस्यानन्तरं समानजातीयरूपक्षणवत्तत्कलापान्तर्गत एव गन्धादिर्जायत इति सोऽपि तत्कार्यं स्यात् । न चासौ सत्यप्यानन्तर्ये तत्कार्यमिष्यते । न हि भौतिकानामन्योन्यं हेतुफलभावोऽस्ति, यथा भूतानाम्, भिन्नसन्तानत्वादिति परो मन्यते तथा रूपान्तराण्यपीति, समानजातीयरूपक्षणान्तराणि नैव रूपस्यानन्तर्यमात्रेण तत्कार्यतया गृहीतव्यानि, मा भूदतिप्रसङ्ग इति भावः ॥ ४८६ ॥

तदेवमानन्तर्यमात्रं कारणभावव्यवस्थानिबन्धनं न युक्तमिति प्रतिपाद्य स्वपक्षमुपसंहारेण दर्शयति—**तस्मादि**त्यादि ।

**तस्मात्प्राक्कार्यनिष्पत्तेर्व्यापारो यस्य दृश्यते ।**
**तदेव कारणं तस्य न त्वानन्तर्यमात्रकम् ॥ ४८७ ॥**

**न त्वानन्तर्यमात्रक**मिति । कार्यकारणव्यवस्थानिबन्धनमिति शेषः ॥ ४८७ ॥

यथोक्तमेवार्थं संक्षिप्य दर्शयन्नाह—**संक्षेपोऽय**मित्यादि ।

**संक्षेपोऽयं विनष्टाचेत्कारणात्कार्यसम्भवः ।**
**प्रध्वस्तस्यानुपाख्यत्वान्निष्कारणमिदं भवेत् ॥ ४८८ ॥**
**अविनष्टाच्च तज्जातावनेकक्षणसंभवात् ।**
**क्षणिकत्वं न भावानां व्याहन्येत तदा कथम् ॥ ४८९ ॥**

अत्र द्वयी कल्पना । विनष्टाद्वा कारणात्कार्यं भवेदविनष्टाद्वा । नष्टानष्टविनिर्मुक्तस्य वस्तुनोऽभावात् । तत्र न तावदाद्यः पक्षः, नष्टस्यासत्त्वेन तत उत्पादाभ्युपगमे कार्यस्य निर्हेतुकत्वप्रसङ्गात् । ततश्च नित्यं सत्त्वादिर्युज्यते । नापि द्वितीयोऽनेकक्षणावस्थायित्वेन भावानां क्षणिकत्वहानिप्रसङ्गात् । **न कथं व्याहन्येते**ति । व्याहन्यत एवेत्यर्थः । तथा हि भावः प्रथमं तावदुत्पद्यते, ततो व्याप्रियते, ततः कार्यमुत्पाद्य पश्चाद्विनश्यतीत्येवमेकस्यैव वस्तुनोऽनेकस्मिन्क्षणे सन्निधानमिति क्षणिकत्वव्याहतिः स्यात् ॥ ४८८ ॥ ४८९ ॥

एवं कार्यकारणभावानुपपत्तिं प्रतिपाद्य तदधिगन्तृप्रमाणानुपपत्तिं दर्शयन्नाह—**क्षणस्थायी**त्यादि ।

**क्षणस्थायी घटादिश्चेन्नोपलभ्येत चक्षुषा ।**
**न हि नष्टाः प्रतीयन्ते चिरातीतपदार्थवत् ॥ ४९० ॥**
**कार्यकारणभावोऽपि प्रत्यक्षानुपलम्भतः ।**
**ते पूर्त्ति(नैवेति?)सिद्धिं भावानां स्वभावानुपलम्भनात् ४९१**

प्रत्यक्षानुपलम्भसाधनो हि कार्यकारणभावः क्षणिकत्वे च भावानां स्वज्ञानकालेऽनवस्थानादप्रत्यक्षतैव । समानकालं कार्यकारणभावानुपपत्तेः । ततश्च प्रत्यक्षानुपलम्भयोरभाव एव । अनन्यसंसृष्टवस्तूपलम्भात्मरूपत्वेनानुपलम्भस्यापि प्रत्यक्षविशेषात्मत्वात् । अतः पदार्थोपलम्भाभावे तस्याप्ययोग एवेति कथं प्रत्यक्षानुपलम्भसाधनः कार्यकारणभावः स्यात् ॥ ४९० ॥ ४९१ ॥

भवतु नामोपलम्भो वस्तुनस्तथाऽपि पूर्वोत्तरयोः क्षणयोः प्रतिसन्धातुरेकस्य कस्यचिदभावात्संबन्धो न सिद्ध्यतीति दर्शयन्नाह—**को** वेत्यादि ।

**को वा व्यवस्थितः कर्त्ता संधत्ते क्रमवद्गतिम् ।**
**अस्य दृष्टाविदं दृष्टं नास्यादृष्टौ तु लक्ष्यते ॥ ४९२ ॥**

गतिरुपलब्धिः । क्रमवती चासौ गतिश्चेति क्रमवद्गतिः । तां कः प्रतिसंधत्ते—घटयति । नैव कश्चित् । यदि हि कश्चिदस्याग्नेरुपलम्भादिदं धूमाद्युपलब्धमस्यानुपलब्धौ नोपलभ्यत इत्येवं क्रमवतीं गतिमेककर्तृत्वेन प्रतिसंदधीत, तदा स्यात्कार्यकारणभावसिद्धिः, स च नास्ति प्रतिसन्धाता त्वन्मतेनेति न कार्यकारणभावः सिद्ध्येदित्यर्थः ॥ ४९२ ॥

इदानीं प्रत्यभिज्ञानानुपपत्तिं दर्शयन्नाह—**क्षणभङ्गिष्वि**त्यादि ।

**क्षणभङ्गिषु भावेषु प्रत्यभिज्ञा च दुर्घटा ।**
**न ह्यन्यनरदृष्टोऽर्थः प्रत्यभिज्ञायते परैः ॥ ४९३ ॥**

य एव मया पूर्वं दृष्टोऽर्थः स एवायमेतर्हि दृश्यत इत्येवं पूर्वोत्तरयोर्दर्शनयोरेकविषयतया एकज्ञातृतया च यद्धटनं तत्प्रत्यभिज्ञानम् । तच्च सर्वभावानां क्षणभङ्गित्वे सति नोपपद्यते । ज्ञातुर्ज्ञायमानस्य कस्यचिदेकस्याभावात् । न हि देवदत्तेन दृष्टमर्थं विष्णुमित्रः प्रत्यभिजानीते । अन्यतरग्रहणमुपलक्षणम् । नाप्यन्योऽर्थः प्रत्यभिज्ञायत इत्यपि द्रष्टव्यम् ॥ ४९३ ॥

ननु लूनपुनर्जातकेशनखादिष्विव भेदेऽपि सादृश्यात्प्रत्यभिज्ञानं भविष्यतीत्येतदाशङ्क्याह—**सादृश्यादि**त्यादि ।

**सादृश्यात्प्रत्यभिज्ञानं भिन्ने केशादिके भवेत् ।**
**ज्ञातुरेकस्य सद्भावाद्विभेदे त्वनिबन्धनम् ॥ ४९४ ॥**
**प्रतिसन्धानकारी च यद्येकोऽर्थो न विद्यते ।**
**रूपे दृष्टेऽभिलाषादिस्तत्कथं स्याद्रसादिषु ॥ ४९५ ॥**

यदि ह्येको ज्ञाता भवेत्तदा स्यात्प्रतिसन्धातृवशाज्ज्ञेयस्य भेदेऽपि सादृश्यकृतं प्रत्यभिज्ञानम् । द्विभेदे तु—द्वयोर्ज्ञातृज्ञेययोर्भेदो द्विभेदः, तस्मिन्सत्यनिबन्धनमेव प्रत्यभिज्ञानम् । अपि च—यदि न कश्चिदेकः प्रतिसन्धाता पुरुषो भवेत्तदा यदेतन्मातुलुङ्गफलादिरूपे दृष्टे तद्रूपाविनाभाविषु रसादिषु स्मरणपूर्वमभिलषणं परिभोगाय च प्रवृत्तिस्तत्कथं भवेत् । न ह्यन्येन दृष्टेऽन्यस्याभिलाषादिर्भवेत् ॥ ४९४ ॥ ॥ ४९५ ॥

बन्धमोक्षावपि न प्राप्नुत इति दर्शयन्नाह—**रागादी**त्यादि ।

**रागादिनिगडैर्बद्धः क्षणोऽन्यो भववारके ।**
**अबद्धो मुच्यते चान्य इतीदं नाववुध्यते ॥ ४९६ ॥**

अन्यो हि क्षणो रागादिभिर्बद्धोऽन्यस्तु मुच्यत इत्येतन्नाववुध्यते—न संभाव्यत इति यावत् । **भववारक** इति । भवः संसारः, स एव वारकम्—बन्धनागारम् ॥ ४९६ ॥

प्रयत्नश्च मोक्षार्थो व्यर्थो मोक्षाभावादिति दर्शयन्नाह—**मोक्षो नैव ही**त्यादि ।

**मोक्षो नैव हि बद्धस्य कदाचिदपि संभवी ।**
**एकान्तनाशतस्तेन व्यर्थो मुक्त्यर्थिनां क्षणः ॥ ४९७ ॥**

नन्वबद्धस्यैव मोक्षो भविष्यति, तत्कोऽत्र विरोध इत्याह—**मोक्षमि**त्यादि ।

**मोक्षमासादयन्दृष्टो बद्धः स निगडादिभिः ।**
**अबद्धो मुक्तिमेतीति दृष्टव्याहतमीदृशम् ॥ ४९८ ॥**

य एव हि बद्धः स एव मुच्यत इति लोके प्रतीतं दृष्टं च । अबद्धस्य तु मोक्षप्रतिज्ञानं लोकप्रतीत्या प्रत्यक्षेण च बाध्यत इति प्रत्यक्षप्रतीतिविरोधः प्रतिज्ञाया इति भावः ॥ ४९८ ॥

अनुमानबाधामप्याह—**एकाधिकरणावि**त्यादि ।

**एकाधिकरणावेतौ बन्धमोक्षौ तथा स्थितेः ।**
**लौकिकाविव तौ तेन सर्वं चारुतरं स्थितम् ॥ ४९९ ॥**

प्रयोगः—यौ बन्धमोक्षौ तावेकाधिकरणौ, यथा लौकिकौ बन्धमोक्षौ, बन्धमोक्षौ च विवादास्पदीभूतावेतावनुशयतद्विसंयोगलक्षणौ बन्धमोक्षाविति स्वभावहेतुः । **तथा स्थिते**रिति । बन्धमोक्षात्मना स्थितेः, बन्धमोक्षरूपत्वादित्यर्थः ।

ताविति । बन्धमोक्षौ । अतश्चैकस्याधिकरणस्यात्मनः सिद्धेः सर्वकर्मफलसंबन्धादि चारुतरं स्थितम्—शोभनतरमवस्थितमित्यर्थः । यथोक्तदोषाभावात् ॥ ४९९ ॥

**एतेनैवेति ।**

**एतेनैव प्रकारेण स्मृत्यादीनामसम्भवः ।**
**एकाधिकरणाभावात्क्षणक्षयिषु वस्तुषु ॥ ५०० ॥**

एकस्य कर्तुरभावात् । पूर्वोक्तानां स्मृतिनिश्चयस्वयंनिहितप्रत्यनुमार्गणादीनामसम्भवो बोद्धव्यः । तत्रापि भिन्नाधिकरणत्वे दृष्टादिविरोधप्रसङ्गात् । नहि चैत्रेऽनुभवितरि सन्दिहाने निधातरि वाञ्छावति च सति मैत्रस्य स्मृतिनिश्चयानुमार्गणकुतूहलविरत्यादयः संभवन्ति ॥ ५०० ॥

**अत्राभिधीयत** इत्यादिना प्रतिविधत्ते ।

**अत्राभिधीयते सर्वकार्यकारणतास्थितौ ।**
**सत्यामव्याहता एते सिध्यन्त्येवं निरात्मसु ॥ ५०१ ॥**

सत्यपि हि भावानां नैरात्म्ये कार्यकारणताप्रभावितेयं कर्मफलसंबन्धादिव्यवस्था सति च कार्यकारणभावे सर्वमविरुद्धमेवेति न किंचित्क्षीयते ॥ ५०१ ॥

स्यादेतत्—स एव कार्यकारणभावप्रतिनियमो नान्तरेणात्मानमुपपद्यत इत्याह—**यथा हीत्यादि ।**

**यथाहि नियता शक्तिर्बीजादेरङ्कुरादिषु ।**
**अन्वय्यात्मवियोगेऽपि तथैवाध्यात्मिके स्थितिः ॥ ५०२ ॥**

यथैव हि बीजादेरङ्कुरादिषु नियता शक्तिरन्तरेणाप्यात्मानमधिष्ठातारं तथाऽध्यात्मिकेऽपि वस्तुनि भविष्यति । न हि बीजादिः शरीरवदुपभोगायतनत्वेनात्मनाऽधिष्ठितः । अन्यथा हि नेदं निरात्मकं जीवच्छरीरमप्राणादिमत्त्वप्रसङ्गादित्येतन्नोपपद्यते । घटादौ किलात्मनिवृत्तौ प्राणादि निवर्त्तमानं दृष्टमिति व्यतिरेकिता हेतोः सिद्ध्येत् । यदि तु घटादेरपि सात्मकत्वं भवेत्तत्कथमयं हेतुर्व्यतिरेकी भवेत् । **अन्वय्यात्मवियोगेऽपीति ।** अन्वयिनः कस्यचित्स्वभावस्य वियोगेऽपीत्यर्थः ॥५०२॥

का पुनरसौ स्थितिरित्याह—**पारम्पर्येणेत्यादि ।**

**पारम्पर्येण साक्षाद्वा कचित्किञ्चिद्धि शक्तिमत् ।**
**ततः कर्मफलादीनां सम्बन्ध उपपद्यते ॥ ५०३ ॥**

त(यथै?)थैव हि बाह्ये नियता हेतुफलव्यवस्था तथैवाध्यात्मिके संस्कारराशावियम्, कारणशक्तिनियमात् । कुतश्चिदेवहि शुभाशुभकर्मणः क्षणपरम्परया नियतं फलमिष्टमनिष्टं वाऽऽविर्भवति, रूपाद्यनुभवात्स्मरणम्, विमर्शान्निर्णयः, स्थापनादन्वेषणम्, अभिवाञ्छतोऽर्थदर्शनम्, ततः कुतूहलविरतिरिति सर्वमविरुद्धम् । न हि क्वचिदेकपदार्थान्वयित्वेन स्मरणादयो बौद्धस्य प्रसिद्धाः । किं तर्हि ? इदं प्रत्ययमात्रम् । यथोक्तम्—"अस्ति कर्मास्तिफलं कारकस्तु नोपलभ्यते, य इमान् स्कन्धान्निक्षिपति, अन्यांश्च स्कन्धानुपादत्ते, अन्यत्र धर्मसङ्केतात् । तत्रायं धर्मसङ्केतः, यदुतास्मिन् सतीदं भवति, अस्योत्पादादिदमुत्पद्यत इति । कर्मफलादीनामित्यादिशब्देन स्मृत्यादिपरिग्रहः । संबन्धस्तु जन्यजनकभावः ॥ ५०४ ॥

यद्येवं कथं तर्हि लोके शास्त्रे च तत्तत्पुद्गलमधिकृत्योच्यते, अनेनैव कृतं कर्म कोऽन्यः प्रत्यनुभविष्यतीत्याह—**कर्तृत्वादी**त्यादि ।

**कर्तृत्वादिव्यवस्था तु सन्तानैक्यविवक्षया ।**
**कल्पनारोपितैवेष्टा नाङ्गं सा तत्त्वसंस्थितेः ॥ ५०४ ॥**

प्रचुरतराज्ञानतिमिरसङ्घातोपहतज्ञानालोको लोक आत्मनि तत्त्वान्यत्वासत्त्वादिविचारमवधूय विशिष्टहेतुफलभावनियतरूपाणां संस्काराणां प्रबन्धमेकत्वेनाध्यवसाय स एवाहं करोमीति व्यवहरति, मुक्तये च प्रवर्त्तते । तदभिमानानुरोधेन च भगवन्तस्तथागताः समुच्छेददृष्टिप्रपाततो विनेयजनरिरक्षयिषया सन्तानैकतां दर्शयन्तः कर्तृत्वादि व्यवस्थापयन्ति । तथाविधाया एव व्यवस्थातो वस्तुसिद्धिरिति चेदाह—**नाङ्गं से**त्यादि । न हि तत्त्वपरीक्षापराङ्मुखमतीनां संवृतिपतितानां बालजनानामभिनिवेशवशेन शक्यं तत्त्वं व्यवस्थापयितुम्, तदभिनिवेशस्य नैरात्म्यक्षणभङ्गविहितप्रमाणबाधितत्वात् ॥ ५०४ ॥

बीजादिषु किलान्वय्यात्मवियोगोऽसिद्ध इति दृष्टान्तासिद्धिं मन्यमानस्य परस्य चोद्यमाशङ्कयन्नाह—**अन्वयासंभवे सैवे**त्यादि ।

**अन्वयासंभवे सैव कार्यकारणता भवेत् ।**
**विशिष्टा युज्यते यद्वत्सन्तानान्तरभाविभिः ॥ ५०५ ॥**
**ननु बीजाङ्कुरादीनां कार्यकारणतेष्यते ।**
**नियता तत्र सूक्ष्मोऽपि नांशोऽस्त्यनुगमात्मकः ॥ ५०६ ॥**

अन्वयोऽनुगमः कस्यचित्स्वभावस्येति शेषः ॥ ५०५ ॥ ५०६ ॥

स्यादेतत्—बीजादिष्वप्यन्वयोऽस्त्येव । यथोक्तमुद्योतकारेण—तत्रापि ये बीजावयवास्ते पूर्वव्यूहपरित्यागेन व्यूहान्तरमापद्यन्ते, व्यूहान्तरापत्तौ च पृथिवीधातुरप्धातुना संगृहीतमान्तरेण तेजसा पच्यमानो रसद्रव्यं निर्वर्त्तयति । स रसः पूर्वावयवसहितोऽङ्कुरादिभावमापद्यत इति । तत्कथं तत्र सूक्ष्मोऽपि नांशोस्तीत्युच्यत इत्याह—क्षित्यादीनामित्यादि ।

**क्षित्यादीनामवैशिष्ट्ये बीजाङ्कुरलतादिषु ।**
**न भेदो युक्त ऐकात्म्यात्तदा सिद्धा निरन्वया ॥ ५०७ ॥**
**तस्मात्कर्मफलादीनां भावाभावप्रसिद्धये ।**
**कार्यकारणतासिद्धौ यत्तत्कार्यं परैरलम् ॥ ५०८ ॥**

एतदुक्तं भवति । यदि पृथिव्यादय उत्तरस्मिन्सन्निवेशे वर्त्तमाना अपरित्यक्तप्राक्तनस्वभावा एव वर्तन्ते, तदा न तेषां पूर्वव्यूहत्यागो व्यूहान्तरापत्तिश्चोपपद्यते, तादात्म्यात् । पूर्ववत् । ततश्च बीजाङ्कुरादीनां परस्परं भेदो न प्राप्नोति । एकस्वभावत्वात् । अथ भेदोऽङ्गीक्रियतेऽङ्कुरादीनां तदा नियमेन प्राक्तनस्वभावपरित्यागे सति क्षित्यादीनां पूर्वव्यूहत्यागो व्यूहान्तरापत्तिश्चाङ्गीकर्त्तव्या । अन्यथा भेद एव न स्यादित्युक्तम् । ततश्चापरापरस्वभावानामुत्पत्तेः कुतोऽन्वेतृत्वम् । यतश्चैवं कार्यकारणभावे साधिते सर्वं कर्मफलसंबन्धादि घटते, दूषिते च विघटते, तस्मात्कर्मफलादीनां भावसिद्धये कार्यकारणतासिद्धौ यत्नो विधातव्यः । परैः—उत्तमदर्शनानुसारितयोत्कृष्टैर्बौद्धैरिति यावत् । तेषां चाभावसिद्धये तस्या एव कार्यकारणताया अभावसिद्धौ यत्नः कार्यः परैः—तीर्थिकैरित्यर्थः । कार्यकारणतासिद्धावित्येतद्द्विरावर्त्तनीयम् । एकत्राऽकारप्रश्लेषः कार्यः ॥ ५०७ ॥ ५०८ ॥

अत्र यौ नष्टानष्टविकल्पौ परेण कृतौ तदुत्सारणेन कार्यकारणभावं तावत्सर्वव्यवस्थामूलं साधयन्नाह—अत्रोच्यत इत्यादि ।

**अत्रोच्यते द्वितीये हि क्षणे कार्यं प्रजायते ।**
**प्रथमे कारणं जातमविनष्टं तदा च तत् ॥ ५०९ ॥**
**क्षणिकत्वात्तु तत्कार्यं क्षणकाले न वर्त्तते ।**
**वृत्तौ वा विफलं कार्यं निर्वृत्तं तद्यतस्तदा ॥ ५१० ॥**

अविनष्टादेव कारणात्कार्यं भवतीति नः पक्षः, न चैवं यौगपद्यप्रसङ्गः ।

तथाहि—प्रथमक्षणभाविकारणतासादितात्मलाभमविनष्टमेव प्रतीत्य द्वितीये क्षणे कार्यं प्रजायते। तच्च तथा जायमानमविनष्टादेव जायते। प्रथमे क्षणे तस्याविनष्टत्वात्। कार्यसत्ताकालं च न कारणमनुवर्त्तते। क्षणिकतयाऽनवस्थानात्। सत्यामपि चानुवृत्तौ न तदानीं तस्य कारणत्वम्, निष्पन्ने कार्ये तस्याकिञ्चित्कर त्वात्॥ ५०९॥ ५१०॥

तदेवाकिञ्चित्करत्वं दर्शयति—नचेत्यादि।

**न च जातं पुरस्तेन शक्यं जनयितुं पुनः।**
**अभूतभावरूपत्वाज्जन्मतो नान्यथा स्थितिः॥ ५११॥**

**नान्यथा स्थितिरिति**। अन्यथा, स्थितिः—नियमो न भवेदिति यावत्। अनवस्था भवेदिति यावत्। यदि हि जातमपि जन्येत, तदा पुनरप्यविशेषात्तस्य जननप्रसङ्गः। ततश्चानवस्था जन्मनां स्यात्। कारणानां च व्यापारानुपरतिः कारणस्यापि जन्यत्वप्रसङ्गो विशेषाभावात्। ततश्चेदं कारणमिदं कार्यमिति व्यवस्था न स्यात्॥५११॥

**तस्मा**दित्यादिनोपसंहृत्य स्थितपक्षस्यादुष्टतां दर्शयति।

**तस्मादनष्टात्तद्धेतोः प्रथमक्षणभाविनः।**
**कार्यमुत्पद्यते शक्ताद्द्वितीयक्षण एव तु॥ ५१२॥**
**विनष्टात्तु भवेत्कार्यं तृतीयादिक्षणे यदि।**
**विपाकहेतोः प्रध्वस्ताद्यथा कार्यं च वक्ष्यते॥ ५१३॥**
**यौगपद्यप्रसङ्गोऽपि प्रथमे यदि तद्भवेत्।**
**सहभूहेतुवत्तच्च न युक्त्या युज्यते पुनः॥ ५१४॥**

विनष्टविकल्पस्त्वनभ्युपगमादेवायुक्तः। तथाहि—यदि तृतीयादिषु क्षणेषु कार्यं भवतीत्यभ्युपेतं भवेत्, यथा वैभाषिकैरङ्गीकृतमेकोऽतीतः प्रयच्छतीति। तदा विनष्टात्कारणात्कार्योत्पादोऽङ्गीकृतः स्यात्। न चायं पक्षोऽस्माकम्। अयुक्त्युपेतत्वात्। यौगपद्यप्रसङ्गोऽपि कदाचिद्भवेत्, यदि प्रथम एव क्षणे कार्यमिष्यते। यथा तैरेव वैभाषिकैः सहभूर्हेतुरिष्यते। तच्चैतदयुक्तम्॥ ५१२॥ ५१३॥ ५१४॥

कस्मादित्याह—असत इत्यादि।

**असतः प्रागसामर्थ्यात्सामर्थ्ये कार्यसंभवात्।**
**कार्यकारणयोः स्पष्टं यौगपद्यं विरुध्यते॥ ५१५॥**

सहभूतं हि कार्यं जनयन्हेतुरनुत्पन्नो वा जनयेदुत्पन्नो वा । न तावदनुत्पन्नः, तस्य कार्योत्पत्तेः प्रागसत्त्वात् । असतश्चाशेषसामर्थ्यशून्यत्वात् । यदा तर्ह्युत्पन्नस्तदा समर्थत्वाज्जनयिष्यतीति चेदाह—सामर्थ्ये कार्यसंभवादिति । यदा हि तस्योत्पन्नावस्थायां सामर्थ्यं तदा कार्यमपि तत्स्वभाववदेवोत्पन्नमिति क्वास्य सामर्थ्यमुपयोगमश्नुवीत । तस्मादनुमानप्रमाणविरुद्धः कार्यकारणयौगपद्याभ्युपगमः ॥ ५१५ ॥

ननु कार्यकारणभावो हि कर्मकर्तृभावः स च भिन्नकालो विरुद्ध्यते । न हि घटकुलालयोरयौगपद्ये सति कर्मकर्तृभावो दृष्ट इत्याह—नहीत्यादि ।

**न हि तत्कार्यमात्मीयं संदंशेनेव कारणम् ।**
**गृहीत्वा जनयत्येतद्यौगपद्यं यतो भवेत् ॥ ५१६ ॥**
**नापि गाढं समालिङ्ग्य प्रकृतिं जायते फलम् ।**
**कामीव दयिता येन सकृद्भावस्तयोर्भवेत् ॥ ५१७ ॥**

यदि हि संदंशग्रहणन्यायेन कारणं कार्योत्पत्तौ व्याप्रियेत, कार्यं वा वनितोपगूहनवत्स्वकारणाऽऽश्लेषात्स्वजन्मनि व्यापारं प्रतिपद्येत, तदा सह भाविता नियमेन स्यात् । यावता निर्व्यापारमेवेदं विश्वं न हि परमार्थतः कश्चित्कर्त्ता कर्म वास्त्यन्यत्र धर्मसङ्केतादिति समुदायार्थः । प्रकृतिमिति । कारणम् ॥ ५१६ ॥ ५१७ ॥

यद्येवं यदि निर्व्यापारमेव कार्यं कारणं वा । तत्कथं भवन्ति वक्तारो धूममग्निर्जनयति धूमोऽग्निमाश्रित्योत्पद्यत इत्याह—नियमादित्यादि ।

**नियमादात्महेतूत्थात्प्रथमक्षणभाविनः ।**
**यद्यतोऽनन्तरं जातं द्वितीयक्षणसन्निधिः ॥ ५१८ ॥**
**तत्तज्जनयतीत्याहुरव्यापारेऽपि वस्तुनि ।**
**विवक्षामात्रसंभूतसङ्केतानुविधायिनः ॥ ५१९ ॥**

स्वहेतुप्रत्ययसमुत्थापितात्कारणस्य शक्तिप्रतिनियमाद्धेतोर्यत्कार्यं यतः क्षणप्रथमभाविनः कारणाज्जातं किंचिद्विशिष्टम्, द्वितीये क्षणे सन्निधिः सद्भावो यस्येति विग्रहः, तत्कारणं तत्कार्यं जनयतीत्युच्यते । जनयतीत्युपलक्षणम् । तत्तदाश्रित्योत्पद्यत इत्यपि विज्ञेयम् । के पुनस्त एवमाहुः? । इत्यादि । बहिरर्थनिरपेक्षविवक्षाभाविसङ्केतानुरूपव्यवहारकारिणो व्यवहर्त्तार एवमाहुरित्यर्थः ॥ ५१८ ॥ ५१९ ॥

ननु य उत्पद्य व्यापारं नाविशेत् विशेषोत्पादार्थं स कथं हेतुः स्यादित्याह—जन्मातिरिक्तेत्यादि ।

**जन्मातिरिक्तकालेन व्यापारेणात्र किं फलम् ।**
**सत्तैव व्यापृतिस्तस्यां सत्यां कार्योदयो यतः ॥ ५२० ॥**

कारणसत्तासमनन्तरमेव कार्यस्य निष्पन्नत्वादकिंचित्कर एव कार्यस्य जन्मोत्तरकालभावी व्यापारः कार्ये । तथाहि—व्यापारो नाम कारणस्य क उच्यते । यदनन्तरमेव कार्यमुदयमासादयति कारणसत्तानन्तरमेव च कार्यमुद्भवतीति सत्तैव व्यापारशब्दवाच्याऽस्तु किं जन्मातिरेकिणा व्यापारेण कल्पितेन ॥ ५२० ॥

यद्येवमसति भावानां व्यापारे कथमिदमधीयते कार्यस्य कारणेऽपेक्षा कारणस्य च कार्ये व्यापार इत्याह—**य आनन्तर्ये**त्यादि ।

**य आनन्तर्यनियमः सैवापेक्षाभिधीयते ।**
**कार्योदये सदा भावो व्यापारः कारणस्य च ॥ ५२१ ॥**

इदमेव हि कार्यस्य कारणेऽपेक्षा यत्तदनन्तरभावित्वम्, कारणस्यापि कार्येऽयमेव व्यापारो यत्कार्योदयकाले सदा सन्निहितत्वम् ॥ ५२१ ॥

अपि च व्यापारस्य व्यापारवतो वा भावस्य कार्यं प्रति हेतुभावस्तद्भावभावित्वादेव भवता ग्रहीतव्यः, न ह्यन्वयव्यतिरेकाभ्यामन्यः कार्यकारणभावाधिगमेऽभ्युपायोऽस्ति, ततश्चैवं सति वस्तुमात्रस्यापि किमिति कारणभावो न गृह्यते, नहि कार्यस्य वस्तुमात्रगतान्वयव्यतिरेकानुविधायित्वं न प्रसिद्धम्, अतस्तदेव वस्तुमात्रं वरं कारणमस्तु यद्गतान्वयव्यतिरेकानुविधायित्वं कार्यस्य सिद्धमित्येतद्दर्शयति—**तद्भावे**त्यादि ।

**तद्भावभाविताभात्राद्व्यापारोऽप्यवकल्पितः ।**
**हेतुत्वमेति तद्वान्वा तदेवास्तु ततो वरम् ॥ ५२२ ॥**

**अवकल्पित** इति । भवद्भिर्योऽन्य उभयानुभयरूपो वा व्यापारः परिकल्पित इत्यर्थः । **तद्वा**निति व्यापारवान् । तद्भाविताभात्राद्धेतुत्वमेतीति प्रकृतेन संबन्धः । **तदेवे**ति । विलक्षणव्यापाररहितं वस्तुमात्रं हेतुरस्त्वित्यर्थः ॥ ५२२ ॥

कस्तत्रातिशयो येन वरमित्युच्यत इत्याह—**भाव** इत्यादि ।

**भावे सति हि दृश्यन्ते बीजादेवाङ्कुरोदयाः ।**
**न तु व्यापारसद्भावे भवत्किञ्चित्समीक्ष्यते ॥ ५२३ ॥**

**भावे**—भावमात्रे, बीजादौ व्यापारान्तरसमावेशशून्ये सतीत्यर्थः । एतेन भाव-

मात्रगतान्वयव्यतिरेकानुविधायित्वमेव कार्याणां सिद्धं न तु व्यापारगतान्वयाद्यनुविधायित्वमिति दर्शितं भवति ॥ ५२३ ॥

स्यादेतद्यद्यपि व्यापारगतान्वयाद्यनुविधानं कार्यस्य न सिद्धम्, तथापि तस्य कारणभावो भविष्यतीत्याह—**अदृष्टशक्तेरित्यादि** ।

**अदृष्टशक्तेर्हेतुत्वे कल्प्यमानेऽपि नेष्यते ।**
**किमन्यस्यापि हेतुत्वं विशेषो वाऽस्य कस्ततः ॥ ५२४ ॥**

एवं हि व्यापारमपि हेतुं प्रकल्प्यापरोऽपि कल्पनीयः स्यात् । अदृष्टशक्तित्वेन विशेषाभावात्, ततश्चानवस्था स्यात् । अथान्यो न कल्पते निबन्धनाभावात्तदा व्यापारस्यापि कल्पना माभूत्तत्रापि निबन्धनाभावस्य तुल्यत्वात् । किंच योऽप्यसौ व्यापारः कार्यं जनयति स किं व्यापारान्तरसमावेशादाहोस्वित्सत्तामात्रेण, यदि व्यापारान्तरसमावेशात्तदा व्यापारान्तरस्यैव कारणत्वं स्यान्न व्यापारस्य, तस्यापि व्यापारान्तरस्य कारणत्वे तुल्यः पर्यनुयोगः । तस्यापि हि यदि व्यापारान्तरसमावेशात्कारणभावः कल्प्येत तदाऽनवस्था स्यात् ॥ ५२४ ॥

अथ सत्तामात्रेणेति पक्षस्तदा पदार्थोऽपि व्यापारवत्सत्तामात्रेणैव कार्यं जनयिष्यतीति व्यर्था व्यापारकल्पनेति दर्शयति—**अन्येन चेत्यादि** ।

**अन्येन च विना हेतुर्यथा व्यापार इष्यते ।**
**कार्यस्य वा भवेत्तद्वत्किमन्येऽपि न हेतवः ॥ ५२५ ॥**

यथैव हि व्यापारोऽन्येन व्यापारान्तरेण विनाऽपि कार्येऽङ्कुरादिके हेतुरिष्यते, तद्वदन्येऽपि भावा विलक्षणव्यापारशून्या एव हेतवः किं नेष्यन्ते ॥ ५२५ ॥

अथापि स्यान्न व्यापारः कार्यं साक्षादुपकरोति । किं तर्हि भावमेव व्यापारवन्तमित्याह—**अथवा भाव इत्यादि** ।

.......................................................... ।
.......................................................... ॥ ५२६ ॥

हेतुरिष्यत इति प्रकृतेन संबन्धः । तवापि हि व्यापारवति हेतुरसौ भवन्व्यापारान्तरसमावेशरहित एवं भवतीति स एव दृष्टान्तो भविष्यतीति भावः ॥ ५२६ ॥

नचापि सत्ताव्यतिरेकेण व्यापारः पदार्थस्यास्ति । उपलब्धिलक्षणप्राप्तस्यानुपलब्धेरिति दर्शयति—**दृश्यत्वाभिमतमित्यादि** ।

**दृश्यत्वाभिमतं नैवं वयं चोपलभामहे ।**
**तत्कथं तस्य सम्बन्धमङ्गीकुर्मो निबन्धनम् ॥ ५२७ ॥**

दृश्यत्वेन हि भवतां व्यापारोऽभिमतः, यथोक्तं कुमारिलेन—"प्राक्कार्यनिष्पत्तेर्व्यापारो यस्य दृश्यत" इत्यादि । अपि च स व्यापारात्मा पदार्थस्तस्माद्व्यापारवतो भावादर्थान्तरभूतो वा स्यादनर्थान्तरभूतो वा, वस्तुसतः प्रकारान्तराभावात्, उभयानुभयविकल्पस्यासंभव एव । सच यद्यर्थान्तरभूतस्तदा पदार्थस्य कारणत्वं न प्राप्नोति । तद्व्यतिरेकिणो व्यापारस्यैव कारणभावात् । व्यापारेण संबन्धात्तस्यापि कारणभावोऽस्तीति चेत् । न । परस्परानुपकारिणोः संबन्धासिद्धेः । अथोपक्रियत एव व्यापारः पदार्थेनेति स्यात् । तदप्ययुक्तम् । न हि तस्यापरो व्यापारोऽस्ति, येन व्यापारमुपकुर्यादन्यथा ह्यनवस्थायां व्यापाराणामेव परस्परं घटनात्पदार्थेन सह व्यापारस्य न कदापि संबन्धः सिद्ध्येत् । अथ व्यापारान्तरमन्तरेणैव पदार्थो व्यापारमुपकरोतीति स्यात्तदा कार्यमपि व्यापारवद्व्यापाररहित एव सत्तामात्रेण किं नोपकुर्वीत येन व्यापारोऽर्थान्तरभूतः कल्प्यते । नहि तस्य कार्येऽपि सत्तामात्रेणोपयोगं व्रजतः कश्चित्प्रतिरोद्धाऽस्ति । तस्मान्नार्थान्तरभूतो व्यापारो युक्तः । अथानर्थान्तरभूत इति पक्षस्तदा सिद्धं सत्तैव व्यापृतिरिति । पदार्थस्वभावस्यैव सत्ताशब्दवाच्यत्वात् । ततश्च न सिद्ध्यति जन्मातिरेकित्वं व्यापारस्य ॥ ५२७ ॥

अपि च । यथा बुद्धिरर्थप्रतिच्छित्तौ जायमानैव व्यापाररहितापि सत्तामात्रेण व्याप्रियते तथा सर्वेषामपि भावानां हेतुत्वमुत्तरकालभाविव्यापारमन्तरेण भविष्यतीत्येतद्दर्शयति—बुद्धेरित्यादि ।

**बुद्धेर्यथा च जन्मैव प्रमाणत्वं निरुध्यते ।**
**तथैव सर्वभावेषु तद्धेतुत्वं न किं मतम् ॥ ५२८ ॥**

न हि बुद्धेर्जन्मातिरेकी व्यापारोऽस्ति । तथाहि—"सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्ष"मित्यत्र सूत्रे जन्मग्रहणस्य प्रयोजनं वर्णयता कुमारिलेनोक्तम्, "बुद्धिजन्मेति च प्राह जायमानप्रमाणताम् । व्यापारः कारणानां हि दृष्टो जन्मातिरेकतः । प्रमाणेऽपि तथा माभूदिति जन्म विवक्ष्यत" इति । तद्धेतुत्वमिति । तत्—कारणजन्म हेतुर्येषां ते तथोक्ताः । तद्भावस्तत्त्वम् ॥ ५२८ ॥

स्यादेतद्बुद्धेर्व्यापारो भावो युक्तो न हि सोत्तरकालमवतिष्ठते क्षणिकत्वादित्याह—क्षणिका हीत्यादि ।

**क्षणिका हि यथा बुद्धिस्तथैवान्येऽपि जन्मिनः ।**
**साधितास्तद्वदेवातो निर्व्यापारमिदं जगत् ॥ ५२९ ॥**

**साधिता** इति । स्थिरभावपरीक्षायां सकलवस्तुव्यापिनः क्षणभङ्गस्य साधितत्वात् । **तद्वदेवेति** । बुद्धिवदेव । **अत** इति । क्षणिकत्वात् । प्रयोगः—ये क्षणिकास्ते जन्मातिरिक्तव्यापारशून्याः, यथा बुद्धिः, क्षणिकाश्च बीजादयः पूर्वं प्रसाधिता इति स्वभावहेतुः । पश्चादवस्थित्यभावेन निराधारव्यापारायोगो बाधकं प्रमाणं तस्मादानन्तर्यकमात्रमेव कार्यकारणभावव्यवस्थानिबन्धनं न व्यापार इति स्थितमेतत् ॥५२९॥

यच्चोक्तं जायमानश्च गन्धादीत्यादि, तत्रापि न व्यभिचार इति दर्शयन्नाह—**प्रबन्धेत्यादि** ।

**प्रबन्धवृत्त्या गन्धादेरिष्टैवान्योन्यहेतुता ।**
**तद्बाधकमेवेदं तद्धेतुत्वप्रसञ्जनम् ॥ ५३० ॥**

रूपरसादीनां हि परस्परं प्रबन्धापेक्षया सहकारिकारणभावोऽभीष्ट एव । यथोक्तम्—"शक्तिप्रवृत्त्या न विना रसस्यैवान्यकारणम् । इत्यतीतैककालानां गतिस्तत्कार्यलिङ्गजे"ति ॥ ५३० ॥

ननु चाग्नेरिव गवाश्वादेरप्यनन्तरं कदाचिद्धूमो भवति तत्कथमानन्तर्यं न व्यभिचारीत्याह—**अन्यानन्तरभावेऽपीत्यादि** ।

**अन्यानन्तरभावेऽपि किञ्चिदेव च कारणम् ।**
**तथैव नियमादिष्टं तुल्यं चैतत्स्थिरेष्वपि ॥ ५३१ ॥**

न हि वयमानन्तर्यमात्रं कार्यकारणभावाधिगतिनिबन्धनं ब्रूमः किं तर्हि ? यन्नियतम् । तथाहि—यस्यैवानन्तरं यद्भवति तत्तस्य कारणमिष्यते । न च धूमो गवादेरेवानन्तरं भवति, असत्यपि गवादौ तस्य भावात् । किंच भवतोऽप्यत्र स्थिरवादिनश्चोद्यमेतदवतरति, कस्माद्गवादेरनन्तरं धूमो भवन्नपि तत्कार्यं न भवतीति ॥ ५३१ ॥

अत्र पर आह—**यो यत्रेत्यादि** ।

**यो यत्र व्यापृतः कार्ये न हेतुस्तस्य चेन्मतः ।**
**यस्मिन्नियतसद्भावो यः स हेतुरितीष्यताम् ॥ ५३२ ॥**

**यस्मिन्नित्यादिना** स्वपक्षेऽपि परिहारमाह ॥ ५३२ ॥

एवं तावत्क्षणिकत्वेऽपि भावानां कार्यकारणभाव उपपादितः । इदानीं तदधिगन्तृप्रमाणोपपादनार्थमाह—**भावाभावावित्यादि** ।

**भावाभावाविमौ सिद्धौ प्रत्यक्षानुपलम्भतः ।**
**यदि साकारविज्ञानविज्ञेयं वस्तु चेन्मतम् ॥ ५३३ ॥**
**यदाऽनाकारधीवेद्यं वस्तु युष्माभिरिष्यते ।**
**तत्क्षणत्वादिपक्षेऽपि समानमुपलभ्यते ॥ ५३४ ॥**
**पूर्वकेभ्यः स्वहेतुभ्यो विज्ञानं सर्वमेव हि ।**
**समांशकालरूपादि बोधरूपं प्रजायते ॥ ५३५ ॥**

यथैव हि भवतः स्थिरपदार्थोपलम्भः सिद्ध्येत्तथाऽस्माकं क्षणिकस्यापि सेत्स्यति । तथाहि—पदार्थस्योपलम्भो भवन्साकारेणैव विज्ञानेन भवेदनाकारेण वा । तत्र यदि साकारेण तदा स्वाकारानुभव एव ज्ञानस्यार्थानुभव इति स्थिरास्थिरपक्षयोर्न कश्चिद्विशेषः । अथानाकारेण तदाप्यविशेष एव । तथाहि—पूर्वकेभ्य एव स्वहेतुभ्यस्तथा तत् ज्ञानमुपजायते, येन स समानकालभाविरूपाद्येवावबुध्यते नान्यत् । तद्बोधात्मकस्यैव तस्योत्पन्नत्वात् । अतः समानकालभाविरूपादिबोधस्वभावे ज्ञानेऽङ्गीक्रियमाणे न कश्चिदर्थस्य स्थिरास्थिरत्वे विशेषः । अवश्यं च भवता पूर्वहेतुकृत एव समानकालभाविप्रतिनियतरूपादिग्रहणे ज्ञानस्य स्वभावोऽङ्गीकर्त्तव्यो येन तुल्येऽपि समानकालभावित्वे रूपाद्येव ज्ञानं परिच्छिनत्ति नेन्द्रियमिति स्यात् । तच्च क्षणिकत्वेऽपि भावानां तुल्यमेवेति यत्किंचिदेतत् ॥ ५३३ ॥ ५३४ ॥ ५३५ ॥

**साकार** इत्यादिना परो द्वयोश्चोदयति ।

**साकारे ननु विज्ञाने वैचित्र्यं चेतसो भवेत् ।**
**नाकारानङ्कितत्वेऽस्ति प्रत्यासत्तिनिबन्धनम् ॥ ५३६ ॥**

यदि साकारं ज्ञानं तदा चित्रास्तरणादिषु ज्ञानस्य चित्रत्वं भवेत् । न चैकस्य चित्रत्वं युक्तमतिप्रसङ्गात् । अथानाकारं तदा नीलास्पदं संवेदनं न पीतस्येति व्यवस्थानं न सिद्ध्येत् । सर्वत्र बोधरूपतया विशेषाभावेन प्रत्यासत्तिनिबन्धनाभावात् ॥ ५३६ ॥

**भवद्भिरपी**त्यादिना प्रतिविधत्ते ।

**भवद्भिरपि वक्तव्ये तदस्मिन्किञ्चिदुत्तरे ।**
**यच्चात्र वः समाधानमस्माकमपि तद्भवेत् ॥ ५३७ ॥**

समानमेतद्द्वयोरपि चोद्यम्, यतो भवताऽपि साकारानाकारपक्षाभ्यामवश्यमन्य-

तरः पक्षोऽङ्गीकर्त्तव्योऽन्यथाऽर्थग्राहिज्ञानं न सिद्ध्येत् । न चाप्येतत्पक्षद्वयव्यतिरेकेणान्यः प्रकारोऽस्ति । येन ज्ञानमर्थं ग्रहीष्यति । यश्चोभयोर्दोषो न तत्रैकश्चोद्यो युक्तः । तेन यदत्रोत्तरं भवतस्तदस्माकमपि भविष्यति । तथाहि—साकारपक्षे भवताऽवश्यमाकाराणामलीकत्वं सहोपलम्भनियमाद्वैकज्ञानाव्यतिरेकित्वं सत्यपि भेद इत्युत्तरमुपवर्णनीयम् । तदेवास्माकं भविष्यति, निराकारपक्षेऽपि पूर्वहेतुकृत एव प्रतिनियतार्थावबोधकः स्वभावो ज्ञानस्येति वर्णनीयम् । तदैतदस्माकमपि निराकारविज्ञानवादिनां बौद्धानामुत्तरं भविष्यतीत्यचोद्यमेतत्समाधानमिति परिहारः ॥५३७॥

तदेवं कार्यकारणभावाधिगन्तृ प्रमाणं प्रतिपाद्य कृतनाशाकृताभ्यागमदोषं परिहरन्नाह—**कृतनाश** इत्यादि ।

**कृतनाशो भवेदेवं कार्यं न जनयेद्यदि ।**
**हेतुरिष्टं न चैवं यत्प्रबन्धे नास्ति हेतुता ॥ ५३८ ॥**
**अकृताभ्यागमोऽपि स्याद्यदि येन विना क्वचित् ।**
**जायेत हेतुना कार्यं नैतन्नियतशक्तितः ॥ ५३९ ॥**

यदि हि परमार्थतः कश्चित्कर्त्ता भोक्ता वाऽभीष्टः स्यात्तदा क्षणभङ्गित्वाङ्गीकरणे कृतनाशादिप्रसङ्गः स्यात्, यावतेदं प्रत्ययतामात्रमेव विश्वं न केनचित्कर्त्रा किंचित्कृतं नाभि(पि ?)भुज्यते । तत्कथं कृतनाशादिप्रसङ्गापादनं स्यात् । अथ पूर्वकुशलादिचेतनाहितेष्टानिष्टफलोत्पादनसामर्थ्यविप्रणाशात्पूर्वकर्मानाहितसामर्थ्यविशेषाच्च कारणतः फलोत्पत्तेर्यथाक्रमं कृतनाशाकृताभ्यागमदोषप्रसङ्गो विधीयते । तदयुक्तम् । न हि पूर्वकर्माहितसामर्थ्यानुबन्धनस्य नैरात्म्येन सह कश्चिद्विरोधः । तथाहि—लाक्षादिरसावसिक्तानामिव बीजानां सन्तानमनुवर्त्तन्त एव पूर्वकर्माहिताः सामर्थ्यविशेषाः यत उत्तरकालं लब्धपरिपाकेभ्य इष्टमनिष्टं वा फलमुदेति । नापि पूर्वकर्मानाहितसंस्कारात्सन्तानात्फलोत्पत्तिरिष्यत इति कुतः अकृताभ्यागमो दोषः । उद्द्योतकरस्त्वाह—अस्थिरत्वाच्चित्तस्य न कर्मभिर्वासनं संभवतीति । तदयुक्तम् । न हि स्थिरस्यापरित्यक्तप्राक्तनस्वरूपस्य वासनमस्ति । अस्थिरस्य तु विशिष्टस्वभावान्तरोत्पादनमेव वासना । यत्पुनः स्थिरमव्याकृतं वास्यमित्युक्तं शास्त्रे तत्प्रबन्धस्थिरतामभिप्रेत्य । यो ह्युच्छेदी सन्तानस्तस्य चिरतरकालभाविफलप्रसवकाले सन्निधानाभावान्न कारणत्वमस्ति, तेन तस्य तथाविधफलोत्पादं प्रति वासनाधारत्वमयुक्तमित्यभि-

प्रायः । तस्मात्परसिद्धान्तानभिज्ञतया यत्किञ्चिदभिहितमनेनेत्युपेक्षामर्हति ॥ ५३८ ॥ ॥ ५३९ ॥

कुमारिलस्त्वाह—न वयं केनचित्कर्त्रा कृतस्य कर्मणो विप्रणाशात्कृतनाशाकृताभ्यागमौ ब्रूमः, नहि भवतां मते कश्चित्कर्त्तास्ति, किं तर्हि, निरन्वयकर्मतत्फलयोर्विनाशोत्पादाभ्युपगमात्कृतनाशाकृताभ्यागमौ प्रसज्येते इति । तदत्रैवंविधस्य कृतनाशस्याकृताभ्यागमस्य चेष्टत्वान्नानिष्टापादनं युक्तमिति दर्शयन्नाह—**क्षणभेदविकल्पेनेति** ।

**क्षणभेदविकल्पेन क्षणनाशादि चोद्यते ।**
**यच्चैव नैवानिष्टं तु किञ्चिदापादितं परैः ॥ ५४० ॥**

पूर्वकस्य कर्मक्षणस्य निरन्वयं विनाशात्कृतनाशः फलक्षणस्य वाऽपूर्वस्यैवोत्पादादकृताभ्यागम इत्येवं यत्क्षणभेदविकल्पेन कृतनाशादि चोद्यते तदिष्टमेव । न हि स्वल्पीयसोऽपि वस्त्वंशस्य कस्यचिदन्वयोऽस्तीति प्रतिपादयिष्यामः ॥ ५४० ॥

यच्चोक्तं नैव प्रवर्त्तेत प्रेक्षावानिति, तत्राह—**अहीनसत्त्वेत्यादि** ।

**अहीनसत्त्वदृष्टीनां क्षणभेदविकल्पना ।**
**सन्तानैक्याभिमानेन न कथञ्चित्प्रवर्त्तते ॥ ५४१ ॥**
**अभिसंबुद्धतत्त्वास्तु प्रतिक्षणविनाशिनाम् ।**
**हेतूनां नियमं बुद्ध्वा प्रारभन्ते शुभाः क्रियाः ॥ ५४२ ॥**

ये तावदप्रहीणसहजेतरसत्कायदर्शनादयस्तेषामयं क्षणभेदविकल्पो नास्त्येव । तथाहि—ते सन्ततिमेकत्वेनाध्यवसाय सुखिता वयं भविष्याम इत्याहितपरितोषाः कर्मसु प्रवर्त्तन्ते । येऽपि पृथग्जनकल्याणा एवं युक्त्यागमाभ्यां यथावत्क्षणिकात्मतयोरवबोधादभिसंबुद्धतत्त्वास्तेऽप्येवं प्रतीत्यसमुत्पादधर्मतां प्रतिपद्यन्ते । करुणादिपूर्वकेभ्यो दानादिभ्यः स्वपरहितोदयशालिनः संस्काराः क्षणिका एवापरापरे परम्परया समुत्पद्यन्ते । न तु हिंसादिभ्य इत्यतस्ते हेतुफलप्रतिनियममवधार्य शुभादिक्रियासु प्रवर्त्तन्ते । यथोक्तं—"यावच्चात्मनि न प्रेम्णो हानिः सपरितस्यति ( सपदि नश्यति ? ) तावद्दुःखितमारोप्य न च स्वस्थोऽवतिष्ठते । मिथ्याध्यारोपहानार्थं यत्नोऽसत्यपि भोक्तरी"ति । कार्यकारणभावस्तदधिगन्तृ च प्रमाणं यथा सिध्यति तथा प्रतिपादितमेव ॥ ५४१ ॥ ५४२ ॥

यच्चोक्तं क्षणभङ्गिषु भावेषु प्रत्यभिज्ञा च दुर्घटेति । तत्राह—**केषाञ्चिदेवेत्यादि।**

**केषाञ्चिदेव चित्तानां विशिष्टा कार्यकार्यिता ।**
**नियता तेन निर्बाधाः सर्वत्र स्मरणादयः ॥ ५४३ ॥**

कार्यकार्यितेति । कार्यमस्यास्तीति कार्यि, कारणमित्यर्थः । कार्यकार्यिणोर्भावः कार्यकार्यिता । कार्यकारणभाव इत्यर्थः । न हि कश्चित्परमार्थतः स्मर्त्ताऽनुभविता वाऽस्ति । यतो येनैवानुभूतं स एव स्मरतीति स्यात् । किं तर्हि ? यत्र सन्ताने पटीयसाऽनुभवेनोत्तरोत्तरविशिष्टतरतमक्षणोत्पादात्स्मृत्यादिबीजमाहितं तत्रैव स्मरणादयः समुत्पद्यन्ते, नान्यत्र प्रतिनियतत्वात्कार्यकारणभावस्येति समासार्थः । यथोक्तम्—"अन्यस्मरणभोगादिप्रसङ्गश्च न बाधकः । अस्मृतेः कस्यचित्तेन ह्यनुभूते स्मृतोद्भव" इति । स्मरणादिपूर्वकाश्च प्रत्यभिज्ञानादयः प्रसूयन्त इत्यविरुद्धम् । न चापि क्वचिदेकज्ञातृनिबन्धनाः प्रत्यभिज्ञानादयः सिद्धाः, येनोच्यते द्विभेदे त्वनिबन्धनमिति, कार्यकारणभावमात्रतया सर्वत्रैव भेदाभ्युपगमात् ॥ ५४३ ॥

यच्चोक्तं—रागादिनिगडैर्बद्ध इत्यादिना बन्धमोक्षव्यवस्थानमनुपपन्नमिति, तत्राह—**कार्यकारणभूताश्चेत्यादि ।**

**कार्यकारणभूताश्च तत्राविद्यादयो मताः ।**
**बन्धस्तद्विगमादिष्टो मुक्तिर्निर्मलता धियः ॥ ५४४ ॥**

नहि क्वचिदस्माकमेकपुरुषाधिकरणौ बन्धमोक्षौ प्रसिद्धौ, कस्यचिद्बध्यमानस्य मुच्यमानस्य चासिद्धेः । केवलमविद्यादयः संस्कारा जरामरणपर्यन्ता दुःखोत्पादहेतुतया बन्ध इति व्यवह्रियन्ते । तथाचोक्तम्—"एवमस्य केवलस्य हेतोर्दुःखस्कन्धस्य समुदायो भवती"ति । तेषां चाविद्यादीनां तत्त्वज्ञानाद्विगतौ सत्यां या निर्मलता धियः सा निर्मुक्तिरित्युच्यते । यथोक्तम्—"चित्तमेव हि संसारो रागादिक्लेशवासितम् । तदेव तैर्विनिर्मुक्तं भवान्त इति कथ्यत" इति ॥ ५४४ ॥

यच्चोक्तमेकाधिकरणावित्यादि, तत्रापि दृष्टान्तस्य साध्यविकलतेति दर्शयन्नाह—**एकाधिकरणौ सिद्धावित्यादि ।**

**एकाधिकरणौ सिद्धौ नैवैतौ लौकिकावपि ।**
**बन्धमोक्षौ प्रसिद्धं हि क्षणिकं सर्वमेव तत् ॥ ५४५ ॥**

सर्वमेव हि वस्तूदयानन्तरापवर्गीति प्रसाधितं यदा तदा न क्वचिदेकाधिकरणत्वं बन्धमोक्षयोः प्रसिद्धमस्तीत्यप्रसिद्धो दृष्टान्तः ॥ ५४५ ॥

यच्चोक्तं क्षणभङ्गिषु भावेषु प्रत्यभिज्ञा च दुर्घटेति । तत्राह—**केषाञ्चिदेवे**त्यादि ।

**केषाञ्चिदेव चित्तानां विशिष्टा कार्यकार्यिता ।**
**नियता तेन निर्बाधाः सर्वत्र स्मरणादयः ॥ ५४३ ॥**

**कार्यकार्यि**तेति । कार्यमस्यास्तीति कार्यि, कारणमित्यर्थः । कार्यकार्यिणोर्भावः कार्यकार्यिता । कार्यकारणभाव इत्यर्थः । न हि कश्चित्परमार्थतः स्मर्ताऽनुभविता वाऽस्ति । यतो येनैवानुभूतं स एव स्मरतीति स्यात् । किं तर्हि ? यत्र सन्ताने पटीयसाऽनुभवेनोत्तरोत्तरविशिष्टतरतमक्षणोत्पादात्स्मृत्यादिबीजमाहितं तत्रैव स्मरणादयः समुत्पद्यन्ते, नान्यत्र प्रतिनियतत्वात्कार्यकारणभावस्येति समासार्थः । यथोक्तम्—"अन्यस्मरणभोगादिप्रसङ्गश्च न बाधकः । अस्मृतेः कस्यचित्तेन ह्यनुभूते स्मृतोद्भव" इति । स्मरणादिपूर्वकाश्च प्रत्यभिज्ञानादयः प्रसूयन्त इत्यविरुद्धम् । न चापि क्वचिदेकज्ञातृनिबन्धनाः प्रत्यभिज्ञानादयः सिद्धाः, येनोच्यते द्विभेदे त्वनिबन्धनमिति, कार्यकारणभावमात्रतया सर्वत्रैव भेदाभ्युपगमात् ॥ ५४३ ॥

यच्चोक्तं—रागादिनिगडैर्बद्ध इत्यादिना बन्धमोक्षव्यवस्थानमनुपपन्नमिति, तत्राह—**कार्यकारणभूताश्चे**त्यादि ।

**कार्यकारणभूताश्च तत्राविद्यादयो मताः ।**
**बन्धस्तद्विगमादिष्टो मुक्तिर्निर्मलता धियः ॥ ५४४ ॥**

नहि कश्चिदस्माकमेकपुरुषाधिकरणौ बन्धमोक्षौ प्रसिद्धौ, कस्यचिद्बध्यमानस्य मुच्यमानस्य चासिद्धेः । केवलमविद्यादयः संस्कारा जरामरणपर्यन्ता दुःखोत्पादहेतुतया बन्ध इति व्यवह्रियन्ते । तथाचोक्तम्—"एवमस्य केवलस्य हेतोर्दुःखस्कन्धस्य समुदायो भवती"ति । तेषां चाविद्यादीनां तत्त्वज्ञानाद्विगतौ सत्यां या निर्मलता धियः सा निर्मुक्तिरित्युच्यते । यथोक्तम्—"चित्तमेव हि संसारो रागादिक्लेशवासितम् । तदेव तैर्विनिर्मुक्तं भवान्त इति कथ्यत" इति ॥ ५४४ ॥

यच्चोक्तमेकाधिकरणावित्यादि, तत्रापि दृष्टान्तस्य साध्यविकलतेति दर्शयन्नाह—**एकाधिकरणौ सिद्धा**वित्यादि ।

**एकाधिकरणौ सिद्धौ नैवैतौ लौकिकावपि ।**
**बन्धमोक्षौ प्रसिद्धं हि क्षणिकं सर्वमेव तत् ॥ ५४५ ॥**

सर्वमेव हि वस्तूदयानन्तरापवर्गीति प्रसाधितं यदा तदा न क्वचिदेकाधिकरणत्वं बन्धमोक्षयोः प्रसिद्धमस्तीत्यप्रसिद्धो दृष्टान्तः ॥ ५४५ ॥

तदेव द्वैविध्यमस्य दर्शयन्नाह—पृथिव्याद्यात्मकास्तावदित्यादि

**पृथिव्याद्यात्मकास्तावद्य इष्टाः परमाणवः ।**
**अनित्या ये तदाद्यैस्तु प्रारब्धास्ते विनाशिनः ॥ ५५० ॥**

परमाण्वात्मका हि पृथिव्यादयो नित्याः, परमाणूनां नित्यत्वात् । तदाद्यैस्तु प्रारब्धा अनित्याः, हेतुमदनित्यमिति न्यायात् । **तदाद्यैरिति** । ते परमाणव आद्या येषां ते तदाद्याः । आकाशादयस्तु नित्या एवेति भावः ॥ ५५० ॥

तत्रैतच्चतुःसङ्ख्यं तावद्द्रव्यं निषेद्धुमाह—**तत्रे**त्यादि ।

**तत्र नित्याणुरूपाणामसत्त्वमुपपादितम् ।**
**निःशेषवस्तुविषयक्षणभङ्गप्रसाधनात् ॥ ५५१ ॥**

तत्र य एते नित्याणुरूपाः पृथिव्यादयो वर्णितास्तेषामशेषवस्तुव्यापिनः क्षणभङ्गस्य प्रसाधनान्नित्यत्वरूपेणासत्त्वं प्रसाधितमेव । यत्सत्तत्सर्वं क्षणिकमक्षणिकस्य यौगपद्याभ्यामर्थक्रियाविरोधात्तल्लक्षणं सत्त्वं हीयत इति व्याप्तेः प्रसाधितत्वात् ॥५५१॥

अत्रापि बाधकं प्रमाणमाह—**नित्यत्व** इत्यादि ।

**नित्यत्वे सकलाः स्थूला जायेरन्सकृदेव हि ।**
**संयोगादि न चापेक्ष्यं तेषामस्त्यविशेषतः ॥ ५५२ ॥**

यदि पर्वतादीनां स्थूलानां कारणभूताः परमाणवो नित्याः सन्तीत्यभ्युपगम्यते तदा तत्कार्याणां स्थूलानामविकलकारणत्वात्सकृदेवोत्पत्तिप्रसङ्गः । प्रयोगः—ये समग्राप्रतिबद्धकारणास्ते सकृदेव भवन्ति । यथा बहवोऽङ्कुरास्तुल्योत्पादाः समग्राप्रतिबद्धकारणाश्च । नित्याणुकार्यत्वेनाभिमताः स्थूला भावा इति स्वभावहेतुः । समग्रकारणस्याप्यनुत्पादे सर्वदैवानुत्पादप्रसङ्गो विशेषाभावादिति बाधकं प्रमाणम् । स्यादेतत्त्रिविधं कारणमिष्टं समवायिकारणमसमवायिकारणं निमित्तकारणं च । तत्र हि यत्समवैति कार्यं तत्तस्य समवायिकारणं । असमवेतं तु यद्यस्य कारणभावं प्रतिपद्यते तदसमवायिकारणं यथाऽवयविद्रव्यारम्भेऽवयवसंयोगः । परिशेषं तु कारणं निमित्तकारणं तद्यथा धर्मादय इत्ययमेषां विभागः । तत्रापेक्षणीयस्य संयोगादेरसन्निहितत्वात्समग्रकारणत्वमसिद्धमतोऽसिद्धो हेतुरित्याशङ्क्याह—**संयोगादीति** । यदि हि संयोगादिना कश्चिद्विशेषोऽणूनामाधीयेत तदा ते तमपेक्षेरन् । यावता परैरनाधेयविशेषा एवाणवो नित्यत्वात् । तत्कथं संयोगादि तेषामपेक्ष्यं स्यात् । न च सकृ-

देव स्थूलानां तनुभवनादीनामुदयोऽस्ति क्रमेण तन्वादीनामुत्पत्तिदर्शनात् । तस्माद्विपर्ययः । प्रयोगः—ये क्रमवत्कार्यहेतवस्ते नित्या यथा क्रमवदङ्कुरादिकार्यनिर्वर्त्तका बीजादयस्तथा च परमाणव इति स्वभावहेतुः ॥ ५५२ ॥

अविद्धकर्णस्त्वणूनां नित्यत्वप्रसाधनाय प्रमाणमाह—परमाणूनामुत्पादकाभिमतं सद्धर्मोपगतं न भवति । सत्त्वप्रतिपादकप्रमाणाविषयत्वात्, खरविषाणवदिति । सतो विद्यमानस्य धर्मः सद्धर्मोऽस्तित्वं तेनोपगतं प्राप्तमस्तीत्यर्थः । तस्य प्रतिषेधोऽयम् । अणूत्पादकं कारणं नास्तीत्यर्थः । तदेतत्प्रमाणमाशङ्कापूर्वमुपदर्शयन्नाह—**सद्धर्मोपगत**मित्यादि ।

**सद्धर्मोपगतं नोचेदणूत्पादकमिष्यते ।**
**विद्यमानोपलम्भार्थप्रमाणाविषयत्वतः ॥ ५५३ ॥**

अणूत्पादकं सद्धर्मोपगतं नोचेदिष्यत इति संबन्धः । विद्यमानस्योपलम्भोऽधिगमः सोऽर्थः प्रयोजनं यस्य प्रमाणस्य तत्तथोक्तं । शेषं सुबोधम् । एतेनाणूनामनित्यत्वप्रतिज्ञाया अनुमानबाधितत्वमुद्भावितम्, सदकारणवन्नित्यमिति वचनात् । अकारणवत्त्वेनाणूनां नित्यत्वस्य सिद्धत्वात् ॥ ५५३ ॥

**नासिद्धे**रित्यादिना हेतोरसिद्धतामाह ।

**नासिद्धेर्दृश्यते येन कुविन्दाद्यणुकारणम् ।**
**परमाण्वात्मका एव येन सर्वे पटादयः ॥ ५५४ ॥**

ननु कुविन्दादयः पटादीनामेव कारणत्वेन सिद्धा नाणूनां तत्कथमणुकारणं कुविन्दादि दृश्यत इत्याह—**परमाण्वात्मका** इत्यादि । एतच्च पश्चात्प्रतिपादयिष्याम इति भावः ॥ ५५४ ॥

अपिच देशकालस्वभावविप्रकृष्टानामर्थानामुपलम्भकप्रमाणनिवृत्तावपि सद्भावाविरोधात्ततोऽनैकान्तिकता च हेतोरिति दर्शयति—**सद्ग्राहके**त्यादि ।

**सद्ग्राहकप्रमाभावान्न वा सत्ता प्रसिध्यति ।**
**प्रमाणविनिवृत्तौ हि नार्थाभावेऽस्ति निश्चयः ॥ ५५५ ॥**

**नार्थाभावेऽस्ति निश्चय** इति । पिशाचादिवदिति भावः ॥ ५५५ ॥

एवं तावत्कारणद्रव्यं निषिद्ध्य कार्यद्रव्यनिषेधार्थमाह—**तदारब्ध** इत्यादि ।

**तदारब्धस्त्ववयवी गुणावयवभेदवान् ।**
**नैवोपलभ्यते तेन न सिध्यत्यप्रमाणकः ॥ ५५६ ॥**

गुणा रूपादयः, अवयवास्तन्त्वादयः, तेषां भेदो व्यतिरेकः सोऽस्यास्तीति तथोक्तः । स तथाभूतो गुणावयवव्यतिरिक्तोऽवयवी नोपलभ्यते । नहि पटादिलक्षणमवयवि द्रव्यमविकलं शुक्लादिगुणेभ्योऽवयवेभ्यश्च तन्त्वादिभ्योऽर्थान्तरभूतं क्वचिच्चक्षुरादिज्ञाने च भासते । तदत्र गुणेभ्योऽर्थान्तरभूतद्रव्यानुपलम्भेन गुणगुणिवादो निरस्तः। अवयवव्यतिरिक्तावयव्यनुपलम्भेन त्ववयवावयविवादः । प्रयोगः—यदुपलब्धिलक्षणप्राप्तं सद्यत्र नोपलभ्यते तत्तत्र नास्ति, यथा क्वचित्प्रदेशविशेषे घटादिरनुपलभ्यमानः, नोपलभ्यते च गुणावयवेभ्योऽर्थान्तरभूतस्तत्रैव देशे गुणी दृश्यत्वेनाभिमतोऽवयवी चेति स्वभावानुपलब्धेः । न चासिद्धो हेतुः, महत्यनेकद्रव्यवत्त्वाद्रूपाच्चोपलब्धिरिति वचनात्तयोर्दृश्यत्वेनाभिमतत्वात् ॥ ५५६ ॥

नन्वित्यादिना—उद्योतकरभाविविक्तादयो हेतोरसिद्धतामुद्भावयन्ति ।

**ननूपधानसंपर्के दृश्यते स्फटिकोपलः ।**
**तद्रूपाग्रहणेप्येवं बलाकादिश्च दृश्यते ॥ ५५७ ॥**
**कञ्चुकान्तरिते पुंसि तद्रूपाद्यगतावपि ।**
**पुरुषप्रत्ययो दृष्टो रक्ते वाससि वस्त्रधीः ॥ ५५८ ॥**

त एवमाहुर्गुणव्यतिरिक्तो गुणी समुपलभ्यत एव । तद्रूपादिगुणाग्रहणेऽपि तस्य ग्रहणात् । तथाहि स्फटिकोपलः सन्निहितोपधानावस्थायां स्वगतशुक्लगुणानुपलम्भेऽपि दृश्यत एव । बलाकादिश्च रात्रौ मन्दमन्दप्रकाशायां तद्गतसितादिरूपादर्शनेऽपि गृह्यत एव । तथाऽऽप्रपदीनकञ्चुकावच्छन्नशरीरे पुंसि तदा श्यामादिरूपाद्यग्रहणेऽपि पुमान् पुमानिति प्रत्ययः प्रसूयत एव । कषायकुङ्कुमादिरक्ते वाससि तद्रूपस्य संसर्गिरूपेणाभिभूतस्यानुपलम्भेऽपि वस्त्रधीर्भवत्येव ॥ ५५७ ॥ ५५८ ॥

तदेवं तावत्प्रत्यक्षत एव गुणगुणिनोर्भेदः सिद्ध इति प्रतिपादितम् । इदानीमनुमानतोऽपि सिद्ध इति प्रतिपादयन्नाह—रूपादीत्यादि ।

**रूपादीन्दीवरादिभ्य एकान्तेन विभिद्यते ।**
**तेन तस्य व्यवच्छेदाच्चैत्रादेश्च तुरङ्गमः ॥ ५५९ ॥**
**क्षित्यादिरूपगन्धादेरत्यन्तं वा विभिद्यते ।**
**एकानेकवचोभेदाच्चन्द्रनक्षत्रभेदवत् ॥ ५६० ॥**

इन्दीवरादिभ्यो गुणो भिन्न इन्दीवरस्य रूपादय इत्येवं तेनेन्दीवरादिना तस्य रूपादेर्व्यवच्छेदात् । यथा चैत्रस्य तुरङ्गम इति चैत्रेण स्वाम्यन्तरेभ्यो व्यवच्छिद्य-

मानस्तुरङ्गमस्ततो भिद्यते तथाऽपरः प्रयोगः । प्रत्येकं पृथिव्यप्तेजोवायवो द्रव्याणि रूपरसगन्धस्पर्शेभ्यो भिन्नान्येकवचनबहुवचनविषयत्वात्, यथा चन्द्रो नक्षत्राणीति। यथैव हि चन्द्र इत्येकवचनं नक्षत्राणीति बहुवचनं चन्द्रनक्षत्राणां भेदनिबन्धनमुपलभ्यते, तथात्रापि पृथिवीत्येकवचनं रूपरसगन्धस्पर्शा इति बहुवचनं । एवं जलादिष्वपि योज्यम् । नक्षत्रभेदास्तु पुष्यादयः ॥ ५५९ ॥ ५६० ॥

एवं गुणगुणिनोर्भेदं प्रसाध्यावयवावयविनोर्भेदप्रसाधनायाह—**विभिन्नेत्यादि** ।

**विभिन्नकर्तृशक्त्यादेर्भिन्नौ तन्तुपटौ तथा ।**
**विरुद्धधर्मयोगेन स्तम्भकुम्भादिभेदवत् ॥ ५६१ ॥**

प्रयोगः—ये भिन्नकर्तृकार्यकालपरिमाणास्ते विभिन्नाः यथा स्तम्भकुम्भादयः, विभिन्नकर्तृकार्यकालपरिमाणाश्च विचारविषयाः । नासिद्धो हेतुर्नाप्यनैकान्तिकः । विरुद्धधर्माध्यासमात्रनिबन्धनो हि भावानां परस्परतो भेदः, यथा स्तम्भादीनां सचावयवावयविनोरप्यस्ति । तथाहि—तन्तूनां योषित्कर्त्री, पटस्य कुविन्दः, शीतापनोदादिकार्यसमर्थः पटो न तन्तवः, प्रागपि तन्तूनामुपलब्धेः पूर्वकालभावित्वं, पटस्य तु पश्चात्कुविन्दादिव्यापारोत्तरकालभावित्वम्, पटस्यायामविस्तराभ्यां यावत्प्रमाणं न तावत्प्रत्येकं तन्तूनामस्तीति भिन्नपरिमाणत्वमतो नानैकान्तिकता हेतूनामिति भावः ॥ ५६१ ॥

एवं तावदनुमानतोऽवयवावयविनोर्भेदं प्रसाध्य प्रत्यक्षतोऽपि साधयन्नाह—**स्थूलार्थेत्यादि** ।

**स्थूलार्थासंभवे तु स्यान्नैव वृक्षादिदर्शनम् ।**
**अतीन्द्रियतयाऽणूनां नचाणुवचनं भवेत् ॥ ५६२ ॥**
**स्थूलवस्तुव्यपेक्षो हि सुसूक्ष्मोऽर्थस्तथोच्यते ।**
**स्थूलैकवस्त्वभावे तु किमपेक्षास्य सूक्ष्मता ॥ ५६३ ॥**

यदि ह्यवयवी न स्यात्सर्वाग्रहणप्रसंगः, परमाणूनामतीन्द्रियत्वात् । स्थूलाभावेऽणुरिति व्यपदेश एव न स्यात् । कस्मादित्याह—**स्थूलवस्तुव्यपेक्षो हीत्यादि** । सुबोधम् ॥ ५६२ ॥ ५६३ ॥

**ननु रक्तादिरूपेण गृह्यन्ते स्फटिकादयः ।**
**नच तद्रूपता तेषां स्वपक्षक्षयसङ्गतेः ॥ ५६४ ॥**

नन्वित्यादिना प्रतिविधत्ते—यदुक्तं स्फटिकादयः स्वगतगुणानुपलम्भेऽपि केवलाः समुपलभ्यन्त इति तदसिद्धम्। तज्ज्ञानस्यायथार्थतया भ्रान्तत्वेनाविषयत्वात्। तथाहि—जपाकुसुमाद्युपधाने रक्तादिरूपेणासन्नेव(न ?) स्फटिक उपलभ्यते। बलाकादयोऽपि धवलाः सन्तः श्यामरूपा वीक्ष्यन्ते। नच तेषां तात्त्विकी तद्रूपता—रक्तादिरूपताऽस्ति। कस्मात्? स्वपक्षक्षयसंगतेः—यदि हि तेषां तद्रूपता तात्त्विकी स्यात्तदा तद्रूपाग्रहणेऽपि तेषां ग्रहणमस्तीति योऽयं भवतामनन्तरोदितः पक्षस्तस्य क्षतिः स्यात्॥ ५६४॥

स्यादेतल्लोहितादिरूपव्यतिरिक्तः स्फटिकादिरप्युपलभ्यत एवेत्याह—तद्रूपेत्यादि।

**तद्रूपव्यतिरिक्तश्च नापरात्मोपलभ्यते।**
**नचान्याकारधीवेद्या युक्तास्तेऽतिप्रसङ्गतः॥ ५६५॥**

नहि तस्माल्लोहितादिरूपाद्व्यतिरिक्तोऽपरात्मा—स्वभावः स्फटिकादिलक्षणो दृश्यते, रक्तादिरूपस्यैवोपलम्भात्। अतद्रूपा अपि स्फटिकादयो रक्तादिरूपेणोपलभ्यन्त इति चेदाह—नचेत्यादि। आकारवशेन हि प्रतिनियतार्थविषयता ज्ञानस्याव-स्थाप्यते। यदि चान्याकारस्यापि ज्ञानस्यान्यो विषयः स्यात्। एवं सति रूपज्ञानमपि शब्दादिविषयं स्याद्विशेषाभावात्॥ ५६५॥

किंच भवतु नामान्याकारस्यापि ज्ञानस्यान्यो विषयस्तथापि नेष्टसिद्धिर्भवत इति दर्शयन्नाह—शुक्लादयस्तथेति।

**शुक्लादयस्तथा वेद्या इत्येवं चापि संभवेत्।**
**तस्माद्भ्रान्तमिदं ज्ञानं कम्बुपीतादिबुद्धिवत्॥ ५६६॥**

तथाहि—शुक्लादय एव तद्व्यतिरिक्तगुणिपदार्थरहितास्तथा रक्तादिरूपेण विद्यन्त इत्येवमपि संभाव्यते। ततश्च न गुणिसिद्धिः। चकारोऽवधारणे, भिन्नक्रमश्च, शुक्लादय इत्यस्यानन्तरं द्रष्टव्यः। भ्रान्तमिदमिति। अयथार्थत्वादिति शेषः॥ ५६६॥

यच्चोक्तं कञ्चुकान्तर्गते पुंसीत्यादि। तदपि न प्रत्यक्षं साभिजल्पत्वादस्फुटाकारत्वाच्च। किं तर्ह्यानुमानिकमेतज्ज्ञानं रूपादिसंहतिमात्रलक्षणपुरुषविषयमित्यतो नावयविसिद्धिरिति दर्शयति—कञ्चुकेत्यादि।

**कञ्चुकान्तर्गते पुंसि न ज्ञानं त्वानुमानिकम्।**
**तद्धेतुसन्निवेशस्य कञ्चुकस्योपलम्भनात्॥ ५६७॥**

स पुरुषो रूपादिप्रचयमात्रात्मको हेतुर्यस्य सन्निवेशस्य स तथोक्तः—तद्धेतुः सन्निवेशः—संस्थानविशेषो यस्य कञ्चुकस्य तत्तथोक्तम्। एतेन कार्याख्यलिङ्गविशेषजनितत्वमनुमानप्रत्ययस्योपदर्शितं भवति ॥ ५६७ ॥

यच्चोक्तं रक्ते वाससि वस्त्रधीरिति तत्राह—कषायेत्यादि।

**कषायकुङ्कुमादिभ्यो वस्त्रे रूपान्तरोदयः।**
**पूर्वरूपविनाशे हि वाससः क्षणिकत्वतः॥ ५६८ ॥**

तत्र हि क्षणिकत्वाद्वाससः पूर्वशुक्लादिरूपविनाशे सत्यपूर्वमेव रूपादि सामग्र्यन्तरबलादुपजायते तस्मिंश्च प्रत्यक्षेण गृहीते पश्चाद्यथा समयाहितभेदं समुदायविषयं वासो वास इति प्रत्यक्षपृष्ठभावि सांवृतं परमार्थतो निर्विषयमेव प्रत्यवमर्शज्ञानमुत्पद्यत इत्यसिद्धमस्य प्रत्यक्षत्वम्। नाप्येतदनुमानं पूर्वप्रत्यक्षगृहीतविषयत्वादलैङ्गिकत्वाच्च। तस्मान्नात्र किंचिदभिभूतं रूपमस्ति ॥ ५६८ ॥

स्यादेतत्—यद्यदृष्टं शुक्लादिरूपं वाससो नास्त्येव तत्कथं धौताद्यवस्थायां पुनरुपलभ्यत इत्याह—पुनरित्यादि।

**पुनर्जलादिसापेक्षात्तस्मादेवोपजायते।**
**रूपाद्रूपान्तरं शुक्लं लोहादेः श्यामतादिवत्॥ ५६९ ॥**

यथाग्निसंपर्कात्समुपजातभासुरादिरूपस्य लोहादेः पुनः श्यामादिरूपोत्पत्तिस्तद्वद्रूपान्तरमेवोपजायते शुक्लादीत्यविरोधः ॥ ५६९ ॥

स्यादेतत्कथमिदमवगम्यते रूपान्तरमेवोपजायते न पुनः प्राक्तनं रूपमभिभूतत्वात्प्रागनुपलब्धं सत्पश्चादभिभवाभावादुपलभ्यत इत्याह—तादवस्थ्य इत्यादि।

**तादवस्थ्ये तु रूपस्य नान्येनाभिभवो भवेत्।**
**प्राक्तनानभिभूतस्य स्वरूपस्यानुवर्त्तनात्॥ ५७० ॥**

प्रयोगः—यदपरित्यक्तानभिभूतस्वभावं न तस्य परेणाभिभवोऽस्ति। यथा तस्यैव प्राक्तनावस्थायाम्, अपरित्यक्तानभिभूतस्वभावं च रूपमभिभवावस्थायामिति व्यापकविरुद्धोपलब्धिः। परित्यक्तानभिभूतस्वभावत्वेऽङ्गीक्रियमाणे सिद्धमस्यान्यत्वम् ५७०

रूपादीन्दीवरादिभ्य इत्यादावाह—षष्ठीत्यादि।

**षष्ठीवचनभेदादि विवक्षामात्रसंभवि।**
**ततो न युक्ता वस्तूनां तत्स्वरूपव्यवस्थितिः॥ ५७१ ॥**

यदि हि यथावस्तु षष्ठ्यादीनां प्रवृत्तिः सिद्धा स्यात्तदा भवेत्ततो वस्तुसिद्धिः । यावता स्वतन्त्रेच्छामात्रभाविन एते, न बाह्यवस्तुगतभेदाद्यपेक्षिणः, तत्कथमेतेभ्यो वस्तुसिद्धिः । तत्र षष्ठी पटस्य रूपादय इति, पटो रूपादय इति वचनभेदः । आदिग्रहणादिह पटे रूपादय इति सप्तमी, पटस्य भावः पटत्वमिति तद्धितोत्पत्तिरित्यादिपरिग्रहः ॥ ५७१ ॥

तथाहीत्यादिनाऽनैकान्तिकत्वमेव समर्थयते ।

**तथाहि भिन्नं नैवान्यैः षण्णामस्तित्वमिष्यते ।**
**तेषां वर्गश्च नैवैकः कश्चिदर्थोऽभ्युपेयते ॥ ५७२ ॥**

तथाहि—षण्णां पदार्थानामस्तित्वं तेषां च षण्णां वर्ग इत्यादावसत्यपि वास्तवे भेदे षष्ठ्यादि भवत्येव । नहि भवद्भिः षट्पदार्थव्यतिरिक्तमस्तित्वादीष्यते । उपलक्षणमेतत् । तथा दाराः सिकता इत्यादौ सत्यपि बहुवचने नार्थभेदं पश्यामः । स्वस्य भावः स्वत्वमिति न भावोऽन्य इष्यते ॥ ५७२ ॥

संज्ञापकेत्यादिना परस्योत्तरमाशङ्कते ।

**संज्ञापकप्रमाणस्य विषये तत्त्वमिष्यते ।**
**षण्णामस्तित्वमिति चेत्षड्भ्योऽन्यस्ते प्रसज्यते ॥ ५७३ ॥**

संज्ञापकप्रमाणविषयस्य भावस्तत्त्वं सदुपलम्भकप्रमाणविषयत्वं नाम धर्मान्तरं षण्णामस्तित्वमिष्यत इत्यर्थः । अतो नास्ति व्यभिचार इति भावः । अत्रोत्तरमाह—षड्भ्योऽन्यस्ते प्रसज्यते—पदार्थ इति शेषः । सप्तमः पदार्थः प्राप्नोति । ततश्च षट्पदार्थाभ्युपगमो हीयत इति भावः ॥ ५७३ ॥

इष्टत्वाददोष इति चेत् । यद्येवं कथं षट्पदार्था इति प्रोक्तमित्याह—षडेत इति ।

**षडेते धर्मिणः प्रोक्ता धर्मास्तेभ्योऽतिरेकिणः ।**
**इष्टा एवेति चेत्कोऽयं संबन्धस्तस्य तैर्मतः ॥ ५७४ ॥**
**द्रव्येषु नियमाद्युक्ता न संयोगो न चापरः ।**
**समवायोस्ति नान्यश्च संबन्धोऽङ्गीकृतः परैः ॥ ५७५ ॥**

धर्मिरूपा एव ये भावास्ते षट्पदार्था इति प्रोक्ताः, धर्मरूपास्तु षट्पदार्था व्यतिरिक्ता इष्टा एव । तथाहि पदार्थप्रवेशके ग्रन्थः—"एवं धर्मैर्विना धर्मिणामेष निर्देशः कृत" इति । कोयमित्यादिनोत्तरमाह—तस्य—अस्तित्वादेर्धर्मस्य । तैरिति ।

षड्भिः पदार्थैः । कः संबन्धो येन तेषामसौ धर्मो भवति । नहि संबन्धमन्तरेण धर्मिधर्मभावो युक्तोऽतिप्रसङ्गात् । एवं हि सर्वस्य सर्वधर्मत्वं स्यात्, नहि कश्चित्तैः सह संबन्धोऽस्ति । तथाहि—द्विविध एव संबन्धः संयोगलक्षणः समवायलक्षणश्च, तत्र न तावत्संयोगलक्षणस्तस्य गुणत्वेन द्रव्येष्वेव नियतत्वात् । नच समवायात्मकस्तस्य भाववदेकत्वेनेष्टत्वात् । समवायेन च समवायात्मके संबन्धे सति द्वितीयः समवायोऽङ्गीकृतः स्यात् ॥ ५७४ ॥ ५७५ ॥

विनैव संबन्धं धर्मधर्मिभावो भविष्यतीति चेत्प्राह—**संबन्धानुपपत्ता**वित्यादि ।

**संबन्धानुपपत्तौ च तेषां धर्मो भवेत्कथम् ।**
**तदुत्पादनमात्राच्चेदन्येऽपि स्युस्तथाविधाः ॥ ५७६ ॥**

एवं ह्यतिप्रसङ्गः स्यादित्युक्तम् । अथ तैः षड्भिः पदार्थैर्धर्मस्योत्पादनात्तेषामयं धर्मः संबन्धीत्युच्यते । यद्येवमन्येऽपि तर्हि जलादयस्तदुत्पत्तिलक्षणसंबन्धमात्रादेव तथाविधाः—कुण्डादिसंबन्धिनः स्युः—भवेयुः । ततश्च संयोगसमवायाख्यसंबन्धान्तरकल्पना तेषु व्यर्था स्यात् ॥ ५७६ ॥

**तस्याप्यस्तित्वमित्येवं वर्तते व्यतिरेकिणी ।**
**विभक्तिस्तस्य चान्यस्य भावेऽनिष्ठा प्रसज्यते ॥ ५७७ ॥**

किंच भवतु नाम षण्णामस्तित्वं नाम धर्मान्तरं तथापि व्यभिचार एव । तथाहि तस्याप्यस्तित्वमस्त्येव वस्तुत्वात् । ततश्च तत्र व्यतिरेकनिबन्धना विभक्तिः कथं भवेत् । अथ तत्राप्यपरमस्तित्वमङ्गीक्रियते तदाऽनवस्था स्यात् ॥ ५७७ ॥

इष्टत्वान्नानवस्था बाधिकेति चेदाह—**अन्ये**त्यादि ।

**अन्यधर्मसमावेशो प्राप्ता तत्र च धर्मिता ।**
**द्रव्यादेरपि धर्मित्वमस्मादेव च संमतम् ॥ ५७८ ॥**

सर्वेषामेव ह्युत्तरोत्तरधर्मसमावेशाद्धर्मित्वं स्यात् । ततश्च षडेते धर्मिण एव प्रोक्ता इत्येतन्नोपपद्यते, षट्पदार्थव्यतिरेकेणान्येषामपि धर्मिणां विद्यमानत्वादिति भावः । अथापि स्यात्—ये धर्मिरूपा एव त एव षट्त्वेनावधारिताः, इत्येतदप्यसारम् । एवं हि गुणकर्मसामान्यविशेषसमवायानामनिर्देशः स्यात् । नह्येषां धर्मिरूपत्वमेव, किं तर्हि, धर्मरूपत्वमपि, द्रव्याश्रितत्वादेषाम् । **अस्मादे**वेति । अन्यधर्मसमावेशात् । अन्यः पुनराह—षण्णामस्तित्वं हि सदुपलम्भकप्रमाणगम्यत्वम् । गम्यत्वं च षट्-

पदार्थविषयं विज्ञानं, तस्मिन् सति सद्व्यवहारप्रवर्त्तनात् । तथा ज्ञानजनितं ज्ञेयत्वम्, अभिधानजनितमभिधेयत्वमिति । अतो व्यतिरेकनिबन्धना षष्ठी भवत्येव । नचाप्यनवस्था, नापि षट्पदार्थान्तरप्रसङ्ग इति । तस्यापीदं कल्पनामात्रमेव । यदि ह्यर्थक्रियासमर्थपदार्थात्मकमात्मतत्त्वमेषामस्त्येव तदा तेऽर्थक्रियासमर्थाः पदार्था एव भेदान्तरप्रतिक्षेपमात्रजिज्ञासायां तेषामस्तित्वमित्येवं यदि व्यतिरेकविभक्त्या व्यपदिश्येरंस्तदा को विरोधः । तदव्यतिरिक्तमपि हि स्वरूपं बुद्ध्या ततोऽवकृष्य व्यतिरिक्तमिवाभिधीयमानमविरोध्येव, वाचामिच्छामात्रवृत्तित्वादुत्पाद्यकथोपरचितेषु बाहुल्यसौन्दर्यादिधर्मपरिकल्पनवदिति यत्किंचिदेतत् ॥ ५७८ ॥

विभिन्नकर्तृशक्त्यादेरित्यादावाह—प्रथमेभ्यश्चेत्यादि ।

**प्रथमेभ्यश्च तन्तुभ्यः पटस्य यदि साध्यते ।**
**भेदः साधनवैफल्यं दुर्निवारं तदा भवेत् ॥ ५७९ ॥**
**प्राप्तावस्थाविशेषा हि ये जातास्तन्तवोऽपरे ।**
**विशिष्टार्थक्रियासक्ताः प्रथमेभ्योऽविलक्षणाः ॥ ५८० ॥**

यदि प्रथमावस्थाभाविभ्योऽसमधिगतपटाख्यानेभ्यस्तन्तुभ्यः पटस्य भेदः साध्यते तदा सिद्धं साध्यते । सर्वभावानां क्षणिकत्वेन पूर्वकेभ्यस्तन्तुभ्यः पटशब्दवाच्यानां तन्तूनां तद्विलक्षणपदार्था(र्थत्वा ?)संभवेऽप्युत्पादस्याङ्गीकरणात् ॥ ५७९ ॥ ॥ ५८० ॥

अथ पटसमानकालभाविनो ये तन्तवस्तेभ्यः पटस्यान्यत्वं प्रसाध्यते तदा हेतूनामसिद्धतेति दर्शयन्नाह—एकेत्यादि ।

**एककार्योपयोगित्वज्ञापनाय पृथक्श्रुतौ ।**
**गौरवाशक्तिवैफल्यदोषत्यागाभिवाञ्छया ॥ ५८१ ॥**
**साकल्येनाभिधानेन व्यवहारस्य लाघवम् ।**
**मन्यमानैः कृता येषु वागेका व्यवहर्तृभिः ॥ ५८२ ॥**
**तेभ्यः समानकालस्तु पटो नैव प्रसिद्ध्यति ।**
**विभिन्नकर्तृसामर्थ्यपरिमाणादिधर्मवान् ॥ ५८३ ॥**

यदि तदानीं तन्तुव्यतिरिक्तस्तत्समानकालभावी पटः प्रसिद्धो भवेत्तदा तस्य तन्तुव्यपेक्षया विभिन्नकर्तृत्वादयो धर्माः सिद्ध्येयुर्यावता स एवायं तन्तुव्यतिरेकी

पटो न सिद्धः । तद्भेदस्यैव प्रसाधयितुं प्रस्तुतत्वात् । न च पटस्तन्तव इति संज्ञामात्राद्वस्तूनां भेदः, प्रयोजनान्तरवशेनापि संज्ञान्तरस्य निवेशात् । तथाहि—केचित्तन्तवो विशिष्टावस्थाप्राप्ताः शीतापनोदनाद्येकार्थक्रियासमर्था भवन्ति, नापरे ये योषित्कर्तृकाः । तत्रैकार्थक्रियोपयोगिनस्तन्तून्विशिष्टान्प्रतिपादयितुं पट इत्येका श्रुतिर्विनिवेश्यते व्यवहर्तृभिरसाङ्कर्येण व्यवहारायासत्यप्यर्थान्तरत्वे । कस्मात्पुनरेका श्रुतिर्विनिवेश्यत इत्याह—**पृथक्श्रुता**वित्यादि । पृथक्पृथक्—प्रत्येकं श्रुतौ—अभिधाने सति गौरवदोषः । तथाहि—तत्र यावन्तः पदार्था विवक्षितैककार्यसाधनयोग्यास्तावन्त एव शब्दाः प्रयोक्तव्या इति गौरवदोषः । नचाप्येषामसाधारणं रूपं शक्यं निर्देष्टुमित्यशक्तिदोषः । उत्प्रेक्षितसामान्याकारेण च निर्देशे वरमेकयैव श्रुत्या प्रतिपादनं, न चास्य पृथक्पृथक्प्रतिपादनप्रयासस्य किंचित्फलमुपलभ्यत इति वैफल्यदोषः । सामस्त्येन त्वभिधाने कृते सति व्यवहारलाघवं गुणः । समस्तवस्तुविवक्षायां जगत्त्रिभुवनविश्वादिशब्दवदेका वागिति । पट इत्येवं वचनमित्यर्थः । कर्ता च सामर्थ्यपरिमाणादिधर्मश्चेति तौ तथोक्तौ, ततो विभिन्नशब्देन विशेषणसमासं कृत्वा मतुप् कार्यः ॥ ५८१ ॥ ५८२ ॥ ५८३ ॥

यच्चोक्तं स्थूलार्थासंभव इत्यादि तत्राह—**अन्योन्याभिसरा** इति । असिद्धमणूनामतीन्द्रियत्वं विशिष्टावस्थाप्राप्तानामिन्द्रियग्राह्यत्वात् । यस्य हि नित्याः परमाणव इति पक्षस्तं प्रत्यणूनां विशेषाभावात्सर्वदैवातीन्द्रियत्वं स्यात्, नास्मान्प्रति । **अन्योन्याभिसरा** इति ।

**अन्योन्याभिसराश्चैवं ये जाताः परमाणवः ।**
**नैवातीन्द्रियता तेषामन्यानां गोचरत्वतः ॥ ५८४ ॥**

अन्योन्यसहाया इत्यर्थः ॥ ५८४ ॥

**नीलादि**रित्यादिना तदेवाक्षगोचरत्वं दर्शयति ।

**नीलादिः परमाणूनामाकारः कल्पितो निजः ।**
**नीलादिप्रतिभासा च वेद्यते चक्षुरादिधीः ॥ ५८५ ॥**

ननु च पौर्वापर्यादिदिग्भेदेन परमाणवोऽवस्थिता इष्यन्ते नच तेन रूपेणोपलक्ष्यन्ते । तत्कथमेषां प्रत्यक्षतेत्याह—**पौर्वापर्यविवेकेने**त्यादि ।

**पौर्वापर्यविवेकेन यद्यप्येषामलक्षणम् ।**
**तथाऽप्यध्यक्षताऽबाधा पानकादाविव स्थिता ॥ ५८६ ॥**

अध्यक्षताया अबाधा अध्यक्षताऽबाधेति समासः । असमस्तं वैतत् । अविद्यमानबाधत्वादबाधा । पानकादिष्विवाध्यक्षताऽवस्थितेत्यर्थः । तथाहि—पानके तप्तोपले सूतहेमादौ च मिश्रे परमाणव एव तथोपलभ्यन्ते । नहि तत्रावयविद्रव्यमस्ति, विजातीयानां द्रव्यारम्भकत्वात् । नचापि परमाणुशोध्यति(भ्योऽवयवि ?)भेदे संयोगो दृश्य उपपद्यते, अदृष्टाश्रयत्वात् । यत्र ह्येकोऽपि संयोगी न दृश्यस्तत्र संयोगो न दृश्यते । यथा पिशाचघटसंयोगः सूर्यमण्डलाकाशदिग्देशसंयोगश्च । यत्र पुनः सर्व एव संयोगी परमाण्वात्मको न दृश्यते, तत्र कथं संयोगस्तदाश्रितो दृश्यः स्यात् ॥ ५८६ ॥

यद्येवं सर्वप्रकारेणानिश्चये सति कथं नाम प्रत्यक्षता तेषां युक्तिमतीत्याह—**सर्वेषामित्यादि** ।

**सर्वेषामेव वस्तूनां सर्वव्यावृत्तिरूपिणाम् ।**
**दृष्टावपि तथैवेति न सर्वाकारनिश्चयः ॥ ५८७ ॥**

नह्यपरदर्शनानां क्वचिदपि वस्तुनि प्रत्यक्षेण गृहीतेऽपि सर्वाकारनिश्चयोऽस्ति । यावता तु रूपेणार्थान्तरव्यावृत्तिकृतेन न निश्चीयते, तावता तत्प्रत्यक्षमिति व्यवस्थाप्यते । न सर्वाकारेण । गृहीतस्यापि प्रकारान्तरस्य निश्चयानुत्पत्तेर्व्यवहारायोग्यत्वेनागृहीतकल्पत्वात् । **तथैवेति** । यथा तद्वस्त्वनुभूतम् ॥ ५८७ ॥

ननु च निरंशतया सर्वात्मनैव प्रत्यक्षेणानुभूतत्वाद्वस्तुनः कस्मात्सर्वात्मना निश्चयो न भवतीत्याह—**अकल्पनाक्षगम्येऽपीत्यादि** ।

**अकल्पनाक्षगम्येऽपि निरंशेऽर्थस्य लक्षणे ।**
**यद्भेदव्यवसायेऽस्ति कारणं स प्रतीयते ॥ ५८८ ॥**

अक्षे भवमाक्षमिन्द्रियज्ञानमित्यर्थः । अकल्पनमविद्यमानकल्पनं च तदाक्षं चेति विग्रहः । तेन गम्येऽपि—निर्विकल्पेन्द्रियज्ञानगम्येऽपीत्यर्थः । **यद्भेदव्यवसाय इति** । यस्माद्भेदो व्यावृत्तिर्यद्भेदस्तत्र व्यवसायो निश्चयस्तस्य कारणमभ्यासः प्रत्यासत्तिस्तारतम्यबुद्धिपाटवं चेत्यादि । नह्यनुभवमात्रमेव निश्चयकारणं किंत्वभ्यासादयोऽपि । तेन यत्र ते सन्ति तत्र निश्चयः प्रसूयत इत्यर्थः । एतच्च सर्वं परमाणूनां सिद्धिं बाह्यस्य चार्थस्य प्रत्यक्षत्वसिद्धिमभ्युपगम्योक्तम् । यस्य तु विज्ञानवादिनो न बाह्योऽर्थो नीलादिरूपतया प्रत्यक्षसिद्धः, स्वप्नादौ विनापि बाह्यमर्थं तथाविधनीलादि-

प्रतिभासोपलम्भेन संशयात्, तस्य च नीलादिरूपस्यैकानेकस्वभावशून्यत्वेन भ्रान्तज्ञानप्रतिभासात्मकत्वात्, नापि परमाणवः सिद्धास्तेषां पौर्वापर्यावस्थायितया दिग्भागभेदिनामेकत्वासिद्धेः । तं प्रति कथं नीलादिरूपतया परमाणूनां प्रत्यक्षत्वं पौर्वापर्यस्य वानुपलक्षणं भ्रान्तिनिमित्तेनार्थान्तरसमारोपादिति शक्यं वक्तुम् ॥ ५८८ ॥

स्यादेतद्यद्यवयवी न स्यात्तदा कथं बहुषु परमाणुष्वेकः पर्वत इति व्यवसायो ध्याप्रताक्षस्य भवतीत्याह—समानेत्यादि ।

**समानज्वालासंभूतेर्यथा दीपेन विभ्रमः ।**
**नैरन्तर्यस्थितानेकसूक्ष्मवित्तौ तथैकधा ॥ ५८९ ॥**

यथाहि—दीपादौ नैरन्तर्येण सदृशापरापरज्वालापदार्थसंभवात्सत्यपि भेद एकत्वविभ्रमो भवति तथा नैरन्तर्येणानेकसूक्ष्मतरपदार्थसंवेदनतोऽयमेकत्वविभ्रम इत्यदोषः ॥ ५८९ ॥

यद्येवं भेदेनानुपलक्ष्यमाणाः कथमणवः प्रत्यक्षाः सिध्यन्तीत्याह—**विवेके**त्यादि ।

**विवेकालक्षणात्तेषां नो चेत्प्रत्यक्षतेष्यते ।**
**दीपादौ सा कथं दृष्टा किं वेष्टोऽवयवी तथा ॥ ५९० ॥**

यदि हि विवेकेनानवधार्यमाणं न प्रत्यक्षमिष्यते, तदा दीपादौ पूर्वापरविभागेनानुपलक्ष्यमाणे सा प्रत्यक्षता कथं दृष्टा । अवयवी वाऽवयवविवेकेनागृह्यमाणोऽपि किं तथा प्रत्यक्षत्वेनेष्ट इत्यनैकान्तिकमेतत् ॥ ५९० ॥

**एतावदि**त्यादिना परं चोदयितुं शिक्षयति—

**एतावत्तु भवेदत्र कथमेषां न निश्चये ।**
**नीलादिपरमाणूनामाकार इति गम्यते ॥ ५९१ ॥**
**तदप्यकारणं यस्मान्नैव ज्ञानमगोचरम् ।**
**नचैकस्थूलविषयं स्थौल्यैकत्वविरोधतः ॥ ५९२ ॥**

**एषामिति** । परमाणूनाम् । **तदपीति** । परमाणूनां विवेकेनालक्षणं यत्तदकारणम्, परमाणुगतनीलाद्यग्रहणस्यान्यतोऽपि निश्चयोत्पत्तेः । तथाहीदं ज्ञानमविषयं तावद्बहिरर्थवादिना सता नैवेष्टव्यमन्यथा हि विज्ञानमात्रतादर्शनमेव स्यात् । स चायं रूपादिविषयः स्थूलरूपतयावभासमान एको वा स्यादनेको वा, एकोऽपि भवन्नारब्धो वा स्यादवयवैरनारब्धो वा । तत्र न तावदुभयात्माऽप्ययमेको युक्तः प्रत्यक्षादिविरोधात् ॥ ५९१ ॥ ५९२ ॥

कोऽसौ विरोध इत्याह—स्थूलस्यैकस्वभावत्व इत्यादि ।

**स्थूलस्यैकस्वभावत्वे मक्षिकापदमात्रतः ।**
**पिधाने पिहितं सर्वमासज्येताविभागतः ॥ ५९३ ॥**
**रक्ते च भाग एकस्मिन्सर्वं रज्येत रक्तवत् ।**
**विरुद्धधर्मभावे वा नानात्वमनुषज्यते ॥ ५९४ ॥**

यदि हि स्थूलमेकं स्यात्तदैकदेशपिधाने सर्वस्य पिधानम्, एकदेशरागे च सर्वस्य रागः प्रसज्येत, पिहितापिहितयो रक्तारक्तयोश्च भवन्मतेनाभेदात् । नचैकस्य परस्परविरुद्धधर्माध्यासो युक्तः, अतिप्रसङ्गात् । एवं हि विश्वमेकं द्रव्यं स्यात्, ततश्च सहोत्पादादिप्रसङ्गः । नचैकदेशपिधाने सर्वं पिहितमीक्ष्यत इति प्रत्यक्षविरोधः । तथानुमानविरोधोऽपि । तथाहि—यत्परस्परविरुद्धधर्माध्यासितं न तदेकं भवति, यथा गोमहिषम्, उपलभ्यमानानुपलभ्यमानरूपं पिहितादिरूपेण च विरुद्धधर्माध्यासितं स्थूलमिति व्यापकविरुद्धोपलब्धिः । सर्वस्यैकत्वप्रसङ्गो बाधकं प्रमाणम् ॥ ५९३ ॥ ५९४ ॥

उद्योतकरस्त्वाह—एकस्मिन्भेदाभावात्सर्वशब्दप्रयोगानुपपत्तिरिति । तदेतन्ननु चेत्यादिना शङ्कते ।

**ननु चैकस्वभावत्वात्सर्वशब्दोऽत्र किंकृतः ।**
**स ह्यनेकार्थविषयो नानात्मावयवी न च ॥ ५९५ ॥**

तथाहि—सर्वशब्दोऽनेकार्थविषयः, न चावयवी नानात्मेति, तत्कथं सर्वशब्दप्रयोगो येनोच्यते सर्वं पिहितमासज्यत इति ॥ ५९५ ॥

नन्वित्यादिना प्रतिविधत्ते ।

**ननु ये लोकतः सिद्धा वासोदेहनगादयः ।**
**त एवावयवित्वेन भवद्भिरुपवर्णिताः ॥ ५९६ ॥**
**रक्तं वासोऽखिलं सर्वं निःशेषं निखिलं तथा ।**
**तत्रेच्छामात्रसंभूतमिति सर्वे प्रयुञ्जते ॥ ५९७ ॥**
**तथाविधविवक्षायामस्माभिरपि वर्ण्यते ।**
**सर्वं स्याद्रक्तमित्यादि निर्निबन्धा हि वाचकाः ॥ ५९८ ॥**

य एव हि लोके वासोदेहप्रभृतयः प्रसिद्धास्त एव भवद्भिरवयवित्वेनावकल्पिताः ।

तत्र च लोके सर्वैकदेशशब्दयोः प्रवृत्तिः प्रसिद्धैव । तथाच वक्तारो भवन्ति सर्वं वासो रक्तमित्यादेः । तथाविधायां च विवक्षायां येयं लोके पृथुतरदेशावक्रान्तिव्यवस्थितशाटकादिपदार्थगतरक्तादिप्रतिपादनेच्छा, तस्यां सत्यामस्माभिरपि प्रतीतिमनुसृत्य भवतो विरोधप्रतिपादनाय सर्वादिशब्दप्रयोगः क्रियते । अपि च—भवत एवायं स्थूलस्यैकत्वमभ्युपगच्छतो दोषो नास्माकम्, नह्यस्माभिः स्थूलस्यैकत्वमिष्यते, स्यादेतन्ममाप्यदोष एव यस्माद्भाक्तमुपचरितमेतत्तन्त्वादिष्ववयवेषु तत्कारणतया पटाद्यभिधानम्, तेन सर्वादिशब्दप्रयोगो भविष्यतीति ॥ ५९६ ॥ ५९७ ॥ ५९८ ॥

**भाक्तं तदभिधानं चेद्वचोभेदः प्रसज्यते ।**
**नच बुद्धेर्विभेदोऽस्ति गौणमुख्यतयेष्टयोः ॥ ५९९ ॥**

यद्येवं—वचोभेदः—बहुवचनं, सर्वदैव प्रसज्यते सर्वाणि वासांसि रक्तानीति । न च भवन्तो बहुष्वेकवचनमिच्छन्ति । अथापि स्यादवयविगतां संख्यामादायावयवेषु वस्त्रादिशब्दोऽपरित्यक्तात्माभिधेयगतलिङ्गसंख्य एव वर्तत इति । तदप्ययुक्तमिति दर्शयन्नाह—नचेत्यादि । यदि हि भाक्तोऽयं व्यपदेशः स्यात्तदा गौणमुख्यार्थविषयाया बुद्धेर्विभेदो वैलक्षण्यं स्खलद्गतित्वेन प्राप्नोति, नच भेदोऽस्ति । तथाहि—सर्वं वासो रक्तमित्यत्र नैवं बुद्धिः प्रवर्त्तते "न च वस्त्रं रक्तं किंतु तत्कारणभूतास्तन्तवो रक्ता" इति । चकारान्न च सर्वशब्दवाच्यं वासो युष्माभिरिष्यते तस्यैकत्वात्, तत्कथं तत्संख्यामादाय सर्वशब्दो वस्त्रादिशब्दरहितोऽवयवेषु वर्त्तते । अथवा बुद्धेर्भेदो नानात्वं सोऽस्मिन् गौणमुख्यत्वेनेष्टयोर्न विद्यते । नहि तन्तुवस्त्रयोर्भिन्नं रूपं समुपलभ्यते रूपरसादिवत्, नचानुपलब्धभिन्नरूपयोर्गौणमुख्यभावः संभवति ॥ ५९९ ॥

ननु चेत्यादिना—शङ्करस्वामिनः परिहारमाशङ्कते ।

**ननु चाव्याप्यवृत्तित्वात्संयोगस्य न रक्तता ।**
**सर्वस्यासज्यते नापि सर्वमावृतमीक्ष्यते ॥ ६०० ॥**

स ह्याह—राग उच्यते वाससः कषायकुङ्कुमादिद्रव्येण संयोगः । संयोगश्चाव्याप्यवृत्तिस्ततो न रक्त एकस्मिन्सर्वस्य रागो भवति । नच वस्त्रादिभिः शरीरैकदेशस्यावरणे सर्वस्यावरणमिति ॥ ६०० ॥

तदेतदयुक्तमित्यादर्शयति—ननु चानंशक इत्यादि ।

**ननु चानंशके द्रव्ये किमव्याप्तं व्यवस्थितम् ।**
**स्वरूपं तदवस्थाने भेदः सिद्धोऽतएव वा ॥ ६०१ ॥**

**बहुदेशस्थितिस्तेन नैवैकस्मिन्कृतास्पदा ।**
**ततः सिद्धा पटादीनामणुभ्योऽनेकरूपता ॥ ६०२ ॥**

यदि हि पटादिरेकमेव द्रव्यं, तदा किं तत्र निरंशके द्रव्ये कषायादिभिरव्याप्तं, येनाव्याप्यवृत्तिः संयोगः स्यात् । अथाव्याप्तस्वरूपस्यावस्थानमङ्गीक्रियते तदा तदवस्थाने भेदोऽतएव सिद्धः, व्याप्ताव्याप्तयोर्विरोधेनैकस्वभावत्वायोगात् । नचैकस्य पृथुतरदेशावस्थानं युक्तमनंशत्वात् । अन्यथा हि सर्वेषामेवोदकजन्तुहस्त्यादीनामेकत्वेनाविशेषात्स्थूलसूक्ष्मादिभेदो न प्राप्नोति । अल्पबहुतरावयवारम्भानारम्भादिकृतो विशेष इति चेत्, अवयवा एव तर्ह्यल्पबहुतरास्तथातथोत्पद्यमानाः स्थूलसूक्ष्मादिव्यवस्थानिबन्धनं सन्तु, किं तदारब्धेनावयविना, तस्यादृष्टसामर्थ्यात् । नच सत्यप्यवयवाल्पबहुत्वेऽवयविनां निरंशतया परस्परं कश्चिद्विशेषोऽस्ति, येन स्थूलसूक्ष्मादिभेदो भवेत्, तेषामवयवाल्पबहुत्वग्रहणकृते विशेषेऽवयवमात्रमेवाभ्युपगतं स्यात्तत्रैव स्थूलादिव्यवहारात्ततश्चाणुमात्रमेव दृश्यत्वेनाभ्युपेतं स्यात् । स्थूलसूक्ष्मा-(क्ष्म ?) व्यतिरेकेणान्यस्य(स्या ?) दृश्यमानत्वात् । अपि चाव्याप्यवृत्तिः संयोग इति कोऽर्थः ? यदि सर्वं द्रव्यं न व्याप्नोतीत्यर्थः, तदयुक्तम् । द्रव्यस्य सर्वशब्दाविषयत्वाभ्युपगमात् । अथाश्रयस्यैकदेशे वर्त्तत इति तदप्ययुक्तं तस्यैकदेशासम्भवात् । तदारम्भकेऽवयवे वर्त्तत इति चेत्, यद्येवमवयवानामेव रक्तत्वादवयविरूपमरक्तमिति रक्तारक्तं समं दृश्येत । किंच योऽप्यसौ तदारम्भकोऽवयवः स यद्यवयविरूपस्तदा तत्राप्येकदेशवृत्तित्वं संयोगस्येति तुल्यः पर्यनुयोगः । अथाणुरूपस्तदाऽतीन्द्रियत्वादणूनां तदाश्रितोऽपि संयोगोऽतीन्द्रिय एवेति रक्तोपलम्भो न स्यात् । स्यान्मतं यथा व्याप्तिरङ्गुलिरूपस्याश्रयोपलब्धावेवोपलब्धिरुच्यते नैवं संयोगस्याश्रयोपलब्धावेवोपलब्धिरिति ततोऽसावव्याप्यवृत्तिरुच्यत इति । तदेतदसम्यक् । न हि संयोगस्याश्रयानुपलब्धावुपलब्धिरस्ति । यथा घटपिशाचसंयोगस्य, ततश्च रागस्याप्यदृष्टाश्रयस्यानुपलब्धेराश्रयोपलब्धावेवोपलब्धिरिति सोऽप्येवं व्याप्यवृत्तिर्भवेत् । स्यादेतत्—अवयवान्तरेष्वरक्तेषु समवेतस्य द्रव्यस्योपलब्धावपि न संयोगात्मकस्य रागस्योपलब्धिस्तेन नास्याश्रयोपलब्धावुपलब्धिरिति तदप्ययुक्तम् । एवं हि रक्तारक्तसमवेतस्यावयविन एकत्वाद्रक्तेऽप्यवयवे रागस्य तद्द्वारेणानुपलब्धिप्रसङ्गः, आश्रयोपलम्भेऽपि तस्यानुपलम्भात् । न चाश्रयोपलम्भादन्यसंयोगग्रहणाभ्युपायोऽस्ति । तस्मान्नैकरूपो

विषयो युक्तः। अनेकरूपोऽपि भवनसामर्थ्यादणुसंचयात्मक एवावभिद्यते। संभवद्वयवस्यैकत्वायोगात्। अतः सिद्धा घटादीनामणुरूपता तेन नीलादि परमाणूनामाकार इति सिद्धम्। अन्यस्यैकरूपस्य विषयस्यासम्भवात्॥ ६०१॥ ६०२॥

यच्चोक्तं "न चाणु वचनं भवे"दिति तत्राह—अविज्ञातार्थतत्त्व इत्यादि।

**अविज्ञातार्थतत्त्वस्तु पिण्डमेकं च मन्यते।**
**लोकस्तत्कल्पितापेक्षः परमाणुरिहोच्यते॥ ६०३॥**

**तत्कल्पितापेक्ष** इति। तस्मिन्कल्पिते सूत्रे अपेक्षा यस्येति विग्रहः॥ ६०३॥

परिहारान्तरमाह—**निमित्ते**त्यादि।

**निमित्तनिरपेक्षा वा संज्ञेयं तादृशि स्थिता।**
**सङ्केतान्वयिनी यद्वन्निर्वित्तेऽपीश्वरश्रुतिः॥ ६०४॥**

**तादृशी**ति। अनंशेऽप्रतिघे। यथा दरिद्रेऽपीश्वरश्रुतिः सङ्केतवशादैश्वर्याख्यं निमित्तमन्तरेणैव प्रवर्तते, तद्वदियमप्यणुश्रुतिरित्यदोषः॥ ६०४॥

एवं तावत्सामान्येनैवावयवैरारब्धमनारब्धं वा स्थूलमेकं द्रव्यं न युज्यत इति प्रतिपादितम्। इदानीं येनावयवी प्रारब्ध इष्यते, तस्य विशेषेण दूषणमाह—**एके**त्यादि।

**एकावयव्यनुगता नैव तन्तुकरादयः।**
**अनेकत्वाद्यथासिद्धाः कटकुड्यकुटादयः॥ ६०५॥**
**यदि वाभिमतं द्रव्यं नानेकावयवाश्रितम्।**
**एकत्वादणुवद्वृत्तेरयुक्तिर्बाधिका प्रमा॥ ६०६॥**

प्रयोगः—यदनेकं न तदेकद्रव्यानुगतम्, यथा कटकुड्यादयो बहवो नैकद्रव्यानुगताः, अनेके चामी तन्तुकरादय इति व्यापकविरुद्धोपलब्धेः। अथवा—यदेकं तदेकद्रव्याश्रितं यथैकः परमाणुः एकं चावयविसंज्ञितं द्रव्यमिति व्यापकविरुद्धोपलब्धिप्रसङ्गः। प्रसङ्गसाधनं चैतत्। प्रयोगद्वयेऽपि विपर्यये बाधकं प्रमाणमाह—**वृत्तेरयुक्तिर्बाधिका प्रमे**ति। अवयवेषु याऽवयविनो वृत्तिस्तस्या अयोगः प्रमाणैरघटनं तदत्र बाधकं प्रमाणम्॥ ६०५॥ ६०६॥

कथं पुनरयोग इत्याह—**तद्धी**त्यादि।

**तद्ध्येकवृत्तिभाजैव रूपेणावयवान्तरे।**
**वर्त्तेत यदि वाऽन्येन न प्रकारान्तरं यतः॥ ६०७॥**

**तत्र तेनैव नान्यत्र वृत्तिरस्यावकल्पते ।**
**तेन क्रोडीकृतत्वेन नान्यथा तत्र वृत्तिमत् ॥ ६०८ ॥**

तदेकं द्रव्यमेकावयवक्रोडीकृतं यत्तस्य रूपं तेनैवावयवान्तरेषु वर्त्तते, यद्वाऽन्येनेति पक्षद्वयं, नहि वस्तुतस्तत्त्वान्यत्वाभ्यामन्यत्प्रकारान्तरमस्ति । तत्र न तावदाद्यः पक्षस्तेनैवावयवेन तस्य क्रोडीकृतत्वात्कुतोऽवयवान्तरे वर्त्तितुमस्यावसरस्तदानीमेव स्यात् । अन्यथा हि यद्यन्यत्रापि वर्त्तेत, तदाऽत्राभिमते द्रव्ये तस्य वृत्तिः सर्वात्मना न भवेत् । नहि तस्यापरः स्वभावोऽस्ति, येनान्यत्रापि वर्त्तेत, एकत्वहानिप्रसङ्गात् ॥ ६०७ ॥ ६०८ ॥

प्रमाणं रचयन्नाह—नैवेत्यादि ।

**नैव धात्र्यन्तरक्रोडमध्यास्ते हि यथा शिशुः ।**
**एकक्रोडीकृतं द्रव्यं नाश्रयेत तथाऽपरम् ॥ ६०९ ॥**

प्रयोगः—यदेकवस्तुक्रोडीकृतं वस्तु न तत्तदानीमेवान्यत्र वर्त्तते । यथैकधात्रीक्रोडीकृतः शिशुर्न धात्र्यन्तरक्रोडमध्यास्ते एकावयवक्रोडीकृतं च द्रव्यमिति व्यापकविरुद्धोपलब्धिः । द्रव्यं नाश्रयेत तथापरमिति प्रमाणफलकथनम् ॥ ६०९ ॥

साध्यविपर्ययेऽस्य बाधकं प्रमाणमाह—तत्संबद्धस्वभावस्येति ।

**तत्संबद्धस्वभावस्य ह्यतद्देशेऽपि वृत्तितः ।**
**प्राप्तं तदेकदेशत्वमैकात्म्यं चाविभागतः ॥ ६१० ॥**
**अन्येनैवात्मना वृत्तौ नैकोऽनेकव्यवस्थितः ।**
**सिद्ध्येत्स्वभावभेदस्य वस्तुभेदात्मकत्वतः ॥ ६११ ॥**

अभिमतावयवसंबद्धस्वभावस्य हि द्रव्यस्यातद्देशेऽप्यवयवान्तरे यदि वृत्तिः स्यात्तदा तेषामवयवानामेकदेशता स्यात्, ततश्चैकात्म्यमेकस्वभावताऽवयवानां प्राप्ता । कस्मात्? अविभागतः—अविभक्तरूपतयाऽवस्थितत्वात् । अन्यथा हि विभक्तरूपावस्थितौ सत्यां नैकदेशत्वं भवेत्, अथान्येन स्वभावेनेति द्वितीयः पक्षस्तदैकोऽनेकव्यवस्थित इति न सिद्ध्येत्, स्वभावान्तरस्यान्यत्र वृत्तेः स्वभावभेदात्मकत्वाच्च वस्तुभेदस्य ॥ ६१० ॥ ६११ ॥

उद्योतकरस्त्वाह—आश्रयाश्रितधर्मनिर्देशमात्रमेतत्, अवयव्यवयवेषु प्रवर्त्तत इति, आश्रितभावलक्षणा हि समवायरूपा प्राप्तिरुच्यत इति तत्राह—**समवायात्मिकेत्यादि ।**

**समवायात्मिका वृत्तिस्तस्य तेष्विति चेन्ननु।**
**तस्यामपि विचारोऽयं कोपेनैव प्रधावति॥ ६१२॥**

तस्यामप्येवंरूपायां वृत्तावयमनन्तरोदितः—किमेकावयवसमवेतेनैव स्वभावेनावयवान्तरेषु वर्त्तते, अथान्येनेति विचारः कुमतिरचितदोषजालमसहमानकोपादिवाभिधावति॥ ६१२॥

एवं तावत्कृत्स्नैकदेशविकल्पमकृत्वा वृत्तिरपास्ता। संप्रत्युपादाय प्रज्ञप्तिविहितेन प्रकारेण वृत्तिनिषेधमाह—यद्वेत्यादि।

**यद्वा सर्वात्मना वृत्तावनेकत्वं प्रसज्यते।**
**एकदेशेन चानिष्ठा नैको वा न कचिच्च सः॥ ६१३॥**

कदाचित्तद्द्रव्यं प्रत्येकमवयवेषु सर्वात्मना वर्त्तते, एकदेशेन वा। यदि सर्वात्मना तदा यावन्तोऽवयवास्तावन्तस्तस्यात्मानः प्राप्नुवन्ति, नहि प्रत्यवयवं तस्य स्वभावाभेदेऽसति सर्वात्मना वृत्तिरस्ति। असंविद्यमानेनात्मना वृत्त्यसंभवात्। ततश्च सर्वात्मना वृत्तेर्युगपदनेककुण्डादिव्यवस्थितकुवलयादिवदनेकत्वमवयविनः प्राप्नोति। अथैकदेशेनेति पक्षस्तदाऽनवस्था स्यादेकदेशानाम्। तथाहि यैरेकदेशैस्तद्द्रव्यमवयवेषु वर्त्तते तेऽपि तस्यैकदेशा इति, तेष्वप्यनेन वर्त्तितव्यम्, तथैवापरेष्वित्यनिष्ठा। अथापि स्याद्यैरसावेकदेशैरवयवेषु वर्त्तते। ते तस्य स्वात्मभूता एव नार्थान्तरभूतास्तद्व्यतिरेकेण चापरेषामेकदेशानामभावादतो नानिष्ठा भविष्यतीत्याशङ्क्याह—**नैको** वेति। एवं हि सत्येकोऽवयवी न स्यादवयवप्रचयमात्ररूपत्वात्तस्य। तथाच सति दृष्टपाण्यादिसमुदायमात्रात्मक एवास्तां वस्तु, किमपरैस्तस्य स्वात्मभूतैरवयवैः परिकल्पितैः। दोषान्तरमप्याह—**न कचिच्च स** इति। वृत्तः स्यादिति शेषः। एतदुक्तं भवति। यद्येकदेशाः प्रत्येकावयविनः स्युस्तदाऽवयवे ह्यवयवी वृत्तः स्यात्। यावता नैकदेशाः प्रत्येकमवयविनः, तेषामेकदेशत्वहानिप्रसङ्गात्। नचापरोऽवयवी स्वरूपेणास्ति। तत्कथमवयवेष्वसौ वृत्तो नाम॥ ६१३॥

स्वातन्त्र्येणेत्यादिना शङ्करस्वामिनः परिहारमाशङ्कते—

**स्वातन्त्र्येण प्रसङ्गेन साधनं यत्प्रवर्त्तते।**
**स्वयं तदुपलब्धौ हि सत्यं सङ्गच्छते न तु॥ ६१४॥**
**नच कार्त्स्न्यैकदेशाभ्यां वृत्तिः कचन लक्षिता।**
**यस्या असंभवाद्द्रव्यमसत्स्यादपरोऽपि च॥ ६१५॥**

दृष्टौ वा क्वचिदेतस्या द्रव्यादावनिवारणम् ।
अथ तस्मिन्नदृष्टौ तु भेदे प्रश्नो न युज्यते ॥ ६१६ ॥
एतावत्तु भवेद्वाच्यं वृत्तिर्नास्तीति तच्च न ।
युक्तं प्रत्यक्षतः सिद्धेरिहेदमिति बुद्धितः ॥ ६१७ ॥
प्रत्यक्षं न तदिष्टं चेद्बाधकं किञ्चिदुच्यताम् ।
रूपादिचेतसोऽपि स्यान्नैव प्रत्यक्षताऽन्यथा ॥ ६१८ ॥

स ह्याह—स्वातन्त्र्येण प्रसङ्गमुखेन वा यत्साधनं क्रियते तत्स्वयमुपलब्धौ सत्यां संगच्छते, अन्यथा ह्यसिद्धता दोषः स्यात्, नच भवता क्वचिदप्येकस्यानेकस्मिन्कात्स्न्यैकदेशाभ्यां वृत्तिरुपलब्धा, यस्या वृत्तेरसंभवादवयविद्रव्यमसत्स्यात् । सति संभवेऽपरोऽपि वा भवेदवयवोऽवयवी चेति । अथ क्वचिदेवंभूता वृत्तिरुपलक्षिता भवेत्तदा तद्वदेव द्रव्यादावपि सा भविष्यतीत्यप्रतिषेधः । अथ न दृष्टा सा वृत्तिस्तदा किमेकदेशेनाहोस्वित्सर्वात्मनेत्येवं भेदप्रश्नो न युज्यते, सिद्धे हि धर्मिणि विशेषप्रतिषेधो युक्तः । यदा तु धर्म्येवासिद्धस्तदा तस्यैव प्रतिषेधो ज्यायान्, तेनैतावदेव वक्तव्यं वृत्तिरेव नास्तीति, नतु विशेषप्रतिषेधः, तच्च न युक्तं प्रत्यक्षत एवावयवेष्ववयविनो वृत्तिसिद्धेः । किंभूतात्प्रत्यक्षादित्याह—इहेदमिति बुद्धित इति । इह तन्तुष्विदं वस्त्रादीत्येवंभूतात्प्रत्यक्षादित्यर्थः । अथापि स्यात्—प्रत्यक्षत्वमस्या बुद्धेरसिद्धमिति । यद्येवं किंचिदत्र बाधकं प्रमाणं वक्तव्यम् । यतोऽप्रत्यक्षता स्यात् । अथासत्यपि बाधके प्रमाणे प्रत्यक्षत्वमस्या न भवेदेवं तर्हि रूपादिविज्ञानस्यापि भवदीयस्य प्रत्यक्षत्वं न भवेद्विशेषाभावात् ॥ ६१४ ॥ ६१५ ॥ ६१६ ॥ ॥ ६१७ ॥ ६१८ ॥

तदत्रेत्यादिना प्रतिविधत्ते ।

तदत्र वृत्तिर्नास्तीति प्रागभेदेन साधितम् ।
इहेत्यस्ति नच ज्ञानं तद्रूपाप्रतिभासनात् ॥ ६१९ ॥

तद्ध्येकवृत्तिभाजैवेत्यादिना प्राक् सामान्येनैवानेकस्मिन्नेकस्य वृत्तिरपास्ता । यच्चेदमुच्यते प्रत्यक्षत एव वृत्तिः सिद्धा 'इहेदमिति बुद्धित' इति, तदप्यलौकिकम् । नहीह शृङ्गे गौरिह तन्तुषु पट इत्येव लोके विकल्पिकाऽपि धीः प्रवर्त्तते । किं तर्हि?

इह गवि शृङ्गं पटे तन्तव इति । नाप्यध्यक्षचेतसि तन्त्वादिसमवेतं तद्व्यतिरेकि व-स्त्रादिरूपमाभासते । नच विवेकेनाप्रतिभासिते सतीदमिह वर्त्तत इति धीर्भवेत् । नहि कुण्डादौ विवेकिनामप्रतिभासमाने पयसि भवति सलिलमिहेति प्रत्ययः॥ ६१९॥

यच्चोक्तं 'नच कार्त्स्न्यैकदेशाभ्यां वृत्तिः क्वचन लक्षिते'ति तत्राह—**कृत्स्नैकदे-शशब्दाभ्या**मित्यादि ।

**कृत्स्नैकदेशशब्दाभ्यामयं चार्थः प्रकाश्यते ।**
**नैरंश्येनास्य किं वृत्तिः किं वा तस्यान्यथैव सा ॥ ६२० ॥**
**यथा पात्रादिसंस्थस्य श्रीफलादेर्यथाऽथवा ।**
**अनेकासनसंस्थस्य चैत्रादेरुपलक्षिता ॥ ६२१ ॥**

कृत्स्नशब्देन हि यादृशं स्वरूपमनंशं किं तथैव नैरंश्येन सर्वावयवेषु तस्य वृत्ति-र्यथा क्वचिद्भाजनावस्थितस्य श्रीफलादेरुपलक्षितेत्ययमर्थः प्रकाश्यते, आहोस्विद-न्यथा यथाऽनेकपीठाधिशयितस्य चैत्रादेरुपलक्षितेत्ययमेकदेशशब्देन प्रकाश्यत इति । यत्किंचिदेतत् । यदप्युद्योतकारेणोक्तम्—एकस्मिन्नवयविनि कृत्स्नैकदेशशब्द-प्रवृत्त्यसंभवादयुक्तोऽयं प्रश्नः किमेकदेशेन वर्त्तेताथ कृत्स्नो वर्त्तत इति । कृत्स्नमिति खल्वशेषाभिधानम्, एकदेश इति चानेकत्वे सति कस्यचिदभिधानम्, ताविमौ कृ-त्स्नैकदेशशब्दावेकस्मिन्नवयविन्यनुपपन्नाविति तदप्यनेनैव प्रत्युक्तम् । तथाच लोके कृत्स्नः पदः कुण्डे वर्त्तते एकदेशेन वेत्येवं पदादिषु कृत्स्नैकदेशशब्दप्रवृत्तिर्दृश्यत एव । नचेयमुपचरितेति युक्तम्, अस्खलद्वृत्तित्वादिति प्रागभिहितमेतत् ॥ ६२० ॥ ॥ ६२१ ॥

एवं वायुपर्यन्तं चतुर्विधं द्रव्यमपास्तम् । आत्माख्यं तु प्रागेवात्मपरीक्षायां निर-स्तम् । इदानीमाकाशकालदिङ्मनसां प्रतिषेधार्थमाह—**समाश्रिता** इत्यादि ।

**समाश्रिताः क्वचिच्छब्दा विनाशित्वादिहेतुतः ।**
**घटदीपादिवत्तच्च किल व्योम भविष्यति ॥ ६२२ ॥**

तत्राकाशाख्यं तावद्द्रव्यं परेण साध्यते—अस्त्याकाशाख्यं द्रव्यं नित्यमेकं भुवि शब्दलिङ्गं, शब्दोऽस्य गुणत्वाल्लिङ्गम् । प्रयोगः—ये ये विनाशित्वोत्पत्तिमत्त्वादिध-र्मोपेतास्ते क्वचिदाश्रिताः, यथा घटदीपादयः, तथाचामी शब्दाः, तस्मात्क्वचिदाश्रि-तैरेभिर्भवितव्यम्, योऽसावाश्रयोऽमीषां स सामर्थ्याद्व्योम—आकाशं भविष्यति ।

तथा ह्ययंशब्दो न पृथिव्यादीनां चतुर्णां गुणो युक्तः, प्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वात्, अयावद्द्रव्यभावित्वात्, आश्रयादन्यत्रोपलब्धेश्च । यथोक्तधर्मविपरीता हि स्पर्शवतां गुणा दृष्टाः । प्रत्यक्षत्वे सतीति विशेषणं पाकजैः परमाणुगतैरनेकान्तत्वपरिहारार्थम् । बाह्येन्द्रियप्रत्यक्षत्वादात्मान्तरग्राह्यत्वादहङ्कारेण विभक्तग्रहणाच्च नात्मनो गुणः । आत्मगुणानां हि सुखादीनामेतद्वैपरीत्यदर्शनात् । श्रोत्रग्राह्यत्वाच्च न दिक्कालमनसाम् । अतः पारिशेष्याद्गुणो भूत्वाऽऽकाशस्य लिङ्गम् । तच्चाकाशं शब्दलिङ्गाविशेषाद्विशेषलिङ्गाभावादेकं सर्वत्रोपलभ्यमानगुणत्वात्—विभुगुणवत्त्वात् । अनाश्रितत्वाच्च द्रव्यम् । अकृतकत्वान्नित्यमित्येषा प्रक्रिया परेषाम् ॥ ६२२ ॥

आदित्यादीत्यादिना कालसाधनमाह—

**आदित्यादिक्रियाद्रव्यव्यतिरेकनिबन्धनम् ।**
**परापरादिविज्ञानं घटादिप्रत्ययो यथा ॥ ६२३ ॥**
**वलीपलितकार्कश्यगत्यादिप्रत्ययादिदम् ।**
**यतो विलक्षणं हेतुः स च कालः किलेष्यते ॥ ६२४ ॥**

द्रव्यशब्देन वलीपलितादयो ग्रहीतव्याः । परः पिता, अपरः पुत्रः, युगपत्, चिरं, क्षिप्रं, क्रियते, कृतं, करिष्यते चेति यदेतत्परापरादिज्ञानं तदादित्यादिक्रियाद्रव्यव्यतिरिक्तपदार्थनिबन्धनम्, वलीपलितादिप्रत्ययविलक्षणत्वात्, घटादिप्रत्ययवत् । यो हेतुरस्य स सामर्थ्यात्कालः । तथाहि—न तावद्देशकृतोऽयं परापरादिप्रत्ययः । परदिग्भागावस्थितेऽपि स्थविरे पर इति ज्ञानोत्पत्तेः । तथाऽपरदिग्भागावस्थायिन्यपि पुत्रेऽपर इति । नापि वलीपलितादिकृतः, तत्प्रत्ययविलक्षणत्वात् । नापि क्रियाकृतः, तज्ज्ञानविलक्षणत्वादेव । तथाच सूत्रम्—अपरं परं युगपदयुगपच्चिरं क्षिप्रमिति काललिङ्गानीति । नित्यत्वैकत्वादयो धर्मा आकाशवदेवास्य बोद्धव्याः ॥ ६२३ ॥ ६२४ ॥

दिक्प्रसाधनार्थमाह—पूर्वापरादिबुद्धिभ्य इति ।

**पूर्वापरादिबुद्धिभ्यो दिगेवमनुमीयते ।**
**क्रमेण ज्ञानजात्या च मनसोऽनुमितिर्मता ॥ ६२५ ॥**
**चक्षुरादिविभिन्नं च कारणं समपेक्षते ।**
**क्रमेण जाता रूपादिप्रतिपत्ती रथादिवत् ॥ ६२६ ॥**

मूर्त्तं द्रव्यमवधिं कृत्वा मूर्त्तेष्वेव द्रव्येषु तस्मादिदं पूर्वेण, दक्षिणेन, पश्चिमेन उत्तरेण, पूर्वदक्षिणेन, दक्षिणापरेण, अपरोत्तरेण, उत्तरपूर्वेण, अधस्तादुपरिष्टादिति दश प्रत्यया अमी यतो भवन्ति सा दिगिति । तथाच सूत्रं—इत इदमिति यतस्तद्दिशो लिङ्गमिति । यत एते विशेषप्रत्ययाः, नच विशेषप्रत्यया आकस्मिका युक्ताः, नच परस्परं मूर्त्तद्रव्यव्यपेक्षा, इतरेतराश्रयत्वेनोभयाभावप्रसङ्गात्, तस्मादन्यनिमित्तासम्भवाद्दिश एतानि लिङ्गानि तस्याश्च दिशः कालवदेकत्वविभुत्वादयो गुणा बोद्धव्याः । एकत्वेऽपि दिशः कार्यविशेषात्प्राच्यादिभेदेन नानात्वम् । प्रयोगः—यदेतत्पूर्वापरादिज्ञानं तन्मूर्त्तद्रव्य(भिन्न ?)पदार्थनिबन्धनम्, तत्प्रत्ययविलक्षणत्वात्सुखादिज्ञानवदिति । मनसो लिङ्गमाह—**क्रमेणे**त्यादि । युगपदनेकेन्द्रियार्थसन्निकर्षसान्निध्येऽपि क्रमेण ज्ञानोत्पत्तिदर्शनादस्तीन्द्रियार्थव्यतिरिक्तं कारणान्तरं यस्य सन्निधानासन्निधानाभ्यां ज्ञानस्योत्पत्त्यनुत्पत्ती भवत इति । तस्मात्क्रमेण ज्ञानजात्या—ज्ञानोत्पत्त्या, मनसोऽनुमितिः क्रियते । तथाच सूत्रम्—युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति । प्रयोगः—येयं रूपादिप्रतिपत्तिः सा चक्षुरादिव्यतिरिक्तकारणापेक्षिणी, क्रमेण जायमानत्वात्, रथादिवदिति ॥ ६२५ ॥ ६२६ ॥

उपात्तादीत्यादिना प्रतिविधत्ते ।

**उपात्तादिमहाभूतहेतुत्वाङ्गीकृतेर्ध्वनेः ।**
**सिद्धा एवाश्रिताः शब्दास्तेष्वित्याद्यमसाधनम् ॥ ६२७ ॥**

यदि सामान्येनाश्रितत्वमात्रमेषां साध्यते शब्दानां तदा सिद्धसाध्यता हेतोः । तथाहि—शब्दा उपात्तानुपात्तमहाभूतहेतुका इष्यन्ते । तेषु च भूतेषु तत्कार्यतया समाश्रिता एव । तत्प्रतिबद्धात्मलाभतया कार्याणां कारणाश्रितत्वात् । उपात्तानि—चित्तचैत्तैः स्वीकृतानि । आदिशब्देनानुपात्तमहाभूतहेतुकत्वपरिग्रहः । **ते-ष्विति** । उपात्तादिमहाभूतेषु । **इतीति** । तस्मादित्यर्थः । **आद्यमिति** । 'समाश्रिताः कचिच्छब्दा' इत्यादिना यदुक्तं तदसाधनं सिद्धसाध्यतादोषादिति भावः ॥ ६२७ ॥

अथामूर्त्तनित्यैकविभुद्रव्यसमवेतत्वेनामीषामाश्रितत्वं विशिष्टमेव साधयितुमिष्टं तदा साध्यान्वितस्य दृष्टान्तस्याभावादनैकान्तिकता हेतोरित्येतद्दर्शयति—**एके**त्यादि ।

**एकव्यापिध्रुवव्योमसमवायस्तु सिद्ध्यति ।**
**नैषामन्वयवैकल्यादक्रमाद्यासितस्तथा ॥ ६२८ ॥**

नैषामिति । सिध्यतीति पूर्वेण संबन्धः । प्रतिज्ञायाश्चानुमानविरोधित्वमिति दर्शयति—अक्रमाद्याप्तितस्तथेति । यथोक्तं नभःसमवायित्वमेषां न सिद्ध्यतीति संबन्धः । यदि हि नित्यैकनभोद्रव्यसमवेता अमी स्युः, तदा सकृदुत्पन्नानेकशब्दवदतत्काला अपि शब्दा अभिमत एव काले स्युः, अविकलकारणत्वात्, एकाश्रयत्वाच्च । नच नित्यस्य परापेक्षास्तीति प्रतिपादितमेतत् । नचाप्यनुपकारिणः समवायित्वं युक्तमतिप्रसङ्गात् । तदेवमक्रमत्वप्रसङ्गः । आदिशब्देन सर्वपुरुषैर्ग्रहणादिदोषप्रसङ्गश्च । तथाह्याकाशात्मकमेव श्रोत्रं नभश्चैकमेव, ततश्च तत्प्राप्तानां सर्वेषामपि शब्दानां श्रवणं भवेत्, नहि निर्विभागत्वेन तस्यायं प्रतिनियमो युक्तः, इदमात्मीयं श्रोत्रमिदं परकीयमिति । स्यान्मतम्—तदीयादृष्टाभिसंस्कृता या कर्णशष्कुली तत्परिच्छिन्नस्यैवाकाशस्य श्रोत्रत्वमत एव न मुखनासिकादिविवरान्तरेण शब्दोपलम्भो जायते, तस्या एव च कर्णशष्कुल्या उपघाताद्बाधिर्यादिर्व्यवस्थाप्यत इति । एतदयुक्तमेव, निरंशतयाऽऽकाशस्यैवंविधविभागस्यायोगात् । नच परिकल्पिता अवयवविभागा भाविकवस्तुविभागसंसाध्यामर्थक्रियामारोपवशात्संपादयितुमीशते । नहि जलमनल इत्युपचर्यमाणं ज्वलति दहति वा । अथ मतमाकाशस्य(स्यैक ?) देश इति संयोगस्याऽव्याप्यवृत्तित्वमु(त्वादु ?)च्यत इति । एतदपि प्रत्युक्तमेव । किंच—घटकर्णशष्कुल्यादयोऽप्यभिन्नैकव्योमसंसर्गितया समानदेशा भवेयुः । येनैव हि व्योमस्वभावेनैकः संयुज्यते तेनैवापरेऽपीति, ततश्चाभिमतदेशभाविन एवापरेऽपि घटादयः स्युः, तत्संयुक्तस्वभावाकाशसंयोगित्वात्, तद्देशावस्थितघटादिवत् । अतएव शब्दानामप्येकदेशत्वं भवेत्, ततश्च दूरासन्नतरदेशभेदावस्थाऽतिप्रतीता येयं पदार्थानां केषांचित्सा विरोधिनी स्यादित्येवमादयो दोषा बहवः प्रसर्पन्ति ॥ ६२८ ॥

कालदिक्साधनयोरपि सामान्येन सिद्धसाध्यता विशेषणान्वयासिद्धिर्हेतोः प्रतिज्ञायाश्चानुमानबाधेति दर्शयति—विशिष्टेत्यादि ।

**विशिष्टसमयोद्भूतमनस्कारनिबन्धनम् ।**
**परापरादिविज्ञानं न कालान्न दिशश्च तत् ॥ ६२९ ॥**
**निरंशैकस्वभावत्वात्पौर्वापर्याद्यसम्भवः ।**
**तयोः संबन्धिभेदाच्चेदेवं तौ निष्फलौ ननु ॥ ६३० ॥**

विशिष्टसमयः—पौर्वापर्यादिनोत्पन्नेष्वेवार्थेषु पूर्वापरादिसङ्केतः, तदुद्भूतो मन-

स्कारः—आभोगः स निबन्धनमस्येति तथोक्तम्। अतएव नेतरेतराश्रयदोषः, विशिष्टपदार्थसङ्केतनिबन्धनत्वादस्य ज्ञानस्येति। अतः कारणमात्रे साध्ये सिद्धसाध्यता, विशेषेण साधनेऽनुमानबाधा, अनन्वयदोषश्च पूर्ववदिति सूचयन् हेतोश्चेष्टविपरीतसाधनाद्विरुद्धतेति दर्शयति—**निरंशे**त्यादि। **तयो**रिति। दिक्कालयोः। परापरादिज्ञानस्य निरंशैकदिक्कालाख्यपदार्थनिबन्धनत्वं साधयितुमिष्टं, तच्च न सिध्यति। तथाहि—स्वाकारानुरूपं प्रत्ययमुत्पादयन् विषयो भवति। नच निरंशस्य पौर्वापर्यादिविभागः संभवति, येन तत्कृतं पौर्वापर्यादिज्ञानं भवेत्। अत इष्टविपरीतसाधनाद्विरुद्धो हेतुः। **संबन्धिभेदा**च्चेदित्यनेन परस्योत्तरमाशङ्कते। अथ मतम्—दिक्कालसंबन्धिनो भावा बाह्याध्यात्मिकाः प्रदीपशरीरादयः, तेषां पौर्वापर्यादि विद्यते, ततस्तयोरपि दिक्कालयोः संबन्धिगतमेतत्पौर्वापर्यादि निर्दिश्यते, तस्मान्न विरुद्धता हेतोरिति भावः। अत्रोत्तरमाह—**एवं तौ निष्फलौ नन्वि**ति। एवं हि कल्प्यमाने तौ दिक्कालौ निष्फलौ स्याताम्। तत्साध्याभिमतस्य कार्यस्य तैरेव संबन्धिभिर्निष्पादितत्वात्। तथाहि—कालः पूर्वापरक्षणलवनिमेषकाष्ठाकलामुहूर्त्ताहोरात्राऽर्द्धमासादिप्रत्ययप्रसवहेतुः। दिक्क पूर्वोत्तरादिव्यवस्थाहेतुरिष्यते। अयं च भेदः सकलस्तयोर्न स्वात्मनि विद्यते। भेदेषु पुनरस्तीति व्यर्थैव तत्परिकल्पना॥ ६२९॥ ॥ ६३०॥

मनःसाधनहेतोरपि सामान्येन कारणमात्रे साध्ये सिद्धसाध्यतेति दर्शयति—**चक्षुरादी**त्यादि।

**चक्षुराद्यतिरिक्तं तु मनोऽस्माभिरपीष्यते।**<br>
**षण्णामनन्तरोद्भूतप्रत्ययो यो हि तन्मनः॥ ६३१॥**<br>
**नित्ये तु मनसि प्राप्ताः प्रत्यया यौगपद्यतः।**<br>
**तेन हेतुरिह प्रोक्तो भवतीष्टविघातकृत्॥ ६३२॥**

विशेषेण तु नित्यैकमनस्साधनेऽनन्वयः प्रतिज्ञाया अनुमानबाधा विरुद्धता च हेतोर्दर्शयति—**नित्ये त्वि**त्यादि। **इष्टविघातकृ**दिति। चक्षुरादिव्यतिरिक्तानित्यकारणसापेक्षत्वसाधनात्, अन्यथा नित्यकारणत्वे सत्यविकलकारणत्वात्क्रमोत्पत्तिर्विरुध्येत चेतसाम्॥ ६३१॥ ६३२॥

तामेव च विरुद्धतां हेतोरुपहासपूर्वकं दृढीकुर्वन्नाह—**सौगते**त्यादि।

**सौगतापरनिर्दिष्टमनःसंसिद्ध्यसिद्धये ।**
**साकारमन्यथाऽऽवृत्तं मन्ये सूत्रमिदं कृतम् ॥ ६३३ ॥**

**इति द्रव्यपदार्थपरीक्षा ।**

एतदेवं मन्ये सौगततीर्थिकयोरभीष्टस्य मनसः सिद्ध्यसिद्ध्यर्थमिदं "युगपत् ज्ञानानुत्पत्तिर्मनसो लिङ्ग"मिति सूत्रम् । एकस्मिन्पक्षेऽकारप्रश्लेषादिति समुदायार्थः । अवयवार्थस्तूच्यते । सौगताश्चापरे च तीर्थिकास्तैर्निर्दिष्टे च ते मनसी चेति विग्रहः । तयोर्यथाक्रमं संसिद्ध्यसिद्धी संसिद्धिसहिता वाऽसिद्धिः, तदर्थं तन्निमित्तम् । कथं पुनरेकं सूत्रं विरुद्धमर्थद्वयं गमयतीत्याह—**साकार**मित्यादि । सहाकारेण वर्त्तत इति । परकीयमनोऽसिद्ध्यर्थमलिङ्गमिति प्रश्लिष्टाकारो निर्देशः । सौगतमनस्सिद्धयेऽन्यथा भवति—अनकारमित्यर्थः । साकारत्वानकारत्वे कथमेकस्य सिद्ध्यत इत्याह—**आवृत्त**मिति । आवृत्तिस्तत्र न्याय्येति यावत् ॥ ६३३ ॥

**इति द्रव्यपदार्थपरीक्षा ।**

गुणादीनां निषेधमाह—**द्रव्याणा**मित्यादि ।

**द्रव्याणां प्रतिषेधेन सर्व एव तदाश्रिताः ।**
**गुणकर्मादयोऽपास्ता भवन्त्येव तथा मताः ॥ ६३४ ॥**

गुणकर्मादयो विशेषपर्यन्ता द्रव्याणां प्रतिषेधादेवापास्ताः, तदाश्रितत्वादेषाम् । आश्रयाभावे चाश्रितानां परतन्त्रतयाऽवस्थानुपपत्तेः । **तथा मता** इति । तथा साक्षात्पारम्पर्येण वा द्रव्याश्रितत्वेनेष्टाः । तथाहि—गुणकर्मणी साक्षादेव द्रव्याश्रितत्वेनाभीष्टे । तथा च सूत्रम् । "द्रव्याश्रय्यगुणवान्संयोगविभागेष्वकारणमनपेक्ष" इति गुणलक्षणम् । "एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षं कारण"मिति कर्मलक्षणम् । **एकद्रव्य**मिति । एकद्रव्याश्रितमित्यर्थः । गुणास्तु केचिदनेकद्रव्यवर्त्तिनो भवन्ति, यथा—संयोगविभागादयः । सामान्यविशेषाश्च केचिद्द्रव्यवृत्तय एव, यथा—पृथिवीत्वादयः । गुणत्वकर्मत्वादयश्च द्रव्यसंबद्धगुणकर्मपदार्थवृत्तयः, महासामान्यं तु सत्ताख्यं द्रव्यादिपदार्थत्रयवृत्ति । तस्माद्द्रव्ये प्रतिषिद्धे सत्ययत्नेनैव गुणादयोऽपि निषिद्धा भवन्तीति । परिशिष्टपदार्थपरीक्षाफलं द्रव्यपरीक्षायामेव समाप्तमिति दर्शितं भवति ॥ ६३४ ॥

समवायप्रतिषेधस्तर्हि पृथगारब्धव्य इति चेदाह—**क कस्ये**त्यादि ।

**क कस्य समवायश्च संबन्धिन्यपहस्तिते ।**
**विशेषप्रतिषेधोऽयं तथापि पुनरुच्यते ॥ ६३५ ॥**

पञ्चपदार्थवृत्तिरूपो हि समवायो वर्ण्यते । द्रव्यादौ च संबन्धिनि पञ्चप्रकारेऽपहस्तिते क कस्य समवायो नैव कस्यचित्कचिदित्यर्थः । सर्वेषामाश्रयाश्रितानां प्रतिषिद्धत्वात् तत्र गुणानां तावद्विशेषप्रतिषेध उच्यते ॥ ६३५ ॥

तत्र "रूपरसगन्धस्पर्शाः सङ्ख्यापरिमाणानि पृथक्त्वसंयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नश्च गुणा" इति सूत्रम् । चशब्दाद्गुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दाश्च परिगृह्यन्ते । तत्र रूपं चक्षुर्ग्राह्यं पृथिव्युदकज्वलनवृत्ति । रसो रसनेन्द्रियग्राह्यः पृथव्युदकवृत्तिः । गन्धो घ्राणग्राह्यः पृथिवीवृत्तिः । स्पर्शस्त्वगिन्द्रियग्राह्यः क्षित्युदकज्वलनवायुवृत्तिः । एषां चतुर्णामाद्यानां रूपादीनां प्रतिषेधमाह—**द्रव्ये महती**त्यादि ।

**द्रव्ये महति नीलादिरेक एव यदीष्यते ।**
**रन्ध्रालोकेन तद्व्यक्तौ व्यक्तिर्दृष्टिश्च नास्य किम् ॥ ६३६ ॥**

महत्येव हि द्रव्ये समवेतानामुपलब्धिलक्षणप्राप्तत्वमतो **महती**त्याह । तत्र च द्रव्ये यद्येकमेवानवयवं नीलादि चतुर्विधमिष्यते, तदा सूक्ष्मेणाऽपि कुञ्चिकादिविवरवर्त्तिना प्रदीपाद्यालोकेन त्वपवरकादिस्थितपृथुतरघटादिद्रव्यसमवेतस्य नीलादिरूपस्याभिव्यक्तौ सत्यां सकलस्यैव यावद्द्रव्यवर्त्तिनो रूपादेरभिव्यक्तिरुपलब्धिश्च प्राप्नोति निरवयवत्वात् । नह्येकस्यावयवाः सन्ति, येनैकदेशाभिव्यक्तिर्भवेत् । रन्ध्रालोकेनेत्युपलक्षणम् । भुव एकदेशे जलेन गन्धस्याभिव्यक्तौ प्रदेशान्तरेप्यभिव्यक्त्युपलब्ध्योः प्रसङ्गः । ज्वालादेराम्रफलादेश्चैकदेशस्य स्पृष्टावास्वादने च तद्द्रव्यसमवायिनस्तावतः स्पर्शस्य रसस्य चोपलब्धिः स्यात् ॥ ६३६ ॥

स्यादेतद्भवत एव सकलस्य नीलादेरुपलब्ध्यभिव्यक्ती इत्याह—**न चे**त्यादि ।

**न च देशविभागेन स्थितो नीलादिरिष्यते ।**
**व्यज्यते यस्तदा तेन तस्य भेदोऽणुशस्ततः ॥ ६३७ ॥**

**तदे**ति । तस्मिन्काले । **तेने**ति । रन्ध्रालोकेन । **तस्ये**ति । नीलादेः । **अणुशः** स्वभेदेऽङ्गीक्रियमाणे पृथिव्यादिपरमाणुद्रव्यवदणुपरिमाणयोगित्वेन गुणवत्त्वाद्द्रव्यरूपतैव स्यात्, न गुणत्वम् । एवम्भूतानां चाणुशो भिन्नानां गुण इति संज्ञाकरणेन

नाग्नि विवादः। न चाणुत्वेऽप्याश्रितत्वाद्गुणत्वं युक्तम् । सदसतोराश्रयानुपपत्तेरतिप्रसङ्गाच्च। तथा ह्यवयविद्रव्यमवयवद्रव्याश्रितमिति तदपि गुणः स्यादिति भावः ॥ ६३७॥

तत्रैकादिव्यवहारहेतुरेकत्वादिलक्षणा सङ्ख्या, सा पुनरेकद्रव्या चानेकद्रव्या च, तत्रैकसङ्ख्यैकद्रव्या । अनेकद्रव्या तु द्वित्वादिसङ्ख्या । तत्रैकद्रव्यायाः सलिलादिपरमाण्वादिगतरूपादीनामिव नित्यत्वनिष्पत्तयो बोद्धव्याः । अनेकद्रव्यायास्तु—एकत्वेभ्योऽनेकविषयबुद्धिसहितेभ्यो निष्पत्तिरपेक्षाबुद्धिविनाशाद्विनाशः क्वचिदाश्रयविनाशादिति। इयं च द्विविधाऽपि सङ्ख्या किल प्रत्यक्षत एव सिद्धा । विशेषबुद्धेश्च निमित्तान्तरापेक्षत्वादनुमानतोपीति परो मन्यते। तत्रास्याः प्रतिषेधमाह—**अतद्रूपेत्यादि**।

**अतद्रूपपरावृत्तगजादिव्यतिरेकिणी।**
**न सङ्ख्या भासते ज्ञाने दृश्येष्टा नैव सास्ति तत् ॥ ६३८॥**

येषु हि समुच्चयादिव्यावृत्तेषु गजादिषु संज्ञा निवेशिता न तद्व्यतिरेकेणोपलब्धिलक्षणप्राप्ता सङ्ख्या ख्यातास्तीति सा शशविषाणवदसद्व्यवहारविषया । तथाह्यसौ दृश्यत्वेनेष्टा। तथा च सूत्रम्—"सङ्ख्यापरिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे कर्म च रूपिसमवायाच्चाक्षुषाणी"ति ॥ ६३८॥

नचापि विशेषबुद्धितः सङ्ख्यासिद्धिरिति दर्शयन्नाह—**इच्छारचितेत्यादि**।

**इच्छारचितसङ्केतमनस्कारान्वयं त्विदम्।**
**घटेष्वेकादिविज्ञानं ज्ञानादाविव वर्तते ॥ ६३९॥**
**अद्रव्यत्वान्न सङ्ख्याऽस्ति तेषु काचिद्विभेदिनी।**
**तज्ज्ञानं नैव युक्तं तु भाक्तमस्खलितत्वतः ॥ ६४०॥**

यथा ह्येकं ज्ञानं द्वे ज्ञाने इत्यादौ सङ्ख्यामन्तरेणाप्येकादिबुद्धिर्भवत्येवं घटादिष्वप्यसहायादिषु पदार्थेष्वेक इत्यादिः स्वेच्छया यः सङ्केतो विहितस्तत्र यो मनस्कार आभोगस्तदन्वयमेकादिज्ञानं भविष्यतीत्यनैकान्तिकमेतत् । नहि तेषु ज्ञानादिषु सङ्ख्याऽस्ति, एषामद्रव्यत्वात्। सङ्ख्यायाश्च गुणत्वेन द्रव्याश्रितत्वात्। अथ मतं गौणमिदं तेषु, ज्ञानमेकमिवैकं, साधर्म्यं चात्रासहायत्वादि (तत्राह ?)—**तज्ज्ञानमिति**। नैव ह्येतज्ज्ञानं भाक्तं युक्तमस्खलद्वृत्तित्वादस्य प्रत्ययस्य। नहि यथा वाहीको गौरिति

स्खलति प्रत्ययः, गौरिव गौर्नतु गौरेव साम्नाद्यभावादिति, न तथायं स्खलति, एकमिवैकं ज्ञानादि नत्वेकमेवेति । किं तर्हि यादृशी घटादिष्वस्खलिता बुद्धिर्भवति तादृशी ज्ञानादिष्वपि ॥ ६३९ ॥ ६४० ॥

स्यादेतन्न सादृश्यापेक्षमेतज्ज्ञानमुपवर्ण्यते । किन्तु यत्तेषामाश्रयभूतं द्रव्यं तद्गतैकत्वादिकादेकार्थसमवायित्वादेतद्गुणकर्मसमवायादिष्वेकादिज्ञानं भवतीति तदेतदाशङ्कयन्नाह—तद्द्रव्येत्यादि ।

**तद्द्रव्यसमवेताच्चेदेकत्वात्परिकल्प्यते ।**
**गुणादिष्वेकविज्ञानमेकार्थसमवायतः ॥ ६४१ ॥**

अत्रोत्तरमाह—अस्तुनामेत्यादि ।

**अस्तुनामैवमेकत्र ज्ञाने व्यासि(द्व्यादि ?)मतिस्तु कम् ।**
**एतेष्वपेक्षते हेतुं षट्पदार्थादिकेषु वा ॥ ६४२ ॥**
**एकार्थसमवायादेर्गौणोऽयं प्रत्ययो भवन् ।**
**तथा च स्खलितो यस्मान्माणवेऽनलबुद्धिवत् ॥ ६४३ ॥**

यदि हि तद्द्रव्यसमवेतादेकत्वादेरेतज्ज्ञानं तदाऽस्तु नामैकत्र ज्ञाने सुखादौ चैकात्मद्रव्यसमवायिन्येकमेकमिति ज्ञानम् । द्वे त्रीणि चत्वारि ज्ञानानीत्यादिज्ञानस्य तु को हेतुः, नहि तत्रैकात्मगतं द्वित्वाद्यस्ति । यच्चैतदुच्यते षट्पदार्थाः, सुखदुःखे, इच्छाद्वेषौ, पञ्चविधं कर्म, सामान्यं द्विविधं परमपरं च, एको भावः, एकः समवाय इति, तत्र को हेतुः । नहि तत्रैकार्थसमवायिनी सङ्ख्यास्ति, तस्माद्व्यापिनीत्वादियमपि कल्पना न युक्ता । किं चैकार्थसमवायोऽन्यो वा स्वमतिपरिकल्पितो हेतुरुच्यते । तथाऽप्येकार्थसमवायादेरयं भवन्प्रत्ययो गौणः स्याद्वस्त्वन्तराभावात् । ततस्तु स्खलितः स्याद्यथा माणवकेऽनलप्रत्ययस्तत्प्रवृत्तिनिमित्ताभावात्, नचैवं भवति तस्मात्पूर्वोक्तदोषानिवृत्तिरेव ॥ ६४२ ॥ ६४३ ॥

गजादीत्यादिनाऽविद्धकर्णोक्तं सङ्ख्यासिद्धये प्रमाणमाशङ्कते ।

**गजादिप्रत्ययेभ्यश्च वैलक्षण्यात्प्रसाध्यते ।**
**सङ्ख्याबुद्धिस्तदन्योत्था नीलवस्त्रादिबुद्धिवत् ॥ ६४४ ॥**

स ह्याह—सङ्ख्याप्रत्ययो गजतुरङ्गस्यन्दनादिव्यतिरिक्तनिबन्धनो गजादिप्रत्ययविलक्षणत्वान्नीलपटप्रत्ययवदिति । तदन्योत्थेति । तस्माद्गजतुरगस्यन्दनादेरन्यस्तदन्यस्तत उत्थानं यस्या इति विग्रहः ॥ ६४४ ॥

इच्छेत्यादिना प्रतिविधत्ते ।

**इच्छारचितसङ्केतमनस्काराद्युपायतः ।**
**तत्रेष्टसिद्धिर्बुद्ध्यादौ सङ्ख्यैतेनैव वा भवेत् ॥ ६४५ ॥**

गजादिव्यतिरिक्तस्य सङ्केतमनस्कारादेरान्तरस्य निमित्तत्वेनेष्टत्वात्सिद्धसाध्यतैव । आदिशब्देन सङ्केतस्मरणादिपरिग्रहः । अथ सङ्केताभोगादिव्यतिरिक्तपदार्थनिबन्धनं साधयितुमभिप्रेतं तदानैकान्तिकतेति प्रसङ्गोद्भावनव्याजेन दर्शयति—**बुद्ध्यादौ सङ्ख्यैतेनैव वा भवेदिति** । एतेनैव—तत्प्रत्ययविलक्षणत्वादित्यनेन । एका बुद्धिर्द्वे बुद्धी पञ्च कर्माणीत्यादावपि सङ्ख्या भवेत्—प्राप्नोति । तत्राप्येकादिबुद्धेस्तत्प्रत्ययविलक्षणत्वात् न च भवति, तस्मादनैकान्तिक इति भावः ॥ ६४५ ॥

किंच याऽनेकद्रव्या द्वित्वादिसङ्ख्या तस्या येऽयमेकत्वेभ्योऽनेकबुद्धिसहितेभ्यो निष्पत्तिर्वर्ण्यते भवद्भिः सा निर्निबन्धनेति दर्शयति—**बुद्ध्यपेक्षा** चेत्यादि ।

**बुद्ध्यपेक्षा च सङ्ख्याया निष्पत्तिर्यदि वर्ण्यते ।**
**सङ्केताभोगमात्रेण तद्बुद्धिः किं न संमता ॥ ६४६ ॥**

मात्रग्रहणमेकत्वद्वित्वादितत्सामान्यतत्सम्बन्धज्ञानव्यवच्छेदार्थम् । **तद्बुद्धिरिति** । सङ्ख्येयेषु द्वे त्रीणि चत्वारीत्यादिका बुद्धिः सङ्केताभोगमात्रेण किं न संमता । एवं ह्यदृष्टसामर्थ्यस्य हेतुत्वं न कल्पितं स्यादन्यथा हि हेतूनामनवस्था भवेत् । तथाह्यपेक्षा बुद्धिसद्भावे तद्गतान्वयव्यतिरेकानुविधानात्सैव कल्पयितुं युक्ता । अन्यथा हि हरीतकीं प्राप्य देवता विरेचयन्तीत्यपि कल्पनीयं भवेत् । नापि समुच्चयादिव्यावृत्तपदार्थव्यतिरेकेणोपलब्धिलक्षणप्राप्ताऽभिमता द्वित्वादयो दृश्यन्ते संगच्छन्ते वा, एकस्यानेकस्मिन्वृत्तेः प्रतिषिद्धत्वात् । सामान्यसमवाययोश्च निषेत्स्यमानत्वादिति भावः ॥ ६४६ ॥

महदित्यादिना परिमाणप्रतिषेधमाह—

**महद्दीर्घादिभेदेन परिमाणं यदुच्यते ।**
**तदप्यर्थे तथा रूपभेदादेव न किं मतम् ॥ ६४७ ॥**

परिमाणव्यवहारकारणं परिमाणं, तच्चतुर्विधं महदणु दीर्घं ह्रस्वमिति । तत्र महद्द्विविधं नित्यमनित्यं च । नित्यमाकाशकालदिगात्मसु परममहत्त्वं । अनित्यं त्र्यणुकादिद्रव्येषु । तथाऽण्वपि द्विविधं नित्यमनित्यं च । नित्यं परमाणु मनः सुपरिम-

ण्डलक्षणम् । अनित्यं द्व्यणुक एव । कुवलामलबिल्वादिषु च महत्स्वपि तत्प्रकर्षाभावमपेक्ष्य भाक्तोयं व्यवहारः । यादृशं ह्यामलके महत्परिमाणं न तादृशं कुवल इति । एवमन्यत्रापि योज्यम् । अत्र त्र्यणुकादिषु वर्त्तमानयोर्महत्त्वदीर्घत्वयोर्द्व्यणुके चाणुत्वह्रस्वत्वयोः को विशेषः? । उच्यते । तत्रास्ति महत्त्वदीर्घत्वयोः परस्परतो विशेषः । महत्सु दीर्घमानीयतां दीर्घेषु च महदानीयतामिति व्यवहारभेददर्शनात् । अणुत्वह्रस्वत्वयोस्तु विशेषस्तद्दर्शिनां योगिनां प्रत्यक्ष इत्येषा परेषां प्रक्रिया । एतच्च महदादि रूपादिभ्योऽर्थान्तरत्वेन सिद्धं तत्प्रत्ययविलक्षणबुद्धिग्राह्यत्वात्सुखादिवदिति परो मन्यते । तत्र यदि तावद्रूपादिविषयेन्द्रियबुद्धिविलक्षणप्रत्यक्षप्रत्ययग्राह्यत्वादिति हेत्वर्थोऽभिप्रेतस्तदा हेतोरसिद्धता । नहि तथातथाऽवस्थितरूपादिपदार्थव्यतिरेकेण महदादिपरिमाणमिन्द्रियबुद्धौ प्रतिभासमानमुपलक्ष्यते । अथ—अणु महदादीत्येवं या विकल्पिका बुद्धिः सा तत्प्रत्ययविलक्षणा बुद्धिरभिप्रेता । एवमप्यनैकान्तिकता हेतोर्विपक्षे बाधकप्रमाणाभावात् । नह्यस्याः परमार्थतः किंचिदपि ग्राह्यमस्ति साभिजल्पत्वात् । केवलं तेष्वेव रूपादिष्वेकदिङ्मुखादिप्रवृत्तेषु दृष्टेषु तद्विलक्षणेभ्यो रूपादिभ्यो भेदप्रतिपादनाय कृतसमयानुरोधान्महदित्यध्यवस्यन्ती जायत इति नातो वस्त्वन्तरसिद्धिः । अतएव चाऽस्या न रूपादिव्यतिरिक्तमवसेयमस्तीत्यसिद्धताऽपि हेतोः । प्रतिज्ञायाश्च प्रत्यक्षबाधा, प्रत्यक्षत्वेनेष्टस्य महदादे रूपत्वादिव्यतिरेकेणानुपलम्भात् । तस्मात्तदपि परिमाणमर्थे रूपादावेकदिङ्मुखादिप्रवृत्ते तस्यार्थस्यातथोद्भूताद्भेदमाश्रित्य किं न तादात्म्येनेष्टम् । एवं ह्यदृष्टायुक्तपदार्थकल्पना न कृता स्यादित्येवकारेण दर्शयति । तथाह्येकदिङ्मुखप्रवृत्ते भूयसि रूपादिके दृष्टे स्पृष्टे वा दीर्घमिति व्यवहरन्ति । तदपेक्षया चाल्पीयसि समुत्पन्ने ह्रस्वमिति । एवं महदादिष्वपि योज्यम् । रूपादिनिषेधवच्चैकानेकविकल्पाभ्यां महदादिनिषेधो वाच्यः ॥ ६४७ ॥

अपि च साध्याभावेऽपि हेतोर्वृत्तिदर्शनादनैकान्तिकता स्फुटतरेति दर्शयन्नाह—दीर्घेत्यादि ।

**दीर्घो प्रासादमालेति महती वेद्यते यथा ।**
**नहि तत्र यथारूपं परिमाणं प्रकल्पितम् ॥ ६४८ ॥**
**एकार्थसमवायेन तथा चेद्व्यपदिश्यते ।**
**न महत्त्वं न दैर्घ्यं च धामस्वस्ति विवक्षितम् ॥ ६४९ ॥**

तथाह्यसत्यपि भवत्परिकल्पिते महत्त्वादौ प्रासादमालादिषु महदादिप्रत्ययप्रसूतिरनुभूयते । नचेत्थं शक्यं वक्तुम् । यत्रैव प्रासादादिषु मालाख्यो गुणः समवेतस्तत्र महत्त्वादिकमपि, तेनैकार्थसमवायबलात्तथा महतीत्येवं तन्मालादि व्यपदिश्यत इति । तदेतदपि स्वसमयविरुद्धमिति दर्शयन्नाह—**न महत्त्वमित्यादि** । **धामस्विति** । प्रासादेषु । **विवक्षितमिति** । क्रोशार्धक्रोशादि परिमाणम् ॥ ६४८ ॥ ६४९ ॥

कस्मान्नास्तीत्याह—**प्रासादश्चेष्यत** इति ।

**प्रासादश्चेष्यते योगो गुणः सोऽपरिमाणवान् ।**
**न तस्यास्त्यपरा माला नोपचारस्य चाश्रयः ॥ ६५० ॥**

तथाहि—भवद्भिः प्रासादः संयोगात्मको गुण इष्यते नावयविद्रव्यं विजातीयद्रव्यानारम्भात् । स च गुणः परिमाणवान्न भवति निर्गुणा गुणा इति समयात् । ततश्च गुणानां प्रासादादीनां मालाख्यस्यापरस्य गुणस्याभावात्प्रासादमालेत्येतदेव न स्यात् । कुतो महती ह्रस्वेत्यादि भविष्यति । तथाहि—माला सङ्ख्यास्वभावेष्टा, सङ्ख्या च गुणत्वाद्द्रव्यमेवाश्रिता न गुणम् । यदाऽप्यवयविस्वभावा मालेष्यते तथापि द्रव्यस्य द्रव्यमेवाश्रयो न गुण इति न मालायाः प्रासादाश्रयत्वं युक्तम् । अथ जातिस्वभावा मालाऽङ्गीक्रियते । एवमपि जातेस्सर्वात्मना प्रत्याश्रयपरिसमाप्तत्वादेकोऽपि प्रासादो मालेत्युच्येत वृक्षवत् । यथोक्तम्—"गेहो यद्यपि संयोगस्तन्माला किन्नु तद्भवेत् । जातिश्चेदिह एकोऽपि मालेत्युच्येत वृक्षवत् ॥" इति । एका दीर्घा महतीत्यादिव्यपदेशानुपपत्तिश्च तदवस्थैव मालायाम्, तदाश्रये च प्रासादादावेकत्वादिगुणाभावात् । काष्ठादिषु च विवक्षितदैर्घ्याद्यसद्भावात् । बह्वीषु च प्रासादमालासु मालामालेत्यनुगामी व्यपदेशो न स्यात् । जातेरजातितः । यदाह—"माला बहुत्वे तच्छब्दः कथं जातेरजातितः" इति । अत उपचारस्याश्रयः परिग्रहो यद्वाऽऽश्रयोऽधिष्ठानं न युक्तमित्यर्थः । नचाप्ययं स्खलद्गतिर्मालादिषु महत्त्वादिप्रत्ययः । तस्मान्नौपचारिको युक्तः । नहि मुख्यप्रत्ययाविशिष्टो गौणो युक्तोऽतिप्रसङ्गात् । यदाह—"मालादौ च महत्त्वादिरिष्टो यश्चौपचारिकः । मुख्याविशिष्टविज्ञानग्राह्यत्वान्नौपचारिकः ॥" इति ॥ ६५० ॥

तत्र इदमस्मात्पृथगिति यद्वशात् संयुक्तमपि द्रव्यमपोद्ध्रियते, तदपोद्धारकारणं पृथक्त्वं नाम, तच्च घटादिभ्योऽर्थान्तरं तत्प्रत्ययविलक्षणबुद्धिग्राह्यत्वादिति पूर्ववत्प-

रस्याभिप्रायः । तदत्रापि परिमाणवदसिद्धत्वमनैकान्तिकत्वं च हेतोरिति हृदि कृत्वाह **—अपोद्धारे**त्यादि ।

**अपोद्धारव्यवहृतिः पृथक्त्वाद्या तु कल्प्यते ।**
**कारणात्सा विभिन्नात्मभावनिष्ठा न किं मता ॥ ६५१ ॥**

तथाह्यत्रापि रूपादिभ्यो विवेकेन नापरमर्थान्तरं पृथक्त्वं नाम प्रत्यक्षबुद्धौ प्रतिभासत इति न सिद्धमस्य तत्प्रत्ययविलक्षणबुद्धिग्राह्यत्वम् । अत एव च तस्योपलब्धिलक्षणप्राप्तत्वेनाभिमतस्यानुपलम्भादसत्त्वमेव । न चापि पृथगिति विकल्पप्रत्ययवशात्तस्य सिद्धिः । त एव हि रूपादयो भावाः स्वस्वभावस्थितेः सर्वभावानां सजातीयविजातीयव्यावृत्तात्मतयाऽपेक्ष्यमाणाः पृथगिति व्यवहारनिबन्धनं भविष्यन्तीति नातो वस्त्वन्तरसिद्धिः । तस्माद्येयमपोद्धारव्यवहृतिः—व्यवहारः पृथक्त्वात्कारणाद्वर्ण्यते सा किमिति समानासमानजातीयविभिन्नस्वभावभावनिष्ठा न मता । तन्निष्ठैव युक्तेति भावः । एतेनानैकान्तिकत्वं हेतोर्दर्शितम् । विभिन्न आत्मा स्वभावो येषां ते तथोक्ताः । ते च ते भावाश्च, तेषु निष्ठा—परिसमाप्तिर्यस्या इति विग्रहः ॥ ६५१ ॥

साध्यविपक्षेऽपि हेतोर्वृत्तिर्दृश्यतेति दर्शयन्नाह**—परस्परविभिन्ना ही**त्यादि ।

**परस्परविभिन्ना हि यथा बुद्धिसुखादयः ।**
**पृथग्वाच्यास्तदङ्गं च विनाऽन्येन तथाऽपरे ॥ ६५२ ॥**

नहि सुखादिषु गुणेषु पृथक्त्वं गुणोऽस्ति, निर्गुणत्वाद्गुणानाम् । अथ च परस्परव्यावृत्तात्मतया ते पृथगिति वाच्या भवन्ति । तस्याश्चापोद्धारव्यवहृतेरङ्गं निमित्ततां प्रतिपद्यन्ते । तथाऽपरेऽपि घटादयो द्रव्याभिमता विनाऽन्येन—स्वव्यतिरिक्तेन पृथक्त्वनाम्ना गुणेन भविष्यन्तीति । नचापि तेषु भाक्तोऽयं प्रत्ययो मुख्यप्रत्ययाविशिष्टत्वादिति भावः । यद्वा—अपोद्धारव्यवहृतिं विभिन्नात्मपदार्थनिबन्धनां दर्शयन्प्रतिज्ञाया अनुमानबाधामाह**—परस्परे**त्यादि । प्रयोगः—ये परस्परव्यावृत्तात्मानस्ते न स्वव्यतिरिक्तपृथक्त्वसमाश्रयाः, यथा सुखादयः । परस्परव्यावृत्तात्मानश्च घटादय इति स्वभावहेतुः । एकस्यानेकवृत्त्यसम्भवः, समवायस्य निषेत्स्यमानत्वात्सम्बन्धानुपपत्तिः, सुखादिषु तद्व्यवहाराभावप्रसङ्गश्च बाधकं प्रमाणम् ॥ ६५२ ॥

तत्र संयोगविभागयोर्दूषणार्थमाह**—यावि**त्यादि ।

यौ संयोगविभागौ च द्रव्येषु नियतौ परैः ।
संयुक्तादिधियो हेतू कल्पितौ तावनर्थकौ ॥ ६५३ ॥

यथाक्रमं द्रव्येषु संयुक्तविभक्तप्रत्ययहेतू अप्राप्तप्राप्तानां प्राप्त्यप्राप्तिस्वभावावन्यतरोभयकर्मजौ च संयोगविभागजौ च संयोगविभागाविति परप्रक्रिया । एतच्च प्रक्रियामात्रमेव । नत्वनयोर्वस्तुसत्त्वसिद्धौ किंचन प्रमाणमस्तीत्यतोऽनर्थकावेतौ कल्पितौ परैः । प्रयोगः—यस्य न किंचित्साधकं प्रमाणमस्ति न तत्प्रेक्षावतां सद्व्यवहारविषयो यथा वन्ध्यासुतादि, नास्ति च संयोगविभागयोः साधकं प्रमाणं परेषामिति व्यापकानुपलब्धेः ॥ ६५३ ॥

बीजोदकेत्यादिनोद्योतकरमतोपदर्शनाद्धेतोरसिद्धतामाशङ्कते—

बीजोदकपृथिव्यादि सर्वदा कार्यकारकम् ।
प्रसक्तं निर्विशेषत्वात्संयोगासंभवेन तु ॥ ६५४ ॥
क्षेत्रबीजजलादीनि सापेक्षाणीति गम्यते ।
स्वकार्यकरणान्नित्यं दण्डचक्रोदकादिवत् ॥ ६५५ ॥
यस्तैरपेक्ष्यते भावः स संयोगो भविष्यति ।
सविशेषणभावाच्च भिन्न एवेति गम्यते ॥ ६५६ ॥
संयुक्ते आहरेत्युक्ते संयोगं प्रेक्षते ययोः ।
तदन्यपरिहारेण ते एवाहरति ह्ययम् ॥ ६५७ ॥

स ह्याह । यदि संयोगो नार्थान्तरं भवेत्तदा क्षेत्रबीजादयो निर्विशिष्टत्वात्सर्वदैवाङ्कुरादि कुर्युः, न चैवम् । तस्मात्सर्वदा कार्यानारम्भात्क्षेत्रादीन्यङ्कुरादिकार्योत्पत्तौ कार्यान्तरसापेक्षाणि, यथा मृत्पिण्डदण्डसलिलसूत्रादयो घटादिकरणे कुम्भकारादिसापेक्षाः । योऽसावपेक्ष्यः स संयोग इति सिद्धम् । किंच योऽसौ संयोगो द्रव्ययोः स विशेषणभावेन प्रतीयमानत्वात्ततोऽर्थान्तरत्वेन प्रत्यक्षत एव सिद्धः । तथाहि—कश्चित्केनचित्संयुक्ते द्रव्ये आहरेत्युक्ते ययोरेव द्रव्ययोः संयोगमुपलभते । त एवाहरति न द्रव्यमात्रम्, अन्यथा यत्किंचिदाहरेत् । एतच्च सर्वं विपर्ययाद्विभागसाधनेऽपि योज्यम् ॥ ६५४ ॥ ६५५ ॥ ६५६ ॥ ६५७ ॥

निरन्तरमिदं वस्तु सान्तरं चेदमित्ययम् ।
बुद्धिभेदश्च केनैष विद्यते तौ च चेदिह ॥ ६५८ ॥

अपि चाविशिष्टेऽपि निरन्तरमिदं वस्तु सान्तरमिदमिति बुद्धिभेदः कथं युज्यते, यद्येतौ संयोगविभागाविह वस्तुन्यर्थान्तरभूतौ न स्यातां, नहि विशेषप्रत्ययो वस्तुविशेषमन्तरेण संभवी भवितुमर्हति, सर्वदा सर्वत्र भावप्रसङ्गात् ॥ ६५८ ॥

**या चेयं सान्तरे बुद्धिर्नैरन्तर्यावसायिनी ।**
**निरन्तरेऽपि या चान्या मिथ्याबुद्धिरियं द्विधा ॥ ६५९ ॥**
**मिथ्याबुद्धिश्च सर्वैव प्रधानार्थानुकारिणी ।**
**प्रधानं चेह वक्तव्यं तदुक्तौ तौ च सिद्ध्यतः ॥ ६६० ॥**

किंच येयं दूरतरावस्थितेऽपि धवखदिरादौ विदूरदेशवर्त्तिनः पुंसो निरन्तरावसायिनी बुद्धिरुदयमासादयति, या चेयमीषत्तरुशिखरावलग्ने बलाकादौ निरन्तरेऽपि सान्तरत्वमिवावस्यन्ती जायतेऽन्या, सेयं द्विविधाऽप्यतस्मिंस्तथारूपेण प्रवृत्तत्वान्मिथ्याबुद्धिः, न च मिथ्याधीर्मुख्यपदार्थानुभवमन्तरेण क्वचिदुपजायते । नह्यननुभूतगोदर्शनस्य गवयपदार्थदर्शनाद्गौरयमिति विभ्रमो भवति । तस्मादवश्यं कश्चिन्मुख्यः पदार्थोऽस्या विभ्रमधियो निबन्धनमभिधानीयः । तस्याभिधाने च तौ संयोगविभागौ सिध्यतः । नहि तद्व्यतिरेकेणान्यदस्या बुद्धेर्निबन्धनमुपपादयितुं शक्यते ॥ ६५९ ॥ ६६० ॥

**कुण्डलीति मतिश्चेयं किन्निमित्तोपजायते ।**
**नरकुण्डलभावान्नो सर्वदा तत्प्रसङ्गतः ॥ ६६१ ॥**
**अन्यत्र दृष्टभावस्य निषेधोऽन्यत्र युज्यते ।**
**संयोगश्च भवेद्दृष्टः स कथं प्रतिषिध्यते ॥ ६६२ ॥**
**चैत्रोऽकुण्डल इत्येवं तस्मादस्त्येव वास्तवः ।**
**यन्निषेधविधानादि विभागेन प्रवर्त्तते ॥ ६६३ ॥**

अपिच कुण्डली देवदत्त इति मतिरियमुपजायमाना किंनिबन्धनोपजायत इति वचनीयम् । नच पुरुषकुण्डलभावमात्रभाविनी भवितुमर्हति । सर्वदा तत्र देवदत्तकुण्डलयोस्तस्याः सद्भावप्रसङ्गात् । किंच यदेव केनचित्क्वचिदुपलब्धसत्त्वं तस्यैवान्यत्र विधिप्रतिषेधमुखेन लोकव्यवहारप्रवृत्तिर्दृष्टा । यदि भवता संयोगो न कदाचिदुपलब्धस्तत्कथमस्य चैत्रोऽकुण्डलः कुण्डली चेत्येवंविभागेन व्यवहारो भवेत् । तथाह्यत्र चैत्रोऽकुण्डलीत्यनेन न कुण्डलं प्रतिषिध्यते तस्य देशकालभेदेन सत्त्वाध्या-

सितमूर्त्तेः प्रतिषेद्धुमशक्यत्वात्, नापि चैत्रस्य, तत्तुल्ययोगक्षेमत्वात्, तस्माच्चैत्रस्य कुण्डलसंयोगः प्रतिषिध्यते । तथा चैत्रः कुण्डलीत्यनेनापि विधिवाक्येन चैत्रकुण्डलयोर्नान्यतरस्य विधानं तयोः सिद्धत्वात् । पारिशेष्यात्संयोगस्यैवाप्रतीतस्य विधेर्ज्ञायते । तस्मादस्त्येव संयोगादिर्वास्तवो यद्वशाच्चैत्रः कुण्डली न भवतीत्यादिनिषेधविधानादि प्रविभक्तमेव प्रतीयते । आदिशब्देन विशेषणत्वेनोपादानमित्यादि पूर्वोक्तपरिग्रहः ॥ ६६१ ॥ ६६२ ॥ ६६३ ॥

उच्यत इत्यादिना प्रतिविधत्ते ।

**उच्यते क्षणिकत्वेन नाविशेषा जलादयः ।**
**सत्त्वेऽप्यव्यवधानादि तेऽपेक्षन्ते दशान्तरम् ॥ ६६४ ॥**

यदुक्तमविशेषाद्बीजादयः सदैव कार्यं कुर्युरिति, तस्याविशिष्टत्वं बीजादीनामसिद्धम्, क्षणभङ्गितया सर्वभावानां विशिष्टावस्थानामेव जनकत्वात् । यच्चोक्तं क्षेत्रबीजादीत्यादि, तत्रापि सामान्येन सापेक्षत्वमात्रे साध्ये सिद्धसाध्यतेति दर्शयति—सत्त्वेऽपीत्यादि । इष्यन्त एवास्माभिरव्यवधानाद्यवस्थान्तरसापेक्षा बीजादयोऽङ्कुरादिकार्यनिर्वर्तनसमर्था विद्यमानत्वेऽपीति सिद्धसाध्यता । तत्राविद्यमाना व्यवधानादयो यत्र देशान्तरेऽवस्थाविशेषे तत्तथोक्तम् । आदिशब्देन विरोधिप्रत्ययप्रतिघातादिपरिग्रहः । यत्रावस्थान्तरे व्यवधानं दूरदेशावस्थानं विरोधिना प्रतिहतिरित्यादिकार्योत्पत्तिप्रतिबन्धकं नास्तीत्यर्थः । अवस्थायाश्च स्वभावाव्यतिरेकान्नार्थान्तरभूतसंयोगसिद्धिः । अथ भवदभिमतसंयोगाख्यपदार्थान्तरसापेक्षत्वं साधयितुमिष्टं तदा तथाविधेन धर्मेण हेतोरन्वयासिद्धेरनैकान्तिकता, दृष्टान्तस्य च साध्यविकलतेति भावः ॥ ६६४ ॥

स्यादेतत्कथमिदमवगम्यतेऽवस्थान्तरविशेषसापेक्षाः क्षित्यादयोऽङ्कुरादिकार्यप्रसवहेतवो न पुनरर्थान्तरभूतसंयोगसापेक्षा येन सामान्येन सापेक्षत्वमात्रे साध्ये सिद्धसाध्यता भवेद्भवत इत्याशङ्क्याह—संयोगमात्रेत्यादि ।

**संयोगमात्रसापेक्षा यदि तु स्युर्जलादयः ।**
**योगानन्तरमेव स्यात्कार्यमेतेन वा भवेत् ॥ ६६५ ॥**

यदि हि संयोगमात्रसापेक्षाः स्युस्तदा प्रथमोपनिपात एव क्षित्यादिभ्योऽङ्कुरादिकार्योदयप्रसङ्गः पश्चाद्वदविकलकारणत्वात् । अथ प्रथमोपनिपाते न भवति पश्चा-

दप्यनुत्पत्तिप्रसङ्गः । पूर्ववदजनकावस्थायां विकलकारणताया निर्विशिष्टत्वात् । नच क्षित्यादीनामनुपकारिणि संयोगेऽपेक्षा युक्तिमती, अतिप्रसङ्गात् । नचापि संयोगानां कादाचित्कत्वं युक्तं तत्कारणानां क्षित्यादीनां नित्यं सन्निहितत्वात् । अथ तत्रापि संयोगे जन्ये क्षित्यादीनां कर्मादिसापेक्षत्वमिष्यते । न । तत्रापि तुल्यपर्यनुयोगत्वात् । तथाहि—तदपि कर्म कस्मान्न जनयतीति पर्यनुयोगे किं वक्तव्यं स्यात् । तत्कारणनोदनाभावादिति चेत्, तस्यापि कस्मादभाव इति नित्यकारणाभ्युपगमे सर्वत्र तुल्यः पर्यनुयोगः । यस्य तु सर्वमेवानित्यं वस्तु तस्यानादित्वाद्धेतुपरम्परायाः सर्वभावानां सकृदुत्पत्तिप्रसङ्गो न भवति । पूर्वपूर्वकारणप्रतिबद्धत्वादुत्तरेषाम् । तेषां च सर्वेषां युगपत्कारणवैकल्येनासन्निधानात् । तस्माद्भवत एव दर्शनेऽङ्कुरादिकार्यप्रसवहेतुत्वं क्षित्यादीनां सर्वदा प्रसज्यत इति न संयोगार्थान्तरसापेक्षाः क्षित्यादय इति सिद्धम् ॥ ६६५ ॥

यच्चोक्तं सविशेषणभावाच्चेत्यादि, तत्राह—**प्राप्तावस्थे**त्यादि ।

**प्राप्तावस्थाविशेषे हि नैरन्तर्येण जातितः ।**
**ये पश्यत्याहरत्येष वस्तुनी ते तथाविधे ॥ ६६६ ॥**

नहि संयुक्तपदार्थान्तरभूतः संयोगः प्रतिपत्तुर्दर्शनपथमवतरति, येन तद्दर्शना(त्त)द्विशिष्टे द्रव्ये आहरति । किं तर्हि प्राग्भाविनी ये सान्तरजातावस्थे ततो विशिष्टे ये निरन्तरोत्पन्ने वस्तुनी ते एव संयुक्तशब्दवाच्ये, अवस्थाविशेषे प्रसाधितत्वात्संयोगशब्दस्य । तेन यत्र तथाविधे वस्तुनी संयोगशब्दविषयभावापन्ने पश्यति, ते एवाहरति नान्ये, न हि शब्देनाबोधितेऽर्थे शब्दात्प्रवर्त्तते प्रेक्षावान् ॥ ६६६ ॥

यच्चोक्तं निरन्तरमित्यादि, तत्राह—**विच्छिन्न**मित्यादि ।

**विच्छिन्नमन्यथा चैव जातमेति निमित्तताम् ।**
**सान्तरानन्तरज्ञाने गेहविन्ध्यहिमाद्रिवत् ॥ ६६७ ॥**

वस्त्वन्तरमेव तथोत्पद्यमानं बुद्धिभेदनिबन्धनमतोऽनैकान्तिकमेतदिति समुदायार्थः । तत्र विच्छिन्नं यज्जातं वस्तु तत्सान्तरबुद्धेर्निमित्ततामेतीति संबन्धः । **अन्यथा** चेति । अविच्छिन्नम्, यज्जातमिति संबन्धः । **गेहविन्ध्यहिमाद्रिव**दिति । अनयोरेव यथायोगमुदाहरणम् । न ह्यविच्छेदेनोत्पन्नयोः स्वयं संयोगात्मनोर्गेहयोरपरः संयोगो निरन्तरबुद्धेर्निबन्धनमस्ति परमतेऽपि, नापि विच्छेदेनोत्पन्नयोस्त-

योरेव विभागः सान्तरप्रत्ययनिमित्तमस्ति, निर्गुणत्वाद्गुणानामित्युक्तमेतत् । नहि हिमविन्ध्ययोरपि विभागः सान्तरबुद्धेर्हेतुरस्ति । प्राप्तिपूर्विका ह्यप्राप्तिर्विभाग इति समयात् ॥ ६६७ ॥

यच्चोक्तं या चेयं सान्तरे बुद्धिरित्यादि, तत्राह—मिथ्येत्यादि ।

**मिथ्याबुद्धिर्न सर्वैव प्रधानार्थानुसारिणी ।**
**साधर्म्यनिरपेक्षापि काचिदन्तरुपप्लवात् ॥ ६६८ ॥**
**अन्यत्र गतचित्तस्य द्विचन्द्रादिमतिर्यथा ।**
**अविच्छिन्नादिजातं वा प्रधानमिह विद्यते ॥ ६६९ ॥**

सर्वा मिथ्याबुद्धिः साधर्म्यग्रहणादुपजायत इत्यसिद्धमेतत् । कस्याश्चित्साधर्म्यमनपेक्ष्यापीन्द्रियवैगुण्यमात्रेणोत्पत्तिदर्शनात् । यथाऽन्यत्रगतविकल्पचेतसोऽपि पुरोऽवस्थितैकचन्द्राविपत्य(दिप्रत्यय ?)मात्रेण तिमिरोपपादितेन्द्रियवैगुण्याच्चन्द्रद्वयाकारानुस्यूता विशदतरप्रविभासिनी कल्पनाकलङ्कानङ्कितैव धीरुपजायते । अन्यत्र गतचित्तस्येत्यनेन निर्विकल्पत्वं द्विचन्द्रधियो दर्शयति । नहि निर्विकल्पचेतसि साधर्म्यग्रहणमस्ति । तस्य पूर्वापरदृष्टपदार्थैकत्वाध्यवसायात्मकत्वेन पूर्वानुभूतार्थाऽभिजल्पात्मकत्वात् । अथवा भवतु नाम पूर्वस्या मिथ्याबुद्धेः प्रधानार्थानुसारित्वं तथापि नेष्टसिद्धिर्भवत इति दर्शयति—अविच्छिन्नादिजातं वेत्यादि । आदिग्रहणेन विच्छिन्नजातं वस्तु गृह्यते । तदेव हि वस्तु विच्छिन्नमविच्छिन्नं चोपजायमानमतज्जातीयपरिहारेण प्रवृत्त्यर्थं प्रथमतरं विनिवेशितविभक्ताद्यभिधानतया मुख्यमस्तीति नेष्टसिद्धिर्भवतः ॥ ६६८ ॥ ६६९ ॥

यदुक्तं कुण्डलीति मतिश्चेयमित्यादि, तत्राह—कुण्डलीत्यादि ।

**कुण्डलीति मतिश्चेयं जातावस्थाविशेषयोः ।**
**चैत्रकुण्डलयोरेव संयोग इव जायते ॥ ६७० ॥**

यथैव हि संयोगश्चैत्रकुण्डलयोर्विशिष्टावस्थाप्राप्तौ सत्यामुपजायते, नहि सर्वदा, तद्वदियमपि कुण्डलीति मतिरवस्थाविशेषनिबन्धना भवन्ती किमिति सर्वदा भवेत् । जातोऽवस्थाविशेषो ययोश्चैत्रकुण्डलयोस्ते तथोक्ते ॥ ६७० ॥

यच्चोक्तमन्यत्र दृष्टभावस्येत्यादि, तत्राह—सोऽवस्थातिशय इत्यादि ।

**सोऽवस्थातिशयस्तादृग्दृष्टोऽन्यत्र निषिध्यते ।**
**चैत्रे कुण्डल इत्यादौ न संयोगस्त्वदृष्टितः ॥ ६७१ ॥**

यदवस्थाविशेषनिबन्धनेयं मतिरुपवर्णिता तस्योपलब्धिलक्षणप्राप्तस्यान्यस्यामवस्थायामनुपलम्भे सति प्रतिषेधो विधीयते, न तु भवत्परिकल्पितस्य संयोगस्य, तस्य संयोगिपदार्थविवेकेन क्वचिदपि बुद्धावप्रतिभासनात् । तस्मान्नासिद्धता हेतोः॥६७१॥

स्यादेतत्—यदि नाम साधकं प्रमाणं संयोगं प्रति न जातमस्माकं, भवतां तु किं बाधकं प्रमाणमित्याह—न पराभिमतादित्यादि ।

**न पराभिमताद्योगाज्जायते युक्तवस्तुधीः ।**
**युक्तबुद्धितया यद्वत्प्रासादादिषु युक्तधीः ॥ ६७२ ॥**
**अनेकवस्तुसद्भावे जायमानतयाऽथवा ।**
**विभक्तानेकतन्त्वादिविषया इव बुद्धयः ॥ ६७३ ॥**
**विभागेऽपि यथायोगं वाच्यमेतत्प्रमाद्वयम् ।**
**एकस्यानेकवृत्तिश्च न युक्तेति प्रबाधकम् ॥ ६७४ ॥**

प्रयोगः—या संयुक्तबुद्धिः सा भवत्परिकल्पितसंयोगानास्पदवस्तुविशेषमात्रभाविनी, यथा संयुक्तौ प्रासादावित्यादौ, संयुक्तबुद्धिश्चेयं चैत्रः कुण्डलीत्यादाविति स्वभावहेतुः । अथवा—याऽनेकवस्तुसन्निपाते सत्युपजायते, सा भवत्परिकल्पितसंयोगरहितानेकवस्तुविषयमात्रभाविनी, यथा प्रविरलावस्थितानेकतन्तुविषयाः प्रत्ययास्तथा चेयं संयुक्तधीरिति स्वभावहेतुः । युक्तधीरिति । संयुक्तबुद्धिरित्यर्थः । एतदेव प्रमाणद्वयं विभागप्रतिषेधे वाच्यम् । विभक्तबुद्धित्वादनेकपदार्थासन्निधानायत्तोदयत्वाद्वा पराभिमतविभागरहितपदार्थविशेषमात्रनिबन्धना मेषादिषु विभागबुद्धिः, यथा दूरतरावस्थितमेषद्वयविषया विन्ध्यहिमवद्विषया वा धीरिति । अथ किमत्र साध्यविपर्यये हेतोर्बाधकं प्रमाणं येन हेतोर्विपक्षे प्रचाराशङ्का निवर्त्तेत इत्याह—**एकस्ये**त्यादि । यथैकस्यानेकत्र वृत्तिर्न युक्ता तथा "तद्ध्येकवृत्तिभाजैव रूपेणे"त्यादिनाऽवयविनिषेधे प्रतानितमिति नेह पुनः प्रतायते ॥ ६७२ ॥ ६७३ ॥ ६७४ ॥

परत्वापरत्वयोर्दूषणमाह—**परापरे**त्यादि ।

**परापराभिधानादिनिमित्तं यच्च कल्प्यते ।**
**परत्वमपरत्वं च दिक्कालावधिकं न तत् ॥ ६७५ ॥**
**यथा नीलादिरूपाणि क्रमभावव्यवस्थितेः ।**
**अन्योपाधिविवेकेऽपि तथोच्यन्ते तथाऽपरे ॥ ६७६ ॥**

इदं परमिदमपरमिति यतोऽभिधानप्रत्ययौ भवतस्तत्परत्वमपरत्वं च यथाक्रमं परापराभिध्याननिमित्तं सिद्धम् । आदिशब्देन प्रत्ययो गृह्यते । प्रयोगः—येयं परमपरमिति संवित्सा घटादिव्यतिरिक्तार्थान्तरनिबन्धना, तत्प्रत्ययविलक्षणत्वात्सुखादिबुद्धिवदिति । तथा ह्येकस्यां दिशि स्थितयोः पिण्डयोः परमपरमिति बुद्धिप्रवृत्तिर्न तावदियं दिङ्निबन्धना । नापि कालनिबन्धना, एकस्मिन्नपि प्रवर्त्तमाने काले वर्त्तमानयोरनियतदिग्देशसंयुक्तयोर्युवस्थविरयोर्विभागेन परापरबुद्धिप्रवृत्तेस्तदविशेषेऽपि विशेषादिति भावः । नचान्यदस्या बुद्धेर्निबन्धनमभिधातुं पार्यते । तस्माद्यन्निबन्धनेयं तत्परत्वमपरत्वमिति सिद्धम् । **दिक्कालावधिकं न तदिति** । दिक्कालप्रदेशसंयुक्तसन्निकृष्टविप्रकृष्टपदार्थावधिकं न भवतीत्यर्थः । दिक्कालशब्दाभ्यांह्युपचाराद्दिक्कालप्रदेशसंयुक्तयोर्निर्देशः । तथा ह्येतत्परत्वमपरत्वं च द्विविधमपि दिक्कृतं कालकृतं चेति वर्णितं परेण । तत्र दिक्कृतस्यैवमुत्पत्तिः । एकस्यां दिश्यवस्थितयोः पिण्डयोरेकस्य द्रष्टुः संनिकृष्टमवधिं कृत्वैतस्माद्विप्रकृष्टोऽयमिति परत्वाधारे बुद्धिरुत्पद्यते, ततस्तामपेक्ष्य परेण दिक्प्रदेशेन संयोगात्परत्वमुपजायते । विप्रकृष्टं चावधिं कृत्वैतस्मात्सन्निकृष्टोऽयमित्यपरत्वाधारे बुद्धिरुत्पद्यते, तामपेक्ष्यापरेण दिक्प्रदेशेन संयोगादपरत्वस्योत्पत्तिः । कालकृतयोस्त्वयमुत्पत्तिक्रमः । तथाहि—वर्त्तमानकालयोरनियतदिग्देशसंयुक्तयोर्युवस्थविरयोर्मध्ये यस्य वलीपलितरूढश्मश्रुतादिनाऽनुमितमादित्योदयास्तमयानां बहुत्वं तत्रैकस्य द्रष्टुर्युवानमवधिं कृत्वा विप्रकृष्टा बुद्धिरुत्पद्यते तामपेक्ष्य परेण कालप्रदेशेन संयोगात्परत्वस्योत्पत्तिः । स्थविरं चावधिं कृत्वा यस्यारूढश्मश्रुतादिनाऽनुमितमादित्योदयास्तमयानामल्पत्वं, तत्र यूनि सन्निकृष्टबुद्धिरुत्पद्यते, तामपेक्ष्यापरेण कालप्रदेशेन संयोगादपरस्योत्पत्तिरिति । तदेतत्परत्वापरत्वसाधनमनैकान्तिकं साध्यविपक्षेऽपि हेतोर्वृत्तेरिति दर्शयति—**यथा नीलादिरूपाणीत्यादि** । भाव उत्पादस्तत्सहिता व्यवस्थितिः, क्रमेण भावव्यवस्थितिरिति विग्रहः । एतदुक्तं भवति—यथा नीलादिषु क्रमेणोत्पादात्कालोपाधेः क्रमेण व्यवस्था, न गुणोपाधेः, परं नीलमपरं नीलमिति परापरव्यपदेशो भवत्यसत्यपि परत्वापरत्वलक्षणे गुणे, निर्गुणत्वाद्गुणानां, तथा घटादिष्वपि किं नेष्यते । एतेनैतद्दर्शयति । यद्यर्थान्तरनिमित्तत्वमात्रमिह साधयितुमिष्टं तदाऽनैकान्तिकता हेतोः, साध्यविपर्ययेऽपि तस्य वृत्तेः । अथ नित्यभूतदिक्कालपदार्थहेतुको यो गुणविशेषस्तन्निबन्धनत्वमस्या बुद्धेः साधयितुमिष्टं तदा दृष्टान्ताभावः । प्रतिज्ञायाश्चानुमानबाधा । तथाहि शक्यमिदं कर्तुं, या परापर-

बुद्धिः सा परपरिकल्पितगुणरहितार्थमात्रकृतक्रमोत्पादव्यवस्थानिबन्धना, परापरबुद्धित्वात्, यथा रूपादिषु परापरबुद्धिः, परापरबुद्धिश्चेयं घटादिष्विति स्वभावहेतुः। नीलादिष्वेकार्थसमवायादुपचरितेयं परत्वादिबुद्धिरतोऽनैकान्तिकता हेतोः, पारंपर्येण नीलादिष्वपि परत्वादेर्निमित्तभावोपगमात्साध्यविकलता च दृष्टान्तस्येति चेन्न । प्रतिविहितमेतदस्खलद्वृत्तित्वान्नौपचारिकत्वं युक्तमिति । स्वाश्रयेऽपि तयोरुपलब्ध्यभावाच्च न तद्बलेन प्रत्ययो युक्तः । तत्कुतो रूपादिषु तन्निबन्धनो भविष्यति । सुखादिषु वा पूर्वोत्तरकालभाविषु किं कल्प्येत, नहि तत्रैकार्थसमवायोऽस्ति । अपिच दिक्कालयोः पूर्वं प्रतिषिद्धत्वेनाभावात्तद्धेतुकयोरपि परत्वापरत्वयोरभाव इति कुतस्तन्निमित्तत्वाशङ्का । येन हेतोरनैकान्तिकता भवेत् । नचापि दिक्कालयोर्भवतः प्रदेशाः सन्ति, यत्संयोगादपेक्षाबुद्धिसहितात्परत्वादेरुत्पत्तिः स्यात्, तयोरेकात्मतया निरवयवत्वात् । न चोपचरितोऽवयवभेदोऽर्थक्रियानुरोधी युक्तः, वस्तुस्वभावप्रतिबद्धत्वात्तस्याः, उपचरितस्याचालीकत्वादिति नानैकान्तिकता । परकीयस्य च हेतोः पूर्ववदसिद्धत्वं वाच्यम् ॥ ६७५ ॥ ६७६ ॥

सङ्ख्येत्यादिना परकीयं प्रस्तुतसङ्ख्यादिगुणपदार्थसाधनमाशङ्कते ।

**सङ्ख्यायोगादयः सर्वे न द्रव्याव्यतिरेकिणः ।**
**तद्व्यवच्छेदकत्वेन दण्डादिरिव चेन्मतम् ॥ ६७७ ॥**
**तेषां संवृतिसत्त्वेन वर्णनादिष्टसाधनम् ।**
**तत्त्वान्यत्वेन निर्वाच्यं नैव संवृतिसद्यतः ॥ ६७८ ॥**

सर्व एवामी यथोक्ताः सङ्ख्यादयो गुणा न द्रव्यादव्यतिरेकिणस्तस्य द्रव्यस्य तेषां व्यवच्छेदहेतुत्वात्, यो हि यद्व्यवच्छेदको नासौ तदव्यतिरेकी, यथा दण्डादिर्देवदत्तस्येति । तदत्र द्रव्यादव्यतिरेकित्वनिषेधमात्रे साध्ये सिद्धसाध्यता दोषः प्रतिज्ञायाः । संवृतिसतां सर्वेषामवस्तुतया तत्त्वान्यत्वाभ्यामवाच्यतयाऽभीष्टत्वात् ॥ ६७७ ॥ ६७८ ॥

अथेत्यादिनात्राविद्धकर्णस्योत्तरमाशङ्कते ।

**अथानिर्वचनीयत्वं समूहादेर्निषिध्यते ।**
**यस्मान्नियतधर्मत्वं रूपशब्दरसादिवत् ॥ ६७९ ॥**

सह्याह—समूहसन्तानावस्थाविशेषास्तत्त्वान्यत्वाभ्यामवचनीया न भवन्ति प्रतिनियतधर्मयोगित्वाद्रूपरसादिवदिति ॥ ६७९ ॥

तदेतन्निःस्वभावतयेत्यादिना प्रतिविधत्ते ।

**निःस्वभावतया तस्य तत्त्वतोऽम्बरपद्मवत् ।**
**न सिद्धा नियता धर्माः कल्पनारोपितास्तु ते ॥ ६८० ॥**
**तथैवोक्तावनेकान्तो वियत्पद्मादिभिर्यतः ।**
**अभेदो व्यतिरेकश्च वस्तुन्येव व्यवस्थितः ॥ ६८१ ॥**

यदि हि पारमार्थिकनियतधर्मत्वं हेतुरिष्टस्तदा हेतोरसिद्धता । नहि बौद्धं प्रति-सन्तानादीनां संवृतिसतां पारमार्थिकनियतधर्मयोगित्वं सिद्धम् । अथ सामान्येन हेतुस्तदा वियत्पद्मादीनामप्यभावत्वामूर्त्तत्वादयः कल्पिता नियतधर्माः सन्त्येवेत्यनै-कान्तिकता हेतोः । **तथैवोक्ता**विति । सामान्येन विकल्पितानुपाख्यवृत्तिधर्मपरि-त्यागेनोक्तौ सत्यामित्यर्थः । इतश्चानैकान्तिकत्वमस्य हेतोः । यस्मादभेदोऽनन्यत्वं, व्यतिरेकोऽन्यत्वम्, एतौ वस्तुन्येव व्यवस्थितौ, नान्यत्र । सन्तानादयश्च प्रज्ञप्ति-सत्त्वेनावस्तुसन्तस्तत्कथमेषां वस्तुनः सकाशाद्भेदाभेदौ सिद्ध्यतः । तदेवं प्रथमे प्र-योगे सङ्ख्यादीनां द्रव्यादव्यतिरेकप्रतिषेधमात्रे साध्ये सिद्धसाध्यतेति प्रतिपादितम् ॥ ६८० ॥ ६८१ ॥

**सङ्ख्यादेर्द्रव्यतोऽन्यत्वमेवं चेत्प्रतिपाद्यते ।**
**आश्रयासिद्धता हेतोः सङ्ख्यादीनामसिद्धितः ॥ ६८२ ॥**

अथापि स्यान्नाव्यतिरेकप्रतिषेधमात्रं साध्यते, किं तर्हि? द्वौ प्रतिषेधौ विधिमेव गमयत इति प्रतिषेधद्वयेन द्रव्याद्व्यतिरेकित्वमेव साध्यत इति । तदेतत्सङ्ख्यादेरित्या-दिनाऽऽशङ्क्याश्रयासिद्धतेत्यादिना प्रतिषेधति—**एव**मिति । न द्रव्याव्यतिरेकिणः । किं तर्हि? व्यतिरेकिण इत्यर्थः ॥ ६८२ ॥

तदेव सङ्ख्यादेराश्रयस्यासिद्धत्वं दर्शयति—**समुच्चयादी**त्यादिना ।

**समुच्चयादिभिन्नं तु द्रव्यमेव तथोच्यते ।**
**स्वरूपादेव भेदश्च व्याहतः साधितो भवेत् ॥ ६८३ ॥**

**तथोच्यत** इति । एको द्वौ बहव इत्येवमादिः । स्यादेतत्—द्रव्यात्मकस्यापि सतः सङ्ख्यादेर्भेदः प्रसाध्यत इत्याह—**स्वरूपादे**वेत्यादि । नहि वस्तुनः स्वरूपाद्भे-दोऽस्ति, तस्य निःस्वभावत्वप्रसङ्गात् । **व्याहत** इति । परस्परविरुद्धः । भेदाभेदयोः परस्परपरिहारस्थितलक्षणतया युगपदेकत्र विरुद्धत्वात् । एवं तावत्परत्वान्ता गुणाः

प्रतिषिद्धाः । बुद्ध्यादयस्तु प्रयत्नान्ता आत्माश्रितत्वेन तद्गुणा इष्टाः । ते चात्मनिषेधादेव निषिद्धा द्रष्टव्याः । नचैषामात्माऽऽश्रयो युक्तः, तथाहि—उत्पत्तिहेतुतया चामीषामात्माऽऽश्रयो भवेत्स्थितिहेतुतया वा । न तावदुत्पत्तिहेतुतया, सर्वदैवाविकलकारणतया सुखादीनामुत्पत्तिप्रसङ्गात् । न च परैरनाधेयातिशयस्य सहकारिव्यपेक्षा काचिदस्तीति शतशश्चर्चितमेतत् । न चापि नित्यस्य कार्योत्पादनसामर्थ्यमस्ति, तस्य क्रमयौगपद्याभ्यां व्याप्तत्वात् । नित्यस्य च क्रमयौगपद्याभ्यामर्थक्रियाविरोधस्य प्रतिपादितत्वात् । नापि स्थितिहेतुतया युक्तः, स्थितेः स्थातुरव्यतिरिच्यमानरूपत्वात् । तद्धेतुत्वे स्थातृहेतुत्वमेवोक्तं स्यात् । तच्चानन्तरमेव निषिद्धम् । तस्य च स्थातुः परिनिष्ठितात्मस्वरूपत्वान्न कश्चिद्धेतुः संभवति । तस्य तत्राकिंचित्करत्वात् । व्यतिरेकेऽपि स्थितेः स्थातुस्तेन न किंचित्कृतमर्थान्तरभूतायाः स्थितेः करणात् । ततश्चाकिंचित्करः कथं तस्याश्रयो भवेत् । नापि तत्सम्बन्धिन्याः स्थितेः करणात्तस्यायमुपकारको युक्तस्तत्सम्बन्धित्वासिद्धेः । न चापि स्थितिं प्रति हेतुत्वं युक्तम् । नित्यस्य क्वचिदपि सामर्थ्यानुपपत्तेरित्युक्तम् । किंचासौ स्थाप्यमानो भावः स्वयमस्थिरस्वभावो वा भवेत्, स्थिरस्वभावो वा । यद्यस्थिररूपस्तत्कथं परेण स्थापयितुं शक्येत । तत्स्वभावहानिप्रसङ्गात् । अथ स्थिरस्वभावस्तथापि स्थापकोऽकिंचित्कर एव, स्वयमेव तत्स्वभावतया तस्य स्थितिसिद्धेः । किंच—ये तावन्मूर्त्ता भावास्तेषामधोगमनप्रतिबन्धकत्वेन भवेन्नामाश्रयकल्पना, ये पुनरमी सुखादयस्तेषाममूर्त्ततया नाधोगमनमस्तीति किंकुर्वाणस्तेषामाश्रयो भवेत् । सदसतोश्च निराशंसत(या)नुपाख्यत्वेन चाश्रयणानुपपत्तिरिति । एवं सुखादीनामन्येषां च यथायोगमाश्रितत्वासिद्धेर्न गुणो नामास्तीति भावः । किंच बुद्धिर्ज्ञानस्वभावाऽङ्गीकृता परैः । यथोक्तम्—"बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तर"मिति । तस्याश्चैवंरूपाया अपि न स्वसंविदितरूपमिष्टं परैः । किन्तु बुद्ध्यन्तरगम्यत्वमेव । तथाभूतायाश्च रूपादिवत्स्वतोऽसिद्धेर्बुद्धित्वमेवायुक्तमिति प्रतिपादयिष्यति ॥ ६८३ ॥

सुखदुःखेच्छाद्वेषप्रयत्नानामप्यज्ञानरूपत्वमिष्टम् । तदपि प्रमाणलक्षणपरीक्षायां निषेत्स्यते । गुरुत्वद्रवत्वस्नेहानां तु रूपादिवत्प्रतिषेधो विधेय इत्येवमालोच्यैषां प्रतिषेधमकृत्वा संस्कारप्रतिषेधमाह—वेगाख्य इत्यादि ।

**वेगाख्यो भावनासंज्ञः स्थितस्थापकलक्षणः ।**
**संस्कारस्त्रिविधः प्रोक्तो नासौ संगच्छतेऽखिलः ॥ ६८४ ॥**

**क्षणिकत्वात्पदार्थानां न काचिद्विद्यते क्रिया ।**
**यत्प्रबन्धस्य हेतुः स्यात्संस्कारो वेगसंज्ञकः ॥ ६८५ ॥**

त्रिविधः संस्कारो वेगो भावना स्थितस्थापकश्चेति । तत्र वेगाख्यः पृथिव्यप्तेजोवायुमनस्सु पञ्चसु मूर्त्तिमत्सु द्रव्येषु प्रयत्नाभिघातविशेषापेक्षात्कर्मणो जायते । स च नियतदिक्क्रियाप्रबन्धहेतुः, स्पर्शवद्द्रव्यसंयोगविरोधी । तथाहि—शरादिषु प्रयत्नविशेषजनितकर्मविशेषहेतुक एव । यद्वशादन्तरालशिरस्यापतनं भवत्यतएवासौ नियतादिक्रियाकार्योन्नीयमानसद्भावतया सिद्धः । शाखादौ तु लोष्टाभिघातजनितकर्मजः । भावनासंज्ञस्त्वात्मगुणः । योऽसौ ज्ञानजो ज्ञानहेतुश्चोच्यते, स च दृष्टश्रुतानुभूतेषु स्मृतिप्रत्यभिज्ञानकार्योन्नीतसत्त्वतया सिद्धः । स्थितस्थापकस्तु मूर्त्तिमद्द्रव्यगुणः, यो हि घनावयवसन्निवेशविशिष्टं कालान्तरावस्थायिनं स्वमाश्रयं प्रयत्नेनान्यथाकृतं पूर्ववद्यथावस्थितं स्थापयति । यथा चिरकालसंवेष्टितस्य तालपत्रादेः प्रसार्यावमुक्तस्य पुनस्तथैवावस्थानम् । धनुःशाखाशृङ्गदन्तादिषु वस्त्रादिषु च भुग्नावर्त्तितेषु तस्य कार्यं लक्ष्यत एव । **अखिल** इति । त्रिविधोऽपि । तत्र वेगाख्यस्य कर्मसम्बन्धाख्यं कार्यमसिद्धम् । अशेषपदार्थजातव्यापिनः क्षणभङ्गस्य प्रसाधितत्वात् । ततश्च स्वभावप्रतिलम्भादूर्ध्वं सर्वभावानामसत्त्वान्न काचित्क्रियाऽस्ति, यस्याः क्रियायाः प्रबन्धस्य हेतुरसौ भवेत् । अथ स्वोपादानदेशपरिहारेण प्रतीयमानो भावानामुत्पाद एव क्रियाप्रबन्धोऽभिप्रेतस्तथाऽप्यनैकान्तिकत्वम्, यतः पूर्वका एव हेतुप्रत्यया भावानां तथा तथोत्पद्यमानानां तथाविधात्मभूतक्रियाप्रबन्धतोऽनुमीयन्ते, न यथोक्तः संस्कारः । तेन सह क्वचिदप्यन्वयासिद्धेः । किंच यदि तथाविधसंस्कारबलादपतनमिष्वादीनां स्यात्तदा न कदाचिदपि ते पतेयुः, सर्वत्र पातप्रतिबन्धहेतोर्वेगस्यावस्थितत्वात् । ततश्चाविशिष्टाकाशदेशप्रसर्पिणो विशिखस्याकस्माद्यदेतत्पतनमुपलभ्यते तत्कथमुपपद्यते । नच मूर्त्तिमतां सतां वाय्वादीनां संयोगादुपहतशक्तित्वाद्वेगस्य विनाशात्पतनमिति शक्यं वक्तुम्, अर्वागेव पतनप्रसङ्गात्, सर्वत्रैव वायुसंयोगस्तद्विरोधी विद्यत एव । अथापि स्यादर्वागेकान्तबलीयस्त्वाद्वेगस्य विरोधिनमपि वायुसंयोगं प्रतिविध्यासौ वेगो नयति देशान्तरमिषुमिति । यद्येवं परस्मात्केन तस्याबलीयस्त्वं येन सुदूरमपि देशं तं न नयेत् । दृश्यते हि सर्वत्राविशिष्टवायुसंयोगवत्याकाशतले प्रसर्पतोऽपि शरस्यान्तराले पतनम् । नच वेगस्य पश्चाद-

न्यत्वं शक्यं वक्तुम्, अन्यथोत्पत्तिकारणाभावात्। सर्वत्रैव हि तत्समवायिकारणमिष्वादि निर्विशिष्टमेव। नच कर्माख्यं कारणं पश्चाद्विशिष्यत इति युक्तमभिधातुम्, तस्यापि तुल्यपर्यनुयोगत्वात्। अन्यत्वेऽपि वा पश्चाद्वेगस्य पूर्वकस्य विनाशकारणाभावात्तादवस्थ्यमेवेत्यपात एव स्याच्छरस्य। नच वायुसंयोगस्तस्य विनाशकारणमर्वागेव पतनप्रसङ्गादित्युक्तमेतत्, सर्वत्र वायोरविशेषेण तत्संयोगस्याप्यविशिष्टत्वादिति यत्किंचिदेतत्॥ ६८४॥ ६८५॥

भावनाख्यस्य दूषणमाह—**भावनाख्यस्त्वि**त्यादि।

**भावनाख्यस्तु संस्कारश्चेतसो वासनात्मकः।**
**युक्तो नात्मगुणश्चेदं युज्यते तन्निराकृतेः॥ ६८६॥**

यदि हि स्मृत्यादिकार्यतः सामान्येन भावनामात्रं तदा सिद्धसाध्यता। तथाहि—पूर्वानुभवाहितसामर्थ्यलक्षणा चेतसः स्वात्मभूता भावना स्मृत्यादिहेतुरिष्यत एव। यस्या वासनेति प्रसिद्धिः। अथात्मगुणस्वभावा भावना साधयितुमिष्टा, तदा क्वचिदपि तथाविधया सह स्मृत्यादीनामन्वयासिद्धेरनैकान्तिकता हेतोः। प्रतिज्ञायाश्चानुमानबाधा। आत्मनस्तदाधारस्य पूर्वं निराकृतत्वेनासत्त्वात्तस्या अप्यसत्त्वसिद्धिः। प्रयोगः—ये यदाश्रितास्ते तस्याभावे सति नावस्थितिमश्नुवते, यथा चित्रं कुड्याद्यभावे, आश्रितश्चात्मानं संस्कारः परमतेनेति व्यापकविरुद्धोपलब्धेर्नेचेष्टासिद्धिः। तस्यात्मनः पूर्वं निराकृतत्वात्। तस्माच्चेतसो वासनात्मक एव युक्तः संस्कारो नात्मगुण इति प्रमाणफलमेतत्। एकस्य प्रमाणसिद्धत्वादपरस्य विपर्ययादिति भावः॥ ६८६॥

तृतीयस्यापि दूषणमाह—**स्थिते**त्यादि।

**स्थितस्थापकरूपस्तु न युक्तः क्षणभङ्गतः।**
**स्थितार्थासम्भवाद्भावे तादूप्यादेव संस्थितिः॥ ६८७॥**

तथाहि—यमसौ पदार्थं स्थितं स्थापयति कदाचिदसौ स्वयमस्थिरस्वभाव एव, यद्वा स्थिरस्वभाव एवेति पक्षद्वयम्। यद्यस्थिरस्वभावस्तदा तस्य क्षणादूर्ध्वमभावात् कस्यासौ स्थापको भवेत्। अथ द्वितीयः पक्षस्तदा भावे—सत्त्वे, स्थितानामर्थानां ताद्रूप्यादेव—अप्रच्युतस्थितरूपत्वात्, स्थितिरिति किमकिंचित्करेण स्थापकेन परिकल्पितेनेति पूर्ववद्दूषणं वाच्यम्॥ ६८७॥

अथापि स्यात्क्षणिकत्वेऽपि सर्वभावानामेकक्षणावस्थितौ प्रबन्धेन चानुवृत्तौ तस्य सामर्थ्यमुच्यत इत्यत्राप्याह—क्षणं त्वेकमित्यादि ।

**क्षणं त्वेकमवस्थानं स्वहेतोरेव जातितः ।**
**पूर्वपूर्वप्रभावाच्च प्रबन्धेनानुवर्त्तनम् ॥ ६८८ ॥**

स्वहेतोरेव निष्पद्यमाना एकक्षणस्थायिनः सिध्यन्ति । तथाह्यात्मप्रतिलम्भलक्षणैवामीषां स्थितिरुच्यते, नतु प्रतिलब्धात्मसत्ताकानामुत्तरकालमात्मरूपसन्धारणलक्षणा, स्वयं चलात्मन उत्तरकालमवस्थानाभावात् । अवस्थाने वा कदाचिदप्यनिवृत्तिप्रसङ्गः पूर्ववत् । पश्चादप्यविशिष्टत्वात्, अतत्स्वभावप्रसङ्गाच्च । पूर्वपूर्वकारणसामर्थ्यकृतश्चोत्तरोत्तरकार्यप्रसव इति प्रबन्धेऽपि न संस्कारस्य सामर्थ्यं सिध्यति ॥ ६८८ ॥

अक्षणिकस्य तर्हि स्थापकोऽसौ भवत्वित्याह—नान्यथेत्यादि ।

**नान्यथोदयवानेष कस्यासौ स्थापकस्ततः ।**
**नचास्य दृष्टं हेतुत्वं संस्कारोऽन्योऽपि वा भवेत् ॥ ६८९ ॥**
**उत्पन्नस्यैव चेष्टोऽयं वस्त्रादेः स्थापको गुणः ।**
**गुणसंस्कारनामैवं सर्वथापि न संभवी ॥ ६९० ॥**

यो ह्यक्षणिकस्तस्यान्यथात्वासम्भवात्स्वत एव स्थितिरिति किं कुर्वाणस्तस्यासौ स्थापको भवतीत्युक्तमेतत् । अथापि स्यात्—माभूदसौ स्थापकः, किन्तु क्षणस्यैवोत्पादको भवतीत्याह—नचास्येत्यादि । प्रमाणाधीना हि प्रमेयस्य तत्त्वव्यवस्थितिः, न चास्य प्रसिद्धकारणव्यतिरेकेण वस्त्रादिषु प्रत्यक्षानुपलम्भाभ्यां चक्षुरादिवद्वा कार्यव्यतिरेकतो दृष्टं—निश्चितं हेतुत्वम्, येन तद्व्यवहारः स्यात् । अथादृष्टसामर्थ्यस्यापि हेतुत्वं कल्प्यते, तदा संस्कारः, अन्योऽपि वा—शुकबकादिरुत्पत्तेर्हेतुर्भवेत् । कल्पनीय इति शेषः । न ह्यदृष्टशक्तित्वेन कश्चिद्विशेषोऽस्ति, येनैकस्मिन्नेव संस्कारात्मन्यपरिनिश्चितसामर्थ्ये कल्पनापरितोषो भवतां स्यात् । नचाप्ययमुत्पादहेतुरिष्टो भवद्भिः, अपि तूत्पन्नस्य सतो वस्त्रादेरुत्तरकालं स्थापको गुण इष्यते । तत्र चाकिंचित्करत्वमस्येति पूर्वमुपवर्णितम् । अभ्युपगम्य तूत्पत्तिहेतुत्वं दूषणमिदमभिहितम् । कदाचित्कश्चित्स्वसमयसीमानमप्यतिपत्यैवं कल्पयेदिति भावः । **गुणसंस्कारनामे**त्यादिना पूर्वमुपसंहरति ॥ ६८९ ॥ ६९० ॥

धर्माधर्मलक्षणगुणदूषणमाह—मन इत्यादि ।

**मनोयोगात्मनां पूर्वं विस्तरेण निबन्धनात् ।**
**परोक्तलक्षणोपेतं नादृष्टमुपपद्यते ॥ ६९१ ॥**

## गुणपदार्थपरीक्षा ।

कर्तृफलदाय्यात्मगुण आत्ममनःसंयोगजः स्वकार्यविरोध्यदृष्टम् । तच्च द्विविध धर्माधर्मभेदात् । तत्र धर्मः कर्तुः प्रियहितमोक्षहेतुः । अधर्मस्त्वप्रियाहितप्रत्यवायहेतुरिति परोक्तादृष्टलक्षणम् । तदेतदात्मनो मनसस्तद्योगस्य च तत्कारणत्वेनाभिमतस्य पूर्वं निषिद्धत्वात्कारणाभावादेवासदिति सिद्धम् । शब्दस्त्वाकाशगुणतयाऽभीष्टः स प्रागेव निरस्तोऽक्रमाद्यापतित इत्यादिनेति न पुनरस्य दूषणमुच्यते ॥ ६९१ ॥

## इति गुणपदार्थपरीक्षा ।

कर्मपदार्थदूषणार्थमाह—क्षणेत्यादि ।

**क्षणक्षयिषु भावेषु कर्मोत्क्षेपाद्यसम्भवि ।**
**जातदेशे च्युतेरेव तदन्यप्राप्त्यसम्भवात् ॥ ६९२ ॥**

उत्क्षेपणमपक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्माणीति सूत्रम् । तत्रोत्क्षेपणमूर्ध्वाधःप्रदेशाभ्यां संयोगविभागकारणं यत्कर्मोत्पद्यते । यथा—शरीरावयवे तत्संबद्धे वा मूर्त्तिमति द्रव्ये लोष्टादावूर्ध्वदिग्भागोपाधिभिराकाशप्रदेशाद्यैः संयोगकारणमधोदिग्भागावच्छिन्नैश्च विभागकारणं प्रयत्नादिवशाद्यत्कर्मोपजायते तदुत्क्षेपणमुच्यते । एतद्विपरीतं संयोगविभागकारणं कर्मावक्षेपणं । ऋजुद्रव्यस्य कुटिलत्वहेतुराकुञ्चनम्, यथोक्तम्—ऋजुनो बाह्वादिद्रव्यस्य येऽग्रावयवा अङ्गुल्यादयस्तेषां स्वसंयोगिभिराकाशाद्यैर्विभागे सति मूलप्रदेशैश्चांशादिभिः संयोगे सति येन कर्मणाऽवयवी बाह्वादिलक्षणः कुटिलः समुत्पद्यते तदाकुञ्चनमिति । एतद्विपर्ययेण तु संयोगविभागोत्पत्तौ येन कर्मणाऽवयवी ऋजुः संपद्यते तत्प्रसारणम् । यदनियतदिक्प्रदेशैर्घटादिभिः संयोगविभागकारणं तद्गमनम् । उत्क्षेपणादिकं चतुःप्रकारं कर्म नियतदिग्देशैराकाशैराशादिभिः संयोगविभागकारणम् । गमनं तु—अनियतदिग्भिः सर्वतोदिक्कैः प्रदेशैः संयोगविभागौ करोति । अत एव पञ्चैव कर्माणि संभवन्ति । भ्रमणस्यन्दनरेचनादीनां गमन एवान्तर्भावात् । एतच्च पंचविधमपि कर्म मूर्त्तिमद्द्रव्यवृत्तिसंयोगविभागकार्योन्नीतसत्त्वतया सिद्धम् । सर्वस्यैव संयोगविभागविशेषः

साधारणं कार्यमतः कार्यतः सिद्धिरस्य । तथा प्रत्यक्षतोऽपि । यथोक्तम्—"सङ्ख्या-परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे कर्म च रूपिसमवायाच्चाक्षुषाणी"ति । तदेषा सङ्क्षेपात्परप्रक्रियोक्ता । तदत्र संयोगविभागयोः पूर्वं निषिद्धत्वात्कार्यमसिद्धम् । अथ नैरन्तर्येणोत्पादादिमात्रलक्षणौ संयोगविभागौ तत्कार्यतया हेतुत्वेनोच्यते, एवमप्यनैकान्तिकता हेतोः । तथाविधेन कर्मणा तयोः क्वचिदप्यन्वयासिद्धेः । साध्यविपर्ययेण च हेतोर्व्याप्तेर्विरुद्धताऽपि । कारणमात्रास्तित्वे च साध्ये सिद्धसाध्यता, वाय्वादीनां तथाविधसंयोगविभागकारणत्वेनाभीष्टत्वात् । विशेषे च साध्ये प्रतिज्ञाया अप्यनुमानबाधा । तथाहि—क्रियासमावेशो भवन्पदार्थस्य क्षणिकस्य वा(ऽक्षणिकस्य वा) । न तावत्क्षणिकस्य, तस्य जन्मदेश एव च्युतेः—नाशाद्देशान्तरप्राप्त्यसंभवात् । प्रयोगः—यो यत्र देशे च्यवते न स तदुत्तरकालं तदन्यदेशमाप्नोति, यथा प्रदीपादिः । जन्मदेश एव च्यवन्ते च सर्वे भावा विवक्षिता इति व्यापकविरुद्धोपलब्धिः ॥ ६९२ ॥

नानैकान्तिकता हेतोरिति दर्शयन्नाह—जन्मेत्यादि ।

**जन्मातिरिक्तकालं हि क्रियाकालं परे जगुः ।**
**इष्टाशुतरनाशेषु दीपादिष्वपि वस्तुषु ॥ ६९३ ॥**

इष्ट आशुतरो विनाशो येषां ते तथा । प्रदीपादेरपि हि शीघ्रतरकालविनाशितयाऽभीष्टस्यापि जन्मोत्तरकालभाविन्येव क्रिया, षट्क्षणस्थायित्वेनास्याक्षणिकत्वात् ॥ ६९३ ॥

कथमित्याह—तथाहीत्यादि ।

**तथाहि कारणाऽऽश्लेषः सामान्यस्याभिव्यञ्जनम् ।**
**स्वावयवे ततः कर्म विभागस्तदनन्तरम् ॥ ६९४ ॥**
**संयोगस्य विनाशश्च ततो द्रव्यस्य संक्षयः ।**
**षट्क्षणस्थायितैवेष्टा दीपादावपि वस्तुनि ॥ ६९५ ॥**

तथाहि—स्वकारणसंबन्धकालस्तावत्प्रथमं भवति । ततः पश्चात्स्वसामान्याभिव्यक्तिकालस्ततोऽवयवकर्मकालस्तदनन्तरमवयवविभागकालस्ततः स्वारम्भकावयवसंयोगविनाशस्ततो द्रव्यविनाश इति षट्क्षणस्थायितैव दीपादेरपि वस्तुनोऽभीष्टा । अतः क्षणिकस्य कस्यचिद्व्रतिमतः पदार्थस्याभावात्सर्वेषामेव क्रियावतां जन्मोत्तरकालभाविन्येव क्रिया । नाप्यसिद्धता हेतोरन्यस्य क्षणिकत्वायोगात् ॥ ६९४ ॥ ६९५ ॥

अथापि स्याद्यदि नाम क्षणिकता भावानामस्माभिरिष्यते । तथाप्यमीषां जन्मकालभाविन्येव क्रिया कस्मान्न भवतीत्याह—पश्चिमेत्यादि ।

**पश्चिमाग्रिमदेशाभ्यां विश्लेषाऽऽश्लेषसंभवे ।**
**गन्ताऽपरो वा सर्वश्च कर्माधारः प्रकल्पितः ॥ ६९६ ॥**
**यो जनः क्षणमध्यास्ते नैव जातु चलात्मकः ।**
**तस्याणवन्तरमात्रेऽपि देशसंक्रान्त्यसम्भवः ॥ ६९७ ॥**

यस्य हि पाश्चात्त्यदेशविश्लेषः संभवति, पुरोवर्त्तिना देशेनाऽऽश्लेषः स गन्ता भवत्यपरो वा प्रसारणाद्याधारः, नत्वन्यो यथाऽऽकाशादि । नचैकक्षणमात्रभाविन इयान्परिलम्बोऽस्ति, येन पूर्वदेशपरिहारपूर्वकमपरदेशमाक्रामेत् । सत्ताकाल एवास्तमयवशीकृतत्वादपर्याप्तो देशान्तरमाक्रमितुम् । तस्माज्जन्मकालभाविन्यपि क्रिया न युक्ता । नापि पूर्वोत्तरयोः कोट्योस्तदानीं तस्यानुपाख्यत्वात् । अतो यः क्षणमपि नास्ते तस्याऽऽस्तां तावद्विदूरतरदेशान्तरावक्रमण(णा ?)सम्भवः । अपितु परमाणुमात्रप्रदेशसंक्रमणमपि नास्तीति कुतः क्षणिकस्य क्रिया ॥ ६९६ ॥ ६९७ ॥

नाप्यक्षणिकस्येति दर्शयति—स्थैर्ये त्वित्यादि ।

**स्थैर्ये तु वस्तुनः सर्वे दुर्घटा गमनादयः ।**
**सुतरामेव सर्वासु दशास्वस्याविशेषतः ॥ ६९८ ॥**

एकरूपं हि सदा वस्त्वक्षणिकमुच्यते, तस्य सुतरामेव क्रियासमावेशो न संभवति, आकाशवत्सर्वदा निर्विशिष्टत्वात् । प्रयोगः—यत्सर्वदा निर्विशिष्टं न तस्य क्रिया संभवति, यथाऽऽकाशस्य, निर्विशिष्टं चाक्षणिकाभिमतं सर्वदा वस्त्विति व्यापकविरुद्धोपलब्धिः ॥ ६९८ ॥

स्यादेतद्यदि नामाविशिष्टमक्षणिकं वस्तु, तथापि प्रकृत्यैव तस्य गन्त्रादिरूपत्वात्क्रियावत्त्वं भविष्यतीत्यतोऽनैकान्तिकता हेतोरित्याशङ्क्याह—यदीत्यादि ।

**यदि गन्त्रादिरूपं तत्प्रकृत्या गमनादयः ।**
**सदा स्युः क्षणमप्येवं नावतिष्ठेत निश्चलम् ॥ ६९९ ॥**
**यस्माद्गत्याद्यसत्त्वेऽपि प्राप्नुवन्त्यस्य ते ध्रुवम् ।**
**अत्यक्तपूर्वरूपत्वाद्गत्याद्युदयकालवत् ॥ ७०० ॥**

यदि ह्यमी देवदत्तादयः क्षणिकत्वेनाभिमताः प्रकृत्या गमनोत्क्षेपणादियोगिनस्तदा

न कदाचिदपि निश्चलमवतिष्ठेरन्, सर्वदा गन्त्रादिरूपत्वात् । ततश्चास्य देवदत्तादेर्गत्यादिमतो गत्याद्यसत्त्वेऽपि—निश्चलावस्थायामपि, ते—गमनादयः, प्राप्नुवन्ति । गत्याद्युत्पत्तिकाल इवात्यक्तपूर्वरूपत्वात् ॥ ६९९ ॥ ७०० ॥

**अथागन्त्रादिरूपं तत्प्रकृत्याऽगमनादयः ।**
**सदा स्युः क्षणमप्येकं नैव प्रस्पन्दवद्भवेत् ॥ ७०१ ॥**
**यस्माद्गत्यादिभावेऽपि निश्चलात्मकमेव तत् ।**
**अत्यक्तपूर्वरूपत्वान्निश्चलात्मककालवत् ॥ ७०२ ॥**

अथैतद्दोषभयादगन्त्रादिरूपत्वमस्याङ्गीक्रियते । तथासत्यगमनादयः सर्वदा स्युरेकरूपत्वादाकाशवत् । आदिशब्दादुत्क्षेपणादिपरिग्रहः । ततश्च गत्यादिभावेऽपि तस्य निश्चलत्वमेव प्राप्नोति, अपरित्यक्तागत्यादिरूपत्वाद्यथा निश्चलावस्थायाम् । प्रस्पन्दः—कर्म सोऽस्यास्तीति प्रस्पन्दवत् । निश्चलात्मककालवदिति सप्तम्यन्ताद्वतिः ॥ ७०१ ॥ ७०२ ॥

अथापि स्यात्—नैवाऽस्यैकरूपता, किं तर्हि? गन्त्रगन्तृरूपतयोभयरूपत्वादतो यथोक्तदोषप्रसङ्गः, हेतोश्चासिद्धतेत्याशङ्क्याह—यदि त्वित्यादि ।

**यदि तु स्यादगन्ताऽयमेकदा चान्यथा पुनः ।**
**परस्परविभिन्नात्मसंगतेर्भिन्नता भवेत् ॥ ७०३ ॥**

एकदा चेति । चकारो विभिन्नक्रमः, पुनरित्यस्यानन्तरं द्रष्टव्यः । पुनश्च—अन्यथेत्यर्थः । एवं हि गन्तृत्वागन्तृत्वादिविरुद्धधर्माध्यासादेकत्वहानिप्रसङ्गः ॥ ७०३ ॥

अत एव तस्य क्षणिकत्वं सिद्धमिति दर्शयन्नाह—अत्यन्तभिन्नावित्यादि ।

**अत्यन्तभिन्नावात्मानौ ताविति व्यवसीयते ।**
**विरुद्धधर्मवृत्तित्वाचलनिश्चलवस्तुवत् ॥ ७०४ ॥**

ताविति । चलाचलावस्थाभाविनौ । चलनिश्चलवस्तुवदिति । लतापर्वतादिवदित्यर्थः ॥ ७०४ ॥

एवं तावदनुमानबाधां प्रतिज्ञायाः प्रतिपाद्य प्रत्यक्षबाधामपि प्रतिपादयन्नाह—दृश्यत्वेत्यादि ।

**दृश्यत्वाभिमतं कर्म न वस्तुव्यतिरेकि च ।**
**दृश्यते सोपि नैवास्य सत्ता युक्त्यनुपातिनी ॥ ७०५ ॥**

यदुपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते तत्प्रेक्षावतामसद्व्यवहारमवतरति, यथा कस्मिंश्चित्प्रदेशे पटोऽनुपलभ्यमानः, नोपलभ्यते च रूपादिवस्तुव्यतिरेकेण कर्मेति स्वभावानुपलब्धिः। नहि रूपादेस्तथा देशान्तरावष्टम्भेनोत्पद्यमानस्य व्यतिरेकेण कचिदिन्द्रियज्ञाने प्रतिभासमानमालक्ष्यते कर्म। या चेयमुत्क्षेपणमवक्षेपणमिति जल्पानुषङ्गिणी धीरुपजायते, सा साभिजल्पत्वान्न प्रत्यक्षं, नचाप्येषा कर्मपदार्थानुभवभाविनी युक्ता, रूपादेरेव तथातथोत्पद्यमानस्य दर्शनात्, यथासङ्केतं तेष्वेवाध्यवसायेन वृत्तेः। एतच्चानन्तरमेव प्रतिपादितं "नित्यानित्ययोर्गत्याद्यभावा"दिति। अतोऽसिद्धमेतद्यदुक्तं प्रत्यक्षत एव कर्म सिद्धमिति ॥ ७०५ ॥

यथोक्तमेवार्थमुपसंहरन्नाह—अस्थिरे वेत्यादि।

**अस्थिरे वा स्थिरे वैवं गत्यादीनामसम्भवः।**
**प्राक्तनापरदेशाभ्यां विभागप्राप्त्ययोगतः ॥ ७०६ ॥**

**एवमिति**—अनन्तरोक्ताभ्यां प्रत्यक्षानुमानाभ्यां निराकृतत्वात्। **विभागप्राप्त्ययोगत** इति। प्राक्तनेन विभागायोगात्, अपरदेशेन प्राप्त्ययोगादिति यथाक्रमं सम्बन्धः ॥ ७०६ ॥

यद्येवं कथं तर्हि गतिव्यवहारो लोके भवतीत्याह—**देशान्तरे**त्यादि।

**देशान्तरोपलब्धेस्तु नैरन्तर्येण जन्मनः।**
**समानापरवस्तूनां गतिभ्रान्तिः प्रदीपवत् ॥ ७०७ ॥**

## इति कर्मपदार्थपरीक्षा।

समानापरवस्तूनामिति। समानानि च तान्यपराणि चेति समस्य तानि च वस्तूनि चेति विग्रहः कार्यः। तेषां समानापरवस्तूनां यन्नैरन्तर्येण—स्वोपादानकारणदेशपरिहारेण जन्म—सद्भावः, तस्य जन्मन उपलब्धेः कारणात्स एवायं गच्छतीति, यथा प्रदीपस्य केनचिन्नीयमानस्य देशान्तरं गच्छतीति बुद्धिहेतुत्वं भवति। नहि प्रदीपः स एव देशान्तरमाक्रामति। तस्य षट्क्षणस्थायित्वेनाभिमतत्वात्। भावस्वभाव एव हि पूर्वापरकोटिशून्यो जन्मेत्यभिधीयते। तेन तस्योपलब्धिर्युज्यत एव। अथवा जन्मन इति पञ्चम्यन्तमेतत्। नैरन्तर्येणोत्पादात्समानापरवस्तूनां देशान्तरोपलब्धेरिति सम्बन्धः ॥ ७०७ ॥

## इति कर्मपदार्थपरीक्षा।

द्रव्यादिष्वित्यादिना—सामान्यविशेषदूषणमारभते ।

**द्रव्यादिषु निषिद्धेषु जातयोऽपि निराकृताः ।**
**पदार्थत्रयवृत्ता हि सर्वास्ताः परिकल्पिताः ॥ ७०८ ॥**

**जातय** इति । सामान्यानि । ताश्च द्रव्यगुणकर्मात्मकपदार्थत्रयाश्रितत्वात्तन्निराकरणादेवापास्ताः । नह्याश्रयमन्तरेणाश्रितानां क्वचिदवस्थितिरस्ति, अनाश्रितत्वप्रसङ्गात् । जातिग्रहणमुपलक्षणम्, विशेषा अप्यन्त्यद्रव्यवृत्तित्वादाश्रिता एवेष्टाः, अतस्तेऽप्याश्रयनिराकरणादेवापास्ताः ॥ ७०८ ॥

तथाऽपि पुनर्विशेषेण दूषणं वक्तुकामोऽनिर्ज्ञातस्वरूपस्याशक्यदूषणत्वात्सामान्यविशेषयोस्तावत्स्वरूपं दर्शयन्नाह—तत्रेत्यादि ।

**तत्रेयं द्विविधा जातिः परैरभ्युपगम्यते ।**
**सामान्यमेव सत्ताख्यं समस्तेष्वनुवृत्तितः ॥ ७०९ ॥**
**द्रव्यत्वादि तु सामान्यं सद्विशेषोऽभिधीयते ।**
**स्वाश्रयेष्वनुवृत्तस्य चेतसो हेतुभावतः ॥ ७१० ॥**
**विजातिभ्यश्च सर्वेभ्यः स्वाश्रयस्य विशेषणात् ।**
**व्यावृत्तिबुद्धिहेतुत्वं तेषामेव ततः स्थितम् ॥ ७११ ॥**

तत्र सामान्यं द्विविधं परमपरं च, परं सत्ताख्यं, तच्च समस्तेषु त्रिषु द्रव्यगुणकर्मस्वनुवृत्तिप्रत्ययस्यैव कारणत्वात्सामान्यमेव न विशेषः । अपरं तु द्रव्यत्वकर्मत्वादिलक्षणं, तच्च स्वाश्रयेषु द्रव्यादिष्वनुवृत्तिप्रत्ययहेतुत्वात्सामान्यमित्युच्यते, स्वाश्रयस्य च विजातीयेभ्यो व्यावृत्तिप्रत्ययहेतुतया विशेषणात्सामान्यमपि सद्विशेष इत्यभिधीयते । तथाहि—गुणादिष्वद्रव्यमगुण इत्यादिका येयं व्यावृत्तबुद्धिरुदयमासादयति, तां प्रति हेतुत्वमेषामेव गुणत्वद्रव्यत्वादीनां व्यवस्थितं नान्यस्य, न ह्यद्रव्यत्वादिकमपरमस्ति । अपेक्षाभेदाच्चैकस्य सामान्यविशेषभावो न विरुध्यत एवेति भावः ॥ ७०९ ॥ ७१० ॥ ७११ ॥

परेषां विशेषाणां लक्षणमाह—विशेषा एवेत्यादि ।

**विशेषा एव केचित्तु व्यावृत्तेरेव हेतवः ।**
**नित्यद्रव्यस्थिता येऽन्त्या विशेषा इति वर्णिताः ॥ ७१२ ॥**

केचिद्विशेषा एवेष्यन्ते, न सामान्यानि । व्यावृत्तेरेव—व्यावृत्तिप्रत्ययस्यैव हेतु-

त्वादित्यर्थः । के पुनस्त इत्याह—**नित्येत्यादि** । तथाचोक्तम्—नित्यद्रव्यवृत्तयोऽन्त्या विशेषा इति । नित्यद्रव्यवृत्तय इति । परमाण्वाकाशकालदिगात्ममनःसु वृत्तेः । परमाणूनां जगद्विनाशारम्भकोटिभूतत्वात्, मुक्तात्मनां मुक्तमनसां च संसारपर्यन्तरूपत्वादन्तत्वम्, अतस्तेषु भवा अन्त्या इत्युच्यन्ते । तेषु स्फुटतरमालक्ष्यमाणत्वात् । वृत्तिस्तु पुनरेषां सर्वस्मिन्नेव परमाण्वादौ नित्ये द्रव्ये । अत एव नित्यद्रव्यवृत्तयोऽन्त्या इत्युभयोरुपादानम् । तत्र परस्परमत्यन्तव्यावृत्तबुद्धिहेतुत्वात्स्वाश्रयमन्यतो विशेषयन्तीति विशेषा उच्यन्ते ॥ ७१२ ॥

कुतः पुनरमी सिद्धा इत्याह—**यद्बलादित्यादि** ।

**यद्बलात्परमाण्वादौ जायन्ते योगिनां धियः ।**
**विलक्षणोऽयमेतस्मादिति प्रत्येकमाश्रिताः ॥ ७१३ ॥**

यथा ह्यस्मदादीनां गवादिष्वाकृतिगुणक्रियावयवसंयोगनिमित्तोऽश्वादिबुद्धिव्यावृत्तः प्रत्ययो दृष्टः, तद्यथा—गौः शुक्लः शीघ्रगतिः पीनककुदो महाघण्ट इति यथाक्रमम्, तथाऽस्मद्विशिष्टानां योगिनां नित्येषु तुल्याकृतिगुणक्रियेषु परमाणुषु मुक्तात्ममनःसु चान्यनिमित्तासंभवाद्यद्बलात्प्रत्येकं विलक्षणोऽयमिति प्रत्ययव्यावृत्तिर्देशकालविप्रकर्षदृष्टे च स एवायमिति प्रत्यभिज्ञानं यतो भवति, ते योगिनां विशेषप्रत्ययोन्नीतसत्त्वा अन्त्या विशेषाः सिद्धाः । ते च यथास्वं प्रत्येकमाश्रयमाश्रिताः योगिनां प्रत्यक्षत एव सिद्धाः ॥ ७१३ ॥

अथ जातयः कथं सिद्धा इत्याह—**प्रत्यक्षत इत्यादि** ।

**प्रत्यक्षतः प्रसिद्धास्तु सत्त्वगोत्वादि जातयः ।**
**अक्षव्यापारसद्भावे सदादिप्रत्ययोदयात् ॥ ७१४ ॥**

यद्गतान्वयव्यतिरेकानुविधायि यद्भवति तत्ततो भवतीति व्यवस्थाप्यते । द्रव्यादिषु च सदादिप्रत्ययप्रसूतिरक्षगतान्वयव्यतिरेकावनुविदधती किमितीन्द्रियजन्यताव्यपदेशं नाश्नुवीत, तदन्येन्द्रियज्ञानवत्, अन्यथाऽतिप्रसङ्गः स्यात् ॥ ७१४ ॥

अनुमानतोऽपि सत्त्वमासां प्रतिपादयन्नाह—**अनुमानेत्यादि** ।

**अनुमानबलेनापि सत्त्वमासां प्रतीयते ।**
**विशेषप्रत्ययो येन निमित्तान्तरभाविकः ॥ ७१५ ॥**

**विशेषप्रत्यय इति** । द्रव्यादिवस्तुविलक्षणाकारः प्रत्ययः । निमित्तान्तरभाविकः

—निमित्तान्तराद्भाव उत्पादः सोऽस्यास्तीति कृत्वा । प्रयोगः—यद्वस्त्वाकारविलक्षणो यः स तद्व्यतिरिक्तनिमित्तान्तरभावी, यथा वस्त्रचर्मकम्बलेषु रक्तादिप्रत्ययः, तथा चायं द्रव्यादिषु सदादिप्रत्यय इति स्वभावहेतुं मन्यते परः ॥ ७१५ ॥

एनमेव प्रमाणार्थं **गवादी**त्यादिना भाविविक्तादिरचितप्रमाणोपन्यासेन दर्शयति ।

**गवादिशब्दप्रज्ञानविशेषा गोगजादिषु ।**
**समयाकृतिपिण्डादिव्यतिरिक्तार्थहेतवः ॥ ७१६ ॥**
**गवादिविषयत्वे हि सति तच्छब्दबुद्धितः ।**
**अन्यत्वात्तद्यथैष्वेव सवत्साङ्कुशधीध्वनी ॥ ७१७ ॥**
**शशशृङ्गादिविज्ञानैर्व्यभिचाराद्विशेषणम् ।**
**तत्स्वरूपाभिधानं च वैधर्म्येण निदर्शनम् ॥ ७१८ ॥**
**गवादिष्वनुवृत्तं च विज्ञानं पिण्डतोऽन्यतः ।**
**विशेषकत्वान्नीलादिविज्ञानमिव जायते ॥ ७१९ ॥**
**गोतत्त्वार्थान्तरं गोत्वं भिन्नधीविषयत्वतः ।**
**रूपस्पर्शादिवत्तस्येत्युक्तेश्चैव तुरङ्गवत् ॥ ७२० ॥**

तत्र भाविविक्तः प्राह—गवाश्वमहिषवराहमातङ्गादिषु गवाद्यभिधानप्रज्ञानविशेषाः समयाकृतिपिण्डादिव्यतिरिक्तस्वरूपाऽनुरूपसंसर्गिनिमित्तान्तरनिबन्धना इत्यवघोषणा । गवादिविषयत्वे सति पिण्डादिस्वरूपाभिधानप्रज्ञानव्यतिरिक्ताभिधानज्ञानत्वात्, तेष्वेव गवादिषु सवत्सा गौर्भाराक्रान्तो महिषः सशल्यो वराहः साङ्कुशो मातङ्ग इत्याद्यभिधानप्रज्ञानविशेषवत् । वैधर्म्येण पिण्डादिस्वरूपाभिधानप्रज्ञानविशेषाः । यानि च तानि निमित्तान्तराणि तानि गोत्वादीनीति सिद्धम् । तत्राभिधानं—शब्दः, प्रज्ञानं—प्रत्ययो ज्ञानमित्यर्थः । अभिधानप्रज्ञानान्येव विशेषा इति विशेषणसमासः । समयः—सङ्केतः, आकृतिः—संस्थानं, पिण्डो—द्रव्यम्, आदिशब्देन रूपादिपरिग्रहः, एभ्यो व्यतिरिक्तं स्वरूपं येषां स्वाभिधानप्रत्ययं प्रत्यनुरूपाणामुपाधित्वात्संसर्गिणां निमित्तान्तराणां तानि निबन्धनं येषामिति विग्रहः । अथवा समयादिव्यतिरिक्तानि च तानि सदादिप्रत्ययाभिधानं प्रतिस्वरूपानुरूपसंसर्गीणि चेति विग्रहः कार्यः । शेषं पूर्ववत् । **अवघोषणे**ति । प्रतिज्ञा । शशविषाणादि-

प्रत्ययैर्व्यभिचारशङ्कया तत्परिहारार्थं गवादिविषयत्वे सतीति विशेषणम् । पिण्डादिस्वरूपाभिधानप्रज्ञानव्यतिरिक्ते अभिधानप्रज्ञाने येषां तद्भावस्तत्त्वमिति विग्रहः । वैधर्म्येण पिण्डादिस्वरूपाभिधानप्रज्ञानविशेषा इति । तत्र हि पिण्डादिव्यतिरिक्तनिमित्तान्तरनिबन्धनत्वाभावे हेतोरपि यथोक्तस्याभावात् । उद्योतकरस्त्वाह—गवादिष्वनुवृत्तिप्रत्ययः पिण्डादिव्यतिरिक्तान्निमित्ताद्भवति, विशेषकत्वान्नीलादिप्रत्ययवत् । तथा गोतोऽर्थान्तरं गोत्वं, भिन्नप्रत्ययविषयत्वाद्रूपस्पर्शादिवत्, तस्येति च व्यपदेशविषयत्वाद्यथा चैत्रस्याश्व इति चैत्राद्व्यतिरेकेण व्यपदिश्यमान इति । तदेतद्दर्शयति **गवादिष्वित्यादि** । सुबोधम् ॥ ७१६ ॥ ७१७ ॥ ७१८ ॥ ७१९ ॥ ७२० ॥

**असार**मित्यादिना प्रतिविधत्ते ।

**असारं तदिदं कार्यं प्रक्रियामात्रवर्णनम् ।**
**न तु तज्ज्ञापकं किञ्चित्प्रमाणमिह विद्यते ॥ ७२१ ॥**
**अक्षव्यापारसद्भावान्नह्यनन्तरभाविनः ।**
**सदादिप्रत्ययास्सिद्धाः सङ्केताभोगतस्तु ते ॥ ७२२ ॥**

यदुक्तमक्षव्यापारसद्भावात्सदादिप्रत्ययानामक्षाश्रितत्वमिति । तत्र यदि साक्षादक्षव्यापारान्तरभावित्वादिति हेत्वर्थोऽभिप्रेतस्तदा हेतुरसिद्धः, सविकल्पत्वेन सङ्केताभोगस्मरणादिव्यवहितत्वात् ॥ ७२१ ॥ ७२२ ॥

न चैतच्छक्यं वक्तुम्, एकमनुगामिनमन्तरेण कथं परस्परव्यावृत्तात्मानो भावाः पारम्पर्येणाप्यभिन्नाकारप्रत्ययनिबन्धनं युज्यन्त इत्याशङ्क्याह—**यथेत्यादि** ।

**यथा धात्र्यभयादीनां नानारोगनिवर्तने ।**
**प्रत्येकं सह वा शक्तिर्नानात्वेऽप्युपलभ्यते ॥ ७२३ ॥**
**न तेषु विद्यते किंचित्सामान्यं तत्र शक्तिमत् ।**
**चिरक्षिप्रादिभेदेन रोगशान्त्युपलम्भतः ॥ ७२४ ॥**
**सामान्येऽतिशयः कश्चिन्नहि क्षेत्रादिभेदतः ।**
**एकरूपतया नित्यं धात्र्यादेस्तु स विद्यते ॥ ७२५ ॥**
**एवमत्यन्तभेदेऽपि केचिन्नियतशक्तितः ।**
**तुल्यप्रत्यवमर्शादेर्हेतुत्वं यान्ति नापरे ॥ ७२६ ॥**

यथा ह्यामलक्यादयः परस्परमत्यन्तविभिन्नमूर्त्तयोऽपि प्रत्येकं समुदिता वा नाना-

विधव्याधिव्यावर्त्तनसामर्थ्याध्यासिता भवन्त्यन्तरेणाप्यनुगामिनम्, नहि तत्र सामान्यमेव तथाविधामर्थक्रियां संपादयतीति युक्तं वक्तुम् । यतस्तेषु विविधार्थक्रियासंपादनयोग्यं न सामान्यमस्ति । यदि स्यात्तदा येयं क्वचित्कदाचित्कासांचिद्धात्र्यादीनां चिरक्षिप्ररोगाद्युपशमनसामर्थ्योपलब्धिः सा न स्यात्, सामान्यस्यैकरूपत्वात् । नच क्षेत्रक्षीरावसेकादिसंस्कारविशेषवशादासादितातिशयं सामान्यमेवैतामर्थक्रियां विचित्रां सम्पादयतीति युक्तम् । तस्य नित्यतया परैरनाधेयविकारस्य क्षेत्रादिभेदतोऽपि नातिशयः कश्चिदेकरूपत्वात् । धात्र्यादीनां त्वनित्यानां सोऽतिशयः क्षेत्रादिभेदतो भिद्यत इत्यतस्त एव रोगाद्युपशमनसामर्थ्योपेताः । ततश्च तद्वदेवान्येऽपि घटादयो भावाः स्वहेतुप्रत्ययेभ्यस्तथोत्पत्तेः अकृत्यैवैकाकारप्रत्यवमर्शादिहेतवो भविष्यन्तीत्यदोषः । तुल्यप्रत्यवमर्शादेरित्यादिशब्देन सलिलसंधारणाद्यर्थक्रियासामर्थ्यपरिग्रहः ॥ ७२३ ॥ ७२४ ॥ ७२५ ॥ ७२६ ॥

कथं पुनः सङ्केताभोगादिव्यवहितत्वमेषां सिध्यतीत्याह—कार्येत्यादि ।

**कार्यमात्रोपयोगित्वविवक्षायां च सच्छ्रुतेः ।**
**समयः क्रियते तेषु यद्वान्यस्या यथारुचि ॥ ७२७ ॥**
**वाहदोहादिरूपेण कार्यभेदोपयोगिनि ।**
**गवादिश्रुतिसङ्केतः क्रियते व्यवहर्तृभिः ॥ ७२८ ॥**
**तत्सङ्केतमनस्कारात्सदादिप्रत्यया इमे ।**
**जायमानास्तु लक्ष्यन्ते नाक्षव्यापृत्यनन्तरम् ॥ ७२९ ॥**

नह्यगृहीतसमयानां सदादिप्रत्ययप्रसूतिरन्यथा सङ्केतकरणवैयर्थ्यं स्यात् । तस्माद्यस्मिन्नेकाकारपरामर्शव्यवस्थितार्थक्रियासामर्थ्यमात्रप्रतिपादितमेवाभेदं परामृश्य सदिति श्रुतिं विनिवेशयन्ति समयकृतः (तस्मिन्सदादिप्रत्ययः ।) **यद्वाऽन्यस्या** इति । वस्त्वित्यस्याः श्रुतेः । एवं गवादिविशेषश्रुतेरपि वाहादिसामर्थ्यविशेषजिज्ञासायां समयः क्रियत इति योज्यम् । ततश्च सङ्केतोत्तरकालं व्यवहारकाले गवादिषु दृष्टेष्वपि पूर्वकृतसङ्केताभोगस्ततस्तन्नामस्मरणं ततः पश्चात्सदादिप्रत्ययोदय इति स्फुटतरमालक्ष्यत एव । क्वचिदत्यभ्यासत आशुतरोत्पादादमीषां क्रमो नावधार्यते । मन्दाभ्यासास्तु स्फुटतरमवधारयन्त्येव तदित्युपसंहरति । तत्तस्मात्तदेवं समयाभोगादिव्यवहितत्वात्साक्षादनुत्पत्तेः प्रत्यक्षत्वमेषामसिद्धम्, न चापि पारम्पर्येणोत्पद्यमा-

। ७२७ ॥ ७२८ ॥ ७२९ ॥

इतश्च स्मार्त्तत्वात्तदन्यस्मृतिवत्प्रत्यक्षत्वमयुक्तं सदादिप्रत्ययस्येति दर्शयन्नाह—अजल्पेत्यादि ।

**अजल्पाकारमेवादौ विज्ञानं तु प्रजायते ।**
**ततस्तु समयाभोगस्तस्मात्स्मार्त्तं ततोऽपि ते ॥ ७३० ॥**

स्वलक्षणे सङ्केतस्याकरणाद्दृष्ट्वा च विकल्पनात्प्रथमतरं वस्तुस्वलक्षणविषयतयाऽभिलापसंसर्गविवेकि विज्ञानमक्षाश्रितमुपजायते । ततः पश्चात्तस्मिन्नेव परिदृष्टे वस्तुनि समयाभोगस्तदनन्तरं यथासमयं परिदृष्टार्थविषयास्तदव्य(ध्य ?)वसायितया सदादिप्रत्ययास्तमेवार्थं परिदृष्टमभिलपन्तः समुत्पद्यमानाः कथमिव स्मार्त्ततां नासादयेयुः । **ततोऽपीति** । यथा परिदृष्टाव्य(ध्य ?)वसायात् । त इति । सदादिप्रत्ययाः ॥ ७३० ॥

कुतः पुनरयमुत्पत्तिक्रमो विज्ञानानामालक्षित इत्याह—**अन्यत्रे**त्यादि ।

**अन्यत्र गतचित्तस्य वस्तुमात्रोपलम्भनम् ।**
**सर्वोपाधिविवेकेन तत एव प्रवर्त्तते ॥ ७३१ ॥**

यतस्ते सदादिप्रत्यया अमुना क्रमेणोपजायन्ते, तत एवान्यत्र—विषयान्तरे गतचित्तस्य—व्यासक्तमनसः पुरोऽवस्थितं वस्तु पश्यतः संमुखीभूतवस्तुसङ्केतमनस्काराद्यप्रवृत्तेः प्रथमतरं सर्वोपाधिविविक्तवस्तुमात्रदर्शनं प्रवर्त्तते । अन्यथा हि यदि सर्वमेव साभिजल्पं विज्ञानं स्यात्तदा पुरोऽवस्थितं वस्तु सर्वोपाधिशून्यमन्यत्र गतमनाः कथमीक्षेत । न ह्येकस्मिन्काले युगपदभिलापद्वयं संवेद्यते । तदेवं साक्षादक्षगतान्वयव्यतिरेकानुविधायित्वमसिद्धम् ॥ ७३१ ॥

तत्र यदुक्तं गवादीत्यादि तत्राह—**हेता**वित्यादि ।

**हेतावाद्येऽपि वैफल्यं समयाभोगभाविता ।**
**तेषामिष्टैव संसर्गी सोऽन्वयव्यतिरेकवान् ॥ ७३२ ॥**

यदि सामान्येनानुरूपसंसर्गिनिमित्तान्तरमात्रनिवन्धनत्वमेषां प्रसाध्यते तदा सिद्धसाध्यता, यतो गवादिसङ्केताभोग एव गवादिप्रत्ययव्यपदेशानामनुरूपसंबन्धी । तथाहि—तस्मिन्सति भवन्ति विजातीयमनस्कारे, (असति) च न भवन्ति । अतः स एवान्वयव्यतिरेकवान्हेतुरेषां सिद्धः, तद्गतान्वयव्यतिरेकस्यैवानुविधानात्, अतो वैफल्यं हेतुप्रयोगप्रयासस्य ॥ ७३२ ॥

**तस्य पक्षाबहिर्भावे साध्यशून्यं निदर्शनम् ।**
**नैवं तद्धेतवः साक्षाद्वाह्यवत्साङ्कुशादयः ॥ ७३३ ॥**
**नाभिधानविकल्पानां वृत्तिरस्ति स्वलक्षणे ।**
**सर्वं वाग्गोचरातीतमूर्त्तिर्येन स्वलक्षणम् ॥ ७३४ ॥**

अथैनं सङ्केतमनस्कारं पक्ष एवान्तर्भाव्य तद्व्यतिरिक्तनित्यैकानुगामिसामान्याख्यसंसर्गिनिबन्धनत्वमेषां साध्यते तदा दृष्टान्तस्य साध्यविकलता, न ह्येवंभूतेन क्वचिदन्वयः सिद्धः । ये चामी वत्साङ्कुशादयः सवत्साद्यभिधानप्रज्ञानहेतुत्वेन वर्णितास्तेऽपि तद्धेतुत्वेन न सिद्धाः, न ह्येषामासादितस्वलक्षणभावानां साक्षादभिधानप्रज्ञानहेतुत्वमस्ति, सर्ववाग्विकल्पगोचरातीतरूपत्वात्स्वलक्षणस्येत्यतः साध्यविकलता दृष्टान्तस्य । पारम्पर्येण तु हेतुत्वकल्पनायामतिप्रसङ्गः स्यात्, सर्वस्यैव सर्वत्र पारम्पर्येणोपयोगस्य विद्यमानत्वात् ॥ ७३३ ॥ ७३४ ॥

यद्येवं कथं तर्हि लोकोऽङ्कुशादि बाह्यमेव तद्धेतुत्वेनाध्यवस्यतीत्याह—अन्तर्मात्रेत्यादि ।

**अन्तर्मात्रासमारूढं सांवृतं त्ववलम्ब्य ते ।**
**बहीरूपाध्यवसितं प्रवर्त्तन्तेऽङ्कुशादिकम् ॥ ७३५ ॥**

यत्तावदङ्कुशादिप्रज्ञप्त्युपादानं स्वलक्षणं न तद्विकल्पैः स्पृश्यत इत्युक्तम् । यत्तु सांवृतं तत्कल्पनाशिल्पिनिर्मितात्मरूपतयाऽन्तर्मात्रारूढमेव न बाह्यं, दृश्यविकल्पयोस्तु विवेकेनानभिज्ञतया जनो बाह्यमिव तमाकारं मन्यमानो बाह्यमेव वस्त्वभिधावतीति नातो बाह्यरूपतासिद्धिरङ्कुशादीनाम् । अङ्कुशादिकमित्यवलम्ब्येत्यनेन पूर्वकेण संबन्धनीयम् । अन्तर्मात्रासमारूढं बहीरूपतयाऽध्यवसितं सांवृतमङ्कुशादिकमालम्ब्य बाह्ये प्रवर्न्तत इत्यर्थः । अन्तर्मात्रा—बुद्धिः ॥ ७३५ ॥

यच्च गवादिविषयत्वे सतीति विशेषणं तदप्ययुक्तमेव, व्यवच्छेद्याभावादिति दर्शयन्नाह—क्रियेत्यादि ।

**क्रियागुणव्यपदेशाभावो हेतुश्च वर्ण्यते ।**
**अभावप्रत्ययस्येति विशेषणमनर्थकम् ॥ ७३६ ॥**
**तदप्ययुक्तं हेतुत्वे वस्तुता शक्तितोऽपि च ।**
**अभावप्रत्ययः प्राप्तः सत्तादिष्वविशेषतः ॥ ७३७ ॥**

अभावप्रत्ययस्यापि क्रियागुणव्यपदेशाभाव एव हेतुत्वेन भवद्भिर्वर्ण्यते । तदप्ययुक्तमिति । क्रियाद्यभावस्य हेतुत्वोपवर्णनम् । तथाहि—कार्योत्पादनसामर्थ्यमेव हेतुत्वमुच्यते, तच्च सामर्थ्यं वस्त्वाधारमेव, तल्लक्षणत्वाद्वस्तुनः । यदि चाभावोऽपि तथाविधसामर्थ्याध्यासितो भवेत्तदा कथमिव वस्तुत्वं नासादयेत्, एतावन्मात्रनिबन्धनत्वाद्वस्तुनः । ततश्चाभावरूपतामेव विजह्यात् । वस्तुस्वभावप्रच्युतिरूपत्वादभावस्य । अपिच—यदि क्रियागुणव्यपदेशाभावोऽभावप्रत्ययहेतुः स्यात्तदा सत्तादिष्वप्यभावप्रत्ययः प्राप्तस्तत्रापि शशविषाणादिवत्क्रियागुणव्यपदेशाभावाविशेषात् ॥ ७३६ ॥ ७३७ ॥

हेतुश्चासिद्ध इति दर्शयन्नाह—**वैलक्षण्य**मिति ।

**वैलक्षण्यमसिद्धं च पिण्डाकृत्यादिबुद्धितः ।**
**तज्ज्ञानानामसिद्धोऽपि हेतुरेष भवत्यतः ॥ ७३८ ॥**

नहि गवादिप्रत्ययानां पिण्डादिव्यतिरिक्तमर्थान्तरमध्यवसेयमस्ति, येन तत्प्रत्ययान्यवत्स्मेषां भवेत् ॥ ७३८ ॥

प्रतिज्ञायाश्चानुमानबाधेति दर्शयन्नाह—**अन्वयी**त्यादि ।

**अन्वयी प्रत्ययो यस्माच्छब्दव्यक्त्यवभासवान् ।**
**वर्णाकृत्यक्षराकारशून्या जातिस्तु वर्ण्यते ॥ ७३९ ॥**

एतदुक्तं भवति—अनुगामिप्रत्ययानां पिण्डादिव्यतिरिक्तं निमित्तमालम्बनभूतमेव भवद्भिः सिसाधयिषितम्, तच्चायुक्तम्, तस्याप्रतिभासनात्; तद्विलक्षणवर्णाकृत्यादिप्रतिभासनाच्च । तथाहि—भवद्भिर्वर्णाकृत्यक्षराकारशून्यमेव वर्ण्यते गोत्वादिसामान्यम्, विज्ञानं च वर्णादिप्रतिभासानुगतमनुभूयते, तत्कथमस्य वर्णादिशून्यमालम्बनं भवेत्, न ह्यन्याकारस्य विज्ञानस्यान्यदालम्बनं युक्तमतिप्रसङ्गात् । प्रयोगः—यो यद्विलक्षणार्थप्रतिभासः प्रत्ययः स तद्ग्राहको न भवति, तद्यथा शब्दज्ञानं न रूपग्राहकं, जातिविलक्षणवर्णादिप्रतिभासश्चान्वयी प्रत्यय इति व्यापकविरुद्धोपलब्धेः । **शब्दव्यक्त्यवभासवा**निति । शब्दो—गौरित्यादिव्यपदेशः, व्यक्तिः—वर्णसंस्थानात्मिका, तयोरवभासः सोऽस्यास्तीति तद्वान् । अक्षराणि—गकारौकारविसर्जनीयादीनि ॥ ७३९ ॥

शङ्करस्वामी त्वाह—सामान्यमपि नीलत्वादि नीलाद्याकारमेव, अन्यथा हि नील

इत्येवमनुवृत्तिप्रत्ययो न स्यात्, ततश्च हेतोरसिद्धत्वान्नानुमानबाधेति । तदत्राह— सामान्यस्यापीत्यादि ।

**सामान्यस्यापि नीलादिरूपत्वे गुणतोऽस्य कः ।**
**भेदो नानुगतश्चैको नीलादिरुपलक्ष्यते ॥ ७४० ॥**
**भासमानोऽपि चेदेष न विवेकेन लक्ष्यते ।**
**तत्कथं धीध्वनी व्यक्तौ वर्त्तेते तद्बलेन तौ ॥ ७४१ ॥**
**निश्चयात्मक एवायं सामान्यप्रत्ययः परैः ।**
**इष्टश्चाग्रहणे प्राप्ते युक्तं नानुपलक्षणम् ॥ ७४२ ॥**

एवं सति गुणान्नीलादेर्नीलत्वादिसामान्यस्य विशेषो न प्राप्नोति, आकाराभेदात् । स्यान्मतं गुणो हि नीलादिरनुगतो न भवति । सामान्यं तु भिन्नदेशकालव्यक्त्यनुगामीत्यत आकारभेदोऽस्तीत्याह—**नानुगतश्चैक** इत्यादि । नहि नीलादिगुणव्यतिरिक्तमपरं नीलत्वादि नीलाद्याकारानुगतमनुगामि प्रतिभासमानमालक्ष्यते । अध्यक्षत एकस्यैव नीलादेरसाधारणस्य प्रतिभासनात् । नापि विकल्पचेतसि नीलत्वादि द्वितीयं प्रतिभासते, यथादृष्टस्यैव तेनाध्यवसायात् । स्यादेतद्यथा भवतां क्षणिकत्वं भासमानमपि नोपलक्ष्यते विवेकेन मन्दैस्तथेदमपि सामान्यमिति तदप्ययुक्तम् । एवं हि तद्दर्शनबलाद्भिन्नास्वपि व्यक्तिष्वभिन्नौ धीध्वनी भवत इति यदेतद्वर्णितं तन्नोपपद्यते, नहि विशेषणानुपलक्षणे विशेष्ये धीरुपजायते, यथा दण्डानुपलक्षणे दण्डीति प्रत्ययो न भवति तद्वदत्रापि स्यात् । तथाहि स्वतःशब्दप्रत्ययगोचरातिवृत्ता भेदा भवद्भिरुपवर्ण्यन्ते । तांश्च भेदान्स्वतो बुद्धिशब्दविषयव्यतिवृत्तशरीरान्सामान्यदर्शनबलेन प्रतियन्प्रतिपत्ता कथं तस्यैवानुपलक्षको नाम । अपिच यस्याविकल्पकमेव प्रत्यक्षं तस्यैतद्युक्तं वक्तुं प्रतिभासमानमपि नोपलक्ष्यत इति, निश्चयप्रत्ययव्यापारत्वादुपलक्षणस्य, यस्य तु भवतः सर्वमेव सविकल्पकं प्रत्यक्षमिति पक्षस्तस्यायुक्तमनुपलक्षणमग्रहणप्रसङ्गात् । इयमेव हि निश्चयानां स्वार्थप्रतिपत्तिर्यत्तन्निश्चयनं तच्चेन्न निश्चिन्वन्ति न गृह्णन्तीत्येव प्राप्तम् ॥ ७४० ॥ ७४१ ॥ ७४२ ॥

अभ्युपेत्यापि नीलादिव्यतिरिक्तार्थान्तरसिद्धिं नेष्टसिद्धिर्भवतामभिमतसाध्यार्थस्यानुमानबाधितत्वात्तेन व्याप्त्यसिद्धेरिति दर्शयन्नाह—सिद्धेऽपीत्यादि ।

**सिद्धेऽप्यन्यनिमित्तत्वे न सामान्यं प्रसिद्ध्यति ।**
**अनुगाम्येकमध्रौव्यविविक्तं च क्रमोदयात् ॥ ७४३ ॥**

**अध्रौव्यविविक्तमिति** । अनित्यत्वविविक्तं, नित्यमिति यावत् । कस्मान्न सिद्ध्यतीति? क्रमोदयात् । गवाद्यभिधानप्रत्ययानामिति शेषः । यदा हि तथाविधसामान्यधर्महेतुकत्वमेषामभविष्यत्तदा क्रमेणामी नोदपत्स्यन्त, अविकलकारणत्वाद्युगपदेवोत्पद्येरन्, युगपदुत्पद्यमानानेकपदार्थवत् । नहि परैरनुपकार्यस्य काचिदपेक्षाऽस्ति ॥ ७४३ ॥

सम्प्रति हेतोः सिद्धिमभ्युपगम्य व्यभिचारमाह—**पदार्थशब्द** इति ।

**पदार्थशब्दः कं हेतुमपरं षट्स्वपेक्षते ।**
**अस्तीति प्रत्ययो यश्च सत्तादिष्वनुवर्त्तते ॥ ७४४ ॥**

नहि पदार्थत्वं नाम षट्सु पदार्थेष्वपरमस्ति, येन पदार्थः पदार्थ इत्यनुगामी प्रत्ययो भवेत् । तथा सामान्यविशेषसमवायेषु न सत्तास्ति, येनास्तीति तेषु प्रत्ययः स्यात्, द्रव्यगुणकर्मस्वेव सत्तायाः स्थितत्वात् । द्रव्यादिषु तु सामान्यनिबन्धन एव व्यपदेशः परेषामभीष्ट इति न तेन व्यभिचारश्चोद्यते ॥ ७४४ ॥

स्यादेतत्तत्रापि सत्तादिसदुपलम्भकप्रमाणविषयत्वं धर्मोऽस्ति, तेनान्यनिमित्तोऽयमत्रापि व्यपदेश इत्यव्यभिचार एवेत्याह—**अन्यधर्मेत्यादि** ।

**अन्यधर्मनिमित्तश्चेत्तत्राप्यस्त्यस्तितामतिः ।**
**तदन्यधर्महेतुत्वेऽनिष्ठासक्तेरधर्मिता ॥ ७४५ ॥**
**व्यभिचारी ततो हेतुरमीभिरयमिष्यते ।**
**नच सर्वोपसंहाराद्व्याप्तिरस्य प्रसाधिता ॥ ७४६ ॥**

अन्यधर्मनिमित्तत्वेऽप्यभ्युपगम्यमाने व्यभिचारदोषस्तदवस्थ एव, यस्मात्तत्राप्यस्मिन्धर्मेऽस्त्येवास्तितामतिः अस्ति सद्धर्म इति । तत्राप्यन्यधर्माभ्युपगमेऽनवस्थाप्रसङ्गः स्यात् । अन्येषामपि धर्मान्तराश्रयत्वाद्धर्मित्वप्रसङ्गश्च । ततश्च षडेव पदार्था धर्मिण इति षट्सङ्ख्यानियमो न स्यात् । अथानवस्थाभयाद्धर्मान्तरं नाश्रीयते तदाऽमीभिः पदार्थेषु सत्तादौ धर्मे वा प्रवृत्तैः प्रत्ययैर्व्यभिचारिता हेतोः । माभूद्वाऽस्य साधारणानैकान्तिकता, संदिग्धव्यतिरेकिता तु केन परिह्रियत इत्येतदाह—**नच सर्वोपसंहारादित्यादि** । सर्वस्मिन्धर्मिणि हेतोः साध्येन व्याप्तिप्रदर्शनं सर्वोपसंहारः । स्यादेतद्व्याप्तिरत्र युक्त्यैवेति, निमित्तान्तराभावे हि तद्वस्तुप्रत्ययवैलक्षण्यं कथमुपपद्येत, नह्येकविषयाणां बहूनामपि प्रत्ययानां वैलक्षण्यमस्ति, यदि स्यात्तदा रूप-

रसादिप्रत्ययानामपि नानाविषयो न सिद्ध्येत् । प्रत्ययभेदकृतत्वाद्विषयभेदव्यवस्थानस्येति । तदप्ययुक्तम् । नहि सामान्यप्रत्ययो वस्तुस्वलक्षणविषयः परमार्थतो युक्तः । आविष्टाभिलापेन प्रत्ययेन स्वलक्षणस्याविषयीकारणात् । किन्तु यतो यतस्तस्यैकस्यापि वस्तुनो व्यावृत्तिस्तन्निबन्धनास्तत्र यथासङ्केताभ्यासं तद्वस्त्वनुभवद्वारा यतो विकल्पा वाचकाश्च विश्वकल्पा यदि प्रवर्त्तेरन्नसत्यपि सामान्ये तदा को विरोध इत्यतो व्याप्यभाव उच्यते ॥ ७४५ ॥ ७४६ ॥

यच्चोक्तं गवादिष्वनुवृत्तं चेत्यादि, तत्राह—**तदनन्तर**मित्यादि ।

**तदनन्तरमुद्दिष्टमनेनैव निराकृतम् ।**
**सामान्यसाधनं तस्मिन्निष्टसिद्ध्यादयः समाः ॥ ७४७ ॥**

**अनेनैवे**ति समनन्तरोक्तहेतुदूषणेनैव । तत्रापि तुल्यदोषत्वात् । तथाहीष्टसिद्ध्यादयोऽत्रापि समानाः । आदिशब्देन साध्यशून्यता दृष्टान्तस्य हेतोरसिद्धिर्व्यभिचारश्चेत्यादि परिगृह्यते ॥ ७४७ ॥

प्रकारान्तरेणापि व्यभिचारमाह—**पाचकादिष्वि**त्यादि ।

**पाचकादिषु च ज्ञानं विशिष्टमुपजायते ।**
**अभावेऽभावबुद्धिश्च विनैकेनानुगामिना ॥ ७४८ ॥**
**इच्छारचितरूपेषु नष्टाजातेषु वा ततः ।**
**अनैकान्तिकता हेतोः सर्वैरेभिर्यथोदितैः ॥ ७४९ ॥**

नहि तत्रैकमनुगामि निमित्तं पाचकत्वपाठकत्वादिकमस्ति, येन पाचकः पाठक इत्यनुवृत्तिप्रत्ययो भवेत् । तथा प्रागभावादिषु चतुर्ष्वभावोऽभाव इति कथमनुवृत्तप्रत्ययो भवेत्, नह्यत्रापि सामान्यमस्ति तस्य वस्त्वाश्रितत्वात् । इच्छारचितरूपेषु चन्द्रापीडादिषु नभस्तलोपकल्पितधवलगृहादिषु नष्टाजातेषु च महासम्मतशङ्खप्रभृतिषु बुद्धिर्विनैकेनानुगामिना कथं भवेत् । नहि तत्रापि सामान्यमस्ति, व्यक्त्याश्रितत्वात्तस्य ॥ ७४८ ॥ ७४९ ॥

**न पाचकादी**त्यादिना पाचकादिषु ज्ञानं समर्थयते ।

**न पाचकादिबुद्धीनामस्ति किञ्चिन्निबन्धनम् ।**
**कर्मास्ति चेत्प्रतिव्यक्ति ननु तद्भिद्यते तथा ॥ ७५० ॥**
**भिन्नेष्वन्वयिनोऽसत्वे न युक्ताऽन्वयिनी मतिः ।**
**इत्येकमिष्टं सामान्यं सर्वव्यक्त्यनुवृत्तिमत् ॥ ७५१ ॥**

**कर्मान्वयदरिद्रं च यदि हेतुः प्रकल्प्यते ।**
**तदा व्यक्तय एवास्याः किमितीष्टा न हेतवः ॥ ७५२ ॥**
**पाचकादिमतिर्न स्यात्तत्र चोपरतक्रिये ।**
**न सदासन्निधानं हि कर्मेष्टं जातिवत्परैः ॥ ७५३ ॥**
**अतीतानागतं कर्म निमित्तीकृत्य तेषु चेत् ।**
**पाचकादिषु धीशब्दौ, तन्न हेतुरसत्त्वतः ॥ ७५४ ॥**

नहि पाचकादिषु कर्मनिबन्धना बुद्धिरिति युक्तं वक्तुम् । तस्यापि कर्मणः प्रतिव्यक्तिवद्भेदाभ्युपगमात्, भिन्नेषु हि विनैकेनानुगामिनाऽन्वयी प्रत्ययो नोपपद्यत इति कृत्वा सामान्यं सर्वव्यक्त्यनुगतं परिकल्प्यते भवद्भिः । यदि चान्वयशून्यमपि कर्माभिन्नाभिधानप्रत्ययहेतुः स्यात्तदा को व्यक्तिषु प्रद्वेषो येन ताः परिहृत्य सामान्यं तद्धेतुत्वेन कल्प्यते । किंच यदि कर्मनिबन्धनः पाचकादिषु प्रत्ययः स्यात्तदा परतः-क्रिये पाकमकुर्वति पाचक इति प्रत्ययो न स्यात् । नहि जातिवद्भवद्भिः सदा सन्निहितं कर्माभीष्टं, येनोपरतक्रियेऽपि प्रत्ययः स्यात् । नहि यो यन्निबन्धनः स तदभावे भवितुमर्हति, अतिप्रसङ्गात्, एवं हि सर्वः सर्वनिबन्धनं स्यात् । नचाप्यतीतानागतं कर्म तत्प्रत्ययनिबन्धनं युक्तं, तस्यातीतादेरसत्त्वात्, असतश्च हेतुभावानुपपत्तेः ॥ ७५० ॥ ७५१ ॥ ७५२ ॥ ७५३ ॥ ७५४ ॥

शङ्करस्वामी प्राह—पाचकाद्यनुवृत्तिप्रत्ययस्तत्कर्मजातिसंबद्धया क्रियया योगस्तस्माद्भवति, तेनोपरतक्रियेऽपि क्रियया ध्रुवनिमित्तस्योपलक्षणात्पाचकादिप्रत्यय इत्यवसेयमिति । तदेतद्दर्शयति—क्रियेत्यादि ।

**क्रियात्वजातिसम्बन्धक्रियायोगान्मतिर्यदि ।**
**नष्टक्रियेऽपि च तया ध्रुवहेतूपलक्षणात् ॥ ७५५ ॥**

**तयेति** । क्रियया । ध्रुवनिमित्तं क्रियात्वजातिः ॥ ७५५ ॥

**न त्वि**त्यादिना प्रतिविधत्ते ।

**न तु नष्टक्रिये तत्र लक्षितापि न विद्यते ।**
**गृह्यते या ध्रुवा जातिः स्वाधारविनिवृत्तितः ॥ ७५६ ॥**

**स्वस्या** आधारः—क्रिया(त्व)जातेः सैव क्रिया । नहि जातेराश्रयग्रहणमन्तरेण केवलाया ग्रहणमवस्थितिर्वास्ति, अनाश्रितत्वप्रसङ्गात् ॥ ७५६ ॥

स्यादेतदेकदा जातेर्लक्षितत्वादुपरतेऽपि कर्मणि तदाधारे प्रवर्त्तत एव तन्निबन्धनप्रत्यय इत्याह—दण्डेत्यादि ।

**दण्डाङ्गदादिजातीनामेकदा न हि लक्षणे ।**
**तद्वियोगेऽपि दण्ड्यादिमतिस्तेषु प्रवर्त्तते ॥ ७५७ ॥**
**अथापि पाचकत्वादिजातिरन्यैव वर्त्तते ।**
**सद्योजातेऽपि तद्योगात्पाचकादिमतिर्भवेत् ॥ ७५८ ॥**
**सदादिमतिवन्नो चेत्तदा सा समवायिनी ।**
**पश्चादपि न सा तत्र तथा स्यादविशेषतः ॥ ७५९ ॥**
**तत्सम्बद्धस्वभावस्य वैगुण्यान्न तयोरसौ ।**
**समवायस्तथा पश्चात्तादात्म्ये च कथं भवेत् ॥ ७६० ॥**

एवं ह्यतिप्रसङ्गः स्यात्, नहि दण्डादिजातीनामेकदा लक्षितत्वात्परित्यक्तदण्डेष्वपि तेषु देवदत्तादिषु दण्डी कुण्डलीत्यादिमतिर्भवेत् । नच पाचकत्वादिजातिरत्राप्यस्तीति युक्तं, सद्योजातेऽपि जातेर्विद्यमानत्वात्पाचकादिबुद्धिप्रसङ्गः स्यात् । स्यादेतद्यथा सत्तानिबन्धनापि सदिति मतिर्भवन्ती न सर्वदा भवति, तथा जातिरप्याश्रयविशेषसमवायिनी भवन्ती न सर्वदा भविष्यति, तेन सद्योजातावस्थायां जातिर्नैव समवायिनी भविष्यति । समवायिनीत्युपलक्षणम्, नाभिव्यक्तेत्यपि ज्ञेयम् । एवं तर्हि न कदाचिदपि सा तत्समवायिनी प्राप्नोति । तथाहि—प्रथमतरं तयोर्जातिद्रव्ययोस्तत्सम्बद्धस्वभाववैगुण्यान्न समवायो जातेः, पश्चादपि तद्वैगुण्यं तदवस्थमेवेति कथं सा समवेयात्, नहि द्रव्यं भवतां मतेन क्षणिकं, येन पश्चाद्विशिष्टता तस्य भवेत् । तथेति । समवायिनी । **तयोरिति** । जातिद्रव्ययोः । **तादात्म्य इति** । अपरित्यक्तप्राक्तनविगुणरूपत्वे ॥ ७५७ ॥ ७५८ ॥ ७५९ ॥ ७६० ॥

अथापि द्रव्यमनित्यमङ्गीक्रियते तदापि दोष इति दर्शयन्नाह—**यदि नामेत्यादि** ।

**यदि नामाध्रुवा व्यक्तिर्लभेतातिशयं तदा ।**
**जातेस्तु विगुणं रूपं न कदाचिन्निवर्त्तते ॥ ७६१ ॥**

यदि नामाध्रुवतया व्यक्तिरतिशयं पश्चाल्लभते, जातेस्तु ध्रुवत्वात्प्राग्वत्पश्चादपि तत्समवायविगुणं रूपमस्ति, कथमिव पश्चादपि समवायिनी भवेत् । न चापि पश्चात्कालभाविद्रव्यसमवायाविगुणरूपैव जातिः सर्वदावस्थितेति शक्यं वक्तुम्, द्रव्य-

स्यापि नित्यत्वप्रसङ्गात्, तत्सम्बद्धस्वभावाया जातेः सदावस्थितत्वात्। नहि द्वितीयसम्बन्ध्यभावे तत्सम्बद्धस्वभाववैगुण्यं युक्तम् ॥ ७६१ ॥

पचनादीत्यादिनोद्योतकरविहितं परिहारमाशङ्कते ।

**पचनादिक्रियायाश्च प्रधानं साधनं मतम् ।**
**पाचकादीति तच्चास्ति प्राधान्यं पाचकान्तरे ॥ ७६२ ॥**

स ह्याह—हेत्वर्थापरिज्ञानादिदमुच्यते । यथा पाचकादिशब्दा अनुवृत्ताश्च भवन्ति, नच पाचकत्वं नाम सामान्यमस्ति, तथा गवादिष्वनुवृत्तिप्रत्यया इति । यस्माद्विशेषप्रत्ययानामनाकस्मिकत्वादित्यस्य हेतोरयमर्थः । पिण्डप्रत्ययव्यतिरिक्तप्रत्ययस्य निमित्तान्तरादुत्पाद इति, न पुनः सर्वोऽनुवृत्तिप्रत्ययः सामान्यादेव भवतीति । एवं सति पचनक्रियाया यत्प्रधानं साधनं तत्पाचकशब्देनोच्यते, तच्च प्राधान्यं पाचकान्तरेऽप्यस्तीति न दोष इति ॥ ७६२ ॥

तदेतत्प्राधान्यमित्यादिना प्रतिविधत्ते ।

**प्राधान्यं किमिदं नाम न शक्तिरसमन्वयात् ।**
**द्रव्यक्रियागुणात्मादि नात एवावकल्प्यते ॥ ७६३ ॥**

किमिदं प्राधान्यं नाम, यदि शक्तिः, तदयुक्तम्, तस्याः प्रत्याधारनियताया व्यक्त्यन्तरासमन्वयात् । नापि द्रव्यादीनामात्मा स्वभावः स्वातन्त्र्यमत एवासमन्वयात् । आदिशब्देन षट्पदार्थव्यतिरिक्त इष्टो धर्मो गृह्यते । यत्पुनरुक्तं निमित्तान्तरादुत्पाद इत्यस्यायमर्थ इति, तत्र प्रतिविहितमेव सामान्येन किंचिन्निमित्तान्तरमस्तीति साधने सिद्धसाध्यता, सङ्केतमनस्कारस्य निमित्तत्वेनेष्टत्वात्, विशेषेण त्वन्वयवैकल्यं व्यभिचारश्च पाचकादिप्रत्ययैरिति ॥ ७६३ ॥

तदित्यादिनोपसंहरति ।

**तद्विजातीयविश्लेषिरूपमात्रावसायिनी ।**
**सङ्केतभेदसापेक्षा पाचकादिषु शेमुषी ॥ ७६४ ॥**
**यथासङ्केतमेवातः शब्दा बुद्धय एव च ।**
**विभागे न प्रवर्तन्ते विनैकेनानुगामिना ॥ ७६५ ॥**

तत्—तस्मात्, यद्यतो निमित्तान्तरं निरूप्यमाणं पाचकादिधियो नोपपद्यते । तस्मात् । विजातीयस्य व्यवच्छिन्नवस्तुमात्राध्यवसायिनी यथासमयं पाचकः पाचक इत्येवमाकाराऽनुगता भिन्नेष्वपि वस्तुष्वभेदेन पाचकादिषु शेमुषी—धीरुपजायते,

सर्वत्र विजातीयव्यवच्छेदस्य विद्यमानत्वात् । यत एवं गवादिष्वपि यथासङ्केतमभिन्नाकारव्यवसायिनः प्रत्ययाः शब्दाश्च प्रवर्त्तिष्यन्ते विनापि सामान्यमित्यनैकान्तिकता हेतोः ॥ ७६४ ॥ ७६५ ॥

**तथा** चेत्यादिनाऽभावेऽभावबुद्धिश्चेत्येतत्समर्थयते ।

**तथा चाभावविज्ञानं नाभावेषु विरुध्यते ।**
**ध्वनिर्वाऽनुगतोऽनर्थसङ्केतानुगमात्तयोः ॥ ७६६ ॥**

इदमेव हि सामान्यप्रत्ययस्य निबन्धनं व्यापि यदुत सङ्केताभोगः, अन्यथा ह्यभावेष्वभाव इत्यनुगतः प्रत्ययो ध्वनिश्च केन न विरुध्येत, न ह्यत्र जातिरस्ति वस्तुसमवायिनीत्वात्तस्याः । कस्मान्न विरुध्यत इत्यत्र कारणमाह—**अनर्थसङ्केतानुगमात्तयोरिति** । अविद्यमानो जात्यादिरर्थो यस्मिन्सङ्केते स तथोक्तः, तस्मादनुगमात —अन्वयात् तयोः—ध्वनिविज्ञानयोः । शब्दज्ञानयोः सङ्केतमात्रान्वयव्यतिरेकानुविधायित्वादिति यावत् ॥ ७६६ ॥

**घटस्ये**त्यादिना शङ्करस्वामिन उत्तरमाशङ्कते ।

**घटस्य प्रागभावोऽयं घटप्रध्वंस इत्ययम् ।**
**तद्वस्तूपाधिकानेव धीरभावान्प्रपद्यते ॥ ७६७ ॥**
**उपाधिगतसामान्यवशादेवानुवृत्तता ।**
**तस्याः सर्वत्र चेन्नैवं वैलक्षण्यातदाश्रयात् ॥ ७६८ ॥**
**घट इत्यादिका बुद्धिस्तेभ्यो युक्ताऽनुगामिनी ।**
**नाभावो भाव इत्येषा तन्मतिस्तु विलक्षणा ॥ ७६९ ॥**
**नहि सत्तावशाद्बुद्धिर्गौरश्व इति चेष्यते ।**
**एकमेवान्यथा कल्प्यं सामान्यं सर्वसाधनम् ॥ ७७० ॥**

स ह्याह न हि तेष्वभावेष्वनुपाधिकाः प्रत्यया दृश्यन्ते, किं तर्हि? घटस्य प्रागभावः घटस्य प्रध्वंसाभावः इत्येवं सर्वत्राभावप्रत्ययो वस्तूपाधिकानेवाभावानवलम्बते । तस्मात्सर्वत्रैव तस्या धिय उपाधिगतसामान्यवशादेवानुवृत्ततेति नास्ति व्यभिचार इति । **तस्या** इति । धियः प्रकृतत्वात्संबन्धः । **नैव**मित्यादिना प्रतिविधत्ते । वैलक्षण्यसहितोऽतदाश्रय इति विग्रहः । समाहारद्वन्द्वो वा । वैलक्षण्यादतदाश्रयाच्च नैव युक्तमित्यर्थः । तत्र वैलक्षण्यादित्यस्य तावद्विस्तरेण समर्थनमाह—**घट इत्यादि** ।

न ह्येकोपाधिनिबन्धना भिन्नाकारा बुद्धयो युक्ताः, एकेनैव सर्वसामान्यकार्यसाधनादनेकसामान्यकल्पनावैयर्थ्यप्रसङ्गात् । तस्माद्घटत्वादिसामान्यवशाद्घट इत्यादिका धियो भवन्तु, अभाव इत्यादिकास्तु कथमिवात्यन्तविलक्षणास्तन्निबन्धना युज्येरन्, नहि सत्तावशाद्गोत्वादिधीर्भवेत् ॥ ७६७ ॥ ७६८ ॥ ७६९ ॥ ७७० ॥

भाविविक्तस्त्वाह—नहि सर्वत्र निमित्तानुरूपः प्रत्यय इष्यते । तथाहि—गजतुरगधवखदिरादिसमवायिनी बहुत्वसङ्ख्या सेनावनादिबुद्धीनां निमित्तं, पानककाञ्जिकादिबुद्धीनां विजातीयद्रव्यसंयोगो निमित्तम्, अन्यथाहि बहवः संयुक्ता इति च प्रत्ययः स्यादिति । तदेतन्न निमित्तेत्यादिनाऽऽशङ्क्य यद्येवमित्यादिना प्रतिविधत्ते ।

**न निमित्तानुरूपा चेत्सर्वस्मिन्बुद्धिरिष्यते ।**
**यतस्सेनादिबुद्धीनां सङ्ख्यादीष्टं निबन्धनम् ॥ ७७१ ॥**
**यद्येवमियमेष्वेव भेदेष्विष्टा न किं मतिः ।**
**इच्छारचितसङ्केतभेदाभोगानुसारिणी ॥ ७७२ ॥**

इयमिति । सामान्यधीः । सङ्केतस्य भेदो विशेषः ॥ ७७१ ॥ ७७२ ॥

कः पुनरत्रातिशयो येनैवमुच्यत इत्याह—भेदेत्यादि ।

**भेदज्ञाने सतीच्छा हि सङ्केतकरणे ततः ।**
**तत्कृतिस्तच्छ्रुतिश्चास्या आभोगस्तन्मतिस्ततः ॥ ७७३ ॥**
**अन्वयव्यतिरेकाभ्यामिदमेव विनिश्चितम् ।**
**समर्थं कारणं तस्यामन्येषामनवस्थितिः ॥ ७७४ ॥**

अन्वयव्यतिरेकसमधिगम्यः कार्यकारणभावः, स च सामान्यधियं प्रतीच्छारचितसङ्केताभोगमात्रस्य निश्चितः । तथाहि—प्रथमतरं तावद्भेदविषयमनुभवज्ञानमुत्पद्यते, तस्मिन्नुत्पन्ने सङ्केतकरणेच्छा जायते, ततश्चेच्छातस्तस्य सङ्केतस्य कृतिः—करणम्, ततस्तस्यैव व्यवहारकाले श्रुतिः—श्रवणम्, अस्याश्च श्रुतेः सकाशादुत्तरकालमाभोगो यथा श्रुतसङ्केतविषयः, ततश्चाभोगात्तेष्वेव भेदेषु तदध्यवसायेन प्रवृत्तेर्घट इत्यादिका मतिरुदयमासादयति । आगोपालमेतावन्मात्रमेवास्यां बुद्धौ कारणत्वेन निश्चितम् । अपरिदृष्टसामर्थ्यस्य तु सामान्यस्य कारणत्वोपकल्पनेऽतिप्रसङ्गः स्यात्, यदपि कल्पयित्वाऽपरमप्यदृष्टसामर्थ्येन तुल्यत्वात्किमिति न कल्प्येत ॥७७३॥ ॥ ७७४ ॥

तत्रैवोपचयमाह—अनुरूपो हीत्यादि ।

**अनुरूपो हि संसर्गी स्यादित्यन्यार्थकल्पना ।**
**वैलक्षण्ये तु बुद्धीनामियदेवाश्रितं वरम् ॥ ७७५ ॥**
**सामर्थ्यनियमो ह्यत्र कल्पनीयो वरं स च ।**
**अन्वयव्यतिरेकाभ्यां कल्पितो ज्ञातशक्तिषु ॥ ७७६ ॥**

तथाहि भवद्भिः सामान्यबुद्धीनामनुरूपमालम्बनाख्यं हेतुं निरूपयद्भिः भेदन्यबुद्धस्य सामान्यमुपकल्पितम्, यदि च तदपि कल्पितं सामान्यमन्याकारा अपि बुद्धीर्जनयति तदा वरमियदेव, यदेव यथोपवर्णितं दृष्टसामर्थ्यं कल्पितं भवेत्। एवं ह्यदृष्टार्थकल्पना न कृता स्यात् । अपिच कथमभिन्नं सामान्यं विलक्षणा बुद्धीर्जनयतीति पृष्टेन सता वक्तव्यमिदमवश्यं, यदुत शक्तिप्रतिनियमोऽयं पदार्थानां यदेकमपि सदनेकाकारप्रत्ययोपजननायालमिति । यद्येवं, ज्ञातशक्तिषु निश्चितसामर्थ्येषु भेदादिष्वेव सामर्थ्यनियामकमिति न कल्प्येत । एवं हि नानुभवविरुद्धमनुष्ठितं स्यात् ॥ ७७५ ॥ ७७६ ॥

स्यादेतत्सामान्यस्याप्यन्वयव्यतिरेकाभ्यां सामर्थ्यं निश्चितमेवेत्याह—अन्वयेत्यादि।

**अन्वयानुविधानं च सामान्येषु न विद्यते ।**
**सदाऽसत्त्वान्न नित्यानां व्यतिरेकस्तु संभवी ॥ ७७७ ॥**

सदा सदादिप्रत्ययानामसत्त्वादनुत्पत्तेर्नैषां तद्गतान्वयानुविधायित्वं युक्तम् । यदि ह्येते सामान्यानुविधायिनः स्युस्तदा सर्वदा सामान्यस्यावस्थितत्वात्किमिति सदा न भवेयुः, नहि सामान्यस्य काचिदपेक्षास्ति, परैस्तस्यानुपाधेयविशेषत्वादतो न तद्गतान्वयानुविधानमेषाम् । नापि व्यतिरेकानुविधानम्, तथाहि—यदाऽमी सदादिप्रत्यया नोत्पद्यन्ते तदा तत्र सामान्याभावः कारणमिति न शक्यं वक्तुम्, नित्यानां सदाऽवस्थायितया व्यतिरेकासम्भवात्, अतो नापि तद्गतव्यतिरेकानुविधानमेषामस्ति ॥ ७७७ ॥

यतश्चैवं निमित्तान्तराभ्युपगमे सामान्यादिधियां दोषस्तस्माद्यत्परैरुच्यते गुणत्वादिरेव सामान्यविशेषो गुणादिष्वद्रव्याकर्मादिप्रत्ययहेतुः, सामान्येषु च सत्तादिषु सामान्यमित्यनुगतप्रत्ययस्यानेकार्थसमवायो निमित्तमिति, तदपास्तं भवतीत्येतदाह—**अद्रव्यादी**त्यादि ।

**अद्रव्यादिधियो हेतुर्न गुणत्वादि युक्तिमत्।**
**अनेकसमवायश्च न सामान्यधियस्ततः॥ ७७८॥**

अतिप्रसङ्गश्चास्यामपि कल्पनायामिति दर्शयन्नाह—**अनेके**त्यादि।

**अनेकसमवायश्च सङ्ख्यादिष्वपि विद्यते।**
**सामान्येष्विव तेषु स्युः सामान्यमिति बुद्धयः॥ ७७९॥**

यद्यनेकार्थसमवायः सामान्येषु सामान्यधियो निबन्धनं स्यात्, तदा सङ्ख्यासंयोगविभागावयविद्रव्यादिष्वनेकद्रव्याश्रितत्वमस्तीति, तेष्वपि सामान्यमिति धियः स्युर्निमित्ताविशेषात्। एकबुद्धिहेतुत्वमपि सत्तादीनां सदाद्याकारेण स्वात्मनियतत्वान्न सामान्यान्तरमास्कन्दति, ततश्च तद्बलेनापि न सामान्येषु सामान्यं सामान्यमित्यनुगतः प्रत्यय उपपद्यते। ततश्चासम्बद्धमिदं कुमारिलेनोक्तम्—"तस्मादेकस्य भिन्नेषु या वृत्तिस्तन्निबन्धनः। सामान्यशब्दः सत्तादावेकधीकरणेन वे"ति॥७७९॥

एवं तावद्वैलक्षण्यादित्येतद्व्याख्यातम्, अतदाश्रयादित्येतद्व्याचिख्यासुराह—**घटत्वादि चे**त्यादि।

**घटत्वादि च सामान्यं घटादावेव वर्त्तते।**
**नाभावेष्वस्य वृत्तिस्तु तस्मात्तेषु कथं नु धीः॥ ७८०॥**
**नाश्रयान्तरवृत्ताद्धि युक्तावन्यत्र धीध्वनी।**
**हस्तित्वादिव कर्कादावत्रैकार्थाश्रयोऽपि न॥ ७८१॥**
**रसः शीतो गुरुश्चेति स्यादेकार्थाश्रयान्मतिः।**
**इहायमपि नैवास्ति नाभावो वर्तते क्वचित्॥ ७८२॥**

घटादिष्वेव सामान्यं समवेतं नाभावेषु तस्यावस्तुत्वात्। तत्कथं तेष्वभावेषु तस्माद्घटत्वादेरन्यसमवायिनः सामान्यानुकारानुगतः प्रत्ययो भवेत्। नहि गजत्वादि कर्कादिष्वेकाकारप्रत्ययनिबन्धनं भवति। ननु चान्यत्र समवेतादप्यन्यत्र प्रत्ययो दृष्टस्तद्यथा मधुरो रसः स्निग्धः शीतो गुरुश्चेति। अत्राह—**एकार्थाश्रयोऽपि नेति**। यत्रैव हि द्रव्ये माधुर्यं समवेतं तत्रैव शीतत्वादयोऽपीत्येकार्थसमवायबलादत्र भवति सामानाधिकरण्यम्, न तु पुनरभावो घटत्वादिसामान्यैः सह क्वचिदप्येकस्मिन्द्रव्ये समवैति। नीरूपस्य क्वचिदपि समवायायोगात्॥७८०॥ ७८१॥७८२॥

**विशेषणे**त्यादिनाऽत्रोद्योतकरस्य परिहारमाशङ्कते।

---

**विशेषणविशेष्यत्वसम्बन्धोऽप्यस्ति चेदिह ।**
**सम्बन्धान्तरसद्भावे ननु चासौ प्रकल्प्यते ॥ ७८३ ॥**
**तयोरासक्तिमाश्रित्य विशेषणविशेष्यता ।**
**कल्प्यते तदभावे तु साऽनिमित्ता न सिद्ध्यति ॥ ७८४ ॥**

स ह्याह । घटत्वादीनां सामान्यानां घटादिभिः समवायलक्षणः सम्बन्धः, अभावानां तु विशेषणविशेष्यभावलक्षणस्ततश्च सामान्याभावयोरेकार्थसम्बन्धोऽत्रापि व्यपदेशहेतुरस्त्येवेति । तदत्र प्रतिविधानमाह—**सम्बन्धान्तरे**त्यादि । सम्बन्धान्तरोपजनितो हि भावानां परस्परं विशेषणविशेष्यभावः, तद्यथा दण्डदेवदत्तयो राजपुरुषयोश्च संयोगस्वस्वामिभावादिकं सम्बन्धमाश्रित्य विशेषणविशेष्यता, तस्य तु सम्बन्धान्तरस्य विशेषणविशेष्यभावं प्रति निमित्तभूतस्याभावे सा विशेषणविशेष्यता कथमिव भवेत्, अन्यथा ह्यतिप्रसङ्गः स्यात् । एवं हि सर्वं सर्वस्य विशेषणं भवेत् ॥ ७८३ ॥ ७८४ ॥

कथमिदानीं घटस्य प्रागभाव इत्यादिविशेषणविशेष्यभावो लोके सम्बन्धमन्तरेण प्रतीत इत्याह—**घटस्ये**त्यादि ।

**घटस्य प्रागभावोऽयमित्यादि वचनं पुनः ।**
**कल्पनामात्रनिर्माणं कल्पिते शूरतादिवत् ॥ ७८५ ॥**
**विशेषणविशेष्यत्वं यत्र वस्तुसमाश्रयम् ।**
**सम्बन्धान्तरसद्भावस्तथावश्यं प्रकल्प्यते ॥ ७८६ ॥**

प्रागभूत्वाभवतीत्येतन्मात्रार्थजिज्ञासायां बुद्धिरियं कल्पिका भावादर्थान्तरभूतमिव सम्बन्धेन प्रागभावमुपदर्शयन्ती प्रसूयते । तदभिप्रायवशादत्र विशेषणविशेष्यभावः, नतु वास्तवः । यथा कल्पनाशिल्पिघटितस्य शूरत्वादयो धर्मा विशेषणत्वेनोपादीयन्ते । यत्र तु भवद्भिर्वस्तुसमाश्रयो विशेषणविशेष्यभावो गृहीतस्तत्रावश्यं सम्बन्धान्तरमन्वेषणीयमन्यथा व्यवस्थानियमो न स्यात् ॥ ७८५ ॥ ७८६ ॥

अपिचायं न नवो(नश्चो ?)ह्यानुरूप एव परिहारः शङ्करस्वामिनोक्त इति दर्शयन्नाह—**अभावोऽभाव** इत्यादि ।

**अभावोऽभाव इत्येव ज्ञानमत्रावचोदितम् ।**
**उपाधिस्थं च सामान्यं स्वाश्रयेष्वेव वर्त्तते ॥ ७८७ ॥**

यदिदं घटाभावे पटाभावे शशविषाणाद्यभावे वाऽभावोऽभाव इत्यनुगामिज्ञानं प्रवृत्तं तत्रास्माभिरसत्यपि सामान्येऽनुगतप्रत्ययदर्शनाद्व्यर्थोऽन्यत्रापि सामान्यकल्पनेति चोदितम्, न तु सजातीयानां बहूनां घटादीनां ये प्रागभावादयस्तत्र यज्ज्ञानं (तत्र)। यदि नामैवं ततः किमित्याह—उपाधिस्थं चेत्यादि । घटाद्युपाधिगतं यत्सामान्यं घटत्वादि, तत्स्वाश्रयेष्वेव घटादिषु वर्त्तते, नाश्रयान्तरे पटादौ, तत्कथं विजातीयपटादिगतप्रागभावादौ तस्मात्प्रत्ययः स्यादिति भावः ॥ ७८७ ॥

सर्वत्रैकमनुगामि सामान्यमस्तीति चेदाह—नचेत्यादि ।

**नचानुयायि तेष्विष्टमन्यत्सत्त्वं यदीष्यते ।**
**न षडर्थातिरेकेण जायन्तेऽभावबुद्धयः ॥ ७८८ ॥**

नहि सकलपटादिविजातीयानेकपदार्थव्याप्यपरं सामान्यमस्ति, यतोऽसौ प्रत्ययो भवेत् । स्यान्मतं सत्ताख्यं महासामान्यमस्ति तद्बलादभावप्रत्ययो भविष्यतीति, तदयुक्तम्, व्यभिचारात् । तथाहि—षट्पदार्थव्यतिरेकेणापरस्य प्रतिसङ्ख्यानिरोधादेः पदार्थस्याभाव इति भवतामभावबुद्धयो याः समुदाचरन्ति, तथोत्पाद्यकथारचितानां कपिञ्जलादीनामभावः परमार्थत इति मतयस्तासु कतमदुपाधिगतं सामान्यं, यत्तासां निमित्तं स्यात् । न ह्येषां प्रतिसङ्ख्यानिरोधादीनां सत्त्वमस्ति भवन्मतेन । एतेनैतदपि प्रत्युक्तं यदुक्तं कुमारिलेन—"ननु च प्रागभावादौ सामान्यं वस्तु नेष्यते । सत्तैव ह्यत्र सामान्यमनुत्पत्त्यादिरूपते"ति । अनुत्पत्त्यादिरूपता—अनुत्पादादिविशिष्टतेत्यर्थः । अत्रापि ह्ययमेव दोषः । नहि मतान्तरीयानां पदार्थानामुत्पाद्यकथार्थानां च सत्तास्ति, येन तदभावप्रतीतिः स्यात् । तदध्यवसायिविकल्पसत्ता तत्र बहिरर्थशून्या प्रतीयत इति चेत् । यद्येवं नित्यैकसत्तारहितो विकल्पमात्रात्मक एव सकलशब्दार्थः किं नेष्यते । अन्यथा हि नित्यैकसत्तादिरूपसामान्याभ्युपगमे सत्तापुरुषत्वादीनां सर्वत्र स्वभेदे निरतिशयत्वात्कथं भिन्नरूपा प्रतीतिः स्यादिति चोद्यं दुष्परिहारमेव स्यादिति ॥ ७८८ ॥

इदानीमिच्छारचितरूपेषु नष्टाजातेषु चैतत्समर्थनमाह—इच्छारचितेत्यादि ।

**इच्छारचितरूपाद्यावर्थे जातिर्न विद्यते ।**
**व्यक्तेरसम्भवादेव स्थिता तद्व्यभिचारिता ॥ ७८९ ॥**
**अतीतानुपजातेषु नित्यसामान्यगोचरम् ।**
**ज्ञानं चेत्केवलं चेदं सामान्यं गृह्यते न तु ॥ ७९० ॥**

केवलस्योपलम्भे वा न व्यक्तीनामिदं भवेत् ।
सामान्यं न च तद्व्यङ्ग्यं विन्ध्यस्येव हिमालयः ॥ ७९१ ॥
नोत्पत्तिपारतन्त्र्येण प्रतिबद्धं हि तास्विदम् ।
न ज्ञानपारतन्त्र्यं च नित्यत्वात्केवलग्रहात् ॥ ७९२ ॥
स्वाश्रयेन्द्रिययोगादिव्यपेक्षाया असम्भवात् ।
तत्सदैवोपलभ्येत यदि वा न कदाचन ॥ ७९३ ॥
स्वात्मनि ज्ञानजनने योग्यं वाऽयोग्यमेव वा ।
यद्येकदा तदा रूपं सर्वदैव हि तद्भवेत् ॥ ७९४ ॥
तस्य योग्यमयोग्यं वा रूपं यत्प्रकृतिस्थितम् ।
तद्ध्रौव्यादप्रकम्प्यं हि को नाम चलयिष्यति ॥ ७९५ ॥

इच्छया रचितं रूपं स्वभावो यस्य स तथोक्तः, स आदिर्यस्येति विग्रहः । आदिशब्देन नष्टाजातपरिग्रहः । नहि तत्र कल्पितादिषु सामान्यमस्ति, येन तन्निबन्धना तेषु मतिः स्यात् । स्यादेतन्माभूत्कल्पितेषु सामान्यम्, अतीताजाते तु तन्निबन्धना बुद्धिर्भविष्यतीति, तदेतन्मिथ्या, न ह्याश्रितानामयं धर्मो यदाश्रयमन्तरेणापि केवलानामवस्थानं भवेत्, अनाश्रितत्वप्रसङ्गात् । भवतु नाम केवलानामवस्थानं तथापि दोष एव, केवलस्य सामान्यस्य ग्रहणानभ्युपगमात् । तथाचोक्तं—"स्वाश्रयेन्द्रियसन्निकर्षापेक्षप्रतिपत्तिकं सामान्य"मिति । केवलस्य सामान्यस्य ग्रहणे सामान्यधियो व्यक्तिव्यवसायो न प्राप्नोति व्यक्तेस्तदानीमभावात् । व्यक्तीनामिदं सामान्यमिति संबद्धश्च न स्यात्, निबन्धनाभावात् । तथाहि—निबन्धनं भवत्संबन्धस्य तद्व्यङ्ग्यत्वं वा सामान्यस्य भवेत्, तज्जन्यता वा, तद्ग्रहणापेक्षग्रहणता वा । तत्र न तावत्ताभिर्व्यङ्ग्यत्वात्तत्संबद्धं सामान्यं, नित्यतया परैरनुपकार्यस्य विशेषाभावाद्व्यङ्ग्यत्वानुपपत्तेः । यो हि यस्यानुपकारकः स तस्याभिव्यञ्जको न भवति, यथा विन्ध्यस्य हिमवान् । तथाच व्यक्तयः सामान्यस्येति व्यापकविरुद्धोपलब्धेः । अनुपकारकस्यापि व्यञ्जकत्वेऽतिप्रसङ्गः, सर्वः सर्वस्य व्यञ्जकः स्यात् । अत एव नित्यतया तस्याभ्युपगतत्वात्तासु नोत्पत्तिपारतन्त्र्यमपि तस्य युक्तम् । केवलस्यापि ग्रहणान्नापि तज्ज्ञानपारतन्त्र्यमिति, त्रयाणामपि पक्षाणामसम्भवः । ततश्च यदिदमुच्यते स्वाश्रयेन्द्रियसन्निकर्षापेक्षप्रतिपत्तिकं सामान्यमिति तदयुक्तमाश्रयस्यैवायोगात्, कुत-

स्तद्गतेन्द्रियसन्निकर्षाद्यपेक्षता भविष्यति । आदिग्रहणेनात्ममनःसन्निकर्षादिपरिग्रहः । नित्यतया परैरनुपाधेयविशेषत्वान्नाप्यस्य क्वचिदपेक्षाऽस्ति । ततश्च यदि तत्स्वविषयज्ञानोत्पादनसमर्थं तदा सर्वदैव तज्जनयेत्, अथासमर्थं तदा न कदापि जनयेत्, नहि तस्य तद्रूपं समर्थमसमर्थं वा तत्कचिदन्यथाकर्तुमीशते नित्यत्वहानिप्रसङ्गात् । यथोक्तम्—"तस्य शक्तिरशक्तिर्वा या स्वभावेन संस्थिता । नित्यत्वादचिकित्स्यस्य कस्तां क्षपयितुं क्षम ॥" इति ॥ ७८९ ॥ ७९० ॥ ७९१ ॥ ७९२ ॥ ॥ ७९३ ॥ ७९४ ॥ ७९५ ॥

यच्चोक्तं—**गोतश्चार्थान्तरं गोत्वमित्यादि** । तस्य पाचकादिभिरनैकान्त इति दर्शयति—**गोत** इत्यादि ।

**गोतश्चार्थान्तरं गोत्वं भिन्नधीविषयत्वतः ।**
**रूपस्पर्शादिवत्तस्येत्युक्तेश्चैत्रतुरङ्गवत् ॥ ७९६ ॥**
**इत्यस्मिन्व्यभिचारोक्तिः पाचकत्वादिभिस्तथा ।**
**अनया च दिशाऽन्येऽपि सर्वे दूष्याः कुहेतवः ॥ ७९७ ॥**

तथाहि पाचकादिभ्यः पाचकत्वादेरसत्यप्यर्थान्तरभावे पाचकः पाचक इति भिन्नधीविषयत्वं भवत्येव, देवदत्तस्य पाचकत्वमिति च व्यतिरेकविभक्तिर्भवतीत्यतः साधारणानैकान्तिकता हेतोः । **अन्येऽपि कुहेतव** इति । कुमारिलगदिताः । तत्रामी तेन कुहेतव उक्ताः । गोपिण्डभेदेषु या गोबुद्धिरियमेकगोत्वनिबन्धना गवाभासत्वादेकाकारत्वाच्च । एकगोपिण्डविषयबुद्धिवत् । अथवा येयं गोबुद्धिः सा सावलेयान्न भवति, यद्वा तद्व्यतिरिक्तार्थालम्बना, तदभावेऽपि भावात्, यथा घटे पार्थिवबुद्धिः । सर्वगतत्वं कथं तस्य सिद्धमिति चेदुच्यते । येयं गोमतिः सा प्रत्येकसमवेतार्थविषया प्रतिपिण्डं कृत्स्नरूपपदार्थाकारत्वात्, प्रत्येकव्यक्तिविषयबुद्धिवत् । एकत्वमपि सिद्धमेव, तथाहि यद्यपि सामान्यं प्रत्येकं सर्वात्मना परिसमाप्तम्, तथापि तदेकमेव, एकाकारबुद्धिग्राह्यत्वात्, यथा नञ्युक्तेषु ब्राह्मणादिनिवर्त्तनम् । न चैतच्छक्यं वक्तुम्—भिन्नेषु योऽयमभिन्नाकारप्रत्ययः स भ्रान्तस्तेन तद्बलाद्वस्तुतत्त्वव्यवस्थानमसङ्गतमिति, यतो नास्य कारणदुष्टताऽस्ति । नापि बाधकप्रत्ययोद्भवस्तस्मान्मिथ्यात्वनिबन्धनाभावादयुक्तमेतदिति । आह च—"पिण्डभेदेषु गोबुद्धिरेकगोत्वनिबन्धना । गवाभासैकरूपाभ्यामेकगोपिण्डबुद्धिवत् ॥ न साबलेयाद्गोबुद्धिस्त-

तोऽन्यालम्बनापि वा । तदभावेऽपि सद्भावाद्घटे पार्थिवबुद्धिवत् ॥ प्रत्येकसमवेतार्थविषया वाऽथ गोमतिः । प्रत्येकं कृत्स्नरूपत्वात्प्रत्येकव्यक्तिबुद्धिवत् ॥ प्रत्येकसमवेताऽपि जातिरेकैकबुद्धितः । नन्वयुक्तेष्विव वाक्येषु ब्राह्मणादिनिवर्त्तनम् ॥ नैकरूपा मतिर्गोत्वे मिथ्या वक्तुं च शक्यते । नात्र कारणदोषोऽस्ति बाधकप्रत्ययोऽपि वा ॥" इति । तदत्र प्रथमे साधने तावत्साध्यविकलमुदाहरणम्, एकस्य गोत्वस्यासिद्धेस्तन्निबन्धनत्वमेकगोबुद्धेरप्यसिद्धमेव । अथ सामान्येनैकनिबन्धनत्वं साध्यते, तदा सिद्धसाध्यता, विजातीयव्यवच्छेदेन कल्पितैकगोव्यावृत्तिनिबधनत्वस्येष्टत्वात् । न साबलेयाद्गोबुद्धिरित्यत्रापि साक्षात्तदुत्पत्तिनिषेधे साध्ये सिद्धसाध्यता, त(स्य)स्वलक्षणानुभवसङ्केतमनस्कारादिव्यवहितत्वात् । अथ परम्परयापि ततो न भवतीति साध्यते, तदा प्रतिज्ञाया अनुभवबाधा दृष्टान्तस्य च साध्यविकलता । अन्यालम्बनत्वेऽपि साध्ये—यदि सन्निहिते साबलेये गौरयमिति या बुद्धिरुत्पद्यते सा ततोऽन्यालम्बनेति साध्यते, तदाऽत्राप्यनुभवविरोधः । तथाहि—सा सन्निहितपिण्डाध्यवसायेनैव वर्त्तते । दृष्टान्तस्य च साध्यविकलता । अथ तदसन्निधाने या बाहुलेयादिसन्निधौ तथा प्रवृत्ता बुद्धिः सा ततोऽन्यालम्बनेति साध्यते, तदा सिद्धसाध्यता । यदि तु साक्षाद्वस्तुसदालम्बनेति साध्यते तदाऽनैकान्तिकता । न ह्यस्य किंचित्परमार्थतो वस्तु सदालम्बनमस्तीति प्रतिपादितत्वात् । यच्च प्रत्येकपरिसमाप्तार्थविषयत्वसाधनम्, तत्रापि सामान्येन साध्ये सिद्धसाध्यता, प्रतिपदार्थमतद्रूपपरावृत्तवस्तुरूपाध्यवसायेन प्रवृत्तत्वात् । अथ नित्यैकप्रत्येकपरिसमाप्तवस्तुभूतसामान्याख्यपदार्थविषयत्वं साध्यते, तदा दृष्टान्तस्य साध्यविकलता हेतोश्चानैकान्तिकता, तथाविधेन धर्मेण क्वचिदप्यन्वयासिद्धेः । एकस्य च सर्वात्मना बहुषु परिसमाप्तत्वे सर्वेषां व्यक्तिभेदानां परस्परमेकरूपतापत्तिः, एकव्यक्तिपरिनिष्ठितस्वभावसामान्यपदार्थसंस्पृष्टत्वादेकव्यक्तिरूपत्वात् । सामान्यस्य वाऽनेकत्वापत्तिर्युगपदनेकवस्तुपरिसमाप्तात्मरूपत्वात्, दूरदेशावस्थितानेकभाजनगतबिल्वादिफलवदित्यनुमानबाधा । तेन यदुक्तं—न चात्र बाधकः प्रत्ययोऽस्तीति, तदसिद्धम् । पूर्वं चोक्तत्वाद्वक्ष्यमाणत्वाच्च बाधकस्य । यच्चैकत्वसाधनं जातेः, तत्रापि जातेः प्रत्येकसमवेताया असिद्धत्वादेकबुद्धिग्राह्यत्वमसिद्धमित्याश्रयासिद्धो हेतुः । ब्राह्मणादिनिवर्त्तनं च परमार्थतो नैकमवस्तुत्वादिति साध्यविकलमुदाहरणम् । काल्पनिके चैकत्वे साध्ये सिद्धसाध्यता, कल्पितस्यापोहरूपत्वेनेष्टत्वात् । यच्चाप्युच्यते—न चात्र कारणदोषोऽस्तीति, तदप्यसिद्धमेव, अनादेरवि-

द्यावासनालक्षणस्य कारणदोषस्य विद्यमानत्वात्। तदेवमनया दिशा कुहेतवोऽमी दूष्याः॥ ७९६॥ ७९७॥

एवं तावद्विस्तरेण परोक्तसामान्यसाधनानां दूषणमभिधाय सामान्यस्य बाधकं प्रमाणमभिधातुकाम आह—अपिचेत्यादि।

**अपिचानेकवृत्तित्वं सामान्यस्य यदुच्यते।**
**तत्र केयं मता वृत्तिः स्थितिः किं व्यक्तिरेव वा॥ ७९८॥**
**स्वरूपाप्रच्युतिस्तावत्स्थितिरस्य स्वभावतः।**
**नाधारस्तत्कृतौ शक्तो येन स्थापकता भवेत्॥ ७९९॥**
**गमनप्रतिबन्धोऽपि न तस्य बदरादिवत्।**
**विद्यते निष्क्रियत्वेन नाधारोऽतः प्रकल्प्यते॥ ८००॥**
**स्थितिस्तत्समवायश्चेन्न तथैव विचार्यते।**
**सोऽभीष्टोऽयुतसिद्धानामाश्रयाश्रयितात्मकः॥ ८०१॥**

अवश्यं सामान्यस्य भेदेषु वृत्तिरेष्टव्या। अन्यथा कथं तेषु प्रतिनियमेनैकाकारा बुद्धिस्तन्निबन्धना सेत्स्यति। तत्र च वृत्तिरस्य भवन्ती स्थितिलक्षणा वा भवेत्, तदभिव्यक्तिलक्षणा वा, स्थितिरपि द्विधा—स्वभावाप्रच्युतिलक्षणा वा, यद्वाऽधोगतिप्रतिबन्धलक्षणा। तत्र न तावदाद्या—नित्यत्वात्स्वत एव स्वभावाप्रच्युतेः सिद्धत्वात्। नापि द्वितीया—अमूर्त्तसर्वगतत्वाभ्यां निष्क्रियतयाऽधोगमनासम्भवादतो न तत्प्रतिबन्धकत्वसाधारणं युक्तम्। भेदेषु यः सामान्यस्य समवायः सा स्थितिरित्येतदप्यनुत्तरमेव, तस्यैव समवायस्य विचार्यमाणत्वात्। तथाहि—अपृथक्सिद्धानामाश्रयाश्रयिभावलक्षणः सम्बन्धः समवाय उच्यते, तच्चाश्रितत्वं सामान्यस्य तत्प्रतिबद्धस्थितितया वा भवेत्, तदभिव्यङ्गितया वेतीदमेव निरूपयितुमारब्धम्। नहि परस्परासङ्कीर्णात्मनामकिञ्चित्करमर्थान्तरं समवायो युक्तोऽतिप्रसङ्गात्। एवं हि सर्वः सर्वस्य समवायः स्यात्, तथाहि—परस्परव्यावृत्तशरीरान्भावान्यः संश्लेषयति स समवायः कल्पितः। न चार्थान्तरसद्भावेऽपि स्वात्मनि व्यवस्थिताः परस्परस्वभावमन्वाविशन्ति, स्वरूपहानिप्रसङ्गात्। तस्य चार्थान्तरस्य समवाय इति नामकरणे न विवाद इत्ययुक्तमर्थान्तरं स्थितिरिति॥ ७९८॥ ७९९॥ ८००॥ ८०१॥

स्यादित्यादिना सामान्यं प्रत्याधारकल्पनाया अत्यन्तासम्बद्धतां दर्शयति।

**स्यादाधारो जलादीनां गमनप्रतिबन्धकः ।**
**अगतीनां किमाधारैः सामान्यानां प्रकल्पितैः ॥ ८०२ ॥**
**स्वज्ञानोत्पत्तियोग्यत्वे किमभिव्यक्तिकारणैः ।**
**स्वज्ञानोत्पत्त्ययोग्यत्वे किमभिव्यक्तिकारणैः ॥ ८०३ ॥**
**ह्यः समर्थः समर्थात्मा व्यञ्जकैः क्रियते यदि ।**
**भावोऽस्थिरो भवेदेवं दीपव्यङ्ग्यघटादिवत् ॥ ८०४ ॥**

**अगतीनामिति** । गतिरहितानाम् । अमूर्त्तसर्वगतत्वाभ्यां गतेरभावात् । तदभिव्यक्तिलक्षणापि स्थितिरयुक्ता, तथाहि—तद्विषयज्ञानोत्पादनमेव तस्याभिव्यक्तिर्न तु स्वभावपरिपोषणलक्षणा नित्यस्य स्वभावान्यथाकरणासम्भवात्, ततश्च तस्य यदि स्वत एव ज्ञानोत्पादनसामर्थ्यं तदा किमित्यभिव्यक्तिकारणमपेक्षते । अथासामर्थ्यं तदा परैरनाधेयविषयत्वान्न तदपेक्षा युक्तिमती । परैराधेयविशेषत्वे चाङ्गीक्रियमाणे सत्यनित्यत्वप्रसङ्गः, ततश्च व्यक्तिवदेवासाधारणत्वान्न सामान्यं स्यात् । **भाव** इति । भवतोऽस्मादभिधानप्रत्ययाविति कृत्वा कृत्स्न एव सामान्यपदार्थ उच्यते । प्रयोगः—यस्य यस्मिन्वृत्तिनिबन्धनं न किंचिदस्ति न तत्तस्मिन्वर्तते, यथा विन्ध्ये हिमवान्, नास्ति च सामान्यस्य भेदेषु वृत्तिनिबन्धनं किंचिदिति व्यापकानुपलब्धिः ॥ ८०२ ॥ ॥ ८०३ ॥ ८०४ ॥

**घटादी**त्यादिना दूषणान्तरमप्याह ।

**घटादिजातिभेदाश्च स्वाश्रयेष्वेव भाविनः ।**
**सर्वत्र वृत्तिभाजो वा भवेयुः परजातिवत् ॥ ८०५ ॥**

घटत्वादिजातिभेदादि । घटत्वपार्थिवत्वादयः सर्वगतत्वेन वर्ण्यमानाः कदाचित्स्वाश्रयमात्रव्यापितया वर्ण्येरन्, यद्वा व्यक्तिशून्येऽपि देशे सर्वत्र भावादिति पक्षद्वयम् । **परजातिवदिति** । महाविषयतया सत्ता परेऽत्यभिधीयते । इयं च महाविषयत्वमात्रसाम्येनैव दृष्टान्तीकृता । नतु व्यक्त्यन्तरालवर्त्तिदेशव्यापितया, तस्या अपि तद्धर्माप्रतीतेः ॥ ८०५ ॥

तत्र प्रथमे पक्षे दोषमाह—**तत्रे**त्यादि ।

**तत्र देशान्तरे वस्तुप्रादुर्भावे कथं नु ते ।**
**दृश्यन्ते वृत्तिभाजो वा तस्मिन्निति न गम्यते ॥ ८०६ ॥**

घटादिव्यक्तिशून्ये देशे घटादिवस्तुप्रादुर्भावे सति ते जातिभेदा घटत्वादयः कथं तत्र घटादौ दृश्यन्ते वर्त्तन्ते चेति न गम्यते—नावबुध्यत इति यावत् ॥ ८०६ ॥

कथमित्याह—नहीत्यादि ।

**न हि तेन सहोत्पन्ना नित्यत्वान्नाप्यवस्थिताः ।**
**तत्र प्रागविभुत्वेन नचाऽऽयान्त्यन्यतोऽक्रियाः ॥ ८०७ ॥**

तथाहि—यदि घटादिना व्यक्तिभेदेन सहोत्पन्नास्ते भवेयुः प्राग्वा तत्रावस्थिताः स्युरन्यतो वा देशान्तरादागच्छेयुस्तदा तत्र दृश्येरन्वर्त्तेरन्वा । यावता न तेषामुत्पादो नित्यत्वात्, नापि प्रागवस्थानं सर्वव्यापित्वात्; नाप्यन्यदेशादागमनमक्रियत्वात्; तत्कथं तेषु तेषां वृत्तिरुपलब्धिर्वा भवेत् । प्रयोगः—ये यत्र नोत्पन्ना नापि प्रागवस्थायिनो नापि पश्चादन्यतो देशादागतिमन्तस्ते तत्र नोपलभ्यन्ते नापि वर्त्तन्ते, यथा शशशिरसि तद्विषाणम्, तथाच सामान्यं तच्छून्यदेशोत्पादवति घटादिके वस्तुनीति व्यापकानुपलब्धिः । न चायमनैकान्तिको हेतुः, तत्र वृत्त्युपलम्भयोः प्रकारान्तराभावात् ॥ ८०७ ॥

द्वितीयेऽपि पक्षे दोषमाह—स्वाश्रयेत्यादि ।

**स्वाश्रयेन्द्रिययोगादेरेकस्मिंस्तद्ग्रहे सति ।**
**सर्वत्रैवोपलभ्येरंस्तत्स्वरूपाविभागतः ॥ ८०८ ॥**

स्वाश्रयेन्द्रियसंयोगादेः—उपलम्भहेतोः । आदिशब्देनात्ममनःसन्निकर्षादिपरिग्रहः । एकस्मिन्व्यक्तिभेदे तेषां जातिभेदानां ग्रहणे सति सर्वत्रैव विजातीयेऽपि व्यक्तिभेदेऽन्तराले चोपलभ्येरन्, तेषां यथास्वमेकरूपतया प्रत्येकं गृहीतरूपाव्यतिरेकात् ॥ ८०८ ॥

एतदेव स्पष्टयन्नाह—ज्ञातादित्यादि ।

**ज्ञाताद्व्यतिरिक्तं चेत्तस्यापि ग्रहणं भवेत् ।**
**तद्वदेव न वा तस्य ग्रहणं भेद एव वा ॥ ८०९ ॥**

तथाहि—दृष्टव्यक्तिसमवेतसामान्यरूपाद्विज्ञाताद्व्यतिरिक्तं चेद्व्यक्त्यन्तरालवर्त्ति सामान्यरूपं तदा तस्यापि ग्रहणं भवेत्, गृहीतादभिन्नत्वात्, गृहीतस्वरूपवत् । अथ तस्य ग्रहणं न भवति, तथासत्यगृहीतरूपाव्यतिरेकात्तद्वद्दृष्टव्यक्तिसमवायिनोऽपि ग्रहणं न स्यात् । अथोभयरूपताऽङ्गीक्रियते तदा स्वभावभेदप्रसङ्गः, परस्परविरु-

द्धधर्माध्यासात् । न ह्यन्योन्यप्रत्यनीकग्रहणाग्रहणधर्माध्यासितमपि सदेकमिति युक्तमभिधातुं स्वच्छचेतसः, अतिप्रसङ्गात् । एवं हि विश्वमेकमेव द्रव्यं स्यात्, ततश्च सहोत्पादविनाशादिप्रसङ्गः, अन्यथैकमिति नाममात्रमेव स्यात्, नच नाम्नि विवादः ॥ ८०९ ॥

तदेवं सर्वप्रकारेण जातिमभिदूष्य प्रयोगं रचयन्नाह—**नान्येत्यादि** ।

**नान्यकल्पितजातिभ्यो वृक्षादिप्रत्यया इमे ।**
**क्रमित्वानुगमादिभ्यः पाचकादिधियो यथा ॥ ८१० ॥**
**नित्यस्याजनकत्वं च बाधकं संप्रतीयते ।**
**संयोगदूषणे सर्वं यदेवोक्तं प्रबाधकम् ॥ ८११ ॥**

ये क्रमित्वानुगामित्ववस्तुत्वोत्पत्तिमत्त्वादिधर्मोपेतास्ते परपरिकल्पितनित्यैकसर्वगतसामान्यतो न भवन्ति, यथा पाचकादिप्रत्ययाः, तथाचामी वृक्षादिप्रत्यया इति विरुद्धव्याप्तोपलब्धिः । नित्यताभावविरुद्धानित्यताभावेन क्रमित्वादेर्व्याप्तत्वात् । नित्यस्य च क्रमाक्रमाभ्यामर्थक्रियाविरोधान्नानैकान्तिकता हेतोः । दृष्टान्तस्य च साध्याविकलतायाः पूर्वं विस्तरेण प्रसाधितत्वान्नासिद्धो दृष्टान्तः । बाधकान्तरमप्याह—**संयोगेत्यादि** । तत्र संयोगदूषणे बाधकमुक्तम्, "एकस्यानेकवृत्तिश्च न युक्तेति प्रबाधक"मित्यनेन । यथाचानेकत्रैकस्य वृत्तिर्न युक्ता, तथाऽवयविदूषणे "तद्ध्येकवृत्तिभाजे"त्यादिना प्रदर्शिता ॥ ८१० ॥ ८११ ॥

एवमित्यादिनोपसंहरति ।

**एवमेकान्ततो भिन्नजातिरेषा निराकृता ।**
**जैमिनीयाभ्युपेता तु स्याद्वादे प्रतिषेत्स्यते ॥ ८१२ ॥**

## इति सामान्यपरीक्षा ।

यैर्वैशेषिकादिभिर्व्यक्तितो जातिरेकान्तभिन्नेष्टा तेषामिदं दूषणमुक्तम् । ये पुनरभिन्नामुभयरूपां च जातिमिच्छन्ति जैनजैमिनीयसाङ्ख्यादयः, तदुपवर्णिता जातिः प्रस्तावात्स्याद्वादे निषेत्स्यते । इह तु वैशेषिकनैयायिकोपकल्पितताया जातेः प्रस्तुतत्वान्न दूष्यते प्रस्तावाभावादिति भावः ॥ ८१२ ॥

## इति सामान्यपरीक्षा ।

विशेषदूषणमाह—ये पुनरित्यादि।

**ये पुनः कल्पिता एते विशेषा अन्त्यभाविनः।**
**नित्यद्रव्यव्यपोहेन तेऽप्यसंभविताः क्षणाः॥ ८१३॥**

यत्तावन्नित्यद्रव्यवृत्तित्वमन्त्यद्रव्यभावित्वं च विशेषाणां लक्षणमुक्तं तदसम्भवदोषदुष्टत्वादलक्षणमेव, नहि नित्यं किंचिद्द्रव्यमस्ति, तस्य पूर्वं द्रव्यपरीक्षायां व्यपोढत्वात्, तत्कथं तद्वृत्तित्वमेषां सिद्ध्येत्॥ ८१३॥

यदपि योगिनां विशेषप्रत्ययबलात्सत्त्वमेषां साध्यते, तत्राप्यनैकान्तिकतेति दर्शयति—अण्वाकाशदिगादीनामित्यादि।

**अण्वाकाशदिगादीनामसङ्कीर्णं यदा स्थितम्।**
**स्वरूपं च तदैतस्माद्वैलक्षण्योपलक्षणम्॥ ८१४॥**
**मिश्रीभूतापरात्मानो भवेयुर्यदि ते पुनः।**
**नान्यभावेऽप्यविभ्रान्तं वैलक्षण्योपलक्षणम्॥ ८१५॥**
**कथं तेषु विशेषेषु वैलक्षण्योपलक्षणम्।**
**स्वत एवेति चेन्नैवमण्वादावपि किं मतम्॥ ८१६॥**

तथा—अण्वादीनां रूपं स्वस्वभावावस्थानात्परस्परमसङ्कीर्णं वा भवेत्, मिश्रीभूतं वा। यद्याद्यः कल्पस्तदा स्वत एवासङ्कीर्णवस्तूपलम्भात्तेषु योगिनां परस्परवैलक्षण्यबुद्धिर्भविष्यतीति व्यर्था विशेषान्तरकल्पना। अथ द्वितीयः पक्षस्तदा कथमिव विशेषाख्यपदार्थान्तरसन्निधानेऽपि तेषु परस्पराव्यतिभिन्नस्वभावेषु विलक्षणं ज्ञानं योगिनामभ्रान्तमुत्पद्यते, भ्रान्तमेव तत्स्यादतस्मिंस्तथावृत्तत्वात्। ततश्चायोगिन एव स्युः, भ्रान्तज्ञानसंसर्गित्वादिति भावः। किंच—यदि विशेषाख्यपदार्थान्तरमन्तरेण विलक्षणा धीर्न जायते तत्कथं तेष्वेव विशेषेषु विलक्षणा धीर्भवति, नहि तेष्वपरे विशेषाः सन्त्यनवस्थाप्रसङ्गात्। नित्यद्रव्यवृत्तयोऽन्त्या इति चाभ्युपगमहानिप्रसङ्गाच्च, विशेषेष्वपि वृत्तेः। अतः स्वत एवैषां परस्परवैलक्षण्यमतिहेतुत्वमङ्गीक्रियते तदा परमाण्वादीनामपि तद्धेतुत्वं स्वत एवास्तु, को ह्यत्र तेषु प्रद्वेषो येन तेषां स्वत एव परस्परव्यावृत्तमूर्त्तीनामपि सतां परमाण्वादीनां परस्परवैलक्षण्यज्ञानोत्पत्तिहेतुत्वं नेष्यते विशेषाणां त्विष्यत इति। नात्र किंचित्कारणमुत्पश्यामोऽन्यत्र जाड्यात्॥ ८१४॥ ८१५॥ ८१६॥

स्वत एवेत्यादिना प्रशस्तमतेरत्रोत्तरमाशङ्कते ।

स्वत एवाशुचित्वं हि श्वमांसादेर्यथा स्थितम् ।
तद्योगादपरेषां तु तथेहापि यदीष्यते ॥ ८१७ ॥
यथा प्रकाशको दीपो घटादेश्च स्वतः स्थितः ।
तत्प्रकाशात्मतायां च नियतोऽयमिदं तथा ॥ ८१८ ॥

स ह्याह—यथा श्वमांसादीनां स्वत एवाशुचित्वं, तद्योगाच्चान्येषां तथेहापि तादात्म्यादन्त्येषु विशेषेषु स्वत एव व्यावृत्तिप्रत्ययहेतुत्वं, तद्योगात्परमाणुषु । किंचातदात्मकेष्वप्यन्यनिमित्तः प्रत्ययो भवत्येव, यथा घटादिषु प्रदीपात्, नतु प्रदीपेषु घटादिभ्य इति । नियतोऽयमिति । घटादिः । इदं तथेति । वैलक्षण्योपलक्षणं विशेषेभ्य एवाण्वादीनां, विशेषाणां स्वत एवेत्यर्थः ॥ ८१७ ॥ ८१८ ॥

ननु चेत्यादिना प्रतिविधत्ते ।

ननु चाशुचिभावोऽयं सांवृतो न तु तात्त्विकः ।
तत्स्वयं परतो वाऽयं कथं नाम भविष्यति ॥ ८१९ ॥
अथवा भाविकत्वेऽपि श्वमांसादिवशादिमे ।
जायन्तेऽशुचयो भावा नैव नित्या अजन्मतः ॥ ८२० ॥
प्रदीपादिप्रभावाच्च ज्ञानोत्पादस्वरूपताम् ।
लभन्ते क्षणिका ह्यर्थाः कलशाभरणादयः ॥ ८२१ ॥
न विवादास्पदीभूतविशेषबलभाविनी ।
वैलक्षण्यमतिस्तेषु क्रमोत्पत्तेः सुखादिवत् ॥ ८२२ ॥

## इति विशेषपरीक्षा ।

अशुचित्वं हि नाम भावानां कल्पनोपरचितं, न पारमार्थिकमनवस्थितत्वात् । तथाहि—यदेव द्रव्यं कस्यचिच्छ्रोत्रियादेरशुचित्वेनाभाति, तदेवान्यस्य कौटिकादेः शुचित्वेन, न चैकस्य परस्परप्रत्यनीकानेकरूपसंपातो युक्त एकत्वहानिप्रसङ्गात् । अथवा भवतु भाविकमशुचित्वं भावानां, तथापि नेदं दृष्टान्तेन समम् । तथाहि—श्वमांसादिकाशुचिद्रव्यसंपर्कादन्नादयो भावाः परित्यक्तपूर्वशुचिस्वभावा अन्य एवाशुचयो जायन्ते । अतो युक्तमेषां परोपाधिकमशुचित्वम् । नत्वेवं किंचित्परमाण्वादिषु निबन्धनमस्ति, येनैषां परोपाधिकं वैलक्षण्यं भवेत्तथा, नित्यत्वादेवाजन्मतोऽनुत्पत्तेः ।

एवं प्रदीपदृष्टान्तेऽपि घटादीनां ज्ञानोत्पत्तिहेतुत्वं परोपाधिकं योज्यम् । नेत्यादिना—विशेषाणां बाधकं प्रमाणमाह । तस्यापि पूर्ववत् स्वरूपं प्रतिबन्धश्च वाच्यः ॥ ८१९ ॥ ८२० ॥ ८२१ ॥ ८२२ ॥

## इति विशेषपरीक्षा ।

समवायदूषणार्थमाह—तन्तुष्वित्यादि ।

**तन्तुष्वेव पटोऽभीषु वीरणेषु कटः पुनः ।**
**इत्यादीहमतेर्भावात्समवायोऽवगम्यते ॥ ८२३ ॥**

अयुतसिद्धानामाधार्याधारभूतानामिहबुद्धिहेतुर्यः सम्बन्धः स समवायः, स चायमिह तन्तुषु पट इत्यादीहबुद्धिविशेषतो द्रव्यादिभ्योऽर्थान्तरत्वेनावगम्यते । यथाहि सत्ताद्रव्यत्वादीनां स्वाधारेष्वात्मानुरूपप्रत्ययकर्तृत्वात्स्वाश्रयादिभ्यः परस्परतश्चार्थान्तरभावस्तथा समवायस्यापि पञ्चसु पदार्थेषु—इह तन्तुषु पटः, इह द्रव्ये गुणकर्मणी, इह द्रव्यगुणकर्मसु सत्ता, इह द्रव्ये द्रव्यत्वम्, इह गुणेषु गुणत्वम्, इह कर्मणि कर्मत्वम्, इह द्रव्येष्वन्त्या विशेषा, इत्यादिप्रत्ययदर्शनात्पञ्चभ्यः पदार्थेभ्योऽर्थान्तरत्वं गम्यते । प्रयोगः—यो येषु यदाकारविलक्षणः प्रत्ययः, स तदर्थान्तरनिबन्धनः, यथा देवदत्ते दण्डीति प्रत्ययः, तथाचायं पञ्चसु पदार्थेष्विहप्रत्यय इति स्वभावहेतुं मन्यते ॥ ८२३ ॥

प्रतिबन्धमस्य दर्शयन्नाह—तस्याभाव इत्यादि ।

**तस्याभावे स चेत्किं हि मतेरस्या निबन्धनम् ।**
**न विशेषमतिर्दृष्टा निमित्तान्तरवर्जिता ॥ ७२४ ॥**
**इहबुद्ध्यविशेषाच्च योगवन्न विभिद्यते ।**
**सर्वस्मिन्भाववत्त्वेष एक एव प्रतीयते ॥ ८२५ ॥**
**कारणानुपलब्धेश्च नित्यो भाववदेव सः ।**
**न ह्यस्य कारणं किञ्चित्प्रमाणेनोपलभ्यते ॥ ८२६ ॥**

निबन्धनमन्तरेण भवतो नित्यं सत्तादिप्रसङ्गो बाधकं प्रमाणम् । एवं तावद्वैशेषिकाणां मतेन—इहबुद्धिलिङ्गानुमेयः समवायः, नैयायिकमतेन तु—इहबुद्धिप्रत्यक्षगम्य एव । तथाहि ते—अक्षव्यापारे सतीह तन्तुषु पट इत्यादिप्रत्ययोत्पत्तेः प्रत्यक्षत्वमाचक्षते । स चायं समवायो यथा संयोगः सम्बन्धेषु भिन्नस्तथा नायं

भिद्यते, किं तर्हि ? भाववत् सत्तावत्, तल्लिङ्गाविशेषाद्विशेषलिङ्गाभावात्सर्वत्रैक एव समवायः । योगवदिति । वैधर्म्यदृष्टान्तः । अकारणत्वाच्च भाववदेव नित्यः सिद्धः, अकारणत्वं च प्रमाणतः कारणानुपलब्धेः सिद्धम् ॥ ८२४ ॥ ८२५ ॥ ८२६ ॥

तदेतदित्यादिना दूषणमारभते ।

**तदेतदिहविज्ञानं परेषामेव वर्त्तते ।**
**स्वसिद्धान्तानुरागेण न दृष्टं लौकिकं तु तत् ॥ ८२७ ॥**

तदनेन हेतोराश्रयासिद्धतामाह । इह तन्तुषु पट इत्यादिका हि धियः स्वसिद्धान्तानुरागोपकल्पिता एव । नतु लोके तथोत्पद्यमानाः संवेद्यन्त इत्यतः साध्यधर्मी न सिद्धः ॥ ८२७ ॥

नानात्वेत्यादिना—तामेव धर्म्यसिद्धिं समर्थयते ।

**नानात्वलक्षणे हि स्यादाधाराधेयभूतयोः ।**
**इदमत्रेति विज्ञानं कुण्डादौ श्रीफलादिवत् ॥ ८२८ ॥**
**नैव तन्तुपटादीनां नानात्वेनोपलक्षणम् ।**
**विद्यते येन तेषु स्युरिदमत्रेति बुद्धयः ॥ ८२९ ॥**

ययोर्हि नानात्वमुपलक्षितं भवेत्तयोरेवाधाराधेयभावे सतीहबुद्धिरुद्भवन्ती लोके दृष्टा, यथेह कुण्डे श्रीफलानीति, नच तन्तुपटयोर्नानात्वमुपलक्षितं विद्यते च, तत्कथं तत्रेहबुद्धिर्भवेत् ॥ ८२८ ॥ ८२९ ॥

स्यादेतद्यदि नामाऽस्माभिः सिद्धान्तबलादुपकल्पितेयमिहमतिस्तथाप्यस्या भवद्भिर्निबन्धनं वक्तव्यमित्याह—स्वेच्छेत्यादि ।

**स्वेच्छया रचिते वाऽस्मिन्कल्पितेष्विव वस्तुषु ।**
**न कारणनियोगोऽयं परं प्रत्युपपद्यते ॥ ८३० ॥**

यो हि यत्कारणमेव नेच्छति स कथं कार्यं स्वयमुपकल्प्य तत्कारणं पर्यनुयुज्यते, आत्मैव हि भवता पर्यनुयोक्तव्यः, येनेदं कार्यमुपकल्पितमिच्छावशात्, नैवेच्छानां वस्तुस्वभावानुरोधः, स्वातन्त्र्यवृत्तित्वादासाम्, नातो वस्तुसिद्धिरनवस्थाप्रसङ्गात् । तथाहि—भवदुपकल्पितस्यापि हि वस्तुनः कैश्चिदन्यथाऽपि कल्पयितुं शक्यत्वात् ॥ ८३० ॥

अपिच न केवलमिह तन्तुषु पट इत्यादिका धियो लोके न सिद्धाः, किन्तु तद्विप्रसिद्धा इति दर्शयन्नाह—वृक्ष इत्यादि ।

**वृक्षे शाखाः शिलाश्चाग इत्येषा लौकिकी मतिः ।**
**अगाख्यपरिशिष्टाङ्गनैरन्तर्योपलम्भनात् ॥ ८३१ ॥**
**तौ पुनस्तास्विति ज्ञानं लोकातिक्रान्तमुच्यते ।**
**घटे रूपं क्रियादीति तादात्म्यं त्ववगच्छति ॥ ८३२ ॥**
**रूपकुम्भादिशब्दा हि सर्वावस्थाभिधायकाः ।**
**तद्विशेषाभिधानाय तथा ते विनिवेशिताः ॥ ८३३ ॥**
**तानाश्रित्यैषु विज्ञानं तेनाकारेण वर्त्तते ।**
**समवायान्न भेदस्य सर्वेषामप्यनीक्षणात् ॥ ८३४ ॥**

वृक्षे शाखाः पर्वते शिला इत्येवं लोके दृश्यते, नतु शाखायां वृक्षः शिलासु पर्वत इति । सापि च वृक्षे शाखेत्यादिका मतिर्न समवायवशात्, किन्तु—अगाख्यानि यानि परिशिष्टानि—विवक्षितशाखाशिलाव्यतिरिक्तान्यधोव्यवस्थितानि स्कन्धादीन्यङ्गानि, तेषां नैरन्तर्योपलम्भात् । अगशब्देनात्र न गच्छन्तीति कृत्वा तरवो गिरयश्चाभिप्रेताः । **ताविति** । अगवृक्षौ । **तास्विति** । शिलाशाखासु । यत्तर्हीदमिह घटे रूपरसगन्धस्पर्शाश्चलनं चेत्यादि लोके प्रसिद्धं ज्ञानं तस्य समवायं मुक्त्वा कोऽन्यो विषय इत्याह—**घट** इत्यादि । तादात्म्यं—घटस्वभावत्वं, रूपादीनामवगच्छति—ज्ञानं लोको वेति शेषः । घटे रूपं—घटस्वभावं रूपं, न घटाद्यात्मकमित्यर्थः । बहुषु रूपादिषु साधारणशक्तिविशेषप्रतिपादनेच्छया तदन्यरूपादिव्यवच्छेदेन घटादिश्रुतेर्निवेशः, रूपादिश्रुतिस्तु प्रत्येकमसाधारणचक्षुर्विज्ञानादिकार्यनिर्वर्तनसामर्थ्यद्योतनाय निवेशितेत्यतो घटादिश्रुती रूपादिभेदानाक्षिपतीति सामानाधिकरण्याभावाद्वैयधिकरण्येनैव तादात्म्यं प्रतिपाद्यते । उभयोस्तु किमर्थं प्रयोग इत्याह—**रूपकुम्भे**त्यादि । रूपादिशब्दा हि सर्वावस्थस्य रूपादेर्वाचकाः । तथाहि—यथा घटात्मनाऽवस्थितरूपादि रूपादीत्युच्यते तथा पटाद्यात्मनाऽवस्थितमपि, ततश्च केवलेभ्यो रूपादिशब्देभ्यो न विशेषः प्रतीयते किमवस्था रूपादय इति, घटे रूपादय इत्येवं तु प्रयोगे घटात्मकास्त इति पटादिव्यवच्छेदेन प्रतीयन्ते । तथा घटशब्दोऽपि सर्वावस्थं घटं ब्रूते, शुक्लं पीतं चलं निश्चलमित्यादिकम्, अतः केवलान्न विशेषप्रतीतिः, घटे शुक्लं रूपमित्यादिप्रयोगे तु तदन्यरूपादिव्यवच्छेदेन प्रतिपत्तिर्भवति, ततश्च तस्यैवम्भूतस्य विशेषस्याभिधानाय यथा तथा घटे रूपमिति ते निवेशिताः ।

शब्दा इति शेषः । तान् शब्दानाश्रित्यैषु घटादिषु तेनाकारेण घटे रूपमित्यादिना प्रवर्त्तते ज्ञानं, नतु समवायमाश्रित्य वर्त्तत इति सम्बन्धः । अत्र कारणमाह—**भेद-स्येत्यादि** । नहि समवायघटरूपादीनां सर्वेषां परस्परतो भेद उपलभ्यते । येनेयं समवायनिबन्धना बुद्धिर्भवेत् । एतेन हेतोरनैकान्तिकत्वं प्रतिज्ञायाश्चानुमानादिबाधितत्वमुक्तम् ॥ ८३१ ॥ ८३२ ॥ ८३३ ॥ ८३४ ॥

यच्चोक्त "मिहबुद्ध्यविशेषा" दित्यादि, तत्राह—यद्येक इत्यादि ।

**यद्येकः समवायः स्यात्सर्वेष्वेव च वस्तुषु ।**
**कपालादिष्वपि ज्ञानं पटादीति प्रसज्यते ॥ ८३५ ॥**
**गजादिष्वपि गोत्वादि समस्तीत्यनुषज्यते ।**
**ततो गवादिरूपत्वममीषां शावलेयवत् ॥ ८३६ ॥**
**पटस्तन्तुषु योऽस्तीति समवायात्प्रतीयते ।**
**अस्ति चासौ कपालेषु तस्येति न तथेति किम् ॥ ८३७ ॥**
**नाश्रितः स कपाले चेन्ननु तन्तुष्वपीष्यते ।**
**आश्रितः समवायेन स कपालेऽपि नास्ति किम् ॥ ८३८ ॥**
**तन्तोर्यः समवायो हि पटस्येत्यभिधीयते ।**
**स घटस्य कपालेषु तद्धीरनवधिर्भवेत् ॥ ८३९ ॥**

यद्येकस्त्रैलोक्ये समवायः स्यात्तदा कपालेषु (पट) इत्यादयोऽपि धियः प्रसूयेरन्। अश्वादिषु च गोत्वादिर्विद्यत इत्येवं स्यात् । ततश्च सावलेयादिभेदवद्गजादिष्वपि गवादिप्रत्ययो भवेत् । तथाहि—तन्तुषु पट इति यत्समवायबलात्प्रतीतिरुपवर्णिता स समवायस्तस्य पटस्य कपालादिष्वप्यस्तीति किमिति तथा प्रतीतिर्न भवेत् । स्यादेतत् न कपाले पट आश्रितस्तेन तथा प्रत्ययो न भवतीति । एतदपि मिथ्या । यतस्तन्तुष्वपि पट आश्रित इति यत्समवायबलादुपवर्ण्यते, स समवायः कपालेषु किं नास्ति, येन तत्र तन्तुष्विव पटोऽस्तीति तद्बुद्धिर्न भवेत् । किन्तु य एव तन्तौ पटस्य समवाय इति निर्दिश्यते स एव पटस्य समवायः कपालेषु, तत्कथं सङ्करो न स्यात् । तत्—तस्मात्, धीरनवधिः—अवधिरहिता भवेत् । ततश्च द्रव्यगुणकर्मणां द्रव्यत्वगुणत्वकर्मत्वादिविशेषणैः सम्बन्धस्यैकत्वात् । पञ्चपदार्थविभागो न स्यात् ॥८३५॥ ॥ ८३६ ॥ ८३७ ॥ ८३८ ॥ ८३९ ॥

एवमित्यादिना गजादिषु गवादिबुद्धिप्रसङ्गं समर्थयते ।

**एवं यश्च गजत्वादिसमवायो गजादिषु ।**
**गोत्वादिजातिभेदानां स एव स्वाश्रयेष्वपि ॥ ८४० ॥**

आधारेत्यादिनाऽत्र प्रशस्तमतेरुत्तरमाशङ्कते ।

**आधाराधेयनियमः स चैकत्वेऽपि विद्यते ।**
**द्रव्येष्विव हि तज्जातिकर्मस्वेव च कर्मता ॥ ८४१ ॥**

स ह्याह—यद्यप्येकः समवायस्तथापि पञ्चपदार्थसङ्करो न भवति, आधाराधेयनियमात् । तथाहि—द्रव्येष्वेव द्रव्यत्वं, गुणेष्वेव गुणत्वं, कर्मस्वेव कर्मत्वम्, इत्येवं द्रव्यत्वादीनां प्रतिनियताधारावच्छेदेन प्रतिपत्तिरुपजायते ॥ ८४१ ॥

यद्येवं तर्हि समवायः प्रतिपदार्थं भिन्नः प्राप्नोतीत्याह—इहेत्यादि ।

**इहेति समवायोत्थविज्ञानान्वयदर्शनात् ।**
**सर्वत्र समवायोऽयमेक एवेति गम्यते ॥ ८४२ ॥**
**द्रव्यत्वादिनिमित्तानां व्यतिरेकस्य दर्शनात् ।**
**धियां द्रव्यादिजातीनां नियमस्त्ववसीयते ॥ ८४३ ॥**

इहेति समवायनिमित्तस्य प्रत्ययस्य सर्वत्राभिन्नाकारतयाऽन्वयदर्शनात्सर्वत्रैकः समवाय इति गम्यते । सत्यपि चैकत्वे द्रव्यत्वादिनिमित्तानां धियां प्रतिनियताधारावच्छेदेनोत्पत्तेः व्यतिरेकस्यानन्वयलक्षणस्य दर्शनाद्द्रव्यत्वादिजातीनां व्यतिरेको विज्ञायते । तेन पञ्चपदार्थसङ्करो न भवति ॥ ८४२ ॥ ८४३ ॥

कथं पुनः सम्बन्धाविशेषेऽप्यमीषामाधाराधेयप्रतिनियमो युज्यत इत्याह—तद्यथेत्यादि ।

**तद्यथा कुण्डदध्नोश्च संयोगैक्येऽपि दृश्यते ।**
**आधाराधेयनियमस्तथेह नियमो मतः ॥ ८४४ ॥**
**व्यङ्ग्यव्यञ्जकसामर्थ्यभेदाद्द्रव्यादिजातिषु ।**
**समवायैकभावेऽपि नैव चेत्स विरुध्यते ॥ ८४५ ॥**

यथाहि कुण्डदध्नोः संयोगैकत्वेऽपि भवत्याश्रयाश्रयिप्रतिनियमः, तथा द्रव्यत्वादीनां समवायैकत्वेऽपि व्यङ्ग्यव्यञ्जकशक्तिभेदादाधाराधेयप्रतिनियम इति । स इत्याधाराधेयनियमः ॥ ८४४ ॥ ८४५ ॥

आधाराधेय इत्यादिना—प्रतिविधत्ते ।

**आधाराधेयनियमो नन्वेकत्वेऽस्य दुर्घटः ।**
**द्रव्यत्वं द्रव्य एवेष्टं कथं तत्समवायतः ॥ ८४६ ॥**
**तस्यासौ समवायश्च गुणादिष्वपि विद्यते ।**
**गुणजात्यादिसम्बन्धादेक एव ह्ययं तयोः ॥ ८४७ ॥**

न ह्यस्माकं रूपत्वादीनां रूपादिष्वाधेयनियमः सिद्धः, किन्तु भवतामेव, स च सर्वत्र समवायमेकमेवाभ्युपगच्छतां दुर्घट इत्यादिप्रसङ्गापादानं क्रियते । तथाहि द्रव्य एव द्रव्यत्वमित्येवं यो नियम इष्यते स समवायबलादेव, तस्य च द्रव्यत्वादेर्यः समवायः स एव गुणादिष्वप्यस्ति, गुणत्वादिजात्या तेषां सम्बन्धत्वात् । यदि नाम सम्बन्धस्तथापि स एव तत्र समवायोऽस्तीति कथमवसीयत इत्याह—**एक एवेत्यादि** । **तयोरिति** । द्रव्यत्वगुणादिजात्योः । ततश्चाभिन्ननिमित्तत्वात्तत्सङ्करप्रसङ्गो दुर्निवार इति भावः ॥ ८४६ ॥ ८४७ ॥

**अन्यथा गुणजात्यादिभिन्न एव भवेदयम् ।**
**योगिभेदात्प्रतिव्यक्ति यथा योगो विभिद्यते ॥ ८४८ ॥**

**अन्यथेति** । यदि द्रव्ये द्रव्यत्वस्य यः समवायः स एव गुणादिषु गुणत्वादीनां न भवेत्तदा संयोगवत्प्रत्याधारं समवायो भिद्यते ॥ ८४८ ॥

यच्चोक्तं द्रव्यत्वादिनिमित्तानामित्यादि, तत्राह—**द्रव्यत्वादीत्यादि** ।

**द्रव्यत्वादिनिमित्तानां व्यतिरेको न युज्यते ।**
**धियां निमित्तसद्भावादतस्तन्नियमोऽपि न ॥ ८४९ ॥**

न ह्यविकले निमित्ते सति कार्यस्य व्यतिरेकोऽभावो युक्तोऽतत्कार्यत्वप्रसङ्गात् । ततश्च धियां व्यतिरेकायोगात्तस्याप्याधाराधेयभावस्य नियमो न युक्तः ॥ ८४९ ॥

ननु द्रव्य एव द्रव्यत्वमाश्रितं स्थितमित्यादिव्यपदेशतो नियमो भविष्यतीत्याह—**तदाश्रितत्वेत्यादि** ।

**तदाश्रितत्वस्थानादि तस्मादेवाभिधीयते ।**
**समवायादतश्चैतन्न युक्तं तन्नियामकम् ॥ ८५० ॥**

तस्मादेव हि समवायादाश्रितत्वादिव्यवस्थानमुपवर्ण्यते भवद्भिः, तस्य च सर्वत्राभिन्नत्वे कथमेष नियमो योक्ष्यते । तस्मादेतदप्याश्रितत्वादि न तस्याधाराधेयभाक्ं युक्तम्, आधाराधेयभावेन सहैकयोगक्षेमत्वादेषाम् ॥ ८५० ॥

व्यङ्ग्यव्यञ्जकशक्तिप्रतिनियमात्तर्हि नियमो भविष्यतीत्याह—**व्यङ्ग्ये**त्यादि ।

**व्यङ्ग्यव्यञ्जकसामर्थ्यभेदोऽपि समवायतः ।**
**नान्यतस्तु स नित्यानामुत्पादानुपपत्तितः ॥ ८५१ ॥**

द्रव्यत्वादिसामान्यव्यञ्जकत्वं द्रव्यादीनां यदुच्यते तत्समवायबलादेव । तथाहि—यत एव द्रव्यत्वं द्रव्ये समवेतं तत एव तेन तद्व्यज्यत इत्युच्यते । **अन्यत** इति । सौगतोपवर्णितात् ज्ञानोत्पादनयोग्यस्वभावोत्पादनात् । यस्मान्नित्यानामपि सत्तादीनां समवाय इष्टः, न च नित्यानामुत्पत्तिर्युक्ता ॥ ८५१ ॥

एतदेव **न ही**त्यादिना समर्थयते ।

**नहि दीपादिसद्भावाज्जायन्ते यादृशा इमे ।**
**विज्ञानजनने योग्या घटाद्या जातयस्तथा ॥ ८५२ ॥**

यश्चापि दधिकुण्डसंयोगो दृष्टान्तत्वेनोक्तः, सोऽप्यस्माकमसिद्ध इति दर्शयति—**कुण्डदध्नो**रित्यादि ।

**कुण्डदध्नोश्च संयोग एकः पूर्वं निराकृतः ।**
**न चासौ नियतस्तस्माद्युज्यते(तिप्रसङ्गतः) ॥ ८५३ ॥**

**पूर्व**मिति । संयोगपदार्थदूषणे । भवतु नाम संयोग एकः, तत्रापि तुल्य एव प्रसङ्ग इति दर्शयति—**न चासा**वित्यादि । **तस्मा**दिति । संयोगात् । दध्नि कुण्डमित्यादिबुद्धिप्रसङ्गोऽतिप्रसङ्गः । संयोगस्य निमित्तस्य निर्विशिष्टत्वात् ॥ ८५३ ॥

यच्चोक्तं कारणानुपलब्धेर्नित्यः समवाय इति तत्राह—**नित्यत्वेने**त्यादि ।

**नित्यत्वेनास्य सर्वेऽपि नित्याः प्राप्ताः (घटादयः) ।**
**आधारेषु सदा तेषां समवायो न संस्थितेः ॥ ८५४ ॥**

यदि हि समवायो नित्यः स्यात्तदा घटादीनामपि नित्यत्वप्रसङ्गः, स्वाधारेषु तेषां सर्वदाऽवस्थानात् । तथाहि—समवायास्तित्वादेवैषां स्वाधारेष्ववस्थानमिष्यते, स च समवायो नित्य इति किमिति सदाऽमी न संतिष्ठेरन् ॥ ८५४ ॥

**स्वारम्भके**त्यादिना परस्योत्तरमाशङ्कते ।

**स्वारम्भकविभागाद्वा यदि वा तद्विनाशतः ।**
**ते नश्यन्ति क्रियाद्या(दीव)योगादेरिति चेन्न तत् ॥ ८५५ ॥**
**स्वाधारैस्समवायो हि तेषामपि सदा मतः ।**
**तेषां विनाशभावे तु नियताऽस्यापि नाशिता ॥ ८५६ ॥**

स्यादेतत्—घटादीनां ये स्वारम्भकावयवास्तेषां विभागाद्विनाशाद्वा घटादीनां विनाशः। यथा घटस्योद्वेष्टनपाकावस्थयोः क्रियादयः स्पर्शवद्द्रव्यसंयोगादिभ्यो विनश्यन्ति। यथोक्तम्—स्पर्शवद्द्रव्यसंयोगात्कर्मणो नाशः कार्यविरोधि च कर्मेति। तथा बुद्धेर्बुद्ध्यन्तराद्विनाशः शब्दस्य शब्दान्तरादिति परप्रक्रिया। तेन सत्यपि समवायेऽवस्थितिहेतौ सहकारिकारणान्तराभावाद्विरोधिप्रत्ययोपनिपाताच्च न नित्यत्वप्रसङ्गो घटादीनामिति परस्य भावः। **न** तदित्यादिना प्रतिषेधति। नैतद्युक्तं, यतस्तेषामपि स्वारम्भकावयवानां कपालादीनां स्वारम्भकेष्ववयवान्तरेषु समवायः सर्वदाऽस्त्येवेति कुतो विनाशो विभागो वा। न केवलं तदारब्धानां द्रव्याणां क्रियादीनां चेत्यपिशब्देन दर्शयति। यदि तु स्वारम्भकाणामवयवानां विनाशोऽभ्युपगम्येत, तदा नियतमस्य समवायस्यापि विनाशः प्राप्नोति ॥ ८५५ ॥ ८५६ ॥

कस्मादित्याह—**सम्बन्धिनो निवृत्तौ** हीत्यादि।

**सम्बन्धिनो निवृत्तौ हि सम्बन्धोऽस्तीति दुर्घटम्।**
**नहि संयुक्तनाशेऽपि संयोगो नोपतिष्ठते ॥ ८५७ ॥**
**यथा संयोगभावे तु संयुक्तानामवस्थितिः।**
**समवायस्य सद्भावे तथा स्यात्समवायिनाम् ॥ ८५८ ॥**

एतदेव घटयन्नाह—**नहीत्यादि**। ततश्च विनष्टसम्बन्धित्वान्नष्टसंयोगिसंयोगवदनित्यः समवायः प्राप्नोतीत्युक्तं भवति। सम्बन्धिनां वा स्थितिः प्राप्नोति, अविनष्टसंबन्धत्वात्, अनुपरतसंयोगद्रव्यद्वयवत्। अन्यथा तत्सम्बन्धस्वभावहानिरुभयेषामपि प्रसज्येत ॥ ८५७ ॥ ८५८ ॥

**एकसम्बन्धनाशेऽपी**त्यादिना परः प्रत्यवतिष्ठते।

**एकसम्बन्धिनाशेऽपि समवायोऽवतिष्ठते।**
**अन्यसम्बन्धिसद्भावाद्योगो नो चेन्न भेदतः ॥ ८५९ ॥**

एवं मन्यते यदि प्रथमे हेतौ विनष्टाशेषसम्बन्धित्वादिति हेत्वर्थोऽभिप्रेतः। तदा पक्षैकदेशासिद्धता हेतोः। न ह्यशेषाणां सम्बन्धिनां विनाशः क्वचिदस्ति। प्रलयेऽपि परमाण्वादीनामवशिष्यमाणत्वात्। अथ यथाकथंचिद्विनष्टसम्बन्धित्वसम्बन्धमधिकृत्य हेतुरुच्यते, तदाऽनैकान्तिकता, यदि नामैकः सम्बन्धी क्वचिद्विनष्टस्तथाऽप्यपरसम्बन्धिनिबन्धनावस्थितिरस्य भविष्यति। यद्येवं संयोगस्याप्यनया नीत्या नित्यत्वं प्राप्नो-

तीत्याशङ्क्य परः प्रतिविधत्ते—**न भेदत** इति। संयोगो हि प्रतिसंयोगि भिद्यते। तेनास्यानित्यत्वं युक्तं, समवायस्तु—इहप्रत्ययनिबन्धनस्याभिन्नत्वादेक एव जगति। तेनास्यानित्यत्वमयुक्तमन्यत्रापि सम्बन्ध्यन्तरे तस्योपलभ्यमानत्वात्॥ ८५९॥

यद्येवमित्यादिना प्रतिविधत्ते।

**यद्येवं ये विनश्यन्ति घटाद्याः समवायिनः।**
**तेषां वृत्त्यात्मको योऽसौ समवायः प्रकल्पितः॥ ८६०॥**
**स एव व्यवतिष्ठेत किं सम्बन्ध्यन्तरस्थितेः।**
**अथान्य एव संयोग⋯⋯बहुतादिवत्॥ ८६१॥**
**नाद्यस्तल्लक्षणस्यैव समवायस्य संस्थितौ।**
**पूर्ववत्ते स्थिता एव प्राप्नुवन्ति घटादयः॥ ८६२॥**
**न तेषामनवस्थाने तेषां (वृत्त्यात्मकः क्वचित्)।**
**सम(वायोऽ)वतिष्ठेत संज्ञामात्रेण वा तथा॥ ८६३॥**
**अतः प्रागपि सद्भावान्न ते वृत्ताः स्युराश्रये।**
**पश्चादिव तथा ह्येषा वृत्तिस्तेषामवस्तुतः॥ ८६४॥**

तथाहि ये ते विनश्यन्ति घटादयः स्वकारणादिसमवायिनस्तेषां स्वकारणेषु वृत्त्यात्मको योऽसौ समवायः कल्पितः स एव किं तेषु विनष्टेषु सम्बन्ध्यन्तरेष्वस्ति, आहोस्विदन्य एव, यथा संयोगो बहुत्वं वा प्रतिसंयोगि भिद्यते। आदिशब्दाद्विभागादिपरिग्रहः। तत्र यद्याद्यः पक्षस्तदा प्रागवस्थावदप्रच्युतप्रवृत्तित्वादवस्थिता एव घटादयः प्राप्नुवन्ति, तेषां वा घटादीनामनवस्थानेऽनवस्थितप्रवृत्तित्वान्नावस्थितिः समवायस्य प्राप्नोति, अन्यथा न वृत्त्यात्मकः स्यात्। तथाभूतस्य च स्वतन्त्रस्यानुपकारिणो वृत्तिः समवाय इति वा नामकरणे संज्ञामात्रमेव स्यात्, न तु वस्तुतथाभावस्तथेति। तद्वृत्त्यात्मक इत्येवं ततः संज्ञामात्रान्वयो दोषस्तं दर्शयति—**अत** इत्यादि। प्रागपि सम्बन्धिनाशात्। अविनष्टसम्बन्ध्यवस्थायामपीत्यर्थः। ते घटादयः। स्वाश्रये वृत्तास्तस्य समवायस्य भावात्सद्भावबलान्न सिध्येयुः। पश्चादिव—विनष्टसमवायिकारणवत्, परमार्थतो वृत्त्यभावात्। **तथाहीत्यादिना** हेत्वर्थं दर्शयति॥ ८६०॥ ८६१॥ ८६२॥ ८६३॥ ८६४॥

**अथान्य एव संयोगविभागबहुतादिवत्।**
**सम्बन्ध्यन्तरसद्भावे समवायोऽवतिष्ठते॥ ८६५॥**

**संयोगादिवदेवं हि नन्वस्य बहुता भवेत् ।**
**एवमाद्यस्य सद्भावे बहु स्यादसमञ्जसम् ॥ ८६६ ॥**

## इति समवायपदार्थपरीक्षा ।

**अथान्य** एवेति द्वितीयः पक्षस्तदा संयोगादिवत्समवायबहुत्वं प्राप्नोति, ततश्च न समवायो भेदवानित्यस्याभ्युपेतस्य हानिः । एवमादीत्यादिशब्देन कारणवैफल्यं, अनेकसूत्रविरोधः, प्रत्यक्षादिविरोधः, सर्वपदार्थानामक्रमोत्पत्तिरित्यादिदोषान्तरपरिग्रहः। तथाहि—स्वकारणसमवायः सत्तासमवायो वा जन्मोच्यते, समवायश्च नित्य इति न क्वचिदपि कार्यजन्मनि कारणानां सामर्थ्यमिति कारणवैफल्यम् । तथा "अन्यतरकर्मज उभयकर्मजः संयोगजश्च संयोगः, इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञान"मित्यादिजन्मप्रतिपादकसूत्रविरोधः । तथा प्रत्यक्षादिप्रतीतिकारणानि चक्षुरादीनि विरुध्यन्ते। तथा समवायलक्षणस्य जन्मनो नित्यतया न क्रमोस्तीति क्रमोत्पत्तिर्दृष्टभावानां विरुध्यते । ततश्च युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति स्वसिद्धान्तव्याहतिः । नित्यत्वाच्च जन्मनोऽनुपकार्योपकारकभूतं जगदिति व्यर्थं शास्त्रप्रणयनमित्यादिबहुतरमसमञ्जसमालूनविशीर्णं स्यात् ॥ ८६५ ॥ ८६६ ॥

## इति समवायपदार्थपरीक्षा ।

आरोपिताकारशब्दप्रत्ययगोचरत्वसमर्थनार्थं प्रस्तावमारचयन्नाह—यदीत्यादि ।

**यदि नोपाधयः केचिद्विद्यन्ते (परमार्थतः) ।**
**(दण्डी शुक्लश्चलत्यस्ति गौ)रिहेत्यादिधी(ध्वनी) ॥ ८६७ ॥**
**(स्यातां) किंविषयावेतौ नानिमित्तौ च तौ मतौ ।**
**सर्वस्मिन्नविभागेन तयोर्वृत्तिरसम्भवी ॥ ८६८ ॥**

वस्त्वेव हि परमार्थतः शब्दप्रत्ययग्राह्यम्, अतः शब्दैः साक्षाद्विधिनिषेधाभ्यां वस्तुस्वभावप्रतिपादनाद्विधिरेव शब्दार्थ इति विधिशब्दार्थवादिनां दर्शनम् । अपोहवादिनां तु न परमार्थतः शब्दानां किंचिद्वाच्यं वस्तुस्वरूपमस्ति । सर्व एव हि शब्दप्रत्ययो भ्रान्तो भिन्नेष्वर्थेष्वभेदाकाराध्यवसायेन प्रवृत्तेः, यत्र तु पारम्पर्येण वस्तुप्रतिबन्धः, तत्रार्थासंवादो भ्रान्तत्वेऽपीति दर्शनम् । तत्र यत्तदारोपितं विकल्पधियाऽर्थेष्वभिन्नं रूपं तदन्यव्यावृत्तपदार्थानुभवबलायातत्वात्स्वयं चान्यव्यावृत्ततया प्रख्यानाद्भ्रान्तैश्चान्यव्यावृत्तार्थेन सहैक्येनाध्यवसितत्वादन्यापोढपदार्थाधिगतिफलत्वाच्चा-

न्यापोढ इत्युच्यते। तेनापोहः शब्दार्थ इति प्रसिद्धम्। तत्र विधिवादिनश्चोदयन्ति। यदि भवतां द्रव्यगुणकर्मसामान्यविशेषसमवायलक्षणा उपाधयो विशेषणानि शब्दप्रत्ययं प्रति निमित्तानि परमार्थतो न सन्ति, तत्कथं लोके दण्डीत्यभिधानप्रत्ययाः प्रवर्त्तन्ते द्रव्याद्युपाधिनिमित्ताः। तथाहि—दण्डी विषाणीत्यादिधीध्वनी लोके द्रव्योपाधिकौ प्रसिद्धौ, शुक्लः कृष्ण इति गुणोपाधिकौ, चलति भ्रमतीति कर्मनिमित्तौ, अस्ति विद्यत इति सत्ताप्रवृत्तिनिमित्तकौ, गौरश्वो हस्तीति सामान्यविशेषोपाधी, इह तन्तुषु पट इति समवायबलात्। तत्रैषां द्रव्यादीनामभावे दण्डीत्यादिधीध्वनी निर्विषयौ स्यातामिति। आदिग्रहणं प्रत्येकमभिसम्बध्यते। तेन प्रत्येकं छत्री विषाणीत्यादिसमानजातीयधीध्वनीनां ग्रहणं भवति। अन्त्यास्तु विशेषा योगिनामेव ग्राह्या इति न तेषामादिशब्देन परिग्रहः। न चानिमित्तावेतौ युक्तौ, सर्वत्राविशेषेण सर्वदा तयोर्वृत्तिप्रसङ्गात्। न चाविभागेन तयोः प्रवृत्तिरस्ति। तस्मात्सन्ति द्रव्यादय इति परः। प्रयोगः—ये परस्परमसङ्कीर्णप्रवृत्तयस्ते सनिमित्ताः, यथा श्रोत्रादिप्रत्ययाः, असङ्कीर्णप्रवृत्तयश्च दण्डीत्यादिशब्दप्रत्यया इति स्वभावहेतुः। अनिमित्तत्वे सर्वत्राविशेषेण प्रवृत्तिप्रसङ्गो बाधकं प्रमाणम्॥ ८६७॥ ८६८॥

उच्यत इत्यादिना प्रतिविधत्ते।

**उच्यते विषयोऽमीषां धीध्वनीनां न कश्चन।**
**अन्तर्मात्रानिविष्टं तु बीजमेषां निबन्धनम्॥ ८६९॥**

तत्र यदि मुख्यतो बाह्येन विषयभूतेन सनिमित्तत्वमेषां साधयितुमिष्टं तदाऽनैकान्तिकता हेतोः साध्यविपर्यये बाधकप्रमाणाभावात्। अथ येन केनचिन्निमित्तेन सनिमित्तत्वमिष्यते तदा सिद्धसाध्यता। तथा ह्यस्माभिरिष्यत एवैषामन्तर्जल्पवासनाप्रबोधो निमित्तम्, न तु विषयभूतं, भ्रान्तत्वेन पूर्वस्य शाब्दप्रत्ययस्य निर्विषयत्वात्। **अन्तर्मात्रानिविष्ट**मिति। विज्ञानसन्निविष्टं, वासनेति यावत्॥ ८६९॥

एतदेवागमेन संस्पन्दयन्नाह—**यस्य यस्ये**त्यादि।

**यस्य यस्य हि शब्दस्य यो यो विषय उच्यते।**
**स स (संविद्य)ते नैव वस्तूनां सा हि धर्मता॥ ८७०॥**

**यो यो विषय** इति। स्वलक्षणसामान्यादिः। सा हि धर्मतेति। सा—प्रकृतिः, सर्ववाक्पथातीतत्वं वस्तूनां स्वभाव इति यावत्। यथोक्तम्—"येन येन हि नाम्ना वै यो यो धर्मोऽभिलप्यते। न स संविद्यते तत्र धर्माणां सा हि धर्मते"ति॥ ८७०॥

अथशब्दप्रत्ययस्य भ्रान्तत्वाविषयत्वयोः किं प्रमाणमिति चेत्, उक्तमत्र प्रमाणमस्माभिर्यद्भिन्नेष्वभेदाध्यवसायेन प्रवृत्तेः सर्व एवायं शाब्दप्रत्ययो भ्रान्त इति। तथाहि—योऽतस्मिंस्तदिति प्रत्ययः स भ्रान्तो यथा मरीचिकायां जलप्रत्ययः, तथा चायं भिन्नेष्वर्थेष्वभेदाध्यवसायी शाब्दप्रत्यय इति स्वभावहेतुः । नच सामान्यं वस्तुभूतं ग्राह्यमस्यास्ति, येनासिद्धता हेतोरिति स्यात्, तस्य पूर्वं विस्तरेण निरस्तत्वात् । भवतु वा सामान्यं, तथापि तस्य भेदेभ्योऽर्थान्तरत्वे भिन्नेष्वभेदाध्यवसायो भ्रान्तिरेव, न ह्यन्येनान्ये समाना युक्तास्तद्वन्तो नाम स्युः । अनर्थान्तरत्वेऽपि सामान्यस्य सर्वमेव विश्वमेकमेव वस्तु परमार्थत इति तत्र सामान्यस्य प्रत्ययो भ्रान्तिरेव । नह्येकवस्तुविषयः सामान्यप्रत्ययः, भेदग्रहणपुरःसरत्वात्तस्य । भ्रान्तत्वे च सिद्धे निर्विषयत्वमपि सिद्धम् । स्वाकारार्पणेन जनकस्य कस्यचिदर्थस्यालम्बनलक्षणप्राप्तस्याभावात् । अथवा—अन्यथा निर्विषयत्वं साध्यते (यत्रैव हि कृतसमया ध्वनयः, स एव तेषामर्थो युक्तो नान्योऽतिप्रसङ्गात् । न च क्वचिद्वस्तुन्येषां परमार्थतः समयः समस्तीत्यतो निर्विषया धीध्वनयः)। प्रयोगः—ये यत्र भावतः कृतसमया न भवन्ति, न ते परमार्थतस्तमभिदधति, यथा सास्नादिमति पिण्डेऽश्वशब्दोऽकृतसमयः, न भवन्ति च भावतः कृतसमयाः सर्वस्मिन्वस्तुनि सर्वे ध्वनय इति व्यापकानुपलब्धेः । कृतसमयत्वेनाभिधायकत्वस्य व्याप्तत्वात्, तस्य चेहाभावः । नचायमसिद्धो हेतुरित्यादर्शयन्नाह—यत इत्यादि ।

**यतः स्वलक्षणं जातिस्तद्योगो जातिमांस्तथा ।**
**बुद्ध्याकारो न शब्दार्थे घटामञ्चति तत्त्वतः ॥ ८७१ ॥**

(तथाहि गृहीतसमयं वस्तु शब्दार्थत्वेन व्यवस्थाप्यमानं कदाचित्स्वलक्षणं वा व्यवस्थाप्यते, जातिर्वा, तद्योगो वा) तया—जात्या, योगः—सम्बन्धः, यद्वा जातिमान्, पदार्थबुद्धेर्वा आकार, इति विकल्पाः ।(तत्र सर्वेष्वेव समयासम्भवान्न युक्तं शब्दार्थत्वम्)। तत्त्वत इत्यनेन सांवृतस्य शब्दार्थस्याप्रतिषेधं दर्शयति । तेन स्ववचनव्याघातो न भवति । अन्यथा हि प्रतिज्ञायाः स्ववचनविरोधः स्यात् । तथा ह्येतान्स्वलक्षणादीन्शब्देनाप्रतिपाद्य न शक्यमशब्दार्थत्वमेषां प्रतिपादयितुम् । तत्प्रतिपिपादयिषया च शब्देन स्वलक्षणादीनुपदर्शयता शब्दार्थत्वमेषामभ्युपेतं स्यात् । पुनश्च तदेव प्रतिज्ञया प्रतिषिद्धमिति स्ववचनव्याघातः । एतेन यदुक्तमुद्योतकरेण "अवाचकत्वे श-

ब्दानां प्रतिज्ञाहेत्वोर्व्याघात" इति तदपि प्रत्युक्तं भवति, नहि सर्वथा शब्दार्थापवादोऽस्माभिः क्रियते, तस्यागोपालमपि प्रतीतत्वात् । किन्तु तात्त्विकत्वं धर्मो यः परैस्तत्रारोप्यते तस्य निषेधः क्रियते । न तु धर्मिणः ॥ ८७१ ॥

तत्र स्वलक्षणे तावत्सङ्केतसम्भवोपदर्शनादशब्दार्थत्वं प्रतिपादयन्नाह—**तत्रे**त्यादि ।

**तत्र स्वलक्षणं तावन्न शब्दैः प्रतिपाद्यते ।**
**सङ्केतव्यवहाराप्तकालव्याप्तिवियोगतः ॥ ८७२ ॥**

**न शब्दैः प्रतिपाद्यत** इति । तत्र सङ्केताभावादिति भावः । कथं सङ्केताभाव इत्याह—**सङ्केते**त्यादि । सङ्केतव्यवहाराभ्यामाप्तः प्राप्तो यः कालस्तस्य व्याप्तिर्व्यापनं तया वियोगात्कारणात् । न तत्र स्वलक्षणे समय इति शेषः । एतदुक्तं भवति —(समयो हि व्यवहारार्थं क्रियते, न व्यसनितया, तेन यस्यैव सङ्केतव्यवहाराप्तकालव्यापकत्वमस्ति तत्रैव समयो व्यवहर्तॄणां युक्तो नान्यत्र । न च स्वलक्षणस्य सङ्केतव्यवहाराप्तकालव्यापकत्वमस्ति । तस्मान्न तत्र समय इति)॥ ८७२ ॥

कस्मात्पुनः स्वलक्षणस्य सङ्केतव्यवहाराप्तकालव्यापकत्वं न सम्भवतीत्याह—**व्यक्त्यात्मान** इत्यादि ।

**व्यक्त्यात्मानोऽनुयन्त्येते न परस्पररूपतः ।**
**देशकालक्रियाशक्तिप्रतिभासादिभेदतः ॥ ८७३ ॥**
**तस्मात्सङ्केतदृष्टोऽर्थो व्यवहारे न दृश्यते ।**
**नचागृहीतसङ्केतो (बोध्येता)न्य इव ध्वनेः ॥ ८७४ ॥**

(सावलेयादयो हि व्यक्तिभेदा देशादिभेदेन परस्परतोऽत्यन्तव्यावृत्तमूर्त्तयो नैते परस्परमन्वाविशन्ति । तत्रैकत्र कृतसमयस्य पुंसोऽन्यैर्व्यवहारो न स्यात् । प्रतिभासादीत्यादिशब्देन वर्णसंस्थानावस्थाविशेषादिपरिग्रहः । **व्यवहारो न दृश्यत** इति । तेन तत्र समयाभावान्नासिद्धता हेतोरिति भावः । न चाप्यनैकान्तिकत्वमिति दर्शयन्नाह—**नचागृहीते**त्यादि । गृहीतः सङ्केतो यत्र स तथा, न गृहीतसङ्केतोऽगृहीतसङ्केतः । **अन्य इवे**ति । विजातीयार्थवत् । **ध्वने**रिति । शब्दात् । एतदुक्तं भवति । यद्यगृहीतसङ्केतमर्थं शब्दः प्रतिपादयेत्तदा गोशब्दोऽप्यश्वं प्रतिपादयेत् । सङ्केतकरणानर्थक्यं च स्यात् । तस्मादतिप्रसङ्गापत्तिर्बाधकं प्रमाणमिति सिद्धा व्याप्तिः । अयमेव चाकृतसमयत्वादिति हेतुराचार्यदिग्नागेन "न जातिशब्दो भेदानां वाचक

आनन्त्या"दित्यनेन निर्दिष्टः । तथाह्यानन्त्यादित्यनेन समयासम्भव एव दर्शितः । तेन यदुद्योतकरेणोक्तम्—"यदि शब्दान्पक्षयसि, तदाऽनन्त्यादित्यस्य वस्तुधर्मत्वाद्व्यधिकरणो हेतुः । अथ भेदा एव पक्षीक्रियन्ते, तदा नान्वयी न व्यतिरेकी दृष्टान्तोऽस्तीत्यहेतुरानन्त्य"मिति, तत्प्रत्युक्तं भवति । पुनः स एवाह—"यस्य निर्विशेषणा भेदाः शब्दैरभिधीयन्ते, तस्यायं दोषः, अस्माकं तु सत्तादिविशेषणानि द्रव्यगुणकर्माण्यभिधीयन्ते । तथाहि—यत्र यत्र सत्तादिकं सामान्यं पश्यति तत्र तत्र सदादिशब्दं प्रयुङ्क्ते । एकमेव च सत्तादिकं सामान्यम्, अतः सामान्योपलक्षितेषु भेदेषु समयक्रियासम्भवादकारणमानन्त्य"मिति । तदेतदसम्यक्—न हि सत्तादिकं वस्तुभूतं सामान्यं तेभ्यो भिन्नमभिन्नं वाऽस्तीति प्रसाधितमेतत् ।; भवतु वा सामान्यं, तथाऽप्येकस्मिन्भेदेऽनेकसामान्यसम्भवादसाङ्कर्येण सदादिशब्दप्रयोजनं न स्यात् ।/ नच शब्देनानुपदर्श्य सत्तादिकं तेन सत्तादिना भेदान्परमुपलक्षयितुं समयकारः शक्नुयात् । न चाकृतसमयेषु सत्तादिशब्दप्रवृत्तिरस्ति । ततश्चेतरेतराश्रयदोषः स्यात् । अथापि स्यात्—स्वयमेव प्रतिपत्ता व्यवहारोपलम्भादन्वयव्यतिरेकाभ्यां सदादिशब्दैः समयं प्रतिपद्यत इति । तदेतदसम्यक् । न ह्यनन्तरभेदविषयं निःशेषं कश्चिद्व्यवहारमुपलभते । एकदा सत्तादिमत्सु भेदेष्वसकृद्व्यवहारमुपलभ्यादृष्टेष्वपि तज्जातीयेषु ताच्छब्द्यं प्रतिपद्यत इति चेन्न । अदृष्टत्वात् । नह्यदृष्टेष्वतीतानागतभेदभिन्नेष्वनन्तेषु भेदेषु समयः सम्भवत्यतिप्रसङ्गात् । विकल्पबुद्ध्या व्याहृत्य तेषु प्रतिपद्यत एवेति चेत् । एवं तर्हि विकल्पसमारोपितार्थविषय एव शब्दसन्निवेशनं, न परमार्थतो भेदेष्विति प्राप्तम् । तथाह्यतीतानागतयोरसत्त्वेनासन्निहितत्वात्तत्र विकल्पबुद्धिर्भवन्ती निर्विषयैवेति तया व्याहृतमसदेव । ततश्च तत्र भवन्समयः कथं परमार्थतो वस्तुभूतो भवेदित्यलं बहुना । सपक्षे भावान्नापि हेतोर्विरुद्धतेति सिद्धं स्वलक्षणाविषयत्वं शब्दानाम् ॥ ८७३ ॥ ८७४ ॥

स्यादेतद्ये हिमाचलादयो भावास्तेषां स्थिरैकरूपत्वान्न देशकालभेदादिभेदः सम्भवत्यतः सङ्केतव्यवहाराप्तकालव्यापकत्वात्तेषु समयः सम्भवतीत्यतः पक्षैकदेशासिद्धता हेतोरित्यत आह—**हिमाचलादय** इत्यादि ।

**हिमाचलादयो येऽपि देशकालाद्यभेदिनः ।**
**(दृष्टास्तेष्वणवो भिन्नाः) क्षणिकाश्च प्रसाधिताः ॥ ८७५ ॥**

आदिशब्देन मलयादिपरिग्रहः । एते ह्यनेकाणुप्रचयस्वभावाः, अतो नैषामशेषावयवपरिग्रहेण समयः समस्ति । प्रसाधितोदयानन्तरविनाशाश्च । तेनैतेष्वपि समयकालपरिदृष्टस्य स्वभावस्य न व्यवहारकालेष्वन्वयोऽस्तीति नासिद्धता हेतोः ॥८७५॥

एवं तावत्स्वलक्षणे व्यवहारानुपपत्तेः समयवैयर्थ्यप्रसङ्गान्न समयः सम्भवतीति प्रतिपादितम् । साम्प्रतमशक्यक्रियत्वादेव न सम्भवतीति प्रतिपादयन्नाह—**अशक्य**मित्यादि ।

**अशक्यं समय(स्यास्य जातेऽजाते च कल्पनम् ।)**
**नाजाते समयो युक्तो भाविकोऽश्वविषाणवत् ॥ ८७६ ॥**
**उप(नापि?)जाते गृहीता(नां पूर्वं) वाचामनुस्मृतौ ।**
**क्रियते समयस्तत्र चिरातीते(कथं नु तत्) ॥ ८७७ ॥**

सर्व एव भावाः पूर्वं प्रसाधितोदयानन्तरापवर्गास्तेषु समयः क्रियमाणः कदाचिदनुत्पन्नेषु वा क्रियेत, उत्पन्नेषु वा । तत्र न तावदनुत्पन्नेषु परमार्थेन समयो युक्तः, असतः सर्वोपाख्याविरहलक्षणत्वेनाधारत्वानुपपत्तेः । भाविकग्रहणं सांवृतनिषेधार्थम् । तेनाजातेऽपि पुत्रादौ समयदर्शनान्न दृष्टविरोधः, तस्य विकल्पनिर्मितार्थविषयत्वेनाभाविकत्वात् । **अश्वविषाणव**दिति । सप्तम्यन्ताद्वतिः । नाप्युत्पन्ने समयो युक्तः, तथाहि—तस्मिन्ननुभवोत्पत्तौ सत्यां तत्पूर्वके च नामभेदस्मरणे सति समयः कार्यो नान्यथाऽतिप्रसङ्गात् । ततश्च नामभेदस्मरणकाले क्षणध्वंसितया चिरनिरुद्धं स्वलक्षणमिति, नाजातवज्जातेऽपि भाविकः समयः समस्ति, समयक्रियाकाले द्वयोरप्यसन्निहितत्वात् । तथाह्यनुभवावस्थायामपि तावत्तत्कारणतया स्वलक्षणं क्षणिकं न सन्निहितसत्ताकं भवति । किं पुनरनुभवोत्तरकालभाविनामभेदाभोगस्मरणोत्पादकाले भविष्यति ॥ ८७६ ॥ ८७७ ॥

अथापि स्यात्तज्जातीये तत्सामर्थ्यबलोपजाते समयक्रियाकालभाविनि क्षणे समयः करिष्यत इति, अत आह—**यश्चापी**त्यादि ।

**यश्चापि (तत्सजातीयस्तद्ब)लेन तदापरः ।**
**न तत्र समयाभोगः सादृश्यं च विकल्पितम् ॥ ८७८ ॥**

यद्यपि समयक्रियाकाले सन्निहितं क्षणान्तरमस्ति, तथापि तत्र समयाभोगासम्भवान्न समयो युक्तः, न ह्यश्वमुपलभ्य तन्नामस्मरणोपक्रमपूर्वकं समयं कुर्वाणस्तत्काल-

सन्निहिते गवादावाभोगाविषयीकृतेऽश्व इति समयं समयकृत्कश्चित्करोति । अथापि स्यात्—सर्वेषां स्वलक्षणक्षणानां सादृश्यमस्ति तेनैकत्वमध्यवसाय समयः करिष्यत इत्याह—**सादृश्यं च विकल्पित**मिति । विकल्पबुद्धिसमारोपितं हि सादृश्यं, तस्य च ध्वनिभिः प्रतिपादने सति स्वलक्षणमवाच्यमेव स्यात् । तदेवं न स्वलक्षणे समयः सम्भवति । नापि शब्दस्वलक्षणस्य, तथाहि समयकारः स्मृत्युपस्थापितमेव नामभेदमर्थे योजयति । न च स्मृतिर्भावतोऽनुभूतमेवाभिलापमुपस्थापयितुं शक्नोति, तस्य चिरनिरुद्धत्वात् । यच्चोच्चारयति तस्य पूर्वमननुभूतत्वान्न तत्र स्मृतिः, नचाविषयीकृतस्तया समुपस्थापयितुं शक्यः । अतः स्मृत्युपस्थापितमनुसन्धीयमानं विकल्पनिर्मितत्वेनास्वलक्षणमेवेति न स्वलक्षणस्य समयः । तस्माद्व्यपदेश्यं स्वलक्षणमिति सिद्धम् ॥ ८७८ ॥

अत्रैव स्वलक्षणावाच्यत्वसिद्धौ प्रमाणान्तरमाह—**उष्णादी**त्यादि ।

**(उष्णादिप्रतिपत्तिर्या) नामादिध्वनिभाविनी ।**
**विस्पष्टा(भासते नैषा) तदर्थैन्द्रियबुद्धिवत् ॥ ८७९ ॥**

यथा ह्युष्णाद्यर्थविषयेन्द्रियबुद्धिः स्फुटप्रतिभासा वेद्यते न तथोष्णादिशब्दभाविनी, न ह्युपहतनयनरसनघ्राणादयो मातुलिङ्गादिशब्दश्रवणात्तद्रूपरसाद्यनुभाविनो भवन्ति यथाऽनुपहतनयनादय इन्द्रियधियाऽनुभवन्तः । यथोक्तम्—"अन्यथैवाग्निसंबन्धाद्दाहं दग्धोऽभिमन्यते । अन्यथा दाहशब्देन दाहार्थः संप्रकाश्यते ॥" इति । **तदर्थैन्द्रियबुद्धिवदि**ति वैधर्म्योदाहरणम् । तदर्था चासाविन्द्रियबुद्धिश्चेति विग्रहः ॥ ८७९ ॥

यदि नाम सा तथा न भवति, तथापि किमिति शब्दस्य स्वलक्षणमर्थो न भवतीत्याह—**न स तस्ये**त्यादि ।

**न स तस्य च शब्दस्य युक्तो योगो न तत्कृते ।**
**प्रत्यये सति भात्यर्थो रूपबोधे तथा रसः ॥ ८८० ॥**

प्रयोगः—यो हि तत्कृते प्रत्यये न प्रतिभासते न स तस्यार्थः, यथा रूपजनिते प्रत्यये रसः, न प्रतिभासते च शाब्दे प्रत्यये स्वलक्षणमिति व्यापकानुपलब्धिः । अत्र चातिप्रसङ्गो बाधकं प्रमाणम् । तथाहि—शब्दस्य तद्विषयज्ञानजनकत्वमेव तद्वाचकत्वमुच्यते नान्यत्, नच यद्विज्ञानं यदाकारशून्यं तत्तद्विषयं युक्तमतिप्रसङ्गात् ।

नचैकस्य वस्तुनो रूपद्वयमस्ति स्पष्टास्पष्टं, येनास्पष्टं वस्तुगतमेव रूपं शब्दैरभिधीयत इति स्यात्। एकस्य द्वित्वविरोधात्, भिन्नसमयस्थायिनां च परस्परविरुद्धस्वभावप्रतिपादनात्॥ ८८०॥

नैयायिकास्तु ब्रुवते "व्यक्त्याकृतिजातयस्तु पदार्थ" इति। पदस्यार्थः पदार्थः, शब्दार्थ इति यावत्। तत्र व्यक्तिशब्देन द्रव्यगुणविशेषकर्माण्यभिधीयन्ते। तथाच सूत्रं "व्यक्तिर्गुणविशेषाश्रयो मूर्त्ति"रिति। अस्यार्थो वार्त्तिककारमतेन तावदुच्यते —विशेष्यत इति विशेषः, गुणेभ्यो विशेषो गुणविशेषः, कर्माभिधीयते। द्वितीयश्चात्र गुणविशेषशब्द एकशेषं कृत्वा निर्दिष्टः, तेन गुणपदार्थो गृह्यते। गुणाश्च ते विशेषाश्चेति गुणविशेषाः, विशेषग्रहणमाकृतिनिरासार्थम्। तथा ह्याकृतिः संयोगविशेषः, स्वस्वभावात्, संयोगश्च गुणपदार्थान्तर्गतः, ततश्चासति विशेषग्रहणे आकृतेरपि ग्रहणं स्यात्। नच तस्या व्यक्तावन्तर्भाव इष्यते, पृथक्शब्देन तस्या उपादानात्। आश्रयशब्देन द्रव्यमभिधीयते, तेषां गुणविशेषाणामाश्रयस्तदाश्रयो द्रव्यमित्यर्थः। सूत्रे तच्छब्दलोपं कृत्वा निर्देशः कृतः। एवं विग्रहः कर्त्तव्यः—गुणविशेषाश्च गुणविशेषाश्चेति गुणविशेषाः, गुणविशेषाश्च तदाश्रयश्चेति गुणविशेषाश्रयः, समाहारद्वन्द्वश्चायम्, लोकाश्रयत्वाल्लिङ्गस्येति नपुंसकलिङ्गानिर्देशः। तेनायमर्थो भवति—योऽयं गुणविशेषाश्रयः सा व्यक्तिश्चोच्यते मूर्त्तिश्चेति। तत्र यदा द्रव्ये मूर्त्तिशब्दस्तदाऽधिकरणसाधनो द्रष्टव्यः, मूर्च्छन्त्यस्मिन्नवयवा इति मूर्त्तिः। यदा तु रूपादिषु तदा कर्तृसाधनः, मूर्च्छन्ति द्रव्ये समवयन्तीति रूपादयो मूर्त्तिः। व्यक्तिशब्दस्तु द्रव्ये कर्मसाधनो रूपादिषु करणसाधनः। भाष्यकारमतेन तु यथाश्रुति सूत्रार्थः—गुणविशेषाणामाश्रयो द्रव्यमेव व्यक्तिर्मूर्त्तिश्चेति तस्येष्टम्। यथोक्तम् —"गुणविशेषाणां रूपरसगन्धस्पर्शानां गुरुत्वद्रवत्वघनत्वसंस्काराणामव्यापिनश्च परिमाणविशेषस्याश्रयो यथासम्भवं तद्द्रव्यं मूर्त्तिर्मूर्च्छितावयवत्वा"दिति। आकृतिशब्देन प्राण्यवयवानां पाण्यादीनां तदवयवानां चाङ्गुल्यादीनां संयोगोऽभिधीयते। तथाच सूत्रम्—"आकृतिर्जातिलिङ्गाख्या" इति। अस्य भाष्यम्—"यया जातिर्जातिलिङ्गानि चाख्यायन्ते तामाकृतिं विद्यात्, सा च नान्या सत्त्वावयवानां तदवयवानां च नियताद्व्यूहात्" इति। व्यूहशब्देन संयोगविशेष उच्यते। नियतग्रहणेन कृत्रिमसंयोगनिरासः। तत्र जातिलिङ्गानि प्राण्यवयवाः शिरःपाण्यादयः, तैर्हि गोत्वादिलक्षणा जातिर्लिङ्ग्यते। आकृत्या तु कदाचित्साक्षाज्जातिर्व्यज्यते—यदा

शिरःपाण्यादिसंनिवेशदर्शनाद्गोत्वं व्यज्यते । कदाचिज्जातिलिङ्गानि—यदा विषाणादिभिरवयवैः पृथक्पृथक्स्वावयवसन्निवेशाभिव्यक्तैर्गोत्वादिर्व्यज्यते । तेन जातेस्तल्लिङ्गानां च प्रख्यापिका भवत्याकृतिः । जातिशब्देनाभिन्नाभिधानप्रत्ययप्रसवनिमित्तं सामान्याख्यं वस्तूच्यते । तथाच सूत्रं "समानप्रसवात्मिका जाति"रिति समानप्रत्ययोत्पत्तिकारणं जातिरित्यर्थः । तत्र व्यक्त्याकृत्योरेतेनैव स्वलक्षणस्य शब्दार्थत्वनिराकरणेन शब्दार्थत्वनिराकरणं बोद्धव्यमिति दर्शयन्नाह—**एतेनैवे**त्यादि ।

**एतेनैव प्रकारेण व्यक्त्याकृत्योर्निराकृतिः ।**
**स्वलक्षणात्मतैवेष्टा तयोरपि यतः परैः ॥ ८८१ ॥**

जातेस्तु पश्चान्निराकरणं भविष्यतीत्यभिप्रायः । **निराकृति**रिति । शब्दार्थत्वेनेति शेषः । कस्मादित्याह—**स्वलक्षणात्मतैवे**त्यादि । **तयो**रिति । व्यक्त्याकृत्योः । तेन यथा स्वलक्षणस्याकृतसमयत्वादशब्दार्थत्वं तथा तयोरपीत्यतोऽकृतसमयत्वादित्यस्य हेतोर्नासिद्धिर्नाप्यनैकान्तिकतेति भावः ॥ ८८१ ॥

किंच—व्यक्तिर्द्रव्यगुणविशेषकर्मलक्षणा, आकृतिश्च संयोगात्मिका, एते च द्रव्यादयः प्रागेव प्रतिषिद्धा इत्यतोऽपि शब्दार्थत्वमनयोरसद्भावान्न युक्तमिति दर्शयति—**द्रव्यादी**त्यादि ।

**द्रव्यादियोगयोः प्राक् प्रतिषेधाभिधानतः ।**
**न तात्त्विकी तयोर्युक्ता शब्दार्थत्वव्यवस्थितिः ॥ ८८२ ॥**

एवं तावत्स्वलक्षणे समयासम्भवं प्रतिपाद्य जात्यादिषु त्रिषु समयासम्भवं प्रतिपादयन्नाह—**जातिसम्बन्धयो**रित्यादि ।

**जातिसम्बन्धयोः पूर्वं व्यासतः प्रतिषेधनात् ।**
**नानन्तराः प्रकल्प्यन्ते शब्दार्थास्त्रिविधाः परे ॥ ८८३ ॥**

**अनन्तरा** इति । स्वलक्षणमुक्त्वा जातिस्तद्योगो जातिमानिति जातितद्योगयोरभावात्तद्वतोऽप्यसम्भव एव, तत्कृतत्वात्तद्व्यपदेशस्य, तद्वतश्च स्वलक्षणात्मकत्वात् । तत्पक्षभावी दोषः समान एवेति भावः । जातिः पदार्थ इति वाजा (का ?) त्यायनः, द्रव्यमिति व्याडिः, उभयं पाणिनिः । तदप्यनेनैव निरस्तम्, जातेरयोगाद्द्रव्यस्य च स्वलक्षणात्मकत्वात्तत्पक्षभाविदोषानिवृत्तेः ॥ ८८३ ॥

उपसंहरन्नाह—**तद्व्यक्त्याकृती**त्यादि ।

**तद्व्यक्त्याकृतिजातीनां पदार्थत्वं यदुच्यते ।**
**तदसम्भवि सर्वासामपि नीरूपता यतः ॥ ८८४ ॥**

तदिति । तस्मात् । नीरूपतेति । निःस्वभावता ॥ ८८४ ॥

**बुद्ध्याकारश्च बुद्धिस्थो नार्थबुद्ध्यन्तरानुगः ।**
**नाभिप्रेतार्थकारी च सोऽपि वाच्यो न तत्त्वतः ॥ ८८५ ॥**

बुद्ध्याकारो हि तादात्म्येन बुद्धावेवावस्थित इति नासौ तद्बुद्धिस्वरूपवत्प्रतिपाद्यमर्थं बुद्ध्यन्तरं वाऽनुगच्छति, ततश्च सङ्केतव्यवहाराप्तकालाव्यापकत्वात्स्वलक्षणवन्न तत्रापि समयः सम्भवति, भवतु वा तस्य व्यवहारकालान्वयस्तथापि न तत्र समयो व्यवहर्तॄणां युक्तः । तथा हि—अपि नामेतः शब्दादर्थक्रियार्थी पुमानर्थक्रियाक्षमानर्थान्विज्ञाय प्रवर्त्तिष्यते तेष्विति मन्यमानैर्व्यवहर्तृभिरभिधायकानि योज्यन्ते, न व्यसनितया, न चासौ विकल्पबुद्ध्याकारोऽभिप्रेतं शीतापनोदादि कार्यं तदर्थिनः सम्पादयितुमलम्, तदनुभवोत्पत्तावपि तदभावात् । तेन तत्रापि समयाभावान्नासिद्धोऽकृतसमयत्वादिति हेतुः ॥ ८८५ ॥

स्यादेतत्—अस्त्यर्थादयोऽपरे शब्दार्थाः सन्ति । ततश्च तत्र समयसम्भवादसिद्धतैव हेतोरित्यत आह—**येऽन्येऽन्यथैवे**त्यादि ।

**येऽन्येऽन्यथैव शब्दार्थमस्त्यर्थादीन्प्रचक्षते ।**
**निरस्ता एव तेऽप्येतैस्तथापि पुनरुच्यते ॥ ८८६ ॥**

एतैरिति । स्वलक्षणादिशब्दार्थप्रतिषेधैः । तेषां स्वलक्षणादिष्वेवान्तर्भावादिति भावः ॥ ८८६ ॥

के पुनस्तेऽस्त्यर्थादय इति दर्शयन्नाह—**अस्त्यर्थ** इत्यादि ।

**अस्त्यर्थः सर्वशब्दानामिति प्रत्याय्यलक्षणम् ।**
**अपूर्वदेवतास्वर्गैः सममाहुर्गवादिषु ॥ ८८७ ॥**

इतिशब्दो भिन्नक्रमः अस्त्यर्थ इत्यस्यानन्तरं सम्बध्यते । तेनायमर्थो भवति—अस्त्यर्थ इति यदेतत्प्रतीयते, तत्सर्वशब्दानां प्रत्याय्यस्याभिधेयस्य लक्षणम् । शब्दार्थस्य लक्षणमिति यावत् । तेन गवादिष्वर्थेषु विषयभूतेषु यद्गवादिशब्दप्रत्याय्यं तदपूर्वदेवतास्वर्गैस्तुल्यमित्याहुः । अपूर्वादिशब्दार्थैस्तत्तुल्यमित्येवमाहुरित्यर्थः । यथैव ह्यपूर्वादिशब्दा नार्थाकारविशेषं बुद्धिषु सन्निवेशयन्ति, केवलं तत्रैतावत्प्रतीयते—सन्ति

केऽप्यर्था येष्वपूर्वादयः शब्दाः प्रयुज्यन्त इति, तथा दृष्टार्थेष्वपि गवादिशब्देषु तुल्यम् । यतस्तेभ्योऽप्येवं प्रतीयते—अस्ति कोऽप्यर्थो गवादिशब्दाभिधेयो गोत्वादिसामान्यसम्बद्धो वेति । यस्तु तत्राकारविशेषपरिग्रहः केषांचिदुपजायते, स तेषां सिद्धान्तबलात् ॥ ८८७ ॥

आदिशब्देनोपात्ताञ्शब्दार्थान्दर्शयन्नाह—**समुदाय** इत्यादि ।

**समुदायोऽभिधेयो वाऽप्यविकल्पसमुच्चयः ।**
**असत्यो वाऽपि संसर्गः शब्दार्थः कैश्चिदुच्यते ॥ ८८८ ॥**

केचिद्ब्राह्मणादिशब्दैस्तपोजातिश्रुतादिसमुदायो विना विकल्पसमुच्चयाभ्यामभिधीयत इत्याहुर्यथा वनादिशब्दैर्धवादय इति । तथाहि—वनमित्युक्ते धवो वा खदिरो वा पलाशो वेति न विकल्पेन प्रतीतिर्भवति, नापि धवश्च खदिरश्च पलाशश्चेति समुच्चयेन, अपितु सामान्येन प्रतीयन्ते धवादयः । तथा ब्राह्मण इत्युक्ते तपो वा जातिर्वा श्रुतं वा, तपश्च जातिश्च श्रुतं चेति, न प्रतिपत्तिर्भवति । अपि तु साकल्येन सम्बन्ध्यन्तरव्यवच्छिन्नास्तपःप्रभृतयः संहताः प्रतीयन्त इति । तत्र बहुष्वनियतैकसमुदायिभेदावधारणं विकल्पः, एकत्र युगपदभिसम्बध्यमानस्य नियतस्यानेकस्य स्वरूपभेदावधारणं समुच्चयः । अविद्यमानौ विकल्पसमुच्चयौ यस्य स तथोक्तः । अन्ये तु द्रव्यत्वादिभिरनिर्द्धारितरूपैर्यः सम्बन्धो द्रव्यादीनां स शब्दार्थः, स च सम्बन्धिनां शब्दार्थत्वेनासत्यत्वादसत्य इत्युच्यते । यद्वा—तपःश्रुतादीनां मेचकवर्णवदैक्येन भासनादेषामेव परस्परमसत्यः संसर्गः । तथाह्येते प्रत्येकं समुदिता वा न स्वेन रूपेणोपलभ्यन्ते, किन्त्वलातचक्रवदेषां समूहः स्वरूपमुत्क्रम्यावभासत इति ॥८८८॥

**असत्योपाधि यत्सत्यं तद्वा शब्दनिबन्धनम् ।**
**शब्दो वाऽप्यभिजल्पत्वमागतो याति वाच्यताम् ॥८८९॥**

अन्ये त्वाहुः—यदसत्योपाधि सत्यं स शब्दार्थ इति । तत्र शब्दार्थत्वेनासत्या उपाधयो विशेषा वलयाङ्गुलीयकादयो यस्य सत्यस्य, सर्वभेदानुयायिनः सुवर्णादिसामान्यात्मनः, तत्सत्यमसत्योपाधि । **शब्दनिबन्धन**मिति । शब्दप्रवृत्तिनिमित्तमभिधेयमित्यर्थः । अन्ये तु ब्रुवते—शब्द एवाभिजल्पत्वमागतः शब्दार्थ इति ॥ ८८९ ॥

तत्र कोऽसावभिजल्प इत्याह—**सोऽय**मित्यादि ।

**सोऽयमित्यभिसम्बन्धाद्रूपमेकीकृतं यदा ।**
**शब्दस्यार्थेन तं शब्दमभिजल्पं प्रचक्षते ॥ ८९० ॥**

शब्द एवार्थ इत्येवं शब्देऽर्थस्य निवेशनं सोऽयमित्यभिसम्बन्धः, तस्मात्कारणाद्यदा शब्दस्यार्थेन सहैकीकृतं रूपं भवति तं स्वीकृतार्थाकारं शब्दमभिजल्प्यमित्याहुः ॥ ८९० ॥

अन्ये तु बुद्ध्यारूढमेवाकारं बाह्यवस्तुविषयं बाह्यवस्तुतया गृहीतं बुद्धिरूपत्वेनाविर्भावितं शब्दार्थमाहुः—तद्दर्शयति—**यो वे**त्यादि ।

**यो वाऽर्थो बुद्धिविषयो बाह्यवस्तुनिबन्धनः ।**
**स बाह्यं वस्त्विति ज्ञातः शब्दार्थः कैश्चिदिष्यते ॥ ८९१ ॥**

**बुद्धिविषय** इति । बुद्धौ विपरिवर्त्तमानः, बुद्धिस्थ इति यावत् । **बाह्यवस्तुनिबन्धन** इति । सदसद्वाह्यं वस्तु निबन्धनमक्षरचिह्नस्थानीयं स्वरूपमुपदर्शयितुं प्रक्रम्यते यस्य, स बाह्यवस्तुनिबन्धनः । **बाह्यं वस्त्वितिज्ञात** इति । बुद्धिरूपत्वेनाविर्भावितो बाह्यतयाध्यवसित इत्यर्थः । तथाहि—यावद्बुद्धिरूपमर्थेष्वप्रत्यस्तं बुद्धिरूपमेवेति तत्त्वभावनया गृह्यते, तावत्तस्य शब्दार्थत्वं नावसीयते, तत्र क्रियाविशेषसम्बन्धाभावात् । न हि गामानय दधि खादेत्यादिकाः क्रियास्तादृशि बुद्धिरूपे सम्भवन्ति, क्रियायोगसम्भवी चार्थः शब्दैरभिधीयते । अतो बुद्धिरूपतया गृहीतोऽसौ न शब्दार्थः । यदा तु बाह्यवस्तुनि प्रत्यस्तो भवति तदा तस्मिन् प्रतिपत्ता बाह्यतया विपर्यस्तः क्रियासाधनसामर्थ्यं तस्य मन्यत इति भवति शब्दार्थः । ननु चापोहवादिपक्षादस्य को विशेषः? तथाहि—अपोहवादिनाऽपि बुद्ध्याकारो बाह्यरूपतया गृहीतः शब्दार्थ इति भाष्यत एव । यथोक्तम्—"तद्रूपारोपगत्यान्यव्यावृत्त्यधिगतेः पुनः । शब्दार्थोऽर्थः स एवेति वचने न विरुध्यते ॥" इति । नैतदस्ति—अयं हि बुद्ध्याकारवादी बाह्ये वस्तुन्यभ्रान्तं सविषयं द्रव्यादिषु पारमार्थिकेष्वध्यस्तं बुद्ध्याकारं परमार्थतः शब्दार्थमिच्छति । ननु निरालम्बनं भिन्नेष्वभेदाध्यवसायेन प्रवृत्तेर्भ्रान्तमितरेतरभेदनिबन्धनमिच्छति । यदि तु यथाऽस्माभिरुच्यते—"सर्वो मिथ्यावभासोऽयमर्थेष्वेकात्मना ग्रहः । इतरेतरभेदोऽस्य बीजं संज्ञा यदर्थिका ॥" इति । तदा सिद्धसाध्यता । तथा च वक्ष्यति—"इतरेतरभेदोऽस्य बीजं चेत्पक्ष एष नः" इति । न चापोहवादिना परमार्थतः किंचिद्वाच्यं बुद्ध्याकारोऽन्यो वा शब्दानामि-

ष्यते । तथाहि—य एव शाब्दे प्रत्यये व्यवसीयमानतया प्रतिभासते स शब्दार्थः । नच बुद्ध्याकारः शाब्दप्रत्ययेन व्यवसीयते, किं तर्हि? बाह्यमेवार्थक्रियाकारि वस्तु । नचापि तेन बाह्यं परमार्थतो व्यवसीयते, यथातत्त्वमनध्यवसायात्, यथाऽव्यवसायमतत्त्वात् । अतः समारोपित एव शब्दार्थः । यच्च समारोपितं तन्न किंचिदिति न किंचिद्भावतोऽभिधीयते शब्दैः । यत्पुनरुक्तम्—"शब्दार्थोऽर्थः स एवे"ति तत्समारोपितमेवार्थमभिसन्धाय । बुद्ध्याकारवादिना तु बुद्ध्याकारः परमार्थतो वाच्य इष्यत इति महान्विशेषः ॥ ८९१ ॥

अन्ये त्वाहुरभ्यासात्प्रतिभाहेतुः शब्दो न तु बाह्यार्थप्रत्यायक इति (तदेतत्) दर्शयति—अभ्यासादित्यादि ।

**अभ्यासात्प्रतिभाहेतुः सर्वः शब्दः समासतः ।**
**बालानां च तिरश्चां च यथाऽर्थप्रतिपादने ॥ ८९२ ॥**

शब्दस्य क्वचिद्विषये पुनः पुनः प्रवृत्तिदर्शनमभ्यासः । नियतसाधनावच्छिन्नक्रियाप्रतिपत्त्यनुकूला प्रज्ञा प्रतिभा । सा प्रयोगदर्शनावृत्तिसहितेन शब्देन जन्यते । प्रतिवाक्यं प्रतिपुरुषं च सा भिद्यते । स तु तस्या अपरिमाणो भेदः शब्दव्यवहारस्यानन्त्यान्न शक्यते विधातुमित्यत आह—**बालानां च तिरश्चां** चेत्यादि । यथैव ह्यङ्कुशाभिघातादयो हस्त्यादीनामर्थप्रतिपत्तौ क्रियमाणायां प्रतिभाहेतवो भवन्ति । तथा सर्वेऽर्थवत्सम्मता वृक्षादयः शब्दा यथाभ्यासं प्रतिभामात्रोपसंहारहेतवो भवन्ति, न त्वर्थं साक्षात्प्रतिपादयन्ति । अन्यथा हि कथं परस्परपराहताः प्रवचनभेदा उत्पाद्यकथाप्रबन्धाश्च स्वविकल्पोपरचितपदार्थभेदद्योतकाः स्युरिति ॥ ८९२ ॥

तत्रेत्यादिना प्रतिविधत्ते ।

**तत्रास्त्यर्थोऽभिधेयोऽयं किं स्वलक्षणमिष्यते ।**
**जातिर्योगोऽथ यद्वाऽन्य(त्) बुद्धेर्वा प्रतिबिम्बकम् ॥८९३॥**
**एते स्वदोषाः पूर्वोक्ता अस्त्यर्थे केवलेऽपि च ।**
**प्रतिपाद्ये न भेदेन व्यवहारोऽवकल्पते ॥ ८९४ ॥**

यद्यस्त्यर्थः पूर्वोदितस्वलक्षणादिस्वभाव इष्यते । तदा पूर्वोदितदोषप्रसङ्गः । किंचानिर्धारितरूपविशेषत्वादस्त्यर्थस्य तस्मिन्केवले शब्दैः प्रतिपद्यमाने गौर्गवयो गज इत्यादिभेदेन व्यवहारो न स्यात्, तस्य शब्दैरप्रतिपादितत्वात् ॥ ८९३ ॥ ८९४ ॥

गोत्वेत्यादिना परस्योत्तरमाशङ्कते ।

**गोत्वशब्दविशिष्टार्थसत्तामात्रगतेर्भवेत् ।**
**विषाणाकृतिनीलादिभेदाख्यातेस्तु तन्मतम् ॥ ८९५ ॥**

स्यादेतत्—गोत्वशब्दाभ्यां विशिष्टस्यार्थसत्तामात्रस्य सावलेयत्वादिभेदरहितस्य गोशब्दाद्गतेः—प्रतीतेः कारणात् । भेदेन व्यवहारो भविष्यतीति । यद्येवं कथं तर्हि शब्दार्थत्वमस्त्यर्थमात्रस्य मतं यावता गवादिविशेषः प्रतिपाद्योऽस्त्येवेत्याशङ्क्य परः परिहारमाह—**विषाणाकृतीत्यादि** । विषाणादेर्विशेषस्य शब्दादख्यातेरप्रतीतेः कारणात्तदुक्तम्—अस्ति कश्चिदर्थः प्रत्याय्य इति, न तु गोत्वादिगोत्वादिशब्दयोर्विशेषणभूतयोरप्रतीतेरित्यदोषः ॥ ८९५ ॥

**नन्वेव**मित्यादिना प्रतिविधत्ते ।

**नन्वेवं तद्वतोऽर्थस्य भेदानां चाभिधा भवेत् ।**
**तद्भावे तत्र दोषश्च नान्योऽस्त्यर्थश्च दृश्यते ॥ ८९६ ॥**

यदा गोत्वादिना विशिष्टमर्थमात्रमुच्यते इति मतं, तदा तद्वतोऽर्थस्याभिधानमङ्गीकृतं स्यात् । तत्र च जातेस्तत्समवायस्य च निषेधात्तद्वतोऽर्थस्यासम्भव इति पूर्वोक्तो दोषः । किंच—तद्वतोऽर्थस्य स्वलक्षणात्मकत्वादशक्यसमयत्वमव्यवहार्यत्वमस्पष्टावभासप्रसङ्गश्च पूर्ववदापद्यते एव । स्वलक्षणादिव्यतिरेकेणान्य एवास्त्यर्थ इति चेदाह—**नान्योऽस्त्यर्थश्च दृश्यत** इति । स्वलक्षणादिव्यतिरेकेणान्योऽस्त्यर्थो निरूप्यमाणो न बुद्धेर्गोचरतामवतरति ॥ ८९६ ॥

समुदायाभिधानपक्षे दोषमाह—**समुदायाभिधानेऽपी**त्यादि ।

**समुदायाभिधानेऽपि जातिभेदाभिधा स्फुटा ।**
**तपोजातिक्रियादीनां सामस्त्येनाभिधानतः ॥ ८९७ ॥**

समुदायाभिधानपक्षे स्फुटतरमेव जातेर्भेदानां च तपःप्रभृतीनामभिधानमङ्गीकृतमिति प्रत्येकाभिधानपक्षभाविनो दोषाः समुदायाभिधाने सर्वे युगपत्प्राप्नुवन्ति ॥ ८९७ ॥

असत्यो वाऽपीत्यादिपक्षद्वये दोषमाह—**निर्द्धारिते**त्यादि ।

**निर्द्धारितस्वरूपाणां द्रव्यादीनां तु योगतः ।**
**सम्बन्धो यच्च सामान्यं सत्यं तद्वारितं पुरा ॥ ८९८ ॥**
**भेदजात्यादिरूपेण शब्दार्थानुपपत्तितः ।**
**अर्थेनैकीकृतं रूपं न शब्दस्योपपद्यते ॥ ८९९ ॥**

**जल्पो बुद्धिस्थ एवायं बाह्ययोगविभेदतः।**
**ततः को भेद एतस्य त्रुटिपक्षादनन्तरात् ॥ ९०० ॥**
**बुद्ध्याकारोऽपि शब्दार्थः प्रागेव विनिवारितः।**
**ज्ञानादव्यतिरिक्तस्य व्यापकत्ववियोगतः ॥ ९०१ ॥**

पूर्वं षट्पदार्थपरीक्षायां संयोगसमवायलक्षणस्य वारितत्वात्, सामान्यस्य च त्रिगुणात्मकस्य सत्यस्याव्यतिरिक्तस्य साङ्ख्यपरीक्षायां, व्यतिरिक्तस्यापि षट्पदार्थपरीक्षायां निरस्तत्वान्नासत्यसंयोगो नाप्यसत्योपाधिसामान्यं वाच्यम्। अभिजल्पपक्षेऽप्याह—यदि शब्दस्य कश्चिदर्थः सम्भवेत्, तदा तेन सहैकीकरणं भवेत्, यावता स्वलक्षणादिरूपस्य शब्दार्थस्यासम्भवः पूर्वं प्रतिपादितस्तत्कथं तेनैकीकरणं भवेत्। अपिचायमभिजल्पो बुद्धिस्थ एव—तथाहि बाह्ययोः शब्दार्थयोर्भिन्नेन्द्रियग्राह्यत्वादिभ्यो भेदस्य सिद्धेस्तयोरैक्यापादनमयुक्तमेव भाविकम्। अतो बुद्धिस्थयोरेव शब्दार्थयोरेकबुद्धिगतत्वादेकीकरणं युक्तम्। तथाह्युपगृहीताभिधेयाकारस्तिरोभूतशब्दस्वभावो बुद्धौ विपरिवर्त्तमानः शब्दात्मा स्वरूपानुगतमर्थविभागेनान्तःसन्निवेशयन्नभिजल्प उच्यते। स च बुद्धेरात्मगत एवाकारो युक्तो न बाह्यस्तस्यैकान्तेन परस्परं विविक्तस्वभावत्वात्। ततश्च बुद्धिशब्दार्थपक्षादनन्तरोक्तादस्य को भेदः ?—नैव कश्चित्। उभयत्रापि बौद्ध एवार्थः। एतावन्मात्रं तु भिद्यते, शब्दार्थावेकीकृताविति। दोषस्तु समान एव "ज्ञानादव्यतिरिक्तं च कथमर्थान्तरं व्रजे"दिति। तदेव दर्शयति—**बुद्ध्याकारोऽपी**त्यादि ॥ ८९८ ॥ ८९९ ॥ ९०० ॥ ९०१ ॥

प्रतिभापक्षे दोषमाह—

**प्रतिभाऽपि च शब्दार्थो बाह्यार्थविषया यदि।**
**एकात्मनियते बाह्ये विचित्राः प्रतिभाः कथम् ॥ ९०२ ॥**
**अथ निर्विषया एता वासनामात्रभावतः।**
**प्रतिपत्तिः प्रवृत्तिर्वा बाह्यार्थेषु कथं भवेत् ॥ ९०३ ॥**
**बाह्यरूपाधिमोक्षेण स्वाकारे यदि ते मते।**
**शब्दार्थोऽतात्त्विकः प्रासस्तथा भ्रान्त्या प्रवर्त्तनात् ॥ ९०४ ॥**
**निर्बीजा न च सा युक्ता सर्वत्रैव प्रसङ्गतः।**
**इतरेतरभेदोऽस्य बीजं चेत्पक्ष एष नः ॥ ९०५ ॥**

यदि प्रतिभा परमार्थतो बाह्यार्थविषया तदैकत्र वस्तुनि शब्दादौ विरुद्धसमयावस्थायिनां विचित्राः प्रतिभा न प्राप्नुवन्ति, एकस्यानेकस्वभावसम्भवात् । अथ निर्विषयास्तदाऽर्थे प्रवृत्तिप्रतिपत्ती न प्राप्नुतः, अतद्विषयत्वाच्छब्दस्य । अथ स्वप्रतिभासेऽनर्थेऽर्थाध्यवसायेन भ्रान्त्या ते प्रवृत्तिप्रतिपत्ती भवतस्तदा भ्रान्तः शब्दार्थः प्राप्नोति । तस्याश्च भ्रान्तेर्बीजं कारणं वक्तव्यम्, अन्यथा निर्बीजा भ्रान्तिर्भवन्ती सर्वतः सर्वदैव स्यात् । अथ भावानां परस्परतो भेद एव बीजमस्या अभ्युपगम्यते, तदाऽस्मत्पक्षमेव भवान् साधयतीति सिद्धसाध्यता ॥ १०२ ॥ १०३ ॥ १०४ ॥ ॥ १०५ ॥

साम्प्रतं सर्वेष्वेव पक्षेषु समानं दूषणमाह—यदि वेत्यादि ।

**यदि वा सर्वमेवेदं क्षणिकं स्यान्न वा तथा ।**
**क्षणिकत्वेऽन्वयायोगः क्रमिज्ञानं च नान्यथा ॥ १०६ ॥**

सर्वमेतत्स्वलक्षणजात्यादि क्षणिकं वा स्यादक्षणिकं वा? तत्राद्ये पक्षे सङ्केतकालदृष्टस्य व्यवहारकालेऽन्वयासम्भवान्न तत्र समयः । अक्षणिकपक्षे च नाक्रमात् क्रमिणो भाव इति शब्दार्थविषयस्य क्रमिज्ञानस्याभावप्रसङ्गः । **अन्यथेति** । अक्षणिकत्वे ॥ १०६ ॥

अन्ये त्वाहुः—अर्थविवक्षां शब्दोऽनुमापयतीति । यथोक्तम्—"अनुमानं विवक्षायाः शब्दादन्यन्न विद्यत" इति । अत्राह—एतेनैवेत्यादि ।

**एतेनैव विवक्षाऽपि शब्दगम्या निराकृता ।**
**शब्दार्थासम्भवे हीत्थं क्व विवक्षा क्व वा श्रुतिः ॥ १०७ ॥**

यदि पारमार्थतो विवक्षा पारमार्थिकशब्दार्थविषयेष्यते, तदसिद्धम्, स्वलक्षणादेः शब्दार्थस्य कस्यचिदसम्भवात् । अतो न क्वचिदर्थे परमार्थतो विवक्षाऽस्ति, अन्वयिनोऽर्थस्याभावात् । नापि तत्प्रतिपादकः शब्दोऽस्ति, तदाह—**क्व वा श्रुतिरिति** । श्रुतिः—शब्दः । विवक्षायां च प्रतिपाद्यायां श्रुतेः शब्दाद्बहिरर्थे प्रवृत्तिर्न प्राप्नोति । तस्याचोदितत्वादर्थान्तरवत् ॥ १०७ ॥

अथ मतं यो विवक्षाविपरिवर्त्ती रूपादिरर्थो यश्च बाह्यस्तयोः सारूप्यमस्त्यतः सारूप्यादचोदिते बाह्ये प्रवृत्तिर्भविष्यति यमलकवदित्यत आह—सारूप्यादिति ।

**( सारूप्याच ) श्रुतेर्वृत्तिः कथं वा (ऽशब्द)चोदिते ।**
**सारूप्या (द्यमलकव) न्नामाद्येतेन दूषितम् ॥ १०८ ॥**

एवं सति सर्वदा बाह्ये प्रवृत्तिर्न प्राप्नोति, कदाचिद्विवक्षापरिवर्त्तिन्यपि चोदिते प्रवृत्तिर्भवेत् । यथा यमलकयोरिव । योऽपि वैभाषिकः शब्दविषयं नामाख्यं निमित्ताख्यं चार्थचिह्नरूपं विप्रयुक्तं संस्कारमिच्छति, तदप्येतेनैव दूषितं द्रष्टव्यम् । तथाहि—तन्नामादि यदि क्षणिकं तदाऽन्वयायोगः, अक्षणिकत्वे क्रमिज्ञानानुपपत्तिः, बाह्ये च प्रवृत्त्यभावप्रसङ्गः, सारूप्या(च्च) न सर्वदेति सर्वं यथोक्तं दूषणमखण्डमेवावतरति । अथवा—एतेनेति । यथासम्भवं स्वलक्षणादिदूषणेन । तथाह्यत्राप्येवं वक्तव्यम्—"अशक्यसमयो ह्यात्मा नामादीनामनन्यभाक् । तथा मतो न वाच्यत्वं कथंचिदुपपद्यते ॥" इति ॥ ९०८ ॥

यदुक्तं विवक्षासमारूढार्थद्योतकत्वे शब्दानां बाह्ये प्रवृत्तिर्न प्राप्नोति । अत्र परस्योत्तरमाशङ्कयन्नाह—विवक्षेत्यादि ।

**विवक्षानु(मितिश्लिष्टमाकारं बाह्यभावतः ।**
**व्यवस्यतोः प्रवृत्ति )श्चेत्तदेवास्मन्मतं पुनः ॥ ९०९ ॥**

विवक्षा च वक्तृसन्तानवर्त्तिनी, तस्या एव विवक्षाया अनुमितिश्च श्रोतृसन्तानगतेति विवक्षानुमिती ताभ्यां श्लिष्टः—सम्बद्धः, तत्प्रतिभासीत्यर्थः । तमाकारं बाह्यतया व्यवस्यतोर्वक्तृश्रोत्रोरत्र बाह्ये प्रवृत्तिर्भविष्यति । एतदुक्तं भवति—परमार्थतः स्वप्रतिभासानुभवेऽपि वक्तुरेवमध्यवसायो भवति, मयाऽसौ बाह्य एवार्थः प्रतिपाद्यते । श्रोतुरप्येवं भवति, ममायं बाह्यमेव प्रतिपादयतीति । अतस्तैमिरिकद्वयद्विचन्द्रदर्शनवदयं सर्वः शाब्दो व्यवहार इति । यद्येवमस्मत्पक्ष एव पतितोऽसीति सिद्धसाध्यता । पूर्वं प्रतिभाद्वारेणागतत्वादित्यतः पुनरित्याह । तदेवमकृतसमयत्वादित्यस्य हेतोर्नासिद्धतेति प्रतिपादितम् । अनैकान्तिकत्वविरुद्धत्वे तु पूर्वमेव निरस्ते । तस्मात्सिद्धा यथोक्तापोहकृतः शब्दा इति ॥ ९०९ ॥

अत्र परोऽपोहशब्दश्रवणाच्छलितमतिरविदितविवक्षितापोहस्वरूपः प्रतिज्ञायाः प्रतीत्यादिविरोधमुत्पादयन्नाह—**नन्वन्यापोहकृच्छब्दो युष्माभिः कथमुच्यत** इति ।

**नन्वन्यापोहकृच्छब्दो युष्माभिः कथमुच्यते ।**
**निषेधमात्रं नैवेह प्रतिभासेऽवगम्यते ॥ ९१० ॥**
**किंतु गौर्गवयो हस्ती वृक्षश्चे(त्या)दिशब्दतः ।**
**विधिरूपावसायेन मतिः शाब्दी प्रवर्त्तते ॥ ९११ ॥**

अन्यापोहकृच्छब्द इत्यत्रेतिशब्दोऽध्याहार्यः । अन्यापोहकृच्छब्द इत्येवं कथमभिधीयत इत्यर्थः । कस्मान्नाभिधेयमित्याह—**निषेधमात्रमित्यादि** । निषेधमात्रमेव किलान्यापोहोऽभिप्रेतः, नचेह शाब्दे प्रतिभासे निषेधमात्रं गम्यते । किं तर्हि वस्तुरूपाध्यवसायेनैव शाब्दी धीः प्रवर्त्तमाना समालक्ष्यते । नच शाब्दे ज्ञाने यो न प्रत्यवभासते स शब्दार्थो युक्तोऽतिप्रसङ्गात् । तस्मात्प्रतीतिविरोधः प्रतिज्ञायाः ॥ ९१० ॥ ९११ ॥

**यदि गौरित्यादिना** श्लोकत्रयेण भामहस्य मतेन प्रतीत्यादिबाधामुद्भावयति ।

**यदि गौ( रितिशब्दोऽयं भवेद ) न्यनिराकृतौ ।**
**जनको गवि गोबुद्धेर्मृग्यतामपरो ध्वनिः ॥ ९१२ ॥**

यदि गोशब्दोऽन्यव्यवच्छेदप्रतिपादनपरस्तदा तस्य तत्रैव चरितार्थत्वात्सास्नादिमति पदार्थे गोशब्दात्प्रतीतिर्न प्राप्नोति, ततश्च सास्नादिमत्पदार्थविषयाया गोबुद्धेर्जनकोऽपरो ध्वनिरन्वेषणीयः स्यात् ॥ ९१२ ॥

स्यादेतदेकेनैव गोशब्देन बुद्धिद्वयस्य जन्यमानत्वान्नापरो ध्वनिर्मृग्यत इत्याह—**न त्वित्यादि** ।

**न तु ज्ञानफलाः ( शब्दा न चैकस्य फलद्व)यम् ।**
**अपवादविधि(ज्ञानं फलमेकस्य वा कथम् )॥ ९१३ ॥**

विधिविषयं प्रतिषेधविषयं च ज्ञानं फलं येषां ते तथोक्ताः । ततः किमित्याह—**न चैकस्येत्यादि** । न ह्येकस्य विधिकारिणः प्रतिषेधकारिणो वा शब्दस्य युगपद्विज्ञानद्वयलक्षणं फलम् । उपलभ्यत इति शेषः । नचापि परस्परविरुद्धमपवादविधिज्ञानं फलं युक्तम् ॥ ९१३ ॥

**प्रागित्यादिनो**पचयहेतुमाह ।

**प्रागगौरिति विज्ञानं गोशब्दश्राविणो भवेत् ।**
**येनागोः प्रतिषेधाय प्रवृत्तो गौरिति ध्वनिः ॥ ९१४ ॥**

यदि च गोशब्देनागोनिवृत्तिर्मुख्यतः प्रतिपाद्यते तदा गोशब्दश्रवणानन्तरं प्रथमतरमगौरित्येषा श्रोतुः प्रतिपत्तिर्भवेत् । यत्रैव ह्यव्यवधानेन शब्दात्प्रत्यय उपजायते स एव शब्दार्थो व्यवस्थाप्यते । नचाव्यवधानेनागोव्यवच्छेदे मतिरुपजायते । अतो गोबुद्ध्यनुत्पत्तिप्रसङ्गात्प्रथमतरमगोप्रतीतिप्रसङ्गाच्च नापोहः शब्दार्थ इति ॥ ९१४ ॥

अगोनिवृत्तिरित्यादिना कुमारिलमतेन प्रतिज्ञादोषमुद्भावयति ।

**अगोनिवृत्तिः सामान्यं वाच्यं यै (रुररीकृतम् ।)**
**(वाच्यं) वस्त्वेव तैरुक्त(मेतया हि गिरा स्फुटम्) ॥ ९१५ ॥**

स ह्येवमाह—अपोहलक्षणं सामान्यं वाच्यत्वेनाभिधीयमानं कदाचित्पर्युदासलक्षणं वाऽभिधीयते प्रसज्यलक्षणं वा । तत्र प्रथमे पक्षे सिद्धसाध्यता प्रतिज्ञादोषः—तथाह्यस्माभिर्गोत्वाख्यं सामान्यं गोशब्देन वाच्यमित्येवमिष्यते, भवता चागोनिवृत्तिलक्षणं सामान्यं गोशब्देनोच्यत इति ब्रुवता तदेव शब्दान्तरेणाभिधीयत इति केवलं नाम्नि विवादः ॥ ९१५ ॥

अथ कथं तदेव शब्दान्तरेणाभिहितमित्याह—**भावान्तरात्मक** इत्यादि ।

**भावान्तरात्मकोऽभावो येन सर्वो व्यवस्थितः ।**
**तत्राश्वादिनिवृत्तात्माऽभावः स(क?)इति कथ्यताम्॥९१६॥**

येन यस्मात्प्रागभावादिलक्षणश्चतुर्विधः सर्व एवाभावो भावान्तरात्मको व्यवस्थितः। यच्चोक्तम्—"क्षीरे दध्यादि यन्नास्ति प्रागभावः स कथ्यते । नास्तिता पयसो दध्नि प्रध्वंसाभावलक्षणम् ॥ गवि ह्यश्वाद्यभावश्च सोऽन्योन्याभाव उच्यते । शिरसोऽवयवा निम्ना वृद्धिकाठिन्यवर्जिताः ॥ शशशृङ्गादिरूपेण ( रूपाणां ? ) सोऽत्यन्ताभाव उच्यते । न चावस्तुन एते स्युर्भेदास्तेनास्य वस्तुता ॥" इति । एतेन क्षीरादय एव च दध्यादिरूपेणाविद्यमानाः प्रागभावादिव्यपदेशभाज इति दर्शितं भवति । तत्रैवमभावस्य भावान्तरात्मकत्वे स्थिते सति कोऽयं भवद्भिरश्वादिनिवृत्तिस्वभावोऽभावोऽभिप्रेत इति कथ्यताम् ॥ ९१६ ॥

स्यान्मतम्—किमत्र कथ्यते, गवादिस्वलक्षणात्मैवासावित्यत आह—**नेष्ट** इत्यादि ।

**(नेष्टोऽसाधारणात्मा वो) विशेषो निर्विकल्पनात् ।**
**तथा च शाबलेयादिरसामान्यप्रसङ्गतः ॥ ९१७ ॥**
**तस्मात्सर्वेषु यद्रूपं प्रत्येकं परिनिष्ठितम् ।**
**गोबुद्धिस्तन्निमित्ता स्या·······स्ति तत् ॥ ९१८ ॥**

योऽसावसाधारणो विशेषः सोऽश्वादिनिवृत्त्यात्मा नेष्टो भवतां । कस्मादित्याह—निर्विकल्पनात् । तत्र सर्वविकल्पप्रत्यस्तमयात् । विकल्पज्ञानगोचरः सामान्यमेवेष्यते,

असाधारणस्त्वर्थः सर्वविकल्पानामगोचरः । यथोक्तम्—"स्वसंवेद्यमनिर्देश्यं रूपमिन्द्रियगोचर" इति । विशेषात्मकत्वे कारणमसाधारणात्मकता, असाधारणात्मतया यो विशेष इत्यर्थः । एवमविशेषेणोक्तम् । साम्प्रतं विशेषेणैनमेवार्थमाह—**तथाचे**त्यादि । यथैव भवतामसाधारणो विशेषोऽश्वादिनिवृत्त्यात्मा गोशब्दाभिधेयो नेष्टस्तथैव शाबलेयादिशब्दवाच्यतया नेष्टोऽश्वादिनिवृत्त्यात्मा भाव इत्यत्राप्यनुवर्त्तते । कस्मादित्याह—**असामान्यप्रसङ्गत** इति । यदीष्येत तदा सामान्यं शब्दवाच्यं न स्यात्, तस्यानन्वयात् । यत एवमश्वादिनिवृत्त्यात्मा भावोऽसाधारणो न घटते, तस्मात्सर्वेषु सजातीयेषु शाबलेयादिपिण्डेषु यत्प्रत्येकं परिसमाप्तं तन्निबन्धना गोबुद्धिः । तच्च गोत्वाख्यमेव सामान्यम् । तस्यागोऽपोहशब्देनाभिधानात्केवलं नामान्तरमित्यतः सिद्धसाध्यता प्रतिज्ञादोषः ॥ ९१७ ॥ ९१८ ॥

अथ प्रसज्यलक्षणमिति पक्षस्तत्राह—**निषेधमात्ररूपश्चे**त्यादि ।

**निषेधमात्ररूपश्च शब्दार्थौ यदि कल्प्यते ।**
**अभावशब्द(वाच्या स्याच्छून्यताऽन्यप्रकारिका) ॥ ९१९ ॥**

**अभावशब्दवाच्ये**ति । अगोऽपोहलक्षणोऽ ( णा ?) भाववाचकः शब्दोऽभावशब्दस्तद्वाच्या बहिरर्थशून्यता स्यात्, वस्तुरूपापह्नवात् । **अन्यप्रकारिके**ति । पूर्वं विज्ञानमात्रवादोपन्यासकाले भवद्भिरुपन्यस्ता, निरस्ता चास्माभिः, पुनरप्यत्र शब्दार्थचिन्ताप्रस्तावे सैवापोहव्याजेनाभिहिता, प्रतीतिसिद्धस्यार्थस्यापवादात् ॥ ९१९ ॥

ततश्च को दोष इत्याह—**तस्यां चे**त्यादि ।

**तस्यां चाश्वादिबुद्धीनामात्मांशग्रहणं भवेत् ।**
**तत्रान्यापोहवाच्यत्वं मुधैवाभ्युपगम्यते ॥ ९२० ॥**

तस्याम्—शून्यतायां वाच्यायां, शाब्दीनामश्वादिबुद्धीनामात्मांशग्रहणं प्राप्नोति, बाह्यवस्तुस्वरूपाग्रहात् । एवं च सति को दोष इत्याह—**तत्रे**त्यादि । तत्रैवं स्थिते सति, अपोहस्य वाच्यत्वं मुधैवाभ्युपगतं स्यात् । बुद्ध्याकारस्यानपेक्षितबाह्यार्थावलम्बनस्य विधिरूपस्यैव शब्दार्थत्वापत्तेः । ततश्चाभ्युपगमबाधा प्रतिज्ञाया इति भावः ॥ ९२० ॥

एतदेव दर्शयति—**सामान्यमि**त्यादि ।

**सामान्यं ( वस्तुरूपं हि बुद्ध्या)कारो भविष्यति ।**
**शब्दार्थ………………………प्रकल्पितः ॥ ९२१ ॥**

बुद्ध्याकार एव वस्तुरूपं सामान्यं शब्दार्थो भविष्यतीति सम्बन्धः ॥ ९२१ ॥

स्यादेतदनालम्बनापि सा बुद्धिर्विजातीयगवादिबुद्धिभ्यो व्यावृत्तरूपा प्रवर्त्तते तेनापोहकल्पना युक्तैवेत्यत आह—वस्तुरूपेत्यादि ।

**वस्तुरूपा च सा बुद्धिः शब्दार्थेषूपजायते ।**
**तेषु वस्त्वेव (कल्प्येत वाच्यं) बुद्ध्यनपोहकम् ॥ ९२२ ॥**

**वस्तुरूपेति** विधिरूपावसायिनी । **सा बुद्धिरिति** । अनालम्बनाऽश्वादिबुद्धिः । **शब्दार्थेष्विति** । अश्वादिष्वध्यवसितेषु । **वस्त्वेवेति** । अश्वादिपिण्डाध्यवसायिबुद्ध्यात्मकम् । अवधारणफलं दर्शयति—**बुद्ध्यनपोहकमिति** । अविद्यमानोऽपोहो यत्र वाच्ये बुद्ध्यात्मके वस्तुनि तत्तथोक्तम् । बुद्धेरनपोहकम् । बुद्ध्यन्तरापोहरहितमित्यर्थः। अथवा—अपोहत इत्यपोहकं, नापोहकमनपोहकं, बुद्धेरनपोहकं बुद्ध्यनपोहकमिति समासः । एतदुक्तं भवति । यद्यपि बुद्धिर्बुद्ध्यन्तराद्व्यवच्छिन्ना, तथापि सा न बुद्ध्यन्तरव्यवच्छेदावसायिनी जायते । किं तर्हि ? अश्वादिष्वर्थेषु विधिरूपावसायिनी, तेन वस्त्वेव विधिरूपं वाच्यं कल्पेत युक्तिमत्, नापोहः, बुद्ध्यन्तरस्य बुद्ध्यन्तरानपोहकत्वात् ॥ ९२२ ॥

किंच योऽयं भवद्भिरपोहः पदार्थत्वेन कल्पितः स वाक्यादपोद्धृत्य कल्पितस्य पदस्यार्थ इष्टो वाक्यार्थस्तु प्रतिभालक्षण एव । यथोक्तम्—"अपोद्धारे पदस्यायं वाक्यादर्थो विवेचितः । वाक्यार्थः प्रतिभाख्योऽयं तेनादावुपजन्यते ॥" इति । अत्रोच्यते—असत्यपीत्यादि ।

**(असत्यपि च वाक्यार्थः प्रतिभालक्षणो) यथा ।**
**पदार्थोऽपि तथैव स्यात्किमपोहः प्रकल्प्यते ॥ ९२३ ॥**

यथा बाह्येऽर्थे शब्दवाच्यत्वेनासत्यपि वाक्यार्थो भवद्भिः प्रतिभालक्षण एव वर्ण्यते नापोहलक्षणस्तथा पदार्थोऽपि वाक्यार्थवत्प्रतिभालक्षण एव स्यादित्यपोहः पदार्थतया किमिति कल्प्यते । द्वयोरपि पदवाक्यार्थयोर्विधिरूपत्वमेवास्त्विति भावः ॥ ९२३ ॥

स्यादेतत्प्रतिभायाः प्रतिभान्तराद्विजातीयाद्व्यवच्छेदोऽस्तीत्यतोऽपोहः कल्प्यत इत्याह—बुद्ध्यन्तरादित्यादि ।

**बुद्ध्यन्तरा(द्व्यवच्छेदो न च बुद्धौ) प्रतीयते ।**
**स्वरूपोत्पादमात्राच्च (विधिरूपावसायिनी) ॥ ९२४ ॥**

यद्यप्यसौ न प्रतीयते तथाऽप्यस्त्येवेति चेदाह—**स्वरूपोत्पादे**त्यादि। यद्यपि बुद्धेर्बुद्ध्यन्तराद्व्यावृत्तिरस्ति, तथापि तस्यां न शब्दव्यापारोऽस्ति। तथाहि—शब्दादियं बुद्धिरुत्पद्यमाना न स्वरूपोत्पादव्यतिरेकेणान्यं बुद्ध्यन्तरव्यवच्छेदलक्षणं शब्दादवसीयमानमंशं बिभ्रती लक्ष्यते, किं तर्हि? विधिरूपावसायिन्येवोत्पद्यत इत्यर्थः। न च शब्दादवसीयमानो वस्त्वंशः शब्दार्थो युक्तोऽतिप्रसङ्गात्। तस्मात्प्रतीतिबाधितत्वं प्रतिज्ञाया इति भावः॥ ९२४॥

पुनरपि प्रसङ्गापादनेन प्रतीत्यादिबाधितत्वमेव दर्शयन्नाह—**भिन्ने**त्यादि।

**भिन्नसामान्यवचना विशेषवचनाश्च ये।**
**सर्वे भवेयुः पर्याया यद्यपोहस्य वाच्यता॥ ९२५॥**

ये हि भिन्नसामान्यवचना गवाश्वादयो ये च विशेषवचनाः शाबलेयादयस्ते सर्वे भवतां पर्यायाः प्राप्नुवन्त्यर्थभेदाभावात्, वृक्षपादपादिशब्दवत्॥ ९२५॥

कस्मात्पुनरर्थभेदो न सम्भवतीत्याह—**संसृष्टे**त्यादि।

**संसृष्टैकत्वनानात्वविकल्प(रहितोहि सः।**
**अवस्तुत्वादपोहानां) नैव भेदोऽपि विद्यते॥ ९२६॥**

वस्तुन्येव हि संसृष्टत्वैकत्वनानात्वविकल्पाः सम्भवन्ति, नावस्तुनि, अपोहानां चावस्तुत्वान्न परस्परं संसृष्टत्वादिविकल्पो युक्तः, तत्कथमेषां परस्परं भेदः सिद्ध्यति॥ ९२६॥

अथ भेदस्तेषामभ्युपगम्यते, तथा सति नियमेन वस्तुत्वमापद्यत इति दर्शयति—**यदि वे**त्यादि।

**यदि वा भिद्यमानत्वा(द्वस्तु साधारणांशवत्)।**
**अवस्तुत्वे (त्वनानात्वा)त्पर्यायत्वान्न मुच्यते॥ ९२७॥**

वस्त्विवति साध्यनिर्देशः। प्रयोगः—ये परस्परं विभिद्यन्ते ते वस्तु, यथा स्वलक्षणानि, परस्परं विभिद्यन्ते चापोहा इति स्वभावहेतुः। ततश्च वस्तुत्वे सति विधिरेव शब्दार्थ इति सिद्धम्। एतेन चानुमानबाधितत्वं प्रतिज्ञाया उक्तं भवति। अथावस्तुत्वमभ्युपगम्यतेऽपोहानां तदा नानात्वाभावात्पूर्ववत्पर्यायत्वप्रसङ्ग इत्येकान्त एषः॥ ९२७॥

अत्र परो बौद्धस्य परिहारमाशङ्कते—**ननु चे**त्यादि।

**ननु चाश्वादिभेदेन भेदोऽपोहस्य सेत्स्यति ।**

यथोक्तम्—"अपोह्यभेदाद्भिन्नार्थाः स्वार्थभेदगतौ जडा" इति । ततश्च स्वतो भेदाभावेऽप्यपोह्यस्याश्वादेर्भेदादपोहस्यागवादिव्यावृत्तिरूपस्य भेदे सिद्धे न पर्यायत्वं भविष्यति ।

**न विशेष** इत्यादिना परो दूषणमाह—

**न विशेषः स्वतस्तस्य परतश्चोपजायते ॥ ९२८ ॥**

स्वतो न तस्यापोहस्य विशेषो नानात्वमस्ति अभावैकरसत्वात् । परतोऽप्यसौ भवन्कालपनिकः स्यान्न पारमार्थिकः । न हि स्वतोऽसतो भेदस्य परतः सम्भवो युक्तः ॥ ९२८ ॥

कस्मान्न युक्त इत्याह— **संसर्गिण** इत्यादि ।

**संसर्गिणोऽपि ह्याधारा यं न भिन्दन्ति रूपतः ।**
**अपोह्यै(र्बहिरङ्गैस्स भिद्येतेत्य)तिकल्पना ॥ ९२९ ॥**

तथाहि—संसर्गिणः—संबन्धिनः शावलेयादयः, आधारा—अन्तरङ्गा अपि सन्तो, यम्—अपोहं, रूपतः—स्वभावतो भेत्तुमशक्ताः, बहुष्वपि शावलेयादिष्वेकस्यागोव्यवच्छेदलक्षणस्यापोहस्य प्रवृत्तेरिष्टत्वात्, स कथं बहिरङ्गभूतैरपोह्यैरश्वादिभिर्भिद्येत । न हि यस्यान्तरङ्गोऽप्यर्थो न भेदकस्तस्य बहिरङ्गो भविष्यति । बहिरङ्गत्वहानिप्रसङ्गात् । तस्मादतिशयवती कल्पनेयमित्युपहसति ॥ ९२९ ॥

एवं तर्ह्यन्तरङ्गा एवाधाराः संसर्गिणो भेदका न भविष्यन्तीति चेदाह—तथैवेत्यादि ।

**तथैवाधारभेदेनाप्यस्य भेदो न युज्यते ।**
**न हि सम्बन्धिभेदेन भेदो वस्तुन्यपीष्यते ॥ ९३० ॥**
**किमुतावस्त्वसंसृष्टमव्यावृत्तं निवर्त्तते ।**
**अ(त एवा)विशेषांशं य (द्धिम) त्यनिरूपितम् ॥ ९३१ ॥**

**अस्येति** । अपोहस्य । कस्मान्न युज्यत इत्याह—**न हीत्यादि** । आस्तां तावद्यदवस्तु सम्बन्धिभेदान्न भिद्यत इति, तस्य निःस्वभावत्वात् । वस्तुन्यपि हि यावत्संबन्धिभेदाद्भेदो नोपलभ्यत एव । तथाहि—देवदत्तादिकमेकं वस्तु युगपत्क्रमेण वाऽनेकैरासनादिभिः सम्बध्यमानमनासादितभेदमेवोपलभ्यते, किं पुनर्यदन्यव्यावृत्ति-

रूपमवस्तु। अवस्तुत्वादेव च क्वचिदसंसृष्टम्—असम्बद्धम्, अन्यतश्च विजातीयाद्व्यावृत्तमवस्तुत्वादेव। अत एवानधिगतविशेषांशं तत्तादृशं सम्बन्धिभेदादपि कथमिव भेदमश्नुवीत ॥ ९३० ॥ ९३१ ॥

किंच—भवतु नाम सम्बन्धिभेदाद्भेदस्तथापि वस्तुभूतसामान्यानभ्युपगमे भवतां स एवापोहाश्रयः सम्बन्धी न सिद्ध्यति। यस्य भेदात्तद्भेदोऽवकल्प्यत इति दर्शयति—न चाप्रसिद्धेत्यादि।

**न चाप्रसिद्धसारूप्यमपोह्यविषयात्मना।**
**शक्तः कश्चिदपि ज्ञातुं गवादीन्……तः ॥ ९३२ ॥**

यदि हि गवादीनां वस्तुभूतं सारूप्यं प्रसिद्धं भवेत्तदाऽश्वाद्यपोहाश्रयत्वमेषामविशेषेण सिद्ध्येन्नान्यथा, ततश्चापोह्यविषयत्वमेषामिच्छताऽवश्यं सारूप्यमङ्गीकर्त्तव्यम्, तदेव सामान्यं वस्तुभूतं शब्दवाच्यं भविष्यतीत्यपोहकल्पना निरर्थकैवेति भावः। विषयशब्दोऽत्राश्रयवचनः, जलविषया मत्स्या इति यथा ॥ ९३२ ॥

यैरप्यपोह्यभेदेन भेदः कल्प्यते, तेषां सोऽपि वस्तुभूतसामान्यमन्तरेण न सिध्यतीति दर्शयति—अपोह्यानपीत्यादि।

**अपोह्यानपि चाश्वादीनेकधर्मा(न्व)यादृते।**
**न निरूपयितुं शक्तिस्तदपोहो न सिद्ध्यति ॥ ९३३ ॥**

यदि ह्यश्वादीनामेकः कश्चित्सर्वव्यक्तिसाधारणो धर्मोऽनुगामी स्यात्तदा ते सर्वे गवादिशब्दैरविशेषेणापोह्येरन्, नान्यथा, विशेषापरिज्ञानात्। साधारणधर्माभ्युपगमे चापोहकल्पनावैयर्थ्यम्, तत्—तस्मात्, अपोहो न सिद्ध्यति ॥ ९३३ ॥

अपि चापोहः शब्दलिङ्गाभ्यामेव प्रतिपाद्यत इति भवद्भिरिष्यते। तयोश्च शब्दलिङ्गयोर्वस्तुभूतसामान्यमन्तरेण प्रवृत्तिर्न युक्ता। ततश्च केनापोहः प्रतिपाद्यतामित्येतद्दर्शयति—न चान्वयेत्यादि।

**न चान्वयविनिर्मुक्ता प्रवृत्तिः शब्दलिङ्गयोः।**
**ताभ्यां च न विनाऽपोहो न चासाधारणेऽन्वयः ॥ ९३४ ॥**

**अन्वयविनिर्मुक्तेति**। अन्वयमन्तरेणेत्यर्थः। **ताभ्यामिति**। शब्दलिङ्गाभ्यां विना नापोहः। गम्यत इति शेषः। स्वलक्षणेनैवान्वयं कृत्वा शब्दलिङ्गयोः प्रवृत्तिः करिष्यत इति चेदाह—**न चासाधारणेऽन्वय** इति। स्वलक्षणमसाधारणमनन्य-

भाक्, तत्कथं तेनान्वयो भवेत् । तदेवमपोहकल्पनायां शब्दलिङ्गयोः प्रवृत्तिरेव न प्राप्नोति ॥ ९३४ ॥

भवतु वा प्रवृत्तिस्तथाऽप्यनयोः प्रामाण्यमभ्युपगतं हीयत इति दर्शयति—**अपोहश्चे**त्यादि ।

**अपोहश्चाप्यनिष्पन्नः साहचर्यं क्व कथ्यताम् ।**
**तस्मिन्नदृश्यमाने च न तयोः स्यात्प्रमाणता ॥ ९३५ ॥**

प्रतिपाद्यार्थाव्यभिचारे सति शब्दलिङ्गयोः प्रामाण्यं स्यात्, प्रतिपाद्यश्चार्थोऽपोहस्त्वयेष्यते, स चाभावरूपत्वादनिष्पन्नो निःस्वभावतः । ततश्च साहचर्यमव्यभिचारित्वं क्व कस्मिन्विषये कथ्यतां शब्दलिङ्गयोः । किं तेन कथितेनेति चेदाह—**तस्मिन्नि**त्यादि । **तस्मिन्निति** । साहचर्ये । **तयोरिति** । शब्दलिङ्गयोः । अविसंवादलक्षणत्वात्प्रामाण्यस्येति भावः ॥ ९३५ ॥

अथापि स्याद्विजातीयादर्शनमात्रेणैव शब्दलिङ्गे अगृहीतसाहचर्ये एतत्स्वमर्थं गमिष्यत इत्याह—**न चादर्शनमात्रेणे**त्यादि ।

**न चादर्शनमात्रेण ताभ्यां प्रत्यायनं भवेत् ।**
**सर्वत्रैव ह्यदृष्टत्वात्प्रत्ययो न विशिष्यते ॥ ९३६ ॥**

मात्रग्रहणमन्वयदृष्टिव्यवच्छेदार्थम् । कस्मान्न भवेदित्याह—**सर्वत्रैवे**त्यादि । सर्वत्र—सजातीये विजातीये स्वार्थे च । ततश्चायं स्वार्थोऽयं परार्थ इत्येवं प्रत्ययो ज्ञानं न विशिष्येत । स्वार्थमपि न गमयेत्, तत्राप्यदृष्टत्वात्परार्थवदिति यावत् । क्वचित्प्रत्याय्य इति पाठः । तत्र प्रत्याय्योऽभिधेयोऽर्थो न विशिष्यते—न भिद्यत इत्यर्थः । तदेवं शब्दलिङ्गयोः प्रवृत्तिप्रामाण्याभ्युपगमहानिप्रसङ्गान्नापोहः शब्दार्थो युक्तः ॥ ९३६ ॥

यदुक्तं "न चाप्रसिद्धसारूप्यमि"त्यादि, तत्र परस्योत्तरमाशङ्कते—**अथासत्यपी**त्यादि ।

**अथासत्यपि सारूप्ये स्यादपोहस्य कल्पना ।**
**गवाश्वयोरयं कस्मादगोऽपोहो न कल्प्यते ॥ ९३७ ॥**

यदि सारूप्यमन्तरेण शाबलेयादिष्वगोपोहस्य कल्पना स्यात्तदा गवाश्वयोरपि कस्मान्न प्रकल्प्येत, अविशेषात् । गवाश्वप्रभृतीनि चेत्यस्य लक्षणस्य विस्मृतत्वाद्भिन्नेण गवाश्वयोरित्युक्तम् ॥ ९३७ ॥

तमेवाविशेषं दर्शयति—**शाबलेयाच्चेत्यादि** ।

**शाबलेयाच्च भिन्नत्वं बाहुलेयाश्वयोः समम् ।**
**सामान्यं नान्यदिष्टं चेत्क्वागोऽपोहः प्रवर्त्तताम् ॥ ९३८ ॥**

**क्वागोऽपोहः प्रवर्त्तताम्** इति । यथैव शाबलेयाद्वैलक्षण्यादश्वे न प्रवर्त्तते, तथा बाहुलेयस्यापि ततो वैलक्षण्यमस्तीति तत्रापि न प्रवर्त्तेत । एवं शाबलेयादिष्वपि योज्यम्, सर्वत्र वैलक्षण्याविशेषात् ॥ ९३८ ॥

अपि च—यदा स्वलक्षणादिषु समयासम्भवान्न शब्दार्थत्वं युक्तं तथाऽपोहेऽपीति दर्शयन्नाह—**इन्द्रियैरित्यादि** ।

**इन्द्रियैर्नाप्यगोऽपोहः प्रथमं व्यवसीयते ।**
**नान्यत्र शब्दवृत्तिश्च किं दृष्ट्वा स प्रयुज्यताम् ॥ ९३९ ॥**

स्वयं निश्चितार्थो हि समयकृत्समयं करोति, नचापोहः केनचिदिन्द्रियैर्व्यवसीयते । प्रथमम्—व्यवहारकालात्पूर्वम्, संज्ञासंज्ञिसम्बन्धकाल इत्यर्थः । तस्यावस्तुत्वादिन्द्रियाणां च वस्तुविषयत्वादिति भावः । स्यादेतदन्यव्यावृत्तस्वलक्षणमुपलभ्य शब्दः प्रयोक्ष्यत इत्यत आह—**नान्यत्रेत्यादि** । अन्यापोहादन्यत्र स्वलक्षण इत्यर्थः ॥ ९३९ ॥

माभूदिन्द्रियैरपोहस्य व्यवसायोऽनुमानेन भविष्यतीति चेदाह—**पूर्वोक्तेनेत्यादि** ।

**पूर्वोक्तेन प्रबन्धेन नानुमाऽप्यत्र विद्यते ।**
**सम्बन्धानुभवोऽप्यस्य तेन नैवोपपद्यते ॥ ९४० ॥**

तत्र पूर्वोक्तः प्रबन्धः—"न चान्वयविनिर्मुक्ता प्रवृत्तिः शब्दलिङ्गयो"रित्यादिः । **सम्बन्धानुभवोऽपीति** । शब्देन सहेति शेषः । न केवलं पूर्वोक्ताश्व(श्च?) वैलक्षण्यादिर्नोपपद्यत इत्यपिशब्देन दर्शयति । **तेनेति** । तस्मात् । तदेवमकृतसमयत्वादित्यस्य हेतोरनैकान्तिकत्वं प्रतिपादितम् । अकृतसमयत्वेऽप्यपोहे शब्दप्रवृत्त्यभ्युपगमात् ॥ ९४० ॥

पुनरप्यपोहे सङ्केतासम्भवं प्रतिपादयन्नाह—**अगोशब्दाभिधेयत्वमित्यादि** ।

**अगोशब्दाभिधेयत्वं(भव)तां च कथं पुनः ।**
**न दृष्टो यत्र गोशब्दः सम्बन्धानुभवक्षणे ॥ ९४१ ॥**

इदं हि भवान्वक्तुमर्हति । कथमश्वादीनाम् अगोशब्दाभिधेयत्वं—**गोशब्दानभि-**

धेयत्वं भवद्भिरवगम्यत इति । बौद्ध आह—**न दृष्टो यत्रेत्यादि—सम्बन्धानुभवक्षण** इति । सङ्केतप्रतिपत्तिवेलायामित्यर्थः ॥ ९४१ ॥

एकस्मादित्यादिना परो दूषणमाह ।

**एकस्मान्न हि गोपिण्डाद्यदन्यत्सर्वमेव तत् ।**
**भवेदपोह्यमित्येतन्न सामान्यस्य वाच्यता ॥ ९४२ ॥**

यदि हि यदेव सङ्केतानुभववेलायामुपलब्धं ततोऽन्यत्र गोशब्दप्रवृत्तिर्नेष्यते, तदैकस्मात्सङ्केतेन विषयीकृताच्छाबलेयादिकाद्गोपिण्डात्सकाशाद्यदन्यद्बाहुलेयादि तदपि गोशब्देनापोह्यं भवेत् । ततश्च सामान्यं वाच्यमित्येतन्न सिद्ध्येत् ॥ ९४२ ॥

इतश्चेतरेतराश्रयदोषप्रसङ्गादपोहे सङ्केतोऽशक्यक्रिय इति दर्शयन्नाह—**सिद्धश्चे**त्यादि ।

**सिद्धश्चागौरपोह्येत गोनिषेधात्मकश्च सः ।**
**तत्र गौरेव वक्तव्यो नञा यः प्रतिषिध्यते ॥ ९४३ ॥**
**स चेदगोनिवृत्त्यात्मा भवेदन्योन्यसंश्रयः ।**
**सिद्धश्चेद्गौरपोहार्थं वृथाऽपोहप्रकल्पनम् ॥ ९४४ ॥**

अगोव्यवच्छेदेन गोप्रतिपत्तिः, सचागौर्गोनिषेधात्मा, ततश्चागौरित्यत्रोत्तरपदार्थो वक्तव्यो यो न गौरगौरित्यत्र नञा प्रतिषिध्येत । न ह्यनिर्ज्ञातस्वरूपस्य निषेधः शक्यते कर्तुम् । अथापि स्यात्किमत्र वक्तव्यमगोनिवृत्त्यात्माऽसौ गौरित्यत आह—**स चे**त्यादि । स इति । गौः । तथाह्यगोनिवृत्तिस्वभावत्वाद्गोरगोप्रतिपत्तिद्वारेणैव प्रतीतिः, अगोश्च गोप्रतिषेधात्मकत्वाद्गोप्रतिपत्तिद्वारिकैव प्रतीतिरिति स्फुटतरमवतरतीतरेतराश्रयत्वम् । अथापि स्यादगोशब्देन यो गौर्निषेध्यते स विधिरूप एव सिद्धोऽपोहार्थम्—अगोव्यवच्छेदलक्षणापोहसिध्यर्थं, तेनेतरेतराश्रयत्वं न भविष्यतीत्यत आह—**सिद्धश्चे**दित्यादि । यद्येवं, सर्वस्य शब्दस्यापोहोऽर्थ इत्येवमपोहकल्पनं वृथा, विधिरूपस्य शब्दार्थस्य भावात् । तस्मान्न कश्चिद्विधिरूपः शब्दार्थः सिद्धोऽङ्गीकर्त्तव्यस्तदनङ्गीकरणे चेतरेतराश्रयदोषो दुर्निवारः ॥ ९४३ ॥ ९४४ ॥

तदेवेतरेतराश्रयत्वमुपसंहरन्नाह—**गव्यसिद्ध** इत्यादि ।

**गव्यसिद्धे त्वगौर्नास्ति तदभावे तु गौः कुतः ।**
**नाधाराधेयवृत्त्यादिसम्बन्धश्चाप्यभावयोः ॥ ९४५ ॥**

**तदभाव** इति । गोरभावे । आचार्यदिङ्नागेन विशेष्यविशेषणभावसमर्थनार्थमुक्तम्—"नीलोत्पलादिशब्दा अर्थान्तरनिवृत्तिविशिष्टानर्थानाहु"रित्यादि । तदेतदयुक्तमिति दर्शयन्नाह—**नाधाराधेये**त्यादि । यस्य हि येन सह कश्चिद्वास्तवः सम्बन्धः सिद्धो भवेत्तत्तेन विशिष्टमिति युक्तं वक्तुम् । न च नीलोत्पलयोरनीलोत्पलव्यवच्छेदरूपत्वेनाभावरूपयोराधाराधेयादिसम्बन्धः सम्भवति नीरूपत्वात् । आदिग्रहणेन संयोगसमवायैकार्थसमवायादिसम्बन्धग्रहणम् । न चासति वास्तवे सम्बन्धे तद्विशिष्टस्य प्रतिपत्तिर्युक्ताऽतिप्रसङ्गात् ॥ ९४५ ॥

अथापि स्यान्नैवास्माकमनीलादिव्यावृत्त्या विशिष्टोऽनुत्पलादिव्यवच्छेदोऽभिमतो यतोऽयं दोषः स्यात् । किं तर्हि? अनीलानुत्पलाभ्यां व्यावृत्तं वस्त्वेव तथा व्यवस्थितम् । तदर्थान्तरनिवृत्त्या विशिष्टं शब्देनोच्यत इत्ययमर्थोऽत्राभिप्रेत इत्यत आह—**न चासाधारणं वस्त्वि**त्यादि ।

**न चासाधारणं वस्तु गम्यतेऽपोहवत्तया ।**
**कथं वा परिकल्प्येत सम्बन्धो वस्त्ववस्तुनोः ॥ ९४६ ॥**

स्वलक्षणस्यावाच्यत्वात्तत्पक्षभाविदोषप्रसङ्गाच्चेति भावः । गम्यतां नामासाधारणं वस्तु, तथाऽपि तस्यान्यव्यावृत्त्या विशिष्टत्वं न सिध्यतीति दर्शयति—**कथं वे**त्यादि । अवस्तु अपोहः, असाधारणं तु वस्तु, न चावस्तुवस्तुनोः सम्बन्धो युक्तो वस्तुद्वयाधारत्वात्तस्य ॥ ९४६ ॥

अपि च—भवतु नाम सम्बन्धस्तथापि विशेषणत्वमपोहस्य न युक्तमिति दर्शयति—**स्वरूपे**त्यादि ।

**स्वरूपसत्त्वमात्रेण न स्यात्किञ्चिद्विशेषणम् ।**
**स्वबुद्ध्या रज्यते येन विशेष्यं तद्विशेषणम् ॥ ९४७ ॥**

नहि सत्तामात्रेणोत्पलादीनां नीलादि विशेषणं भवति । किं तर्हि? ज्ञातं सद्यत्स्वाकारानुरक्तया बुद्ध्या विशेष्यं रञ्जयति तद्विशेषणमुच्यते ॥ ९४७ ॥

नचापोहेऽयं प्रकारः सम्भवतीति दर्शयति—**न चापी**त्यादि ।

**न चाप्यश्वादिशब्देभ्यो जायतेऽपोहबोधनम् ।**
**विशेष्यबुद्धिरिष्टेह न चाज्ञातविशेषणा ॥ ९४८ ॥**

न ह्यश्वादिबुद्ध्याऽपोहो व्यवसीयते किं तर्हि? वस्त्वेव । ततश्चापोहस्य बोधास-

म्भवान्न तेन स्वबुद्ध्या रज्यतेऽश्वादिः। स्यादेतदज्ञातोऽप्यपोहो विशेषणं भविष्यतीत्याह—विशेष्येत्यादि। न ह्यगृहीतविशेषणा विशेष्ये बुद्धिर्भवति। न ज्ञातं विशेषणं यस्याः सा तथोक्ता॥ ९४८॥

भवतु नामापोहबोधनम्, तथापि वस्तुनि तदाकारबुद्ध्यभावात्तस्य तद्विशेषणमयुक्तमिति दर्शयन्नाह—**न चान्यरूपमित्यादि।**

**न चान्यरूपमन्यादृक्कुर्याज्ज्ञानं विशेषणम्।**
**कथं चान्यादृशे ज्ञाने तदुच्येत विशेषणम्॥ ९४९॥**

सर्वमेव हि विशेषणं स्वाकारानुरूपं विशेष्ये बुद्धिं जनयद्दृष्टम्। न त्वन्यादृशं विशेषणमन्यादृशीं बुद्धिं विशेष्ये जनयति। न हि नीलमुत्पले रक्तमिति प्रत्ययमुत्पादयति, दण्डो वा कुण्डलीति। न चात्राश्वादिष्वभावानुरक्ता शाब्दी बुद्धिरुपजायते। किं तर्हि? भावाकाराध्यवसायिनी। स्यादेतदन्यादृशमपि ज्ञानं जनयद्विशेषणमुच्यत इत्याह—**कथं चान्यादृश** इत्यादि। अन्यादृशे—विशेषणाननुरूपे॥ ९४९॥

यदि स्यात्को दोष इत्याह—**अथान्यथेत्यादि।**

**अथान्यथा विशेष्येऽपि स्याद्विशेषणकल्पना।**
**तथा सति हि यत्किञ्चित्प्रपद्येत विशेषणम्॥ ९५०॥**

अथ यदि भवतो विशेषणाननुरूपतयाऽन्यथा व्यवस्थितेऽपि विशेषे स्याद्विशेषणकल्पना, तथा सति सर्वमेव नीलादि सर्वस्य विशेषणं स्यात्, ततश्चाव्यवस्था स्यात्॥ ९५०॥

अथ स्यादपोहेनापि स्वबुद्ध्या विशेष्यं वस्तु रज्यत इत्याह—**अभावगम्येत्यादि।**

**अभावगम्यरूपे च न विशेष्येऽस्ति वस्तुता।**
**विशेषितमपोहेन वस्तु वाच्यं न तेऽस्त्यतः॥ ९५१॥**

अभावोऽपोहः, तेनापोहेन तादृप्याद्गम्यम्—अभावगम्यम्, अभावगम्यं रूपं स्वभावो यस्य वस्तुनस्तत्तथोक्तम्। यद्यभावरूपेण वस्तुनः प्रतीतिः स्यात्तदा तस्य वस्तुत्वमेव न स्यात्, भावाभावयोर्विरोधात्। प्रकृतमुपसंहरन्नाह—**विशेषितमि**त्यादि॥ ९५१॥

स्यादेतदन्यव्यावृत्त एव वस्तुनि शब्दलिङ्गयोः प्रवृत्तिर्दृश्यते, नापोहरहिते, तेना-

पोहः शब्दलिङ्गाभ्यां प्रतिपाद्यत इत्यभिधीयते, नतु प्रसज्यमात्रप्रतिपादनात्, तेन यथोक्तः सर्वः प्रतीत्यादिविरोधो न भविष्यतीत्याशङ्क्याह—यद्यपीत्यादि ।

**यद्यप्यपोहनिर्मुक्ते न वृत्तिः शब्दलिङ्गयोः ।**
**युक्तस्तथापि बोधस्तु ज्ञातुं वस्त्ववलम्बते ॥ ९५२ ॥**

यदि नाम तद्वस्त्वन्यतो व्यावृत्तं, तथापि तत्रोत्पद्यमानः शब्दलिङ्गोद्भवो बोधोऽन्यव्यावृत्तिं सतीमपि नावलम्बते, किं तर्हि? वस्त्वंशमेवाभिधावति, तत्रैवानुरागात्। य एवांशो वस्तुनः शाब्देन लैङ्गिकेन वा प्रत्ययेनावसीयते, स एव तस्य विषयो नानवसीयमानः सन्नपि, नहि मालतीशब्दस्य गन्धादयो विद्यमानतया वाच्या व्यवस्थाप्यन्ते ॥ ९५२ ॥

न चाप्येतद्युक्तम्, यदन्यव्यावृत्ते वस्तुनि शब्दलिङ्गयोः प्रवृत्तिरित्येतद्दर्शयति—न चेत्यादि ।

**न चासाधारणं वस्तु बुद्धौ विपरिवर्त्तते ।**
**न चापि निर्विकल्पत्वात्तस्य युक्ताऽधिगम्यता ॥ ९५३ ॥**

अन्यव्यावृत्तं हि वस्तु भवद्भवतां मतेन स्वलक्षणमसाधारणमेव भवेत्, नच तच्छब्दलिङ्गजायां बुद्धौ विपरिवर्त्तत इति भवतां मतम्। तस्य निर्विकल्पबुद्धिग्राह्यत्वात्। शब्दलिङ्गजबुद्धेश्च सामान्यलक्षणविषयत्वात्। अथापि स्वलक्षणविषयत्वमस्या अभ्युपगम्यते, तदपि युक्त्या न सङ्गच्छत इति दर्शयन्नाह—न चापीत्यादि । न ह्यसाधारणं वस्तु शब्दलिङ्गजप्रत्ययाधिगम्यं, तत्र सर्वविकल्पानां प्रत्यस्तमयात्। तथाहि—विकल्पो जात्यादिविशेषणसंस्पर्शेनैव प्रवर्त्तते नच शुद्धवस्तुपरिग्रहेण ॥ ९५३ ॥

अथापि स्याच्छब्देनागम्यमानमप्यसाधारणं वस्तु व्यावृत्त्या विशिष्टमित्युच्यत इत्याह—शब्देनागम्यमानं चेत्यादि ।

**शब्देनागम्यमानं च विशेष्यमिति साहसम्।**
**तेन सामान्यमेष्टव्यं विषयो बुद्धिशब्दयोः ॥ ९५४ ॥**

प्रकारान्तरेणापि सामान्यस्य वस्तुत्वं साधयन्नाह—यदेत्यादि ।

**यदा चाशब्दवाच्यत्वं न व्यक्तीनामपोह्यता।**
**तदाऽपोह्येत सामान्यं तस्यापोहाच्च वस्तुता ॥ ९५५ ॥**

**व्यक्तीना**मिति । असाधारणवस्तुरूपाणामवाच्यत्वान्नापोह्यता, अनुक्तस्य निराकर्तुमशक्यत्वात् । **अपोह्येत सामान्य**मिति । तस्य वाच्यत्वादिति भावः ॥९५५॥

स्यादेतद्यदि नाम सामान्यमपोह्येत, तथापि कथं तस्य वस्तुत्वं सिध्यतीत्यत आह —**नापोह्यत्व**मित्यादि ।

**नापोह्यत्वमभावानामभावाभाववर्जनात् ।**
**व्यक्तोऽपोहान्तरापोहस्तस्मात्सामान्यवस्तुनः ॥ ९५६ ॥**

**अभावाना**मिति । अपोहानां । यदि भवेद्वस्तुत्वमेव स्यात् । अत्रोपपत्तिमाह— **अभावाभाववर्जना**दिति । अभावानामभावरूपत्यागादित्यर्थः । एतदुक्तं भवति— यद्यपोहानामपोह्यत्वं भवेत्, तदैषामभावरूपत्वं प्रतिषिद्धं भवेत्, तत्प्रतिषेधे च भवत्यभावैरभावरूपत्वं त्यक्तं स्यात् । ततश्चाभावानामपोहलक्षणानामभावरूपत्यागाद्वस्तुत्वमेव भवेदित्येके । अन्ये त्वाहुः—**अभावाभाववर्जना**दिति । अभावानामभावाभावादित्यर्थः । न ह्यभावस्वभावा अपोहा अपोह्या युज्यन्ते । वस्तुविषयत्वात्प्रतिषेधस्येति यावत् । तस्माद्व्यक्तः स्फुटोऽपोहान्तरेऽश्वादावपोहान्तरस्य गवादेरपोहो भवन्सामान्यभूतस्यैवेति निश्चीयते । अतः सिद्धमपोह्यत्वाद्वस्तुत्वं सामान्यस्येति ॥ ९५६ ॥

अपिचापोहानां परस्परतो वैलक्षण्यं वा स्यादवैलक्षण्यं वा, तत्राद्ये पक्षे तावद्दोषमाह—**अभावस्य चे**त्यादि ।

**अभावस्य च योऽभावः स चेत्तस्माद्विलक्षणः ।**
**भाव एव भवेन्नो चेद्गौरगौस्ते प्रसज्यते ॥ ९५७ ॥**

अभावस्य—अगोशब्दाभिधेयस्य अभावो यो गोशब्दाभिधेयोऽर्थः । स चेत्तस्मात्पूर्वोक्तादभावाद्विलक्षणोऽन्य इत्यर्थः । तदानीं भाव एव भवेत्, अभावनिवृत्तिमात्ररूपत्वाद्भावस्य । नो चेद्विलक्षणस्तदा गौरप्यगोर्भवतः प्रसज्यते तदवैलक्षण्येन तादात्म्यप्रतिपत्तेः ॥ ९५७ ॥

स्यादेतद्गवाश्वादिशब्दैः स्वलक्षणान्येव परस्परतो व्यावृत्तान्यपोह्यन्ते, नाभावाः, तेनाऽऽपोह्यत्वेन तेषां वस्तुत्वप्रसङ्गापादानं नानिष्टमित्यत आह—**यद्यपी**त्यादि ।

**यद्यप्यन्येषु शब्देषु वस्तुनः स्यादपोह्यता ।**
**सच्छब्दस्य त्वभावाख्यान्नापोह्यं भिन्नमिष्यते ॥ ९५८ ॥**

यद्यपि सच्छब्दादन्येषु गवादिशब्देषु वस्तुनः पर्वतादेरपोह्यता सिध्यति, सच्छब्दस्य त्वभावाख्यादपोह्यान्नान्यदपोह्यमस्ति, अभाव एवापोह्य इत्यर्थः । असद्व्यवहारव्यवच्छेदेन सच्छब्दस्य प्रवृत्तत्वात् ॥ ९५८ ॥

ततश्च को दोष इत्याह—तत्रासतोऽपीत्यादि ।

**तत्रासतोऽपि भावत्वमिति क्लेशो महान्भवेत् ।**
**तदसिद्धौ न सत्ताऽस्ति न वा सत्ता प्रसिद्ध्यति ॥ ९५९ ॥**

पूर्ववदभावाभाववर्जनादसतोऽपोहे वस्तुत्वमेव स्यात् । ततश्चापोहवादिनोऽभ्युपगमादिविरुद्धमसतोऽपि वस्तुत्वं प्रसक्तमिति महद्बत कष्टमापतितम् । अस्त्वभावस्यापि वस्तुत्वमिति चेदाह—**तदसिद्धावित्यादि** । तस्याभावस्यासिद्धौ सत्यां न सत्ता कस्यचिद्भावस्य सिद्ध्येत् । अभावव्यवच्छेदेन तस्य भवन्मतेन स्थितलक्षणत्वात् । तस्य चाभावस्यापोह्यत्वे सति वस्तुत्वप्रसङ्गेन स्वरूपासिद्धेरसत्तापि न सिद्ध्यति, तस्याः सत्ताव्यवच्छेदरूपत्वात्, सत्तायाश्च यथोक्तेन प्रकारेणायोगात् ॥ ९५९ ॥

यत्पूर्वमुक्तम्—"अपोह्यैः स बहिःसंस्थैर्भिद्येते"त्यादि, यच्चोक्तम्—"अवस्तुत्वादपोहानां नैव भेद" इत्यादि । तत्र केचिद्बौद्धाः परिहारमाहुः—न खल्वपोह्यभेदा (दा) धारभेदाद्वाऽपोहानां भेदोऽपि त्वनादिकालप्रवृत्तविचित्रवितत्त्वार्थविकल्पवासनाभेदान्वयैस्तत्त्वतो निर्विषयैरपि भिन्नविषयालम्बिभिरिव प्रत्ययैर्भिन्नेष्वर्थेषु बाह्येषु भिन्ना इवार्थात्मान इवास्वभावा अप्यपोहाः समारोप्यन्ते, ते च तथा तैः समारोपिता भिन्नाः सन्तश्च प्रतिभासन्ते, तेन वासनाभेदाद्भेदः सद्रूपता चापोहानां भविष्यतीत्यत्राह—**न चापीत्यादि** ।

**न चापि वासनाभेदाद्भेदः सद्रूपताऽपि वा ।**
**अपोहानां प्रकल्प्येत न ह्यवस्तुनि सा मता ॥ ९६० ॥**

न ह्यवस्तुनि वासनेत्येवं मन्यते । निर्विषयो न कश्चित्प्रत्ययोऽस्तीति निर्लोडितमेतद्विज्ञानवादविचारे । ततश्च वितथार्थानां विकल्पानामयोगात्तदाहिताऽपि वासना कुतो भविष्यति । **अवस्तुनीति** । आलम्बनभूते वस्तुन्यसति निर्विषयविज्ञानायोगेन वासनाधायकविज्ञानाभावात्कुतो वासनेत्यर्थः । ततश्च वासनाभावात्कुतो वासनाकृतोऽपोहानां भेदः सद्रूपता वा भविष्यतीति भावः ॥ ९६० ॥

एवं तावद्वाच्याभिमतमपोहं निराकृत्य वाचकाभिमतमपि निराकर्तुमाह—**भवद्भिरित्यादि** ।

**भवद्भिः शब्दभेदोऽपि तन्निमित्तो न लभ्यते ।**
**न ह्यसाधारणः शब्दो वाचकः प्रागदृष्टितः ॥ ९६१ ॥**
**तत्र शब्दान्तरापोहे सामान्ये परिकल्पिते ।**
**तथैवावस्तुरूपत्वाच्छब्दभेदो न कल्प्यते ॥ ९६२ ॥**
**वाचकानां यथा नैव वाच्यवाचकयोर्मिथः ।**
**न चाप्यपोह्यभेदेन भेदोऽस्तीत्युपपादितम् ॥ ९६३ ॥**

शब्दानां भिन्नसामान्यवचनानां विशेषवचनानां च परस्परतो भेदः शब्दभेदः। **तन्निमित्त** इति । स वासनाभेदो वाच्यापोहभेदो वा निमित्तं कारणमस्येति तन्निमित्तः । ननु प्रत्यक्षत एव शब्दानां कारणभेदाद्विरुद्धधर्माध्यासाच्च भेदः प्रसिद्ध एवेत्याह—**न ह्यसाधारण** इत्यादि । वाचकं हि शब्दमधिकृत्यैतदुच्यते, न च श्रोत्रज्ञानावसेयो यः स्वलक्षणात्माऽसाधारणशब्दो वाचकः । कस्मादित्याह—**प्रागदृष्टित** इति । यो हि व्यवहारकालावस्थायी शब्दः स व्यवहारकालात्प्राक् सङ्केतकाले न दृष्टः, यो दृष्टस्तस्य चिरनिरुद्धत्वान्न तेन व्यवहारः, न च सङ्केतकाले यो न दृष्टस्तेन व्यवहारो युक्तोऽतिप्रसङ्गात् । तस्मान्न स्वलक्षणस्य वाचकत्वम् । भवतामपि चात्र विवाद एव । यथोक्तम्—"नार्थशब्दविशेषस्य वाच्यवाचकतेष्यते । तस्य पूर्वमदृष्टत्वात्सामान्यं तूपदेक्ष्यते ॥" इति । तस्माद्वाचकं शब्दमधिकृत्याभिधानाददोषः। तत्रैवमवस्थिते सति शब्दान्तरापोहः शब्दसामान्यं वाचकं यदि कल्प्यते, यथार्थान्तरापोहोऽर्थसामान्यं, तदा तथैव—पूर्वोक्तेन विधिना संसृष्टैकत्वनानात्वेत्यादिनोक्तेन, वाच्यापोहानामिव शब्दापोहानामपि परस्परतो भेदो न घटते । नीरूपत्वात्। यथाच वाचकानां परस्परतो भेदो न सङ्गच्छते, एवं वाच्यवाचकयोरपि मिथः परस्परतो भेदो न कल्प्यते, निःस्वभावत्वात् । स्यादेतदपोह्यभेदेन भेदो भविष्यतीत्यत आह—**न चापी**त्यादि । यथा चापोह्यभेदादपि भेदो न विकल्प्यते तथा "न विशेषः स्वतस्तस्य"त्यादिना प्रतिपादितम् ॥ ९६१ ॥ ९६२ ॥ ९६३ ॥

तदेवं प्रतिज्ञायाः प्रतीत्यभ्युपेतबाधा प्रतिपादिता । साम्प्रतं वाच्यवाचकत्वाभावप्रसङ्गापादनाभ्युपेतबाधादिदोषं प्रतिपिपादयिषुः प्रमाणयन्नाह—**न गम्येत्यादि** ।

**न गम्यगमकत्वं स्यादवस्तुत्वादपोहयोः ।**
**भवत्पक्षे यथा लोके खपुष्पशशशृङ्गयोः ॥ ९६४ ॥**

ये अवस्तुनी न तयोर्गम्यगमकत्वमस्ति, यथा खपुष्पशशशृङ्गयोः, अवस्तुनी च वाच्यवाचकापोहौ भवेतामिति व्यापकविरुद्धोपलब्धेः ॥ ९६४ ॥

ननु च मेघाभावाद्वृष्ट्यभावप्रतीतेरनैकान्तिकता हेतोरित्याह—**वृष्टिमेघासतो-रित्यादि** ।

**वृष्टिमेघासतोर्दृष्ट्वा यद्यनैकान्तिकं वदेत् ।**
**वस्त्वस्त्वेवात्र मत्पक्षे भवत्पक्षेऽप्यदः कुतः ॥ ९६५ ॥**

वृष्टिमेघयोरसती—असत्त्वे, अभावाविति यावत् । भावप्रधानत्वान्निर्देशस्य । तयोर्दृष्ट्वा—गम्यगमकमित्यधिकृतम् । यद्यनैकान्तिकमवस्तुत्वादिति हेतुं वदेद्बौद्धस्त-दप्ययुक्तम्, यस्मात्तद्विविक्ताकाशालोकात्मकं वस्तु मत्पक्षेऽत्रापि वृष्टिमेघाभावप्रयो-गेऽस्त्येव । अभावस्य वस्तुत्वप्रतिपादनात् । भवतस्तु बौद्धस्य पक्षे अदोऽपि—एत-द्वृष्टिमेघाभावयोर्गम्यगमकत्वं कुतः—नैव । अपिशब्दो भिन्नक्रमः, अद इत्यस्यान-न्तरं सम्बध्यते । तेनायमर्थो भवति । न केवलमपोह्योर्विवादास्पदीभूतयोर्गम्यगम-कत्वं भवतो न युक्तम्, एतदपि वृष्टिमेघाभावयोर्गम्यगमकत्वं न युज्यत एवेति ॥ ९६५ ॥

किंच—यदेतद्भवद्भिरन्वयोपसर्जनयोर्व्यतिरेकप्रधानयोः शब्दलिङ्गयोः स्वविष-यप्रतिपादकत्वं वर्ण्यते, यच्च—"अदृष्टेरन्यशब्दार्थे स्वार्थस्यांशेऽपि दर्शनात् । श्रुतेः सम्बन्धसौकर्यं न चास्ति व्यभिचारिते"त्यादि वर्णितम्, तदपोहाभ्युपगमे न युक्त-मित्येतत्प्रतिपादयन्नाह—**विधिरूपश्चे**त्यादि ।

**विधिरूपश्च शब्दार्थो येन नाभ्युपगम्यते ।**
**न भवेद्व्यतिरेकोऽपि तस्य तत्पूर्वको ह्यसौ ॥ ९६६ ॥**

**तत्पूर्वक** इति । विधेः पूर्वकः । विधेर्निवृत्तिलक्षणत्वाद्व्यतिरेकस्येति भावः । किंच—नीलोत्पलादिशब्दानां विशेषणविशेष्यभावः सामानाधिकरण्यं च यदेतल्लो-कप्रतीतं तस्यापह्नवोऽपोहवादे प्राप्नोति ॥ ९६६ ॥

यच्चेदमुच्यते—विशेषणविशेष्यत्वसामानाधिकरण्यसमर्थनार्थम्—"अपोह्यभेदा-द्भिन्नार्थाः स्वार्थभेदगतौ जडाः । एकत्राभिन्नकार्यत्वाद्विशेषणविशेष्यकाः ॥ तन्मात्रा-काङ्क्षणाद्भेदः स्वसामान्येन नोज्झितः । नोपात्तः संशयोत्पत्तेः साम्ये चैकार्थता तयोः ॥" इति । तदेतन्नोपपद्यत इति दर्शयन्नाह—**अपोहमात्रवाच्यत्वमि**त्यादि ।

अपोहमात्रवाच्यत्वं यदिहाभ्युपगम्यते ।
नीलोत्पलादिशब्देषु शबलार्थाभिधायिषु ॥ ९६७ ॥
विशेषणविशेष्यत्वसामानाधिकरण्ययोः ।
न सिद्धिर्न ह्यनीलत्वव्युदासेऽनुत्पलच्युतिः ॥ ९६८ ॥
नापि तत्रेतरस्तस्मान्न विशेष्यविशेषणे ।
शब्दयोर्नापि ते स्यातामभिधेयानपेक्षयोः ॥ ९६९ ॥

पूर्वमर्थयोरेव विशेष्यविशेषणभावो निरस्तः । इदानीं शब्दयोरपि निरस्यत इति न पुनरुक्तता । तत्र परस्परं व्यवच्छेदकभावो विशेषणविशेष्यभावः, स च वाक्य एव व्यवस्थाप्यते, यथा नीलमुत्पलमिति । तथा व्यधिकरणयोरपि भवति, यथा राज्ञः पुरुष इत्यादौ । भिन्ननिमित्तप्रयुक्तयोस्त्वेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्, तच्च नीलोत्पलमित्यादौ वृत्तावेव व्यवस्थाप्यते । तत्र नीलोत्पलादिशब्देषु शबलार्थाभिधायिषु यदेतत्सामानाधिकरण्यादि, तस्य न सिद्धिः । शबलोर्थः—चित्रः, यथोक्तम्—"न हि तत्केवलं नीलं न च केवलमुत्पलम् । समुदायाभिधेयत्वात्" इति । कस्मात्सिद्धिर्न भवतीत्याह—**न हीत्यादि** । यस्मादनीलत्वव्युदासेऽनुत्पलव्युदासो नास्ति । तत्र—अनुत्पलच्युतौ । इतरः—नीलव्युदासः । क्वचिदितरेति स्त्रीलिङ्गस्य पाठः । स च्युतिशब्दापेक्षया द्रष्टव्यः । इतरा—अनीलच्युतिरित्यर्थः । नानयोः परस्परमाधाराधेयसम्बन्धोऽस्ति, नीरूपत्वादिति यावत् । नचासति सम्बन्धे विशेष्यविशेषणभावो युक्तोऽतिप्रसङ्गादित्युक्तम् । एतेन युष्मन्मते शबलार्थाभिधायित्वमेव नास्ति, सर्वेषामभाववाचित्वादित्युक्तं भवति । तस्मान्न विशेष्यविशेषणे युक्ते । स्यादेतन्माभूदर्थयोर्विशेष्यविशेषणभावस्तद्वाचकयोस्तु शब्दयोः किमिति न भवतीत्यत आह—**शब्दयोरित्यादि** । अभिधेयद्वारेणैव हि तदभिधायिनोः शब्दयोर्विशेष्यविशेषणभाव उपचर्यते, अभिधेये च तस्यासम्भवे सत्यभिधानेऽपि कुतस्तदारोपः ॥ ९६७ ॥ ९६८ ॥ ९६९ ॥

सामानाधिकरण्यं दूषयन्नाह—**सामानाधिकरण्यं चेति** ।

सामानाधिकरण्यं च न भिन्नत्वादपोहयोः ।
अर्थतश्चेत्तदिष्येत कीदृश्याधेयता तयोः ॥ ९७० ॥

एकस्मिन्नर्थे वृत्तौ सत्यां सामानाधिकरण्यं भवति । न च नीलोत्पलशब्दयोरेक-

स्मिन्नर्थे वृत्तिः सम्भवति । तद्वाच्ययोरनीलानुत्पलव्यवच्छेदलक्षणयोरपोह्योर्भिन्नत्वात् । तथाहि—भवद्भिरेवोक्तमपोह्यभेदाद्भिन्नार्था इति । प्रयोगः—न नीलोत्पलादिशब्दाः सामानाधिकरण्यव्यवहारविषयाः, भिन्नविषयत्वात्, घटपटादिशब्दवत् । अथापि स्याद्यत्रैव ह्यनुत्पलव्युदासो वर्त्तते तत्रैवानीलव्युदासोऽपि स्थित इत्यतो नीलोत्पलशब्दवाच्ययोरपोह्योरेकस्मिन्नर्थे वृत्तेरर्थद्वारकं सामानाधिकरण्यं शब्दयोरपि निर्दिश्यत इत्यत आह—**अर्थतश्चे**त्यादि । **त**दिति । सामानाधिकरण्यम् । **तयो**रिति—अनीलानुत्पलव्युदासयोः । नैव काचिद्वास्तवी तयोराधेयता सम्भवति, नीरूपस्य क्वचिदवस्थानासम्भवात्, यथा वन्ध्यापुत्रस्येति भावः ॥ ९७० ॥

किंच—भवतु नाम नीलोत्पलादिष्वर्थेषु तयोराधेयता, तथापि सा विद्यमानापि सती न शब्दैः प्रतिपाद्यत इति दर्शयति—**न चे**त्यादि ।

**न चासाधारणं वस्तु गम्यतेऽन्यच्च नास्ति ते ।**
**अगम्यमानमैकार्थ्यं शब्दयोः क्वोपयुज्यते ॥ ९७१ ॥**

यस्मात्तदेव तावदसाधारणं नीलोत्पलादि वस्तु न शब्देन गम्यते, तत्र सर्वविकल्पानां प्रत्यस्तमयादित्युक्तम् । ततश्च तस्मिन्नाधारभूते वस्तुन्यज्ञाते तदधिकरणयोरपोह्योस्तदाधेयता कथं ग्रहीतुं शक्यते, धर्मिग्रहणनान्तरीयकत्वाद्धर्मग्रहणस्येति भावः । अथापि स्यादसाधारणार्थव्यतिरेकेण तयोरन्यदेवाधिकरणमस्त्यतोऽयमदोष इत्यत आह—**अन्यच्चे**त्यादि । **त** इति । त(व) । स्यादेतद्यदि नामैकार्थ्यं न गम्यते, तथापि वस्तुस्थित्याऽवस्थितमेवेत्याह—**अगम्यमान**मित्यादि । **ऐकार्थ्य**मिति । सामानाधिकरण्यम् । **क्वोपयुज्यत** इति । न क्वचिदित्यर्थः । सतोऽप्यज्ञातस्य शाब्दे व्यवहारेऽनङ्गत्वात् ॥ ९७१ ॥

अथापि स्यात्—यदि व्यावृत्तिमात्रं शब्देनोच्येत तदाऽयं दोषः स्यात्, यावता व्यावृत्तिमद्वस्तु वाच्यम्, अतो व्यावृत्तिद्वयोपाधिकयोः शब्दयोरेकस्मिन्नपोहवति वस्तुनि वृत्तेः सामानाधिकरण्यमस्त्येवेत्यत आह—**अथे**त्यादि ।

**अथाप्यपोहवद्वस्तु वाच्यमित्यभिधीयते ।**
**तत्रापि परतन्त्रत्वाद्व्याप्तिः शब्देन दुर्लभा ॥ ९७२ ॥**

**तत्रापी**ति । अपोहवति वस्तुनि वाच्यत्वेनाङ्गीक्रियमाणेऽनीलादिभेदानामुत्पलादीनां नीलादिशब्दैर्व्याप्तिराक्षेपो दुर्लभः, किं कारणम्? परतन्त्रत्वान्नीलादिशब्दस्य,

स हि व्यावृत्त्युपसर्जनं तद्वन्तमर्थमाह, न साक्षात् । ततश्च साक्षादनभिधानात्तद्गतभेदाक्षेपो नास्ति, यथा मधुरशब्देन शुक्लादेः । यद्यपि वस्तुस्थित्या शुक्लादीनां (अ)-मधुरादिभेदत्वमस्ति । तथापि शब्दस्य साक्षादभिहितार्थगतस्यैव भेदस्याक्षेपसामर्थ्यं न तु पारतन्त्र्येणाभिहितार्थगतस्येति भावः । ततश्च नीलादिशब्देन तद्गतभेदानाक्षेपादुत्पलादीनामतद्भेदत्वं स्यात्, अतद्भेदत्वे च सामानाधिकरण्यं न प्राप्नोति । तेन जातिमन्मात्रपक्षे यो दोष उक्तो भवता "तद्वतो न वाधकः शब्दोऽस्वतन्त्रत्वा"-दिति, स व्यावृत्तिमन्मात्रपक्षेऽपि तुल्य इति दर्शितं भवति । तथाहि—जातिमन्मात्रे शब्दार्थे—सच्छब्दो जातिस्वरूपोपसर्जनं द्रव्यमाह न साक्षादिति तद्गतघटादिभेदानाक्षेपादतद्भेदत्वे सामानाधिकरण्याभावप्रसङ्ग उक्तः, स व्यावृत्तिमन्मात्रपक्षेऽपि समानः, तत्रापि हि सच्छब्दो व्यावृत्त्युपसर्जनं द्रव्यमाह न साक्षादिति, तद्गतभेदानाक्षेपोऽत्रापि समान एव, को ह्यत्र विशेषो जातिर्व्यावृत्तिर्जातिमान्व्यावृत्तिमानिति ॥ ९७२ ॥

दोषान्तरमाह—लिङ्गेत्यादि ।

**लिङ्गसङ्ख्यादिसम्बन्धो न चापोहस्य विद्यते ।**
**व्यक्तेश्चाव्यपदेश्यत्वात्तद्द्वारेणापि नास्त्यसौ ॥ ९७३ ॥**

लिङ्गानि—स्त्रीत्वपुंस्त्वनपुंसकानि, सङ्ख्या—एकत्वद्वित्वबहुत्वानि, आदिग्रहणेन क्रियाकालादिसम्बन्धपरिग्रहः । एभिः सम्बन्धो नास्त्यपोहस्य, अवस्तुत्वात्, एषां च वस्तुधर्मत्वात् । न च लिङ्गादिविविक्तः पदार्थः शक्यः शब्देनाभिधातुम् । अतः प्रतीतिबाधाप्रसङ्गः प्रतिज्ञाया इति भावः । अथापि स्याद्व्यावृत्त्याधारभूताया व्यक्तेर्वस्तुत्वाल्लिङ्गादिसम्बन्धोऽस्ति, एतद्द्वारेणापोहस्यापि व्यवस्थाप्यत इत्याह—व्यक्तेश्चेत्यादि । सा हि व्यक्तिर्निर्विकल्पत्वाल्लिङ्गसङ्ख्यादिसम्बन्धेन व्यपदेष्टुं न पार्यते, ततः कथमपोहे तद्द्वारेण तद्व्यवस्था सिद्ध्येत् ॥ ९७३ ॥

अव्यापित्वं चापोहशब्दार्थव्यवस्थयोर्दर्शयन्नाह—आख्यातेष्वित्यादि ।

**आख्यातेषु च नान्यस्य निवृत्तिः सम्प्रतीयते ।**
**न पर्युदासरूपं हि निषेध्यं तत्र विद्यते ॥ ९७४ ॥**

आख्यातेषु—तिङन्तेषु पचति गच्छतीत्येवमादिषु क्रियाप्रधानेषु शब्देषु, नान्यव्यवच्छेदो गम्यते, कस्मादित्याह—न पर्युदासरूपं हीत्यादि । यथा सुबन्तेषु

घटादिशब्देषु निष्पन्नरूपमघटादिकं पर्युदासरूपं निषेध्यमस्ति न तथा पचतीत्यादिषु, प्रतियोगिनो निष्पन्नस्य कस्यचिदप्रतीतेः ॥ ९७४ ॥

स्यादेतन्माभूत्पर्युदासरूपं निषेध्यं, न पचतीत्येवमादि प्रसज्यरूपं पचतीत्यादेर्निषेध्यं भविष्यतीत्याह—**न नेति** हीत्यादि ।

**न नेति ह्युच्यमानेऽपि निषेधस्य निषेधनम् ।**
**पचतीत्यनिषिद्धं तु स्वरूपेणैव तिष्ठति ॥ ९७५ ॥**
**साध्यत्वप्रत्ययश्चात्र तथा भूतादिरूपणम् ।**
**निष्पन्नत्वादपोहस्य निर्निमित्तं प्रसज्यते ॥ ९७६ ॥**

न न पचतीत्येवमुच्यमानेऽपि प्रसज्यप्रतिषेधस्य निषेधनमेवोक्तं स्यात् । ततश्च को दोष इत्याह—**पचतीत्यनिषिद्ध**मित्यादि । प्रतिषेधद्वयस्य विधेर्विषयत्वात्पचतीत्येतत्स्वरूपेणैव विध्यात्मनैव तिष्ठतीति विधिरेव शब्दार्थः स्यात् । किंच—अत्र पचतीत्यादौ साध्यत्वं प्रतीयते । यस्याः क्रियायाः केचिदवयवा निष्पन्नाः केचिदनिष्पन्नाः सा पूर्वापरीभूतावयवा क्रिया साध्यत्वप्रत्ययविषया । तथाऽभूद्भविष्यतीत्यादौ भूतादिकालविशेषप्रतीतिरस्ति । नचापोहस्य साध्यत्वादिसम्भवः, निष्पन्नत्वादभावैकरसत्वेन । तस्मादपोहशब्दार्थपक्षे साध्यत्वप्रत्ययो भूतादिप्रत्ययश्च निर्निमित्तः प्राप्नोतीति प्रतीतिबाधा । **भूतादिरूपण**मिति । भूतादीनामवधारणं प्रत्यय इति यावत् ॥ ९७५ ॥ ९७६ ॥

पुनरप्यव्यापिनं दर्शयन्प्रतीतिबाधामेव दर्शयति—**विध्यादावि**त्यादि ।

**विध्यादावर्थराशौ च नान्यापोहनिरूपणम् ।**
**नञश्चापि नञा युक्तावपोहः कीदृशो भवेत् ॥ ९७७ ॥**
**चादीनामपि नञ्योगो नैवास्तीत्यनपोहनम् ।**
**वाक्यार्थेऽन्यनिवृत्तिश्च व्यपदेष्टुं न शक्यते ॥ ९७८ ॥**
**अनन्यापोहशब्दादौ वाच्यं न च निरूप्यते ।**
**प्रमेयज्ञेयशब्दादेरपोह्यं कुत एव तु ॥ ९७९ ॥**

आदिशब्देन निमन्त्रणामन्त्रणादीनां ग्रहणम्—अन्यापोहस्य—अन्यव्यवच्छेदस्य न निरूपणमुपलम्भोऽस्ति। "न पर्युदासरूपं हि निषेध्यं तत्र विद्यत" इत्येतत्पूर्वोक्तमेवात्र कारणमिति भावः । न न पचति देवदत्त इत्यादौ नञोऽपरेण नञा योगे सति

कीदृशोऽपोहो भवेत् । नैव कश्चित् । प्रतिषेधद्वये विधेरेव संस्पर्शनात् । अपिच चादीनां निपातोपसर्गकर्मप्रवचनीयानां पदत्वमिष्टम्, नचैषां नञा सम्बन्धोऽस्त्यसत्त्ववचनत्वात् । तथाहि—यथा घटादिशब्दानामघट इत्यादौ नञा सम्बन्धे सत्यर्थान्तरस्य पटादेः परिग्रहात्तद्व्यवच्छेदेन नञा रहितस्य घटशब्दस्यार्थोऽवकल्प्यते, न तथा चादीनां नचेत्यादि नञा सम्बन्धोऽस्ति । नचासम्बध्यमानस्य नञाऽपोहनं युक्तम् । अतश्चादिष्वनपोहनम् । अपोहाभाव इत्यर्थः । किंच—वाक्यार्थः कल्माषवर्णवच्छबलैकरूप इष्यते, अतस्तत्रान्यनिवृत्तिर्व्यपदेष्टुं न शक्यते । निष्पन्नरूपस्य प्रतियोगिनोऽप्रतीतेः । या चात्र चैत्र गामानयेत्यादावचैत्रादिव्यवच्छेदरूपान्यनिवृत्तिरवयवपरिग्रहेण वर्ण्यते, सा पदार्थ एव स्यान्न वाक्यार्थः । तस्यानवयवस्येत्थं विवेक्तुमशक्यत्वादित्यव्यापिनी शब्दार्थव्यवस्था । अपि च—नान्यापोहोऽनन्यापोह इत्यादौ शब्दे विधिरूपादन्यद्वाच्यं न निरूप्यते—नोपलभ्यत इत्यर्थः । तथाहि—नापोहरूपमात्रं वाच्यं गम्यते, प्रतिषेधद्वयेन विधेरेवावसायात् । आदिशब्देनाऽनन्यव्यावृत्तिरनन्यव्यवच्छेद इत्यादिपर्यायग्रहणम् । ननु च नञश्चापि नञा युक्तावित्यनेनैव गतत्वात्पुनरुक्तमेतत् । सत्यमेतत् । किंत्वन्यापोहः शब्दार्थ इत्येवं वादिना स्ववचनेनैव विधिरिष्ट इति ज्ञापनार्थं पुनरुच्यते । तथा ह्यन्यापोहशब्दस्यानन्यापोहशब्दार्थो व्यवच्छेद्यः, स च विधेर्नान्यो लक्ष्यते । ये च प्रमेयज्ञेयाभिधेयादयः शब्दास्तेषां न किंचिदपोह्यमस्ति । सर्वस्यैव प्रमेयत्वादिस्वभावत्वात् । तथाहि—यन्नाम किंचिद्व्यवच्छेद्यमेषां कल्प्यते, तत्सर्वं व्यवच्छेदाकारेणालम्ब्यमानं ज्ञेयादिस्वभावमेवावतिष्ठते, नह्यविषयीकृतं व्यवच्छेत्तुं शक्यते । ततश्चैषामपोह्यार्थाभावादव्यापिनी व्यवस्था ॥ ९७७ ॥ ९७८ ॥ ९७९ ॥

ननु हेतुमुखे निर्दिष्टम्—अज्ञेयं कल्पितं कृत्वा तद्व्यवच्छेदेन ज्ञेयेऽनुमानमिति । तत्कथमव्यापित्वं शब्दार्थव्यवस्थाया इत्याह—अपोह्येत्यादि ।

**अपोह्यकल्पनायां च वरं वस्त्वेव कल्पितम् ।**
**ज्ञानाकारनिषेधाच्च नान्तरार्थोऽभिधीयते ॥ ९८० ॥**
**नचाप्यपोह्यता तस्मान्नापोहस्तेषु सिद्ध्यति ।**
**एवमित्यादिशब्दानां न चापोह्यं निरूप्यते ॥ ९८१ ॥**

यदि ज्ञेयमपि सर्वं ज्ञेयत्वेनापोह्यमस्य कल्प्यते तदा वरं वस्त्वेव विधिरूपमेव

शब्दार्थत्वेन विकल्पितं भवेद्यदध्यवसीयते लोकेन । एवं ह्यदृष्टारोपो दृष्टार्थापलापश्च न कृतः स्यादिति भावः । अत एव वरमित्युक्तम् । ये त्वाहुर्विकल्पप्रतिबिम्बकमेव सर्वशब्दानामर्थस्तदेव चाभिधीयते व्यवच्छिद्यत इति चोच्यत इति । तान्प्रतीदमाह **—ज्ञानाकारनिषेधाच्चे**त्यादि । निराकारा बुद्धिराकारवान्बाह्योऽर्थः, स च बहिर्देशसम्बन्धो विस्पष्टमुपलभ्यत इत्येवमस्माभिर्ज्ञानाकारो निषिद्धः, तस्मादान्तरस्य बुद्ध्यारूढस्याकारस्यासत्त्वात्तदभिधायकत्वं शब्दानामयुक्तम् । नापि तस्यान्तरस्यार्थस्यापोह्यत्वं युक्तम्, असत्त्वादेव । **तेष्विति** । प्रमेयादिशब्देषु । ये च—एवमित्थमित्यादयः शब्दास्तेषामपि न किंचिदपोह्यमुपलभ्यते, कस्यचित्प्रतियोगिनः पर्युदासरूपस्याभावात् । अथापि स्यात्—नैवमित्यादि प्रसज्यरूपं निषेध्यं भवतीति । नैतदस्त्युक्तमत्र । तथाहि—अत्रापि न नैवमिति निर्देशे निषेधस्य निषेधनम्, एवमित्यनिषिद्धं तु स्वरूपेणैव तिष्ठतीति सैव पूर्वोक्ता नीतिरवतरति ॥ ९८० ॥ ९८१ ॥

एतत्सर्वं कुमारिलोक्तमुपन्यस्तम्, साम्प्रतं सर्वशब्दस्येत्यादिनोद्योतकारोक्तमपोहदूषणमाशङ्कते—

**सर्वशब्दस्य कश्चार्थो व्यवच्छेद्यः प्रकल्प्यते ।**
**नासर्वनाम किञ्चिद्धि भवेद्यस्य निराक्रिया ॥ ९८२ ॥**
**एकाद्यसर्वमिति चेदर्थापोहः प्रसज्यते ।**
**अङ्गानां प्रतिषिद्धत्वादनिष्टेश्चाङ्गिनः पृथक् ॥ ९८३ ॥**
**एवं समूहशब्दार्थे समुदायिव्यपोहतः ।**
**अन्यानिष्टेश्च सर्वेऽपि प्राप्नुवन्ति निरर्थकाः ॥ ९८४ ॥**
**द्व्यादिशब्दा इहेष्टाश्च ये समुच्चयगोचराः ।**
**एकादिप्रतिषेधेन न भवेयुस्तथाविधाः ॥ ९८५ ॥**
**नागौरिति च योऽपोहो गोशब्दस्यार्थ उच्यते ।**
**स किं भावोऽथवाऽभावो भावो गौर्वाऽथवाऽप्यगौः ॥ ९८६ ॥**
**गौश्चेन्नास्ति विवादोऽयमर्थस्तु विधिलक्षणः ।**
**अगौर्गोशब्दवाच्यश्चेदतिशब्दार्थकौशलम् ॥ ९८७ ॥**
**अभावोऽपि न युक्तोऽयं प्रैषादीनामसम्भवात् ।**
**न हि गोशब्दतः कश्चिदभावं प्रतिपद्यते ॥ ९८८ ॥**

स ह्याह। अपोहः शब्दार्थ इत्ययुक्तमेतत्, अव्यापकत्वात्। यत्र द्वैराश्यं भवति तत्रेतरप्रतिषेधादितरत्प्रतीयते—यथा गौरिति पदे गौः प्रतीयमानोऽगौर्निषेध्यमानः। न पुनः सर्वपदे एतदस्ति। न ह्यसर्वं नाम किंचिदस्ति, यत्सर्वशब्देन निवर्त्त्येत। अथ मन्यसे—एकाद्यसर्वं तत्सर्वशब्देन निवर्त्त्येत इति। तन्न, स्वार्थापवाददोषप्रसङ्गात्। एवं ह्येकादिव्युदासेन प्रवर्त्तमानः सर्वशब्दोऽङ्गप्रतिषेधादङ्गव्यतिरिक्तस्याङ्गिनोऽनभ्युपगमादनर्थकः स्यात्। अङ्गशब्देनैकदेश उच्यते। एवं सर्वे समुदायशब्दा एकदेशप्रतिषेधरूपेण प्रवर्त्तमानाः समुदायिव्यतिरिक्तस्यान्यस्य समुदायस्यानभ्युपगमादनर्थकाः प्राप्नुवन्ति। द्व्यादिशब्दानां च विषयसमुच्चयत्वादेकादिप्रतिषेधे प्रतिषिध्यमानानामर्थानामसमुच्चयत्वादनर्थकत्वम्, तद्दर्शयति—**न भवेयुस्तथाविधा** इति। इष्टास्ते समुच्चयगोचरास्तथाविधा न भवेयुरित्यर्थः। यश्चायमगोऽपोहो गौर्न भवतीति गोशब्दस्यार्थः स किं भावोऽथाभावः? यदि भावः स किं गौरथाऽगौरिति। यदि गौः, नास्ति विवादः। अथागौः, गोशब्दस्यागौरर्थ इत्यतिशब्दार्थकौशलम्। अथाभावः, तन्न युक्तम्, प्रैषसम्प्रतिपत्त्योरविषयत्वात्। न हि शब्दश्रवणादभावे प्रैषः सम्प्रतिपत्तिश्च भवेत्। तदेतद्दर्शयति—**अभावोऽपि न युक्तोऽयमित्यादि**। प्रैषणं प्रैषः, प्रतिपादकेन श्रोतुरर्थे विनियोगः, सोऽयं प्रतिपादकधर्मः। सम्प्रतिपत्तिः श्रोतृधर्मः। आदिशब्देन भावधर्माः सर्वे वाहदोहादयो गृह्यन्ते। अपि च शब्दार्थः प्रतीत्या प्रतीयते, न च गोशब्दादभावं कश्चित्प्रतिपद्यते ॥ ९८२ ॥ ९८३ ॥ ९८४ ॥ ९८५ ॥ ९८६ ॥ ९८७ ॥ ९८८ ॥

किंच क्रियारूपत्वादपोहस्य विषयो वक्तव्यः, तत्रागौर्न भवतीत्ययमपोहः किं गोविषयोऽथागोविषयः। यदि गौर्विषयः, कथं गोर्गव्येवाभावः। अथागौर्विषयः, कथमन्यविषयादपोहादन्यत्र प्रतिपत्तिः, नहि खदिरे च्छिद्यमाने पलाशे छिदा भवति। अथागोर्गवि प्रतिषेधो गौरगौर्न भवतीति, केनागोत्वं प्रसक्तं यत्प्रतिषिध्यत इति। तदत्र प्रथमौ विकल्पावत्यसम्बद्धाविति मत्वा तृतीयमेव दर्शयन्नाह—**नागौर्गौरित्यादि**।

**नागौर्गौरिति शब्दार्थः कस्माच्चापोह इष्यते।**
**केन ह्यगोत्वमासक्तं गौर्येनैतदपोह्यते ॥ ९८९ ॥**
**अगौरपोहो यश्चायं गवि शब्दार्थ उच्यते।**
**स किं गोर्व्यतिरिक्तो वाऽव्यतिरिक्त उपेयते ॥ ९९० ॥**

विभिन्नोऽप्याश्रितो वा स्यादथवा स्यादनाश्रितः ।
आश्रितत्वे गुणः प्राप्तो न द्रव्यवचनं ततः ॥ ९९१ ॥
अतो गौरितिशब्देन गुणमात्राभिधानतः ।
सामानाधिकरण्यं स्यान्न गौर्गच्छति तिष्ठति ॥ ९९२ ॥
अथानाश्रित एवायं यद्यर्थस्तस्य को भवेत् ।
येनासौ प्रतिषेधाय गौरिति व्यपदिश्यते ॥ ९९३ ॥
अथ चाव्यतिरिक्तोऽयमन्यापोहस्त्वयेष्यते ।
गौरेवायमतः प्राप्तः किमुक्तमधिकं ततः ॥ ९९४ ॥

चशब्दः समुच्चये । कस्माच्च भवता गौरित्येतस्य नागौरित्येषोऽपोहलक्षणः शब्दार्थ उच्यत इति वाक्यार्थः । कस्मात्पुनर्न वक्तव्या इत्याह—केनेत्यादि । इतश्चायुक्तोऽपोहो विकल्पानुपपत्तेः । तथाहि—योऽयमगोरपोहो गवि स किं गोव्यतिरिक्तः ? आहोस्विदव्यतिरिक्तः ? यद्यतिरिक्तः स किमाश्रितोऽथानाश्रितः । यद्याश्रितस्तदाऽऽश्रितत्वाद्गुणः प्राप्तः, ततश्च गोशब्देन गुण एवाभिधीयते नागौरिति गौस्तिष्ठति गौर्गच्छतीति सामानाधिकरण्यं न प्राप्नोति । अथानाश्रितस्तदा केनार्थेनागोरपोह इति षष्ठी स्यात् । अथाव्यतिरिक्तस्तदा गौरेवासाविति न किंचित्कृतं भवति ॥ ९८९ ॥ ॥ ९९० ॥ ९९१ ॥ ९९२ ॥ ९९३ ॥ ९९४ ॥

प्रतिभावमपोहोऽयमेकोऽनेकोऽपिवा भवेत् ।
यद्येकोऽनेकगोयुक्तो गोत्वमेव भवेदसौ ॥ ९९५ ॥
अनेकत्वेऽपि चानन्त्यं पिण्डवत्संप्रयुज्यते ।
तेन भेदवदेवास्य वाच्यता नोपयुज्यते ॥ ९९६ ॥

अयं चापोहः प्रतिवस्त्वेकोऽनेको वेति वक्तव्यम् । यद्येकस्तदाऽनेकगोद्रव्यसम्बन्धी गोत्वमेवासौ भवेत् । अथानेकस्ततः पिण्डवदानन्त्यादाख्यानानुपपत्तेरवाच्य एव स्यात् ॥ ९९५ ॥ ९९६ ॥

अन्यापोहश्च किं वाच्यः किं वाऽवाच्योऽयमिष्यते ।
वाच्योऽपि विधिरूपेण यदि वाऽन्यनिषेधतः ॥ ९९७ ॥
विध्यात्मनाऽस्य वाच्यत्वे त्याज्यमेकान्तदर्शनम् ।
सर्वत्रान्यनिरासोऽयं शब्दार्थ इति वर्णितम् ॥ ९९८ ॥

अथापोह्व्युदासेन यद्यपोहोऽभिधीयते ।
तत्र तत्रैवमिच्छायामनवस्था भवेत्ततः ॥ ९९९ ॥
अथाप्यवाच्य एवायं यद्यपोहस्त्वयेष्यते ।
तेनान्यापोहकृच्छब्द इति बाध्येत ते वचः ॥ १००० ॥

किंचेदं तावत्प्रष्टव्यो भवति भवान्, किमपोहो वाच्योऽथावाच्य इति । वाच्यत्वे विधिरूपेण वा वाच्यः स्यादन्यव्यावृत्त्या वा । तत्र यदि विधिरूपेण तदा नैकान्तिकः शब्दार्थोऽन्यापोहः शब्दार्थ इति । अथान्यव्यावृत्त्येति पक्षस्तदा तस्याप्यन्यव्यवच्छेदस्यापरेणान्यव्यवच्छेदरूपेणाभिधानं तस्याप्यपरेणेत्यव्यवस्था स्यात् । अथावाच्यस्तदाऽन्यशब्दार्थापोहं शब्दः करोतीति व्याहन्येत ॥ ९९७ ॥ ९९८ ॥ ॥ ९९९ ॥ १००० ॥

एतत्सर्वमुद्योतकरेणोक्तमुपन्यस्तम्, तत्राचार्यदिग्नागेनोक्तम्—"सर्वत्राभेदादाश्रयस्यानुच्छेदात्कृत्स्नार्थपरिसमाप्तेश्च यथाक्रमं जातिधर्मा एकत्वनित्यत्वप्रत्येकपरिसमाप्तिलक्षणा अपोह एवावतिष्ठन्ते, तस्माद्गुणोत्कर्षादप्यर्थान्तरापोह एव शब्दार्थः साधु"रिति । एतदाशङ्क्य कुमारिल उपसंहरन्नाह—अपि चैकत्वेत्यादि ।

अपि चैकत्वनित्यत्वप्रत्येकसमवायिनः ।
निरुपाख्येष्वपोहेषु कुर्वतोस्तत्र कः परः ॥ १००१ ॥
तस्माद्येष्वेव शब्देषु नञ्योगस्तेषु केवलम् ।
भवेदन्यनिवृत्त्यंशः स्वात्मैवान्यत्र गम्यते ॥ १००२ ॥

येष्वेव शब्देषु नञ्योग इति । अभक्ष्यो ग्रामसूकर इत्यादिषु । स्वात्मैवेति । स्वरूपमेव विधिलक्षणम् । अन्यत्रेति । नञ्रहिते ॥ १००१ ॥ १००२ ॥

एवं यथाप्रधानं परमतमाशङ्क्य, अन्यापोहापरिज्ञानादित्यादिना समाधानमारभते ।

अन्यापोहापरिज्ञानादेवमेते कुदृष्टयः ।
स्वयं नुष्टा दुरात्मानो नाशयन्ति परानपि ॥ १००३ ॥
तथाहि द्विविधोऽपोहः पर्युदासनिषेधतः ।
द्विविधः पर्युदासोऽपि बुद्ध्यात्मार्थात्मभेदतः ॥ १००४ ॥

पर्युदासनिषेधत इति । पर्युदासान्निषेधाच्च पर्युदासलक्षणः प्रसज्यप्रतिषेधश्चेति

यावत्। **बुद्ध्यात्मार्थात्मभेदत** इति। बुद्ध्यात्मभेदादर्थात्मभेदादित्यर्थः। तत्र बुद्ध्यात्मा—बुद्धिप्रतिभासोऽर्थेष्वनुगतैकरूपत्वेनाध्यवसितः, अर्थात्मा—अर्थस्वभावो विजातीयव्यावृत्तमर्थस्वलक्षणमित्यर्थः। अनयोर्भेदो विभाग इति समासः॥१००३॥ ॥ १००४ ॥

तत्र बुद्ध्यात्मनः स्वरूपं दर्शयन्नाह—**एके**त्यादि।

**एकप्रत्यवमर्शस्य य उक्ता हेतवः पुरा।**
**अभयादिसमा अर्थाः प्रकृत्यैवान्यभेदिनः॥ १००५ ॥**
**तानुपाश्रित्य यज्ज्ञाने भात्यर्थप्रतिबिम्बकम्।**
**कल्पकेऽर्थात्मताऽभावेऽप्यर्था इत्येव निश्चितम् ॥ १००६ ॥**

**पुरे**ति। पूर्वं सामान्यपरीक्षायां "यथा धात्र्यभयादीना"मित्यादिनोक्ताः। तत्रोक्तम्—यथा हरीतक्यादयो बह्वोऽन्तरेणापि सामान्यमेकं ज्वरादिशमनलक्षणं कार्यं कुर्वन्ति। तथा सावलेयादयोऽप्यर्थाः सत्यपि भेदे प्रकृत्यैकाकारप्रत्यवमर्शस्य हेतवो भविष्यन्त्यन्तरेणापि वस्तुभूतं सामान्यमिति। **अभयादिसमा** इति। हरीतक्यादितुल्याः। एकार्थकारितया साम्यम्। **तानुपाश्रित्ये**ति। तानभयादिसमानर्थानाश्रित्य हेतूकृत्य तदनुभवबलेन यदुत्पन्नं विकल्पकं ज्ञानं तत्र यदर्थाकारतयार्थप्रतिबिम्बकमर्थाभासो भाति तादात्म्येन, तत्रान्यापोह इत्येषा संज्ञोक्तेति सम्बन्धः। **कल्पक** इति। विकल्पके, सविकल्प इति यावत्। एतच्च ज्ञान इत्यनेन समानाधिकरणम्। **अर्थात्मताऽभावेऽपी**ति। बाह्यार्थात्मताया अभावेऽपि। **निश्चित**मिति। अध्यवसितम् ॥ १००५ ॥ १००६ ॥

अथ कथं तस्यापोह इत्येष व्यपदेश इत्याह—**प्रतिभासान्तरा**दित्यादि।

**प्रतिभासान्तराद्भेदादन्यव्यावृत्तवस्तुनः।**
**प्राप्तिहेतुतयाऽश्लिष्टवस्तुद्वारा गतेरपि॥ १००७॥**
**विजातीयपरावृत्तं तत्फलं यत्स्वलक्षणम्।**
**तस्मिन्नध्यवसायाद्वा तादात्म्येनास्य विप्लुतैः॥ १००८॥**
**तत्रान्यपोह इत्येषा संज्ञोक्ता सनिबन्धना।**

चतुर्भिर्निमित्तैरपोह इति तस्याख्या। विकल्पान्तरारोपितप्रतिभासान्तराद्भेदेन स्वयं प्रतिभासनान्मुख्यतः। अपोह्यत इत्यपोहोऽन्यस्मादपोहोऽन्यापोह इति व्यु-

त्पत्तेः । उपचारात्तु त्रिभिः । (१) कारणे कार्यधर्मारोपाद्वा, य(त?)दाह—**अन्य-व्यावृत्त वस्तुनः प्राप्तिहेतुतयेति** । (२) कार्ये वा कारणधर्मोपचारात्, तद्दर्शयति—**अश्लिष्टवस्तुद्वारा गतेरपीति** । अश्लिष्टम्—अन्यासम्बद्धम्, अन्यतो व्यावृत्तमिति यावत् । तदेव वस्तुद्वारमुपायः, तदनुभवबलेन तथाविधविकल्पोत्पत्तेः । (३) विजातीयापोहपदार्थेन सहैक्येन भ्रान्तैः प्रतिपत्तृभिरध्यवसितत्वाच्चेति चतुर्थं कारणम्, तद्दर्शयति—**विजातीयेत्यादि** । **अस्येति** । विकल्पबुद्ध्यारूढस्यार्थप्रतिबिम्बस्य । **सनिबन्धनेति** । सह निबन्धनेन प्रतिभासान्तराद्भेदादिनोक्तेन चतुर्विधेन वर्त्तत इति सनिबन्धना ॥ १००७ ॥ १००८ ॥

अर्थात्मनोपोहस्य स्वरूपं दर्शयन्नाह—**स्वलक्षणेऽपीत्यादि** ।

**स्वलक्षणेऽपि तद्धेतावन्यविश्लेषभावतः ॥ १००९ ॥**

अन्यापोह इत्येषा संज्ञोक्ता सनिबन्धनेति प्रकृतेन सम्बन्धः । तत्र निबन्धनमाह—**अन्यविश्लेषभावत** इति । अन्यस्माद्विजातीयाद्विश्लेषो व्यावृत्तिस्तस्य भावात् । विजातीयविश्लेषस्य विद्यमानत्वादिति यावत् । एतेन मुख्यत एव स्वलक्षणेऽन्यापोहव्यपदेश इत्युक्तं भवति ॥ १००९ ॥

प्रसज्यप्रतिषेधलक्षणस्यापोहस्य स्वरूपं दर्शयति—**प्रसज्येत्यादि** ।

**प्रसज्यप्रतिषेधश्च गौरगौर्न भवत्ययम् ।**
**अतिविस्पष्ट एवायमन्यापोहोऽवगम्यते ॥ १०१० ॥**

तदेवं त्रिविधमपोहं प्रतिपाद्य प्रकृते शब्दार्थत्वे योजयन्नाह—**तत्रायमित्यादि** ।

**तत्रायं प्रथमः शब्दैरपोहः प्रतिपाद्यते ।**
**बाह्यार्थाध्यवसायिन्या बुद्धेः शब्दात्समुद्भवात् ॥ १०११ ॥**

**प्रथम** इति । यथोक्तार्थप्रतिबिम्बात्मा । तत्र कारणमाह—**बाह्यार्थाध्यवसायिन्या** इत्यादि । यदेव हि शाब्दे ज्ञाने प्रतिभासते स एव शब्दार्थो युक्तः, न चात्र प्रसज्यप्रतिषेधाध्यवसायोऽस्ति न चापीन्द्रियज्ञानवत्स्वलक्षणप्रतिभासः, किं तर्हि? बाह्यार्थाध्यवसायिनी केवलं शाब्दी बुद्धिरुपजायते । तेन तदेवार्थप्रतिबिम्बकं शाब्दे ज्ञाने साक्षात्तदात्मतया प्रतिभासनाच्छब्दार्थो युक्तो नान्य इति भावः ॥ १०११ ॥

यश्चापि शब्दस्यार्थेन सह वाच्यवाचकभावलक्षणः सम्बन्धः प्रसिद्धो नासौ कार्यकारणभावादन्योऽवतिष्ठते, अपितु कार्यकारणभावात्मक एवेति दर्शयति—**तद्रूपप्रतिबिम्बस्येत्यादि** ।

**तद्रूपप्रतिबिम्बस्य धियः शब्दाच्च जन्मनि ।**
**वाच्यवाचकभावोऽयं जातो हेतुफलात्मकः ॥ १०१२ ॥**

तत्—अध्यवसितबहिर्भावत्वलक्षणं रूपं—स्वभावो यस्य तत्तथोक्तम्, तद्रूपं च तत्प्रतिबिम्बं चेति समासः, तस्य तद्रूपप्रतिबिम्बस्य धियः सम्बन्धिनः शब्दाज्जन्मन्युत्पादे सति स वाच्यवाचकलक्षणो निरूप्यमाणः कार्यकारणभावात्मक एव जातः । तथाहि—शब्दप्रतिबिम्बस्य जनकत्वाद्वाचक उच्यते, तच्च प्रतिबिम्बं शब्देन जन्यमानत्वाद्वाच्यम् । तेन, यदुक्तम्—"निषेधमात्रं नैवेह शाब्दे ज्ञानेऽवभासते" इति, तदसंगतम्, निषेधमात्रस्य शब्दार्थत्वानभ्युपगमादिति भावः ॥ १०१२ ॥

एवं तावत्प्रतिबिम्बलक्षणोऽपोहः साक्षाच्छब्दैरुपजन्यमानत्वान्मुख्यः शब्दार्थ इति दर्शितम्, शेषयोरप्यपोहयोर्गौणं शब्दार्थत्वमुपवर्ण्यमानमविरुद्धमेवेति दर्शयन्नाह—साक्षादित्यादि ।

**साक्षादाकार एतस्मिन्नेवं च प्रतिपादिते ।**
**प्रसज्यप्रतिषेधोऽपि सामर्थ्येन प्रतीयते ॥ १०१३ ॥**
**न तदात्मा परात्मेति सम्बन्धे सति वस्तुभिः ।**
**व्यावृत्तवस्त्वधिगमोऽप्यर्थादेव भवत्यतः ॥ १०१४ ॥**
**तेनायमपि शब्दस्य स्वार्थ इत्युपचर्यते ।**
**न तु साक्षादयं शाब्दो द्विविधोऽपोह उच्यते ॥ १०१५ ॥**

**एवं चेति** । जन्यत्वेन । कस्मात्पुनः सामर्थ्येन प्रसज्यप्रतिषेधः प्रतीयत इति दर्शयन्नाह—**न तदात्मेति** । तस्य गवादिप्रतिबिम्बस्यात्मा यः परस्याश्वादिप्रतिबिम्बस्यात्मा स्वभावो न भवतीति कृत्वा । एवं प्रसज्यलक्षणापोहस्य नान्तरीयकतया प्रतीतेर्गौणं शब्दार्थत्वं प्रतिपाद्य स्वलक्षणस्यापि प्रतिपादयन्नाह—**सम्बन्धे सतीत्यादि** । तत्र सम्बन्धः शब्दस्य वस्तुनि पारम्पर्येण कार्यकारणलक्षणः प्रतिबन्धः । प्रथमं यथास्थितवस्त्वनुभवस्ततो विवक्षा ततस्ताल्वादिपरिस्पन्दस्ततः शब्द इत्येवं परम्परया यदा शब्दस्य वस्तुभिर्बाह्यैरग्न्यादिभिः सम्बन्धः स्यात्तदा तस्मिन्सम्बन्धे सति विजातीयव्यावृत्तस्यापि वस्तुनोऽर्थापत्तितोऽधिगमो भवति । अतो द्विविधोऽपि प्रसज्यप्रतिषेधोऽन्यव्यावृत्तवस्त्वात्मा चापोहः शब्दार्थ इत्युपचर्यते । **अयमिति** । **स्वलक्षणात्मा** । अपिशब्दात्प्रसज्यात्मा च ॥ १०१३ ॥ १०१४ ॥ १०१५ ॥

आचार्यदिङ्नागस्योपरि यदुद्योतकरेणोक्तम्—यदि शब्दस्यापोहोऽभिधेयोऽर्थस्तदाऽभिधेयार्थव्यतिरेकेणास्य स्वार्थो वक्तव्यः, अथ स एवास्य स्वार्थस्तथापि व्याहृतम्, एतदन्यशब्दार्थापोहं हि स्वार्थे कुर्वती श्रुतिरभिधत्त इत्युच्यत इति, अस्य हि वाक्यस्यायमर्थस्तदानीं भवति, अभिदधानाऽभिधत्त इति । तदेतद्वाक्यार्थापरिज्ञानादुक्तमिति दर्शयन्नाचार्यीयवाक्याविरोधं प्रतिपादयति—**अर्थान्तरेत्यादि** ।

**अर्थान्तरव्यवच्छेदं कुर्वती श्रुतिरुच्यते ।**
**अभिधत्त इति स्वार्थमित्येतदविरोधि तत् ॥ १०१६ ॥**

स्वलक्षणमपि हि शब्दस्योपचारात्स्वार्थ इति प्रतिपादितमतस्तस्मिन्स्वलक्षणात्मके स्वार्थेऽर्थान्तरव्यवच्छेदं प्रतिबिम्बान्तराद्व्यावृत्तं प्रतिबिम्बात्मकमपोहं कुर्वती जनयन्ती श्रुतिरभिधत्त इत्युच्यते इत्येतदाचार्यीयं वचनमविरोधि ॥ १०१६ ॥

**बाह्यार्थे**त्यादिनैतदेवाचार्यीयं वचनमाचष्टे ।

**बाह्यार्थाध्यवसायेन प्रवृत्तं प्रतिबिम्बकम् ।**
**उत्पादयति येनेयं तेनाहेत्यपदिश्यते ॥ १०१७ ॥**
**नतु स्वलक्षणात्मानं स्पृशत्येषा विभेदिनम् ।**
**तन्मात्रांशातिरेकेण नास्त्यस्या अभिधाक्रिया ॥ १०१८ ॥**

अयमाचार्यस्याभिप्रायः । न शब्दस्य बाह्यार्थाध्यवसायिविकल्पप्रतिबिम्बोत्पादव्यतिरेकेणान्यो बाह्याभिधानव्यापारः सम्भवति । निर्व्यापारत्वात्सर्वधर्माणाम् । अतो बाह्यार्थाध्यवसायेन प्रवृत्तविकल्पप्रतिबिम्बं जनयन्ती श्रुतिः स्वार्थमभिधत्त इत्युच्यत इति । नतु विभेदिनं सजातीयविजातीयव्यावृत्तं स्वलक्षणमेषा स्पृशति, अकिंचित्करत्वात् । **तन्मात्रांशातिरेकेणेति** । तथाविधप्रतिबिम्बजनकत्वव्यतिरेकेण नापरा श्रुतेरभिधाक्रियाऽस्तीत्यर्थः ॥ १०१७ ॥ १०१८ ॥

एवमपोहस्य स्वरूपमभिधाय साम्प्रतं परोक्तानि दूषणान्युद्धर्तुमारभते । तत्र यदुक्तं "यदि गौरिति शब्दश्चेदि"त्यादि, तत्राह—**तस्य** चेत्यादि ।

**तस्य च प्रतिबिम्बस्य गतावेवानुगम्यते ।**
**सामर्थ्यादन्यविश्लेषो नास्यान्यात्मकता यतः ॥ १०१९ ॥**

गोबुद्धिमेव हि शब्दो जनयति, अन्यविश्लेषस्तु सामर्थ्याद्गम्यते, नतु शब्दात्, तस्य गोप्रतिबिम्बस्य प्रतिभासान्तरात्मरहितत्वात्, अन्यथा नियतरूपस्य तस्य प्रति-

पत्तिरेव न स्यात् । तेनापरो ध्वनिर्गोबुद्धेर्जनको न मृग्यते । तेनैव गोशब्देन गोबुद्धे-र्जन्यमानत्वात् ॥ १०१९ ॥

ननु ज्ञानफलाः शब्दा इत्यादावाह—दिवाभोजनेत्यादि ।

**दिवाभोजनवाक्यादेरिवास्यापि फलद्वयम् ।**
**साक्षात्सामर्थ्यतो यस्मान्नान्वयोऽव्यतिरेकवान् ॥ १०२० ॥**

यथाहि दिवा न भुङ्क्ते पीनो देवदत्त इत्यस्य वाक्यस्य साक्षाद्दिवाभोजनप्रतिषेधः स्वार्थाभिधानं, गम्यस्तु रात्रिभोजनविधिः, न साक्षात्, तद्वद्गौरित्यादेरन्वयप्रतिपाद-कस्य शब्दस्यान्वयज्ञानं साक्षात्फलम्, व्यतिरेकगतिस्तु सामर्थ्यात् । अत्र कारण-माह—यस्मादित्यादि । यस्मादन्वयो विधेरव्यतिरेकवान्नास्ति । किं तर्हि ? विजा-तीयव्यवच्छेदाव्यभिचार्येव । नहि विजातीयादव्यावृत्तस्य कस्यचित्सम्भवोऽस्ति । तेनैकस्य शब्दस्य फलद्वयमविरुद्धमेव ॥ १०२० ॥

कस्मादित्याह—नाभिमुख्येनेत्यादि ।

**नाभिमुख्येन कुरुते यस्माच्छब्द इदं द्वयम् ।**
**स्वार्थाभिधानमन्यस्य विनिवृत्तिं च वस्तुनः ॥ १०२१ ॥**

यदि साक्षादेकस्य शब्दस्य विधिनिषेधज्ञानलक्षणं फलद्वयं युगपदभिप्रेतं भवेत्तदा स्याद्विरोधः । यदि तु दिवाभोजनवाक्यवदेकं साक्षात्, अपरं सामर्थ्यलभ्यं फलमि-तीष्टं, तदा न विरोधः । यच्चोक्तं प्रागगौरिति विज्ञानमित्यादि । तदपि निरस्तम् । अनभ्युपगमात् । न ह्यगोप्रतिषेधमाभिमुख्येन गोशब्दः करोतीत्यभ्युपगतमस्माभिः । किं तर्हि ? सामर्थ्यादिति प्रतिपादितम् ॥ १०२१ ॥

यदुक्तमगोनिवृत्तिः सामान्यमित्यादि, तत्राह—तादृश इत्यादि ।

**तादृशः प्रतिभासश्च सामान्यं गोत्वमिष्यते ।**
**सर्वत्र शाबलेयादौ समानत्वावसायतः ॥ १०२२ ॥**

**तादृश** इति । बाह्यरूपतयाऽध्यस्तो बुद्ध्यारूढः । अत्रोपपत्तिमाह—**सर्वत्रे**त्यादि । सर्वत्र शाबलेयादौ गौर्गौरिति समरूपतयाऽवसानात्तेषां तत्सामान्यमित्युच्यते ॥ १०२२ ॥

बाह्यवस्तुरूपत्वमपि तस्य भ्रान्तप्रतिपत्तृवशाद्व्यवह्रियते, न परमार्थत इति दर्श-यति—वस्त्वित्यध्यवसायाच्चेति ।

**वस्त्वित्यध्यवसायाच्च वस्त्वित्यपि तदुच्यते ।**
**झटित्येव हि तज्ज्ञानं भ्रान्तं जातं स्वबीजतः ॥ १०२३ ॥**

ननु यदि कदाचिन्मुख्यवस्तुभूतं सामान्यं बाह्यवस्त्वाश्रितमुपलब्धं भवेत्तदा साधर्म्यदर्शनात्तत्र सामान्यं भ्रान्तिर्भवेत्, यावता मुख्यार्थासम्भवे सैव भवतां सामान्यभ्रान्तिरनुपपन्नेत्याशङ्क्याह—**झटित्येव** हीत्यादि । झटिति—सामान्यदर्शनाद्यनपेक्ष्य द्विचन्द्रादिज्ञानादिवदन्तरुपप्लवादेतज्जातं ज्ञानम् । नहि सर्वा भ्रान्तयः साधर्म्यदर्शनादेव भवन्ति । किं तर्हि? अन्तरुपप्लवादपीत्यदोषः ॥ १०२३ ॥

तेन सिद्धसाध्यतादोषो न भवतीति दर्शयन्नाह—**स एवे**त्यादि ।

**स एव च तदाकारशब्दार्थोऽपोह उच्यते ।**
**सामान्यं वस्तुरूपं च तथा भ्रान्त्याऽवसायतः ॥ १०२४ ॥**

स एव बुद्ध्याकारो बाह्यतयाऽध्यस्तोऽपोह इति शब्दार्थ इति बाह्यवस्तुभूतं सामान्यमिति चोच्यते । अत्र कारणमाह—**तथा भ्रान्त्यावसायत** इति । सामान्यरूपत्वेन वस्तुरूपत्वेन चावसायात् । शब्दार्थत्वापोहरूपत्वयोः प्रागेव कारणमुक्तम्—"बाह्यार्थाध्यवसायिन्या बुद्धेः शब्दात्समुद्भवात् । प्रतिभासान्तराद्भेदात्" इत्यादिना ॥ १०२४ ॥

कस्मात्पुनः परमार्थतः सामान्यं तन्न भवतीत्याह—**सामान्ये**त्यादि ।

**सामान्यवस्तुरूपत्वं न युक्तं त्वस्य भाविकम् ।**
**बुद्धेरनन्यरूपं हि यायादर्थान्तरं कथम् ॥ १०२५ ॥**

परमार्थतो हि बुद्धेरव्यतिरिक्तोऽसौ, तत्कथमर्थान्तरं व्रजेत्, येनार्थानां तत्सामान्यं भावतो भवेत् । यथोक्तं "ज्ञानादव्यतिरिक्तं च कथमर्थान्तरं व्रजेत्" इति । तस्मात्सिद्धसाध्यतादोषो न भवति, न हि भवद्भिर्बुद्ध्याकारो गोत्वाख्यं सामान्यमवस्तुरूपमिष्टम्, किं तर्हि? बाह्यशाबलेयादिगतमेकमनुगामि पारमार्थिकं गोत्वादिसामान्यमुपकल्पितमतो न सिद्धसाध्यतेति भावः । यच्चोक्तम् "निषेधमात्ररूपश्चे"त्यादि, तस्यानभ्युपगतत्वादेव न दोषः ॥ १०२५ ॥

यच्चेदमुक्तम्—"तस्यां चाश्वादिबुद्धीनाम्" इत्यादि, तत्राह—**यद्यपी**त्यादि ।

**यद्यप्यव्यतिरिक्तोऽयमाकारो बुद्धिरूपतः ।**
**तथापि बाह्यरूपत्वं भ्रान्तैस्तस्यावसीयते ॥ १०२६ ॥**

सुबोधम् ॥ १०२६ ॥

यच्चोक्तम् "शब्दार्थोऽर्थानपेक्ष" इति तत्राह—**तस्येत्यादि** ।

**तस्य नार्थानपेक्षत्वं पारम्पर्यात्तदागतेः ।**
**तेनात्मना च वस्तुत्वं नैवास्तीत्युपपादितम् ॥ १०२७ ॥**

यत्र हि पारम्पर्याद्वस्तुनि प्रतिबन्धोऽस्ति तस्य भ्रान्तस्यापि सतो विकल्पस्य मणिप्रभायां मणिबुद्धिवन्न बाह्यार्थानपेक्षत्वमस्ति । अतोऽसिद्धं बाह्यार्थानपेक्षत्वम् । यदुक्तं "वस्तुरूपा च सा बुद्धिः" इत्यादि, तत्राह—**तेनेत्यादि** । यद्यपि वस्तुरूपा सा बुद्धिस्तथापि तस्यास्तेन बाह्यात्मना बुद्ध्यन्तरात्मना च वस्तुत्वं नास्तीत्युपपादितम् "न तदात्मा परात्मा" इत्यादिना । तेन बुद्धेर्बुद्ध्यन्तरापोहो न गम्यत इत्यसिद्धं सामर्थ्येन गम्यमानत्वादिति भावः ॥ १०२७ ॥

"असत्यपि च बाह्यार्थे" इत्यत्राह—**प्रतिबिम्बात्मक इत्यादि** ।

**प्रतिबिम्बात्मकोऽपोहः पदादप्युपजायते ।**
**प्रतिभाख्यो झटित्येव पदार्थोऽप्ययमेव नः ॥ १०२८ ॥**

यथैव हि प्रतिबिम्बात्मकप्रतिभाख्योऽपोहो बाह्यार्थोऽस्माभिरुपवर्णितस्तथैव पदार्थोऽपि । यस्मात्पदादपि प्रतिबिम्बात्मकोऽपोह उत्पद्यत एव तेनास्माकमयमेव प्रतिबिम्बात्मकोऽपोहः पदार्थोऽपि मतो न केवलं बाह्यार्थ इत्यपिशब्दः । तेन विप्रतिपत्तेरभावान्नोपालम्भो युक्त इति भावः ॥ १०२८ ॥

"बुद्ध्यन्तराद्व्यवच्छेदो नच बुद्धेः प्रतीयत" इत्यत्राह—**स्वरूपोत्पादमात्राद्धीत्यादि** ।

**स्वरूपोत्पादमात्राद्धि नान्यमंशं बिभर्त्ति सा ।**
**बुद्ध्यन्तराद्व्यवच्छेदस्तेन बुद्धेः प्रतीयते ॥ १०२९ ॥**

यत एव हि स्वरूपोत्पादमात्रादन्यमंशं सा बुद्धिर्न बिभर्त्ति तत एव स्वस्वभावव्यवस्थितत्वाद्बुद्धेर्बुद्ध्यन्तराद्व्यवच्छेदः प्रतीयते, अन्यथा ह्यन्यस्य रूपं बिभ्रती कथं ततो व्यवच्छिन्ना प्रतीयते । तेनेति । स्वव्यतिरिक्तपदार्थस्वरूपानवधारणेन॥१०२९॥

भिन्नसामान्यवचना इत्यादावाह—**यथैवेत्यादि** ।

**यथैवाविद्यमानस्य न भेदः पारमार्थिकः ।**
**अभेदोऽपि तथैवेति तेन पर्यायता भवेत् ॥ १०३० ॥**

यथैव ह्यपोहस्य निःस्वभावत्वादविद्यमानरूपस्य परस्परतो भेदो नास्तीत्युच्यते तथैवाभेदोऽपीति तत्कथमभिन्नार्थाभावे पर्यायत्वप्रसञ्जनं क्रियते ॥ १०३० ॥

एतदेव स्पष्टीकुर्वन्नाह—अभेदो ह्येकरूपत्वमिति ।

**अभेदो ह्येकरूपत्वं नीरूपेषु च तत्कुतः ।**
**एकत्वेऽर्थस्य पर्यायाः प्राप्नुवन्ति च वाचकाः ॥ १०३१ ॥**

यदि नाम नीरूपेष्वेकरूपत्वं नास्ति तथापि किमिति पर्यायता न भवेदिति चेदाह—एकत्वेऽर्थस्येत्यादि ॥ १०३१ ॥

स्यादेतद्यदि नाम नीरूपेष्वेकरूपत्वं भावतो नास्ति तथापि काल्पनिकमस्ति तेन पर्यायताप्रसञ्जनं युक्तमेवेत्यत आह—रूपाभावेऽपीत्यादि ।

**रूपाभावेऽपि चैकत्वं कल्पनानिर्मितं यथा ।**
**विभेदोऽपि तथैवेति कुतः पर्यायता ततः ॥ १०३२ ॥**

रूपाभावेऽपीति । स्वभावाभावेऽपीत्यर्थः ॥ १०३२ ॥

यद्येवं पर्यायापर्यायव्यवस्था कथं शब्दानां प्रसिद्धेत्याह—भावतस्त्वित्यादि ।

**भावतस्तु न पर्याया नापर्यायाश्च वाचकाः ।**
**नह्येकं बाह्यमेतेषामनेकं चेति वर्णितम् ॥ १०३३ ॥**

यदि हि परमार्थतो भिन्नमभिन्नं वा किंचिद्वाच्यं वस्तु शब्दानां स्यात्तदाऽपर्यायता पर्यायता वा भवेत् । यावता स्वलक्षणं जातिस्तद्योगो जातिमांस्तथेत्यादिना वर्णितं यथैषां न किंचिद्वाच्यमस्तीति ॥ १०३३ ॥

कथं सा तर्हि पर्यायादिव्यवस्थेत्याह—किंत्वित्यादि ।

**किंत्वनेकोऽपि यद्येककार्यकारी स ईक्ष्यते ।**
**तत्रैकधर्मारोपेण श्रुतिरेका निवेश्यते ॥ १०३४ ॥**

तत्रान्तरेणापि सामान्यं सामान्यशब्दत्वव्यवस्थाया इदं निबन्धनम्, यद्बहूनामेकार्थक्रियाकारित्वम् । प्रकृत्यैव हि केचिद्भावा बहवोऽप्येकार्थक्रियाकारिणो भवन्ति । तेषामेकार्थक्रियासामर्थ्यप्रतिपादनाय व्यवहर्तृभिर्लाघवार्थमेकरूपाध्यारोपेणैका श्रुतिर्निवेश्यते । यथा बहुषु रूपादिषु मधूदकाद्याहरणलक्षणैकार्थक्रियासमर्थेषु घट इत्येषा श्रुतिर्निवेश्यते ॥ १०३४ ॥

कथं पुनरेकेनानुगामिना विना बहुष्वेका श्रुतिर्युज्यत इत्याह—लोचनादावित्यादि ।

**लोचनादौ यथा रूपविज्ञानैकफले क्वचित् ।**
**कश्चिद्यदि श्रुतिं कुर्याद्भिन्नैकेनानुगामिना ॥ १०३५ ॥**

इच्छामात्रप्रतिबद्धो हि शब्दानामर्थेषु नियोगः, तथाहि—चक्षूरूपालोकमनस्कारेषु रूपविज्ञानैकफलेषु यदि कश्चिदिच्छावशाद्भिनाप्येकेनानुगामिना सामान्येन ००० इत्यादिकां श्रुतिं निवेशयेत्, तत्किं तस्य कश्चित्प्रतिरोद्धा भवेत् । नहि तेषु लोचनादिष्वेकं चक्षुर्विज्ञानजनकत्वं नाम सामान्यमस्ति । यतः सामान्यविशेषसमवाया अपि भवद्भिश्चक्षुर्विज्ञानजनका इष्यन्ते । तेषु न सामान्यसमवायोऽस्ति निःसामान्यत्वात्सामान्यस्य, समवायस्य च द्वितीयसमवायाभावात् ॥ १०३५ ॥

ननु च घटादिरेककार्यकारी कथमुच्यते । यावता तत्कार्यमुदकधारणादि तद्ग्राहकं च विज्ञानं स्वलक्षणभेदाद्भिद्यत एवेत्यत आह—**घटादीनां** चेत्यादि ।

**घटादीनां च यत्कार्यं जलादेर्धारणादिकम् ।**
**यच्च तद्विषयं ज्ञानं भिन्नं यद्यपि तद्द्वयम् ॥ १०३६ ॥**
**एकप्रत्यवमर्शस्य हेतुत्वादेकमुच्यते ।**
**ज्ञानं तथापि तद्धेतुभावादर्था अभेदिनः ॥ १०३७ ॥**

यद्यपि स्वलक्षणभेदात्तत्कार्यं भिद्यते । तथापि ज्ञानाख्यं तावत्कार्यमेकार्थाध्यवसायिपरामर्शज्ञानहेतुतयैकमित्युच्यते तस्य च ज्ञानस्य हेतुभावादर्था अपि मधूदकाद्याहरणादिलक्षणा घटादिव्यक्तिलक्षणाश्चाभेदिन इत्युच्यन्ते, तद्दर्शयति—**तथापि तद्धेतुभावादर्था अभेदिन** इति । उच्यत इति प्रकृतं वचनपरिणामाद्बहुवचनान्तं सम्बध्यते । अपिशब्दो भिन्नक्रमोऽर्थाइत्यनन्तरं सम्बध्यते । तेनैकार्थक्रियाकारित्वमुपपद्यत एव । ननु चैवमनवस्था प्राप्नोति । तथाहि—योऽसौ प्रत्यवमर्शप्रत्ययस्तस्यापि स्वलक्षणभेदेन भिद्यमानत्वादेकत्वमसिद्धम् । ततश्च तस्याप्येकत्वसिद्धये परमेकाकारप्रत्यवमर्शकार्यमनुसरतोऽनवस्था स्यात् । ततश्चानवस्थितैककार्यतया न कचिदेकश्रुतिनिवेशः सिद्ध्येत् । नैतदस्ति । नहि प्रत्यवमर्शप्रत्ययस्यैककार्यतयैकत्वमुच्यते । किं तर्हि ? एकार्थाध्यवसायितया, तेन नानवस्था भविष्यति । स्वत एव सर्वेषां प्रत्यवमर्शप्रत्ययानामेकार्थाध्यवसायित्वस्य सिद्धत्वात् । तेनायमर्थो भवति । एकाकारप्रत्यवमर्शहेतुत्वात् ज्ञानाख्यं कार्यमेकमित्युच्यते, तद्धेतुभावाच्चार्था अपि घटादय एकत्वव्यपदेशभाज इति ॥ १०३६ ॥ १०३७ ॥

तेन विनापि सामान्यं वस्तुभूतं सामान्यवचना घटादयः सिद्ध्यन्तीति निगमयन्नाह—तत्रेत्यादि ।

**तत्र सामान्यवचना उक्ताः शब्दा घटादयः ।**
**विजातीयव्यवच्छिन्नप्रतिबिम्बैकहेतवः ॥ १०३८ ॥**

एकस्मिन्नपि वस्तुन्यन्तरेणापि सामान्यविशेषमसङ्कीर्णानेकशब्दप्रवृत्तिर्भवत्येवेति दर्शयन्नाह—तथेत्यादि ।

**तथाऽनेकार्थकारित्वादेको नैक इवोच्यते ।**
**अतत्कार्यपरावृत्तिबाहुल्यपरिकल्पितः ॥ १०३९ ॥**

कश्चिदेकोऽपि सन्प्रकृत्यैव सामग्र्यन्तरान्तःपातवशादनेकार्थक्रियाकारी भवति। तत्रान्तरेणापि वस्तुभूतसामान्यादिधर्मभेदमतत्कार्यपदार्थभेदबाहुल्यादनेकधर्मसमारोपादनेका श्रुतिर्निवेश्यते ॥ १०३९ ॥

अत्रोदाहरणमाह—यथेत्यादि ।

**यथा सप्रतिघं रूपं सनिदर्शनमित्यपि ।**
**प्रयत्नानन्तरज्ञातो यथा वा श्रावणो ध्वनिः ॥ १०४० ॥**

स्वदेशे परस्योत्पत्तिप्रतिबन्धकारित्वाद्रूपं सप्रतिघमित्युच्यते । निदर्शनं—चक्षुर्विज्ञानं, तज्जनकत्वात्, सह तेन वर्त्तत इति सनिदर्शनम् । द्वितीयमप्युदाहरणमाह—प्रयत्नेत्यादि । यथाहि ध्वनिरेकोऽपि सन्प्रयत्नान्तरज्ञानफलतया प्रयत्नानन्तरं ज्ञात इत्युच्यते । श्रोत्रज्ञानफलत्वाच्च श्रावणः । श्रवणं हि श्रुतिः, श्रोत्रज्ञानमिति यावत् । तत्प्रतिभासितया तत्र भवः श्रावणः । यद्वा श्रवणेन गृह्यत इति श्रावणः ॥ १०४० ॥

एवमतत्कार्यभेदेनैकस्मिन्नप्यनेका श्रुतिर्निवेश्यत इति दर्शितम्, इदानीमतत्कारणभेदेनापि क्वचित् श्रुतिर्निवेश्यत इति दर्शयति—अतत्कारणभेदेनेत्यादि ।

**अतत्कारणभेदेन क्वचिच्छब्दो निवेश्यते ।**
**प्रयत्नोत्थो यथाशब्दो भ्रामरं वा यथा मधु ॥ १०४१ ॥**

भ्रामरमिति । भ्रमरकृतम्, क्षुद्रादिकृतान्मधुनो व्यावृत्तम् ॥ १०४१ ॥

एवमतत्कार्यकारणपदार्थभेदादेकस्मिन्वस्तुनि श्रुतिभेदो दर्शितः । इदानीं तत्कार्यकारणपदार्थव्यवच्छेदमात्रप्रतिपादनेच्छयाऽन्तरेणापि सामान्यं श्रुतेर्भेदनिवेशनं दर्शयन्नाह—तत्कार्येत्यादि ।

**तत्कार्यहेतुविश्लेषात्क्वचिच्छ्रुतिरिहोच्यते।**
**अश्रावणं यथा रूपं विद्युद्वाऽयत्नजा यथा॥ १०४२॥**

तौ—पूर्वोक्तौ, कार्यहेतू येषां ते तथोक्ताः। तेभ्यो विश्लेषो—व्यावृत्तिः। का पुनरसौ श्रुतिरित्याह—**अश्रावण**मित्यादि। श्रोत्रज्ञानफलशब्दव्यवच्छेदेनाश्रावणं रूपमित्युच्यते। तथा प्रयत्नकारणघटादिपदार्थव्यवच्छेदेन विद्युदप्रयत्नजेत्यभिधीयते ॥ १०४२॥

एवमन्तरेणापि सामान्यादिकं वस्तुभूतं व्यावृत्तिकृतमेव शब्दानां भेदेन निवेशनमिति प्रतिपाद्य पर्यायत्वप्रसङ्गाभावं दर्शयन्नाह—**इत्यादिने**त्यादि।

**इत्यादिना प्रभेदेन विभिन्नार्थनिबन्धनाः।**
**व्यावृत्तयः प्रकल्प्यन्ते तन्निष्ठाः श्रुतयस्तथा॥ १०४३॥**
**यथासङ्केतमेवातोऽसङ्कीर्णार्थाभिधायिनः।**
**शब्दा विवेकतो वृत्ताः पर्याया न भवन्ति नः॥ १०४४॥**

आदिग्रहणेनावस्थाविशेषवाचका बालादिशब्दा नैरात्म्यादिशब्दाश्च गृह्यन्ते। **विभिन्नार्थनिबन्धना** इति। विभिन्नस्ततस्ततो व्यावृत्तोऽर्थो निबन्धनं यासां व्यावृत्तीनां तास्तथोक्ताः। **तथे**ति। व्यावृत्तिवत्। **तन्निष्ठा** इति। व्यावृत्तार्थनिष्ठाः। प्रणालिकया तथाविधपदार्थाधिगतिहेतुत्वात्। **श्रुतय** इति। शब्दाः॥ १०४३॥ ॥ १०४४॥

स्यादेतत्—माभूत्पर्यायत्वमेषाम्, अर्थभेदस्य परिकल्पितत्वात्, सामान्यविशेषवाचित्वव्यवस्था तु विना सामान्यविशेषाभ्यां कथमेषां सिद्ध्यतीत्यत आह—**बह्वल्पे**त्यादि।

**बह्वल्पविषयत्वेन तत्सङ्केतानुमानतः।**
**सामान्यभेदवाच्यत्वमप्येषां न विरुध्यते॥ १०४५॥**

वृक्षशब्दो हि सर्वेष्वेव धवखदिरपलाशादिष्ववृक्षव्यवच्छेदमात्रानुमानं प्रतिबिम्बकं जनयति। तेनास्य बहु(विष)यत्वात् सामान्यं वाच्यमुच्यते। धवादिशब्दस्य तु खदिरादिव्यावृत्तिः कतिपयपादपावसायिविकल्पोत्पादकत्वाद्विशेषो वाच्य उच्यते ॥ १०४५॥

"ननु चापोह्यभेदेने"त्यादावाह—**ताश्चे**त्यादि।

**ताश्च व्यावृत्तयोऽर्थानां कल्पनामात्रनिर्मिताः ।**
**नापोह्याधारभेदेन भिद्यन्ते परमार्थतः ॥ १०४६ ॥**

यदि हि पारमार्थिकोऽपोह्यभेदेनाधारभेदेनापोहभेदोऽभीष्टः स्यात्तदैतदूषणं स्यात्, यावता कल्पनया सजातीयविजातीयपदार्थभेदनिबन्धना व्यावृत्तयो भिन्नाः कल्प्यन्ते न परमार्थतः ॥ १०४६ ॥

ताश्च कल्पनावशाद्व्यतिरिक्ता एव वस्तुनो भासन्ते न परमार्थत इति दर्शयति— तासां हीत्यादि ।

**तासां हि बाह्यरूपत्वं कल्पितं तन्न वास्तवम् ।**
**भेदाभेदौ च तत्त्वेन वस्तुन्येव व्यवस्थितौ ॥ १०४७ ॥**

कस्माद्वास्तवं न भवतीत्याह—भेदाभेदौ चेत्यादि ॥ १०४७ ॥

परमार्थतस्तु विकल्पा एव भिद्यन्त इति दर्शयति । स्वबीजानेकेत्यादि ।

**स्वबीजानेकविश्लिष्टवस्तुसङ्केतशक्तितः ।**
**विकल्पास्तु विभिद्यन्ते तद्रूपाध्यवसायिनः ॥ १०४८ ॥**
**नैकात्मतां प्रपद्यन्ते न भिद्यन्ते च खण्डशः ।**
**स्वलक्षणात्मका अर्था विकल्पः प्लवते त्वसौ ॥ १०४९ ॥**

स्वबीजं—वातादिविकल्पवासना, अनेकस्माद्विश्लिष्टं वस्तु च सङ्केतश्चेति विग्रहः, तेषां शक्तिः—सामर्थ्यम्, ततो विजातीयानेकपदार्थव्यावृत्तवस्तुव्यवसायिनो विकल्पा भिद्यन्ते । नत्वर्थाः । तथाहि—वृक्षत्वादिसामान्यरूपेण नैकात्मतां धवादयः प्रतिपद्यन्ते नापि क्षणिकात्मकादिधर्मभेदेन खण्डशो भिद्यन्ते । केवलं विकल्प एव तथा प्लवते नत्वर्थः । यथोक्तम्—"संसृज्यन्ते न भिद्यन्ते स्वतोऽर्थाः पारमार्थिकाः । रूपमेकमनेकं च तेषु बुद्धेरुपप्लवः ॥" इति ॥ १०४८ ॥ १०४९ ॥

यच्चोक्तं—"नचाप्रसिद्धसारूप्यानि"त्यादि, तत्राह—एकधर्मान्वयासत्त्वेऽपीत्यादि ।

**एकधर्मान्वयासत्त्वेऽप्यपोह्यापोहगोचराः ।**
**वैलक्षण्येन गम्यन्ते भिन्नप्रत्यवमर्शतः ॥ १०५० ॥**

अपोह्याश्चापोहगोचराश्चेति विग्रहः । तत्रापोह्या अश्वादयः, गोशब्दस्य तदपोहेन प्रवृत्तत्वात् । अपोहगोचराः शाबलेयादयः, तद्विषयत्वादगोपोहस्य । तेन यद्यप्ये-

कस्य सामान्यरूपस्यान्वयो नास्ति, तथाप्यभिन्नप्रत्यवमर्शहेतवो ये ते प्रसिद्धसारूप्या भवन्ति, ये तु विपरीतास्ते विपरीता इति ॥ १०५० ॥

स्यादेतत्—तस्यैवैकप्रत्यवमर्शस्य हेतवोऽन्तरेण सामान्यमेकं कथमर्था भिन्नाः सिद्ध्यन्तीत्यत आह—एकप्रत्यवमर्शे हीत्यादि ।

**एकप्रत्यवमर्शे हि केचिदेवोपयोगिनः ।**
**प्रकृत्या भेदवत्त्वेऽपि नान्य इत्युपपादितम् ॥ १०५१ ॥**

प्रतिपादितमेतत्सामान्यपरीक्षायाम्, यथा धात्र्यादयोऽन्तरेणापि सामान्यमेकार्थक्रियाकारिणो भवन्ति, तथैव प्रत्यवमर्शहेतवो भिन्ना अपि भावाः केचिदेव भविष्यन्तीति ॥ १०५१ ॥

नचान्वयविनिर्मुक्तेत्यादावाह—अतद्रूपेत्यादि ।

**अतद्रूपपरावृत्तं वस्तुमात्रं स्वलक्षणम् ।**
**यत्नेन क्रियमाणोऽयमन्वयो न विरुध्यते ॥ १०५२ ॥**

यद्यपि सामान्यं वस्तुभूतं नास्ति, तथापि विजातीयव्यावृत्तस्वलक्षणमात्रेणैवान्वयः क्रियमाणो न विरुध्यते ॥ १०५२ ॥

कथमित्याह—यस्मिन्नित्यादि ।

**यस्मिन्नधूमतो भिन्नं विद्यते हि स्वलक्षणम् ।**
**तस्मिन्ननग्नितोऽप्यस्ति परावृत्तं स्वलक्षणम् ॥ १०५३ ॥**
**यथा महानसे चेह विद्यतेऽधूमभेदि तत् ।**
**तस्मादनग्नितो भिन्नं विद्यतेऽत्र स्वलक्षणम् ॥ १०५४ ॥**

यस्मिन्निति । प्रदेशे । इह च विद्यते स्वलक्षणमधूमतो भेदीति पक्षधर्मोपदर्शनम् । तस्मादित्यादिना प्रमाणफलोपदर्शनम् । यदि वाऽ(यद्वाऽ ?)वयवपञ्चकमपि स्वलक्षणेनान्वये क्रियमाणे शय्यो(क्यो ?)पदर्शनमिति दर्शयति ॥ १०५३ ॥ १०५४ ॥

इदं च कार्यहेतावुक्तम् । स्वभावहेतावाह—असत इत्यादि ।

**असतो नरशृङ्गादेर्यच्च भिन्नं स्वलक्षणम् ।**
**बुद्धिदीपादिवत्सर्वं व्यावृत्तं तत्स्थिरादपि ॥ १०५५ ॥**
**असद्रूपं तथा चेदं न शब्दादिस्वलक्षणम् ।**
**इत्थं निर्दिष्टभेदेन भवत्येवान्वयोऽमुना ॥ १०५६ ॥**

यदसतो व्यावृत्तं स्वलक्षणमताद्रूप्यात्तत्सर्वं स्थिरादपि व्यावृत्तं, यथा बुद्धिदीपादयः । तथाचेदं शब्दादिस्वलक्षणमसद्रूपं न भवतीति । अतोऽमुना न्यायेन विशेषासंस्पर्शात्स्वलक्षणेनान्वयः क्रियमाणो न विरुध्यते । अयं च सत्त्वादिलस्य हेतोरन्वयो दर्शितः ॥ १०५५ ॥ १०५६ ॥

यद्येवं स्वलक्षणेनैवान्वयः, कथमिदानीं सामान्यलक्षणविषयमनुमानं सिध्यतीत्यत आह—अविवक्षितभेदं चेत्यादि ।

**अविविक्षतभेदं च तदेव परिकीर्त्तितम् ।**
**सामान्यलक्षणत्वेन नानिष्टेरपरं पुनः ॥ १०५७ ॥**

तदेव हि स्वलक्षणमविवक्षितभेदं सामान्यलक्षणमित्युक्तम् । सामान्येन—भेदापरामर्शेन, लक्ष्यते—व्यवसीयत इति सामान्यलक्षणम् । **नापरं पुनरिति** । तीर्थिकाभिमतम्, तस्यानिष्टत्वात् । यथोक्तम्—"तस्यैव स्वपररूपाभ्यां गतेर्मेयद्वयं मतम्" इति । तथाऽपरमुक्तम्—"अतद्रूपपरावृत्तवस्तुमात्रसमाश्रयात् । सामान्यविषयं प्रोक्तं लिङ्गं भेदाप्रतिष्ठितेः ॥" इति । तेन साहचर्यमपि लिङ्गशब्दयोः स्वलक्षणेनैव कथ्यते । नचाप्यदर्शनमात्रेणास्माभिर्विपक्षे लिङ्गस्याभावोऽवसीयते । किं तर्हि ? अनुपलम्भविशेषादिति भावः ॥ १०५७ ॥

यच्चोक्तं "सावलेयाच्च भिन्नत्व"मित्यादि, तत्राह—शबलापत्यत इत्यादि ।

**शबलापत्यतो भेदे बाहुलेयाश्वयोः समे ।**
**तुरङ्गपरिहारेण गोत्वं किं तत्र वर्त्तते ॥ १०५८ ॥**

इदं हि भवान्वक्तुमर्हति, सावलेयाच्च बाहुलेयाच्च तुल्येऽपि भेदे सति किमिति तुरङ्गमपरिहारेण गोत्वं तत्रैव सावलेयादौ वर्त्तते नाश्व इति ॥ १०५८ ॥

स्यादेतत्—किमत्र वक्तव्यं, तस्य हि गोत्वस्याभिव्यक्तौ सावलेयादिरेव समर्थो नाश्वादिरतस्तत्रैव तद्वर्त्तते नान्यत्र । नचायं पर्यनुयोगो युज्यते, कस्मात्तस्याभिव्यक्तौ स एव सावलेयादिः समर्थो भवति, ( इति ) यतो वस्तुस्वभावप्रतिनियमोऽयं, नहि वस्तूनां स्वभावः पर्यनुयोगमर्हति । तेषां स्वहेतुपरम्पराकृतत्वात्स्वभावभेदप्रतिनियमस्येति, अत्राह—तस्य व्यक्तावित्यादि ।

**तस्य व्यक्तौ समर्थात्मा स एवेति यदीष्यते ।**
**तुल्यप्रत्यवमर्शेऽपि स शक्तो न तुरङ्गमः ॥ १०५९ ॥**

तस्येति। गोत्वस्य। स एवेति। सावलेयादिर्न पुनरश्वः। यद्येवं सत्यपि भेदे सामान्यमन्तरेणापि तुल्यप्रत्यवमर्शोत्पादने सावलेयादिरेव शक्तो न तुरङ्गम इत्ययमस्मत्पक्षो न विरुध्यत एव ॥ १०५९ ॥

ततश्च किं जातमित्याह—तादृगित्यादि।

**तादृक्प्रत्यवमर्शश्च विद्यते यत्र वस्तुनि।**
**तत्राभावेऽपि गोजातेरगोऽपोहः प्रवर्त्तते ॥ १०६० ॥**

यत्र सावलेयादौ वस्तुनि तादृक्—गौर्गौरिति, प्रत्यवमर्शः—प्रत्ययो जायते। तत्रैवासत्यामपि गोजातौ वस्तुभूतायामगोपोहः प्रतिबिम्बात्मा प्रवर्त्तते ॥ १०६० ॥

यच्चोक्तमिन्द्रियैरित्यादि, तदसिद्धमिति दर्शयन्नाह—अगोभिन्नं चेत्यादि।

**अगोभिन्नं च यद्वस्तु तदक्षैर्व्यवसीयते।**
**प्रतिबिम्बं तदध्यस्तं स्वसंवित्त्याऽवगम्यते ॥ १०६१ ॥**
**इदं दृष्ट्वा च लोकेन शब्दस्तत्र प्रयुज्यते।**
**संबन्धानुभवोऽप्यस्य व्यक्तं तेनोपपद्यते ॥ १०६२ ॥**

तत्र स्वलक्षणात्मा तावदपोह इन्द्रियैरवगम्यत एव। यत्स्वार्थप्रतिबिम्बात्माऽपोहः स परमार्थतो बुद्धिस्वभावत्वात्स्वसंवेदनप्रत्यक्षत एव सिद्धः। चकारोऽनुक्तार्थसमुच्चये। तेन प्रसज्यात्मापि सामर्थ्यात्प्रतीयत एव न तदात्मा परात्मेति दर्शितं भवति। तेनेदमेव स्वलक्षणादिरूपमपोहं दृष्ट्वा शब्दो लोकेन प्रयुज्यते, नतु सामान्यं वस्तुभूतं, तस्यासत्त्वादप्रतिभासनाच्च। यदेव च दृष्ट्वा लोकेन शब्दः प्रयुज्यते, तेनैव तस्य सम्बन्धोऽवगम्यते नान्येनातिप्रसङ्गात् ॥ १०६१ ॥ १०६२ ॥

यदुक्तम् "अगोशब्दाभिधेयत्वं च कथं पुन"रिति, अत्राह—तादृगित्यादि।

**तादृक्प्रत्यवमर्शश्च यत्र नैवास्ति वस्तुनि।**
**अगोशब्दाभिधेयत्वं विस्पष्टं तत्र गम्यते ॥ १०६३ ॥**

यच्चोक्तं सिद्धश्चागौरपोह्येतेत्यादि तत्राह—गावोऽगावश्चेत्यादि।

**गावोऽगावश्च संसिद्धा भिन्नप्रत्यवमर्शतः।**
**शब्दस्तु केवलोऽसिद्धो यथेष्टं संप्रयुज्यते ॥ १०६४ ॥**
**न ह्यन्यग्रहणं वस्तु भिन्नं वित्तावपेक्षते।**
**अन्योन्याश्रयदोषोऽयं तस्मादस्मिन्निरास्पदः ॥ १०६५ ॥**

स्वत एव हि गवादयो भावा भिन्नप्रत्यवमर्शं जनयन्तो विभागेन सम्यङ्निश्चिताः। तेषु व्यवहारार्थं व्यवहर्तृभिर्यथेष्टं शब्दोऽसिद्धः प्रयुज्यते । तथाहि—यदि भिन्नवस्तुस्वरूपं प्रतिपत्त्यर्थमन्यपदार्थग्रहणमपेक्षते तदा स्यादितरेतराश्रयदोषः, यावताऽन्यग्रहणमन्तरेणैव भिन्नं वस्तु संवेद्यते, तस्मिन्भिन्नाकारप्रत्यवमर्शहेतुतया विभागेन सिद्धे सति गौरगौरिति च यथेष्टं सङ्केतः क्रियत इति कथमितरेतराश्रयत्वं भवेत्। वित्ताविति । वित्त्यर्थम् ॥ १०६४ ॥ १०६५ ॥

यच्चोक्तं "नाधाराधेयवृत्त्यादि" (इति) तत्राह—अवेद्यबाह्यतत्त्वापीत्यादि।

**अवेद्यबाह्यतत्त्वाऽपि प्रकृष्टोपप्लवादियम् ।**
**स्वोल्लेखं बाह्यरूपेण शब्दधीरध्यवस्यति ॥ १०६६ ॥**
**एतावत्क्रियते शब्दैर्नार्थं शब्दाः स्पृशन्त्यपि ।**
**नापोहेन विशिष्टश्च कश्चिदर्थोऽभिधीयते ॥ १०६७ ॥**

नहि परमार्थेन कश्चिदपोहेन विशिष्टोऽर्थः शब्दैरभिधीयते । यतः प्रतिपादितमेतत्, यथा न किंचिदपि शब्दैर्वस्तु संस्पृश्यते, क्वचिदपि सामर्थ्यभावादिति । तथाहि शाब्दी बुद्धिरबाह्यार्थविषयापि सती स्वोल्लेखं स्वाकारं बाह्यार्थतयाऽध्यवस्यन्ती जायते, न परमार्थतो वस्तुस्वभावं स्पृशति, यथातत्त्वमनध्यवसायात् ॥ १०६६ ॥ ॥ १०६७ ॥

यद्येवं कथमाचार्येणोक्तं नीलोत्पलादिशब्दा अर्थान्तरनिवृत्तिविशिष्टानर्थानाहुरित्यत आह—अर्थान्तरेत्यादि ।

**अर्थान्तरनिवृत्त्याऽऽहुर्विशिष्टानिति यत्पुनः ।**
**प्रोक्तं लक्षणकारेण तत्रार्थोऽयं विवक्षितः ॥ १०६८ ॥**

कोऽसावर्थो विवक्षित इत्याह—अन्यान्यत्वेनेत्यादि ।

**अन्यान्यत्वेन ये भावा हेतुना करणेन वा ।**
**विशिष्टा भिन्नजातीयैरसङ्कीर्णा विनिश्चिताः ॥ १०६९ ॥**
**वृक्षादीनाहतान्ध्वानस्तद्भावाध्यवसायिनः ।**
**ज्ञानस्योत्पादनादेतज्जात्यादेः प्रतिषेधनम् ॥ १०७० ॥**

द्विविधो ह्यर्थो बाह्यो बुद्ध्यारूढश्च । तत्र बाह्ये न परमार्थतोऽभिधानं शब्दैः, केवलं तदध्यवसायिविकल्पोत्पादादुपचारादुक्तं शब्दोऽर्थानाहेति । उपचारस्य च

प्रयोजनं जात्यभिधाननिराकरणमिति समुदायार्थः। अवयवार्थस्तूच्यते—**अन्यान्यत्वेनेति**। अन्यस्मादन्यत्वं व्यावृत्तिः, तेनान्यान्यत्वेन हेतुना करणेन वा वृक्षादयो भावा विशिष्टा निश्चिताः। अन्यतो व्यावृत्ता निश्चिता इति यावत्। एतेनार्थान्तरनिवृत्तिविशिष्टानित्यत्र पदे निवृत्त्येति तृतीयार्थो व्याख्यातः। **ध्वान इति**। शब्दः ॥ १०७० ॥

यस्तु बुद्ध्यारूढोऽर्थस्तस्य मुख्यत एव शब्दैरभिधानमिति दर्शयति—**बुद्धावि**त्यादि।

**बुद्धौ ये वा विवर्त्तन्ते तानाहाभ्यन्तरानयम्।**
**निवृत्त्या च विशिष्टत्वमुक्तमेषामनन्तरम्॥ १०७१ ॥**

अयमिति। ध्वानः। अथार्थान्तरनिवृत्तिविशिष्टत्वं कथमेषां योजनीयमित्याह—**निवृत्त्या चे**त्यादि। **अनन्तर**मिति। अन्यान्यत्वेनेत्यादिना तेषामपि बुद्धिसमारूढानामर्थानामन्यतोऽव्यावृत्ततया प्रतिपादनात्॥ १०७१ ॥

ननु यदि न कश्चिदेव वस्त्वंशः शब्देन प्रतिपाद्यते तत्कथमुक्तमाचार्येणार्थान्तरनिवृत्त्या कश्चिदेव वस्तुनो भागो गम्यत इत्यत आह—**अर्थान्तरपरावृत्त्ये**त्यादि।

**अर्थान्तरपरावृत्त्या गम्यते तस्य वस्तुनः।**
**कश्चिद्भाग इति प्रोक्तं तदेव प्रतिबिम्बकम्॥ १०७२ ॥**

ननु बुद्धिधर्मत्वात्प्रतिबिम्बस्य कथं वस्तुभागत्वमुपपद्यत इत्यत आह—**अर्थान्तरपरावृत्ते**त्यादि।

**अर्थान्तरपरावृत्तवस्तुदर्शनसंश्रयात्।**
**आगतेस्तत्र चारोपात्तस्य भागोऽपदिश्यते॥ १०७३ ॥**

अर्थान्तरपरावृत्तवस्तुदर्शनद्वारायातत्वात्तत्रार्थान्तरपरावृत्ते वस्तुनि भ्रान्तैस्तादात्म्येनारोपितत्वात्तदेव प्रतिबिम्बकमुपचाराद्वस्तुनो भाग इति व्यपदिश्यते॥१०७३॥

अत्राप्यर्थान्तरपरावृत्त्येति तृतीयार्थं योजयन्नाह—**हेत्वर्थ** इत्यादि।

**हेत्वर्थः करणार्थश्च पूर्ववत्तेन वात्मना।**
**यदि वस्तु विजातीयान्न स्याद्भिन्नं न तत्तथा॥ १०७४ ॥**

**पूर्ववदि**ति। यथाऽर्थान्तरनिवृत्तिविशिष्टानाहेत्यत्रान्यान्यत्वेनेत्यादिना दर्शितं त(था)त्रापि योजनीयमित्यर्थः। अथवा सर्वत्रैवेत्थम्भूतलक्षणा तृतीयेयमिति दर्श-

यति—तेन वात्मनेति । ननु बाधान्तरनिवृत्तिर्बाह्यवस्तुगतो धर्मः, सा कथं प्रतिबिम्बाधिगमे हेतुभावं करणभावं वा प्रतिपद्यत इत्यत्राह—यदि वस्तु विजातीयादित्यादि । यदि हि विजातीयात्पदार्थाद्व्यावृत्तं वस्तु न स्यात्तदा न तत्प्रतिबिम्बात्मकं तथा विजातीयपरावृत्तवस्त्वात्मना व्यवसीयेत, तस्मादर्थान्तरपरावृत्तेर्हेतुभावः करणभावश्च युज्यत इति भावः ॥ १०७४ ॥

"नचान्यरूपमन्याहक्कुर्याज्ज्ञानं विशेषणम्" इत्यादावाह—अगोनिवृत्तिरन्यत्वमित्यादि ।

**अगोनिवृत्तिरन्यत्वं तस्य चात्मगतैव सा ।**
**भेदोक्तावप्यभावस्तु केवलो न निवर्त्तते ॥ १०७५ ॥**
**तद्विशेषणभावेऽपि वस्तुधीर्न विहीयते ।**
**कल्पनानिर्मितं चेदमभेदेऽपि विशेषणम् ॥ १०७६ ॥**
**सोपकृष्य ततो धर्मः स्थापितो भेदवानिव ।**
**येन दण्डादिवत्तस्य जायते हि विशेषणम् ॥ १०७७ ॥**

यदि ह्यन्यव्यावृत्तिर्भावरूपा वस्तुनो विशेषणत्वेनाभिप्रेता स्यात्तदैतत्सर्वं दूषणमुपपद्यते, यावता वस्तुस्वरूपैवान्यनिवृत्तिर्विशेषणत्वेनोपादीयते, तेन विशेषणानुरूपैव विशेष्यबुद्धिर्भवत्येव । तथाहि—अगोनिवृत्तिर्या गोरभिधीयते साऽश्वादिभ्यो गोर्यदन्यत्वं तत्स्वभावैव नान्या । ततश्च यद्यप्यसौ व्यतिरेकेणागोनिवृत्तिर्गोरित्यभिधीयते भेदान्तरप्रतिक्षेपमात्रजिज्ञासायां, तथापि परमार्थतस्तस्य गोरात्मगतैव सा, यथाऽन्यत्वम्, नह्यन्यत्वं नामान्यस्माद्वस्तुनोऽन्यत्, अपितु तदेव । अन्यथा तद्वस्तु ततोऽन्यस्मिन्न सिद्ध्येत् । तत्—तस्मात्, विशेषणभावेऽप्यन्यव्यावृत्तेर्विशेष्ये वस्तुधीर्भवत्येव । स्यादेतद्व्यतिरिक्तमेव हि विशेष्याद्विशेषणं लोके प्रसिद्धम्, यथा दण्डः पुरुषस्य, व्यावृत्तिश्चाव्यतिरिक्ता वस्तुनः, तत्कथमसौ तस्य विशेषणं युज्यत इत्याह—कल्पनेत्यादि । नहि परमार्थेन न किंचित्कस्यचिद्विशेषणं युक्तम्, अनुपकारकस्य विशेषणत्वायोगात्, उपकारकत्वे चाङ्गीक्रियमाणे कार्यकाले कारणस्यानवस्थानादयुगपत्कालभाविनोर्न विशेषणविशेष्यभावो युक्तः, युगपत्कालभावित्वेतु तदानीं सर्वात्मना परिनिष्पत्तेर्न परस्परमुपकारोऽस्तीति न युक्तो विशेषणविशेष्यभावः । तत्तस्मात्सर्वभावानां स्वस्वभावस्थितत्वेनायःशलाकाकल्पत्वात्केवलं कल्पनयाऽमीषां

मिश्रीकरणम् । तेन परमार्थतो यद्यपि व्यावृत्तितद्वतोरभेदस्तथापि कल्पनारचितं भेदमाश्रित्य विशेष्यविशेषणभावो भविष्यति ॥ १०७५ ॥ १०७६ ॥ १०७७ ॥

यच्चोक्तम्—"यदा धीशब्दवाच्यत्वान्न व्यक्तीनामपोह्यते" इत्यादि । तत्राह—प्रतिभासश्चेत्यादि ।

**प्रतिभासश्च शब्दार्थ इत्याहुस्तत्त्वचिन्तकाः ।**
**दृश्यकल्पाविभागज्ञो लोको बाह्यं तु मन्यते ॥ १०७८ ॥**
**तस्यातोऽध्यवसायेन व्यक्तीनामेव वाच्यता ।**
**तत्त्वतश्च न शब्दानां वाच्यमस्तीति साधितम् ॥ १०७९ ॥**

व्यक्तीनामवाच्यत्वादित्यसिद्धम् । तथाहि—यद्व्यक्तीनामवाच्यत्वमस्माभिर्वर्णितं तत्परमार्थचिन्तायाम्, न पुनः संवृत्त्यापि, संवृत्त्या तु व्यक्तीनामेव वाच्यत्वमविचाररमणीयतया प्रसिद्धमित्यसिद्धो हेतुः । दृश्यः—बाह्यः स्वलक्षणात्मा, (कल्पः—) विकल्प्यो विकल्पज्ञानपरिवर्त्ती प्रतिभासः । अथ पारमार्थिकमवाच्यत्वं हेतुत्वेनोपादीयते तदाऽपोह्यत्वमपि व्यक्तीनां परमार्थतो नेष्टमित्यतः सिद्धसाध्यतेति दर्शयति—तत्त्वतश्चेत्यादि ॥ १०७८ ॥ १०७९ ॥

इत्थमित्यादिना हेतोरसिद्धतामेव निगमयति ।

**इत्थं च शब्दवाच्यत्वाद्व्यक्तीनामस्त्यपोह्यता ।**
**सामान्यस्य तु नापोहो न चापोहेऽपि वस्तुता ॥ १०८० ॥**

यच्चोक्तम्—"तदाऽपोह्यो न सामान्यं तस्यापोहाच्च वस्तुता ।" इति, तत्राप्यपोह्यत्वादित्यस्य हेतोरसिद्धत्वमनैकान्तिकत्वं चेति दर्शयति—**सामान्यस्ये**त्यादिना । अपोह इति । व्यक्तीनामेवापोहस्य प्रतिपादितत्वात् । **न चापोहेऽपि वस्तुते**ति । साध्यविपर्यये हेतोर्बाधकप्रमाणाभावादिति भावः ॥ १०८० ॥

यच्चोक्तं "नापोह्यत्वमभावाना"मित्यादि, तत्राह—**नाभाव** इत्यादि ।

**नाभावोऽपोह्यते ह्येवं नाभावोऽभाव इत्ययम् ।**
**भावस्तु न तदात्मेति तस्येष्टैवमपोह्यता ॥ १०८१ ॥**

अभावो नाभाव इत्येवमभावो नापोह्यते येनाभावरूपतायास्त्यागः स्यात् । किं तर्हि? । भावो यः स विधिरूपत्वादभावरूपविवेकेनावस्थित इति सामर्थ्यादपोह्यत्वं तस्याभावस्येष्टम् ॥ १०८१ ॥

एतदेव स्पष्टीकुर्वन्नाह—**यो नामेत्यादि** ।

**यो नाम न यदात्मा हि स तस्यापोह उच्यते ।**
**न भावोऽभावरूपश्च तदपोहे न वस्तुता ॥ १०८२ ॥**

तदपोह इति । तस्याभावस्यैवमपोहे सति न वस्तुता प्राप्नोति ॥ १०८२ ॥

अत्रोभयपक्षप्रसिद्धोदाहरणोपदर्शनेनानैकान्तिकतामेव स्फुटयन्नाह—**प्रकृतीशादिजन्यत्वमित्यादि** ।

**प्रकृतीशादिजन्यत्वं वस्तूनां नेति चोदिते ।**
**प्रकृतीशादिजन्यत्वं नहि वस्तु प्रसिद्ध्यति ॥ १०८३ ॥**

तथाहि प्रकृतीश्वरकालादिकृतत्वं भावानां भवद्भिर्मीमांसकैरपि नेष्यत एव । तस्य च प्रतिषेधे सत्यपि यथा न वस्तुत्वमापद्यते तथाऽपोह्यत्वेऽप्यभावस्य वस्तुत्वापत्तिर्न भविष्यतीत्यनेकान्तः ॥ १०८३ ॥

यदुक्तम्—"तत्रासतोऽपि वस्तुत्वमिति क्लेशो महान्भवेत्" इति । तदप्यनेनैवानैकान्तत्वप्रतिपादनेन प्रतिविहितमिति दर्शयति—**नातोऽसतोऽपीत्यादि** ।

**नातोऽसतोऽपि भावत्वमिति क्लेशो न कश्चन ।**
**तस्य सिद्धौ च सत्ताऽस्ति सा चासत्ता प्रसिध्यति ॥१०८४॥**

"तदसिद्धौ न सत्तास्ति नचासत्त्व प्रसिद्ध्यती"त्यत्राह—**तस्य सिद्धौ च सत्ताऽस्तीत्यादि** । तस्याभावस्य यथोक्तेन प्रकारेण सिद्धौ सत्यामपि भावस्य सत्ता सिद्ध्यत्येव तस्य स्वस्वभावव्यवस्थितत्वात् । या चाभावस्य यथोक्तेन प्रकारेण सिद्धिः सैवासत्तेति प्रसिद्ध्यति । एतच्च प्रतिसमाधानस्य समानत्वादिति कृत्वाऽत्रैव प्रतिविहितम् ॥ १०८४ ॥

इदानीं यथानुक्रममेव प्रतिसमाधानमाह । तत्र यदुक्तम् "अभावस्य च योऽभाव"इत्यादि, तत्राह—**अगोत इत्यादि** ।

**अगोतो विनिवृत्तिश्च गौर्विलक्षण इष्यते ।**
**भाव एव ततो नायं गौरगोर्मे प्रसज्यते ॥ १०८५ ॥**

भाव एव स चेदित्येतन्नानिष्टत्वापादनमिष्टत्वात् । तथाहि—अगोरूपादश्वादेर्गोर्भावविशेषरूप एव विलक्षण इष्यते, नाभावात्मा, तेन भाव एव भवेत् । अगोतश्च गोर्वैलक्षण्यस्येष्टत्वादगोर्न गोत्वप्रसङ्गः ॥ १०८५ ॥

यच्चोक्तम्—"न ह्यवस्तुनि सा मता" इति तदसिद्धमनैकान्तिकं चेति दर्शयन्नाह—अवस्तुविषयेऽप्यस्तीत्यादि ।

**अवस्तुविषयेऽप्यस्ति चेतोमात्रविनिर्मिता ।**
**विचित्रकल्पनाभेदरचितेष्विव वासना ॥ १०८६ ॥**
**ततश्च वासनाभेदाद्भेदः सद्रूपतापि च ।**
**प्रकल्प्यते ह्यपोहानां कल्पनारचितेष्विव ॥ १०८७ ॥**

अवस्तुविषयं चेतो नास्तीत्येतदसिद्धम् । तथाहि—उत्पाद्यकत्वा(ल्प ?)विषयसमुद्भूतवस्त्वाकारसमारोपेण प्रवर्त्तत एव चेतः । तच्चानागतसजातीयविकल्पोत्पत्तयेऽनन्तरचेतसि वासनामाधत्त एव । यतः पुनरपि सन्तानपरिपाकवशात्प्रबोधकं प्रत्ययमासाद्य तथाविधमेव चेतः समुपजायते, तद्वदपोहानामपि परस्परतो भेदः सद्रूपता च कल्पनावशाद्भविष्यतीत्यनैकान्तिकता । अवयवार्थस्तु सुबोधत्वान्न विभक्तः ॥ १०८६ ॥ १०८७ ॥

यच्चोक्तं भवद्भिः—"शब्दभेदोऽपि तन्निमित्तो न लभ्यत" इति, तत्राह—यादृश इत्यादि ।

**यादृशोऽर्थान्तरापोहो वाच्योऽयं प्रतिपादितः ।**
**शब्दान्तरव्यपोहोऽपि तादृगेवावगम्यताम् ॥ १०८८ ॥**

**यादृश** इति । प्रतिबिम्बात्मा । तस्य च प्रतिबिम्बान्तराद्भेदः स्फुटतरमेव संवेद्यत इति । अतो विस्तरेण यदुक्तं तत्सर्वमसङ्गतमिति भावः ॥ १०८८ ॥

न गम्यगमकत्वं स्यादित्यादिप्रयोगे प्रतिविधानमाह—वस्त्वित्यादि ।

**वस्त्वित्यध्यवसायत्वान्नावस्तुत्वमपोहयोः ।**
**प्रसिद्धं सांवृते मार्गे तात्त्विके त्विष्टसाधनम् ॥ १०८९ ॥**

यद्यवस्तुत्वादिति सामान्येनोपादीयते तदा हेतुरसिद्धः, यतः प्रतिबिम्बात्मनोर्वाच्यवाचकापोहयोर्बाह्यवस्तुत्वेन भ्रान्तैरध्यवसितत्वात्सांवृतं वस्तुत्वमस्त्येव ॥ १०८९ ॥

अथ पारमार्थिकमवस्तुत्वमाश्रित्य हेतुरभिधीयते तदा सिद्धसाध्यता । नहि परमार्थतोऽस्माभिः किंचिद्वाच्यं वाचकं चेष्यते । एतदेव दर्शयति—**न वाच्यमित्यादि** ।

**न वाच्यं वाचकं वापि परमार्थेन किञ्चन ।**
**क्षणभङ्गिषु भावेषु व्यापकत्ववियोगतः ॥ १०९० ॥**

**व्यापकत्ववियोगत** इति । क्षणिकत्वेन सङ्केतव्यवहाराप्तकालव्यापकत्वाभावात्स्वलक्षणस्येत्यर्थः । स्यादेतन्नास्माभिस्तात्त्विको वाच्यवाचकभावो निषिध्यते । किं तर्हि तात्त्विकीमपोहयोरवस्तुतामाश्रित्य सांवृतमेव गम्यगमकत्वं निषिध्यते, न भाविकम्, तेन न हेतोरसिद्धता नापि सिद्धसाध्यता प्रतिज्ञादोषो भविष्यति ॥१०९०॥

द्वयोरपि सांवृतत्वे तात्त्विकत्वे चाश्रीयमाणे स्यादेतद्दोषद्वयमित्यत आह—**तद्गम्यगमकत्वं** चेत्यादि ।

**तद्गम्यगमकत्वं चेत्सांवृतं प्रतिषिध्यते ।**
**तात्त्विकीं समुपाश्रित्य विनिवृत्त्योरवस्तुताम् ॥ १०९१ ॥**
**तथापि व्यभिचारित्वं दुर्वारमनुषज्यते ।**
**विकल्परचितैरर्थैः शब्दैस्तद्वाचकैरपि ॥ १०९२ ॥**

एवं सति हेतोरनैकान्तिकता, कल्पनारचितेषु महाश्वेतादिष्वर्थेषु तद्वाचकेषु च शब्देषु परमार्थतो वस्तुत्वाभावेऽपि सांवृतस्य वाच्यवाचकभावस्य दर्शनात् । तद्दर्शयति—**विकल्परचितै**रित्यादि ॥ १०९१ ॥ १०९२ ॥

स्यादेतत्—तत्रापि महाश्वेतादिषु सामान्यं वाच्यं वाचकं च परमार्थतोऽस्त्येव । ततो न तैर्व्यभिचार इत्याशङ्क्याह—**न ही**त्यादि ।

**न हि तेष्वस्ति सामान्यं वाच्यं तस्य च वाचकम् ।**
**न वाचकत्वं शब्दस्य क्षणभङ्गि स्वलक्षणम् ॥ १०९३ ॥**

सामान्यपरीक्षायां सामान्यस्य विस्तरेण निरस्तत्वान्न तेषु सामान्यं वाच्यं वाचकं चास्तीत्यनैकान्तिकता हेतोः । **तस्ये**ति । सामान्यस्य । वाचकमित्यत्रापि सामान्यमिति प्रकृतेन सम्बध्यते । स्यादेतद्यद्यपि तत्र वस्तुभूतं नास्ति वाच्यं, वाचकं तु महाश्वेतादिशब्दस्वलक्षणमस्त्येवेत्यत आह—**न वाचकत्वं शब्दस्ये**त्यादि । सर्वपदार्थव्यापिनः क्षणभङ्गस्य प्रतिपादितत्वान्न शब्दस्वलक्षणस्य वाचकत्वं, क्षणभङ्गित्वेन तस्य सङ्केतासम्भवात् । व्यवहारकालानन्वयाच्चेति प्रतिपादितम् ॥ १०९३ ॥

**तस्मादि**त्यादिनोपसंहरति ।

**तस्मात्तद्द्वयमेष्टव्यं प्रतिबिम्बादि सांवृतम् ।**
**तेषु तद्व्यभिचारित्वं दुर्निवारमवस्थितम् ॥ १०९४ ॥**

**द्वयमि**ति । वाच्यं वाचकं च । प्रतिबिम्बादीत्यादिशब्देन निराकारज्ञानाभ्युप-

गमेऽपि स्वगतमन्यत्किंचित्प्रतिनियतमनर्थेऽर्थाध्यवसायिरूपस्य विज्ञानस्यावश्यमङ्गीकर्त्तव्यमिति दर्शयति—तेष्विति । कल्पनोपरचितेष्वर्थेषु । तदिति । तस्मात् । तस्य वा हेतोर्व्यभिचारित्वम् ॥ १०९४ ॥

"विधिरूपश्च शब्दार्थो येन नाभ्युपगम्यते" इत्यत्राह—विधिरूपश्चेत्यादि ।

**विधिरूपश्च शब्दार्थो येन नाभ्युपगम्यते ।**
**तदाभं जायते चेतः शब्दादर्थावसायि हि ॥ १०९५ ॥**
**स्वार्थाभिधाने शब्दानामर्थादन्यनिवर्त्तनम् ।**
**तद्योगो व्यतिरेकोऽपि मम तत्पूर्वको ह्यसौ ॥ १०९६ ॥**

न ह्यस्माभिः सर्वथा विधिरूपः शब्दार्थो नाभ्युपगम्यते, येनैतद्भवताऽनिष्टप्रसङ्गापादनं क्रियते । यावता शब्दादर्थाध्यवसायिनश्चेतसः समुत्पादात्सांवृतो विधिरूपः शब्दार्थोऽभीष्यत एव । तत्त्वतस्तु न किंचिद्वाच्यमस्ति शब्दानामिति विधिरूपस्तात्त्विको निषिध्यते । तेन सांवृतस्य विधिरूपस्य शब्दार्थस्येष्टत्वात्स्वार्थाभिधाने विधिरूपे सत्यन्यव्यतिरेकस्य सामर्थ्यादधिगतेर्विधिपूर्वको व्यतिरेको युज्यत एव॥१०९५॥ ॥ १०९६ ॥

स्यादेतद्यदि विधिरूपः शब्दार्थोऽभ्युपगम्यते, कथं तर्हि हेतुमुखे लक्षणकारेणासम्भवो विधेरित्युक्तमित्यत आह—असम्भव इत्यादि ।

**असम्भवो विधेरुक्तः सामान्यादेरसम्भवात् ।**
**शब्दानां च विकल्पानां वस्तुनो विषयत्वतः ॥ १०९७ ॥**

सामान्यलक्षणादेर्वाच्यस्य वाचकस्य च परमार्थतोऽसम्भवाच्छब्दानां विकल्पानां च वस्तुतः परमार्थतो विषयासम्भवात्परमार्थमाश्रित्य विधेरसम्भव उक्त आचार्येणेत्यविरोधः ॥ १०९७ ॥

"अपोह्मात्रवाच्यत्व"मित्यादावाह—नीलोत्पलादीत्यादि ।

**नीलोत्पलादिशब्देभ्य एक एवावसीयते ।**
**अनीलानुत्पलादिभ्यो व्यावृत्तं प्रतिबिम्बकम् ॥ १०९८ ॥**

एकमेवानीलानुत्पलव्यावृत्तमर्थाकारमुभयरूपं प्रतिबिम्बकं नीलोत्पलशब्दो वदति नाभावमात्रम्, अतः सबलार्थाभिधायित्वमध्यवसायवशान्नीलोत्पलादिशब्दानामस्त्येवेति तदनुरोधात्सामानाधिकरण्यमुपपद्यत एव ॥ १०९८ ॥

यदुक्तम्—"अथान्यापोहवद्वस्तु वाच्यमित्यभिधीयते" इति अत्राह—**नत्वन्यापोहवदित्यादि** ।

**नत्वन्यापोहवद्वस्तु वाच्यमस्माभिरिष्यते ।**
**व्यावृत्तादन्यतोऽभावान्नान्याव्द्यावृत्तिरस्ति नः ॥ १०९९ ॥**
**तत्पारतन्त्र्यदोषोयं जाताविव न संगतः ।**
**अवदातमिति प्रोक्ते शब्दस्यार्थेऽपृथक्त्वतः ॥ ११०० ॥**
**विशेषणविशेष्यत्वसामानाधिकरण्ययोः ।**
**तस्मादपोहे शब्दार्थे व्यवस्था न विरुध्यते ॥ ११०१ ॥**

यदि हि व्यावृत्ताद्भावाव्द्यावृत्तिर्नामान्या भवेत्तदा स्यात्तद्वत्पक्षोदितदोषप्रसङ्गः, यावताऽन्यतो व्यावृत्ताद्भावान्नास्माकमन्या व्यावृत्तिरस्ति, अपि तु व्यावृत्त एव भावो भेदान्तरप्रतिक्षेपमात्रजिज्ञासायां तथाऽभिधीयते । तेन यथाजातौ प्राधान्येन वाच्यायां पारतन्त्र्येण तद्वतोऽभिधानात्तद्गतभेदानाक्षेपात्तेन सह सामानाधिकरण्यादेरभावप्रसङ्ग उक्तः, तद्वदपोहपक्षे नावतरति व्यतिरिक्तान्यापोहवतोऽनभिधानात् । तद्दर्शयति—**तत्पारतन्त्र्यदोषोय**मित्यादि । तदिति । तस्मात् । **अवदातमिति प्रोक्त** इति । विशुद्धधियाऽऽचार्यदिङ्नागेन प्रोक्तेऽपोहलक्षणे शब्दार्थे । अत्र कारणमाह—**अपृथक्त्वत** इति । तस्यान्यापोहलक्षणस्य शब्दार्थस्याऽन्यापोढात्पदार्थादपृथक्त्वादव्यतिरेकादिति यावत् । **विशेषणविशेष्ये**त्यादि । सुबोधम् ॥ १०९९ ॥ ॥ ११०० ॥ ११०१ ॥

यथा च न विरुध्यते सामानाधिकरण्यादि तथा दर्शयन्नाह—**केवलादित्यादि** ।

**केवलान्नीलशब्दादेर्विशिष्टं प्रतिबिम्बकम् ।**
**कोकिलोत्पलभृङ्गादौ प्लवमानं प्रवर्त्तते ॥ ११०२ ॥**
**पिकाञ्जनाद्यपोहेन विशिष्टविषयं पुनः ।**
**तदिन्दीवरशब्देन स्थाप्यते परिनिश्चितम् ॥ ११०३ ॥**
**सामानाधिकरण्यादिरेवमस्मिन्न बाधितः ।**
**परपक्षे तु सर्वेषां तद्व्यवस्थातिदुर्घटा ॥ ११०४ ॥**

तथाहि—नीलमित्युक्ते पीतादिव्यावृत्तान्यपदार्थव्यवसायिभ्रमरकोकिलाञ्जनादिषु संशय्यमानरूपं विकल्पप्रतिबिम्बकमुदेति । तच्चोत्पलशब्देन कोकिलादिभ्यो

व्यवच्छेद्यानुत्पलव्यावृत्तवस्तुविषये व्यवस्थाप्यमानं परिनिश्चितात्मकं प्रतीयते । तेन परस्परं यथोक्तबुद्धिप्रतिबिम्बकापेक्षया व्यवच्छेद्यव्यवच्छेदकभावान्नीलोत्पलशब्दयोर्विशेष्यविशेषणभावो न विरुध्यते । द्वाभ्यां वाऽनीलानुत्पलव्यावृत्तैकप्रतिबिम्बात्मकवस्तुप्रतिपादनादेकार्थवृत्तितया सामानाधिकरण्यं च भवतीति समुदायार्थः । अवयवार्थस्तूच्यते—**प्लवमानमिति** । अलभमानप्रतिष्ठं संशयरूपमिति यावत् । पिकशब्दः कोकिलपर्यायः । शेषं सुबोधम् । स्यादेतदस्मत्पक्षेऽपि सामानाधिकरण्यादिरविरुद्ध एवेत्यत आह—**परपक्षे त्वित्यादि** । **तद्व्यवस्थेति** । तस्य सामानाधिकरण्यादेर्व्यवस्था तद्व्यवस्था ॥ ११०२ ॥ ११०३ ॥ ११०४ ॥

कथं दुर्घटेत्याह—**तथाहीत्यादि** ।

> **तथा ह्येकेन शब्देन सर्वथोक्तं स्वलक्षणम् ।**
> **तथा चाभिहिते तस्मिन्कस्माद्भेदान्तरेऽमतिः ॥ ११०५ ॥**
> **यदर्थमपरः शब्दः प्रयुज्येतात्र वस्तुतः ।**
> **सर्वथाऽभिहिते नो चेत्तदनेकं प्रसज्यते ॥ ११०६ ॥**

विधिशब्दार्थवादिपक्षे नीलादिशब्देनैवैकेनोत्पलादिस्वलक्षणेऽभिहिते किमुत्पलमाहोस्विदञ्जनमित्येवमज्ञानं विशेषान्तरे न प्राप्नोति, सर्वात्मना तस्य वस्तुनः प्रतिपादितत्वात् । एकस्यैकदैकप्रतिपत्त्रपेक्षया ज्ञाताज्ञातत्वविरोधात् । तद्दर्शयति—**कस्माद्भेदान्तरेऽमतिरिति** । अमतिरज्ञानम् । कुत्सिता या मतिरमतिः । संशयो विपर्यासश्चेति यावत् । ततश्च संशयविपर्यासाभावादुत्पलादिशब्दान्तरप्रयोगाकाङ्क्षा प्रयोक्तुश्च न प्राप्नोतीति दर्शयति—**यदर्थमित्यादि** । **यदर्थमिति** । यस्या अमतेर्निवृत्त्यर्थमित्यर्थः । अथापि स्यात्—तद्वस्त्वेकदेशेनाभिहितं न सर्वात्मना, तेन स्वभावान्तराभिधानायापरः शब्दोऽन्वेष्यत एवेत्यत आह—**सर्वथेत्यादि** । न ह्येकस्य वस्तुन एकदेशाः सन्ति, येनैकदेशेनाभिधानं स्यात्, एकत्वानेकत्वयोः परस्परपरिहारस्थितलक्षणत्वात् । ततश्च यावन्तश्चैकदेशास्तावन्त्येव केवलं भवता वस्तूनि प्रतिपादितानीति नैकमनेकं सिध्येत् ॥ ११०५ ॥ ११०६ ॥

स्यादेतन्न नीलशब्देन द्रव्यमभिधीयते, किं तर्हि ? नीलाख्यो गुणस्तत्समवेता वा नीलत्वजातिः, उत्पलशब्देनाप्युत्पलजातिरेवोच्यते, न द्रव्यं, तेन भिन्नार्थाभिधानादुत्पलशब्दान्तराकाङ्क्षा युज्यत एवेत्यत आह—**नीलजातिरित्यादि** ।

**नीलजातिर्गुणो वाऽपि नीलशब्देन चेद्गतः ।**
**अन्येन्दीवरजातिस्तु व्यवसेयोत्पलश्रुतेः ॥ ११०७ ॥**
**एवं सति तयोर्भेदाद्बकुलोत्पलशब्दवत् ।**
**सामानाधिकरण्यादि सुतरां नोपपद्यते ॥ ११०८ ॥**

**अन्येन्दीवरजातिस्त्विति** । अन्या चासाविन्दीवरजातिश्चेति समासः । **व्यवसेयेति** । व्यवसातव्या । उत्पलश्रुतेरिति पञ्चम्यन्तम् । अस्मिन्पक्षे सुतरामेव सामानाधिकरण्यमनुपपन्नं बकुलोत्पलशब्दयोरिवैकस्मिन्नर्थे नीलोत्पलशब्दयोर्वृत्त्यभावात् । नहि भवति बकुलमुत्पलमिति ॥ ११०७ ॥ ११०८ ॥

स्यादेतत्—नीलशब्दो यद्यपि जातिगुणविशेषवचनः, तथापि तद्द्वारेण नीलगुणतज्जातिभ्यां संबद्धं द्रव्यमपि तेनाभिधीयते तथोत्पलशब्देनापि जातिद्वारेण तदेव द्रव्यमभिधीयत इति । अतस्तयोरेकार्थवृत्तिसम्भवात्सामानाधिकरण्यं भविष्यति, न बकुलोत्पलशब्दयोरित्यत आह—**गुणतज्जातीत्यादि** ।

**गुणतज्जातिसम्बद्धं द्रव्यं चेत्प्रतिपाद्यते ।**
**नीलशब्देन यद्येवं व्यर्था स्यादुत्पलश्रुतिः ॥ ११०९ ॥**
**ताभ्यां यदेव सम्बद्धं तदेवोत्पलजातिमत् ।**
**नीलश्रुत्यैव तत्रोक्तं व्यर्था नीलोत्पलश्रुतिः ॥ १११० ॥**

गुणश्च नीलाख्यः, तज्जातिश्च नीलत्वाख्येति गुणतज्जाती, ताभ्यां सम्बद्धमिति विग्रहः । **व्यर्था स्यादुत्पलश्रुतिरिति** । नीलशब्देनैव तस्य द्रव्यस्य प्रतिपादितत्वात् । एतदेव दर्शयति—**ताभ्यामित्यादि** । **ताभ्यामिति** । गुणतज्जातिभ्याम् । स्यादेतत्—यद्यपि नीलशब्देन गुणतज्जातिमद्द्रव्यमभिधीयते, तथापि तस्य नीलशब्दस्यानेकार्थवृत्तिदर्शनात्प्रतिपत्तुरुत्पलार्थे निश्चितरूपा न बुद्धिरुपजायते, कोकिलादेरपि नीलत्वात् । अतोऽर्थान्तरसंशयव्यवच्छेदादुत्पलश्रुतेः प्रयोगः सार्थक एवेति । तदसम्यक् प्रकृतार्थानभिज्ञतयाऽभिधानात् । विधिशब्दार्थपक्षे हि सामानाधिकरण्यादि नोपपद्यत इत्येतदत्र प्रकृतम् । यदि चोत्पलशब्दः संशयव्यवच्छेदायैव व्याप्रियते न द्रव्यप्रतिपत्तये, न तर्हि विधिः शब्दार्थः स्यात्, उत्पलशब्देन भ्रान्तिसमारोपिताकारव्यवच्छेदमात्रस्यैव प्रतिपादनात् । परस्परविरुद्धं चेदमभिधीयते —नीलशब्देनोत्पलादिकं द्रव्यमभिधीयते, अथ च प्रतिपत्तुस्तत्र निश्चयो न जायत

इति। नहि यत्र संशयो जायते स शब्दार्थो युक्तोऽतिप्रसङ्गात्। नापि निश्चयेन विषयीकृते वस्तुनि संशयोऽवकाशं लभते। निश्चयारोपमनसोर्बाध्यबाधकभावात्। स्यादेतत्—यद्यपि नीलोत्पलशब्दयोरेकस्मिन्नर्थे वृत्तिर्नास्ति, तदर्थयोस्तु गुणजात्योरेकस्मिन्द्रव्ये वृत्तिरस्तीति। अतोऽर्थद्वारकमनयोः सामानाधिकरण्यं भविष्यतीति तदेतदयुक्तमतिप्रसङ्गात्। एवं हि रूपरसशब्दयोरपि सामानाधिकरण्यं स्यात्, तदर्थयो रूपरसयोरेकस्मिन्पृथिव्यादिद्रव्ये वृत्तेः। किं च नीलमुत्पलमित्येकार्थविषया बुद्धिर्न प्राप्नोति, एकद्रव्यसमवेतयोर्गुणजात्योर्द्वाभ्यां पृथक्पृथगभिधानात्, न चैकार्थविषयज्ञानानुत्पादे शब्दयोः सामानाधिकरण्यमस्तीत्यलं बहुना॥ ११०९॥ ॥ १११०॥

स्यादेतत्—न यदेव नीलगुणतज्जातिभ्यां सम्बद्धं वस्तु तदेवोत्पलशब्देनोच्यते, किं तर्हि? अन्यदेव, तेनोत्पलश्रुतिर्व्यर्था न भविष्यतीत्यत आह—**गुणतज्जातिसम्बद्धादित्यादि।**

**गुणतज्जातिसम्बद्धादन्यदुत्पलजातिमत्।**
**यदि भिन्नाश्रये स्यातां पुनर्नीलोत्पलश्रुती॥ ११११॥**

यदीत्यवच्छेदः। **भिन्नाश्रये स्याताम्**इति। व्यधिकरणे स्यातामित्यर्थः॥ ११११॥

अथापि स्यात्—यद्यपि तदेव द्रव्यं नीलशब्देनोच्यते, उत्पलशब्देनापि तदेव। तथापि नीलशब्दो नोत्पलजातिसम्बन्धिरूपेण द्रव्यमभिधत्ते, किं तर्हि? नीलगुणतज्जातिसम्बन्धिरूपेणैव, तेनोत्पलत्वजातिसम्बन्धिरूपत्वमस्याभिधातुमुत्पलश्रुतिः प्रवर्त्तमाना नानर्थिका भविष्यतीति तदेतदाशङ्क्य परिहरति—**अथोत्पलत्वेत्यादि।**

**अथोत्पलत्वसम्बन्धिरूपत्वेन न चोदयेत्।**
**गुणतज्जातिसम्बद्धं द्रव्यं नीलमिति ध्वनिः॥ १११२॥**

अथ नीलमिति ध्वनिरुत्पलत्वसम्बन्धिरूपत्वेन गुणतज्जातिसम्बद्धं द्रव्यं न चोदयेदिति सम्बन्धः॥ १११२॥

**स्यान्नामोत्पलतायोगिरूपत्वमतदात्मकम्।**
**उत्पलत्वेन सम्बद्धं ताभ्यां सम्बद्धमेव तत्॥ १११३॥**
**नीलश्रुत्या च तत्प्रोक्तं शाब्द्यात्र विषयीकृतम्।**
**बुद्ध्या सर्वात्मना नांशैस्तदनर्थोत्पलश्रुतिः॥ १११४॥**

तदेतदसम्यक् । नहि नीलगुणतज्जातिसम्बन्धिरूपत्वादन्यदेवोत्पलजातिसम्बन्धिरूपत्वम्, येन नीलोत्पलादिसम्बन्धिरूपत्वाभिधाने द्रव्यस्योत्पलत्वजातिसम्बन्धिरूपत्वाभिधानं न भवेत् । यावतैकस्माद्द्रव्याद्द्वयोरपि सम्बन्धिरूपत्वयोरव्यतिरेकात्तद्वत्तयोरप्येकत्वमेवेत्ययुक्तमेकरूपाभिधानेऽपररूपानभिधानम् । किंचाभ्युपगम्योच्यते—भवतु नामोत्पलत्वसम्बन्धिरूपत्वं नीलतज्जातिसम्बन्धिरूपत्वादन्यत्, तथाप्युत्पलश्रुतिरनर्थकैव । तथाहि—यत्तदनंशं वस्तूत्पलजात्या सम्बद्धं तदेवाभ्यां नीलगुणतज्जातिभ्यां सम्बध्यते नान्यत् । तच्चानंशत्वात्सर्वात्मना नीलश्रुत्यैवाभिहितं शाब्द्या च बुद्ध्या व्यवसायात्मिकया विषयीकृतमिति किमपरमनभिहितमस्य स्वरूपमस्ति यदभिधानायोत्पलश्रुतिः सार्थिका भवेत् ॥ १११३ ॥ १११४ ॥

उद्योतकरस्त्वाह—निरंशे वस्तुनि सर्वात्मना विषयीकृतं नांशेनेत्येष विकल्पो नावतरति, सर्वशब्दस्यानेकार्थविषयत्वात्, एकशब्दस्य चावयववृत्तित्वादिति । तदेतदाशङ्क्य परिहरति—नचेदित्यादि ।

**न चेद्भेदविनिर्मुक्ते कात्स्न्र्यभेदविकल्पनम् ।**
**न वाक्यार्थापरिज्ञानादिदं ह्यत्र विवक्षितम् ॥ १११५ ॥**
**प्रथमेनैव शब्देन सर्वथा तत्प्रकाशितम् ।**
**नात्मा कश्चित्परित्यक्तो यादृशं तत्तथोदितम् ॥ १११६ ॥**

**भेदविनिर्मुक्त** इति । निरवयवे वस्तुनीत्यर्थः । **कात्स्न्र्यभेदविकल्पनमिति** । सर्वात्मना विषयीकृतं वैकदेशेनेत्येवं कात्स्न्र्यभेदाभ्यां विकल्पनम् । तदेतद्वाक्यार्थापरिज्ञानादुक्तम् । तथाहि—प्रथमेनैव नीलशब्देन सर्वात्मना तत्प्रकाशितमित्यस्यायमर्थो विवक्षितः, यादृशं तद्वस्तु तादृशमेवाभिहितं, न तस्य कश्चित्स्वभावस्त्यक्तो यदभिधानायोत्पलश्रुतिर्व्याप्रियेत, निरंशत्वात्तस्य वस्तुन इत्यतो वाक्छलमेतत् ॥ १११५ ॥ १११६ ॥

एवं यथाचोत्पलश्रुतिरनर्थिका तथान्येषामप्यनित्यादिशब्दानां प्रयोगोऽनर्थकः प्राप्नोति, सति प्रयोगे पर्यायत्वमेव स्यात्तरुपादपादिशब्दवदित्यतिदेशं कुर्वन्नाह—**एतेनैवेत्यादि** ।

**एतेनैव प्रकारेण नान्येषामप्युदीरणम् ।**
**सफलं तत्र शब्दानामुक्तौ पर्यायता ध्रुवम् ॥ १११७ ॥**

उदीरणमिति । प्रयोगः । उक्ताविति । उच्चारणे । तदुक्तम्—"अन्यथैकेन शब्देन व्याप्त एकत्र वस्तुनि । बुद्ध्या वा नान्यविषय इति पर्यायता भवे"दिति ॥१११७॥

स्यादेतत्—भवत्पक्षेऽप्येकेन शब्देनाभिहिते वस्तुनि भेदान्तरे संशयविपर्यासाभावप्रसङ्गः, शब्दान्तराप्रवृत्तिप्रसङ्गश्च कस्मान्न भवतीत्यत आह—अस्माकं त्वित्यादि ।

**अस्माकं तु न शब्देन बाह्यार्थः प्रतिपाद्यते ।**
**शब्दान्न चापि विज्ञानं बाह्यार्थविषयं मतम् ॥ १११८ ॥**
**यतः सर्वात्मना ताभ्यां विषयीकरणात्परम् ।**
**शब्दज्ञानान्तरं तत्र पर्यायत्वं प्रयास्यति ॥ १११९ ॥**

ताभ्यामिति । शब्दज्ञानाभ्याम् । परमिति । उत्तरकालम् ॥ १११८॥१११९॥

अथ सांवृते शब्दार्थे कस्मादेष सामानाधिकरण्याभावो दोषो न भवतीत्यत आह—प्रतिबिम्बं त्वित्यादि ।

**प्रतिबिम्बं तु शब्देन क्रमेणैवोपजन्यते ।**
**एकत्वेन च तद्भाति बाह्यत्वेन च विभ्रमात् ॥ ११२० ॥**
**सामानाधिकरण्यादि प्रतिबिम्बानुरोधतः ।**
**परमार्थेन शब्दास्तु मता निर्विषया इमे ॥ ११२१ ॥**

नीलशब्देन हि प्रथमतरमनीलपदार्थव्यावृत्तमुत्पलादिषु प्लवमानरूपतया तेषामप्रतिक्षेपकमध्यवसितबाह्यरूपं विकल्पप्रतिबिम्बकमुपजन्यते, पुनरुत्पलश्रुत्या तदेवानुत्पलव्यावृत्तमारोपितबाह्यैकवस्तुस्वरूपमुपजन्यते, तदेवं क्रमेणानीलानुत्पलव्यावृत्तमध्यवसितबाह्यैकरूपं भ्रान्तं विकल्पप्रतिबिम्बकमुपजन्यत इति तदनुरोधात्सांवृतं सामानाधिकरण्यादि युज्यत एव । परमार्थतस्तु कस्मान्न युज्यत इत्याह—परमार्थेनेत्यादि ॥ ११२० ॥ ११२१ ॥

यदुक्तं—"लिङ्गसङ्ख्यादिसम्बन्धो न चापोहस्य विद्यत" इति, अत्राह—लिङ्गसङ्ख्यादीत्यादि ।

**लिङ्गसङ्ख्यादियोगस्तु व्यक्तीनामपि नास्त्ययम् ।**
**इच्छारचितसङ्केतनिमित्तो नहि वास्तवः ॥ ११२२ ॥**

वस्तुधर्मत्वमेषां लिङ्गसङ्ख्यादीनामसिद्धम् । स्वतन्त्रेच्छाविरचितसङ्केतमात्रभा-

वित्वात् । व्यक्तीनामपीत्यपिशब्दादपोहस्यापि । प्रयोगः—यो यदन्वयव्यतिरेकौ नानुविधत्ते, नासौ तद्धर्मः, यथा शीतत्वमग्नेः, नानुविधत्ते च लिङ्गसङ्ख्यादि वस्तुतोऽन्वयव्यतिरेकाविति व्यापकानुपलब्धिः ॥ ११२२ ॥

नचायमसिद्धो हेतुरिति दर्शयन्नाह—**तटस्तटीत्यादि** ।

**तटस्तटी तटं चेति त्रैरूप्यं न च वस्तुनः ।**
**शबलाभासताप्राप्तेः सर्वेषां तत्र चेतसाम् ॥ ११२३ ॥**

यदि हि लिङ्गं वस्तुगतो धर्मः स्यात्, तदैकस्मिंस्तटाख्ये वस्तुनि तटस्तटी तटमिति लिङ्गत्रययोगिशब्दप्रवृत्तेरेकस्य वस्तुनस्त्रैरूप्यप्रसङ्गः स्यात् । नचैकस्य स्त्रीपुन्नपुंसकाख्यं स्वभावत्रयं युक्तमेकत्वहानिप्रसङ्गात् । विरुद्धधर्माध्यासितस्याप्येकत्वे सर्वं विश्वमेकमेव वस्तु स्यात् । ततश्च सहोत्पत्तिविनाशप्रसङ्गः । किंच—सर्वस्यैवैकशब्देन शब्दान्तरेण वा लिङ्गत्रयप्रतिपत्तिदर्शनात्तद्विषयाणां सर्वचेतसां मेचकादिरत्नवच्छबलाभासताप्रसङ्गः ॥ ११२३ ॥

अथापि स्यात्—सत्यपि लिङ्गत्रययोगित्वे सर्ववस्तूनां यदेव रूपं वक्तुमिष्टं प्रतिपादकेन तन्मात्रावभासान्येव विवक्षावशाच्चेतांसि भविष्यन्तीति न शबलाभासानीत्यत आह—**विवक्षानुगतत्वे वेत्यादि** ।

**विवक्षानुगतत्वे वा न स्युस्तद्विषयाणि ते ।**
**तद्वशादेकरूपाणि नैकरूपं च वस्तु तत् ॥ ११२४ ॥**

विवक्षानुगतत्वे वा चेतसामिति शेषः । यदि हि विवक्षावशादेकरूपाणि चेतांसि भवन्तीत्यङ्गीक्रियते, तदा तानि चेतांसि त्र्यात्मकवस्तुविषयाणि न प्राप्नुवन्ति, तदाकारशून्यत्वात्, चक्षुर्विज्ञानवच्छब्दविषयम् । **तद्वशादिति** । विवक्षावशात् ॥ ११२४॥

योऽपि मन्यते संस्त्यानप्रसवस्थितिषु यथोक्तस्त्रीपुन्नपुंसकत्वव्यवस्थेति, तस्यापि न युक्तमित्यादर्शयन्नाह—**स्थितीत्यादि** ।

**स्थितिप्रसवसंस्त्यानसंश्रया लिङ्गसंस्थितिः ।**
**यदि स्यादविभागेन विलिङ्गत्वं प्रसज्यते ॥ ११२५ ॥**

लिङ्गसंस्थितिर्यदि स्यादित्यत्र छेदः । यदि हि स्थित्याद्याश्रया लिङ्गस्थितिर्लिङ्गव्यवस्था, तदा तटशृङ्खलादिवत्सर्वपदार्थेष्वविभागेन त्रीणि लिङ्गानि प्राप्नुवन्ति, सर्वत्र तटादिवत्स्थित्यादेर्विद्यमानत्वात् । अन्यथा तटस्तटीतटमित्यादावपि लिङ्गत्रयं न स्यात्, विशेषाभावात् । तस्मादतिव्यापिता लक्षणदोषः ॥ ११२५ ॥

व्यभिचारदर्शनाच्चाव्यापितेति दर्शयन्नाह—**अभाव** इत्यादि ।

**अभावो निरुपाख्यत्वं तुच्छतेति यदुच्यते ।**
**तत्र स्थित्यादिसम्बन्धः कोऽसत्सु परिकल्प्यते ॥ ११२६ ॥**

असत्यपि हि स्थित्यादिके शशविषाणादिष्वसद्रूपेष्वभावो निरुपाख्यत्वं तुच्छतेत्यादिभिः शब्दैर्लिङ्गत्रयप्रतिपत्तिदर्शनादव्यापिनीयं लिङ्गव्यवस्था ॥ ११२६ ॥

**उत्पादः प्रसवश्चैषां नाशः संस्त्यानमिष्यते ।**
**आत्मरूपं तु भावानां स्थितिरित्यभिधीयते ॥ ११२७ ॥**
**तत्रोत्पादे न नाशोऽस्ति तत्किमुत्पत्तिरुच्यते ।**
**नात्माकारा स्थितिश्चास्ति तत्कथं जन्म गीयते ॥ ११२८ ॥**
**संस्त्याने न द्वयं चान्यत्तत्कथं व्यपदिश्यते ।**
**तिरोभावश्च नाशश्च तिरोभवनमित्यपि ॥ ११२९ ॥**
**स्थितौ स्थितिः स्वभावश्च हेतुना केन वोच्यते ।**
**अथाविभक्तमेवैषां रूपं स्यादेकलिङ्गता ॥ ११३० ॥**

इतश्चाव्यापिनी, तेष्वेव स्थित्यादिषु प्रत्येकं लिङ्गत्रययोगिशब्दप्रवृत्तिदर्शनात् । तथाहि प्रसव उत्पाद उच्यते संस्त्यानं विनाशः आत्मस्वरूपं तु स्थितिः । तत्र प्रसवे स्थितिसंस्त्यानयोरभावात्कथमुत्पादे उत्पत्तिर्जन्मेत्यादेः स्त्रीनपुंसकलिङ्गस्य प्रवृत्तिर्भवेत् । तथा संस्त्याने स्थितिप्रसवयोरभावात्कथं तिरोभावो विनाशस्तिरोभवनमित्यादिभिः शब्दैर्व्यपदिश्येत । अपिशब्देन संस्त्यानमित्यपि स्वशब्देन कथं व्यपदिश्यत इति दर्शयति । तथा स्थितौ संस्त्यानप्रसवयोरसम्भवात् स्थितिस्वभावश्चेत्यादिभिः शब्दैः सा स्थितिः केन हेतुनोच्यत इति वाच्यम् । अथापि स्यादेषां स्थित्यादीनां परस्परमविभक्तरूपत्वात्प्रत्येकमेषु लिङ्गत्रययोग्यता भविष्यतीत्यत आह—**अथाविभक्तमित्यादि** । यदि ह्येषां परस्परमविभक्तं रूपं स्यात्तदैकमेव परमार्थतो लिङ्गं स्यान्न लिङ्गत्रयम् ॥ ११२७ ॥ ११२८ ॥ ११२९ ॥ ११३० ॥

अन्यस्त्वाह—सामान्यविशेषाः स्त्रीत्वादयो गोत्वादय इवेति, तं प्रत्याह—**गोत्वादय** इवेत्यादि ।

**गोत्वादय इवैतेऽपि यदि स्त्रीत्वादयो मताः ।**
**सामान्यस्य निरासेन तेऽपास्ता एव तादृशाः ॥ ११३१ ॥**

पूर्वं सामान्यपरीक्षायां सामान्यविशेषाणां निरस्तत्वात्, तद्रूपाणां स्त्रीत्वादीनामसम्भवादसम्भविलक्षणम्॥ ११३१॥

किंच तेष्वेव सामान्यविशेषेष्वन्तरेणाप्यपरं सामान्यविशेषं जातिर्भावः सामान्यमित्यादि स्त्रीपुन्नपुंसकलिङ्गस्य शब्दस्य प्रवृत्तिदर्शनादव्यापिता च लक्षणस्येति दर्शयति—जातिर्भाव इत्यादि।

**जातिर्भावश्च सामान्यमिति वा तेषु संमतम्।**
**न सामान्यानि युज्यन्ते सामान्येष्वपराणि हि॥११३२॥**

न सामान्यानि युज्यन्ते सामान्येष्वपराणीति। निःसामान्यानि सामान्यानीति सिद्धान्तात्। एतच्च वैशेषिकसिद्धान्ताश्रयेणोक्तम्। यदा तु सामान्येष्वपराणि सामान्यानीष्यन्ते वैयाकरणैः, यथोक्तम्—"अर्थजात्यभिधानेऽपि सर्वे जात्यभिधायिनः। व्यापारलक्षणा यस्मात्पदार्थाः समवस्थिताः॥" नहि शास्त्रान्तरपरिदृष्टा जातिव्यवस्था नियोगतो वैयाकरणैरभ्युपेतव्या। प्रत्ययाभिधानान्वयव्यापारकार्योन्नीयमानरूपा हि जातयो नहि तासामियत्ता काचित्। अतो यच्चोदितकार्यदर्शनात् सामान्याधारा जातिः सती जातय इत्यस्याः श्रुतेर्निबन्धनमिति। व्यापारलक्षणा इति अभिधानप्रत्ययव्यापारतो व्यवस्थितलक्षणा इत्यर्थः। तदानन्तरोक्तमेव दूषणं "सामान्यस्य निरासेन तेऽपास्ता एव तादृशा" इति॥ ११३२॥

इदं च साधारणं दूषणमाह—अभाव इत्यादि।

**अभावो निरुपाख्यत्वं तुच्छतेत्यादि वा कथम्।**
**सामायिक्येव तेनैषा लिङ्गत्रितयसंस्थितिः॥ ११३३॥**

नह्यसत्सु शशविषाणादिषु जातिरस्ति, वस्तुधर्मत्वात्तस्येत्यतस्तेष्वभावादिशब्दप्रयोगो न प्राप्नोति। तस्मादव्यापिनी लिङ्गव्यवस्था। तेनेच्छारचितसङ्केतमात्रभाविन्येवेयं लिङ्गत्रितयव्यवस्थेति सिद्धम्॥ ११३३॥

सङ्ख्याया अपि वस्तुगतान्वयव्यतिरेकानुविधानाभावं दर्शयन्नाह—सङ्ख्यापीत्यादि।

**सङ्ख्याऽपि सामायिक्येव कल्प्यते हि विवक्षया।**
**भेदाभेदविवेकेपि दारादिविपिनादिवत्॥ ११३४॥**

सङ्ख्यापि सामायिक्येव, न वास्तवी। दारादिष्वसत्यपि वास्तवे भेदे विवक्षावशे-

नोपकल्पितत्वात् । अतो नासिद्धो हेतुः । तथाहि—बहुत्वैकत्वादिसङ्ख्या न वस्तुगतभेदाभेदलक्षणा, दाराः सिकता वर्षा इत्यादावसत्यपि वस्तुतो भेदे बहुत्वसङ्ख्या परिवर्त्तते । तथा वनं त्रिभुवनं जगत् षण्णगरीत्यादिष्वसत्यप्यभेदेऽर्थस्यैकत्वसङ्ख्या व्यपदिश्यत इति । अतो नासिद्धता हेतोः । नाप्यनैकान्तिकः सर्वस्य सर्वधर्मत्वप्रसङ्गात् । सपक्षे भावाच्च न विरुद्धः ॥ ११३४ ॥

नन्वित्यादिना कुमारिलमतेन हेतोरसिद्धतामाशङ्कते ।

**ननु व्यक्तौ च जातौ च दारादिश्चेत्प्रयुज्यते ।**
**व्यक्तेरवयवानां वा संख्यामादाय वर्त्तते ॥ ११३५ ॥**
**वनशब्दः पुनर्व्यक्तीर्जातिसङ्ख्याविशेषिताः ।**
**बह्वीराहाथवा जातिं बहुव्यक्तिसमाश्रिताम् ॥ ११३६ ॥**

सह्याह—दारादिशब्दः कदाचिज्जातौ प्रसज्यते कदाचिद्व्यक्तौ । तत्र यदा जातौ तदा व्यक्तिगतां सङ्ख्यामादाय वर्त्तते, व्यक्तयश्च बह्वयो योषितः, यदा व्यक्तौ प्रयुज्यते तदा तद्व्यक्त्यवयवानां पाणिपादादीनां बहुत्वसङ्ख्यामादाय वर्त्तते । वनशब्देन त्वाम्रखदिरपलाशादिविलक्षणव्यक्तयस्तत्समवेतवृक्षत्वजातिगतसङ्ख्याविशिष्टाः प्रतिपाद्यन्ते, तेन वनमित्येकवचनं भवति । जातिगतैकसङ्ख्याविशिष्टद्रव्याभिधानात् । अथवा—धवादिव्यक्तिसमाश्रिता जातिरेव वनशब्देनोच्यते, तेनैकवचनं भवति, जातेरेकत्वादिति ॥ ११३५ ॥ ११३६ ॥

नन्वित्यादिना प्रतिविधत्ते ।

**ननु चैतेन विधिना सर्वमेकं वचो हतम् ।**
**नान्यत्रास्ति विवक्षा चेत्सैवास्त्वस्य निबन्धनम् ॥११३७॥**

एतेन यथोक्तेन विधिना सर्वं—वृक्ष इत्याद्येकवचनं—हतम्—उत्सन्नं स्यात्, सर्वत्रैवास्य न्यायस्य तुल्यत्वात् । तथा ह्यत्रापि शक्यमेवं वक्तुम्—तत्र व्यक्तौ च जातौ च वृक्षादिश्चेत्प्रयुज्यत इत्यादि । अथ मतम्—अन्यत्र—वृक्षादौ, व्यक्तेरवयवानां च सङ्ख्याविवक्षा नास्तीति, यद्येवं न तर्हि वस्तुगतान्वयाद्यनुविधायिनी सङ्ख्या, विवक्षाया एवान्वयव्यतिरेकानुविधानात् । ततश्च सैव विवक्षा दारा इत्यादिष्वस्य बहुवचनस्य निबन्धनमस्तु भेदाभावेप्येकमपि वस्तु बहुत्वेन विवक्ष्यत इत्यतो नासिद्धता हेतोः ॥ ११३७ ॥

यच्चोक्तं वनशब्दो जातिसङ्ख्याविशेषिता व्यक्तीराहेति, तत्राह—जातेरित्यादि ।

**जातेरपि न सङ्ख्याऽस्ति भावे वा तद्विशेषिताः ।**
**कथं सम्बद्धसम्बन्धाद्यदि सम्बन्धतोऽपि वा ॥ ११३८ ॥**

नहि जातेः सङ्ख्यास्ति, द्रव्यसमाश्रितत्वात्तस्याः । अथेयं वैशेषिकप्रक्रिया नाश्रीयते, तदा भावे वा सङ्ख्यायास्तया कथं वा धवादिव्यक्तयो विशेषिताः सिद्ध्यन्ति । स्यादेतत्—सम्बन्धसम्बन्धात्तत्सम्बन्धाद्वा सिद्ध्यन्ति । तथाहि—यदा जातेर्व्यतिरेकिणी सङ्ख्या तदैकत्वसङ्ख्यासम्बद्धया जात्या धवादिव्यक्तीनां सम्बन्धात्पारम्पर्येण तया धवादिव्यक्तयो विशेष्यन्ते, यदा तु जातेरव्यतिरिक्तैव सङ्ख्या तदा साक्षादेव सम्बन्धात्तया विशेष्यन्त इत्यतो जातिसङ्ख्याविशेषिताः सिध्यन्ति ॥ ११३८ ॥

यद्येवमित्यादिना प्रतिविधत्ते ।

**यद्येवमभिधीयेत वनमेकोऽपि पादपः ।**
**बहवोऽपि हि कथ्यन्ते सम्बन्धादेव सोऽस्ति च ॥११३९॥**

यदि सम्बन्धसम्बन्धात्सम्बन्धतो वा धवादिव्यक्तिषु वनशब्दस्य प्रवृत्तिस्तदैकोऽपि पादपो वनमित्येवमुच्येत, प्रवृत्तिनिमित्तस्य विद्यमानत्वात् । तथाहि—बहवोऽपि धवादयो जातिसङ्ख्यासम्बन्धादेव वनमित्युच्यन्ते नान्यतः, स च सम्बन्ध एकस्मिन्नपि पादपेऽस्तीति किमिति न तथोच्येत ॥ ११३९ ॥

अथवा जातिं बहुव्यक्तिसमाश्रितामित्यत्राह—बहुव्यक्त्याश्रितेत्यादि ।

**बहुव्यक्त्याश्रिता या च सैवैकस्यामपि स्थिता ।**
**तन्निमित्तस्य तुल्यत्वात्तत्रापि वनधीर्भवेत् ॥ ११४० ॥**

अस्मिन्नपि हि पक्षे एकस्यापि तरोर्वनमित्यभिधानं स्यात् । तथाहि—येनासौ वनशब्देन जातिर्बहुव्यक्त्याश्रिताऽभिधीयते । सैवैकस्यामपि धवादिव्यक्तौ व्यवस्थिता, ततश्च तस्या वनधियो निमित्तस्य सर्वत्र तुल्यत्वात्तत्रैकत्रापि पादपे किमिति वनधीर्न भवेत् ॥ ११४० ॥

अन्वयव्यतिरेकाभ्यामित्यादिना हेतुत्वमुपसंहरति ।

**अन्वयव्यतिरेकाभ्यामेकादिवचसस्ततः ।**
**नियमोऽयं विवक्षातो नार्थात्तद्व्यभिचारतः ॥ ११४१ ॥**

तद्व्यभिचारत इति । तस्यार्थस्य व्यभिचारात् ॥ ११४१ ॥

"लिङ्गसङ्ख्यादिसम्बन्धो न चापोहस्य विद्यत" इत्यत्रादिग्रहणेन यः क्रियाकालादिसम्बन्धो निर्दिष्टस्तत्राह—क्रियेत्यादि।

**क्रियाकालादियोगोऽपि पूर्वमेव निराकृतः।**
**तस्मात्साङ्केतिका एते न व्यक्तिष्वपि भाविनः॥ ११४२॥**

पूर्वमेव कर्मकालादिपदार्थनिषेधे क्रियादियोगस्य निराकृतत्वादयुक्तमेषामपि वस्तुधर्मत्वम्। सङ्केते भवाः साङ्केतिकाः॥ ११४२॥

भवतु वा वस्तुधर्मत्वमेषाम्, तथापि प्रतिबिम्बलक्षणस्यापोहस्य भ्रान्तैर्बाह्यव्यक्तिरूपत्वेनावसितत्वादध्यवसायवशाद्व्यक्तिद्वारको लिङ्गसङ्ख्यादिसम्बन्धो भविष्यति, तेन, यदुक्तम्—"व्यक्तेश्चाव्यपदेशत्वात्तद्द्वारेणापि सास्त्यसौ" इति तदनैकान्तिकं संवृतिपक्षे चासिद्धमिति दर्शयति—व्यक्तिरूपावसायेनेत्यादि।

**व्यक्तिरूपावसायेन यदि वाऽपोह उच्यते।**
**तल्लिङ्गाद्यभिसम्बन्धो व्यक्तिद्वारोऽस्य विद्यते॥ ११४३॥**

अपोह उच्यत इति। शब्देनेति शेषः। तदिति। तस्मात्। अस्येति। अपोहस्य॥ ११४३॥

"आख्यातेषु न चान्यस्ये"त्यादावाह—अभिप्रेते निवेशार्थमित्यादि।

**अभिप्रेते निवेशार्थं बुद्धेः शब्दः प्रयुज्यते।**
**अनभीष्टव्युदासोऽतः सामर्थ्येनैव सिद्ध्यति॥ ११४४॥**

आख्यातेष्वन्यनिवृत्तिर्न संप्रतीयत इत्यसिद्धम्—तथाहि—जिज्ञासिते कस्मिंश्चिदर्थे श्रोतुर्बुद्धेर्निवेशाय शब्दः प्रयुज्यते व्यवहर्तृभिर्न व्यसनितया, तेनाभीष्टार्थप्रतिपत्तौ सामर्थ्यादनभीष्टव्यवच्छेदः प्रतीयत एव। अभीष्टानभीष्टयोरन्योन्यव्यवच्छेदरूपत्वात्॥ ११४४॥

सर्वमेवाभीष्टमिति चेदाह—सर्वमेवेत्यादि।

**सर्वमेव नचाभीष्टं सर्वार्थानियमासितः।**
**तत्पचत्यादिशब्दानां विनिवर्त्त्यं परिस्फुटम्॥ ११४५॥**

यदि सर्वमेवाभीष्टं स्यात्तदा प्रतिनियतः शब्दार्थो न प्राप्नोति, ततश्च या कस्यचिदर्थपरिहारेण श्रोतुः क्वचिदर्थे शब्दात्प्रवृत्तिः सा न प्राप्नोति, तस्मात्सर्वमेवाभीष्टमित्येतदयुक्तम्। तस्मात् पचतीत्यादिशब्दानामनभीष्टव्यवच्छेदः सामर्थ्यात्—तत्स्फुटतरमवगम्यत एव॥ ११४५॥

तथाहीत्यादिना तमेव सामर्थ्यगम्यमनभीष्टव्यवच्छेदं दर्शयति ।

**तथाहि पचतीत्युक्ते नोदासीनोऽवतिष्ठते ।**
**भुङ्क्ते दीव्यति वा नेति गम्यतेऽन्यनिवर्त्तनम् ॥ ११४६ ॥**
**औदासीन्यमतश्चैवमस्त्यन्यच्च क्रियान्तरम् ।**
**पर्युदासात्मकापोह्यं नियतं यद्यदिष्यते ॥ ११४७ ॥**

तस्मात्पचतीत्येतस्यौदासीन्यमन्यच्च भुङ्क्ते दीव्यति चेत्यादिक्रियान्तरपर्युदासात्मकमपोह्यमस्ति, तेन, यदुक्तं—पर्युदासरूपं हि निषेध्यं तन्न विद्यत इति तदसिद्धम्। **पर्युदासात्मकापोह्यमिति** । पर्युदासात्मकं च तदपोह्यं चेति विग्रहः । **नियतं यद्यदिष्यत** इति। तस्य तस्यौदासीन्यादिपर्युदासात्मकमपोह्यमस्तीति सम्बन्धः॥११४६॥ ॥ ११४७ ॥

यच्चोक्तं "पचतीत्यनिषिद्धं तु स्वरूपेणैव तिष्ठती"ति । तत्र स्ववचनव्याघातं परस्य प्रतिपादयन्नाह—**पचतीत्यादि** ।

**पचतीत्यनिषिद्धं तु स्वरूपेणैव तिष्ठति ।**
**इत्येतच्च भवद्वाक्यं परस्परपराहतम् ॥ ११४८ ॥**
**अन्यरूपनिषेधोऽयं स्वरूपेणैव तिष्ठति ।**
**इत्यन्यथा निरर्थं स्यात्प्रयुक्तमवधारणम् ॥ ११४९ ॥**

कथं पुनरेतत्परस्परपराहतमित्याह—**अन्यरूपनिषेधोऽयमित्यादि** । पचतीत्येतस्यार्थस्वरूपेणैव तिष्ठतीत्यनेनावधारणेनाचरितरूपं दर्शयता पचतीत्येतस्यान्यरूपनिषेधेनात्मस्थितिरिति दर्शितं भवति । अन्यथा स्वरूपेणैवेत्येतदेवावधारणं भवत्प्रयुक्तमनर्थकं स्यात्, व्यवच्छेद्याभावात् ॥ ११४८ ॥ ११४९ ॥

यदुक्तं—"साध्यत्वप्रत्ययश्चात्रे"त्यादि, तत्राह—**निष्पन्नत्वमित्यादि** ।

**निष्पन्नत्वमपोहस्य निरुपाख्यस्य कीदृशम् ।**
**गगनेन्दीवरादीनां निष्पत्तिर्नहि काचन ॥ ११५० ॥**
**वस्त्वित्यध्यवसायाचेत्सोपाख्यात्वेन भात्यसौ ।**
**ततः किं तुल्यधर्मत्वं वस्तुभिश्चास्य गम्यते ॥ ११५१ ॥**

यद्यपोहो भवता निरुपाख्यस्वभावतया गृहीतस्तत्कथमिदमुच्यते निष्पन्नत्वादिति, नह्याकाशोत्पलादीनां काचिदस्ति निष्पत्तिः । सर्वोपाख्याविरहलक्षणत्वात्तेषां स्यादे-

तद्यद्यप्यसौ निरुपाख्यः परमार्थतस्तथापि भ्रान्तैः प्रतिपत्तृभिर्बाह्यवस्तुरूपतया व्यवसितत्वादसावपोहः सोपाख्यत्वेन भातीति । अत्राह—**ततः किमिति**। यदि नामासौ सोपाख्यत्वेन भाति तथाऽपि किमत्र प्रकृतार्थानुकूलं जातमिति । अत्र पर आह—**तुल्यधर्मत्वं वस्तुभिश्चास्य गम्यत** इति । तेन, यथा वस्तु निष्पन्नरूपं प्रतीयते तथाऽपोहोऽपि वस्तुभिस्तुल्यधर्मतया ख्यातो निष्पन्न इव प्रतीयत इति सिद्धं निष्पन्नत्वादिति वचनम् ॥ ११५० ॥ ११५१ ॥

यद्येवं भवतैव साध्यत्वप्रत्ययस्य भूतादिप्रत्ययस्य च निमित्तमुपदर्शितमिति नच वक्तव्यमेतन्निर्निमित्तं प्रसज्यत इति, तदेतद्दर्शयन्नाह—**साध्यत्वप्रत्ययस्तस्मादि**त्यादि ।

**साध्यत्वप्रत्ययस्तस्मात्तथाभूतादिरूपणम् ।**
**वस्तुभिस्तुल्यरूपत्वात्तन्निमित्तं प्रसज्यते ॥ ११५२ ॥**

**तन्निमित्त**मिति । वस्तुभिस्तुल्यधर्मत्वावसायनिमित्तम् ॥ ११५२ ॥

यदुक्तम्—"विध्यादावर्थराशौ च नान्यापोहनिरूपणम्" इति, तत्राह—**विध्यादा**वित्यादि ।

**विध्यादावर्थराशौ च नास्तितादि निषिध्यते ।**
**सामर्थ्यान्न तु शब्देन यदेव न विवक्षितम् ॥ ११५३ ॥**

विध्यादेरर्थस्य निषेधादिव्यावृत्ततयाऽवस्थितत्वात्तत्प्रतिपत्तौ सामर्थ्याद्विवक्षितं नास्तितादि निषिध्यत इत्यस्त्येवात्राप्यन्यापोहनिरूपणम् ॥ ११५३ ॥

"नञश्चापि नञा युक्ता"वित्यत्राह—**नञश्चापी**त्यादि ।

**नञश्चापि नञा युक्तावपोहस्तादृशो भवेत् ।**
**तच्चतुष्टयसद्भावे यादृशः संप्रतीयते ॥ ११५४ ॥**
**नञा योगे नञो ह्यर्थो गम्यते कस्यचिद्विधिः ।**
**तृतीयेन नञा तस्य विरहः प्रतिपाद्यते ॥ ११५५ ॥**
**निषेधायापरस्तस्य तुरीयो यः प्रयुज्यते ।**
**तस्मिन्विवक्षिते तेन ज्ञाप्यतेऽन्यनिवर्त्तनम् ॥ ११५६ ॥**

**तच्चतुष्टयसद्भाव** इति । नञ्चतुष्टयसद्भावे । कीदृशोऽसौ प्रतीयत इत्याह—**नञा योग** इत्यादि । अर्थशब्दो विधिशब्देन सम्बन्धनीयः । **तस्य विरह** इति ।

तस्य विधेर्निषेधः । **निषेधायापरस्तस्येति** । तृतीयनञ्प्रतिपादितस्य विधिरहितस्य निषेधायेत्यर्थः । **तुरीय** इति । चतुर्थः । चतुरश्छयतावाद्यक्षरलोपश्चेत्यनेन पूरणार्थे यत्प्रत्ययविधानात् । **तस्मिन्विवक्षित** इति । तस्मिंश्चतुर्थे नञि प्रयुक्ते इत्यर्थः । **तेनेति** । चतुर्थेन नञा । **ज्ञाप्यतेऽन्यनिवर्त्तन**मिति । तृतीयनञ्प्रतिपादितनिषेधविवेकेन विधिरूपस्यार्थप्रतिबिम्बकस्य प्रतिपादनात् ॥११५४॥११५५॥११५६॥

एतदेवोदाहरणेन स्फुटीकुर्वन्नाह—**नासौ न पचतीत्यादि** ।

**नासौ न पचतीत्युक्ते गम्यते पचतीति हि ।**
**औदासीन्यादियोगश्च तृतीयेन हि गम्यते ॥ ११५७ ॥**
**तुर्ये तु तद्विविक्तोऽसौ पचतीत्यवसीयते ।**
**तेनात्र विधिवाक्येन सममन्यनिवर्त्तनम् ॥ ११५८ ॥**

**तद्विविक्तोऽसाविति** । औदासिन्यादिविविक्तः । **विधिवाक्येन सममन्यनिवर्त्तन**मिति । यथा पचतीत्यादौ विधिवाक्ये सामर्थ्यादौदासिन्यविनिवृत्तिरिष्यते तथा द्वितीयेऽपि नञीति सिद्धमत्राप्यस्य निवर्त्तनम् । स्पष्टार्थं तु नञ्चतुष्टयोदाहरणम् ॥ ११५७ ॥ ११५८ ॥

चादीनामपि नञ्योगो नैवास्तीत्यत्राह—**समुच्चयादिरित्यादि** ।

**समुच्चयादिर्यश्चार्थः कश्चिचादेरभीप्सितः ।**
**तदन्यस्य विकल्पादेर्भवेत्तेन व्यपोहनम् ॥ ११५९ ॥**

आदिशब्देन वाशब्दस्य विकल्पोऽर्थः, अपिशब्दस्य पदार्थसम्भावनान्ववसर्गादयः, तुशब्दस्य विशेषणम्, एवकारस्यावधारणमित्यादेर्ग्रहणम् । **तदन्यस्येति** । तस्मात्समुच्चयादेरन्यस्य । तेन—चादिना ॥ ११५९ ॥

"वाक्यार्थेऽन्यनिवृत्तिश्च व्यपदेष्टुं न शक्यत" इत्यत्राह—**वाक्यार्थ** इत्यादि ।

**वाक्यार्थेऽन्यनिवृत्तिश्च सुज्ञातैव तथा ह्यसौ ।**
**पदार्था एव सहिताः केचिद्वाक्यार्थ उच्यते ॥ ११६० ॥**
**तेषां च ये विजातीयास्तेऽपोह्याः सुपरिस्फुटाः ।**
**वाक्यार्थस्यापि ते चैव तेभ्योऽन्यो नैव सोऽस्ति हि ॥११६१॥**

**सहिता** इति । परस्परं कार्यकारणभावेन सम्बद्धा इत्यर्थः । **तेषामिति** । पदार्थानाम् । ननु पदार्थोऽन्योऽन्यस्तु वाक्यार्थः, तत्कथमुच्यते य एव पदार्थानाम-

पोह्या वाक्यार्थस्यापि त एवेत्यत आह—**तेभ्योऽन्यो नैव सोऽस्तीति** । नहि पदार्थव्यतिरिक्तो निरवयवः शबलात्मा वा कल्माषवर्णप्रख्यो वाक्यार्थोऽस्ति, उपलब्धिलक्षणप्राप्तस्य तादृशस्यानुपलब्धेरिति भावः ॥ ११६० ॥ ११६१ ॥

एतदेवोदाहरणेन स्फुटयन्नाह—**चैत्रे**त्यादि ।

**चैत्र गामानयेत्यादिवाक्यार्थेऽधिगते सति ।**
**कर्तृकर्मान्तरादीनामपोहो गम्यतेऽर्थतः ॥ ११६२ ॥**

नह्यस्मिन्वाक्ये चैत्रादिपदार्थव्यतिरेकेण बुद्धावन्योऽर्थः प्रतिवर्त्तते । चैत्रे ह्यर्थगते च सामर्थ्यादचैत्रादिव्यवच्छेदो गम्यते । अन्यथा यद्यन्यकर्त्रादिव्यवच्छेदो नाभीष्टः स्यात्तदा चैत्रादीनामुपादानमनर्थकमेव स्यात् । ततश्च न किंचित्कश्चिद्व्याहरेदिति निरीहमेव जगत्स्यात् ॥ ११६२ ॥

अनन्यापोहशब्दादौ वाच्यं न च निरूप्यत इत्यत्राह—**अनन्यापोहे**त्यादि ।

**अनन्यापोहशब्दादौ न विधिर्व्यवसीयते ।**
**परैरभिमतः पूर्वं जात्यादेः प्रतिषेधनात् ॥ ११६३ ॥**

नह्यत्र भवदभिमतो जात्यादिलक्षणो विधिरूपः शब्दार्थः परमार्थतोऽवसीयते, तस्य जात्यादेः पूर्वं—सामान्यपरीक्षादौ विस्तरेण निषिद्धत्वात् ॥ ११६३ ॥

किं तर्ह्यवसीयत इत्याह—**किन्त्वि**त्यादि ।

**किन्तु विध्यवसाय्यस्माद्विकल्पो जायते ध्वनेः ।**
**पश्चादपोहशब्दार्थनिषेधे जायते मतिः ॥ ११६४ ॥**

यद्यपोहशब्दार्थनिषेधे मतिर्जायत इतीष्यते, न तर्ह्यपोहशब्दार्थोऽभ्युपगन्तव्यः, तस्य निषिद्धत्वादित्यत आह—**स त्वसंवादकस्तादृगिति** ।

**स त्वसंवादकस्तादृग्वस्तुसम्बन्धहानितः ।**
**न शाब्दाः प्रत्ययाः सर्वे भूतार्थाध्यवसायिनः ॥ ११६५ ॥**

स इति । अनन्यापोहशब्दादिः । **असंवादक** इति । न संवदतीत्यसंवादकः, न विद्यते वा संवादोऽस्येत्यसंवादकः । कस्मात्? वस्तुसम्बन्धहानितः तथाभूतवस्तुसम्बन्धाभावात् । पूर्वं हि जात्यादिलक्षणस्य शब्दार्थस्य वस्तुनो निषिद्धत्वात् । यद्येवं कथं तर्ह्यनन्यापोहशब्दादिभ्योऽपोहशब्दार्थनिषेधे मतिर्जायत इत्याह—**न**

शाब्दा इति । वितथविकल्पाभ्यासवासनाप्रभवतया हि केचन शाब्दाः प्रत्यया असद्भूतार्थाभिनिवेशिनो जायन्त एवेति न तद्वशाद्वस्तूनां सदसत्ता सिद्ध्यति ॥११६५॥

यदुक्तं "प्रमेयज्ञेयशब्दादे"रित्यादि, तत्राह—प्रमेयेत्यादि ।

**प्रमेयज्ञेयशब्दादौ कस्यापोह्यं न विद्यते ।**
**नह्यसौ केवलोऽकाण्डे प्रेक्षावद्भिः प्रयुज्यते ॥ ११६६ ॥**

कस्य प्रमेयादिशब्दस्यापोह्यं नास्तीत्यभिधीयते, यदि तावद्वाक्यस्थं केवलं पदान्तरसम्बन्धरहितं प्रमेयादिशब्दमाश्रित्योच्यते, तदा सिद्धसाध्यता, केवलस्य प्रयोगाभावादेव निरर्थकत्वात् । तद्दर्शयति—नह्यसौ केवलोऽकाण्ड इति । केवल इति । अन्यशब्दरहितः । अकाण्ड इति । प्रस्तावमन्तरेण । यतः श्रोतृजनानुग्रहाय प्रेक्षावद्भिः शब्दः प्रयुज्यते, न व्यसनितया, नच केवलेन सता श्रोतुरेकस्मिन् सन्देहविपर्यासनिवृत्तिलक्षणोऽनुग्रहः कृतो भवेत् । तथाहि—यदि श्रोतुः क्वचिदर्थे समुत्पन्नौ संशयविपर्यासौ निवर्त्त्य निःसन्दिग्धं प्रत्ययमुत्पादयेत्प्रतिपादकः, एवं तेनान्यानुग्रहः कृतो भवेत् । नच केवलेन प्रयुक्तेन तथाऽनुग्रहः शक्यते वक्तुम् ॥११६६॥

तस्मात्संशयादिनिवर्त्तने निश्चयोत्पादने च श्रोतुरनुग्रहात् शब्दप्रयोगसाफल्यमिति वाक्यस्थस्यैवास्य प्रयोग इति दर्शयति—किन्त्वित्यादि ।

**किन्त्वारेकविपर्याससंभवे सति कस्यचित् ।**
**क्वचित्तद्विनिवृत्त्यर्थं धीमद्भिः स प्रयुज्यते ॥ ११६७ ॥**
**निःसन्देहविपर्यासप्रत्ययोत्पादनादतः ।**
**तेनैव तैः प्रयुक्तेन साफल्यमनुभूयते ॥ ११६८ ॥**

आरेकः—संशयः । कस्यचिदिति । श्रोतुः । क्वचिदिति—अर्थे । तद्विनिवृत्त्यर्थमिति । तयोरारेकविपर्यासयोर्विनिवृत्त्यर्थम् । तेनेति । ज्ञेयादिपदेन । तैरिति । प्रेक्षावद्भिः ॥ ११६७ ॥ ११६८ ॥

अथ वाक्यस्थमेव ज्ञेयादिशब्दमधिकृत्योच्यते, तदसिद्धमिति दर्शयति—यत्त्रेति ।

**यत्त्र जडचेतोभिराशङ्कास्पदमिष्यते ।**
**तदेव क्षिप्यते तेन विफलोच्चारणाऽन्यथा ॥ ११६९ ॥**
**किञ्चिद्ध्यशङ्कमानोऽसौ किमर्थं परिपृच्छति ।**
**अतत्संस्कारकं शब्दं ब्रुवन्वा स्वस्थधीः कथम् ॥ ११७० ॥**

तत्र हि वाक्यस्थेन प्रमेयादिशब्देन यदेव जडचेतोभिः—मन्दमतिभिराशङ्क्यते तदेव निवर्त्यत इत्यतोऽसिद्धमेतत्प्रमेयादिशब्दानां निवर्त्यं नास्तीति। **अन्यथेति।** यदि जडधीभिराशङ्कितं न निवर्त्तयेदित्यर्थः। स्यादेतत्—न हि श्रोत्रा किंचिच्छङ्कितमित्याह—**किञ्चिद्धी**त्यादि। यदि हि श्रोता न क्वचिदर्थे संशेते तत्किमिति परस्मादुपदेशमपेक्षते निश्चयार्थं हि परं पृच्छति, अन्यथोन्मत्तः स्यात्। स्यादेतत् यदि नाम श्रोतुराशङ्कास्थानमस्ति, तथापि तच्छब्देन न निवर्त्त्यतएवेत्याह— **अतत्संस्कारक**मित्यादि। तस्य श्रोतुरज्ञानादिनिवृत्तिलक्षणसंस्कारः—तत्संस्कारः—न विद्यते तत्संस्कारो यस्मिन्शब्द इति तदतत्संस्कारकं। शेषाद्विभाषेति कप्। **ब्रुवन्निति।** प्रतिपादकः। **स्वस्थधीः कथमिति।** उन्मत्तक एव स्यादित्यर्थः। श्रोतृसंस्कारायैव शब्दानां प्रयोगात्॥ ११६९॥ ११७०॥

अत्र कस्मिन्वाक्ये किं तन्मूढमतेराशङ्कास्थानं यन्निवर्त्यत इत्याह—**चक्षुर्ज्ञानादिविज्ञेय**मित्यादि।

**चक्षुर्ज्ञानादिविज्ञेयं रूपादीति यदुच्यते।**
**तेनारोपितमेतद्धि केनचित्प्रतिषिध्यते॥ ११७१॥**

**तेने**ति। चक्षुर्ज्ञानादिविज्ञेयं रूपादीत्यनेन वाक्येन॥ ११७१॥

किं तदारोपितमित्याह—**न चक्षुराश्रितेनैवे**त्यादि।

**न चक्षुराश्रितेनैव रूपं नीलादि वेद्यते।**
**किन्तु श्रोत्राश्रितेनापि नित्येनैकेन चेतसा॥ ११७२॥**

श्रोत्राश्रितेनापि नित्येन चेतसा नीलादिरूपं वेद्यत इत्येवं यन्मन्दधिया.... समारोपितं तच्चक्षुर्विज्ञानविज्ञेयं रूपमित्यनेन वाक्येन निषिध्यते। चक्षुराश्रितविज्ञानविज्ञेयमेव रूपं न श्रोत्रादिविज्ञानविज्ञेयमित्यर्थः॥ ११७२॥

**क्षणिकत्वादिरूपेण वि(किं?)ज्ञेया इति विभ्रमे।**
**सर्वज्ञज्ञानविज्ञेया धर्माश्चैते भवन्ति किम्॥ ११७३॥**
**अभावा अपि किं ज्ञेया न ज्ञानं जनयन्ति ये।**
**इत्यादिविभ्रमोद्भूतौ विज्ञेयपदमुच्यते॥ ११७४॥**

एवं सर्वधर्माः किं क्षणिकत्वादिरूपेण विज्ञेया? आहोस्विन्न?, किंवा सर्वज्ञचेतसा ग्राह्या? उताहो न?, अभावा हि सर्वोपाख्याविरहलक्षणा ये ज्ञानमपि न जन-

यन्ति ते किं विज्ञेया इति संशयोद्भूतौ सत्यामिदमुच्यते—क्षणिकत्वादिरूपेण ज्ञेयाः सर्वधर्माः, ते च सर्वज्ञज्ञानविज्ञेया, अभावा विज्ञेया इति । अत्र यदक्षणिकत्वादिना ज्ञेयत्वादिरूपमारोपितं धर्मेषु तन्निवर्त्यते ॥ ११७३ ॥ ११७४ ॥

कथं तद्वचनमात्रेण निवर्त्तयितुं शक्यत इत्येतदाह—तादृगित्यादि ।

**तादृग्ज्ञेयत्वमस्तेषां क्षणिकत्वादिसाधनात् ।**
**ज्ञेयोऽभावोऽपि संवृत्त्या स्थापनादमुनाऽऽत्मना ॥ ११७५॥**

**तादृगिति** । क्षणिकत्वादिरूपेण तस्य प्रमाणसिद्धत्वात् । अथाभावस्य कथं ज्ञेयत्वं सिद्धमित्यत आह—**ज्ञेय** इत्यादि । **अमुनाऽऽत्मनेति** । अभावरूपेण । अवस्तूनामपि कथंचिद्बुद्ध्या व्यवस्थापनादस्ति ज्ञेयत्वम्, अन्यथा तत्र व्यवहार एव न स्यादिति भावः ॥ ११७५ ॥

ननु च किमनित्यत्वेन शब्दाः प्रमेया आहोस्विन्नेति प्रस्तावे प्रमेया इति प्रयोगे तत्र यः प्रकरणानभिज्ञस्तस्यापि प्रतिपत्तुः प्रमेया इति केवलशब्दश्रवणात्प्लवमानरूपा शब्दादिषु बुद्धिरुपजायत एव, तद्यदि केवलस्य शब्दस्यार्थो नास्त्येव तत्कथमर्थप्रतिपत्तिर्भवतीत्यत आह—**प्रमेयज्ञेये**त्यादि ।

**प्रमेयज्ञेयशब्दादेः प्रतिपत्तिनिमित्तताम् ।**
**इत्थं वाक्यस्थितस्यैव दृष्ट्वा कालान्तरेष्वपि ॥ ११७६ ॥**
**केवलस्योपलम्भे या प्रतीतिरुपजायते ।**
**प्लवमानार्थभेदेषु सा तद्वाक्यानुसारतः ॥ ११७७ ॥**
**घटादिभ्योऽपि शब्देभ्यः साऽस्त्येव च तथाविधा ।**
**तस्माद्घटादिशब्देन ज्ञेयादिध्वनयः समाः ॥ ११७८ ॥**

अयमत्र समुदायार्थः—नैव केवलशब्दश्रवणादर्थप्रतिपत्तिरस्ति, किंतु वाक्येषूपलब्धस्यार्थवतः शब्दस्य सादृश्येनापहृतबुद्धेः केवलशब्दश्रवणादर्थप्रतिपत्त्यभिमानः । तथाहि—येष्वेव वाक्येषु प्रमेयशब्दमुपलब्धवाञ्श्रोता तदर्थेष्वेव सा बुद्धिरप्रतिष्ठितार्था प्लवमानरूपा समुपजायते । तच्च घटादिशब्दानामपि तुल्यम् । तथाहि—किं घटेनोदकमानयान्युताञ्जलिनेति प्रस्तावे घटेनेति प्रयोगे प्रस्तावानभिज्ञस्य यावत्सु वाक्येषु घटेनेति प्रयोगो दृष्टस्तावतामर्थेष्वाकाङ्क्षावती पूर्ववाक्यानुसारादेव प्रतिपत्तिर्भवति (इति) । तस्माद्यथाऽर्थवादिशब्दा विशिष्टार्थवचनास्तथा प्रमेयादिशब्दा अपीति दर्शयति—**तस्मा**दित्यादि ॥ ११७६ ॥ ११७७ ॥ ११७८ ॥

यदुक्तमपोह्यकल्पनायां चेत्यादि तत्राह—अपोह्येत्यादि ।

**अपोह्यकल्पनायां च वरं वस्त्वेव कल्पितम् ।**
**इत्येतद्व्याहतं प्रोक्तं नियमेनान्यवर्जनात् ॥ ११७९ ॥**
**वस्त्वेव कल्प्यते तत्र यदेव हि विवक्षितम् ।**
**क्षेपो विवक्षितस्यातो न तु सर्वं विवक्षितम् ॥ ११८० ॥**

**वस्त्वेवे**त्यादि । वस्त्वेव ह्यध्यवसायवशाच्छब्दार्थत्वेन कल्पितमस्माभिर्यदेव हि विवक्षितं, नावस्तु। तेन तत्प्रतीतौ सामर्थ्यादविवक्षितस्याक्षेपो व्यावृत्तिरवगम्यत एवेति नाव्यापिनी शब्दार्थव्यवस्था। यदेव च मूढमतेराशङ्कास्थानं तदेवाधिकृत्योक्तमाचार्येण "अज्ञेयं कल्पितं कृत्वा तद्व्यवच्छेदेन ज्ञेयेऽनुमान"मिति ॥ ११७९ ॥ ११८० ॥

ज्ञानाकारनिषेधाच्चेत्यादावाह—ज्ञानाकारेत्यादि ।

**ज्ञानाकारनिषेधस्तु स्ववेद्यत्वान्न शक्यते ।**
**विद्यते हि निरालम्बमारोपकमनेकधा ॥ ११८१ ॥**
**ज्ञानस्यात्मगतः कश्चिन्नियतः प्रतिगोचरम् ।**
**अवश्याभ्युपगन्तव्यः स्वभावश्च स एव च ॥ ११८२ ॥**
**अस्माभिरुक्त आकारः प्रतिबिम्बं तदाभता ।**
**उल्लेखः प्रतिभासश्च संज्ञाभेदस्त्वकारणम् ॥ ११८३ ॥**

**न शक्यत** इति । कर्तुमिति शेषः । कथं स्वसंवेद्यत्वं सिद्धं ज्ञानाकारस्येत्याह—**विद्यते ही**त्यादि । स्वप्नादिष्वर्थमन्तरेणापि निरालम्बनमागृहीतार्थाकारमारोपकं ज्ञानमागोपालमतिस्फुटमेव स्वसंवेदनप्रत्यक्षसिद्धम् । नच देशकालान्तरावस्थितोऽर्थस्तेन रूपेण संवेद्यत इति युक्तं वक्तुं, तस्य तद्रूपाभावात् । न चान्येन रूपेणान्यस्य संवेदनं युक्तमतिप्रसङ्गात् । किंचावश्यं तद्भवद्भिर्ज्ञानस्यात्मगतः कश्चिद्विशेषोऽर्थकृतोऽभ्युपगन्तव्यो येन बोधरूपतासाम्येऽपि प्रतिविषयं नीलस्यैव संवेदनं न पीतस्येति विभागेन विभज्यते ज्ञानम् । तदभ्युपगमे च सामर्थ्यात्साकारमेव ज्ञानमभ्युपगतं स्यात् । आकारव्यतिरेकेणान्यस्य स्वभावविशेषत्वेनावधारयितुमशक्यत्वात् । अतो भवता स्वभावविशेष इति स एव शब्दान्तरेणोक्तः, अस्माभिस्त्वाकार उल्लेख इत्यादिना शब्देनेति केवलं नाम्नि विवादः ॥ ११८१ ॥ ११८२ ॥ ११८३ ॥

एवमित्यादिशब्दानामित्यादावाह—एवमित्यादिशब्दानामित्यादि ।

**एवमित्यादिशब्दानां नैवमित्यादि विद्यते ।**
**अपोह्यमिति विस्पष्टं प्रकारान्तरलक्षणम् ॥ ११८४ ॥**

एवमेतन्नैवमिति प्रकारान्तरमारोपितमेवमित्यादिशब्दैर्व्यवच्छिद्यमानं स्फुटतर- मवसीयत एवेति नाव्यापिता शब्दार्थव्यवस्थायाः ॥ ११८४ ॥

एवं कुमारिलेनोक्तं दूषणं प्रतिविहितम्, इदानीमुद्योतकरोक्तं प्रतिविधीयते । तत्र यदुक्तं "सर्वशब्दस्य कश्चार्थो व्यवच्छेद्यः प्रकल्प्यते" इति । तत्राह—**व्यवहारोपनीते** चेत्यादि ।

**व्यवहारोपनीते च सर्वशब्देऽपि विद्यते ।**
**व्युदास्यं तस्य चार्थोऽयमन्यापोहोऽभिधित्सितः ॥ ११८५ ॥**

अत्रापि ज्ञेयादिपदवत्केवलस्य सर्वशब्दस्याप्रयोगाद्वाक्यस्थस्यैव नित्यं प्रयोग इति यदेव मूढमतेराशङ्कास्थानं तदेव निवर्त्त्यमस्ति । **अभिधित्सित** इति । अभिधातु- मिष्टः ॥ ११८५ ॥

कोऽसावर्थोऽभिधातुमिष्ट इत्याह—**सर्वे धर्मा** इत्यादि ।

**सर्वे धर्मा निरात्मानः सर्वे वा पुरुषा गताः ।**
**सामस्त्यं गम्यते तत्र कश्चिदंशस्त्वपोह्यते ॥ ११८६ ॥**

कोऽसावंशोऽपोह्यत इत्याह—**केचिदेवेति** ।

**केचिदेव निरात्मानो बाह्या इष्टा घटादयः ।**
**गमनं कस्यचिच्चैवं भ्रान्तिस्तद्विनिवर्त्तते ॥ ११८७ ॥**

एकाद्यसर्वमिति चेदित्यादावाह **सर्वाङ्गप्रतिषेधश्चे**त्यादि ।

**सर्वाङ्गप्रतिषेधश्च नैव तस्मिन्विवक्षितः ।**
**स्वार्थापोहप्रसङ्गोऽयं तस्मादज्ञतयोच्यते ॥ ११८८ ॥**

यदि हि सर्वस्याङ्गस्य प्रतिषेधः तस्मिन्व्यवहारोपनीते वाक्यस्थे सर्वशब्दे विव- क्षितः स्यात्तदा स्वार्थापोहः प्रसज्यते । यावता यदेव मूढधिया शङ्कितं तदेव निषिध्यत इति कुतः स्वार्थापवादित्वदोषप्रसङ्गः । एवं द्व्यादिशब्देष्वपि वाच्यम् ११८८

यच्चोक्तं "किंभावोऽथवाऽभाव" इत्यादि, तत्राह—**न भाव** इत्यादि ।

**न भावो नापि चाभावोऽपृथगेकत्वलक्षणः ।**
**नाश्रितानाश्रितोऽपोहो नैकानेकश्च वस्तुतः ॥ ११८९ ॥**

कस्माद्भावो न भवतीत्याह—तथाऽसौ नास्तीत्यादि ।

**तथाऽसौ नास्ति तत्त्वेन यथाऽसौ व्यवसीयते ।**
**तन्न भावो न चाभावो वस्तुत्वेनावसायतः ॥ ११९० ॥**

बाह्यरूपतयाऽसौ भ्रान्तैरवसीयते, न चासौ तथाऽवस्थित इत्यतो बाह्यरूपत्वाभावान्न भावः । अथाभावः कस्मान्न भवतीत्याह—**न चाभावो वस्तुत्वेनावसायत** इति । बाह्यरूपतया दर्शितत्वान्नैकान्तेनाभाव इत्यपि शक्यं वक्तुम् ॥ ११९० ॥

अथ पृथक्त्वैकत्वादिलक्षणः कस्मान्न भवतीत्याह—**भेदाभेदादय** इत्यादि ।

**भेदाभेदादयः सर्वे वस्तुसत्परिनिष्ठिताः ।**
**निःस्वभावश्च शब्दार्थस्तस्मादेते निरास्पदाः ॥ ११९१ ॥**

भेदाभेदादयः—व्यतिरेकाव्यतिरेकादयः । आदिशब्देनाश्रितत्वादयो गृह्यन्ते, नहि वस्तुगता एव धर्मास्तत्कथमपोहे कल्पनाशिल्पिघटितविग्रहे प्रतिष्ठां लभेरन् । यच्चोक्तं—"क्रियारूपत्वादपोहस्य विषयो वक्तव्य" इति, तदसिद्धम्, शब्दवाच्यस्यापोहस्य प्रतिबिम्बात्मकत्वात् । तच्च प्रतिबिम्बकमध्यवसितबाह्यवस्तुरूपत्वान्न प्रतिषेधमात्रम् । अतएव किं गोविषयोऽथागोविषय इत्यस्य विकल्पद्वयस्यानुपपत्तिः, गोविषयत्वेनैव तस्य विधिरूपतयाऽध्यवसीयमानत्वात् ॥ ११९१ ॥

यच्चोक्तं—"केन ह्यगोत्वमासक्तं गोर्येनैतदपोह्यत" इति, तत्राह—**अन्यार्थविनिवृत्तिं** चेत्यादि ।

**अन्यार्थविनिवृत्तिं च साक्षाच्छब्दः करोति नः ।**
**कृते स्वार्थाभिधाने तु सामर्थ्यात्साऽवगम्यते ॥ ११९२ ॥**
**न तदात्मा परात्मेति विस्तरेणोपपादितम् ।**
**परपक्षानभिज्ञेन तस्मादेतदिहोच्यते ॥ ११९३ ॥**
**केन ह्यगोत्वमासक्तं गोर्येनैतदपोह्यते ।**
**इति नैवाभिमुख्येन शब्देनैतदपोह्यते ॥ ११९४ ॥**

यदि हि प्रधानेनान्यनिवृत्तिमेवशब्दः प्रतिपादयेत्तदैतत्स्यात्, यावताऽर्थप्रतिबिम्बकमेव यथोक्तं प्रथमतरः शब्दः करोति, तद्गतौ च सामर्थ्यादेव निवर्त्तनं गम्यत इति सिद्धान्तानभिज्ञतया यत्किंचिदभिहितमेतदिति संक्षेपार्थः । शेषं सुबोधम् ॥ ११९२ ॥ ११९३ ॥ ११९४ ॥

व्यतिरेकादिविकल्पः पूर्वमेव निरस्तः । यदुक्तं—"किमयमपोहो वाच्य" इत्यादि, तत्राह—कतमेनेत्यादि ।

**कतमेन च शब्देन वाच्यत्वं परिपृच्छ्यते ।**
**अपोहस्य किमेतेन यदि वा किं घटादिना ॥ ११९५ ॥**
**शब्दार्थः किमपोहो वा विधिर्वेति निरूपणे ।**
**अपोह इति भात्येतद्यत्तदेवं प्रतीयते ॥ ११९६ ॥**
**प्रतिबिम्बं हि शब्दार्थ इति साक्षादियं मतिः ।**
**जात्यादिविधिहानिस्तु सामर्थ्यादवगम्यते ॥ ११९७ ॥**
**घटवृक्षादिशब्दाश्च तदेव प्रतिबिम्बकम् ।**
**ब्रुवन्ति जननात्साक्षादर्थादन्यत्क्षिपन्ति तु ॥ ११९८ ॥**
**तस्मान्न विधिदोषोऽस्ति नानिष्टा च प्रसज्यते ।**
**अवाच्यपक्षदोषस्तु तदनङ्गीकृतेर्न नः ॥ ११९९ ॥**

तत्रान्यापोहवाच्यत्वविकल्पो यद्यन्योपोहशब्दमधिकृत्याधिक्रियते तदा विधिरूपेणैवासौ तेन शब्देन वाच्य इत्यभ्युपगमान्नानिष्टापत्तिर्युक्ता । तथाहि किं विधिः शब्दार्थ आहोस्विदन्यापोह इति प्रस्तावेऽन्यापोहः शब्दार्थ इत्युक्ते प्रतिपत्तुर्यथोक्तप्रतिबिम्बलक्षणान्यपोहाध्यवसायी प्रत्ययः समुपजायते । अर्थात्तु विधिरूपशब्दार्थनिषेधः । अथ घटादिशब्दमधिकृत्य तत्रापि यथोक्तप्रतिबिम्बलक्षणापोहः साक्षाद्घटादिशब्दैरुपजन्यमानत्वाद्विधिरूपेण च तैः प्रतिपाद्यते, सामर्थ्यात्त्वन्यनिवृत्तेरधिगम इति नानिष्टापत्तिः । न चाप्यव्यवस्थादोषः । सामर्थ्यादन्यनिवृत्तेर्गम्यमानत्वादनुवाच्यतयाऽवाच्यपक्षस्यानङ्गीकृतत्वादेव न तत्पक्षभाविदोषोदयावकाश इति दर्शयति—अवाच्यपक्षदोषस्त्विवति ॥ ११९५ ॥ ११९६ ॥ ११९७ ॥ ११९८ ॥ ॥ ११९९ ॥

अपि चैकत्वनित्यत्वेत्यादावाह—एकत्वेत्यादि ।

**एकत्वनित्यतादिश्च कल्पितो न तु तात्त्विकः ।**
**तदत्र हासकरणं महाविद्वत्त्वसूचकम् ॥ १२०० ॥**

यदि हि पारमार्थिकमेकत्वाद्युपवर्णनं कृतं स्यात्तदा हास्यकारणमेव स्याद्भवतः, यदाहि भ्रान्तिप्रतिपत्त्यनुरोधेन काल्पनिकमेतदाचार्येणोपवर्णितं तदा कथमिव हा-

स्वकारणमवतरति विदुषः । किंतु भवानेव विवक्षितमर्थमविज्ञाय दूषयन्विदुषामतीव हास्यास्पदमुपजायते ॥ १२०० ॥

तस्माद्येष्वेव शब्देषु नञ्योग इत्यादावाह—अवधारणसामर्थ्यादित्यादि ।

**अवधारणसामर्थ्यादन्यापोहोऽपि गम्यते ।**
**स्वात्मैव गम्यते यत्र विफलो नियमोऽन्यथा ॥ १२०१ ॥**

न केवलं यत्र नञ्योगस्तत्रान्यनिवृत्त्यंशोऽवगम्यते, यत्रापि हि नञ्योगो नास्ति तत्रापि गम्यत एवेति स्ववाचैवैतद्भवता प्रतिपादितं स्वात्मैव गम्यत इत्यवधारणं कुर्वता । अन्यथा चावधारणवैयर्थ्यमेव स्यात् । यस्माद्यत्र स्वात्मैव गम्यते तत्रावधारणसामर्थ्यादन्यापोहोऽपि गम्यत इति स्फुटतरमेवावसीयते ॥ १२०१ ॥

**यस्य तर्हीत्यादिना** परोऽपोहशब्दार्थव्यवस्थाया अव्यापितामेवोद्भावयति ।

**यस्य तर्हि न बाह्योऽर्थोऽप्यन्यथावृत्त इष्यते ।**
**वन्ध्यासुतादिशब्दस्य तेन कोऽपोह उच्यते ॥ १२०२ ॥**

तथाहि यस्य वन्ध्यासुतादिशब्दस्य बाह्यसुतादिकं वस्त्वन्यव्यावृत्तमपोहाश्रयो नास्त्येव, तस्य किमधिष्ठानोऽपोहो वाच्य उच्यते, अवश्यं हि वस्तुनाधिष्ठानभूतेनापोहस्य भवितव्यम्, तस्यान्यापोढपदार्थाव्यतिरेकात् ॥ १२०२ ॥

**रूपाभावादित्यादिना** प्रतिविधत्ते ।

**रूपाभावादभावानां शब्दा जात्यादिवाचकाः ।**
**नाशङ्क्या एव सिद्धास्ते निर्भासस्यैव सूचकाः ॥ १२०३ ॥**

वन्ध्यासुतादीनामभावानां रूपस्य कस्यचित्स्वभावस्याभावान्न तद्विषयाः शब्दा जात्यादिवाचकत्वेनाशङ्क्याः, वस्तुवृत्तीनां हि शब्दानां किंरूपमभिधेयमाहोस्वित्प्रतिबिम्बकमिति शङ्का स्यात्, अभावश्च वस्तुविवेकलक्षण एवेति तद्वृत्तीनां शब्दानां कथमिव वस्तुविषयत्वाशङ्का भवेत् । अतो निर्विषयत्वं स्फुटतरमेव । तव(च?) शब्दानां प्रतिबिम्बकमात्रोत्पादादवसीयत एवेत्यस्थानमाशङ्कायाः ॥ १२०३ ॥

एतदेव दर्शयति—अर्थेत्यादि ।

**अर्थशून्याभिजल्पोत्थवासनामात्रनिर्मितम् ।**
**प्रतिबिम्बं यदाभाति तच्छब्दैः प्रतिपाद्यते ॥ १२०४ ॥**

**शब्दैरिति** । वन्ध्यासुतादिशब्दैः ॥ १२०४ ॥

ये पुनर्वस्तुविषयाः शब्दास्तेषां प्रतिबिम्बकमात्रवाचकत्वसिद्धौ प्रमाणयन्नाह—**तन्मात्रे**त्यादि ।

**तन्मात्रद्योतकाश्चेमे साक्षाच्छब्दाः ससंशयाः ।**
**सङ्केतसव्यपेक्षत्वात्कल्पितार्थाभिधानवत् ॥ १२०५ ॥**

ये सङ्केतसव्यपेक्षास्तेऽर्थशून्याभिजल्पाहितवासनामात्रनिर्मितविकल्पप्रतिबिम्बकमात्रावद्योतकाः, यथा वन्ध्यापुत्रादिशब्दाः कल्पितार्थाभिधायिनः, सङ्केतसव्यपेक्षाश्च ससंशया विवादास्पदीभूता घटादयः शब्दा इति स्वभावहेतुः ॥ १२०५ ॥

एवं स्वपक्षं प्रसाध्य परपक्षनिषेधाय प्रमाणयन्नाह—**परोपगते**त्यादि ।

**परोपगतभेदादिविधानप्रतिपादकाः ।**
**न चैते ध्वनयस्तस्मात्तद्वदेवेति गम्यताम् ॥ १२०६ ॥**

भेदः—स्वलक्षणम्, आदिशब्देन जात्यादिपरिग्रहः । **तस्मादि**ति । सङ्केतसापेक्षत्वात् । **तद्वदेवे**ति । कल्पितार्थाभिधानवत् ॥ १२०६ ॥

द्वयोरपि हेत्वोरनैकान्तिकतां परिहरन्नाह—**सङ्केतासम्भव** इत्यादि ।

**सङ्केतासम्भवो ह्यत्र भेदादौ साधितः पुरा ।**
**वैफल्यं च न तद्धेत्वोः सन्दिग्धव्यतिरेकिता ॥ १२०७ ॥**

अशक्यसमयत्वादनन्यभाक्त्वाच्चेति पूर्वं स्वलक्षणादौ सङ्केतासम्भवस्य सङ्केतवैफल्यस्य च प्रसाधितत्वात् । तत्—तस्मात् । हेत्वोर्द्वयोर्न सन्दिग्धविपक्षव्यतिरेकितेति ॥ १२०७ ॥

**नन्वि**त्यादिना परः प्रथमे हेतावनैकान्तिकतामुद्भावयति ।

**ननु चापोहपक्षेऽपि कथं सङ्केतसम्भवः ।**
**साफल्यं च कथं तस्य न द्वयोः स हि सिद्ध्यति ॥ १२०८ ॥**
**वक्तृश्रोत्रोर्न हि ज्ञानं वेद्यते तत्परस्परम् ।**
**सङ्केते न च तद्दृष्टं व्यवहारे समीक्ष्यते ॥ १२०९ ॥**

यथाहि स्वलक्षणादौ सङ्केतासम्भवो वैफल्यं च तथाऽपोहपक्षेऽपि समानम्, ततश्चाकृतसमयत्वात्तन्मात्रद्योतकत्वमपि शब्दानां न युक्तमित्यनैकान्तिकता हेतोः । **साफल्यं च कथमि**ति । सम्भवतीति शेषः । **तस्ये**ति । सङ्केतस्य । कथं पुनस्तत्र सङ्केतासम्भव इत्याह—**न द्वयोः स हि सिद्ध्यतीति** । हिशब्दो हेतौ । यस्मा-

त्प्रतिबिम्बात्मकोऽपोहः सङ्केतविषययोर्द्वयोर्वक्तृश्रोत्रोरेको न सिद्ध्यति। कस्मादित्याह **—न हि ज्ञानमि**त्यादि। प्रत्यात्मसंवेदनीयमेवार्वाग्दर्शनानां ज्ञानम्। न ह्यन्यदीयज्ञानमपरोऽपरदर्शनः संवेदयते। ज्ञानादव्यतिरिक्तश्च परमार्थतः प्रतिबिम्बात्मकलक्षणापोहः। ततश्च वक्तृश्रोत्रोर्द्वयोरपि कस्यचिदेकस्य सङ्केतविषयस्यार्थस्यासिद्धेः कुत्र सङ्केतः क्रियते गृह्यते वा। न ह्यसिद्धे वस्तुनि वक्ता सङ्केतं कर्तुमीशानोऽपि श्रोता गृहीतुमतिप्रसङ्गात्। तथाहि—श्रोता यत्प्रतिपद्यते स्वविज्ञानारूढमर्थप्रतिबिम्बकं न तद्वक्त्रा संवेद्यते। यच्च वक्त्रा संवेद्यते न तच्छ्रोत्रा, स्वस्य स्वस्यैवावभासस्य वेदनात् आनर्थक्यं च प्रतिपादयन्नाह—**सङ्केते न चे**त्यादि। यत्सङ्केतकाले प्रतिबिम्बकमनुभूतं श्रोत्रा वक्त्रा वा न तद्व्यवहारकालेऽनुभूयते। तस्य क्षणक्षयित्वेन चिरनिरुद्धत्वात्। यच्च व्यवहारकालेऽनुभूयते न तत्सङ्केतकाले दृष्टम्। अन्यस्यैव तदानीमनुभूयमानत्वात्। नचान्यत्र सङ्केतादन्यत्र व्यवहारो युक्तोऽतिप्रसङ्गादिति ॥ १२०८ ॥ १२०९ ॥

**स्वस्य स्वस्ये**त्यादिना प्रतिविधत्ते।

**स्वस्य स्वस्यावभासस्य वेदनेऽपि स वर्त्तते।**
**बाह्यार्थाध्यवसाये यद्द्वयोरपि समो यतः ॥ १२१० ॥**

नहि परमार्थतो ज्ञानाकारोऽपि शब्दानां वाच्यतयाऽभीष्टो येन तत्र सङ्केतासम्भवश्चोद्यते, यतः सर्व एवायं शाब्दो व्यवहारः स्वप्रतिभासानुरोधेन तैमिरिकद्वयद्विचन्द्रदर्शनवद्भ्रान्त इष्यते, केवलमर्थशून्याभिजल्पवासनाप्रबोधाच्छब्देभ्योऽर्थावसायिविकल्पमात्रोत्पादात्। तत्प्रतिबिम्बकं शब्दानां वाच्यमित्यभिधीयते जननात्, नत्वभिधेयतया। तत्र यद्यपि स्वस्य स्वस्यैवावभासस्य वक्तृश्रोतृभ्यां परमार्थतः संवेदनं, तथापि तैमिरिकद्वयस्येव भ्रान्तिबीजस्य तुल्यत्वाद्द्वयोरपि वक्तृश्रोत्रोर्बाह्यार्थाध्यवसायस्तुल्य एव। तथापि वक्तुरयमभिमानो वर्त्तते—यमेवाहमर्थं प्रतिपद्ये तमेवायं प्रतिपद्यत इति। एवं श्रोतुरपि योज्यम्। एकार्थाध्यवसायित्वं कथमनयोर्वक्तृश्रोत्रोः परस्परं विदितमिति चेत्, यदि नाम परमार्थतो न विदितम्, तथापि भ्रान्तिबीजस्य तुल्यत्वादस्त्येव परमार्थतः स्वप्रतिभासानुरोधेन तैमिरिकद्वयवद्भ्रान्त एवायं व्यवहार इति निवेदितमेतत्। तेनैकार्थाध्यवसायवशात्सङ्केतकरणमुपपद्यत एव ॥ १२१० ॥

अत्र दृष्टान्तमाह—तिमिरोपहताक्षो हीत्यादि ।

**तिमिरोपहताक्षो हि यथा प्राह शशिद्वयम् ।**
**स्वसमाय तथा सर्वा शाब्दी व्यवहृतिर्मता ॥ १२११ ॥**

**स्वसमायेति** । आत्मतुल्यायापरस्मै तैमिरिकायेत्यर्थः ॥ १२११ ॥

नचाप्यानर्थक्यं सङ्केतस्येति दर्शयति—**व्यापकत्वं चेति** ।

**व्यापकत्वं च तस्येदमिष्टमाध्यवसायिकम् ।**
**मिथ्यावभासिनो ह्येते प्रत्ययाः शब्दनिर्मिताः ॥ १२१२॥**

**इति शब्दार्थपरीक्षा ।**

सङ्केतव्यवहाराप्तकालव्यापकत्वं च वक्तृश्रोतृभ्यामध्यवसितार्थप्रतिबिम्बकस्याव-सायवशादेवेष्टं, न परमार्थतः, व्यवहारकालेऽपि वक्तृश्रोत्रोः पूर्वापरकालदृष्टयोरर्थ-योरैक्याभिमानात् । अथ परमार्थतः कस्मान्नेष्टमित्याह—**मिथ्यावभासिन** इत्यादि ॥ १२१२ ॥

## इति शब्दार्थपरीक्षा ।

तत्र प्रमाणे स्वरूपफलगोचरसङ्ख्यासु परेषां विप्रतिपत्तिश्चतुर्विधा । तन्निराकरणेन स्पष्टं प्रमाणलक्षणमादर्शयितुं "स्पष्टलक्षणसंयुक्तप्रमाद्वितयनिश्चित"मित्येतत्समर्थनार्थमाह—**प्रत्यक्षमित्यादि** ।

**प्रत्यक्षमनुमानं च यदुपाधिप्रसिद्धये ।**
**परैरुक्तं न तत्सिद्धमेवंलक्षणकं हि तत् ॥ १२१३ ॥**

**उपाधिप्रसिद्धय इति** । गुणद्रव्यक्रियाजातिसमवायाद्युपाधिप्रसिद्धये । **परै-रिति** । वैशेषिकादिभिः । **एवमिति** । वक्ष्यमाणम् ॥ १२१३ ॥

तत्र सविकल्पकमज्ञानस्वभावं वा चक्षुरादिकं प्रत्यक्षं प्रमाणमिति प्रत्यक्षस्वरूप-विप्रतिपत्तिः, तन्निराकरणेन तल्लक्षणमाह—**प्रत्यक्षं कल्पनापोढमभ्रान्तमिति** ।

**प्रत्यक्षं कल्पनापोढमभ्रान्तमभिलापिनी ।**
**प्रतीतिः कल्पना क्लृप्तिहेतुत्वाद्यात्मिका न तु ॥ १२१४ ॥**

तत्र ज्ञानस्य कल्पनापोढत्वमभ्रान्तत्वं चानूद्य प्रत्यक्षत्वं विधीयते, सर्वत्रैव लक्ष्यस्य विधीयमानत्वात् । यथा—यः कम्पते सोऽश्वत्थ इति । लक्ष्यमत्र प्रत्यक्षम् । **तल्लक्षणस्यैव प्रस्तुतत्वात्** । ननु कल्पनापोढाभ्रान्तलक्षणं प्रकृतं, येन तद्विधीयत

इति स्यात्। कल्पनाप्रतिषेधाच्च ज्ञानस्य सामर्थ्यलब्धत्वात्, अवत्सा धेनुरानीयतामिति यथा वत्सप्रतिषेधेन गोधेनोः, इत्यतो ज्ञानमिति नोक्तम्। का पुनरत्र कल्पनाऽभिप्रेता? यदपोढं ज्ञानं प्रत्यक्षमित्याह—**अभिलापिनी प्रतीतिः कल्पनेति**। अथ यस्यां कृतिहेतुत्वाद्यात्मिकायां शङ्करस्वामिप्रभृतयो विस्तरेण दोषमुक्तवन्तः सापि किं गृहीतव्या उत नेत्याह—**कृप्तिहेतुत्वाद्यात्मिका नत्विति**। गृह्यत इति शेषः। तेन तदाश्रयेण ये दोषाः परेणोक्तास्ते तत्पक्षानङ्गीकारादेव नावतरन्तीत्युक्तं भवति। कृप्तिर्व्यपदेशस्तद्धेतुत्वं जात्यादीनामिति बोद्धव्यम्, यतो जात्यादिविशेषमन्तरेण न व्यपदेशोऽस्ति। आदिशब्देन शब्दसंसर्गचित्तौदारिकसूक्ष्मताहेतू वितर्कविचारौ तथा ग्राह्यग्राहककल्पनेत्येवमादि ग्रहीतव्यम्। अभिलापो—वाचकः शब्दः, स च सामान्याकारः, स विद्यते यस्याः प्रतिभासतः सा तथोक्ता॥ १२१४॥

कुतः पुनरीदृशी प्रतीतिः सिद्धेत्याह—**शब्दार्थेत्यादि**।

**शब्दार्थघटनायोग्या वृक्ष इत्यादिरूपतः।**
**या वाचामप्रयोगेऽपि साभिलापेव जायते॥ १२१५॥**

वृक्ष इत्यादिरूपतो या वाचामप्रयोगेऽपीति सम्बन्धः। यदि वा—पूर्वेण शब्दार्थघटनायोग्या वृक्ष इत्यादिरूपत इति सम्बन्धः। अनेन प्रत्यक्षत एव कल्पनायाः सिद्धिमादर्शयति सर्वप्राणभृतामनुसिद्धत्वाद्विकल्पस्य॥ १२१५॥

तथाह्याबालमसाविति कर्त्तव्यताहेतुतया सिद्धैवेति दर्शयति—**अतीतेत्यादि**।

**अतीतभवनामार्थभावनावासनान्वयात्।**
**सद्योजातोऽपि यद्योगादितिकर्त्तव्यतापटुः॥ १२१६॥**

अतीतो भवः—अतीतं जन्म, तत्र नामार्थभावना—शब्दार्थाभ्यासः, तेनाहिता या वासना—सामर्थ्यं, तस्या अन्वयः—अनुगमो यतो बालस्याप्यस्ति, तेनाभिलापिनी प्रतीतिस्तस्यापि भवत्येव। यस्याः—कल्पनाया योगात् इतिकर्त्तव्यतायां स्मितरुदितस्तनपानप्रहर्षादिलक्षणायां, पटुः—चतुरो भवति। अतोऽनया कार्यभूतया यथोक्ता कल्पना बालस्याप्यनुमीयत एव। यथोक्तम्—"इतिकर्त्तव्यता लोके सर्वशब्दव्यपाश्रया। यां पूर्वाहितसंस्कारो बालोऽपि प्रतिपद्यत" इति। सा पुनः सन्मूर्च्छिताक्षराकारध्वनिविशिष्टमन्तर्मात्राविपरिवर्त्तिनमर्थं बहिरिवादर्शयन्ती तेषां समुपजायते, यया पश्चात्सङ्केतग्रहणकुशला भवन्ति॥ १२१६॥

चिन्तेत्यादिना भूयः प्रत्यक्षतः कल्पनासिद्धिमाह ।

**चिन्तोत्प्रेक्षादिकाले च विस्पष्टं या प्रवेद्यते ।**
**अनुविद्धेव सा शब्दैरपह्नोतुं न शक्यते ॥ १२१७ ॥**

तस्याश्चेत्यादिना शाब्दव्यवहाराख्यकार्यलिङ्गतोऽपि सिद्धिमाह ।

**तस्याश्चाध्यवसायेन भ्रान्ता शब्दार्थयोः स्थितिः ।**
**अन्यायोगादसत्त्वेऽस्याः सेदृश्यपि न सम्भवेत् ॥ १२१८ ॥**

यतस्तात्त्विकी शब्दार्थव्यवस्था पूर्वैर्निषिद्धा, भ्रान्तेति च व्यवस्थापिता । यदि चास्याः कल्पनाया असत्त्वं स्यात्तदा सा—शब्दार्थव्यवस्था, ईदृश्यपि—भ्रान्तापि, न सम्भवेत् तदभिप्रायवशात्तस्याव्यवस्थानात् । अन्येषां च स्वलक्षणादीनां बाह्यानां वाच्यत्वेनायोगस्य प्रतिपादितत्वात् ॥ १२१८ ॥

ननु चान्येऽपि न केवलमभिलापिनीं प्रतीतिं कल्पनां वर्णयन्ति, किन्तु जातिगुणक्रियादिसम्बन्धयोग्यामपि । सा कस्मान्न गृह्यत इत्याह—जात्यादीत्यादि ।

**जात्यादियोजनायोग्यामप्यन्ये कल्पनां विदुः ।**
**सा जात्यादेरपास्तत्वाददृष्टेश्च न सङ्गता ॥ १२१९ ॥**

**अदृष्टेश्चे**ति । जात्यादेरिति सम्बन्धः । अयं चाभ्युपगम्य जात्यादीन्परिहार उक्तः ॥ १२१९ ॥

**जात्यादीना**मित्यादिना तदेवादृष्टत्वं समर्थयते ।

**जात्यादीनामदृष्टत्वात्तद्योगाप्रतिभासनात् ।**
**क्षीरोदकादिवच्चार्थे घटना घटते कथम् ॥ १२२० ॥**

**क्षीरोदकादिवच्चे**ति । यथा क्षीरोदकादेर्मिश्रीभूतस्य विवेकेनाप्रतिभासनान्न घटना शक्यते कर्तुं तद्वज्जात्यादीनां सत्त्वेऽपि विवेकेनाश्रयादप्रतिभासनान्न शक्यते तदाश्रयेण सहेत्यर्थः ॥ १२२० ॥

यदि तर्हि जात्यादियोजना कल्पना न युक्तैव, तत्कथं लक्षणकारेणोक्तं नाम जात्यादियोजना कल्पनेति, आह—हेयेत्यादि ।

**हेयोपादेयविषयकथनाय द्वयोक्तितः ।**
**परापरप्रसिद्धेयं कल्पना द्विविधोदिता ॥ १२२१ ॥**

तत्र हेया जात्यादियोजना परप्रसिद्धा कल्पना, उपादेया स्वप्रसिद्धा नामयोजनाकल्पना, इति दर्शनाय द्विप्रकाराऽपि कल्पना निर्दिष्टा । कथमवगम्यत इत्याह—

द्वयोक्तिः—यस्मान्नाम च जात्यादयश्च नामजात्यादयस्तेषां योजनेत्येवं वर्गद्वयमुक्तम्, अन्यथा नामादियोजना यदि वा जात्यादियोजनेत्येव वाच्यं स्यात् । नचेदं परिगणनम्, आदिशब्दवैफल्यप्रसङ्गात् ॥ १२२१ ॥

ननु च कल्पना ज्ञानधर्मः, तद्विरहप्रतिपादनमेव प्रकृतं, प्रत्यक्षाधिकारात्, नार्थधर्मविरहप्रतिपादनम् । नामजात्यादीनां च या योजना तद्वद्भिः, साऽर्थगतो धर्मः, न ज्ञानस्य, ततश्चाप्रस्तुताभिधायित्वं लक्षणकारस्येति चोद्यमाशङ्क्याह—**नामादियोजना चेय**मिति ।

**नामादियोजना चेयं स्वनिमित्तमनन्तरम् ।**
**आक्षिप्य वर्त्तते येन तेन नाप्रस्तुताभिधा ॥ १२२२ ॥**

अनन्तरम्—अव्यवहितं निमित्तं, यत्तस्याः कारणम् । तत्पुनराविष्टाभिलापा प्रतीतिः । सा च वस्तुद्वयानुसन्धानाकारोत्पत्तितस्तथा योजनेति व्यपदिश्यते, नैव तु कश्चित्कंचिद्योजयति, निर्व्यापारत्वात्सर्वधर्माणाम् । तस्याक्षेपो द्वाभ्यां प्रकाराभ्याम् । ताभ्यां योजना यतो भवति सा तथोक्ता । गमकत्वाद्वैयधिकरण्येऽपि च बहुव्रीहिः । कारणे कार्योपचाराद्वा । उपचारस्य च प्रयोजनं तदन्यकारणेभ्यो विशिष्टकार्यकारिणः स्वभावख्यापनम् ॥ १२२२ ॥

अथवा—योज्यतेऽनयेति योजना, नामजात्यादीनां योजनेति समासं कृत्वाऽभिलापिन्येव कल्पना निर्दिष्टेत्यदोष इति दर्शयति—**नामजात्यादय** इत्यादि ।

**नामजात्यादयः सर्वे योज्यन्ते वाऽनयेति सा ।**
**तथोक्ता कल्पना प्रोक्ता प्रतीतिरभिलापिनी ॥ १२२३ ॥**

यद्वेत्यादिना परिहारान्तरमाह—

**यद्वा स्वमतसिद्धैव केवला कल्पनोदिता ।**
**सर्वत्र नाम्ना युक्तोऽर्थ उच्यत इति योजनात् ॥ १२२४ ॥**

यद्येवं कथमयमाचार्यीयो वृत्तिग्रन्थो नीयते । तद्यथा—यदृच्छाशब्देषु नाम्ना विशिष्टोऽर्थ उच्यते डित्थ इति, जातिशब्देषु जात्या गौरिति, गुणशब्देषु गुणेन शुक्ल इति, क्रियाशब्देषु क्रियया पाचक इति, द्रव्यशब्देषु द्रव्येण दण्डी विषाणीति । अनेन हि ग्रन्थेन जात्यादिविशेषणयुक्तस्याप्यर्थस्योच्यमानत्वं पृथक्प्रकाशितमित्यत आह—**सर्वत्रे**त्यादि । **सर्वत्रे**ति । जात्यादिशब्देष्वपि । एतदुक्तं भवति—यथा

यदृच्छाशब्देषु प्रयुज्यमानेषु नाम्ना विशिष्टोऽर्थ उच्यते, एवं जात्यादिशब्देषु गौरित्यादिषु नाम्ना विशिष्टोऽर्थ उच्यते इत्येतत् सर्वत्र ग्रन्थे योजनीयमिति ॥ १२२४॥

कथं तर्हि जात्या गुणेन क्रियया द्रव्येण वेत्येतदपरं तृतीयान्तं योजनीयमित्याह—**तैस्त्वि**त्यादि ।

**तैस्तु करणविभक्त्या साफल्यमनुभूयते ।**
**नाम्नो जात्यादिभिः सेयमित्यर्थोऽध्यवतिष्ठते ॥ १२२५ ॥**

जात्या करणभूतया नाम्ना विशिष्टोऽर्थ उच्यते गौरिति, तथा गुणादिभिः, इत्येवं तैर्जात्यादिभिः करणविभक्त्या सम्बन्धात्साफल्यमनुभूयते । यद्येवं, नामजात्यादियोजनेत्यत्र सूत्रे कथं सम्बन्धः कार्य इत्याह—**नाम्नो जात्यादिभि**रिति योजनेति शेषः । **सेय**मिति । अनेन समासार्थलभ्यां कल्पनामेव निर्दिशति । जात्यादिभिर्योजना जात्यादियोजना, नाम्नो जात्यादियोजना सेयं नामजात्यादियोजनेत्ययं समासार्थोऽध्यवतिष्ठत इति यावत् ॥ १२२५ ॥

यद्येवं यदृच्छाशब्देषु जात्यादीनां प्रवृत्तिनिमित्तानामभावादव्यापिनी व्यवस्था भवेदित्याशङ्क्याह—**यदृच्छाशब्दवाच्याया** इति ।

**यदृच्छाशब्दवाच्याया जातेः सद्भावतो न च ।**
**अव्याप्तिरस्य मन्तव्या प्रसिद्धेस्तु पृथक्श्रुतिः ॥ १२२६ ॥**

एतदुक्तं भवति—येऽप्येते डित्थादयः शब्दा यदृच्छाशब्दत्वेन प्रतीतास्तेऽपि जन्मनः प्रभृत्यामरणक्षणादनुवर्त्तमानाः प्रतिक्षणभेदभिन्नमसाधारणभेदेन वस्तु गमयितुमशक्ताः कालप्रकर्षमर्यादावच्छिन्नवस्तुसमवेतां जातिमभिधेयत्वेनोपाददते । अन्यथा हि बालाद्यवस्थाभेदपरिच्छिन्नवस्तुभागविषयतया निरूढाः कथं वृद्धाद्यवस्थोपहितभेदमपि वस्तु प्रतिपादयेयुः । येषामपि न क्षणिको देहः—किं तर्हि? कालान्तरावस्थायीति दर्शनम्, तेषामपि यथाकालमपचीयमानावयवसम्बन्धादवयवापचयाद्वाऽन्यदन्यद्द्रव्यमवस्थाभेदेष्विति सिद्धम् । परिणतिदर्शनेऽपि यदवस्थाभेदसम्बद्धं वस्तु तच्छब्दवाच्यतया प्रतिज्ञातं ततश्चावस्थान्तरं समाश्रयेत तदेव वस्तु तेन शब्देन नाभिधीयेत, यथा पयसि विनिश्चिताभिधानशक्तिः क्षीरशब्दो न दध्नि प्रवर्त्तते, तथा शरीरेऽपि नावस्थान्तरे प्रवर्त्तेतेति जातिरवश्याभ्युपगन्तव्या । अथवा मा भूद्वस्तुभूता जातिस्तथाऽपि नाव्यापिनी व्यवस्था । तथाहि—त एव भेदा अवि-

वक्षितभेदाः सामान्यमिति सर्वत्र जातिशब्दैरुपादीयन्त इति यदृच्छाशब्दा जातिशब्देभ्यः पृथग्लक्षणकारेण निर्दिष्टा इत्याह—प्रसिद्धेस्त्विति । गवादयो हि शब्दा लोके जातिशब्दतया प्रतीताः, चित्राङ्गदादयस्तु संज्ञाशब्दत्वेनेति पृथग्वचनम् १२२६

नन्वित्यादिना परश्चोदयति ।

**नन्वन्यापोहवाच्यत्वाज्जातिशब्दस्तु केवलः ।**
**विवक्षापरतन्त्रत्वाद्विवक्षाशब्द एव वा ॥ १२२७ ॥**

सत्यमित्यादिना प्रतिविधत्ते ।

**सत्यं लोकानुवृत्त्येदमुक्तं न्यायविदेदृशम् ।**
**इयानेव हि शब्दोऽस्मिन्व्यवहारपथं गतः ॥ १२२८ ॥**

इयानेव हीति । पञ्चप्रकारः संज्ञाजातिगुणक्रियाद्रव्यशब्दभेदेन ॥ १२२८ ॥

ननु यदि स्वमतसिद्धैव कल्पनाऽभिप्रेता किमर्थं तर्हि "अन्ये त्वर्थशून्यैः शब्दैरेव विशिष्टोऽर्थ उच्यते" इत्यनेन ग्रन्थेन पृथक्स्वमतसिद्धा कल्पना पश्चादुपवर्णिताऽऽचार्येणेत्याह—ते तु जात्यादय इति ।

**ते तु जात्यादयो नेह लोकवद्व्यतिरेकिणः ।**
**इत्येतत्प्रतिपत्त्यर्थमन्ये त्वित्यादिवर्णितम् ॥ १२२९ ॥**

एतदुक्तं भवति—न सावलेयादिव्यक्तिव्यतिरिक्ता जात्यादयः पारमार्थिकाः सन्ति सांवृतास्त इत्यस्यार्थस्य प्रतिपादनार्थमुक्तमिदं लक्षणकारेण, नतु पृथगपरां कल्पनां दर्शयितुमिति । अन्य इति । बौद्धाः । अर्थशून्यैरिति । जात्यादिनिरपेक्षैरपोहमात्रगोचरैः शब्दैः । इत्याचार्यग्रन्थस्यार्थः ॥ १२२९ ॥

न केवलमस्माभिरियमभिलापिनी प्रतीतिः कल्पनाऽभ्युपगता, परैरप्यवश्याभ्युपगन्तव्या, अन्यथा जगदव्यवहार्यमेव स्यादिति दर्शयन्नाह—जात्यादियोजनां येऽपीति ।

**जात्यादियोजनां येऽपि कल्पनां समुपाश्रिताः ।**
**तैरभ्युपेया नियतं प्रतीतिरभिलापिनी ॥ १२३० ॥**
**अन्यथा योजनाभावाद्युक्तयोरिव भावयोः ।**
**स्वातन्त्र्येण परिच्छेदात्कल्पना नैव कल्प्यते ॥ १२३१ ॥**
**एवं वा व्यवहार्यं स्यात्सर्वं विश्वमिदं ततः ।**
**जात्यादिरूपसंसृष्टं व्यवहार्यमिदं मतम् ॥ १२३२ ॥**

**जात्यादियोजना शब्दयोजनाऽव्यभिचारिणी ।**
**एवं चोच्यत इत्येतत्फलवज्जायते वचः ॥ १२३३ ॥**

जातिगुणक्रियाद्रव्ययोजनायामपि कल्पनायां परैरभ्युपगतायां नामयोजनैव कल्पना । तथाहि—तत्र जात्यादिव्यवच्छिन्नं वस्तु नाम्नैव विशिष्टं गृह्यते, अन्यथा हि स्वातन्त्र्येणानेकपदार्थग्रहणवद्योजनाभावात्कथं कल्पना भवेत्, ततश्च मूकमेव जगत्स्यात् । अतएव च दण्डयुक्तं पुरुषं पश्यन्नपि न तावद्दण्डीति योजयति यावन्न नामभेदं स्मरति । यत एव शब्दयोजनया सर्वा योजनाऽव्याप्ता, अतएव चाचार्यीयं "जात्या विशिष्टोऽर्थ उच्यते गौरित्यादिषु यदुच्यत" इति वचनं तत्सफलं भवेत् । अन्यथा विना नाम्ना कथमुच्यत इति स्यात् । अभिधानक्रियायाः शब्दधर्मत्वात् ॥ १२३० ॥ १२३१ ॥ १२३२ ॥ १२३३ ॥

तस्मादित्यादिना कल्पनासिद्धिमुपसंहरति ।

**तस्मात्समस्तसिद्धान्तसंस्थितानां प्रवादिनाम् ।**
**अविवादादयत्नेन साध्येयं कल्पना मया ॥ १२३४ ॥**

लक्षणकारस्य कल्पनां सिद्धिरूपां निर्दिशतोऽभिप्रायमाह—एतदागूर्येति ।

**एतदागूर्य सकलं नामजात्यादिवर्णनम् ।**
**मतयोः स्वान्ययोरित्थमुपादानमिहाकरोत् ॥ १२३५ ॥**
**तेभ्योऽस्माकमियानेव भेद इत्येवमब्रुवन् ।**
**अन्ये त्वित्यादिकं वाक्यमनन्तरमदो जगौ ॥ १२३६ ॥**

हेयोपादेयविषयकथनं जात्यादियोजनां विना नामयोजनां विना भाविनीत्यादि पूर्वोपवर्णितम् । **नामजात्यादिवर्णन**मिति । अकरोदिति सम्बन्धः । स्वान्ययोस्तु मतयोरुपादानं हेयोपादेयविषयकथनाय ॥ १२३५ ॥ १२३६ ॥

न्यायमुखग्रन्थस्तर्हि कथं नेय इत्याह—एवमित्यादि ।

**एवं न्यायमुखग्रन्थो व्याख्यातव्यो दिशाऽनया ।**
**ज्ञानमित्यभिसम्बन्धात्प्रतीतिस्तत्र चोदिता ॥ १२३७ ॥**

तत्रायं न्यायमुखग्रन्थः—"यत् ज्ञानमर्थेरूपादौ विशेषणाभिधायकाभेदोपचारेणाविकल्पकं तदक्षमक्षं प्रति वर्त्तत इति प्रत्यक्षम्" विशेषणं जात्यादि, अभिधायकं नाम, तयोरभेदोपचारो जात्यादिमद्भिः संज्ञिना च । अभेदोपचारग्रहणमुपलक्षणम्

यत्रापि भेदेन ग्रहणमस्य गोत्वमस्येदं नामेति, तत्रापि कल्पनेष्यत एव । ननु चानुप्रतीतिः कल्पनेति नोक्तं, तत्कथं यथोक्तकल्पना लभ्यत इत्याह—**ज्ञानमित्यभिसम्बन्धादिति** । एतदुक्तं भवति—कल्पनावैपरीत्येन ज्ञानमेव प्रत्यक्षत्वेन दर्शयता ज्ञानधर्मत्वं कल्पनाया दर्शितम् । तथाचायमर्थो भवति—यज्ज्ञानं नामाद्यभेदोपचारेणाविकल्पकं तत्प्रत्यक्षं, यत्तु ज्ञानं तथाविकल्पकं तत्कल्पनात्मकत्वान्न प्रत्यक्षमिति सामर्थ्यादभिलापिनी प्रतीतिः कल्पनेति प्रत्यक्षवैपरीत्येन सिध्यति एवं परापरमतङ्ग्रहो दर्शित इति ॥ १२३७ ॥

यद्वा स्वमतोपवर्णनमेव केवलमाचार्येण कृतमित्यादर्शयति—**यद्वेत्यादि** ।

**यद्वा विशेषणं भेदो येनान्यापोहकृच्छ्रुतिः ।**
**जात्यादीनां व्यवच्छेदमनेन च करोत्ययम् ॥ १२३८ ॥**

भेदो विशेषणं व्यावृत्तिरित्यर्थः । तस्याभिधायकं, न जात्यादीनां, तस्याभेदोपचार इति विग्रहः ॥ १२३८ ॥

ननु च यदि प्रतीतिरभिलापिनी कल्पना, सा धर्मिणी, नच धर्म्यन्तरे धर्म्यन्तरस्य प्रसङ्गो येन तन्निषेधस्तद्धर्मतया क्रियत इत्यसम्बन्धाभिधानम् । तथा यदि प्रत्यक्षं कल्पनापोढम्, कत्वं (थं ?) तत्प्रत्यक्षशब्देनोच्यत इति, अनभिधेयार्थः किल कल्पनापोढार्थ इति मन्वानाः परे भर्गभारद्वाजप्रभृतयश्चोदयन्ति । एतच्च सर्वं परिहृतमेवेति योजयन्नाह—**एवं प्रतीतिरूपा चेत्यादि** ।

**एवं प्रतीतरूपा च यदेवं कल्पना मता ।**
**तादात्म्यप्रतिषेधश्च प्रत्यक्षस्योपवर्ण्यते ॥ १२३९ ॥**
**तदाऽध्यक्षादिशब्देन वाच्यत्वेऽपि न बाध्यते ।**
**कल्पनाविरहोऽध्यक्षे न हि सा शब्दवाच्यता ॥ १२४० ॥**
**अन्यथा रूपगन्धादेः सविकल्पकता भवेत् ।**
**अतो नास्पदमेवेदं यदाहुः कुधियः परे ॥ १२४१ ॥**
**यदि प्रत्यक्षशब्देन प्रत्यक्षमभिधीयते ।**
**कथं तत्कल्पनापोढमयुक्तं गम्यते कथम् ॥ १२४२ ॥**

**तादात्म्यप्रतिषेध** इति । यत्रैषा कल्पना नास्ति तत्प्रत्यक्षमित्यनेन ग्रन्थेन लक्षणकारस्तादात्म्यप्रतिषेधं करोति । एवंभूतं कल्पनात्मकं यज्ज्ञानं न भवतीत्यर्थः ।

नत्वाधेयनिषेधमिति प्रथमं तावदचोद्यम् । द्वितीयमप्यचोद्यमेव, यतो नानभिधेयार्थः कल्पनापोढार्थो वर्णितः । किं तर्हि? अविकल्पकार्थः । अविकल्पकमपि ज्ञानं यद्यप्यभिधीयते शब्देनाध्यवसायानुरोधात् । तथापि रूपादिवन्न विकल्पकतां यास्यतीति यत्किंचिदेतत् ॥ १२३९ ॥ १२४० ॥ १२४१ ॥ १२४२ ॥

स्यादेतत्—भवत्वेवं यथोपवर्णिता कल्पना । कल्पनापोढं तु कथं सिद्धमित्याह—प्रत्यक्षमित्यादि ।

**प्रत्यक्षं कल्पनापोढं वेद्यतेऽतिपरिस्फुटम् ।**
**अन्यत्रासक्तमनसाऽप्यक्षैर्नीलादिवेदनात् ॥ १२४३ ॥**

अनेन स्वसंवित्त्या प्रत्यक्षतः कल्पनाविरहः सिद्ध इत्यादर्शयति ॥ १२४३ ॥

स्यादेतदसावेव विषयान्तरव्यासक्तो विकल्पः पुरस्थं नीलादि प्रतिपद्यत इत्याह—नासावेवेत्यादि ।

**नासावेव विकल्पो हि तमर्थं प्रतिपद्यते ।**
**अतीताद्यभिधात्यागात्तन्नामघटनाप्तितः ॥ १२४४ ॥**

यदि हि स एव विकल्पस्तमर्थं प्रतिपद्येत तदाऽतीताद्यर्थाभिधानत्यागेन तस्यैव नीलादेर्नाम योजयेत् । एकत्राभिलापद्वयसंसर्गाप्रतीतेरतीताद्यभिधात्यागादित्युक्तम् । तस्याभिमुखीभूतस्य नाम, तन्नाम, तस्य घटना—योजना, तस्या आप्तिः—प्राप्तिः । प्रसङ्ग इति यावत् ॥ १२४४ ॥

स्यान्मतम्—अन्य एव तर्हि विकल्पस्तदा तमर्थं प्रतिपद्यत इत्येवं कस्मान्न विज्ञायत इत्याह—तदा तन्नामेत्यादि ।

**तदा तन्नामसंसर्गी विकल्पोऽस्त्यपरो न च ।**
**दृश्यस्याप्रतिसंवित्तेरनिष्टेश्च द्वयोः सकृत् ॥ १२४५ ॥**

अनेन यथाक्रमं प्रत्यक्षविरोधम्, अभ्युपगमविरोधं च सकृद्विकल्पद्वयप्रतिज्ञायामाह—द्वयोरिति । विकल्पयोरिति शेषः ॥ १२४५ ॥

विकल्पेत्यादिनोपसंहरति ।

**विकल्पकमतो ज्ञानसहभाव्यनुभूयते ।**
**तस्मादिन्द्रियविज्ञानमकल्पनमिदं स्फुटम् ॥ १२४६ ॥**

विकल्पसहभावित्वमसिद्धमिति कदाचित्परो ब्रूयादतस्तदाशङ्कयन्नाह—क्रमेणेत्यादि ।

**क्रमेणैवोपजायन्ते विज्ञानानीति चेन्मतम्।**
**सकृद्भावाभिमानस्तु शीघ्रवृत्तेरलातवत्॥ १२४७॥**

यदि क्रमेणोपजायन्ते कथं युगपत्प्रवेद्यन्त इत्याह—सकृद्भावाभिमानस्त्विति। अलात इवालातवत्। यथाऽलाते शीघ्रभ्रमणात्सकृच्चक्राकारा प्रतीतिस्तद्दर्शनानां घटनादेवं ज्ञानानां शीघ्रोत्पत्तितः सकृद्भावाभिमान इति। अथवा—अलातशब्देन विषयिणि ज्ञाने विषयोपचारात्तद्विषयाणि ज्ञानान्युच्यन्ते। पूर्ववद्गतिः॥ १२४७॥

नेति पूर्वपक्षं प्रतिक्षिपति।

**न तदाऽभिमुखीभूतभावनामानुषङ्गवान्।**
**विकल्पो विद्यते दृश्य इत्येवोक्तं न००ना॥ १२४८॥**

एवं मन्यते—न सकृद्भावप्रसाधनमत्र प्रकृतम्, किं तर्हि?। धियः कल्पनाविरहः। स चान्यत्र गतचित्तस्याप्यभिमुखीभूतपदार्थानुभवकाले तन्नामसंसर्गिणो विकल्पस्योपलब्धिलक्षणप्राप्तस्यानुपलब्ध्या सिध्यतीति नात्र किंचिद्दूषणमुक्तम्। तथाहि यदि नाम क्रमेण ज्ञाने संवेद्येते नतु विकल्पः संवेद्यत इति न प्रकृतस्य व्याघातः॥ १२४८॥

न चायं सकृद्भावाभिमानोऽपि भ्रान्त इत्यादर्शयन्नाह—भ्रान्तिरित्यादि।

**भ्रान्तिस्तदभिमानश्च तद्व्यक्तं च निरन्तरम्।**
**तदेव चार्थविज्ञानयौगपद्यमतः स्फुटम्॥ १२४९॥**

भ्रान्तिर्नेति प्रकृतं संबन्धनीयम्। तदभिमान इति। तस्य—सकृद्भावस्याभिमान इति विग्रहः। बाधकप्रमाणवशाद्धि भ्रान्तिव्यवस्थानं, नचात्र बाधकमस्ति, येन भ्रान्तिः स्यात्। कथं नास्तीत्याह—तद्व्यक्तं च निरन्तरमिति। तदित्यभिमुखीभूतार्थसंवेदनं निरन्तरविषयान्तरासक्तचित्तसमकालं स्पष्टमनुभूयते। तदेव चेदृशमर्थविज्ञानं प्रत्यक्षमुच्यत इति कुतो भ्रान्तिः॥ १२४९॥

न केवलं सकृद्भावस्य भ्रान्तत्वव्यवस्थां प्रति न किंचित्साधकमस्ति, प्रत्युत बाधकमस्तीति दर्शयन्नाह—नर्त्तकीत्यादि।

**नर्त्तकीदृष्ट्यवस्थादावखिलं वेद्यते सकृत्।**
**बहुभिर्व्यवधानेऽपि भ्रान्तिः सा चा(श्चेदा?)शुवृत्तितः१२५०**
**लतातालादिबुद्धीनामत्यर्थं लघुवर्त्तनम्।**
**सकृद्भवाभिमानोऽतः किमत्रापि न वर्त्तते॥ १२५१॥**

**शुद्धे च मानसे कल्पे व्यवसीयेत न क्रमः ।**
**अल्पा च सर्वबुद्धीनामाशुवृत्तिश्चिरास्थितेः ॥ १२५२ ॥**
**अतः सर्वत्र विषये न क्रमग्रहणं भवेत् ।**
**सकृद्ग्रहणभासस्तु भवेच्छब्दादिबोधवत् ॥ १२५३ ॥**

एकैका धीः पञ्चभिर्धीभिर्व्यवधीयमानाऽपि नर्त्तकीदर्शनाद्यवस्थायामव्यवहितेव प्रतिभाति । तथाहि—यदैव नर्त्तकीमुत्पश्यति तदैव गीतादिशब्दं शृणोति, कर्पूरादिरसमास्वादयति, नासिकापुटविन्यस्तकुसुमामोदं जिघ्रति, व्यजनानिलादिस्पर्शं च स्पृशति, वस्त्राभरणादिदानादि च चिन्तयति । ततश्च यदि बहुभिर्व्यवधानेऽपि बुद्धीनां सकृद्भावभ्रान्तिराशूत्पत्तिबलादुपजायते, तदा लता तालः सरो रस इत्येवमादावेकैकज्ञानव्यवधानाद्वर्णश्रुतीनामत्यर्थं लघुवर्त्तनमस्तीति सकृद्वर्णप्रतिभासः प्राप्नोति । ततश्च सरो रस इत्यादौ शब्दे श्रूयमाणे श्रुतिभेदोऽर्थप्रतीतिभेदश्च न स्यात् । किंच—बुद्धेर्विजातीयचक्षुरादिविज्ञानाव्यवहिते नानाविद्यार्थचिन्तारूपे विकल्पे समुत्पद्यमाने शीघ्रवृत्तिरस्तीति न क्रमव्यवसायः प्राप्नोति । सर्वासां च बुद्धीनां क्षणिकत्वेन चिरानवस्थानादाशुवृत्तिरस्तीति कस्यचिदर्थस्य न क्रमवती प्रतीतिः स्यात् । **शब्दादिबोधवदिति** । नर्त्तकीप्रेक्षावस्थायां शब्दादिसंवेदनवत् ॥ १२५० ॥ ॥ १२५१ ॥ १२५२ ॥ १२५३ ॥

यश्चायमलातवदिति दृष्टान्तः स साध्यविकल इति दर्शयन्नाह—**अलातेऽपी**त्यादि ।

**अलातेऽपि सकृद्भ्रान्तिश्चक्राभासा प्रवर्त्तते ।**
**न दृशां प्रतिसन्धानाद्विस्पष्टं प्रतिभासनात् ॥ १२५४ ॥**
**तथाहि प्रतिसन्धानं स्मृत्यैव क्रियते ननु ।**
**दर्शनेन व्यतीतस्य विषयस्यानवग्रहात् ॥ १२५५ ॥**
**यश्चास्या विषयो नासौ विनष्टत्वात्परिस्फुटः ।**
**ततः परिस्फुटो नायं चक्राभासः प्रसज्यते ॥ १२५६ ॥**

यतो नेयं मानसी भ्रान्तिः क्रमवर्त्तिनी दर्शनानि घटयन्ती समुपजायते, किं तर्हि ?, सकृदेकैवेन्द्रियजा चक्राकारा भ्रान्तिः सामग्रीविशेषबलादुत्पद्यते, विस्पष्टप्रतिभासत्वात् । नहि विकल्पानुबद्धस्य स्पष्टप्रतिभासित्वं युक्तम् । तथाहि—घटना

क्रियमाणा स्मृत्यैव क्रियते, नेन्द्रियज्ञानेन, तस्य वस्तुसन्निधानबलभाविनोऽतीतार्थग्रहणासामर्थ्यात् । यश्चास्याः स्मृतेर्विषयो नासौ परिस्फुटः, कस्मात् ?, विनष्टत्वात् । तस्मादस्पष्टाभत्वप्रसङ्गान्नेयं मानसी भ्रान्तिः । किं तर्हि ?, इन्द्रियजा, इति साध्यविकलो दृष्टान्तः ॥ १२५४ ॥ १२५५ ॥ १२५६ ॥

एवं प्रत्यक्षतो धियः कल्पनाविरहं प्रतिपाद्य सांप्रतमनुमानतः प्रतिपादयति—यदि चेत्यादि ।

**यदि चाप्यस्य भावस्य यद्रूपस्थितिकारणम् ।**
**न विद्यते न तत्त्वेन स व्यवस्थाप्यते बुधैः ॥ १२५७ ॥**
**अविद्यमानसास्नादिर्यथा कर्को गवात्मना ।**
**विशेषणविशिष्टार्थे ग्रहणं न च विद्यते ॥ १२५८ ॥**
**सविकल्पकभावस्य स्थितेराक्षे निबन्धनम् ।**
**विपक्षः शाबलेयादिरन्यथाऽतिप्रसज्यते ॥ १२५९ ॥**
**नचाप्रसिद्धता हेतोर्जात्यादेः प्रतिषेधतः ।**
**भेदेन चापरिच्छेदान्नचास्त्येवं विशेषणम् ॥ १२६० ॥**

प्रयोगः—यस्य यद्रूपं व्यवस्थितौ निमित्तं नास्ति न तत्तथा प्रेक्षावद्भिर्व्यवहर्तृभिर्व्यवस्थाप्यते, तद्यथा—अविद्यमानगोप्रज्ञप्तिनिमित्तभूतककुदादिसमुदायः कर्को गोत्वेन । नास्ति च प्रत्यक्षस्य नीलाद्यसाधारणविषयबलेनोत्पद्यमानस्य सविकल्पकभावव्यवस्थितौ विशेषणविशिष्टार्थग्रहणं निमित्तमिति कारणानुपलब्धिः । वैधर्म्येण शाबलेयबाहुलेयादयः । सर्वथा सर्वस्य व्यवस्थानप्रसङ्गो व्यवस्थापयितुश्चाप्रेक्षापूर्वकारिताप्रसङ्गो बाधकं प्रमाणमिति संक्षेपार्थः । कर्कः—शुक्लोऽश्वः । **जात्यादेरिति** । विशेषणस्येति शेषः । सन्तु नाम वस्तुभूता जात्यादयस्तथाऽपि नासिद्धतेति दर्शयन्नाह—**भेदेन चापरिच्छेदादिति** । विशेष्यत्वेनाभिमताद्रूपादेरित्यध्याहार्यम् । यदि नाम भेदेनापरिच्छेदो जातस्तथापि विशेषणं कस्मान्न भवतीत्याह—**नचास्त्येवमिति** । भेदेनापरिच्छिन्नम् । तस्माद्विशेषणविशिष्टार्थग्रहणं न विद्यत इत्यस्य हेतोर्नासिद्धता ॥ १२५७ ॥ १२५८ ॥ १२५९ ॥ १२६० ॥

स्यादेतन्माभूज्जात्यादिकं विशेषणं, शब्दस्वरूपमेव तु विशेषणं भविष्यतीत्याह—**नामापीत्यादि** ।

**नामापि वाचकं नैव यच्छब्दस्य स्वलक्षणम् ।**
**स्वलक्षणस्य वाच्यत्ववाचकत्वे हि दूषिते ॥ १२६१ ॥**
**अध्यारोपितमेवातो वाच्यवाचकमिष्यते ।**
**अनारोपितमर्थं च प्रत्यक्षं प्रतिपद्यते ॥ १२६२ ॥**
**स्वलक्षणस्य सद्भावे सद्भावात्तदभावतः ।**
**व्यवधानादिभावे च तस्यापि व्यतिरेकतः ॥ १२६३ ॥**

नहि स्वलक्षणे सङ्केतः, नापि शब्दस्वलक्षणे, तयोर्व्यवहारकालेऽनन्वयात् । नच स्वलक्षणव्यतिरेकेणान्यच्छब्दस्वरूपमस्ति । नचासङ्केतितोऽर्थः शब्देन योज्यतेऽतिप्रसङ्गात् । नापि शब्दयोजनमन्तरेण विकल्पः । तस्मादध्यारोपित एव वाच्यवाचकभावो न पारमार्थिकः । स्यादेतदारोपितमेवार्थं तर्हि प्रत्यक्षं प्रतिपद्यमानं सविकल्पकं भविष्यतीत्याह—**अनारोपितमि**त्यादि । **तदभावत** इति । तस्यापि व्यतिरेकत इति सम्बन्धः । तस्य स्वलक्षणस्याभावात्तस्यापि प्रत्यक्षस्य व्यतिरेकतोऽभावादिति यावत् । कदा स्वलक्षणस्याभाव इत्याह—**व्यवधानादी**ति । आदिशब्देन देशकालविप्रकर्षादिः ॥ १२६१ ॥ १२६२ ॥ १२६३ ॥

**अशक्यसमय** इत्यादिना प्रमाणान्तरमप्याह—

**अशक्यसमयो ह्यात्मा नीलादीनामनन्यभाक् ।**
**तेषामतश्च संवित्तिर्नाभिजल्पानुषङ्गिणी ॥ १२६४ ॥**

नीलादीनामात्मा—स्वभावः, अशक्यसमयः—अशक्यसङ्केतः । कथमिति प्रश्ने कारणमाह—**अनन्यभागि**ति । अनन्यभाक्—असाधारणः । व्यवहारकालाप्रत्युपस्थायीति यावत् । व्यवहारार्थत्वात्समयस्येति नात्र शब्दसङ्केतः । किंच—विषयीकृते चायं समयो भवति नाविषयीकृते, न तावदनुत्पन्नं प्रत्यक्षं नीलाद्यात्मानं विषयीकरोति, उत्पन्नं चाभिलापमादाय योजयेत् । उत्पत्तिकालेऽभिलापग्रहणकाले च क्षणिकत्वान्न विषयेणापि प्रत्यक्षं विषयीति केन कुत्र योजनमित्यतोऽप्यशक्यसमयो नीलादीनामात्मा । **तेषा**मिति । नीलादीनाम् । **नाभिजल्पानुषङ्गिणी**ति । नाविष्टाभिलापा । तत्र प्रयोगः—यद्यत्रागृहीतसमयं न तत्तत्र सविकल्पकं भवति, तद्यथा—चक्षुर्विज्ञानं गन्धे, अगृहीतसमयं च प्रत्यक्षं नीलाद्यात्मनीति व्यापकविरुद्धोपलम्भः ॥ १२६४ ॥

नन्वित्यादिना प्रथमे हेतौ सुमतेर्दिगम्बरस्य मतेनासिद्धतामाशङ्कते ।

**ननु नामादिकं माभूत्तस्य ग्राह्यं विशेषणम् ।**
**तथाऽप्यसिद्धता हेतोर्नैव व्यावर्त्तते यतः ॥ १२६५ ॥**
**अर्थान्तरव्यवच्छिन्नरूपेणाग्रहणं यदि ।**
**अर्थमात्रग्रहो वा स्यादग्रहो वा घटे यथा ॥ १२६६ ॥**
**घटान्तरव्यवच्छिन्नरूपेणाग्रहणं यदि ।**
**घटमात्रग्रहो वा स्यादग्रहो वा घटस्य वै ॥ १२६७ ॥**

स हि सामान्यविशेषात्मकत्वेनोभयरूपं सर्वं वस्तु वर्णयति । सामान्यं च द्विरूपम् । विशेषेणावच्छिन्नं यथा गोत्वादि, अनवच्छिन्नं यथा सत्तावस्तुत्वादि । तत्र यदनवच्छिन्नमेकरूपं तदालोचनामात्रस्य निर्विकल्पकप्रत्यक्षस्य गोचरः । इतरत्पुनः सविकल्पकस्येत्येषा तस्य प्रक्रिया । कुमारिलस्तु—आलोचनाज्ञानं निर्विकल्पकं व्यक्तिस्वलक्षणविषयं वर्णयति । सामान्यविषयं तु सविकल्पकं प्रत्यक्षम् । तत्र सुमतिः कुमारिलाद्यभिमतालोचनामात्रप्रत्यक्षविचारणार्थमाह । तद्वादीदं प्रष्टव्यः । किं तदिन्द्रियस्य पुरःस्थितमर्थमात्रं स्वेन रूपेणार्थान्तराऽसम्भविना विशिष्टं गृह्यते? नेति। यद्यसौ ब्रूयान्नेति । अत्रोच्यते—अर्थान्तरव्यवच्छिन्नरूपेणाग्रहणं यदि—विवक्षितादर्थाद्यदर्थान्तरं, ततो व्यवच्छिन्नं—तत्राविद्यमानं विवक्षितार्थस्थं रूपं—स्वभावः, तेन विशिष्टस्य यदि तस्यार्थस्याग्रहणमिष्यते, तदा तदर्थमात्रग्रहो वा स्यात्—यत्तदर्थमात्रमर्थान्तरासम्भवि—स्वभावरहितं तस्यैव ग्रहणं स्यात् । अथ तदपि न गृह्यते, तदा, अग्रहो वा—अग्रहणमेव स्यात् । घटे यथेति निदर्शनमुक्तं तच्छ्लोकान्तरेण व्याचष्टे—**घटान्तरे**त्यादि । अवधीकृतघटासम्भविना रूपेण यदि तस्य घटस्याग्रहणं तदा घटमात्रग्रहो वा स्यात्—केनचिद्राजतताम्रादिना विशेषेणाविशिष्टस्य घटमात्रस्य ग्रहणं स्यात् । घटमात्रस्यापि ग्रहणं न भवति तदा कस्यचिदप्यभिमतस्यापि न ग्रहणं स्यादित्यग्रहो वा घटस्य वै । एवमत्रापि दार्ष्टान्तिके विशेषाग्रहणेऽर्थमात्रग्रहणं न ग्रहणं वा स्यादित्येकान्तः ॥ १२६५ ॥ १२६६ ॥ १२६७ ॥

अथ पूर्वकः पक्षः, अत्राह—**ग्राह्यान्तरे**त्यादि ।

**ग्राह्यान्तरव्यवच्छिन्नं भावेन ग्राहि चेन्मतम् ।**
**सविकल्पकविज्ञानं भवेद्वृक्षादिबोधवत् ॥ १२६८ ॥**

यदि परत्रासम्भविना स्वरूपेण विशिष्टार्थग्राहीन्द्रियज्ञानमभिप्रेतं तदा सविकल्पकं प्राप्नोति, केनचिद्रूपेण विशिष्टार्थग्राहित्वात्, वृक्षोयमित्यादिबोधवत् ॥१२६८॥

स्यान्मतम्—नार्थमात्रं नाम किंचिदस्ति यत्स्वरूपेण विशिष्य गृह्यते । किं तर्हि? यत्तद्विशिष्टं रूपं तव मम विशेषाभिमतं तदेवास्ति गृह्यते चेति, अत आह—**विशेषोऽस्पृष्टसामान्यो नच कश्चन विद्यत** इति ।

**विशेषोऽस्पृष्टसामान्यो न च कश्चन विद्यते ।**
**ग्रहणे चेत्तदस्पष्टं विभावत्वान्न गृह्यते ॥ १२६९ ॥**

अत्र मात्रं नाम सामान्यमुच्यते, यत्तत्सत्तेत्याख्यायते, तन्निरपेक्षो न कश्चिद्विशेषो विद्यते, यो गृह्येत तत्र । एतत्स्यात्—त्वन्मत्या यद्यपि तदस्ति सामान्यं, ग्रहणकाले तु तन्न स्पृश्यत इत्याह—**ग्रहणे चेत्तदस्पष्टं विभावत्वान्न गृह्यत** इति। ग्रहणकाले यदि तत्सामान्यं सत्ताख्यं इन्द्रियज्ञानेन न स्पृश्यते, विशेषमात्रमेव गृह्यते, तदा तद्विशेषमात्रं गृह्यमाणं भावरहितं सत्ताख्यस्वभावविकलं निःस्वभावं प्राप्तमिति नेन्द्रियज्ञानग्राह्यं स्यात्, विभावत्वात्—विगतभावत्वात् । वियत्पुष्पवदिति ॥ १२६९ ॥

**विशिष्टविषयो बोधः कल्पना नेति साहसम् ।**
**न विशेषणसम्बन्धादृते वैशिष्ट्यसम्भवः ॥ १२७० ॥**

तस्माद्विशिष्टविषयो बोधोऽथ च कल्पना नास्तीति साहसमेतद्भवतां प्रमाणबाधितमभ्युपगच्छतामित्युपसंहारः । अत्रैवोपपत्तिमाह—**न विशेषणे**त्यादि । नहि दण्डसम्बन्धमन्तरेण तद्वान्भवति, तद्वद्विशिष्टोऽपि विशेपसम्बन्धमन्तरेण न युक्त इति भावः । तस्माद्यद्विशेषणसम्बन्धग्रहणं तत्सविकल्पकमिति । प्रयोगः—विवादास्पदीभूतं विशिष्टविषयं ज्ञानं सविकल्पकं, विशिष्टविषयत्वात्, पटोऽयमित्यादिज्ञानवदिति ॥ १२७० ॥

**सजातीये**त्यादिना प्रतिविधत्ते ।

**सजातीयविजातीयव्यावृत्तार्थग्रहान्मतः ।**
**विशिष्टविषयो बोधो न विशेषणसङ्गतेः ॥ १२७१ ॥**

यदत्र यदि व्यतिरिक्तविशेषणसम्बन्धात् (इति) विशिष्टविषयत्वादिति हेत्वर्थः, तदा न सिद्धो हेतुः, तथाहि—न बौद्धस्य विशेषणं नाम किंचिदस्ति । येन तत्स-

म्बन्धग्रहणाद्विशिष्टविषयो बोधः स्यात्, किं तर्हि सजातीयविजातीयेभ्यो व्यावृत्तस्वार्थमात्रस्य ग्रहात्—ग्रहणान्मतो विशिष्टविषयो बोधः ॥ १२७१ ॥

कथं तर्हि विशिष्टत्वमस्य वैशिष्ट्यमस्येत्यादि व्यपदेशो व्यतिरेकीवेत्याह—**भेद** इत्यादि।

**भेदो वैशिष्ट्यमुक्तं हि न विशेषणसङ्गतिः।**
**भिन्नमित्यपि तद्वाचा नानुविद्धं प्रतीयते ॥ १२७२ ॥**

भेदः सजातीयविजातीयेभ्यो व्यावृत्तिः। सा च नान्या व्यावृत्ताद्भावात्, भाव एव हि भेदान्तरप्रतिक्षेपेण तन्मात्रजिज्ञासायां तथोच्यते। स्यादेतत्—यदि विजातीयसजातीयेभ्यो भिन्नस्य वस्तुनो ग्रहणं नियमेन तर्हि सविकल्पकं ग्रहणं प्राप्तं भिन्नमेतदित्येवमाकारप्रवृत्तत्वात्। अन्यथा कथं तद्विषयं स्याद्यद्यन्याकारप्रवृत्तं भवेत्, नह्यन्याकारप्रवृत्तं तद्विषयं युक्तमतिप्रसङ्गादित्याशङ्क्याह—**भिन्नमित्यपि तद्**इत्यादि ॥ १२७२ ॥

कथं तर्हि भिन्नमित्यभिधीयत इत्याह—**स्वभावापरे**त्यादि।

**स्वभावापरनिःशेषपदार्थव्यतिरेकिणि।**
**गृहीते सति तस्मिंस्तु विकल्पो जायते तथा ॥ १२७३ ॥**

स्वभावादपरे ये निःशेषाः पदार्थास्तेभ्यो व्यतिरेकिणि व्यावृत्ते गृहीते सत्यसाधारणनीलाद्याकारप्रतिभासनात्पश्चाद्भेदाध्यवसायी शब्दाकारानुस्मृतो भिन्नमित्यभिलपन्नुत्पद्यते विकल्पः। नचेदस्त्वभिलापस्वभावं तत्संसृष्टात्मतत्त्वं वा, येन भिन्नमित्यभिन्नमिति नाम्ना संयोज्यग्रहणे सति गृहीतं स्यात्। तस्मादसिद्ध एव हेतुः १२७३

अथ व्यावृत्तिवशाद्विशिष्ट इति कृत्वा विशिष्टविषयत्वादिति हेत्वर्थः, नार्थान्तरविशेषणसम्बन्धात्। तदाऽपि स्वतो नैकान्तिको हेतुरिति दर्शयन्नाह—**विशेषणे**त्यादि।

**विशेषणानवच्छिन्नं परैः सामान्यमिष्यते।**
**निर्विकल्पकविज्ञानग्राह्यं तत्राप्यतः समम् ॥ १२७४ ॥**

द्विरूपं हि सामान्यं विशेषणावच्छिन्नरूपमनवच्छिन्नरूपं च। तत्र यदनवच्छिन्नरूपं तन्निर्विकल्पकविज्ञानग्राह्यमिष्टम्। तत्रापि—सामान्ये। अत एतद्विकल्पकविज्ञानग्राह्यत्वं तुल्यम् ॥ १२७४ ॥

कथमित्याह—विशेषाद्धीत्यादि ।

**विशेषाद्धि विशिष्टं तत्सामान्यमवगम्यते ।**
**तद्ग्राहकमतः प्राप्तं विज्ञानं सविकल्पकम् ॥ १२७५ ॥**

यद्ध्यस्माद्विशेषाद्विशिष्टं—व्यावृत्तं, तत्सामान्यं प्रतीयते । अन्यथा सामान्यमेव न स्यात्ततो यदि न व्यावर्त्तेत । ततश्चास्यापि सामान्यस्य विशेषाद्व्यावृत्तस्य ग्राहकं विज्ञानं सविकल्पकं प्राप्नोति, विशिष्टविषयत्वात् । न च भवति त्वन्मतेन । तस्मात्स्वतोऽनैकान्त इति ॥ १२७५ ॥

अत्र किल तेनैव सुमतिना स्वयमाशङ्क्य सामान्येन हेतोरनैकान्तिकत्वं परिहृतं तदेवादर्शयति—निर्विशेषमित्यादि ।

**निर्विशेषं गृहीतश्चेद्भेदः सामान्यमुच्यते ।**
**ततो विशेषात्सामान्यविशिष्टत्वं न युज्यते ॥ १२७६ ॥**

नहि सामान्यं किंचिदस्ति विशेषेभ्यो व्यतिरिक्तस्वरूपं, यत्स्वरूपेण विशिष्टं गृह्यमाणं सविकल्पकविज्ञानगोचरः स्यात्, किन्तु निर्विशेषं गृहीता भेदा एव सामान्यमित्युच्यन्ते । प्रतिनियतस्वरूपनिरपेक्षाः प्रतीयमानाः सामान्यशब्दाभिधेया इति यावत् । ततश्च कुतस्तस्माद्विशेषात्सामान्यस्य विशिष्टत्वम्, येन तद्ग्राहकस्य सविकल्पना भवेत् ॥ १२७६ ॥

कथं तर्हि सामान्यविशेषयोरसङ्कीर्णा व्यवस्थेत्याह—वैषम्येत्यादि ।

**वैषम्यसमभावेन ज्ञायमाना इमे किल ।**
**प्रकल्पयन्ति सामान्यविशेषस्थितिमात्मनि ॥ १२७७ ॥**

एत एव हि भेदाः समविषमतया संप्रज्ञायमाना यथाक्रमं सामान्यविशेषाभिधानाभिधेयतामनुभूय सामान्यविशेषव्यवहारयोर्विषयभेदं प्रकल्पयन्ति ॥ १२७७ ॥

**वैषम्यसमभावोऽयमि**त्यादिना प्रतिविधत्ते ।

**वैषम्यसमभावोऽयं प्रविभक्तो यदीष्यते ।**
**सामान्यस्य विशिष्टत्वं तदवस्थं विशेषतः ॥ १२७८ ॥**
**अथाविभक्त एवायमसङ्कीर्णा स्थितिः कथम् ।**
**अन्योन्यापरिहारेण स्थितेर्गत्यन्तरं नच ॥ १२७९ ॥**

**प्रविभक्त** इति । अमिश्रः । अन्यदेव सामान्यमन्य एव विशेष इति यावत् ।

सामान्यस्य विशेषतो विशिष्टत्वमित्युपलक्षणम् । तथा विशेषस्यापि सामान्यतो विशिष्टत्वमेव । द्वयोरपि परस्परस्वभावविवेकेन प्रविभक्तत्वात् । **असङ्कीर्णा स्थितिरिति** । अमिश्रीभूता । यथोक्तं तेनैव सुमतिना—"सत्तादिसामान्यस्वभावानुविद्ध एव विशेषः साक्षात्क्रियते नान्यथा, ततो विशष्टविषयत्वमेव विशेष्यस्य युक्तं रूपम्, सामान्यं पुनरशेषविशेषनिरपेक्षं साक्षात्कर्तुं शक्यत इत्यविरुद्धमस्याविकल्पविषयत्व"मिति । इयमसङ्कीर्णा स्थितिर्न स्यात् । न प्रविभक्तो नाप्रविभक्त इष्यत इति चेदाह—**अन्योन्येत्यादि** । अन्योन्यापरिहारस्थितिलक्षणानामेकस्वभावनिषेधस्यापरविधिनान्तरीयकत्वान्न राश्यन्तरमस्ति ॥ १२७८ ॥ १२७९ ॥

अपि च निर्विशेषं गृहीता भेदा इति परस्परव्याहतमिति दर्शयन्नाह—**विशेषात्मातिरेकेणेत्यादि** ।

**विशेषात्मातिरेकेण नापरं भेदलक्षणम् ।**
**तद्रूपास्पर्शने तेषु ग्रहणं कथमुच्यते ॥ १२८० ॥**
**तद्रूपस्पर्शने चापि भेदान्तरविभेदिनः ।**
**गृहीता इति विज्ञानं प्राप्तमेषु विकल्पकम् ॥ १२८१ ॥**

भेदेभ्यो हि नान्यो विशेषः, तस्य च विशेषस्य सामान्यग्राहिणा ज्ञानेनासंस्पर्शे कथं भेदास्तेन गृहीता भवेयुः, अगृहीतस्वभावाव्यतिरेकात्तेप्यगृहीता एवेति भावः । अथ गृहीता इति मतम्, तदा तद्रूपसंस्पर्शने—भेदरूपसंस्पर्शने ग्रहणे, गृहीताव्यतिरेकाद्गृहीतस्वभाववद्विशेषोऽपि गृहीत एवेति, एषु—भेदेषु, यत्सामान्यविषयत्वेनाभिमतं ज्ञानं तद्विकल्पकं प्राप्तम् ॥ १२८० ॥ १२८१ ॥

किं च—माभून्नाम सामान्यस्य विशेषाव्यतिरेकात्ततो विशिष्टत्वं, तथापि शशविषाणादेर्निरुपाख्यात्तस्य विशिष्टत्वमस्त्येवेति विकल्पज्ञानग्राह्यं स्यात्, नच भवति, तस्मादनैकान्तिकत्वमेवेति दर्शयन्नाह—**निरुपाख्याच्चेत्यादि** ।

**निरुपाख्याच्च सामान्यं विशेषं संप्रतीयते ।**
**अतो विकल्पकज्ञानग्राह्यं तदपि ते भवेत् ॥ १२८२ ॥**
**नासतस्तद्विशिष्टं चेत्किमिदानीं तदात्मकम् ।**
**नो चेत्तथापि वैशिष्ट्यं तस्मादस्य न किं मतम् ॥ १२८३ ॥**

स्यादेतत्—सामान्यस्याभावतो न विशेषः संभवति, नापि सादृश्यम् । तथाहि—

यन्न किंचित्सोऽभावः कल्प्यते, तच्च तादृशं सामान्यतो नैव विशिष्टं नापि समं, भावत्वप्रसङ्गात् । तथाहि—यदि तच्छून्यं सामान्यतो विशिष्टं स्यात्तदपि वस्त्वेव स्यात् । नह्यवस्तुनो विशेषाख्यस्वभावः सम्भवति, न च विशेषाख्यं स्वभावमन्तरेण विशिष्टं शक्यं वक्तुम् । नापि समं वस्तुत्वप्रसङ्गात् । नह्यवस्तुनः केनचित्समानं रूपं भवति, नच समानरूपमन्तरेण समं युक्तमतिप्रसङ्गात् । तस्मात्सामान्यस्य शून्यमवधिं कृत्वा न समत्वं विशिष्टत्वं वा युक्तम् । तथाहि—यो यमवधिं कृत्वा समो विशिष्टो वा भवति तेन सोऽप्यवधिः समो विषमश्च दृश्यते । यदि हि सोऽवधिस्तेन समो विषमो वा न दृश्येत, इतरोप्यवधिमान्समो विषमो वा न दृश्येत ॥ १२८२ ॥ १२८३ ॥

किंच नाभावो नाम कश्चिद्भावव्यतिरिक्तोऽस्ति भाव एव तु भावान्तरं न भवतीत्यभाव आख्यायते, तत्कुतोऽस्य वैशिष्ट्यमित्येतत्सर्वं सुमतिनोक्तमागूर्याह—**अतदात्मकमेवेद**मित्यादि ।

**अतदात्मकमेवेदं वैशिष्ट्यं वस्तुनोऽपि हि ।**
**नासद्रूपं च सामान्यं तद्विशिष्टं न ते कथम् ॥ १२८४ ॥**
**तस्मात्स्वलक्षणे ज्ञानं यत्किंचित्संप्रवर्त्तते ।**
**वाक्पथातीतविषयं सर्वं तन्निर्विकल्पकम् ॥ १२८५ ॥**

वस्तुनोऽपि हि सकाशाद्यदवस्तुनो विशिष्टत्वं तत्खलु नान्यत् किंचित् । किं तर्हि तत्त्वनिषेधः, अतदात्मत्वमेव, लक्षणभेद इति यावत् । तच्चासतोऽपि शशविषाणादेः सकाशात्सामान्यस्य तुल्यमेव । तथाहि—असच्छशविषाणादि सर्वार्थक्रियाविरहलक्षणं, सामान्यं तु न तथेष्टमिति विस्पष्टमस्य ततो वैशिष्ट्यम् । ततश्चासतोऽपि सकाशाद्वैशिष्ट्यं स्यान्नच वस्तुत्वप्रसङ्गोऽसत इति यत्किंचिदेतत् । यदुक्तं—नाभावो नामान्य एवेत्यादि, तत्र तेन स्वभाषितस्यैवार्थो न विवेचितः । तथाहि—भाव एव तु भावान्तरं न भवतीत्युक्ते भावान्तरात्तस्य विशेष उक्तो भवति, ततो व्यावृत्तिसङ्कीर्तनात् । तदेतद्ध्यान्ध्यविजृम्भितमित्यलं प्रसङ्गेन । **तस्मा**दित्यादिना प्रमाणफलोपसंहारः ॥ १२८४ ॥ १२८५ ॥

**अस्ति ह्यालोचनाज्ञान**मित्यादिना कौमारिलमतोपदर्शनेन यस्य यद्रूपव्यवस्थितौ निमित्तं नास्तीत्यादौ प्रयोगे हेतोः पक्षैकदेशासिद्धत्वमाशङ्कते ।

**अस्ति ह्यालोचनाज्ञानमाद्यं चेन्निर्विकल्पकम् ।**
**बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥ १२८६ ॥**
**न विशेषो न सामान्यं तदानीमनुभूयते ।**
**तयोराधारभूता तु व्यक्तिरेवावसीयते ॥ १२८७ ॥**
**ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया ।**
**बुद्ध्याऽवसीयते सापि प्रत्यक्षत्वेन संमता ॥ १२८८ ॥**

तथाहि—सर्वं प्रत्यक्षं पक्षीकृतं, तत्र च सर्वत्र प्रत्यक्षाख्ये धर्मिणि सविकल्पकव्यवस्थितौ नास्ति च विशेषणविशिष्टार्थग्रहणं निमित्तमित्यस्य हेतोरसिद्धिः, आलोचनाज्ञानव्यतिरेकेणान्यत्र प्रत्यक्षे सामान्यादिविशेषणविशिष्टार्थग्रहणस्य विद्यमानत्वात् । अथालोचनाज्ञानमेव पक्षीकृत्य हेतुरभिधीयते तदा सिद्धसाध्यतेति मन्यते परः । **बालमूकादिविज्ञानसदृशमिति** । बालविज्ञानसदृशं मूकादिविज्ञानसदृशम् । आदिशब्देन संमूर्छितपरिग्रहः । अभिलापविशेषरहितत्वमात्रेण साम्यम् । शुद्धत्वं पुनर्वस्तुनः सामान्यद्वयविविक्तत्वात् । तदेव द्वितीयेन श्लोकेन स्पष्टयति—**न विशेष** इत्यादि । **विशेष** इति । अवान्तरसामान्यं गोत्वादि । **सामान्यमिति** । महासामान्यं वस्तुत्वादि । **तयोराधारभूतेति** । अनेन शुद्धं वस्तु दर्शितम् । **ततः परमित्यादिना** तामेव पक्षैकदेशासिद्धतां हेतोरभिव्यनक्ति—**ततः परमिति** । शुद्धवस्तुग्रहणोत्तरकालं यया बुद्ध्या वस्तु व्यवसीयते जात्यादिभिर्विशेषणैः सापि प्रत्यक्षत्वेन संमतेति योज्यम् । जात्यादिभिरित्यनेन विशेषणविशिष्टार्थग्रहणं दर्शयति । अनेन चानधिगतार्थाधिगन्तृत्वं हेतोश्चासिद्धतोक्ता भवति ॥ १२८६ ॥ १२८७ ॥ ॥ १२८८ ॥

**पुनः पुनर्विकल्पेऽपि यावानधिगमो भवेत् ।**
**तत्सम्बन्धानुसारेण सर्वं प्रत्यक्षमिष्यते ॥ १२८९ ॥**

**पुनः पुनरिति** । तृतीयादौ क्षणे । **यावानिति** । अनधिगतार्थाधिगन्तेति शेषः । **तत्सम्बन्धानुसारेणेति** । तस्याक्षस्य सम्बन्धानुसारेण ॥ १२८९ ॥

स्यादेतत्—यदि प्रथमतोऽक्षव्यापारकाले सकलजात्यादिधर्मसमन्वितं वस्तु न भासते, तत्तदुत्तरकालमपि न भासेताविशेषादित्याह—**न हि प्रविष्टमात्राणामित्यादि** ।

**न हि प्रविष्टमात्राणामुष्णाद्गर्भगृहादिषु ।**
**अर्था न प्रतिभान्तीति गम्यन्ते नेन्द्रियैः पुनः ॥ १२९० ॥**

**उष्णादिति** । प्रभास्वरात् । प्रविष्टमात्राणामिति योज्यम् । **गम्यन्ते नेन्द्रियै-रिति** । अपि तु गम्यन्त एवेति काका दर्शयति ॥ १२९० ॥

एवं दृष्टान्तं प्रसाध्य दार्ष्टान्तिके उपसंहरन्नाह—**यथेत्यादि** ।

**यथा त्वाभासमात्रेण पूर्वं ज्ञात्वा स्वरूपतः ।**
**पश्चात्तत्र विबुध्यन्ते तथा जात्यादिधर्मतः ॥ १२९१ ॥**

यथा गर्भगृहे आभासमात्रं गृहीत्वा पश्चाद्विशेषतो नीलमित्यादिना जानाति, एवं स्वरूपतः पूर्वं ज्ञात्वा पश्चाज्जात्यादिधर्मतः प्रत्यक्षवान्भविष्यतीत्यदोषः॥१२९१॥

एवं तर्हि यद्यालोचनाज्ञानादूर्ध्वं पुनः पुनर्यावानधिगमस्तस्य प्रामाण्यं तदाऽऽलोचनाज्ञानेन यदि कश्चिदालोच्य पश्चादक्षिणी निमील्य जात्यादिधर्मतो विकल्पयति, तदाऽस्यापूर्वाधिगमोस्तीति तस्यापि प्रत्यक्षता स्यादित्याह—**यदि त्वित्यादि** ।

**यदि त्वालोच्य संमील्य नेत्रे कश्चिद्विकल्पयेत् ।**
**न स्यात्प्रत्यक्षता तस्य सम्बन्धाननुसारतः ॥ १२९२ ॥**

**आलोच्येति** । आलोचनाज्ञाने ज्ञात्वा । **नेत्रे** इति । संमील्येति सम्बन्धः । **सम्बन्धाननुसारत** इति । अक्षसम्बन्धद्वारेणानुत्पत्तेः । यथोक्तं तेनैव कुमारिलेन—"एवं समानेऽपि विकल्पमात्रे यत्राक्षसम्बन्धफलानुसारः । प्रत्यक्षता तस्य, तथा च लोके विनाप्यदो लक्षणतः प्रसिद्ध"मिति ॥ १२९२ ॥

तदित्यादिना प्रतिविधत्ते ।

**तदयुक्तं यदि ज्ञानं तत्प्रवृत्तं स्वलक्षणे ।**
**अनाविष्टाभिलापं तज्जात्यादिग्रहणेऽपि हि ॥ १२९३ ॥**
**तथा(चा)वाच्यमेवेदं साधितं प्राक् स्वलक्षणम् ।**
**तस्मिन्वृत्तं च विज्ञानं नियतं निर्विकल्पकम् ॥ १२९४ ॥**

जात्यादिग्रहणेऽपीत्यपिशब्दोऽभ्युपगमे । एकदा तावज्जात्यादीनां निरस्तत्वान्न सन्त्येव त इति कुतस्तद्ग्रहणे प्रामाण्यम्, सन्तु नाम, तथापि तद्ग्रहणे आलोचनाज्ञानवदुत्तरकालभाविनां ज्ञानानां स्वलक्षणविषयत्वादविकल्पतैव, जात्यादीनां स्वलक्षणादव्यतिरेकस्याभ्युपगतत्वादिति भावः । प्रयोगः—यत्स्वलक्षणग्राहि तदविक-

रूपकं, यथाऽऽलोचनाज्ञानम्, स्वलक्षणग्राहि चोत्तरप्रत्यक्षत्वेनाभिमतं ज्ञानमिति स्वभावहेतुः। प्रसङ्गसाधनं चेदं, नचानैकान्तिकता हेतोः, यतोऽवाच्यमेवेदं स्वलक्षणमिति प्रागन्यापोहे प्रसाधितम्। नापि विरुद्धता सपक्षे भावात्॥ १२९३॥ ॥ १२९४॥

स्यादेतत्—जातिमात्रविषयत्वादसिद्धो हेतुरित्याह—**जातिमात्रे**त्यादि।

**जातिमात्रग्रहे तु स्यादेकान्तेन विभिन्नता।**
**विशेषणस्य नैतच्च परैरिष्टं यथोदितम्॥ १२९५॥**

**एकान्तेन विभिन्नता विशेषणस्ये**ति। विशेष्यादिति शेषः। **नैतच्च परैरिष्ट**मिति। एकान्तेन विशेषणविशेष्ययोर्विभिन्नत्वम्। कथं नेष्टमित्याह—**यथोदित**मिति। तेनैवेति शेषः॥ १२९५॥

किं तदित्याह—**यदी**त्यादि।

**यदि ह्येकान्ततो भिन्नं विशेष्यात्स्याद्विशेषणम्।**
**स्वानुरूपां तदा बुद्धिं विशेष्ये जनयेत्कथम्॥ १२९६॥**

पर्यायेण भेदस्याप्यभ्युपगतत्वादेकान्तत इत्याह। तथाहि—भिन्नाभिन्नस्वभावा जात्यादयस्तस्येष्टा नैकान्ततो भिन्ना नाप्यभिन्नाः। तथाचाह—"बुद्धिभेदान्न चैकत्वं रूपादीनां प्रसज्यते। एकानेकत्वमिष्टं वा सत्तारूपादिभेदत" इति। पुनश्चोक्तम्—"स्थितं नैव हि जात्यादेः परत्वं व्यक्तितो हि न" इति। परत्वमिति। अन्यत्वम्। **स्वानुरूपा**मिति। विशेषणस्वरूपोपरक्ताम्। यतो विशेषणोपरक्तं विशेष्यं ग्राहयद्विशेषणमुच्यते, अन्यथा विशेषण(त्व)स्यानुपपन्नत्वादिति भावः। यथोक्तम्—"स्वबुद्ध्या येन रज्येत विशेष्यं तद्विशेषणम्" इति॥ १२९६॥

अथापि स्यात्—स्वसामान्यलक्षणविषयत्वेनोभयविषयत्वात्केवलस्वलक्षणमात्रविषयत्वमसिद्धमेवोत्तरेषां ज्ञानानामित्याह—**स्वसामान्यात्मनो**रित्यादि।

**स्वसामान्यात्मनोर्युक्तं ज्ञानं चैकं न वेदकम्।**
**सविकल्पान्यथाभावे प्राक्तनापरविन्न हि॥ १२९७॥**

स्वलक्षणसामान्यलक्षणयोर्नैकं ज्ञानं वेदकं युक्तम्। तथाहि—तदेकं ज्ञानं सविकल्पकं वा स्यादविकल्पकं वा, तत्र सविकल्पकभावे—सविकल्पकत्वे सति, प्राक्तनस्य—पूर्वोक्तस्य स्वलक्षणस्य, वित्—वेदनं, न प्राप्नोति। **अन्यथाभाव** इति। निर्विकल्पकपक्षे। **अपरस्ये**ति। सामान्यात्मनः, वित्—वित्तिर्न स्यात्॥ १२९७॥

एवं तावत्स्वलक्षणविषयत्व इतरेषां ज्ञानानामविकल्पता प्राप्नोतीति साधितम्। इदानीं भवतु नाम सविकल्पत्वं तथापि गृहीतग्राहित्वान्न तेषां प्रामाण्यं युक्तमिति प्रतिपादयन्नाह—एकान्तेनेत्यादि ।

**एकान्तेनान्यताभावाज्जात्याद्याद्येन चेद्गतम् ।**
**विज्ञातार्थाधिगन्तृत्वात्स्मार्त्तज्ञानसमं परम् ॥ १२९८ ॥**

तथाहि—जात्यादेर्व्यक्तितो नैवान्यत्वमेकान्तेनेष्टम् । यथोक्तम्—"स्थितं नैव हि जात्यादेः परत्वं व्यक्तितो हि न" इति । ततश्चाद्येनैवालोचनाज्ञानेन जात्यादि गृहीतमिति स्मार्त्तज्ञानवदधिगतार्थाधिगन्तृत्वात्परं जात्यादिधर्मनिश्चयज्ञानमप्रमाणमेव युक्तमिति । प्रयोगः—यद्गृहीतग्राहि ज्ञानं न तत्प्रमाणं, यथा स्मृतिः, गृहीतग्राही च प्रत्यक्षपृष्ठभावी विकल्प इति व्यापकविरुद्धोपलब्धिः ॥ १२९८ ॥

तदत्र यदि समारोपविषयव्यवच्छेदेन गृहीतमिति हेत्वर्थस्तदा हेतोरसिद्धता, अथ यथाकथंचिद्गृहीतत्वादिति हेत्वर्थस्तदाऽनुमानेनानेकान्त इति दर्शयन्नाह—संमुग्धेत्यादि ।

**संमुग्धानेकसामान्यरूपेणाधिगमे सति ।**
**नैव चेन्निश्चितं वस्तु निश्चयस्तूत्तरोत्तरः ॥ १२९९ ॥**
**समारोपव्यवच्छेदविषयत्वाद्यथाऽनुमा ।**
**समारोपव्यवच्छेदविषयो निश्चयस्तथा ॥ १३०० ॥**

तथाहि—प्रथमं संमुग्धरूपेणालोचनाज्ञानेनाधिगतं, नहि निश्चितरूपेण, उत्तरोत्तरस्तु निश्चयः प्रमाणं, समारोपव्यवच्छेदविषयत्वादनुमानवत् । यथा प्रत्यक्षेण गृहीते शब्दादौ धर्मिणि कृतकत्वादिनाऽनित्यत्वनिश्चयो भवन्प्रमाणं भवति, तथा समारोपव्यवच्छेदविषयो निश्चयो भविष्यति । तथाहि भवतामत्राविवादः—**समारोपव्यवच्छेदविषयो निश्चय** इति । यथोक्तम्—"निश्चयारोपमनसोर्बाध्यबाधकभावतः । समारोपविवेकेऽस्य प्रवृत्तिरिति गम्यते" ॥ इति ॥ १२९९ ॥ १३०० ॥

नेत्यादिना प्रतिविधत्ते ।

**न समारोपविच्छेदविषयत्वेन मानता ।**
**अनुमायाः प्रमाणत्वप्रसङ्गेन स्मृतेरपि ॥ १३०१ ॥**
**प्रत्यक्षानन्तरोद्भूतसमारोपणवारणात् ।**
**इष्टं तु लैङ्गिकं ज्ञानं प्रमाणं न तदस्ति ते ॥ १३०२ ॥**

**गौःशुक्लश्चलतीत्यादौ प्रत्यक्षानन्तरं न हि ।**
**समारोपोऽत्र विज्ञाने वेद्यते यन्निषिध्यते ॥ १३०३ ॥**

प्रवृत्तसमारोपव्यवच्छेदेनानुमानस्य प्रामाण्यं, न तु पुनः समारोपविषयव्यवच्छेदमात्रेण, स्मृतेरपि प्रामाण्यप्रसङ्गात्, नच तत्प्रत्यक्षसमनन्तरभाविनो गौः शुक्लश्चलतीत्यादेर्विकल्पस्य प्रवृत्तसमारोपनिवारणमस्ति, अन्तरा समारोपस्यानुत्पन्नत्वात्। कथमनुत्पन्नत्वमिति चेदाह—**गौरित्यादि** । नहि विकल्पोऽसंविदित उत्पद्यत इत्युपलब्धिलक्षणप्राप्तस्यानुपलब्ध्या सिद्धमनुत्पन्नत्वं समारोपस्य ॥ १३०१ ॥ १३०२॥ ॥ १३०३ ॥

एवं तावदेतत्सर्वं जात्यादिकमभ्युगम्योक्तम्, इदानीं जात्यादयः परमार्थतो न सन्त्येव कुतस्तद्विषयतया प्रत्यक्षस्य सविकल्पता भविष्यतीति दर्शयन्नाह—तत्त्वेत्यादि।

**तत्त्वान्यत्वोभयात्मानः सन्ति जात्यादयो न च ।**
**यद्विकल्पकविज्ञानं प्रत्यक्षत्वं प्रयास्यति ॥ १३०४ ॥**
**अन्वयासत्वतो भेदाद्भेदेनाप्रतिभासनात् ।**
**अन्योन्यपरिहारेण स्थितेश्चान्यत्वतत्त्वयोः ॥ १३०५ ॥**

व्यक्तिभ्यो हि जात्यादयः कदाचिदव्यतिरिक्ता व्यतिरिक्ता वा व्यतिरिक्ताव्यतिरिक्तत्वेनोभयात्मानो वा । न तावदाद्यः पक्षः—अन्वयासत्वतः—अन्वयाभावात्। अनेकवस्त्वनुगतं हि रूपं सामान्यमुच्यते, न चैवं व्यक्तयः परस्परमन्वाविशन्ति, येन ता एव सामान्यं भवेयुः। अन्वावेशे वा विश्वमेकमेव रूपं जातमिति सामान्यस्यैवाभावप्रसङ्गः, अनेकाधारत्वात्तस्य । नापि द्वितीयः पक्षः—भेदाद्भेदेनाप्रतिभासनात्—**भेदा**दिति । व्यक्तेः। नचाप्रतिभासमानं प्रत्यक्षीभवति । यथोक्तम्—"व्यक्तयो नानुयन्त्यन्यदनुयायि न भासते । ज्ञानादव्यतिरिक्तं च कथमर्थान्तरं व्रजेत्" ॥ इति । नापि तृतीयः पक्षः—अन्योन्यपरिहारेण स्थितेरन्यत्वतत्त्वयोः पक्षयोः। यौहि परस्परपरिहारेण स्थितलक्षणौ तयोर्य एकः प्रतिषेधः सोऽपरविधिनान्तरीयकः। परस्परपरिहारेण वाऽन्यत्वतत्त्वे व्यवस्थिते, अन्यतरस्वभावव्यवच्छेदेनान्यतरस्य परिच्छेदात् । तस्मान्नास्ति तृतीयराशिसम्बन्धः ॥ १३०४ ॥ ॥ १३०५ ॥

ननु च यद्यविकल्पं प्रत्यक्षं कथं तेन व्यवहारः, तथाहि—इदं सुखसाधनमिदं

दुःखस्येति यदि निश्चिनोति तदा तयोः प्राप्तिपरिहाराय प्रवर्त्तते। किंच—अनुमानानुमेयव्यवहाराभावश्च प्राप्नोति। तथाहि—अनुमानकालेऽवश्यं धर्मी धर्मो वा प्रमाणान्तरेण निश्चितो गृहीतव्यः। स च न प्रत्यक्षेणानिश्चयात्मकेन निश्चितो गृहीतुं शक्यते। नाप्यनुमानेन, अनवस्थादोषात्। नचान्यत्प्रमाणान्तरमस्तीति सर्वव्यवहारोच्छेदः प्राप्नोति। तस्मादनुमानादिव्यवहारप्रवृत्तितो लिङ्गादनुमानबाधितेयमविकल्पकप्रतिज्ञेति यश्चोदयेत्तं प्रत्याह—अविकल्पमपीत्यादि।

**अविकल्पमपि ज्ञानं विकल्पोत्पत्तिशक्तिमत्।**
**निःशेषव्यवहाराङ्गं तद्द्वारेण भवत्यतः॥ १३०६॥**

**तद्द्वारेणेति**। विकल्पद्वारेणाविकल्पकमपि निश्चयहेतुत्वेन सकलव्यवहाराङ्गं भवति। तथाहि—प्रत्यक्षं कल्पनापोढमपि सजातीयविजातीयव्यावृत्तमनलादिकमर्थं तदाकारनिर्भासोत्पत्तितः परिच्छिन्ददुत्पद्यते। तच्च नियतरूपव्यवस्थितवस्तुग्राहित्वाद्विजातीयव्यावृत्तवस्त्वाकारानुगतत्वाच्च तत्रैव वस्तुनि विधिप्रतिषेधावाविर्भावयति—अनलोऽयं नासौ कुसुमस्तबकादिः, इति। तयोश्च विकल्पयोः पारम्पर्येण वस्तुनि प्रतिबन्धादसंवादित्वेऽपि न प्रामाण्यमिष्टम्। दृश्यविकल्पयोरेकत्वाध्यवसायेन प्रवृत्तेरनधिगतवस्तुरूपाधिगमाभावात्। अतएव विकल्पद्वयहेतुत्वात्तृतीयप्रकाराभावसूचनायापि निमित्ततां प्रतिपद्यते। तथाहि—यद्यत्र क्वचित्प्रवृत्तं त(त्त)त्प्रतिभासित्वात्तत्परिच्छिनत्ति, तदन्यस्य तत्रानुपलम्भात्ततस्तद्व्यवच्छिनत्ति। सर्वभावानां च दृश्यतदन्यत्वेन द्वैराश्ये व्यवस्थापनात्प्रकारान्तराभावं च सूचयति। यद्येवं—प्रत्यक्षेणैव शब्दादौ धर्मिणि गृहीतत्वादनित्यत्वादेः तत्रानुमानविकल्पः प्रवर्त्तमानः प्रमाणं न प्राप्नोति। नैष दोषः। प्रत्यक्षमुत्पन्नमपि यत्रांशेऽवसायं जनयति स एवांशो व्यवहारयोग्यो गृहीत इत्यभिधीयते, यत्र तु भ्रान्तिनिमित्तवशात्समारोपप्रवृत्तेर्न व्यवसायं जनयितुमीशं स व्यवहारायोग्यत्वाद्गृहीतोऽप्यगृहीतप्रख्य इति तत्रानुमानस्य प्रवृत्तसमारोपव्यवच्छेदाय प्रवर्त्तमानस्य प्रामाण्यं भवति, न पुनः प्रत्यक्षानन्तरभाविविकल्पस्य, तस्य प्रवृत्तसमारोपव्यवच्छेदाभावात्। किं पुनः कारणं—सर्वतो भिन्ने वस्तुरूपे अनुभवोत्पत्तावपि तथैव न स्मार्त्तो निश्चयो भवति। उच्यते। कारणान्तरापेक्षत्वात्, न ह्यनुभूत इत्येव निश्चयो भवति। तस्याभ्यासार्थित्वपाटवादिकारणान्तरापेक्षत्वात्। यथा जनकाध्यापकाविशेषेऽपि पितरमायान्तं दृष्ट्वा पिता मे आगच्छति नोपाध्याय इति निश्चिनोति॥ १३०६॥

अत्र भाविविक्तादयो विकल्पोत्पादद्वारेणापि व्यवहाराङ्गत्वं विघटयन्तो यत्प्रमाणयन्ति तद्दर्शयति—नाविकल्पमित्यादि ।

**नाविकल्पं विकल्पे चेच्छक्तं(च शक्तं?) विषयभेदतः ।**
**अकल्पत्वाच्च रूपादिज्ञानवच्चक्षुरादिवत् ॥ १३०७ ॥**

नेन्द्रियविज्ञानं सविकल्पकमनोविज्ञानकारणं भिन्नविषयत्वाद्रूपस्पर्शादिज्ञानवत्, निर्विकल्पकत्वाच्च, चक्षुरादिवदिति । विषयभेदत इत्यत्र हेतौ दृष्टान्तो रूपादिज्ञानवदिति, अकल्पत्वादित्यत्र तु चक्षुरादिवदिति ॥ १३०७ ॥

तदत्रेत्यादिना दूषणमाह—

**तदत्र न विरोधोऽस्ति विकल्पेन सहानयोः ।**
**नचापि विषयो भिन्नस्तदर्थाध्यवसायतः ॥ १३०८ ॥**

उभयोरपि हेत्वोरनैकान्तिकता, साध्यविपर्ययेण सह हेत्वोर्विरोधानुपदर्शनात् । अनयोरिति । हेत्वोः । नचापि विषयो भिन्न इत्यनेन सत्यपि सविषयत्वे विकल्पस्य विषयभेदत इत्यस्य हेतोरसिद्धतामाह ॥ १३०८ ॥

परमार्थतस्तु निर्विषयो विकल्पस्तदापि सुतरामसिद्धतेति दर्शयन्नाह—वस्तुतस्त्वित्यादि ।

**वस्तुतस्तु निरालम्बो विकल्पः संप्रवर्त्तते ।**
**तस्यास्ति विषयो नैव यो विभिद्येत कश्चन ॥ १३०९ ॥**

रूपशब्दादीत्यादिना रूपादिज्ञानवदित्यस्य दृष्टान्तस्य साध्यविकलतामाह ।

**रूपशब्दादिबुद्धीनामस्त्येवान्योन्यहेतुता ।**
**ततोऽप्रसिद्धसाध्योऽयं दृष्टान्तः समुदीरितः ॥ १३१० ॥**

रूपशब्दादिज्ञानानां परस्परसमनन्तरप्रत्ययभावेन कारणत्वस्य विद्यमानत्वात् ॥ १३१० ॥

पुनरपि विषयभेदत इत्यस्य हेतोर्विपक्षे सद्भावोपदर्शनेनानैकान्तिकतामाह—अग्निधूमादीत्यादि ।

**अग्निधूमादिबुद्धीनां कार्यकारणभावतः ।**
**व्यभिचारोऽपि विस्पष्टमेतस्मिन्नुपलभ्यते ॥ १३११ ॥**

एतस्मिन्निति । विषयभेदत इत्यत्र हेतौ । यथाग्न्यादिलिङ्गिबुद्धेर्धूमादिलिङ्गबुद्धिर्विषयभेदेऽपि कारणं तथात्रापि भविष्यतीति हेतोरनैकान्तिकत्वम् ॥ १३११ ॥

एवं कल्पनापोढत्वं प्रत्यक्षस्य प्रसाध्याभ्रान्तग्रहणे प्रयोजनमाह—केशोण्डुके-त्यादि ।

**केशोण्डूकादिविज्ञाननिवृत्त्यर्थमिदं कृतम् ।**
**अभ्रान्तग्रहणं तद्धि भ्रान्तत्वान्नेष्यते प्रमा ॥ १३१२ ॥**

अभ्रान्तमत्राविसंवादित्वेन द्रष्टव्यम्, नतु यथाऽवस्थितालम्बनाकारतया । अ-न्यथा हि योगाचारमतेनालम्बनासिद्धेरुभयनयसमाश्रयेणेष्टस्य प्रत्यक्षलक्षणस्याव्या-पिता स्यात् । अविसंवादित्वं चाभिमतार्थक्रियासमर्थार्थप्रापणशक्तिकत्वम्, नतु प्राप-णमेव प्रतिबन्धादिसम्भवात् । यद्येवमभ्रान्तग्रहणमेवास्तु, किं कल्पनापोढग्रहणेनेति चेत् । न । अनुमानविकल्पस्यापि प्रत्यक्षत्वप्रसङ्गात् ॥ १३१२ ॥

**मानसं तदपीत्येक** इति ।

**मानसं तदपीत्येके नैतदिन्द्रियभावतः ।**
**भावात्तद्विकृतावस्य विकृतेश्चोपलम्भतः ॥ १३१३ ॥**
**सर्पादिभ्रान्तिवच्चेदमनष्टेऽप्यक्षविप्लवे ।**
**निवर्त्तेत मनोभ्रान्तेः स्पष्टं च प्रतिभासनात् ॥ १३१४ ॥**

न तदर्थमभ्रान्तग्रहणं युक्तं कर्तुमिति तेषामभिप्रायः । ननु च भवतु नाम मान-सम्, तथाप्यभ्रान्तग्रहणं कर्त्तव्यमेव, नह्यनेनेन्द्रियज्ञानस्यैव प्रत्यक्षलक्षणं कर्तुमार-ब्धम्, किं तर्हि?, मानसस्यापि योगिज्ञानादेः, तत्र च स्वप्रान्तिकस्यापि निर्विक-ल्पकत्वमस्ति स्पष्टप्रतिभासित्वात्, नत्वभ्रान्तत्वमिति तन्निवृत्त्यर्थमभ्रान्तग्रहणं युक्त-मेव । सत्यमेतत् । किंत्विन्द्रियभ्रान्तिरपि सम्भवत्यतोऽयमयुक्त एषां पक्ष इतीन्द्रि-यजत्वप्रतिपादनायाह—**नैत**दित्यादि । इन्द्रियभावे सति भावादिन्द्रियविकारे चोपघातलक्षणे विकारस्योपहतिलक्षणस्योपलम्भात्तदन्येन्द्रियबुद्धिवदिन्द्रियजेयं के-शोण्डूकादिबुद्धिः । किंच—यदि मनोभ्रान्तिः स्यात्ततो मनोभ्रान्तेरेव कारणान्निव-र्त्तेतानिवृत्तेऽप्यक्षविप्लवे । **सर्पादिभ्रान्तिव**दिति दृष्टान्तः । स्पष्टप्रतिभासा च न प्राप्नोतीत्ययमपरः प्रसङ्गः । नहि विकल्पानुविद्धस्य स्पष्टार्थप्रतिभासिता, सामान्यो-ल्लेखेनैव तस्य प्रवृत्तेः ॥ १३१३ ॥ १३१४ ॥

**तद्भावे**त्यादिना परकीयं दूषणमाशङ्कते ।

**तद्भावभाविता साक्षादसिद्धा व्यभिचारिणी ।**
**पारम्पर्येण सा तस्यां स्मृतिबुद्धौ समन्वयात् ॥ १३१५ ॥**

तद्विकारविकारित्वं पारम्पर्योद्भवेष्वपि ।
कार्येषु दृश्यते लोके व्यक्तं वेगसरादिषु ॥ १३१६ ॥
मानस्यो भ्रान्तयः सर्वा निवर्त्तन्ते विचारतः ।
इत्यस्मिन्व्यभिचारित्वं भावसामान्यबुद्धिभिः ॥ १३१७ ॥
वस्तुस्वलक्षणे नैताः प्रवर्त्तन्ते स्वभावतः ।
एवं तद्विनिवृत्तिश्चेत्तुल्यं चन्द्रद्वयादिषु ॥ १३१८ ॥
न सत्ताविनिवृत्तिश्चेत्समं सामान्यबुद्धिषु ।
नचेश्वरादिभ्रान्तीनां तन्मताभिनिवेशिनाम् ॥ १३१९ ॥
युक्तिकोटिश्रवेऽप्यस्ति निवृत्तिः प्रत्युत स्वयम् ।
नैता युक्तय इत्येवं ते वदन्ति जडाः पुनः ॥ १३२० ॥

अत्र यदि साक्षात्तद्भावभावित्वं हेतुस्तदाऽन्यतरासिद्धता हेतोः, नहि परस्य साक्षादिन्द्रियादुत्पत्तिर्भ्रान्तेः सिद्धा, तस्या एव साध्यत्वात् । अथ सामान्येन तद्भावभावित्वं हेतुस्तदाऽनैकान्तिकता, स्मृतिबुद्धौ विपक्षभूतायामपि तद्भावभावित्वस्य समंधया(पारम्पर्या ?)द्विद्यमानत्वात् । यच्च तद्विकारविकारित्वं तदपि साक्षादसिद्धम्, पारम्पर्येणाप्युपादीयमानमनैकान्तिकमेव । यतोऽश्वायां गर्दभेन जातस्य वेगसरस्य कललाद्यवस्थाव्यवधानेऽपि गर्दभरूपानुकारेण तद्विकारित्वस्य पश्चाद्दर्शनादतो नास्मात्साक्षादुत्पत्तिः सिध्यति । मानसी च भ्रान्तिर्विचारान्निवर्तत इत्यत्राप्यनैकान्तिकत्वं भावसामान्यबुद्धिभिः । नहि भवतां युक्त्या सामान्याभावमवगच्छतामपि भावेषु घटादिषु भाव इति वा सामान्यमिति वा सामान्याकारो विकल्पो निवर्त्तते । अथ मन्यसे—निवर्त्तन्त एव युक्त्या विचारयतः सामान्यबुद्धयः स्वलक्षणे नैताः प्रवर्त्तन्त इत्यनेनाकारेणेति । तदेतदप्यनुत्तरम् । चन्द्रद्वयादिबुद्धयोऽपि युक्त्या विचारयतः स्वलक्षणे नैताः प्रवर्त्तन्त इत्यनेनाकारेण निवर्त्तन्त एव । नच तावता मानस्यो भवन्ति । सत्ता तासां न निवर्त्तत इति चेत्तत्तुल्यं सामान्यबुद्धिभिः । नहि तासामपि स्वभावो निवर्त्तते ॥ १३१५ ॥ १३१६ ॥ १३१७ ॥ ॥ १३१८ ॥ १३१९ ॥ १३२० ॥

तद्भावभावितेत्यादिना प्रतिविधत्ते ।

तद्भावभाविता साक्षान्न सिद्धाऽभ्रान्तचेतसा ।
व्यवधानं न सिद्धं हि न हि तद्दृश्यतेऽन्तरा ॥ १३२१ ॥

**अन्यार्थासक्तचित्तोऽपि द्विचन्द्रादि समीक्षते ।**
**अविच्छिन्नमतो नास्ति पारम्पर्यसमुद्भवः ॥ १३२२ ॥**
**भावसामान्यबुद्धीनां प्रतिसंहारसम्भवे ।**
**निवृत्तिः संभवत्येव स्वेच्छयेशमतेरपि ॥ १३२३ ॥**

नासिद्धा, अपि तु सिद्धैव, कस्मात्?, अभ्रान्तेनैकचन्द्रचेतसा व्यवधानासिद्धेः। तस्योपलभ्यस्यान्तरालेऽनुपलभ्यमानत्वात् । एतदेवान्यार्थेत्यादिना स्पष्टीकुरुते। अविच्छिन्नं द्विचन्द्रादीति सम्बन्धनीयम् । अत एव तद्विकारविकारित्वस्याप्यव्यभिचारः । नहि तदपि व्यवहितं, येन वेगसरादिभिर्व्यभिचारः स्यात् । भावसामान्यबुद्धीनामपि यदेच्छया संहारं कुरुते तदा निवृत्तिरस्त्येव । ननु केशोण्डूकादिबुद्धीनामिच्छया संहारः संभवतीति नानैकान्तिकता । इन्द्रियज्ञानस्यापि चक्षुषीच्छया निमीलिते निवृत्तिरिच्छावशात्सम्भवतीति चेत् । नहि समनन्तरमिच्छानिवृत्तौ निवर्त्तते चक्षुर्विज्ञानम् । किं तर्हि ? । चक्षुर्निमीलनं तावदिच्छावशाद्भवति, ततो निवृत्ते चक्षुषि तज्ज्ञानं निवर्त्तते, मानसी तु भ्रान्तिः साक्षादिच्छावशान्निवर्त्तत इति न समानम् । इत्थं चैतदवसेयं—यतः प्रणिहिते चक्षुषि द्रष्टुमनिष्यमाणोऽप्यर्थो दृश्यत एवातो नेच्छायाश्चक्षुरादिज्ञाने साक्षात्सामर्थ्यम् ॥ १३२१ ॥ १३२२ ॥ १३२३ ॥

**पीतशङ्खादिबुद्धीनां विभ्रमेऽपि प्रमाणताम् ।**
**अर्थक्रियाऽविसंवादादपरे संप्रचक्षते ॥ १३२४ ॥**

केचित्तु स्वयूथ्या एवाभ्रान्तग्रहणं नेच्छन्ति । भ्रान्तस्यापि पीतशङ्खादिज्ञानस्य प्रत्यक्षत्वात् । तथाहि न तदनुमानमलिङ्गजत्वात् । प्रमाणं चाविसंवादित्वात् । अत एवाचार्यदिङ्नागेन लक्षणे न कृतमभ्रान्तग्रहणम् । भ्रान्ति(ः) संवृत्ति(ः)साज्ञानमनुमानेत्यादिना प्रत्यक्षाभासनिर्देशादविसंवादिकल्पनापोढमित्येवंविधमिष्टमाचार्यस्य लक्षणम् । सतैमिरमिति तु तिमिरशब्दोऽयमज्ञानपर्यायः । तिमिरघ्नं च मन्दानामिति यथा । तिमिरे भवं तैमिरं विसंवादकमित्यर्थः ॥ १३२४ ॥

तन्नेत्यादिना प्रतिविधत्ते ।

**तन्नाध्यवसिताकारप्रतिरूपा न विद्यते ।**
**तत्राप्यर्थक्रियावाप्तिरन्यथाऽतिप्रसज्यते ॥ १३२५ ॥**
**केशादिप्रतिभासे च ज्ञाने संवादिभावतः ।**
**आलोकादेरतस्तस्य दुर्निवारा प्रमाणता ॥ १३२६ ॥**

प्रामाण्यं हि भवद्वाभ्यामाकाराभ्यां भवति, यथाप्रतिभासमविसंवादाद्यथाध्यवसायं वा । तत्रेह न यथाप्रतिभासमविसंवादः, पीतस्य प्रतिभासनात्तस्य यथाभूतस्याप्राप्तेः । नापि यथाध्यवसायमविसंवादः, पीतस्यैव विशिष्टार्थक्रियाकारित्वेनाध्यवसायात्, न च तद्रूपार्थक्रियाप्राप्तिरस्ति । न चानध्यवसितार्थाविसंवादेनापि प्रामाण्यमतिप्रसङ्गात् । केशादिज्ञानेऽपि ह्यनध्यवसिताऽऽलोकादिप्राप्तेः ॥ १३२५ ॥ ॥ १३२६ ॥

अथ मन्यसे—यद्यपि वर्णोऽध्यवसितो न प्राप्यते, संस्थानं तु प्राप्यत एवेत्यत आह—**न वर्णे**त्यादि ।

**न वर्णव्यतिरिक्तं च संस्थानमुपपद्यते ।**
**भासमानस्य वर्णस्य न च संवाद इष्यते ॥ १३२७ ॥**

सुबोधम् ॥ १३२७ ॥

**यद्याकार**मित्यादिनोपचयमाह—

**यद्याकारमनादृत्य प्रामाण्यं च प्रकल्प्यते ।**
**अर्थक्रियाऽविसंवादात्तद्रूपो ह्यर्थनिश्चयः ॥ १३२८ ॥**
**इत्यादिगदितं सर्वं कथं न व्याहतं भवेत् ।**
**वासनापाकहेतूत्थस्तस्मात्संवादसम्भवः ॥ १३२९ ॥**

नैव ह्यर्थक्रियाऽविसंवादित्वमात्रेणाकारमनपेक्ष्य प्रामाण्यं कल्पनीयम्, विषयाकारस्याप्रामाण्यप्रसङ्गात् । **तद्रूप** इति । ज्ञानस्याभासरूपः । आदिशब्देन यथा यथा ह्यर्थस्याकारः शुभ्रादित्वेन सन्निविशते तद्रूपः स विषयः प्रमीयत इत्यादिकमाचार्यीयं वचनं विरुध्यत इति दर्शयति । अर्थक्रियासंवादस्तु पूर्वार्थानुभववासनापरिपाकादेव प्रमाणान्तराद्भवतीत्यवसेयम् । पीतशङ्खज्ञानस्य वासनापरिपाकहेतुः शुक्ल एव शङ्खस्तदाधिपत्येन तत्परिपाकात् । वासनापरिपाकहेतुतः समुत्थानं यस्याविसंवादस्य स तथोक्तः ॥ १३२८ ॥ १३२९ ॥

सुखादीनां कथं संवेदनप्रत्यक्षतेत्याह—**मानसे**त्यादि ।

**मानसेन्द्रियविज्ञाननिर्विकल्पत्वसाधने ।**
**यो न्यायः स सुखादीनामविकल्पत्वसाधकः ॥ १३३० ॥**

**यो न्याय** इति । अशक्यसमयत्वादिः । मानसस्य यद्यपि नोक्तो न्यायस्तथापि

य इन्द्रियज्ञाने न्यायोऽशक्यसमयत्वं स तस्यापि तुल्य एव । यद्वा योगिज्ञानमिह मानसं, तच्च वक्ष्यमाणम् । सिद्धान्तप्रसिद्धत्वान्मानसस्यात्र न लक्षणं कृतं । प्रमाणेनाबाधितत्वमाचार्येणैव प्रतिपादितमिति न प्रतिपाद्यत इति भावः ॥ १३३० ॥

**अवेदका** इत्यादिना वैशेषिकमतमाशङ्कते ।

**अवेदकाः परस्यापि स्वविद्भाजः कथं नु ते ।**
**एकार्थाश्रितविज्ञानवेद्यास्त्वेते भवन्ति चेत् ॥ १३३१ ॥**

न केवलं स्वसंवेदना न भवन्ति, बाह्यस्याप्यर्थस्यावेदकाः । न ज्ञानस्वभावा इति यावत् । एकस्मिन्नात्मनि समवेतेन तु ज्ञानेन वेद्यन्त इति तेषां सिद्धान्तः ॥१३३१॥

**नैरन्तर्ये**त्यादिना प्रतिविधत्ते ।

**नैरन्तर्यप्रवृत्ते हि बाह्यवस्तूपलम्भने ।**
**सुखादि वेद्यते कस्मात्तस्मिन्काले निरन्तरम् ॥ १३३२ ॥**
**मानसेनैव यद्वेद्यमिष्यते चेतसा न च ।**
**तत्काले तस्य सद्भावः क्रमजन्मोपवर्णनात् ॥ १३३३ ॥**
**जन्मैव यौगपद्येन नेष्यते न पुनः स्थितिः ।**
**इति चेन्न स्थितिस्तस्य क्षणभङ्गप्रसाधनात् ॥ १३३४ ॥**
**आशुवृत्तेः सकृद्भ्रान्तिरिति चेत्साऽप्यपाकृता ।**
**विस्पष्टप्रतिभासो हि न स्यात्स्मरणगोचरे ॥ १३३५ ॥**
**शाताशातादिरूपा च सा भ्रान्तिर्यदि कल्प्यते ।**
**तदा प्राप्ता सुखादीनां सत्ता तन्मात्रलक्षणा ॥ १३३६ ॥**
**यदा च योगिनोऽन्येषामध्यक्षेण सुखादिकम् ।**
**विदन्ति तुल्यानुभवात्तद्वत्तेऽपि स्युरातुराः ॥ १३३७ ॥**
**स्वस्मिन्नपि हि दुःखस्य सत्तैवानुभवो न ते ।**
**किं तु तद्विषयं ज्ञानं तच्चास्ति परसन्ततौ ॥ १३३८ ॥**
**परदुःखानुमाने च तुल्यमेतत्तथा हि तत् ।**
**(अनुमानं स)विषयं वर्ण्यते न त्वगोचरम् ॥ १३३९ ॥**

अनेन प्रतिज्ञायाः प्रत्यक्षविरुद्धतामाह । यदा बाह्यवस्त्ववलम्बनज्ञानसमकालं सुखादयोऽनुभूयन्ते, तदा कतमेनैकार्थाश्रयिणा ज्ञानेन वेद्येरन्, न तावत्तेनैव बाह्या-

लम्बने न चक्षुरादिज्ञानेन, तस्य बाह्यालम्बनत्वात्, अन्तःसंवेद्यमानत्वाच्च सुखादीनां मानसेनैव चेतसा वेद्यत्वेनेष्टत्वात्। नच तस्मिन्काले मानसस्य चेतसः संभवः, क्रमेणैव ज्ञानान्युत्पद्यन्त इत्यभ्युपगम्यते। अथापि स्याज्जन्मैव ज्ञानानां क्रमेणाभ्युपगतं न स्थितिरिति। एतच्चासम्यक्। सर्वजन्मिनां क्षणिकत्वस्य प्रसाधितत्वात्। आशु वृत्त्या सकृद्भ्रान्तिरपि या साऽपास्तैव पूर्वम्। किञ्च—आह्लादपरितापिरूपेण स्पष्टः प्रतिभासो न प्राप्नोति, विकल्पविषयत्वे सति सुखादीनां मानसेनैव चेतसा वेद्यत्वेनाभ्युपगमात्। तस्य च सविकल्पकत्वात्। न च विकल्पानुबद्धस्य स्पष्टार्थप्रतिभासिता। अस्माभिस्तु स्वविषयानन्तरविषयसहकारिणेन्द्रियज्ञानेन जनितस्यैव प्रत्यक्षत्वेनाभ्युपेतत्वात्। अपि च ग्राह्यत्वे सति सुखादीनां विच्छिन्नप्रतिभासिता स्यान्नीलादिवत्। न च ज्ञानाद्विच्छिन्नस्य शातादिरूपस्योपलब्धिः। ज्ञानाभेदेन शातादिरूपस्य ग्रहणं भ्रान्तिरिति चेत्। एवं तर्हि सिद्धा सुखादीनां सत्ता स्वसंविद्रूपा। शातादिरूपमात्रलक्षणत्वात्सुखादीनाम्। तद्रूपता चेज्ज्ञानस्य सिद्धा, सिद्धा ज्ञानस्वभावाः सुखादयः। व्यतिरिक्तानां त्वसिद्धत्वाद्भ्रान्त्यसिद्धेः। शातेत्यनुकूला, तद्विपरीता त्वशाता, आदिशब्देनोपेक्षा गृह्यते। यदि च स्वसन्तानोत्पत्तिलक्षणैव सुखादीनां सत्ता स एव तेषामनुभव इति नाभ्युपगम्यते। किंतु तद्विषयज्ञानोत्पत्तिस्तदा योगिनां परकीयं सुखादि गृह्णतां तदनुभविनामिव तुल्यातुरावस्था स्यात्। भिन्नसन्तानवर्त्तित्वान्न तुल्यावस्थेति न वक्तव्यम्। नहि स्वसन्तानवर्त्तित्वं तेषामनुगमोऽभ्युपगतः। किं तर्हि? । तद्विषयज्ञानोत्पत्तिः। साच परसन्तानग्राहिणामप्यस्तीति समानः प्रसङ्गः। अथोभयमनुभवे सुखादीनां कारणमङ्गीक्रियते तदा स्वसन्तानवर्त्तित्वेनानुभवे सिद्धं सुखादीनामात्मसंवेदनम्। एवं हि स्वसन्तानवर्त्तित्वं निमित्तं परसन्तानवर्त्तिभ्यश्च विशेषकं भवति। यदि स्वसंविद्रूपा भवन्ति येषां तर्हि न योगिनः सिद्धा मीमांसकादीनां तेषां कथं तैः प्रसङ्ग इत्याह —परेत्यादि। नहि बौद्धानामिव परेषां निर्विषयं परमार्थतोऽनुमानम्। ततश्च परदुःखानुमाने तुल्योऽनुभवोऽनुमातुरपि स्यात्॥ १३३२ ॥ १३३३ ॥ १३३४ ॥ ॥ १३३५ ॥ १३३६ ॥ १३३७ ॥ १३३८ ॥ १३३९ ॥

**सुखादीत्येव गम्यन्ते सुखदुःखादयो न तु।**
**ज्ञानमित्येव गम्यन्ते तन्न ज्ञानं घटादिवत्॥ १३४० ॥**

शङ्करस्वाम्याह—न ज्ञानस्वभावाः सुखादयः, ज्ञानमित्यव्यपदेश्यत्वात्, घटादिवदिति ॥ १३४० ॥

यद्येवमित्यादिना दूषणमाह—

**यद्येवं समयान्यत्वे ज्ञानमित्यपि नो गतिः ।**
**चेतस्यस्ति ततः प्राप्ता तत्राप्यज्ञानता तदा ॥ १३४१ ॥**

यदि सङ्केतान्यत्वेन स्वभावान्यत्वं स्यात्, एवं सति यदा ज्ञानेऽपि कश्चिदज्ञानमिति समयं कुर्यात्तदा ज्ञानमित्यपि चेतसि व्यपदेशो नास्तीति प्राप्ता ज्ञानेऽप्यज्ञानता भवतः ॥ १३४१ ॥

**व्यक्तं प्रकाशरूपत्वान्नो चेदेवं प्रसज्यते ।**
**सुखदुःखादिके तुल्यं तच्च सर्वमिदं न किम् ॥ १३४२ ॥**
**भूतार्थभावनोद्भूतं कल्पनाभ्रान्तिवर्जितम् ।**
**वक्ष्यामो योगिविज्ञानं साधनैर्विमलैरलम् ॥ १३४३ ॥**

अथ प्रकाशात्मकं ज्ञानं स्पष्टमनुभूयत इति नाज्ञानता स्यादेवं सति सुखादिष्वपि सर्वमेतत्समानम् । हेतुश्चानेनैव व्यभिचारी(ति) न किंचिदेतत् । वक्ष्याम इति । सर्वज्ञसिद्धौ ॥ १३४२ ॥ १३४३ ॥

प्रमाणफलविप्रतिपत्तिनिराकरणायाह—विषयेत्यादि ।

**विषयाधिगतिश्चात्र प्रमाणफलमिष्यते ।**
**स्ववित्तिर्वा प्रमाणं तु सारूप्यं योग्यतापि वा ॥ १३४४ ॥**

बाह्येऽर्थे प्रमेये विषयाधिगमः प्रमाणफलं, सारूप्यं तु प्रमाणम् । स्वसंवित्तावपि सत्यां यथाकारमस्य प्रथनात् । ज्ञानात्मनि तु प्रमेये स्वसंवित्तिः फलम्, योग्यता प्रमाणम् । सव्यापारप्रतीततामुपादाय ज्ञानस्यैव सा तादृशी योग्यता । येन तदेवात्मानं वेदयते न घटादय इति योग्यतया करणभूतयैवात्मप्रकाशकं लक्ष्यते ज्ञानमिति योग्यतायाः स्वसंवेदने प्रामाण्यम् । तदुक्तम्—"तत्राप्यनुभयात्मत्वात्ते योग्याः स्वात्मसंविदः । इति सा योग्यता मानमात्मा मेयः फलं स्ववित् ॥" इति ॥ १३४४ ॥

छेदन इत्यादिना कौमारिलचोद्यमाशङ्कते ।

**छेदने खदिरप्राप्ते पलाशे न छिदा यथा ।**
**तथैव परशोर्लोके छिदया नैकतेति चेत् ॥ १३४५ ॥**

भिन्नप्रमाणफलवादिनं प्रति बौद्धेनोक्तम्—यदि प्रमाणफलयोर्भेदोऽभ्युपगम्यते तदा भिन्नविषयत्वं स्यात्प्रमाणफलयोः । न चैतद्युक्तम् । नहि परश्वादिके छेदने खदिरप्राप्ते सति पलाशे छेदो भवति । तस्मात्प्रमाणफलयोरेकविषयत्वादभेद इति । अत्रोक्तं कुमारिलेन—"विषयैकत्वमिच्छंस्तु यः प्रमाणं फलं वदेत् । साध्यसाधनयोर्भेदो लौकिकस्तेन बाधितः ॥ छेदने खदिरप्राप्ते न पलाशे छिदा यथा । तथैव परशोर्लोके छिदया सह नैकता ॥" इति । छेद्यतेऽनेनेति छेदनम् ॥ १३४५ ॥

नेत्यादिनोत्तरमाह ।

**न व्यवस्थाश्रयत्वेन साध्यसाधनसंस्थितिः ।**
**निराकारे तु विज्ञाने सा संस्था न हि युज्यते ॥ १३४६ ॥**

नीलासपदं संवेदनं न पीतस्येति विषयावगतिव्यवस्थाया अर्थसारूप्यमेव निबन्धनं नान्यदिति व्यवस्थाप्यव्यवस्थापकभावेन साध्यसाधनव्यवस्था, नोत्पाद्योत्पादकभावेन, यस्मान्न पारमार्थिकः कर्तृकरणादिभावोऽस्ति, क्षणिकत्वेन निर्व्यापारत्वात्सर्वधर्माणाम् । ज्ञानं हि विषयाकारमुत्पद्यमानं विषयं परिच्छिन्ददिव सव्यापारमिवाभाति । अयमेवार्थप्रापणव्यापारो ज्ञानस्य, न त्वविनाभावित्वमात्रम् । नहि बीजाद्यविनाभाविनोऽङ्कुरादयो न भवन्ति । ये(न) ज्ञानमेव प्रमाणं स्यात् । तस्मात्साकारमेव ज्ञानं प्रमाणं न निराकारमिति व्यवस्थया प्रामाण्येन प्रदर्श्यते । व्यवस्था च तत्पृष्ठलब्धेन विकल्पेन वेदितव्या ॥ १३४६ ॥

अत उत्प्रेक्षित इत्यादिना लोकप्रसिद्ध्यबाधामाह ।

**अत उत्प्रेक्षितो भेदो विद्यते धनुरादिवत् ।**
**उत्पाद्योत्पादकत्वेन व्यवस्थेयं तु नेष्यते ॥ १३४७ ॥**

धनुरादिवदिति । धनुर्विध्यति धनुषा विध्यति धनुषो निःसृत्य शरो विध्यतीति यथैकस्य धनुषः कर्तृत्वादयः कल्पिता न विरुध्यन्ते तथेहापीति ॥ १३४७ ॥

**विश्लिष्यमाणसन्धौ च दार्वादौ परशुच्छिदा ।**
**प्रविशन्नुच्यते तेन तत्रैकत्वमवस्थितम् ॥ १३४८ ॥**

परशुना च वृक्षादेश्छिदा निरूप्यमाणा छेद्यद्रव्यानुप्रवेशलक्षणैवावतिष्ठते स चानुप्रवेशः परशोरात्मगत एव धर्म इति परमार्थतश्छिदया सहैकत्वमिति नास्ति विरोधः ॥ १३४८ ॥

व्यवस्थायामित्यादिनैतद्दर्शयति ।

**व्यवस्थायां तु जातायां कल्प्यतामन्यथापि हि ।**
**उत्पाद्योत्पादकत्वेन संस्थानविधिरुच्यते ॥ १३४९ ॥**

यथा कुमारिलेन परिच्छेदफलत्वेत्यादिना ग्रन्थेनोत्पाद्योत्पादकभावेन प्रमाणफलव्यवस्थाकृता, तथाऽस्माकमप्यविरोधिन्येव । यथोक्तमाचार्येण—"तत्रापि हि प्रत्यक्षत्वोपचारोऽविरुद्धश्चक्षुरादिषु तत्कारणेष्वि"ति । एतावत्तु ब्रूमः—अवश्यमादौ व्यवस्थाद्वारेणैव साध्यसाधनसंस्था कर्त्तव्या, न ह्यव्यवस्थाप्य संविद्भेदं विषयभेदेन नियमेन प्रवृत्तिर्युक्ता, संविद्भेदव्यवस्थायाश्च सारूप्यमेव निबन्धनमिति सामर्थ्यादेवायातं सारूप्यस्य साधकतमत्वं, सारूप्यादेव च ज्ञानस्य प्रवर्त्तकत्वम् । प्रवर्त्तकस्य च प्रमाणत्वं प्रवृत्तिकामेन निरूप्यते, न व्यसनितया । यथोक्तम्—"अर्थक्रियार्थं हि सर्वः प्रमाणमप्रमाणं चान्वेषते प्रेक्षावानि"ति । यतो येनैवांशेन प्रवर्त्तकत्वं ज्ञानस्य भवति स एव दर्शनीयः, न चोत्पाद्योत्पादकभावेन प्रमाणफलव्यवस्थायां प्रवर्त्तकांशः सारूप्यं गम्यते, ततश्च निष्फलमेवोत्पादद्वारेण प्रमाणव्यवस्थानं स्यात् । अतएवाचार्येणैतद्द्वारेण प्रमाणव्यवस्थानं न प्रवृत्त्यङ्गमिति मत्वैवोपचार आश्रितः । तस्माज्जातायां तु व्यवस्थायां साऽन्यथाऽप्युत्पाद्योत्पादकभावेन कल्प्यताम् । तथाऽप्यदोष एवेति ॥ १३४९ ॥

परिच्छेदेत्यादिना तदेव कौमारिलं फलव्यवस्थानं दर्शयति ।

**परिच्छेदफलत्वेन वृत्तस्यानन्तरस्य हि ।**
**कारणत्वं मतं ज्ञाने प्रमाणे तु फलं परम् ॥ १३५० ॥**
**स्वसंवित्तिफलत्वं चेन्निषेधान्नैव युज्यते ।**
**माने च विषयाकारे भिन्नार्थत्वं प्रसज्यते ॥ १३५१ ॥**

वृत्तस्येति । प्रवृत्तस्य चक्षुरादेरित्यर्थः । फलं परमिति । हानोपादानोपेक्षाबुद्धिलक्षणम् । इदमपरमुक्तं कुमारिलेनैव—स्वसंवेदनस्य निषेधात्तस्य प्रमाणफलत्वमयुक्तम् । विषयाकारस्य च प्रामाण्ये सति प्रमाणफलयोर्भिन्नविषयत्वं प्रसज्यते । तथाहि—विषयाकारो बाह्यविषयः स्वसंवेदनं तु ज्ञानस्वरूपविषयमिति ॥ १३५० ॥ ॥ १३५१ ॥

सर्वेत्यादिना प्रतिविधत्ते—

**सर्वावित्तिप्रसङ्गेन सा निषेद्धुं न शक्यते ।**
**भिन्नार्थत्वं न चेहास्ति स्वविदप्यर्थविन्मता ॥ १३५२ ॥**

"अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यति" इति सर्वार्थाप्रत्यक्षत्वप्रसङ्गान्न शक्यते स्वसंवित्तिर्निषेद्धुम् । नापि भिन्नविषयत्वप्रसङ्गो युक्तः, यतः स्वसंवित्तिरप्यर्थसंवित्तिरिष्टा, तत्कार्यत्वात् । नतु तन्मयत्वेन । स्वसंवित्तिस्तु ताद्रूप्यादिति न विरोधः ॥ १३५२ ॥

स्वातिरिक्तेत्यादिना शङ्करस्वामी प्रमाणयति ।

**स्वातिरिक्तक्रियाकारि प्रमाणं कारकत्वतः ।**
**वास्यादिवच्चेद्वैफल्यमन्यद्ध्यपि फलं मतम् ॥ १३५३ ॥**
**उक्तन्यायेन वास्यादेरन्यदस्ति फलं न च ।**
**कारकत्वं च नो सिद्धं जनकत्वविवक्षया ॥ १३५४ ॥**
**स्थापकत्वविवक्षायां न विरोधोऽस्ति कश्चन ।**
**तेनानैकान्तिको हेतुर्विरोधाप्रतिपादनात् ॥ १३५५ ॥**

आत्मव्यतिरिक्तक्रियाकारि प्रमाणं कारकत्वाद्वास्यादिवदिति । **वैफल्यमित्यादिना** दूषयति । विफलं, सिद्धसाध्यतादोषात् । यतोऽन्यदपि जन्यं फलं परिच्छेदेत्यादिना कथितम् । हिशब्दो हेतौ । वास्यादिवदिति च साध्यविकलो दृष्टान्तश्छिदया सहैकत्वस्य प्रतिपादितत्वात् । कारकत्वादिति च जन्यजनकत्वविवक्षायामसिद्धो हेतुः, स्थापकत्वेनैवेष्टत्वात् । साधनस्य स्थापकत्वविवक्षायामप्यनैकान्तिको विरोधाभावात् । सामान्यविवक्षायामनैकान्तिक एव, विरोधस्यानुपदर्शितत्वात् ॥ १३५३ ॥ ॥ १३५४ ॥ १३५५ ॥

ननु च यदि विषयाकारं ज्ञानं स्यात्तदा भवेद्विषयसारूप्यस्य प्रामाण्यम्, यावता ग्राह्यविषयसमानाकारं समानस्वभावं ज्ञानमुपपद्यते, नैव तथा, ग्राह्याज्जात्यन्तरत्वाद्रूपरसयोरिवेत्याह—ग्राह्येत्यादि ।

**ग्राह्यसाधारणाकारं तस्माज्जात्यन्तरत्वतः ।**
**रसरूपादिवज्ज्ञानं नैव चेदुपपद्यते ॥ १३५६ ॥**
**न्यायानुसरणे सर्वमस्माभिरुपवर्णितम् ।**
**इदमन्यच्च विस्पष्टं ग्राह्यग्रहविवेचने ॥ १३५७ ॥**

विज्ञानवादन्यायानुसारिभिरस्माभिरेतदिष्टमेवेति न किंचित्क्षीयते । तथाहि—यत्किंचिदिदमस्पष्टं भवता ग्राह्यदूषणमभिहितम् । इदं तु स्पष्टं ग्राह्यविवेचनाय साधनमभिधीयतेऽस्माभिः । ग्राह्ये ग्रहोऽभिनिवेशस्तस्य विवेचनमपनयनम् ॥ १३५६ ॥ ॥ १३५७ ॥

किं तत्स्पष्टं साधनमित्याह—सर्वेत्यादि ।

**सर्वात्मना हि सारूप्ये ज्ञानमज्ञानतां व्रजेत् ।**
**साम्यं केनचिदंशेन सर्वं स्यात्सर्ववेदकम् ॥ १३५८ ॥**

यावद्भ्यो विजातीयेभ्यो व्यावृत्तस्तावद्भ्य एव ज्ञानमपीतीदं सर्वात्मना सारूप्यम् । कतिपयपदार्थव्यावृत्तितस्त्वंशेन सारूप्यम् ॥ १३५८ ॥

कथं तर्ह्यर्थसारूप्यस्य प्रामाण्यमुक्तमित्याह—किन्त्वित्यादि ।

**किन्तु बाह्यार्थसद्भाववादे सारूप्यसम्भवः ।**
**ध्रुवमभ्युपगन्तव्य इत्यर्थं स प्रकाशितः ॥ १३५९ ॥**
**निर्भासिज्ञानपक्षे हि ग्राह्याद्भेदेऽपि चेतसः ।**
**प्रतिबिम्बस्य ताद्रूप्याद्भाक्तं स्यादपि वेदनम् ॥ १३६० ॥**
**येन त्विष्टं न विज्ञानमर्थसारूप्यभाजनम् ।**
**तस्यायमपि नैवास्ति प्रकारो बाह्यवेदने ॥ १३६१ ॥**

## इति प्रत्यक्षलक्षणपरीक्षा ।

स इति । सारूप्यसम्भव आकारो वा । निर्भासो—विषयसारूप्यं, तद्यस्यास्ति तन्निर्भासि । ग्राह्यादिति । बाह्यादर्थात् । प्रतिबिम्बस्येति । ज्ञानाकारस्य । ताद्रूप्यादिति । विषयसारूप्यात् । भाक्तमिति । उपचरितम् । वेदनमिति । अर्थस्येति शेषः । भाजनम्—आश्रयः । विषयविप्रतिपत्तिस्तु सामान्यस्य वस्तुभूतस्य निराकरणाद्वस्तुविषयत्वेनेष्टस्य प्रत्यक्षस्य नान्यः स्वलक्षणाद्विषयोऽस्तीति सामर्थ्यादुपदर्शितत्वान्न पृथङ्निराकृता । ये त्वाहुरयुक्तमेवेदं प्रत्यक्षलक्षणम्, लक्षणं हि प्रमाणस्य प्रणीयते, अपि नाम तेन रूपेणोपलक्ष्य प्रमाणं ततः परेषां प्रवृत्तिः स्यादिति, न तु व्यसनितया, न च कल्पनापोढत्वादिनोपलक्षितस्यापि प्रवर्त्तकत्वं निवर्त्तकत्वं वा समस्ति लोक इति । तदसम्यक् । नहि स्वेच्छया वस्तूनां स्वभावव्यवस्थानं कर्तुं लभ्यं, येनान्यथा प्रणीयेत लक्षणम्, अपि तु यथावस्थितमेव वस्तुस्वरूपमनूद्य प्रसि-

द्वस्वभावविशेषप्रतिपिपादयिषया लक्षणं प्रणयन्ति तद्विदः । यथा पृथिव्याः खष्खटत्वं (खरत्वम्?) । अन्यथा ह्यसम्भवितादोषेण दुष्टं स्यात् । नच प्रत्यक्षस्य कल्पनापोढाभ्रान्तत्वाभ्यामन्यल्लक्षणमुपलक्षकमस्ति । तथाहि—तदवश्यमभ्रान्तमङ्गीकर्त्तव्यं प्रमाणत्वात् । कल्पनापोढं च साक्षात्स्वलक्षणविषयत्वात् । स्वलक्षणस्य चाशक्यसमयत्वेन तत्संवित्तेरनभिजल्पत्वस्य प्रसाधितत्वात् । अतो न्यायानुयातमेव लक्षणमेव तदाचक्षते कुशलाः । न चाप्यतो लक्षणात्प्रेक्षावतां प्रवृत्तिनिवृत्ती न भवतः । तथाहि—घटोत्क्षेपणसामान्यसङ्ख्यादिज्ञानस्य प्रत्यभिज्ञाप्रत्ययस्य च तथा पीतशङ्खादिज्ञानस्य परैः प्रत्यक्षत्वेनोपकल्पितस्य यथायोगं सविकल्पकत्वेन भ्रान्तत्वेन वा प्रत्यक्षत्वमवधार्य तद्विषयत्वेनोपकल्पितस्य सङ्ख्यादेर्वस्तुत्वाभिनिवेशान्निवर्त्तन्ते । यच्च निर्देश्यं नीलादि स्वलक्षणं तदेव वस्त्वित्यवसाय तत्र प्रवर्त्तन्ते । यथाच निर्विकल्पस्यापि प्रत्यक्षस्य प्रवर्त्तकत्वं तथा प्रागुक्तमेव । यद्येवं कल्पनापोढत्वमेवैकं लक्षणं कर्तुं युक्तं नत्वभ्रान्तमिति । तथाहि—प्रवृत्तेः प्राग्यदेव सिद्धं रूपं तदेव प्रवृत्तिकामानां लक्षणत्वेन प्रणेतुं युक्तं नाप्रसिद्धमसत्तुल्यत्वात्तस्य । नचाभ्रान्तत्वनिश्चयोऽर्थक्रियासंवादात्प्रागस्ति, न ह्यर्वाग्दर्शनास्तत्कार्याधिगममन्तरेण यथार्थतां ज्ञानस्य ज्ञातुमीशते, तेषां नित्यं पदार्थशक्तेः कार्यानुमेयत्वात् । यथोपदर्शितार्थप्रापणसामर्थ्यलक्षणत्वाच्च यथार्थतायाः । न चोत्तरकालं यथार्थतावधारणेऽपि साफल्यमस्ति, ततः पुनरप्रवृत्तेः । तदेतदचोद्यम् । तथाहि—केशोण्डूकादिबुद्धीनामपि प्रामाण्यप्रसङ्गान्माभूदतिव्यापिता लक्षणदोष इत्यतोऽवश्यकरणीयमभ्रान्तग्रहणमित्युक्तम् । यश्चापि प्रवृत्तेः प्रागनिश्चयहेतुरर्वाग्दर्शित्वमुच्यते, सोऽप्यनैकान्त एव । को ह्यत्र प्रतिबन्धो यदर्वाग्दर्शिभिर्न क्वचित्सामर्थ्यं निश्चितव्यमिति । एवं हि न किंचित्तैर्निश्चेयमिति प्राप्तम् । ततश्चाचेतनत्वमेव तेषामायातम् । यावता पशुशिशवोऽप्यभ्यासबलादुद्भूतभूतज्ञानवासनावृत्तयः सुखस्य साधनमेतदेतदसुखस्येति प्रवृत्तेः प्रागपि निश्चित्य प्रपातादि परिहरन्तः स्तनादि चोपाददानाः संदृश्यन्त एव । तथाह्यभूतमपि भावयतां कामशोकभयाद्युपप्लुतचेतसामनपेक्षितसाधर्म्यादिस्मृतेरभ्यासस्य स्फुटप्रतिभासस्य ज्ञानोत्पादनसामर्थ्यमुपलभ्यत एव । यत्र तु पुनर्नाभ्यासस्तत्र तेषां कार्यानुमेयैव शक्तिर्न तु सर्वत्र । एतेन धूमादिलिङ्गनिश्चयोऽपि व्याख्यातः । यतस्तत्रापि तद(दे?)तत्कार्यस्य धूमादेः प्रकृत्या परस्परमत्यन्तविविक्तस्वभावत्वात्, तद्विवेकनिश्चयस्य चाभ्यासादिहेतुत्वाल्लिङ्गनिश्चयसम्भवादतो नानुमानप्रतिक्षेपः । न-

न्बाधायां प्रवृत्तौ सत्यामभ्यासः सिध्यति, यावता सैव कथं भवतीति वक्तव्यम्। उच्यते । संशयात् । संशयहेतोः प्रत्यक्षस्य कथं तत्र प्रामाण्यमिति चेत् । निश्चय-हेतोरपि कथं प्रामाण्यम् । अवसायोत्पादनादर्थिनस्तत्र प्रवर्त्तनादिति चेत् । तदेत-त्संशयहेतोरपि तुल्यम् । यद्यपि तत्र प्रतीयमानार्थितार्थाकारविपरीतो व्यवसायः, तथापि न तेनाकारेण तस्य प्रत्यक्षस्य प्रवर्त्तकत्वम्, तथाऽवसितस्यानर्थितत्वात्। नापि निवर्त्तकत्वं, प्रतीयमानप्रार्थितार्थाध्यवसायहेतुत्वेनार्थिनः प्रवर्त्तनात् । अन्यथा हि संशयहेतोः प्रत्यक्षादर्थी न प्रवर्त्तेत नापि निवर्त्तेतेति प्राप्तं, न चैवं भवति, अपि त्वर्थिनामसम्भावितानर्थोदयानामर्थितया प्रवृत्तेरेव बलीयस्त्वम् । अनेन चांशेन नि-श्चयहेतोः प्रत्यक्षादस्य न कश्चिद्विशेषः । यत्र त्वेकान्तेन प्रतीयमानार्थविपरीताका-रावसायहेतुत्वमेव, अवसायानुत्पादकत्वं वा, तत्र तस्य सर्वथार्थिनोऽप्रवर्त्तनादप्रा-माण्यमेवेति युक्तं वक्तुं, नान्यत्रेत्यलम् ॥ १३५९ ॥ १३६० ॥ १३६१ ॥

## इति प्रत्यक्षलक्षणपरीक्षा ।

अनुमानस्येदानीं लक्षणमाह—स्वपरेत्यादि ।

**स्वपरार्थविभागेन त्वनुमानं द्विधेष्यते ।**
**स्वार्थं त्रिरूपतो लिङ्गादनुमेयार्थदर्शनम् ॥ १३६२ ॥**
**त्रिरूपलिङ्गवचनं परार्थं पुनरुच्यते ।**
**एकैकद्विद्विरूपोऽर्थो लिङ्गाभासस्ततो मतः ॥ १३६३ ॥**

अनुमानं स्वार्थपरार्थभेदेन द्विविधम् । तत्र स्वार्थं यत्त्रिरूपाल्लिङ्गात्पक्षधर्मत्वं स-पक्षे सत्त्वं विपक्षाच्च सर्वतो व्यावृत्तिरित्येवंलक्षणादनुमेयार्थविषयं ज्ञानं तदात्मकं बोद्धव्यम् । परार्थं तु यथोक्तत्रिरूपलिङ्गप्रकाशकवचनात्मकं द्रष्टव्यम् । अथानुमा-नाभासस्य किं लक्षणं नोक्तमित्याह—एकैकेत्यादि । नित्यः शब्दः कृतकत्वान्मूर्त्त-त्वादप्रमेयत्वादित्येकैकरूपो यथाक्रमं पक्षधर्मत्वसपक्षसत्त्वविपक्षव्यावृत्तिमात्रस्य वि-द्यमानत्वात् । तत्र द्विद्विरूपो यथा—ध्वनिरनित्यश्चाक्षुषत्वाच्छ्रावणत्वादमूर्तत्वादिति यथाक्रमं पक्षसत्त्वसपक्षसत्त्वविपक्षव्यावृत्तिमात्राभावात् । तदुक्तम्—"कृतकत्वा-द्ध्वनिर्नित्यो मूर्त्तत्वादप्रमेयतः । अमूर्त्तश्रावणत्वाभ्यामनित्यश्चाक्षुषत्वतः ॥" इति ॥ ॥ १३६२ ॥ १३६३ ॥

अन्यथेत्यादिना पात्रस्वामिमतमाशङ्कते—

**अन्यथाऽनुपपन्नत्वे ननु दृष्टा सुहेतुता ।**
**नासति त्र्यंशकस्यापि तस्मात्क्लीबास्त्रिलक्षणाः ॥ १३६४ ॥**

स ह्याह । अन्यथाऽनुपपन्नत्व एव शोभनो हेतुर्न तु पुनस्त्रिलक्षणः । तथाह्यसत्यन्यथानुपपन्नत्वे त्र्यंशकस्यापि तत्पुत्रत्वादेर्न दृष्टा सुहेतुता । तस्मात् क्लीबाः—असक्ताः, त्रिलक्षणा हेतव इति । अन्यथेति । साध्येन विनाऽनुपपन्नत्वं, हेतोः साध्य एव सत्त्वमित्यर्थः ॥ १३६४ ॥

अन्यथेत्यादिना सविस्तरमन्वयव्यतिरेकसंदर्शनेनान्यथानुपपन्नत्वैकलक्षणं हेतुं समर्थयते ।

**अन्यथाऽनुपपन्नत्वं यस्यासौ हेतुरिष्यते ।**
**एकलक्षणकः सोऽर्थश्चतुर्लक्षणको न वा ॥ १३६५ ॥**

एकं लक्षणमन्यथाऽनुपपन्नत्वं यस्यास्ति स एकलक्षणः । स एव लौकिकैः परीक्षकैर्वा हेतुरिष्यते, नान्यः । अर्थापत्त्या तु पक्षधर्मत्वादित्रयमनेनैवाक्षिप्यत इति चतुर्लक्षणकोऽपि वा भवतु । न वा चतुर्लक्षणो यस्मात्क्वचिदेकलक्षणो द्विलक्षणस्त्रिलक्षणोऽपि वा न्याय्यः, यस्मादन्यथानुपपत्तिरेकं लक्षणं तेनैकलक्षण इति व्यपदिश्यते, अन्यथाऽनुपपत्तिसहितां सजातीयसिद्धतां विजातीयव्यावृत्तिं चाभिसमीक्ष्य द्विलक्षणः, अन्यथानुपपन्नत्वं सजातीयवृत्तिः साध्यविपक्षाच्च व्यावृत्तिरिति त्रिलक्षणः । न तु पक्षधर्मत्वादिलक्षणधर्मत्रययोगात्त्रिलक्षणहेतुरिष्यते । तस्य सम्यग्ज्ञानं प्रति हेतुत्वानुपपत्तेः ॥ १३६५ ॥

अथवा प्राधान्यादन्यथाऽनुपपत्तिनामधेयेनैवैकलक्षणव्यपदेशो न तु पक्षधर्मत्वादिभिस्तेषामप्राधान्यादकिञ्चित्करत्वाद्वेत्येतद्दर्शयन्नाह—यथेत्यादि ।

**यथा लोके त्रिपुत्रः सन्नेकपुत्रक उच्यते ।**
**तस्यैकस्य सुपुत्रत्वात्तथेहापि च दृश्यताम् ॥ १३६६ ॥**

ननु चाविनाभावसम्बन्धात्त्रिरूपस्यैव सहेतुता युक्तेत्याह—अविनेत्यादि ।

**अविनाभावसम्बन्धस्त्रिरूपेषु न जातुचित् ।**
**अन्यथाऽसम्भवैकाङ्गहेतुष्वेवोपलभ्यते ॥ १३६७ ॥**

अन्यथासम्भव एकमङ्गं येषां ते तथोक्तास्ते च ते हेतवश्चेत्यन्यथासम्भवैकाङ्गहेतवः ॥ १३६७ ॥

**अन्यथे**त्यादिना यथोक्तमेवार्थं निगमयति ।

**अन्यथानुपपन्नत्वं यस्य तस्यैव हेतुता ।**
**दृष्टान्तौ द्वावपि स्तां वा मा वा तौ हि न कारणम् ॥१३६८॥**
**नान्यथानुपपन्नत्वं यत्र तत्र त्रयेण किम् ।**
**अन्यथाऽनुपपन्नत्वं यत्र तत्र त्रयेण किम् ॥ १३६९ ॥**

**दृष्टान्ता**विति । साधर्म्यवैधर्म्यलक्षणौ । **न कारण**मिति । साध्यप्रतिपत्तेः। अन्यथाऽनुपपन्नत्वं यत्रेत्यस्यानन्तरं नान्यथानुपपन्नेत्यस्यार्द्धस्य पाठः कर्त्तव्यः॥ ॥ १३६८ ॥ १३६९ ॥

त्रिरूपेऽविनाभावसम्बन्धाभावं दर्शयन्नाह—स श्याम इत्यादि ।

**स श्यामस्तस्य पुत्रत्वाद्दृष्टा श्यामा यथेतरे ।**
**इति त्रिलक्षणो हेतुर्न निश्चित्यै प्रवर्त्तते ॥ १३७० ॥**

**तत्रैके**त्यादिनैकलक्षणस्यैव हेतोः सामर्थ्यं दर्शयत्युदाहरणप्रपञ्चेन—

**तत्रैकलक्षणो हेतुर्दृष्टान्तद्वयवर्जितः ।**
**कथञ्चिदुपलभ्यत्वाद्भावाभावौ सदात्मकौ ॥ १३७१ ॥**

भावाभावौ कथंचित्सदात्मकौ कथंचिदुपलभ्यत्वात् । अत्र न साधर्म्यवैधर्म्यदृष्टान्तौ बहिर्भूतौ प्रयोगात्मकावर्थात्मकौ वा विद्येते । भावाभावात्मकस्य सर्वपदार्थराशेः पक्षीकृतत्वात् । तद्व्यतिरिक्तस्य चान्यस्याभावात् । पक्षधर्मस्यान्यथानुपपन्नत्वाद्व्यतिरेकाच्चैकलक्षण एवायम् । **कथञ्चि**दिति । ज्ञेयत्वादिना केनचित्पर्यायेणेत्यर्थः । **सदात्मका**विति । अत्रापि कथञ्चिदिति सम्बन्धनीयम् । तेनायमर्थो भवति —कथञ्चिदुपलभ्यत्वात्कथञ्चित्सदात्मकाविति ॥ १३७१ ॥

इदानीं द्विलक्षणस्य हेतोरुदाहरणान्याह—

**चन्द्रत्वेनापदिष्टत्वान्नाचन्द्रः शशलाञ्छनः ।**
**इति द्विलक्षणो हेतुरयं चापर उच्यते ॥ १३७२ ॥**
**पतत्कीटकृतेयं मे वेदनेत्यवसीयते ।**
**पतत्कीटकसंस्पर्शप्रतिलब्धोदयत्वतः ॥ १३७३ ॥**
**चक्षू रूपग्रहे कार्ये सदाऽतिशयशक्तिमत् ।**
**तस्मिन्व्यापार्यमाणत्वाद्यद्वि वा तस्य दर्शनात् ॥ १३७४ ॥**

**कथञ्चिदसदात्मानो यदि वाऽत्मघटादयः।**
**कथञ्चिन्नोपलभ्यत्वात्खरसम्बन्धिश्रृङ्गवत्॥ १३७५॥**
**कथञ्चन सदात्मानः शशश्रृङ्गादयोऽपि च।**
**कथञ्चिदुपलभ्यत्वाद्यथैवात्मघटादयः॥ १३७६॥**
**त्वदीयो वापि तत्रास्ति वेश्मनीत्यवगम्यते।**
**भावत्कपितृशब्दस्य श्रवणादिह सद्मनि॥ १३७७॥**
**अन्यथाऽनुपपत्त्यैव शब्ददीपादिवस्तुषु।**
**अपक्षधर्मभावेऽपि दृष्टा ज्ञापकताऽपि च॥ १३७८॥**
**तेनैकलक्षणो हेतुः प्राधान्याद्गमकोऽस्तु नः।**
**पक्षधर्मादिभिस्त्वन्यैः किं व्यर्थैः परिकल्पितैः॥ १३७९॥**

नाचन्द्रः शशी चन्द्रः शशीति वा पक्षः, लोके सम्प्रदायप्रसिद्धचन्द्रव्यपदेशाच्चन्द्रत्वेनापदिष्टत्वादिति वा हेतुः, वैधर्म्येण लोष्टादि। अयं चापरो द्विलक्षण उच्यते —पतत्कीटककृतेयं मम वेदना पतत्कीटकसंस्पर्शप्रतिलब्धोदयत्वात्। पततः कीटकस्य पतङ्गस्य स्पर्शेन प्रतिलब्ध उदय उत्पादो ययेत्यर्थः। सामान्यविवक्षा चात्रान्यपदार्थे द्रष्टव्या, तेन टान्न भवति। विद्यमानरूपग्रहणसाधकतमशक्तिकं चक्षुः, अनुपहतत्वे सति रूपदिदृक्षायां प्रेक्षापूर्वकारिणा करणत्वेन व्यापार्यमाणत्वात्, रूपपरिच्छेदनदर्शनाद्वा। वैधर्म्येण श्रोत्रादि। तस्येति। रूपस्य। अत्र त्रिष्वपि हेतुष्वसत्सु साधर्म्यदृष्टान्ताभावाद्द्विरूपत्वम्। आत्मघटादयः कथंचिदसदात्मानः कथंचिदनुपलभ्यमानत्वात्खरविषाणवत्। अत्र वैधर्म्यदृष्टान्तो न विद्यते। घटादिः सर्वो भावात्मको राशिः कथंचिदसदात्मकत्वेन प्रतिज्ञातः, अभावश्च साधर्म्यदृष्टान्तत्वेनोपन्यस्तः। न च भावाभावव्यतिरिक्तं तृतीयमस्ति, यत्र साध्यव्यवच्छेदपूर्वकः साधनव्यवच्छेदो निर्दिश्येत। खरविषाणादयो वा कथञ्चित्सदात्मकाः कथञ्चिदुपलभ्यमानत्वादात्मघटादिवत्। अत्रापि पूर्वकयैव युक्त्या वैधर्म्यदृष्टान्ताभावो योजनीयः। प्रतिपद्यमानत्वदीयपितृकमिदं गृहं, श्रूयमाणत्वदीयपितृकस्वरत्वात्। अत्र किल साधर्म्यदृष्टान्तो नास्तीति द्विरूपता। तथा शब्ददीपादीनां धूमादिलिङ्गवज्ज्ञापकत्वं दृष्टमसत्यपि पक्षधर्मत्वे, न हि शब्ददीपादयो घटाद्यर्थगता धर्माः, अथच प्रतीयते शब्दादेः सकाशादर्थ इति विपक्षाभावोऽन्यथानुपपन्नत्वं चेति द्विरूपो हेतुः

॥ १३७२ ॥ १३७३ ॥ १३७४ ॥ १३७५ ॥ १३७६ ॥ १३७७ ॥ १३७८॥ ॥ १३७९ ॥

तदित्यादिना प्रतिविधत्ते ।

**तदिदं लक्षणं हेतोः किं सामान्येन गम्यते ।**
**जिज्ञासितविशेषे वा धर्मिण्यथ निदर्शने ॥ १३८० ॥**

तत्र साध्येनाविनाभावित्वं हेतोः सामान्येन वा स्याद्धर्मिविशेषपरिग्रहाद्विशेषेण वा स्यात् । धर्मिविशेषपरिग्रहाद्विशेषेऽपि जिज्ञासितविशेषसाध्यधर्मिणि वा स्याद्दृष्टान्तधर्मिणि वेतीयन्तः पक्षाः सम्भाव्यन्ते ॥ १३८० ॥

तत्र प्रथमे पक्षे दोषमाह—सामान्येनेत्यादि ।

**सामान्येन गते तस्मिन्नेवं चेत्साध्यधर्मिणि ।**
**हेतोः सत्त्वं प्रकाश्येत न विवक्षितसिद्धिभाक् ॥ १३८१ ॥**

न ह्यविनाभावित्वमात्रेणैव विना पक्षधर्मत्वं शब्दे धर्मिणि चाक्षुषत्वमनित्यत्वस्य गमकं दृष्टमित्ययुक्तः प्रथमः पक्षः । **न विवक्षितसिद्धिभागिति** । साध्यधर्मिणि न विवक्षितां सिद्धिं भजेदित्यर्थः ॥ १३८१ ॥

कथमित्याह—तद्यथेति ।

**तद्यथा चाक्षुषत्वस्य नाशेनाव्यभिचारिता ।**
**सामान्येन गता तच्च ध्वनौ तस्य न साधनम् ॥ १३८२ ॥**
**तस्य धर्मिणि सद्भावः ख्याप्यते चेत्तथा सति ।**
**सैव त्रिरूपताऽऽयाता भवतामपि दर्शने ॥ १३८३ ॥**

**तच्चेति** । चाक्षुषत्वम् । **तस्येति** । नाशस्य । साधनम्—गमकम् । अथ माभूद्यथोक्तदोष इति तस्य हेतोः साध्यधर्मिणि सद्भाव आश्रीयते । एवं सति तदेव त्रिरूपत्वं हेतुलक्षणमस्मदीयं भवद्दर्शनेऽपि जातम् ॥ १३८२ ॥ १३८३ ॥

कथमित्याह—अन्यथेत्यादि ।

**अन्यथाऽनुपपत्त्या दि(हि?) व्यतिरेकान्वयौ गतौ ।**
**तस्य धर्मिणि सद्भावात्पक्षधर्मत्वसंश्रयः ॥ १३८४ ॥**

अन्वयः—सपक्षे सत्त्वं, व्यतिरेकः—विपक्षासत्त्वम्, संश्रयणं संश्रयः, परिग्रह इति यावत् ॥ १३८४ ॥

आचार्यैरित्यनेन तन्मताविरोधं प्रतिपादयति ।

**आचार्यैरपि निर्दिष्टमीदृक्संक्षेपलक्षणम् ।**
**ग्राह्यधर्मस्तदंशेन व्याप्तो हेतुरितीदृशम् ॥ १३८५ ॥**

ग्राह्यधर्म इति । ग्राह्यस्य साध्यधर्मिणो धर्मः पक्षधर्म इति यावत् ॥ १३८५ ॥

अथेति द्वितीयं पक्षमाह—

**अथेदं लक्षणं हेतोर्धर्मिण्येवावगम्यते ।**
**यतः प्रमाणान्नासिद्धिः साध्यस्यापि ततो न तु ॥ १३८६ ॥**
**साध्यस्याप्रतिपत्तौ हि हेतोरपि न निश्चयः ।**
**अतो निरर्थको हेतुरन्यतः साध्यसिद्धितः ॥ १३८७ ॥**
**अन्योन्याश्रयदोषश्च हेतोः साध्यस्य निश्चये ।**
**द्वयोरन्यतरासिद्धावन्यस्याप्यविनिश्चये ॥ १३८८ ॥**

अथ साध्यधर्मिण्येव साध्याविनाभावित्वं हेतोर्यत्तदेव हेतुलक्षणं यथाह—"विना साध्याददृष्टस्य दृष्टान्ते हेतुतेष्यते । परैर्मया पुनर्धर्मिण्यसंभूष्णोर्विनाऽमुना ॥ अर्थापत्तेश्च शाबर्या भैक्षवाश्चानुमानतः । अन्यदेवानुमानं नो नरसिंहवदिष्यते ॥" धर्मिणीति । साध्यधर्मिणि । अमुना साध्यधर्मेण विना साध्यधर्मिण्यसम्भवनशीलस्येत्यर्थः । एवं तर्हि यत एव प्रमाणाद्धेतुः साध्याविनाभूतः साध्यधर्मिणि सिद्धस्तत एव साध्यमपि सिद्धमिति व्यर्थो हेतुः । अथ साध्यं न सिद्धं तदा हेतुरपि न सिद्ध एव, यस्मात्साध्यधर्मिणि साध्याविनाभाविता हेतुलक्षणम्, तच्चाविनाभावित्वं साध्यासिद्धौ न सिद्धमित्यसिद्धो हेतुः, उभयसिद्धिनान्तरीयकत्वादविनाभावित्वस्य । अन्यतः प्रमाणात्साध्यसिद्धौ हेतुः सिद्ध इति चेत्, किं तदानीं हेतुना, साध्यस्य सिद्धत्वात् । हेतोः सकाशात्साध्यस्य निश्चये कर्त्तव्येऽन्योन्याश्रयदोषश्च स्यात् । कथमित्याह—**द्वयोरित्यादि** । हेतुसिद्धिपूर्विका साध्यसिद्धिः, तदर्थत्वाद्धेतोः, हेतोश्च साध्याविनाभावलक्षणस्य साध्यसिद्धिपूर्विका सिद्धिरिति व्यक्तमितरेतराश्रयत्वम् ॥ १३८६ ॥ १३८७ ॥ १३८८ ॥

तृतीयपक्षमाह—**निदर्शनेऽपीति** ।

**निदर्शनेऽपि तत्सिद्धौ न स्याद्धर्मिणि साध्यधीः ।**
**न हि सर्वोपसंहारात्तस्य व्याप्तिर्विनिश्चिता ॥ १३८९ ॥**

निदर्शने—साध्यधर्मिव्यतिरिक्ते दृष्टान्तधर्मिणीत्यर्थः । **तत्सिद्धाविति** । हेतुसिद्धौ । एतदुक्तं भवति—यदि साध्यधर्मिव्यतिरेकेणान्यत्रैव दृष्टान्तधर्मिणि हेतोरविनाभावित्वमिष्यते, नतु सर्वोपसंहारेण सह साध्यधर्मिणा, तत्कथं साध्यधर्मिणि हेतोः सकाशात्साध्यप्रतिपत्तिः स्यात् । कथंच न स्यादित्याह—**नहीत्यादि** ॥१३८९॥

**योऽपीत्यादिना** साम्प्रतमुदाहरणानि दूषयते ।

**योऽप्ययं हेतुरत्रोक्तः कथञ्चिदुपलम्भतः ।**
**इति नास्त्येव विषयः सन्दिग्धोऽस्येति निष्फलः ॥१३९०॥**

योऽयं कथंचिदुपलम्भत इति हेतुरुक्तः, असौ निष्फलः, सन्दिग्धस्य विषयस्याभावात् । सिद्धसाध्यत्वादिति यावत् । न हि सिद्धो विषयो हेतोरिष्यते । किं तर्हि ? । संदिग्धः । तथाहि—संदिग्धे हेतुवचनात् । व्यस्तवत्सिद्धोऽपि हेतोरनाश्रय एव, सिद्धत्वात्साध्यस्येति ॥ १३९० ॥

अथ स्यात्—संदिग्ध एव हेतोरत्रापि विषयोऽस्तीति, अत आह—**भावस्येत्यादि** ।

**भावस्य हि तदात्मत्वं सर्वैरेव विनिश्चितम् ।**
**कथंचित्तस्य साध्यत्वं किमित्थमभिधीयते ॥ १३९१ ॥**

कथंचित्सदात्मकत्वं भावस्य सर्वैर्यदा निश्चितमेव तदा भवता किमित्थमभिधीयते कथञ्चित्सदात्मको भाव इति । **तदात्मत्वमिति** । सदात्मत्वम् । भावस्येत्युपलक्षणमभावस्यापि । कथंचित्—प्रमेयादिरूपेण सदात्मत्वं निश्चितमेवेति व्यर्थो हेतुः ॥ १३९१ ॥

अथ साङ्ख्यादीनामसिद्धमतः साध्यत इत्याह—**सर्वेत्यादि** ।

**सर्वभावैक्यवादेऽपि विकारात्मादिभेदतः ।**
**केनचिद्धिशदात्मत्वमात्मना संप्रकाश्यते ॥ १३९२ ॥**
**सर्वभावगतं येऽपि निःस्वभावत्वमाश्रिताः ।**
**तेऽपि तत्त्वत इत्यादि विशेषणमुपाश्रिताः ॥ १३९३ ॥**

सर्वभावानामैक्यवादः साङ्ख्यीयो यस्मिन्वादे स्थितस्तैरेव साङ्ख्यैः केनचिदात्मना स्वभावेन तदात्मत्वं संप्रकाश्यत एव । कथमित्याह—**विकारात्मादिभेदत इति** । विकारात्मा विकारस्वभावः । आदिशब्देन प्रकृतिरसङ्कीर्णा सुखदुःखादिस्वभावा

पुरुषाश्च परस्परतः प्रकृतेश्च भिन्ना गृह्यन्ते। येऽपीति। माध्यमिकाः। तेऽपि तत्त्वत इति सविशेषणं सर्वभावानां निस्स्वभावत्वमाश्रिताः, नतु सर्वथा। दर्शन(स)-मुत्पादादीनामभ्युपगमाच्च। तत्त्वत इति। न्यायतः। आदिशब्दात्परमार्थत इत्या-देर्ग्रहणम्। अवश्यं चैतदभ्युपगन्तव्यं सर्वैरेव भावस्य कथंचित्सदात्मत्वं निश्चित-मिति॥ १३९२॥ १३९३॥

**कथंचिदुपलभ्यत्वमन्यथा नहि सिध्यति।**
**व्यवहारस्य साध्यत्वे प्रसिद्धं स्यान्निदर्शनम्॥ १३९४॥**

अन्यथैवमनिष्यमाणे कथंचिदुपलभ्यमानत्वादित्ययं हेतुरपि न सिध्यति। पूर्वं सिद्धसाध्यता हेतुदोष उक्तः। इदानीं त्वसिद्धतोक्ता। अथ व्यवहारः साध्यते, तदा यत्र पूर्वं व्यवहारः कृतस्तत्प्रसिद्धं निदर्शनं सम्भवतीति त्रिरूप एव स्यात्। अन्यथा निदर्शनाभावे सोपि व्यवहारो न सिद्ध्येत्॥ १३९४॥

द्वितीयप्रयोगे दूषणमाह—**चन्द्रे**त्यादि।

**चन्द्रत्वेनापदिष्टत्वं सपक्षेऽप्यनुवर्त्तते।**
**क्वचिन्माणवके यद्वा कर्पूररजतादिके॥ १३९५॥**

**माणवक** इति। पुरुषे॥ १३९५॥

ननु च यदि चन्द्रप्रसाधनाय त्रिरूपो हेतुः सम्भवति। कथं तर्हि योऽचन्द्रत्वं शशिनि प्रतिजानीते तं प्रति चन्द्रत्वसाधनाय लोकस्य ब्रुवतोऽनुमानाभाव आचार्ये-णोक्तो "यत्राप्यसाधारणत्वादनुमानाभावे शाब्दप्रसिद्धेन विरुद्धेनार्थेनापोह्यते यथा-ऽचन्द्रः शशी सत्त्वादिति नासौ पक्ष"इत्येतेन ग्रन्थेनेत्याशङ्क्याह—**चन्द्रत्वसाधन** इति।

**चन्द्रत्वसाधने हेतावसाधारणता भवेत्।**
**प्रसिद्धिव्यतिरेके च वस्तुरूपसमाश्रये॥ १३९६॥**

**वस्तुरूपसमाश्रय** इति। वस्तुसदसत्तानुरोधिनि साधने। अत्रासाधारणतोक्ता, नतु प्रसिद्धिलक्षणे हेतौ। तस्येच्छानुरोधित्वादस्त्येवान्वयः। यस्मादसौ विप्रतिपन्नः सर्वप्रतीत्यपलापी न शक्यते प्रसिद्धिलक्षणेन चंद्रत्वं प्रतिपादयितुम्। न चान्यल्लि-ङ्गमस्ति वस्तुबलप्रवृत्तं, येन चंद्रत्वं शशिनि प्रतिपाद्येत, चन्द्रादिव्यपदेशस्येच्छामा-त्रानुरोधित्वेनावस्तुधर्मत्वादिति तं प्रत्यदृष्टान्तकमनुमानमुक्तम्। यथोक्तम् "चन्द्रतां

शशिनोऽनिच्छन्कां प्रतीतिं स वाञ्छति । इति तं प्रत्यदृष्टान्तं तदसाधारणं मतम्" इति । अचन्द्रसाधन इति कचित्पाठः । तत्रैवमिति सम्बन्धः । पूर्वपक्षवादिना य उक्तोऽचन्द्रः शशी सत्त्वादिति हेतुस्तस्मिन्नचंद्रसाधनहेतौ पूर्वपक्षवादिना प्रोक्ते सति चन्द्रत्वसाधनाय तं प्रति प्रवृत्तस्योत्तरपक्षवादिनोऽसाधारणताऽनुमानाभावे कारणमाचार्येणोदितं "यत्राप्यसाधारणत्वादनुमानाभाव" इत्यादिना प्रसिद्धिव्यतिरिक्तं वस्तुबलप्रवृत्तं लिङ्गमाश्रित्येति ॥ १३९६ ॥

तृतीयेऽपि हेतावाह—पतदित्यादि ।

**पतत्कीटकृतत्वस्य न विशेषः समीक्ष्यते ।**
**पतत्कीटकसंस्पर्शप्रतिलब्धोदयस्य च ॥ १३९७ ॥**

**न विशेषः समीक्ष्यत** इति । हेतुप्रतिज्ञयोः । प्रतिज्ञार्थैकदेशो हेतुरिति यावत् । तथाहि—अत्र विशिष्टकीटहेतुत्वं वेदनायाः साध्यत्वेनेष्टम्, तदेव च शब्दान्तरेण हेतुनोक्तमिति न विशेषो हेतुप्रतिज्ञयोः ॥ १३९७ ॥

अथ मतम्—यदा पतत इत्येतद्विशेषणं नोपादीयते प्रतिलब्धोदयत्वादित्येव तु सामान्यं हेतुरुच्यते तदा न प्रतिज्ञार्थैकदेशतेत्याह—पतत इत्यादि ।

**पततोऽस्येति कार्यं हि ध्रुवं हेतोर्विशेषणम् ।**
**अन्यथा व्यभिचारित्वं दुर्निवारं प्रसज्यते ॥ १३९८ ॥**

कीटान्तरकृतया वेदनया व्यभिचारो मा भूदिति विशेषणं कार्यम् ॥ १३९८ ॥

**कार्यताव्यवहारस्तु तस्य विस्मरणे सति ।**
**यदि साध्यस्त्रिरूपः स्यात्पूर्वसिद्धनिदर्शनात् ॥ १३९९ ॥**

अथ कार्यकारणव्यवहारो विस्मृतं प्रति साध्यते, तथासति त्रिरूपो हेतुः स्यादग्निधूमादेः प्रसिद्धकार्यकारणस्य दृष्टान्तत्वेन विद्यमानत्वात् ॥ १३९९ ॥

चक्षूरूपेत्यादावाह—चक्षुष इत्यादि ।

**चक्षुषो धर्मिरूपस्य सत्ता तावदनिश्चिता ।**
**तस्याश्च साधनं युक्तं नासिद्ध्यादिप्रसङ्गतः ॥ १४०० ॥**

तस्याश्च साधनं युक्तं नेति छेदः । असिद्ध्यादीत्यादिशब्देन व्यभिचारविरोधयोर्ग्रहणम् । सत्तायां साध्यायां सर्वो हेतुर्दोषत्रयं नातिवर्त्तते । तथाहि—भावे धर्मे हेतावसिद्धता, उभयधर्मेऽनैकान्तिकता, अभावधर्मे विरुद्धता । यथोक्तम्—"नासि-

द्वेर्भावधर्मोऽस्ति व्यभिचार्युभयाश्रयः । धर्मो विरुद्धो भावश्च सा सत्ता साध्यते कथम् ॥" इति । अथ चक्षुषि धर्मिणि चक्षुर्विज्ञानोत्पादनशक्तिः साध्यते, तदापि शक्तिः सत्तेत्यादेः पर्यायत्वात्तत्साधने सत्तासाधनप्रसङ्गः । व्यतिरेकेऽपि तस्या अतीन्द्रियत्वेनासिद्धत्वादाश्रयासिद्धो हेतुः स्यात् । एवं रूपग्रहणादित्ययमप्यपक्षधर्मत्वादसिद्धो द्रष्टव्यः ॥ १४०० ॥

कथं तर्हि भवतामपि चक्षुरादीन्द्रियसिद्धिरित्याह—**किन्त्वित्यादि** ।

**किन्तु रूपादिभावेऽपि चक्षुर्ज्ञानं न जायते ।**
**कदाचित्तेन तन्मात्रं न हेतुरिति गम्यते ॥ १४०१ ॥**

**कदाचिदिति** । निमीलितलोचनावस्थायाम् । न ह्यस्माभिराहत्य चक्षुरादीन्तया साध्यते, अपितु ज्ञानं केषुचिद्रूपादिषु सत्स्वन्वयव्यतिरेकावनुभवद्दृश्यते, तस्य कारणान्तरापेक्षिता तन्मात्रासम्भविता च साध्यत इति तदेव ज्ञानं धर्मीति नासिद्ध्यादिदोषः । यत्तत्कारणान्तरं तच्चक्षुरिति व्यवह्रियते । सिद्धान्ताश्रयस्तु भेदव्यवहारः ॥ १४०१ ॥

स्यादेतत्—भवतु यथोक्तया नीत्या विज्ञानस्य धर्मित्वम्, तथापि द्विरूप एव हेतुरित्याह—**स्वहेत्विति** ।

**स्वहेतुनियतोद्भूतिरङ्कुरादिश्च विद्यते ।**
**तस्मिन्दृष्टान्त एवं च वैलक्षण्यमतिस्फुटम् ॥ १४०२ ॥**

स्वहेतुनियता—हेतुप्रतिबद्धा, उद्भूतिर्यस्यासौ स तथोक्तः । एवंभूताः स्वकारणायत्तजन्मानोऽङ्कुरादयः कादाचित्का दृष्टान्तत्वेन सम्भवन्तीति यावत् । एवं च प्रयोगः कार्यः । ये यत्सन्निधाने कादाचित्कास्ते न तन्मात्रसम्भविनः, कारणान्तरसव्यपेक्षकाश्च, तद्यथा—सत्स्वपि क्षित्यादिषु बीजसन्निधानासन्निधानाभ्यामन्वयव्यतिरेकिणोऽङ्कुरादयः, सत्स्वपि रूपादिषु कादाचित्कं चक्षुर्ज्ञानं निमीलितानिमीलितावस्थायामिति व्यापकविरुद्धोपलब्धिः प्रतिषेधे । विधौ तु स्वभावहेतुः ॥ १४०२ ॥

कथंचिदित्यादावाह—**कथंचिदिति** ।

**कथंचिदसदात्मत्वसाधने च घटादिषु ।**
**पूर्ववद्धेतुवैफल्यमप्रसिद्धिश्च दृश्यते ॥ १४०३ ॥**

अत्रापि सिद्धसाध्यता, केनचित्प्रकारेण घटादीनामसत्त्वस्य सिद्धत्वात् । अथ न

सिद्धम्, अनुपलभ्यमानत्वादित्ययं हेतुरपि न सिध्यतीत्यसिद्धो हेतुरिति पूर्ववद्वाच्यं दूषणं यथा सदात्मत्वसाधने हेतावुक्तम् ॥ १४०३ ॥

यदुक्तं विपक्षाभावाद्वैधर्म्यदृष्टान्तो नास्तीत्यत्राह—अस्ति चेत्यादि ।

**अस्ति चात्रापि विस्पष्टं वैधर्म्येण निदर्शनम् ।**
**तदेव तेषां स्वं रूपं प्रयाति हि विपक्षताम् ॥ १४०४ ॥**
**कथंचन सदात्मत्वसाधनेपि निरात्मसु ।**
**इष्टसिद्धिरसिद्धिश्च वैधर्म्याप्तिस्तथैव च ॥ १४०५ ॥**

येन रूपेणोपलभ्यन्ते घटादयस्तेन रूपेण सदात्मत्वं तेषामिष्टमेव यदा तदा स एव स्वभावस्तेषां वैधर्म्यदृष्टान्तो भवेदेव । तस्मिन्स्वभावेऽनुपलभ्यमानत्वस्य हेतोर्निवृत्तत्वात् । एवं कथंचनेत्यत्रापि प्रयोगे तुल्या इष्टसिद्ध्यादयः । निरात्मस्विति । अभावेषु । वैधर्म्याप्तिरिति वैधर्म्यस्य साध्यनिवृत्तिलक्षणस्य साधनाभावेनाप्तिर्व्याप्तिः । तथैवेति । स्वभावस्य वैधर्म्यसम्भवेन ॥ १४०४ ॥ १४०५ ॥

त्वदीयेत्यादावाह—पितृशब्देत्यादि ।

**पितृशब्दश्रुतेर्याऽपि वेश्मनः प्रतिपाद्यते ।**
**पितृसंबन्धिता तत्र व्यक्तो हेतुस्त्रिलक्षणः ॥ १४०६ ॥**
**क्वचिद्धिप्रतिसंबद्धः स्वरः प्रागुपलक्षितः ।**
**तस्याननुभवे पूर्वं दुर्द्धरा हेत्वसिद्धता ॥ १४०७ ॥**

तस्येति । पितृसम्बद्धस्यान्यत्र क्वचित्प्रदेशेऽननुभवे सत्यसिद्धो हेतुः स्यात् ॥ १४०६ ॥ १४०७ ॥

यस्मिन्नित्यादिना तदेव त्रैरूप्यमादर्शयति ।

**यस्मिन्प्रागुपलब्धश्च नोपलब्धश्च यत्र सः ।**
**अन्वयो व्यतिरेको वा विस्पष्टं तत्र दृश्यते ॥ १४०८ ॥**
**शब्दस्तु ज्ञापयत्यर्थं नैव बाह्यं कथंचन ।**
**अन्यथासम्भवाभावाद्विलक्षागमकस्त्वसौ ॥ १४०९ ॥**
**तस्यां च प्रतिपाद्यायां वैलक्षण्यमतिस्फुटम् ।**
**विवक्षासंमुखीभावे न हि शब्दः प्रयुज्यते ॥ १४१० ॥**
**दीपस्तु ज्ञापको नैव नीलादेर्लिङ्गभावतः ।**
**ज्ञानोत्पादनयोग्यस्य जननात्तु तथोच्यते ॥ १४११ ॥**

**ज्ञापके लिङ्गरूपे च पक्षधर्मादि चिन्त्यते ।**
**अन्यथा चक्षुरादीनां कस्मादेतन्न चोद्यते ॥ १४१२ ॥**
**अन्यथानुपपत्त्याऽपि चाक्षुषत्वं न साधकम् ।**
**पक्षधर्मवियोगेन क्लीबास्तेनैकलक्षणाः ॥ १४१३ ॥**
**एकरूपतयोक्तानां द्वैरूप्यं चोपलक्षितम् ।**
**द्विरूपत्वेन चोक्तानां त्रैरूप्यं पक्षधर्मतः ॥ १४१४ ॥**
**अन्यथाऽनुपपत्त्यैव चाक्षेपादिति चेन्न तत् ।**
**शब्दादावन्यथापीष्टे चाक्षुषत्वेऽथ नास्त्यसौ ॥ १४१५ ॥**

शब्दस्य बाह्यार्थापेक्षयाऽन्यथानुपपन्नत्वमसिद्धमिति तं प्रत्यलिङ्गत्वमिच्छामात्रवृत्तित्वात्तस्य, अथ बुद्धिपरिवर्तिनमर्थमपेक्ष्य, तदा त्रैलक्षण्यमस्त्येव धूमस्येव, यतो विवक्षाया असम्मुखीभावे शब्दस्याप्रयोगात्तत्कार्यत्वाद्धूमवज्जातवेदसे गमक इष्ट एव, नतु वाचकरूपेण । प्रदीपस्तु लिङ्गद्वारेण धूमवन्न ज्ञापक इष्टः । किं तर्हि? । विज्ञानजननयोग्यघटाद्युत्पादनेन ज्ञापको रूढो नतु लिङ्गत्वेनेति तस्य लिङ्गभूतस्य पक्षधर्मत्वादिचिन्ता न युक्तैव । अन्यथा चक्षुरादीनामपि पक्षधर्मत्वादि चोदनीयं स्यात् । अन्यथेत्यादि प्रकृतार्थोपसंहारः । यतश्चाक्षुषत्वमनित्यत्वाविनाभाव्यपि शब्दे तदनित्यत्वं न साधयति, यतश्चावश्यं सर्वत्र पक्षधर्मत्वमाश्रयणीयम्, अतः पक्षधर्मत्वाश्रयणादेकरूपतयोक्तानां द्वैरूप्यमावश्यकं, द्विरूपतया चोक्तानां त्रैरूप्यं तत एव पक्षधर्मत इत्येकलक्षणा एव क्लीबा हेतवः । न चैतद्वक्तव्यमन्यथानुपपत्त्यैव पक्षधर्मादय आक्षिप्ता अतः पृथक् स्वातन्त्र्येण न तेषां लक्षणत्वमिति । यतः पक्षधर्मत्वमन्तरेणाप्यन्यथानुपपन्नत्वमस्तीति स्वयमेवोक्तम्—"अन्यथानुपपत्त्यैव शब्दादिवस्तुष्वपक्षधर्मभावेऽपि दृष्टा ज्ञापकतापि चे"ति । चाक्षुषत्वे चानित्यत्वान्यथानुपपन्नेऽप्यसौ पक्षधर्मो नास्तीत्यनेकान्त एव ॥ १४०८ ॥ १४०९ ॥ १४१० ॥ १४११ ॥ ॥ १४१२ ॥ १४१३ ॥ १४१४ ॥ १४१५ ॥

यदुक्तं स श्यामस्तत्पुत्रत्वादित्येष त्रिलक्षणेऽपि न निश्चित्यै प्रवर्त्तत इत्यत्राह—तत्पुत्रेत्यादि ।

**तत्पुत्रत्वादिहेतूनां सन्दिग्धव्यतिरेकतः ।**
**न त्रैलक्षण्यसद्भावो विजातीयाविरोधतः ॥ १४१६ ॥**

तत्पुत्रश्च भविष्यति नच श्याम इति नात्र कश्चिद्विरोध इति संदिग्धविपक्षव्यावृत्तिकत्वान्नायं त्रिलक्षण इत्यसिद्धो दृष्टान्तः ॥ १४१६ ॥

स्यादेतत्—अस्त्येव विरोधः । कारणाभेदे सति यदि कार्यं भिद्येत निर्हेतुकं स्यादित्याह—कर्मेत्यादि ।

**कर्माहारादिहेतूनां सर्वथापि विशेषतः ।**
**सम्भाव्यतेऽन्यथाभावस्तत्पुत्रत्वेऽपि तस्य हि ॥ १४१७ ॥**
**नायं स्वभावः कार्यं वा दृश्यस्यादृष्टिरेव वा ।**
**नच तद्व्यतिरिक्तस्य भवत्यव्यभिचारिता ॥ १४१८ ॥**

शुभादिकर्मविशेषादुष्णशीताद्याहारावस्थाभेदाच्चान्यथाभावो गौरादित्वं संभाव्यत इति कुतो विरोधः, कारणभेदस्य सिद्धत्वात् । अपिच तत्पुत्रत्वादिति नायं स्वभावहेतुर्यथा कृतकत्वं, नहि कृतकत्वस्यान्यत्तत्त्वमस्ति मुक्त्वाऽनित्यत्वम् नन्वेवं तत्पुत्रत्वस्यान्यः स्वभावो नास्ति, यतः पंचोपादानस्कंधात्मकस्य कंचिदपेक्ष्य तत्पुत्र इति व्यपदेशो नतु श्यामत्वस्य । नापि कार्यहेतुः । कार्यकारणभावासिद्धेः । नाप्यनुपलब्धिर्विधिविषयत्वात् । विरोधाभावाच्च न श्यामेतरवर्णाभावसिद्धिः । नचैतद्व्यतिरिक्तं लिङ्गमस्त्यन्यत्र प्रतिबन्धाभावात् । नच प्रतिबन्धमन्तरेण गमकत्वमतिप्रसङ्गात्तस्मान्नायं हेतुर्नापि त्रिलक्षण इति कुतोऽव्यभिचारः । दृश्यस्यादृष्टिरुपलब्धिलक्षणप्राप्तानुपलब्धिः ॥ १४१७ ॥ १४१८ ॥

ननु चेत्यादिनाऽव्यापितां लक्षणदोषमाह—

**ननु चाव्यभिचारित्वमन्येषामपि दृश्यते ।**
**कुमुदानां विकासस्य वृद्धिश्च जलधेर्यथा ॥ १४१९ ॥**
**लिङ्गं चन्द्रोदयो दृष्ट आतपस्य च भावतः ।**
**छायायाः परभागेषु सद्भावः संप्रतीयते ॥ १४२० ॥**
**तमस्युल्मुकदृष्टौ च धूम आरात्प्रतीयते ।**
**कृत्तिकोदयतश्चापि रोहिण्यासत्तिकल्पना ॥ १४२१ ॥**

यथा चन्द्रोदयात्कुमुदविकाससमुद्रवृद्ध्योरनुमानम् । आदिग्रहणात्सूर्योदयात्पद्मविकाशस्य, आतपसद्भावात्पर्वतादिषु परभागे च्छायानुमितिः, एवं दूरात्तमस्युल्मुकमर्द्धदग्धकाष्ठखण्डकं दृष्ट्वा धूमप्रतीतिः, तथा कृत्तिकानक्षत्रोदयाद्रोहिणीनक्षत्रस्यास-

न्नत्वं प्रतीयते यतोऽश्विनीमारभ्य यथापाठं क्रमेणैव नक्षत्राणामुदय इति प्रसिद्धम् । न चास्य सर्वस्य हेतुत्रयान्तर्भावोऽस्तीति तत्किमुच्यते न तद्व्यतिरिक्तस्य भवत्यव्यभिचारितेति ॥ १४१९ ॥ १४२० ॥ १४२१ ॥

अत्रोत्तरमाह—**तदत्रेत्यादि** ।

**तदत्र हेतुधर्मस्य तादृशोऽनुमितैर्मताः ।**
**जातास्तदेककालास्ते सर्वे बोधादयोऽपरे ॥ १४२२ ॥**
**कार्यात्कारणसंसिद्धिरियमेवंविधानतः ।**
**सम्बन्धानुपपत्तौ च सर्वस्यापि गतिर्भवेत् ॥ १४२३ ॥**

यस्मात्कारणात्ते बोधादयः—कुमुदविकाशादयो जाताः—उत्पन्नाः । किंविशिष्टाः ? । तदेककालाः—तैश्चन्द्रोदयातपोल्मुकैरेककालास्तादृशस्य हेतुधर्मस्य—हेतुविशेषस्यानुमितैर्मताः । एतदुक्तं भवति—यदेव कारणं चन्द्रोदयादीनां कुमुदबोधादिसमानकालोत्पन्नानां तदेव कुमुदबोधादिषु सहकारिकारणतां प्रतिपद्यत इति ते चन्द्रोदयादयस्तथाभूतं स्वकारणमनुमापयन्तोऽर्थान् समानकालभावीन्यपि कुमुदबोधादीन्यनुमापयन्ति, नतु साक्षादित्येवंविधं कार्यहेतावेवान्तर्भवतीति । अवश्यं चैतद्बोद्धव्यम्—यदि पुनरप्रतिबन्धादेव गमयन्ति तदा यत्किंचिद्गमयेयुरप्रतिबद्धत्वेनाविशिष्टत्वात् । तस्मादत्रापि प्रतिबन्धो वाच्यः । स च यथोक्तकार्यकारणभावलक्षण एव भवति ॥ १४२२ ॥ १४२३ ॥

रोहिण्यासत्त्या तर्हि कृत्तिकोदयस्य कः प्रतिबन्ध इत्याह—**प्रभञ्जनेत्यादि** ।

**प्रभञ्जनविशेषश्च कृत्तिकोदयकारणम् ।**
**यः स एव हि सन्तत्या रोहिण्यासत्तिकारणम् ॥ १४२४ ॥**
**हेतुधर्मप्रतीतिश्च तत्प्रतीतिरतो मता ।**
**तत्प्रतीतिः स्वतन्त्राऽस्ति न तु काचिदिहापरा ॥ १४२५ ॥**

प्रभञ्जनो वायुः । अत्राप्येकसामग्र्यधीनत्वाद्धेतुधर्मानुमानमिति । यथोक्तम्—"एकसामग्र्यधीनत्वं स्वरूपादेस्सतो गतिः । हेतुधर्मानुमानेन धूमेन्धनविकारवत् ॥" इति ॥ १४२४ ॥ १४२५ ॥

अथ प्रतिबिम्बाद्बिम्बस्य या गतिस्तस्या न क्वचिदन्तर्भावोऽस्त्यवस्तुत्वात्प्रतिबिम्बस्य । तस्मादव्यापि लक्षणमित्याशङ्क्याह—**लिङ्गाचेत्यादि** ।

**लिङ्गाच्च प्रतिबिम्बाख्यादनुमानं प्रवर्त्तते ।**
**यद्बिम्बविषयं युक्तं तत्रान्यत्कार्यलिङ्गजात् ॥ १४२६ ॥**

**सहैकत्रे**त्यादिना चोदकाभिप्रायमाशङ्कते ।

**सहैकत्र द्वयासत्त्वान्न वस्तुप्रतिबिम्बकम् ।**
**तत्कथं कार्यता तस्य युक्ता चेत्पारमार्थिकी ॥ १४२७ ॥**

अवस्तुत्वे हेतुः सहैकत्र द्वयासत्त्वादिति । यत्रैव प्रदेशे आदर्शरूपं दृश्यते प्रतिबिम्बकं च तत्रैव, न चैकत्र प्रदेशे रूपद्वयस्यास्ति सहभावः, सप्रतिघत्वात्, अतः सहैकत्र द्वयो रूपयोः सत्त्वं न प्राप्नोति । तस्माद्भ्रान्तिरियम् । अथवा—**सहैकत्र द्वयासत्त्वा**दिति । कतमस्य द्वयस्य ? । आदर्शतलस्य चन्द्रप्रतिबिम्बस्य च । अन्यत्रैव देशे आदर्शतलं भवति, अन्यत्रैवान्तर्गतं चन्द्रप्रतिबिम्बकं दृश्यते कूप इवोदकम् । अन्यत्र चोत्पद्यमानं किमित्यन्यत्रोपलभ्यते । अतो नास्त्येव किंचिद्वस्तुभूतं प्रतिबिम्बकं नाम । सामग्र्यास्तु तस्यास्तादृशः प्रभावोऽयं तथा तद्दर्शनम् । अचिन्त्या हि धर्माणां शक्तिप्रभेदा इति ॥ १४२७ ॥

**मूर्त्ते**त्यादिना परिहरति ।

**मूर्त्तस्य प्रतिबिम्बस्य यद्यप्यस्य न वस्तुता ।**
**तदाभासं तु विज्ञानं केनावस्तु भविष्यति ॥ १४२८ ॥**
**तस्यैव चात्र लिङ्गत्वं कार्यं चेष्टं तदेव हि ।**
**बिम्बाधिपत्यादेतद्धि निरालम्बं प्रवर्त्तते ॥ १४२९ ॥**

ज्ञानमेवात्र तथाभूतं कार्यं लिङ्गमभिप्रेतं, नतु बाह्यं प्रतिबिम्बाख्यं वस्तु॥१४२८॥ ॥ १४२९ ॥

कथमुक्तं त्रिरूपलिङ्गवचनं परार्थं पुनरुच्यत इति, यावता पक्षनिगमोपनयवचनमप्यन्यैः परार्थमनुमानं कीर्त्तितम् । एतदेव दर्शयन्नाह—**प्रतिज्ञे**त्यादि ।

**प्रतिज्ञादिवचोऽप्यन्यैः परार्थमिति वर्ण्यते ।**
**असाधनाङ्गभूतत्वात्प्रतिज्ञाऽनुपयोगिनी ॥ १४३० ॥**

**असाधने**त्यादिना प्रतिविधत्ते । सिद्धिः साधनं, प्रमेयाधिगतिरिति यावत्, तस्याङ्गभूतम्—कारणम्, तस्य प्रतिषेधोऽसाधनाङ्गभूतत्वम् । तस्मादसाधनाङ्गभूतत्वादनुपयोगिनी न प्रयोक्तव्येत्यर्थः । अनुपयोगिनी—अकारणभूतेतिव्याख्याने प्रतिज्ञार्थैकदेशः स्यात् ॥ १४३० ॥

कथमसाधनाङ्गमित्याह—असम्बन्धादित्यादि।

**असम्बन्धान्न साक्षाद्धि सा युक्तार्थोपपादिका।**
**असक्तसूचनान्नापि पारम्पर्येण युज्यते॥ १४३१॥**
**साध्यसाधनधर्मस्य विषयस्योपदर्शनात्।**
**दृष्टान्तपदवत्त्वेष साधनाङ्गं यदीष्यते॥ १४३२॥**
**अभ्यनुज्ञादिवाक्येन नन्वत्र व्यभिचारिता।**
**निष्फलं च तदा यत्र विषयस्योपदर्शनम्॥ १४३३॥**

असक्तसंसूचकत्वं तु साध्यस्यैवाभिधानात्। एतदुक्तं भवति—शब्दानामर्थेन सह सम्बन्धाभावान्न तावत्साक्षादुपयुज्यते, नापि हेतुवचनवत्पारम्पर्येण, सक्तासंसूचकत्वादिति। यथोक्तम्—"तत्पक्षवचनं चक्रुरभिप्रायनिवेदने। प्रापणं संशयोत्पत्तेस्ततः साक्षान्न साधनम्॥ साध्यस्यैवाभिधानेन पारम्पर्येण नाप्यलम्॥" इति। केचिन्मन्यन्ते—साध्यसाधनधर्मयोर्विषयोपदर्शनार्थमनवयवभूताऽपि सती दृष्टान्तपदवत्प्रतिज्ञा प्रयोक्तव्येति। "यतो रूपद्वयं शेषं दृष्टं तेन प्रदर्श्यते" इति वचनात्। दृष्टान्तपदं पृथगनवयवभूतमपि पक्षधर्मव्यतिरिक्तरूपद्वयप्रदर्शनार्थमेव प्रयुज्यत इति। तान्प्रत्याह—दृष्टान्तेत्यादि। अभ्यनुज्ञावाक्यम्—एवं कुरु शब्दमनित्यं साधयेति। आदिशब्देनाज्ञाभ्यर्थनावाक्यं गृह्यते। एवम्भूतस्यापि वाक्यस्य प्रयोगनिर्देशार्थं निर्देशः स्यात्, नह्येभिरपि विनाऽकाण्ड एव साधनस्य प्रवृत्तिः सम्भवतीति। **निष्फलमिति**। विनापि तेन साध्यप्रतीतेः। तथाहि—यत्कृतकं तत्सर्वमनित्यं कृतकश्च शब्द इत्येतावन्मात्रे प्रोक्तेऽनित्यः शब्द इति प्रतीतिर्भवत्यन्तरेणापि प्रतिज्ञावचनम्॥ १४३१॥ १४३२॥ १४३३॥

**सपक्षादिव्यवस्था चेत्कथं पक्षाप्रयोगतः।**
**नातस्त्रैरूप्यमप्यस्ति तदपेक्षानिबन्धनम्॥ १४३४॥**

सपक्षादिव्यवस्था तर्हि कथम्। तथाहि—साध्यधर्मसामान्येन समानोऽर्थः सपक्ष इत्युच्यते। तदभावः प्रसाधितश्चासपक्ष इति। असति हि प्रतिज्ञानिर्देशे तदपेक्षानिबन्धनं सपक्षाश्रयनिबन्धनं त्रैरूप्यमपि नास्तीति सर्वमाल्लनविस्ती(की ?)र्णं स्यादिति॥ १४३४॥

नेत्यादिना प्रतिविधत्ते।

**न साधनाभिधानेस्ति सपक्षादिविकल्पना ।**
**शास्त्रे तु प्रविभज्यन्ते व्यवहाराय ते तथा ॥ १४३५ ॥**

तथाह्यव्युत्पन्नसपक्षादिव्यवहारो भटादिरपि यत्र धूमस्तत्र वह्निर्धूमश्चात्रेत्येतावन्मात्रमुक्तोऽवधारितान्वयव्यतिरेकः सपक्षादिव्यवहारमन्तरेणैव वह्निं प्रतिपद्यत एव, तस्मान्न साधनकाले सपक्षादिव्यवस्थाऽस्ति । कुत्र तर्हि सपक्षादिव्यवहार इत्याह—**शास्त्रे** त्विति ॥ १४३५ ॥

यदि वा साधनाभिधानकालेऽपि तद्व्यवस्था क्रियमाणा न विरोधिनीति प्रतिपादयति—**प्रकृते**त्यादि ।

**प्रकृतार्थाश्रया साऽपि यदि वा न विरुध्यते ।**
**न वाद्यकाण्ड एवाह परस्यापि हि साधनम् ॥ १४३६ ॥**

यद्यपि साधनाभिधानकाले प्रतिज्ञाप्रयोगो नास्ति, तथापि प्रकृतमर्थं साध्यधर्मिणं समाश्रित्य सा व्यवस्था क्रियमाणा न विरुध्यत एव । नचैतद्वक्तव्यं साधनकाले प्रकृत एवार्थो नास्तीति, यतो न, अकाण्ड एव—अप्रस्ताव एव, परस्यापि—प्रतिज्ञाप्रयोगवादिनः, वादी साधनमाह ॥ १४३६ ॥

भवतु नाम जिज्ञासितविशेषो धर्मी प्रकृतः, तथापि सा क्रियमाणा व्यवस्था प्रकृतं धर्मिणमाश्रित्य कथं कर्त्तव्येत्याह—**जिज्ञासिते**ति ।

**जिज्ञासितविशेषे हि वर्त्तनात्पक्षधर्मता ।**
**सपक्षस्तत्समानत्वाद्विपक्षस्तदभावतः ॥ १४३७ ॥**

सुबोधम् ॥ १४३७ ॥

उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनय इत्युपनयलक्षणम् । तत्रोपनयवचनं न साधनम्, उक्तहेत्वर्थप्रकाशकत्वात्, द्वितीयहेतुवचनवदित्याचार्यदिग्नागपादैः प्रमाणिते, भाविविक्तादयो हेत्वसिद्ध्यर्थमाहुः—न खलु पक्षधर्मत्वं प्रतिज्ञानन्तरभाविना हेतुवचनेन प्रकाश्यते, कारणमात्राभिधानात् । अनित्यः शब्दो भवति कृतकत्वात्, तत्पुनः कृतकत्वं किं शब्देऽस्ति नास्तीति चेति, तस्यास्तित्वमुपनयात्प्रतीयते । अथवा प्रतिबिम्बनार्थमुपनयनं, पूर्वं हि हेतुवचनेन निर्विशेषं कृतकत्वं शब्दे निर्दिष्टं, तेन दृष्टान्ते प्रदर्शितसाध्याविनाभावित्वस्य कृतकत्वस्योपनयेन प्रतिबिम्बनमुषनसा ( मुपनयात् ? ) दर्श्यते—तथाच कृतकः शब्द इति । तस्माद्विशेषद्योतनान्न पुनरुक्ततेति । अत्राह—**प्रतिज्ञे**त्यादि ।

**प्रतिज्ञानभिधाने च कारणानभिधानतः ।**
**कर्त्तव्योपनयस्योक्तिर्न सद्भावप्रसिद्धये ॥ १४३८ ॥**
**प्रागुक्ते भावमात्रे च पश्चाद्व्याप्तेः प्रकाशनात् ।**
**विवक्षितार्थसंसिद्धेर्विफलं प्रतिबिम्बकम् ॥ १४३९ ॥**

**सद्भावप्रसिद्धय** इति । हेतोर्धर्मिणीति शेषः । अयमत्रार्थः—प्रतिज्ञाप्रयोगस्य यथोक्तया नीत्या निषिद्धत्वात्तत्समनन्तरभाविकृतकत्वादिकारणाभिधानं नास्त्येव । ततश्च कारणाभिधानपूर्वस्योपनयस्योक्तिर्न कर्त्तव्यैव । अथोपनयस्योक्तिः पक्षधर्मत्वप्रसाधनाय क्रियते, तदा कारणाभिधानस्य फलमन्यद्वक्तव्यम् । तत्रैतत्स्यात्कारणत्वप्रतिपादनमेव फलमिति । तन्न । तेनैव तावत्प्रतिपादितेन कोऽर्थो यतोऽन्यथाऽपि साध्यसिद्धिर्भवत्येवेति दर्शितमेव । तस्मात्पक्षधर्मत्वप्रतिपादनं मुक्त्वा नान्यत्फलं शक्यते हेतुवचनस्य वक्तुम् । तदा प्रथमतस्तेनैव हेतुवचनेन पक्षधर्मत्वे प्रतिपादिते तत्प्रतिपादनायोपनयनमुपादीयमानं स्फुटतरमेव पुनरुक्ततां प्रकाशयतीति कुतोऽसिद्धता हेतोः । प्रतिबिम्बनमपि व्यर्थमेव, यतस्तस्मिन्पक्षधर्ममात्रे हेतुवचनेन प्रागुक्ते सति साध्यधर्मेण च तस्य व्याप्तौ कथितायां विवक्षितार्थसंसिद्धेरुच्यमानं स्फुटतरमेव पुनरुक्ततामावहतीति कुतोऽत्राप्यसिद्धता हेतोः ॥ १४३८ ॥ १४३९ ॥

तत्र हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनमिति निगमनलक्षणम् । तस्मादनित्य इत्यादौ तस्मादित्यनेन हेतोः सामर्थ्यमुदाहरणप्रसिद्धमपदिश्य यत्प्रतिज्ञार्थं पुनर्वचनं क्रियते तन्निगमनम् । निगम्यन्तेऽनेन प्रतिज्ञाहेतूदाहरणोपनया एकार्थतया समर्थ्यन्ते सम्बध्यन्त इति निगमनम् । तत्र प्रतिज्ञाप्रयोग एव तावन्नास्ति, कुतस्तदनुवादात्मकस्य निगमनस्येत्यतो निगमनं न साधनावयवः । तत्राचार्यदिङ्नागपादैरुक्तम्—निगमनं पुनरुक्तत्वादेव न साधनमिति । अत्रोद्योतकरादयः प्राहुः—न पौनरुक्त्यमत्र, यस्मात्साध्यनिर्देशः प्रतिज्ञा, निगमनं तु सिद्धनिर्देशः, । न च निगमनेन विना सिद्धिरस्ति । तथाहि—तेन विना तदन्यावयवोक्तावपि शङ्का न निवर्त्तते किमनित्यः शब्द इति, अतस्तदाशङ्कानिवृत्त्यर्थं वाच्यं निगमनं पृथगिति । तदत्राह—त्रिरूपेत्यादि ।

**त्रिरूपहेतुनिर्देशसामर्थ्यादेव सिद्धितः ।**
**न विपर्ययशङ्कास्ति व्यर्थं निगमनं ततः ॥ १४४० ॥**

अनित्यत्वेन प्रदर्शिताविनाभावि कृतकत्वं यदा शब्दे धर्मिणि निश्चितं, कुतस्तत्र विपर्ययस्य नित्यत्वस्य शङ्का, नहि ज्वलज्ज्वलनज्वालाकलापपरिगते परिनिश्चितात्मनि भूतत्त्वे शैत्याशङ्का कर्तुं युक्ता स्वस्थचेतसः । नापि निगमनाद्वचनमात्रान्निर्युक्तिकात्तु सा विनिवर्त्तते ॥ १४४० ॥

अविद्धकर्णस्त्वाह—"विप्रकीर्णैश्च वचनैर्नैकार्थः प्रतिपाद्यते । तेन सम्बन्धसिध्यर्थं वाच्यं निगमनं पृथक् ।" इति अत्राह—सम्बद्धैरिति ।

**सम्बद्धैरेव वचनैरेकोऽर्थः प्रतिपाद्यते ।**
**नातः सम्बन्धसिद्ध्यर्थं वाच्यं निगमनं पृथक् ॥ १४४१ ॥**

हेतोः साध्येन तादात्म्यतदुत्पत्तिलक्षणे सम्बन्धे प्रतिपादितेऽर्थद्वारेण सम्बद्धैरेव पक्षधर्मान्वयव्यतिरेकवचनैरेकोऽर्थः सामर्थ्याद्यथासमीहितः प्रतिपाद्यत इति । यद्यपि विप्रकीर्णानि वचनानि, तथापि सम्बद्धान्येवैकार्थोपसंहारेणेति न तत्सम्बन्धसिद्धये पृथग्निगमनं वाच्यम् ॥ १४४१ ॥

**द्वैविध्यमनुमानस्य केचिदेवं प्रचक्षते ।**
**विशेषदृष्टसामान्यपरिदृष्टत्वभेदतः ॥ १४४२ ॥**

केचिदिति । कुमारिलादयः । ते हि—द्विविधमनुमानं विशेषतोदृष्टं सामान्यतोदृष्टं चेति वर्णयन्ति ॥ १४४२ ॥

तत्र विशेषतोदृष्टं कतरदित्याह—प्रत्यक्षेत्यादि ।

**प्रत्यक्षदृष्टसम्बन्धं ययोरेव विशेषयोः ।**
**गोमयेन्धनतद्देशविशेषादिमतिः कृता ॥ १४४३ ॥**
**तद्देशस्थेन तेनैव गत्वा कालान्तरेऽपि तम् ।**
**यदाऽग्निं बुध्यते तस्य पूर्वबोधात्पुनः पुनः ॥ १४४४ ॥**
**सन्दिह्यमानसद्भाववस्तुबोधात्प्रमाणता ।**
**विशेषदृष्टमेतच्च लिखितं विन्ध्यवासिना ॥ १४४५ ॥**
**अग्निधूमान्तरत्वे तु वाच्ये सामान्यतोमितौ ।**
**सामान्यदृष्टमेकान्ताद्गन्तेत्यादित्य उच्यते ॥ १४४६ ॥**

अयमर्थः—पूर्वं कश्चित्क्वचित्प्रदेशविशेषे वह्निधूमविशेषौ प्रत्यक्षेण गृहीत्वा कालान्तरेण दूरं गतो वा यदा पुनःपुनस्तमेव धूमविशेषं दृष्ट्वा तमेव वह्निं पूर्वं परि-

गृहीतमनुमिमीते तद्विशेषतोदृष्टमनुमानम्, पूर्वप्रत्यक्षगृहीतविशेषविषयत्वात् । नच गृहीतग्राहित्वादप्रमाणम्, यतः किं वह्निरास्ते परिनिवृत्तो वेति सन्देहविनिवृत्तेरधिकाया विद्यमानत्वात् । इति पिण्डार्थः । अवयवार्थस्तूच्यते—**प्रत्यक्षदृष्टसम्बन्धमिति** । कः सम्बन्धः । अत्रोच्यते । शबरस्वामिनाऽनुमानलक्षणमुक्तम्—अनुमानं ज्ञातसम्बन्धस्यैकदेशदर्शनादेकदेशान्तरेऽसन्निकृष्टे बुद्धिः । तद्द्विविधं प्रत्यक्षदृष्टसम्बन्धं सामान्यतोदृष्टसम्बन्धं च । प्रत्यक्षदृष्टसम्बन्धो यथा—धूमाकृतिदर्शनादग्न्याकृतेर्विज्ञानम् । सामान्यतोदृष्टं यथा—देवदत्तस्य गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्यादित्यस्य गतिस्मरणमिति । तत्र कुमारिल एतत्प्रत्यक्षतोदृष्टसम्बन्धमनुमानं व्याचिख्यासुराह—**प्रत्यक्षे**त्यादि । प्रत्यक्षे दृष्टसम्बन्धमनुमानमेवं प्रचक्षत इति सम्बन्धः। यतः पूर्वस्मिन्ननन्तरश्लोके एवं प्रचक्षत इति प्रकृतम् । **ययो**रिति । ययोरेवाग्निधूमविशेषयोर्विषयभूतयोर्गोमयेन्धनविशेषबुद्धिः कृता—उत्पादिता पुरुषेण—गोमयेन्धनप्रभवावेतावग्निधूमाविति, तथा पर्वतादिदेशविशेषमतिः कृता—एतत्पर्वतादिदेशविशेषस्थावेतावग्निधूमाविति । गोमयमिन्धनं ययोरग्निधूमयोस्तौ गोमयेन्धनौ, स देशो ययोस्तौ तद्देशौ गोमयेन्धनौ च तौ तद्देशौ चेति विग्रहः । तावेव विशेषौ तावादी येषां सर्जसरलसल्लकीवनप्रभृतीनां वह्न्यादिविशेषान्तराणां तानि गोमयेन्धनतद्देशविशेषादीनि । तेषु मतिरिति सप्तमी(ति)योगविभागात्समासः। सा—एवम्भूता प्रत्यक्षा मतिर्येन प्रमात्रा कृता—उत्पादिता, स तद्देशस्थेन तेनैव धूमादिना लिङ्गेन तमेवाग्निं कालान्तरेण यदा बुध्यते । पुनः पुनरिति सम्बन्धः । तदा तस्य बोधस्य पूर्वबोधात्प्रत्यक्षात्मकात्प्रमाणता—प्रमाणान्तरतेत्यर्थः । अथवा—पूर्वबोधात्कारणात्तमेव वह्निं बुध्यत इति सम्बन्धः । किमास्ते वह्निराहोस्विन्निवृत्त इत्येवं सन्दिह्यमानः सद्भावो यस्य वस्तुनस्तत्तथा, तच्च तद्वस्तु चेति तत्तथा, तस्य बोध इति विग्रहः । एतच्च यथोक्तं प्रत्यक्षदृष्टसम्बन्धमनुमानं विशेषतो दृष्टमनुमानमित्येवं विन्ध्यवासिना गदितम् । सामान्यतो दृष्टमाह—**अग्निधूमे**त्यादि । भाष्यकारेण हि सामान्यतोदृष्टानुमाने देशान्तरप्राप्त्याऽऽदित्यगतिस्मरणमुदाहृतम् । तत्रेदं चोद्यं भवति—ननु चाग्न्यन्तरे धूमान्तरे च सामान्यधर्मसमाश्रयेण यदाऽनुमितिः क्रियते तदा सामान्यतोदृष्टमनुमानमग्निधूमयोरस्त्येव, किमिति भाष्यकारेणाग्निधूमौ बुद्धौ विपरिवर्त्तमानत्वेन प्रत्यासन्नावुत्सृज्याऽऽदित्य एव सामान्यतोदृष्टावुदाहृत इत्येतच्चोद्यमाशङ्क्य कुमारिलो भाष्यकाराभिप्रायं वर्णयन्नाह—**अग्निधूमान्तर** इति । सामान्य-

तोऽनुमितौ—सामान्यतोदृष्टानुमाने उदाहरणत्वेनाग्निधूमान्तरत्वे वाच्ये यद्भाष्यकारेणादित्योदाहरणं कृतं तत्सर्वकालमादित्यगतेरप्रत्यक्षत्वादेकान्तेन । अत्राऽऽदित्यगतौ सामान्यतोदृष्टमेवानुमानं सम्भवति न विशेषतोदृष्टमिति मन्यमानेनासङ्कीर्णविषयं दर्शयितुमादित्य एवोदाहरणत्वेनोच्यते, न पुनरग्निधूमयोः सामान्यतोदृष्टस्यैवानुमानस्याभावादिति ॥ १४४३ ॥ १४४४ ॥ १४४५ ॥ १४४६ ॥

तदत्रेत्यादिना दूषणमाह—

**तदत्र क्षणभङ्गस्य व्यापिनः प्रतिपादनात् ।**
**प्राक्तनस्यैव तेनैव नानुमानस्य सम्भवः ॥ १४४७ ॥**
**कल्पितं चेत्तदेकत्वं प्रबन्धैक्यविवक्षया ।**
**न तस्यावस्थितिः काचिद्वस्तुत्वं नच भाविकम् ॥ १४४८ ॥**

**व्यापिन** इति । अग्निधूमादिसकलपदार्थव्यापकस्य । सत्यपि क्षणिकत्वे प्रबन्धैकत्वादेकत्वमिति चेदाह—**कल्पित**मिति । तदा कल्पितमेकत्वं न पारमार्थिकं, परमार्थतस्तु न कस्यचिदवस्थितिः । ततश्च तद्देशस्थेन तेनैवेत्येतन्न युज्यते । नापि कल्पितस्य वस्तुत्वं, ततश्च सन्दिह्यमानसद्भाववस्तुबोधादित्यसम्बद्धं स्यात् ॥ १४४७ ॥ ॥ १४४८ ॥

अथापि स्यात्कल्पनासमारोपितमेवैक्यमाश्रित्य विशेषतो दृष्टमाख्यातम्, न भाविकमित्याह—**नचे**त्यादि ।

**नच निर्विषयं ज्ञानं युष्माभिरनुमन्यते ।**
**विकल्पितार्थतायां च व्यक्तं निर्विषयं भवेत् ॥ १४४९ ॥**

स्यादेतद्यद्यपि व्यक्तिर्विनाशिनी जातिस्त्वनपायिनी विद्यते, ततश्च भाविकमेकत्वं भविष्यति, नच निर्विषयत्वमित्याह—**व्यक्तिरूपे**त्यादि ।

**व्यक्तिरूपस्य नाशेऽपि तिष्ठत्येवाकृतिस्तयोः ।**
**यदि न क्षणभङ्गासेर्भावे तस्या अपि ध्रुवम् ॥ १४५० ॥**
**प्रत्यक्षदृष्टः सम्बन्धो ययोरेव विशेषयोः ।**
**इत्ययं नियमश्चोक्तो युष्माभिः केन हेतुना ॥ १४५१ ॥**
**दृष्टैकदानुमानेन तस्यैव ह्यनुमा पुनः ।**
**प्रमाणं नेष्यते कस्मात्को विशेषो हि पूर्वके ॥ १४५२ ॥**

**विज्ञातार्थाधिगन्तृत्वान्न प्रमाणमिदं यदि।**
**स्मार्त्तवत्प्राक्तनोऽप्येतत्समानं किं न वीक्ष्यते॥ १४५३॥**
**अन्तरालप्रवृत्तस्य सन्देहस्य निवर्त्तनात्।**
**आधिक्यं तत्र चेदेतदत्रापि सदृशं न किम्॥ १४५४॥**
**तस्मात्किमस्ति नास्तीति सन्देहविनिवृत्तिकृत्।**
**स एवेति निराकाङ्क्षमेतत्सामान्यदर्शनम्॥ १४५५॥**

आकृतिः—जातिः। यदीत्यभ्युपगमे। जातिव्यक्त्योः परेणैक्यस्येष्टत्वात्कुतो व्यक्तिविनाशे जातेरवस्थानं संभवति, अन्यथा भिन्नयोगक्षेमत्वादेकान्तेन तयोर्भेदोऽभ्युपगन्तव्यः स्यात्। भाव इति। अयमभ्युपगमवाद एव। एकदा तावज्जातिर्विस्तरेण निरस्तैवेति कुतस्तस्याः सत्त्वम्। भावेऽपि—सत्त्वेऽपि। तस्या अपि क्षणभङ्गः प्राप्नोति। व्यापिनः क्षणभङ्गस्य प्रसाधनात्। अपि च—यदाऽनुमानपरिच्छिन्नं पुनरपि तत एव लिङ्गात्तमेव वह्निं परिच्छिनत्ति, तदाऽपि विशेषतो दृष्टं किं न वर्णितम्, येन प्रत्यक्षतो दृष्ट इति विशेषणमिष्टम्। अधिगतार्थाधिगन्तृत्वादिति चेत्। न। प्रत्यक्षदृष्टेऽपि तत्तुल्यम्। अन्तरालवर्त्तिसन्देहनिवर्त्तनमधिकं प्रत्यक्षदृष्टेऽस्तीति चेन्न। अनुमानदृष्टेऽपि समानमाधिक्यम्। तस्मात्सर्वत्रैव सामान्यतो दृष्टमेव क्षणक्षयिषु भावेष्वनुमानं न विशेषतो दृष्टं नाम॥ १४५०॥ १४५१॥ ॥ १४५२॥ १४५३॥ १४५४॥ १४५५॥

**न प्रमाणमिति प्राहुरनुमानं तु केचन।**
**विवक्षामर्पयन्तोऽपि वाग्भिराभिः कुदृष्टयः॥ १४५६॥**

केचिदिति। बार्हस्पत्यादयः। आभिरिति। नानुमानं प्रमाणमित्येवंरूपाभिः। अनेन स्ववचनविरोधमाह। तथाहि—वचनाल्लिङ्गाद्विवक्षा प्रतीयत इति मन्यमानेन परस्मै स्वाभिप्रायनिवेदनाय व्याहरता दर्शितमनुमानस्य प्रामाण्यम्, नच तत्प्रमाणमिति ब्रुवता तदेव प्रतिषिद्धमितीतरेतरव्याघातः। एतच्च दूषणं पश्चाद्व्यक्तीकरिष्यते॥ १४५६॥

**त्रिरूपलिङ्गपूर्वत्वात्स्वार्थं मानं न युज्यते।**
**इष्टघातकृता जन्यं मिथ्याज्ञानं यथा किल॥ १४५७॥**
**भावादननुमानेऽपि न चानुमितिकारणम्।**
**द्वैरूप्यमिव लिङ्गस्य त्रैरूप्यं नास्त्यतोऽनुमा॥ १४५८॥**

**अनुमानविरोधस्य विरुद्धानां च साधने ।**
**सर्वत्र सम्भवात्किञ्च विरुद्धाव्यभिचारिणः ॥ १४५९ ॥**

तत्र तावच्चार्वाकाः प्रमाणयन्ति—स्वार्थानुमानं प्रमाणं न भवति, त्रिरूपलिङ्गपूर्वत्वान्मिथ्याज्ञानवत् । परार्थाश्चक्षुरादयः सङ्घातत्वाच्छयनासनाद्यङ्गवदित्येतस्येष्टविघातकृतः किल त्रिरूपत्वान्मिथ्याज्ञानमेतज्जन्यं त्रिरूपलिङ्गजमिति । नच त्रैरूप्यमनुमितिकारणम्, अननुमानेऽपि भावाद्वैरूप्यवत् । अपिच सर्वत्र साधनेऽनुमानविरोधः सम्भवति । तद्यथा—विवक्षितसाध्यधर्मो धर्मिविशेषणं न भवति एतत्समुदायैकदेशत्वाद्धर्मिस्वरूपवत् । अनेन हि सर्वमनुमानं निरनुमानीकृतम् । सर्वत्र चानुमाने कृते विशेषविरुद्धानां सम्भवस्तद्यथा—अनित्यः शब्दः कृतकत्वाद्घटवदिति कृते कश्चिद्विशेषविरुद्धमुद्भावयेत् । यथाऽयं हेतुरनित्यत्वं साधयति तथाऽऽकाशगुणत्वाभावमपीत्येवमादि । सर्वत्र च विरुद्धाव्यभिचारी सम्भवति । तद्यथा—अनित्यः शब्दः कृतकत्वाद्घटवदिति कृते कश्चिद्विरुद्धाव्यभिचारिणमाह—नित्यः शब्दः श्रावणत्वाच्छब्दत्ववदिति । एवमादिस्तत्त्वटीकायामुदाहरणप्रपञ्चो द्रष्टव्यः ॥१४५७॥१४५८॥ ॥ १४५९ ॥

तथा भर्तृहरिराह—

**अवस्थादेशकालानां भेदाद्भिन्नासु शक्तिषु ।**
**भावानामनुमानेन प्रसिद्धिरतिदुर्लभा ॥ १४६० ॥**
**विज्ञातशक्तेरप्यस्य तां तामर्थक्रियां प्रति ।**
**विशिष्टद्रव्यसम्बन्धे सा शक्तिः प्रतिबध्यते ॥ १४६१ ॥**
**यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः ।**
**अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥ १४६२ ॥**

अवस्थादेशकालभेदेन पदार्थानां शक्तयो भिन्नाः । अतो न शक्यतेऽनुमानात्तद्भावनिश्चयः कर्तुम्, न ह्येवं शक्यतेऽनुमानात्प्रत्येतुम्—देवदत्तो भारोद्वहनसमर्थो न भवति, देवदत्तत्वाद्बालावस्थदेवदत्तवदिति । अत्र ह्यवस्थाभेदेन शक्तिभेदसम्भवाद्व्यभिचारः । तथा देशभेदेनामलकीखर्जूरादीनां रसवीर्यविपाकभेदो दृश्यते, तत्र नैवं शक्यते कर्तुम्—सर्वाऽऽमलकी कषायफला, अनुभूयमानामलकीवदिति । तथा कालभेदेन कूपोदकादीनां शीतोष्णादिभेदः सम्भवति, तत्र सर्वा आपः शीता इति

न शक्यते निश्चयः कर्तुम् । इत्येवमादि । अवस्थादेशकालानामिति भेदादित्येतदपेक्ष्य षष्ठी । भावानामिति प्रसिद्ध्यपेक्षया । तथा तृणादिषु निश्चितदहनसामर्थ्येऽस्याग्नेरभ्रपटले तत्सामर्थ्यं प्रतिहन्यते, न च तत्रैवमनुमातुं शक्यते—अभ्रपटलमग्निना दह्यते पार्थिवत्वात्तृणादिवदिति । तथाऽन्येनान्यथा प्रतिपादितोऽर्थः पुनरभियुक्ततरेणान्येनान्यथा प्रतिपाद्यत इत्यनिष्टा ॥ १४६० ॥ १४६१ ॥ १४६२ ॥

**परार्थमनुमानं तु न मानं वक्त्रपेक्षया ।**
**अनुवादान्न तेनासौ स्वयमर्थं प्रपद्यते ॥ १४६३ ॥**
**श्रोतृव्यपेक्षयाऽप्येतत्स्वार्थमेवोपपद्यते ।**
**श्रोत्रदर्शनमूलायाः को विशेषो हि संविदः ॥ १४६४ ॥**
**न परार्थानुमानत्वं वचसः श्रोत्रपेक्षया ।**
**श्रोतृसन्तानविज्ञानहेतुत्वज्ञापकत्वतः ॥ १४६५ ॥**
**यथेन्द्रियस्य साक्षाच्च नानुमेयप्रकाशनम् ।**
**तस्मादस्याविनाभावसम्बन्धज्ञानवन्न तत् ॥ १४६६ ॥**
**अथोच्यते परार्थत्वं परव्यावृत्त्यपेक्षया ।**
**तदप्ययुक्तं स्वार्थेपि परार्थत्वप्रसङ्गतः ॥ १४६७ ॥**

अन्यः पुनराह—परार्थमनुमानं वक्त्रपेक्षयाऽनुवादत्वान्न प्रमाणम् । श्रोत्रपेक्षया तु स्वार्थमेव, को हि विशेषः श्रोत्रद्वारेण तमर्थं प्रतिपद्यते दर्शनद्वारेण चेति । यथा दर्शनेन्द्रियस्य व्यापारे सति परार्थव्यपदेशो न भवति, एवं श्रोत्रेन्द्रियव्यापारेऽपि माभूदिति । दर्शनम्—चक्षुरिन्द्रियम् । दृश्यतेऽनेनेति कृत्वा । संविद इति । ज्ञानस्य । तथा न श्रोत्रपेक्षया वचनस्य परार्थानुमानत्वम्, श्रोतृसन्तानवर्त्तिज्ञानहेतुत्वात्, ज्ञापकत्वाद्वा, इन्द्रियवदिति । श्रोतृसन्तानविज्ञानहेतुत्वं च ज्ञापकत्वं चेति द्वन्द्वेन हेतुद्वयनिर्देशः । यथेन्द्रियस्येति दृष्टान्तनिर्देशः । अयमपरः प्रयोगः—न परार्थानुमानत्वं वचनस्य श्रोत्रपेक्षया, साक्षादनुमेयाऽप्रकाशकत्वात्, अविनाभावसम्बन्धज्ञानवत् । तस्मादिति । साक्षादनुमेयाप्रकाशकत्वात् । यस्मात्साक्षादनुमेयाप्रकाशकत्वं तस्मान्न श्रोत्रपेक्षया वचसः प्रामाण्यमविनाभावसम्बन्धज्ञानवदिति वाक्यार्थः । अविनाभावः साध्येन साधनस्य, स एव सम्बन्धः साध्येन यस्य लिङ्गस्य तस्य ज्ञानमिति विग्रहः । अथ परव्यापारापेक्षया तदुच्यते परार्थं इति । तथा-

ऽप्ययुक्तं, स्वार्थेऽपि परार्थत्वप्रसङ्गात्, आपेक्षिकत्वात्परत्वस्य, पारावारवत् ॥१४६३॥ ॥ १४६४ ॥ १४६५ ॥ १४६६ ॥ १४६७ ॥

त्रिरूपलिङ्गेत्यादिना प्रतिविधत्ते—

**त्रिरूपलिङ्गपूर्वत्वं ननु संवादिलक्षणम् ।**
**तल्लक्षणं च मानत्वं तत्किं तस्मान्निषिध्यते ॥ १४६८ ॥**

तत्र प्रथमे प्रयोगे त्रिरूपलिङ्गपूर्वत्वादित्यस्य हेतोर्विरुद्धतामाह—**संवादिलक्षण**मिति । संवादित्वमनेन लक्ष्यत इति कृत्वा । यतस्त्रिरूपलिङ्गजं यज्ज्ञानं तत्पारम्पर्येण वस्तुनि प्रतिबद्धमतोऽविसंवादकं प्रत्यक्षवत् । यथाह—"लिङ्गलिङ्गिधियोरेवं पारम्पर्येण वस्तुनि । प्रतिबन्धात्तदाभासशून्ययोरप्यवञ्चनम् ॥" इति । **तल्लक्षणं** चेति । अविसंवादलक्षणम् । यथाह—"प्रमाणमविसंवादिज्ञान"मिति । नहि प्रत्यक्षेऽपि तत्प्रमाणवादिनाऽन्यत्प्रमाणव्यवस्थानिबन्धनं शक्यमादर्शयितुमन्यत्राविसंवादात् । स च त्रिरूपलिङ्गजन्येऽप्यस्तीति किमिति तस्मात्त्रिरूपलिङ्गपूर्वत्वादविसंवादित्वहेतोः प्रामाण्यं निषिध्यते । एतेन साध्यसाधनयोरर्थतो विरोध उक्तः । तथाहि —यत्र त्रिरूपलिङ्गपूर्वत्वं तत्राविसंवादित्वं यत्राविसंवादित्वं तत्र प्रामाण्यं, प्रामाण्याप्रामाण्ययोश्च परस्परपरिहारस्थितलक्षणो विरोध इति सामर्थ्याद्विरुद्धो हेतुर्निर्दिष्टः ॥ १४६८ ॥

मिथ्याज्ञानमित्यादिना दृष्टान्तस्य साध्यविकलतामाह ।

**मिथ्याज्ञानं समानं च पूर्वपक्षव्यपेक्षया ।**
**इष्टघातकृता जन्यं ज्ञानमुक्तं न वस्तुतः ॥ १४६९ ॥**
**वस्तुस्थित्या हि तज्ज्ञानमविसंवादि निश्चितम् ।**
**वादीष्टविपरीतस्य प्रमाणमत एव तत् ॥ १४७० ॥**
**अतो विरुद्धता हेतोर्दृष्टान्ते चाप्यसाध्यता ।**
**एतेनैव प्रकारेण द्वितीये हेत्वसिद्धता ॥ १४७१ ॥**

यतो वादीष्टविपरीतसाधनात्तदपि प्रमाणमेव, अन्यथा हि साध्यान्तरमपेक्ष्य सर्वदैव सर्वस्य यद्यप्रामाण्यं व्यवस्थाप्येत, प्रत्यक्षेऽपि प्रसङ्गः स्यात् । पूर्वपक्षापेक्षया तु तन्मिथ्याज्ञानमुक्तम् न वस्तुस्थित्या । पूर्वस्य—प्रथमवादिनः पक्षः, पूर्वपक्षः—तस्य व्यपेक्षेति विग्रहः । यो ह्यनाधेयातिशयैकपरा(दा ?)र्थत्वं चक्षुरादीनामिच्छति

तदभिप्रायापेक्षया मिथ्याज्ञानमुच्यते । अनित्यानेकविज्ञानादिहेतुत्वेन चक्षुरादीनां सिद्धत्वात्। विरुद्धतेति । त्रिरूपलिङ्गपूर्वत्वस्याप्रमाणे क्वचिदप्यभावात्। प्रमाणे तु तत्रैवेष्टविघातकृता जन्ये ज्ञाने भावात्। ननु च लोकायतं प्रति विरुद्धसाधने कर्त्तव्ये दृष्टान्तो न सिद्ध एव । नहीष्टविघातकृज्जन्यं ज्ञानं प्रमाणमिच्छति परः, नचान्यतरासिद्धो दृष्टान्तो भवति । य एव तूभयनिश्चितवाची स एव साधनदूषणमिति न्याय(यात्?) उच्यते—यद्यपि परेणात्र प्रामाण्यं नेष्टं वाचा, तथाप्यसंवादित्वं त्वशक्यापह्नवत्वादिष्टमेव, तदिच्छतां सामर्थ्यात्प्रामाण्यमपि तेन वस्तुस्थित्याऽभ्युपगन्तव्यमिति वस्तुबलप्रकृत्या विरुद्ध उद्भाव्यते न पराभ्युपगमानुरोधेन । अथवा विरुद्धहेतुसंसूचनाद्विरुद्धः । तत्र विरुद्धो हेतुः—यदविसंवादि तत्प्रमाणं यथा प्रत्यक्षं, संवादि च त्रिरूपलिङ्गजन्यं ज्ञानमिति स्वभावहेतुः । नचासिद्धो निःस्वभावत्वानिर्हेतुत्वप्रसङ्गात्, प्रत्यक्षाप्रामाण्यप्रसङ्गान्नैकान्तिकः। असाध्यतेति। नात्र साध्यमस्तीत्यसाध्यस्तद्भावोऽसाध्यता । साध्यविकलतेति यावत्। द्वितीय इति। नच त्रैरूप्य इत्यादौ । हेत्वसिद्धतेति । अननुमाने क्वचिदप्यभावात्। एतेनैवेति। त्रिरूपलिङ्गेत्यादिना न्यायेन ॥ १४६९ ॥ १४७० ॥ १४७१ ॥

अनुमानविरोधस्येत्यादौ परिहारमाह—यत्तादात्म्येत्यादि ।

**यत्तादात्म्यतदुत्पत्त्या सम्बन्धं परिनिश्चितम्।**
**तदेव साधनं प्राहुः सिद्धये न्यायवादिनः ॥ १४७२ ॥**
**अनुमानविरोधादिरीदृशोऽस्ति न साधने।**
**नैव तद्ध्यात्महेतुभ्यां विना सम्भवति क्वचित्॥ १४७३ ॥**
**परस्परविरुद्धौ च धर्मौ नैकत्र वस्तुनि।**
**युज्येते सम्भवो नातो विरुद्धाव्यभिचारिणः॥ १४७४॥**

**ईदृश इति।** तादात्म्यतदुत्पत्तिप्रतिबद्धे । आत्महेतुभ्यामिति । स्वभावेन कारणेन च विना यथाक्रमं तल्लिङ्गं न भवति निःस्वभावत्वनिर्हेतुत्वप्रसङ्गात्। यदुक्तम्—विवक्षितः साध्यधर्मो न धर्मिविशेषणमिति, तत्र यदि साध्यधर्मो न धर्मिविशेषणं तदा समुदाय एव नास्तीति ततश्चैतत्समुदायैकदेशत्वादित्यसिद्धो हेतुः स्यात्। यच्चोक्तम्—सर्वत्रानुमाने विशेषविरुद्धानां सम्भव इति तदयुक्तम् । यतः साध्यविपर्ययसाधनाद्विरुद्ध इष्यते, नच विशेषः साधयितुमिष्टः। वस्तुबलप्रवृत्ता-

नुमाने विषये न विरुद्धाव्यभिचारी च सम्भवति । एकस्मिन्धर्मिणि परस्परविरुद्ध-धर्मद्वयप्रसङ्गात् ॥ १४७२ ॥ १४७३ ॥ १४७४ ॥

यदुक्तमवस्थादेशकालानामित्यादि, तत्राह—अभ्यस्तेत्यादि ।

**अभ्यस्तलक्षणानां च सम्यग्लिङ्गविनिश्चये ।**
**अनुमावृत्तिरन्या तु नानुमेत्यभिधीयते ॥ १४७५ ॥**
**अवस्थादेशकालानां भेदाद्भिन्नासु शक्तिषु ।**
**भावानामनुमानेन नातः सिद्धिः सुदुर्लभा ॥ १४७६ ॥**
**यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः ।**
**नान्यथा साध्यते सोऽन्यैरभियुक्ततरैरपि ॥ १४७७ ॥**

सुपरिनिश्चितं लिङ्गं गमकमिष्यते न संदिग्धम्, नहि धूमो बाष्पादिरूपेण सन्दिह्यमानो वह्नेर्निश्चायको भवति । लिङ्गनिश्चय एव कथमिति चेत् । अभ्यासात् । यथा मणिरूपादिषु तद्विदाम् । तथाहि—विवेचयन्त्येव बाष्पादिभ्यो धूमादीनभ्यस्ततत्स्वलक्षणाः । अ(थ)विवेच्य प्रवृत्ताश्चैते प्राप्नुवन्त्येव वह्निम् । तस्माद्यतः सुविवेचितं लिङ्गं न व्यभिचरति, तेनावस्थादिभेदभिन्नानां सिद्धिर्न दुर्लभा । नापि सुविवेचिताल्लिङ्गात्परिनिश्चितोऽर्थोऽन्यथा शक्यते कर्तुम् । नहि धूमात्सुपरिनिश्चितादनुमितस्य वह्नेरन्यथाभावः शक्यते कर्तुम्, एकस्य विरुद्धस्वभावद्वयायोगात् । यच्चोक्तं —न देवदत्तो भारोद्वहनसमर्थ इत्यादि, यच्चाभ्रपटलं वह्निना दह्यत इति, तल्लिङ्गमेव न भवति, त्रैरूप्याभावात् । नह्यदर्शनमात्रेण विपक्षाद्धेतोर्व्यावृत्तिः शक्यते कर्तुम् । यदाह—"नचादर्शनमात्रेण विपक्षाद्व्यतिरेकिता" इति । किं तर्हि । तादात्म्यतदुत्पत्तिसम्बन्धनियमादविनाभावनियमः । यदाह—"कार्यकारणभावाद्वा स्वभावाद्वा नियामकात् । अविनाभावनियमोऽदर्शनान्न न दर्शनात्" इति ॥ नचात्र तादात्म्यतदुत्पत्तिसम्बन्धोऽस्ति ॥ १४७५ ॥ १४७६ ॥ १४७७ ॥

स्यादेतत्—सुपरिनिश्चितं लिङ्गं न व्यभिचरतीत्येतदेव कुतो नह्यत्र युक्तिरस्तीत्याह—नहि स्वभाव इत्यादि ।

**नहि स्वभावः कार्यं वा स्वभावात्कारणादृते ।**
**भेदानिमित्तताप्राप्तेस्ते विनाऽस्ति न चानुमा ॥ १४७८ ॥**

द्विविधमेव हि लिङ्गं यदुत स्वभावः कार्यमिति । अनुपलब्धेस्तु स्वभावेऽन्त-

भावः । नच स्वभावकारणाख्येन लिङ्गिना विना तयोर्लिङ्गयोः सम्भवोऽस्ति, येन व्यभिचारः स्यात् । कस्मान्न सम्भव इत्याह—भेदानिमित्तताप्राप्तेः–भेदश्चानिमित्तता च तयोः प्राप्तिः । स्वभावहेतोर्भेदोऽस्वभावता प्राप्नोति, कार्यहेतोरनिमित्तत्वं निर्हेतुकत्वं प्राप्नोति, नच स्वभावकार्यव्यतिरेकेणान्यल्लिङ्गमिष्टमन्यत्राप्रतिबन्धाद् विनाभावायोगात् । **ते विने**ति । स्वभावकार्ये । द्विवचनान्तमेतत् ॥ १४७८ ॥

यदुक्तं परार्थमनुमानं तु मानमिति तत्राह—त्रिरूपलिङ्गेत्यादि ।

**त्रिरूपलिङ्गवचसः सक्तसंसूचकत्वतः ।**
**यत्परार्थानुमानत्वमुक्तं तच्छ्रोत्रपेक्षया ॥ १४७९ ॥**
**गौणं साङ्केतिकं चैवमनुमानत्वमाश्रितम् ।**
**सक्तसंसूचकत्वेन तेन नातिप्रसज्यते ॥ १४८० ॥**
**नानुमानं प्रमाणं चेद्विफला व्याहृतिस्तव ।**
**न कश्चिदपि वादो हि विवक्षां प्रतिपद्यते ॥ १४८१ ॥**

वचनस्य यत्परार्थानुमानत्वमुक्तं तच्छ्रोत्रपेक्षया, तेन वक्रपेक्षाभावी दोषो न भवति । श्रोत्रपेक्षयाऽपि त्रिरूपलिङ्गसूचनादुपचारेणानुमानकारणत्वात्समयाद्वाऽनुमानत्वमुक्तम् । सक्तसंसूचक एवानुमानसंज्ञानिवेशात् । तेनेन्द्रियस्याविनाभावित्वसम्बन्धज्ञानस्य च परार्थानुमानत्वप्रसङ्गादतिप्रसङ्गो न भवति, तयोः सक्तसंसूचकत्वाभावात् । अत एव दर्शनमूलयोः संविदः सकाशादस्या विशेषः । तथाहि—दर्शनज्ञानेन साक्षाद्धूमादेर्लिङ्गस्य प्रतीतिर्न तु श्रोत्रज्ञानेन, तेन हि शब्द एव साक्षाद्गृह्यते, नच शब्दो धूमवद्ग्राह्यस्यार्थस्य लिङ्गं विवक्षाप्रतिबद्धस्य बाह्येन सम्बन्धासिद्धेः । केवलं तस्य धूमादेर्लिङ्गस्य संसूचकत्वेन सङ्केतवशात्तथाध्यव(सा)यिविकल्पोत्पत्तेर्बाह्यार्थापेक्षया परार्थमिति वर्ण्यते । विवक्षायां तु गम्यायां श्रोत्रपेक्षया स्वार्थमेव भवति । तथाहि—तत्कार्यत्वाद्धूमवद्विवक्षायां गमक इष्यते । न वाचकत्वेन । ततो ज्ञानाप्रतीतेः । **विफला व्याहृति**रिति । नानुमानं प्रमाणमिलेषा । तथाहि न कश्चित्प्रतिपाद्यस्तद्वचनाद्विवक्षां प्रतिपद्यते । अनेन स्ववचनविरोधमाह । एतच्च पूर्वं वर्णितमेव ॥ १४७९ ॥ १४८० ॥ १४८१ ॥

पुरन्दरस्त्वाह—लोकप्रसिद्धमनुमानं चार्वाकैरपीष्यत एव, यत्तु कैश्चिल्लौकिकं मार्गमतिक्रम्यानुमानमुच्यते तन्निषिध्यत इति । एतदाशङ्क्य दूषयन्नाह—**लौकिकमि**त्यादि ।

**लौकिकं लिङ्गमिष्टं चेन्न त्वन्यैः परिकल्पितम् ।**
**ननु लोकोऽपि कार्यादेर्हेत्वादीनवगच्छति ॥ १४८२ ॥**
**तत्त्वतस्तु तदेवोक्तं न्यायवादिभिरप्यलम् ।**
**तल्लौकिकाभ्यनुज्ञाते किं त्यक्तं भवति स्वयम् ॥ १४८३ ॥**

**ननु लोकोऽपी**ति । हेत्वादीनवगच्छतीति सम्बन्धः । कार्यादेरित्यादिशब्दात्स्वभावग्रहणम् । एवं हेत्वादीनित्यत्रापि स्वभावग्रहणमेव । बहुवचनं तु व्यक्तिभेदात् । यदेव लिङ्गं तादात्म्यतदुत्पत्तिप्रतिबद्धाल्लोकार्थं प्रतिपद्यते तदेवोक्तं लिङ्गमस्माभिः, तदभ्यनुज्ञाने किं त्यक्तं स्याद्यस्यानुमानत्वनिषेधो भवेत् ॥ १४८२ ॥ १४८३ ॥

अथापि स्यान्नैवास्माकं किंचिदनुमानमिष्टं, किंतु परेण तत्प्रमाणमिष्टं, तदभ्युपगमान्मम विफला व्याहृतिर्न भवतीति, अत्राह—**अप्रमाणेने**त्यादि ।

**अप्रमाणेन चैतेन परः किं प्रतिपद्यते ।**
**अप्रमाणकृतश्चासौ प्रत्ययः कीदृशो भवेत् ॥ १४८४ ॥**

कुतश्चायं निश्चयो जातः परेण तत्प्रमाणमभ्युपगतमिति, नहि पराभ्युपगमः प्रत्यक्षः, न चान्यत्तव प्रमाणमस्ति, येन निश्चयः स्यात् । भवतु नाम निश्चयः, तथाऽपि तेनाप्रमाणेन पराभ्युपगतेन किमिति परः प्रतिपद्यते, न वै व्यसनमेतत् । अथापि स्याद्यथा रिपुहस्तादाच्छिद्य खड्गं तेनैव स एव रिपुर्निपात्यते, एवं परेण यत्प्रमाणत्वेनाभ्युपगतं तदेव गृहीत्वा परो निराक्रियत इत्याशङ्क्याह—**अप्रमाणकृत** इति । एतदुक्तं भवति—यदि मोहात्परेणाप्रमाणमेव प्रमाणमिति कृत्वा संगृहीतं कथं तेनाप्रमाणेन परस्य सम्यग्ज्ञानोत्पादनं शक्यते कर्तुं, सम्यग्ज्ञानफलत्वात्प्रमाणस्य । नहि मोहात्खड्ग इति कृत्वा गृहीतेन येनकेनचिच्छेदकेन परश्छेत्तुं शक्यत इति न समानो दृष्टान्तः ॥ १४८४ ॥

अविद्धकर्णस्तत्वटीकायामाह—ननु वा प्रमाणेन किमिति परः प्रतिपाद्यते, उभयसिद्धं हि प्रतिपादकं भवतीति । तदेतदयुक्तम् । यस्माद्वचनात्मकमनुमानं नच वक्तुः प्रमाणम्, अथ च वक्ता तेन परं प्रतिपादयति, परप्रतिपादनार्थत्वात्प्रयासस्य । नावश्यमुभयसिद्धेन प्रयोजनमिति । तदाशङ्कते—**अनुमानमि**त्यादिना ।

**अनुमानं प्रमाणं चेद्वक्तुर्न वचनात्मकम् ।**
**प्रकाशयति तेनायं यथा तद्वदिदं भवेत् ॥ १४८५ ॥**

**अज्ञातार्थाप्रकाशत्वादप्रमाणं तदिष्यते ।**
**नाशक्तसूचकत्वेन तावकीनं तथा ननु ॥ १४८६ ॥**

## इत्यनुमानपरीक्षा ।

**अयमिति** । वक्ता । **तेनेति** । वचनात्मकेन । **अज्ञातेत्यादिना** दूषणमाह—नहि वचनस्य वक्त्रपेक्षया संसूचनादप्रामाण्यमिष्टं, किं तर्हि ? । अज्ञातार्थाप्रकाशनात् । सक्तसूचकत्वमस्यास्त्येव । त्वदीयं त्वनुमानं न सक्तसंसूचकमित्यसमानमेतत् । अन्यथा ह्युभयसिद्धमेव भवेत् । तस्मान्न्यायादनपेतं प्रमाणं सर्वेषां युक्तं प्रत्यक्षवदिति न्याय्यम् ॥ १४८५ ॥ १४८६ ॥

## इत्यनुमानपरीक्षा ।

इदानीं प्रमाणद्वितयनियमसाधनार्थं सङ्ख्याविप्रतिपत्तिकरणार्थमाह—**नन्वित्यादि** ।

**ननु शब्दप्रमाणादिप्रमाणान्तरसम्भवात् ।**
**निर्दिष्टं लक्षणं कस्माद्द्वयोरेव प्रमाणयोः ॥ १४८७ ॥**

अनेनाव्यापितां प्रमाणलक्षणस्य दोषं प्रमाद्वितयनिश्चितमित्यत्र द्वितयावधारणवैफल्यं चाह ॥ १४८७ ॥

**उच्यत** इत्यादिना परिहरति ।

**उच्यते न द्वयादन्यत्प्रमाणमुपपद्यते ।**
**प्रमाणलक्षणायोगाद्योगे चान्तर्गमादिह ॥ १४८८ ॥**

**अन्तर्गमादिहेति** । अस्मिन्नेव प्रमाणद्वये । एतदुक्तं भवति—प्रमाणद्वयादन्यस्य प्रमाणलक्षणमविसंवादित्वं नास्त्येव, सति चात्रैवान्तर्भावात्पृथङ्नोच्यते प्रमाणान्तरमिति ॥ १४८८ ॥

तत्र कथमन्येषामप्रामाण्यं प्रामाण्ये वा कथमिहान्तर्भाव इत्येतद्द्वयं प्रतिपादयति । अत्र शाब्दोपमार्थापत्त्यभावयुक्त्यनुपलब्धिसम्भवैतिह्यप्रतिभाख्यातिप्रमाणान्तराणि परैरभ्युपगतानि । तत्र शाब्दमधिकृत्याह—**शब्दज्ञानादित्यादि** ।

**शब्दज्ञानात्परोक्षार्थज्ञानं शाब्दं परे जगुः ।**
**तच्चाकर्तृकतो वाक्यात्तथा प्रत्ययिनोदितात् ॥ १४८९ ॥**
**इदं च किल नाध्यक्षं परोक्षविषयत्वतः ।**
**नानुमानं च घटते तल्लक्षणवियोगतः ॥ १४९० ॥**

**धर्मी धर्मविशिष्टो हि लिङ्गीत्येतत्सुनिश्चितम् ।**
**न भवेदनुमानं च यावत्तद्विषयं न तत् ॥ १४९१ ॥**

तत्र शबरस्वामी शाब्दलक्षणमाह—शब्दज्ञानादसन्निकृष्टेऽर्थज्ञानं शाब्दमिति । शब्दस्वलक्षणग्रहणादुत्तरकालं परोक्षेऽर्थे यदुत्पद्यते ज्ञानं तच्छब्दादागतमिति कृत्वा शाब्दप्रमाणम् । तच्च द्विविधम् । अपौरुषेयशब्दजनितं प्रत्ययितपुरुषवाक्यजं च । एतच्च प्रत्यक्षाद्भिन्नं परोक्षविषयत्वात् । नाप्यनुमानं त्रैरूप्याभावात् । तथाहि—साध्यधर्मविशिष्टो धर्मी अनुमेय इष्यते, न केवलो नापि धर्ममात्रम्, यावच्च तद्धर्मित्वेन धर्मिविषयं लिङ्गं नावधार्यते न तावदनुमानस्य प्रवृत्तिः सम्भवति । यावत्पक्षधर्मत्वावधारणा न भवति न तावदनुमानमिति यावत् ॥ १४८९ ॥ १४९० ॥ ॥ १४९१ ॥

सैव पक्षधर्मत्वावधारणा किं न भवतीत्याह—यश्चेति ।

**यश्चात्र कल्प्यते धर्मी प्रमेयोऽस्य स एव च ।**
**नचानवधृते तस्मिंस्तद्धर्मत्वावधारणा ॥ १४९२ ॥**

यश्चात्र शाब्दे कल्प्यते वृक्षादिधर्मी स एव प्रमेयस्तस्यैव प्रतिपाद्यत्वात् । धर्म्येवात्र प्रमेयो न धर्मविशिष्टो धर्मीति यावत् । तस्मिन्धर्मिणि अनवधृते—अनिश्चिते कथं तद्धर्मत्वं निश्चीयते ॥ १४९२ ॥

**प्राक्स चेत्पक्षधर्मत्वाद्गृहीतः किं ततः परम् ।**
**पक्षधर्मादिभिर्ज्ञातैर्येन स्यादनुमानता ॥ १४९३ ॥**

किं च—यदि चासौ धर्मी पक्षधर्मत्वनिश्चयात्प्राग्ज्ञातस्तदा निष्फलः पक्षधर्मत्वादिनिश्चये प्रयत्नः, धर्मिप्रतिपत्त्यर्थो हि सर्वः प्रयासः, स चेत्प्रतिपन्नः किमिदानीं पक्षधर्मत्वादिनिरूपणप्रयासेन । अभ्युपगम्य चैतदभिहितम् । नच शब्दो वृक्षादेर्धर्मिणो धर्मः, वक्तृदेशेऽवधार्यमाणत्वात् ॥ १४९३ ॥

एवं तावत्पक्षधर्मत्वाभावः प्रतिपादितः, इदानीमन्वयाभावं प्रतिपादयन्नाह—**अन्वयो नचे**त्यादि ।

**अन्वयो नच शब्दस्य प्रमेयेण निरूप्यते ।**
**व्यापारेण हि सर्वेषामन्वेतृत्वं प्रतीयते ॥ १४९४ ॥**

**निरूप्यत** इति । निश्चीयते । **व्यापारे**णेति । सद्भावेन, सत्तयेति यावत् । एतदुक्तं भवति—विद्यमानस्यैवान्वेतृत्वं नाविद्यमानस्येति ॥ १४९४ ॥

एतदेव दर्शयन्नाह—यत्रेत्यादि।

**यत्र धूमोऽस्ति तत्राग्नेरस्तित्वेनान्वयः स्फुटम्।**
**नत्वेवं यत्र शब्दोऽस्ति तत्रार्थोऽस्तीति निश्चितम्॥१४९५॥**

यत्र धूमस्तत्रावश्यं यतो वह्निरित्यतोऽसौ वह्निरन्वेता भवति धूमस्य, नत्वेवं शब्दस्यार्थेनान्वयः॥ १४९५॥

कथं नास्तीति प्रतिपादयन्नाह—न तावदिति।

**न तावत्तत्र देशोऽसौ न तत्काले च गम्यते।**
**भवेन्नित्यविभुत्वाच्चेत्सर्वशब्देषु तत्समम्॥ १४९६॥**
**तेन सर्वत्र दृष्टत्वाद्व्यतिरेकस्य चागतेः।**
**सर्वशब्दैरशेषार्थप्रतिपत्तिः प्रसज्यते॥ १४९७॥**

न तावत्तत्र शब्दाक्रान्ते देशेऽर्थस्य सद्भावः। तथाहि—पिण्डखर्जूरादिशब्दोऽन्यत्र पाटलिपुत्रादौ श्रूयते, नच तत्र देशे पिण्डखर्जूरादिरस्ति। तथा नापि शब्दकालेऽर्थोऽवश्यं सम्भवति, दिलीपमहासम्मतादिशब्दा वर्त्तमानास्तदर्थस्तु भूतो भविष्यंश्चेति कुतोऽर्थैः शब्दस्यान्वेतृत्वम्। अथ मतम्—नित्यत्वाच्छब्दानां सर्वकालमवस्थितेरर्थेन सह न भिन्नकालता, नापि भिन्नदेशता, व्यापित्वात्सर्वदेशेष्ववस्थितेः, अतो नित्यविभुत्वाद्भवेदन्वयः शब्दानामिति। तत्र सर्वशब्देषु तन्नित्यविभुत्वं तुल्यमिति कृत्वा प्रतिनियतेन शब्देन प्रतिनियतार्थाभिधानं न प्राप्नोति। किं तर्हि?। येन केनचिच्छब्देन सर्वस्यैवार्थस्याभिधानं स्यात्, तेनार्थेन सह सर्वत्र देशे काले वा सर्वशब्दस्य दृष्टत्वात्। व्यतिरेकः—साध्याभावे साधनाभावः, तस्य। अगतेरिति। अनुपलम्भात्। नित्यविभुत्वादेव॥ १४९६॥ १४९७॥

**तस्मादननुमानत्वं शाब्दे प्रत्यक्षवद्भवेत्।**
**त्रैरूप्यरहितत्वेन तादृग्विषयवर्जनात्॥ १४९८॥**

तस्मादित्युपसंहृत्य प्रमाणं दर्शयति। अननुमानत्वं शाब्द इति साध्यनिर्देशः। त्रैरूप्यरहितत्वेनेति हेतुः। प्रत्यक्षवदिति दृष्टान्तः। तादृग्विषयवर्जनादिति हेतुसमर्थनम्। यादृशो धूमादिलिङ्गजस्यानुमानस्य विषयो धर्मविशिष्टो धर्मी तेन तादृशा विषयेण वर्जनात्—रहितत्वादिति यावत्॥ १४९८॥

भवतु नाम त्रैरूप्यरहितत्वादनुमानादन्यत्वं, प्रामाण्यं त्वस्य शब्दस्य कथमित्याह—अग्निहोत्रेत्यादि।

**अग्निहोत्रादिवचनादकम्पज्ञानजन्मतः ।**
**तत्प्रमाणत्वमप्यस्य निराकर्तुं न पार्यते ॥ १४९९ ॥**

संशयविपर्यासरहितत्वादकम्पं निश्चलम् । बाधकप्रमाणाभावात्प्रमाणं प्रत्यक्षादिवदिति यावत् । तथा चाह शबरस्वामी—न च स्वर्गकामो यजेतेत्यतो वचनात्सन्दिग्धमवगम्यते भवति स्वर्गो न वा भवतीति । न च निश्चितमवगम्यमानमिदं मिथ्या स्यात्, यो हि जनित्वा प्रध्वंसते नैतदेवमिति स मिथ्याप्रत्ययः, नचैष देशान्तरे कालान्तरे पुरुषान्तरे विपर्येति, तस्मादवितथः । यत्तु लौकिकं वचनं तच्चेत्प्रत्ययितात्पुरुषादिन्द्रियविषयं वा तदवितथमेव । अथाप्रत्ययितादतीन्द्रियविषयं वा तत्पुरुषबुद्धिप्रभवमप्रमाणम्, अशक्यं हि पुरुषमात्रेण ज्ञातुमिति ॥ १४९९ ॥

तत्रेत्यादिना—तच्चाकर्तृकतो वाक्यादित्येतस्मिन्प्रथमे शाब्दे लक्षणेऽसम्भवितां लक्षणदोषमाह ।

**तत्राकर्तृकवाक्यस्य सम्भवार्थावसङ्गतौ ।**
**तस्मादसम्भवि प्रोक्तं प्रथमं शाब्दलक्षणम् ॥ १५०० ॥**

अकर्तृकस्य हि वाक्यस्य सम्भवो नास्त्येव, व्यापिनः क्षणभङ्गस्य साधितत्वात् । वक्ष्यमाणयुक्त्या वा । सत्यपि वा सम्भवे न तस्यार्थवत्त्वं सम्भवति, अतोऽकर्तृकाद्वचनात्परोक्षोऽर्थोऽयं ज्ञात इत्यस्यासम्भवादसम्भवि प्रमाणलक्षणम् ॥ १५०० ॥

कथं पुनरकर्तृकं वाक्यं नास्तीत्याह—शक्तेत्यादि ।

**शक्ताशक्तस्वभावस्य सर्वदा ह्यनुवर्त्तनात् ।**
**तदा तद्भाविविज्ञानं भवेन्नो वा कदाचन ॥ १५०१ ॥**

तत्राकर्तृकं वाक्यं शक्तं वा स्यात्—ज्ञानजनने, कदाचिदशक्तं वेति पक्षद्वयम् । प्रथमे पक्षे तस्य शक्तस्य स्वभावस्यानुवर्त्तनान्नित्यं तद्भाविविज्ञानं प्राप्नोति । तत्र प्रयोगः—यदप्रतिबद्धसामर्थ्यं यस्मिन्कर्त्तव्ये, तत्करोत्येव, यथाऽन्त्या कारणसामग्री, अप्रतिबद्धसामर्थ्यं चाकर्तृकं वाक्यं ज्ञानजनने सर्वकालमिति स्वभावहेतुः । अथवा—यदविकलकारणं तद्भवत्येव, यथाऽविकलकारणोऽङ्कुरः, अविकलकारणं चापौरुषेयवाक्यभाविविज्ञानमिति स्वभावहेतुः । द्वितीयेऽपि पक्षे तस्याशक्तस्य स्वभावस्य सर्वकालमनुवर्त्तनाच्च न कदाचित्तद्भावि विज्ञानं स्यात्, यथा विकलकारणोऽङ्कुरः ॥ १५०१ ॥

कथमर्थवत्त्वं न सङ्गच्छत इत्याह—द्वेषेत्यादि।

**द्वेषमोहादयो दोषा यथा मिथ्यात्वहेतवः।**
**कृपाप्रज्ञादयोऽप्येवं ज्ञाताः सत्यत्वहेतवः॥ १५०२॥**
**तदाश्रयनराभावे न तयोरपि सम्भवः।**
**आनर्थक्यमतः प्राप्तं वचस्यपुरुषाश्रये॥ १५०३॥**

द्वाभ्यां प्रकाराभ्यामर्थवत्ता भवति, (अविपरीतार्थत्वेन) विपरीतार्थत्वेन वा, तृतीयराश्यभावात्। तस्याश्च बुद्धेर्द्विप्रकाराया अप्यर्थवत्ताया गुणदोषौ कारणमित्यन्वयव्यतिरेकाभ्यां निश्चितम्। तथाहि—यथा रागादिदोषपरीतपुरुषो मृषावादी दृष्टस्तथा कृपादिगुणयुक्तः सत्यवाग्दृष्टः। तयोश्च गुणदोषयोः सम्यक्त्वमिथ्यात्वहेत्वोराश्रयः पुरुषः, ततश्च पुरुषनिवृत्तौ गुणदोषनिवृत्तिः, गुणदोषनिवृत्तौ सम्यक्त्वमिथ्यात्वयोरप्यभावः, तदभावे प्रकारान्तरासम्भवादानर्थक्यमपौरुषेये वचसि प्राप्तम्। कारणाभावात्। नहि कारणमन्तरेण कार्यस्य सम्भवो युक्तः, निर्हेतुत्वप्रसङ्गात्। ततश्च देशकालद्रव्यादिनियमो न स्यात्। प्रसङ्गसाधनमेतद्द्रष्टव्यम्। अन्यथा हि स्वातन्त्र्येण साधने दृष्टविरोधः स्यात्। तथाहि—"अग्निहोत्रं जुहुयात्स्वर्गकामः" इत्यादिवाक्यादर्थप्रतीतिर्भवन्त्युपलभ्यत एव, नच दृष्टमपह्नोतुं शक्यते। नचाकर्तृकत्वमुभयसिद्धमित्यसिद्धश्च हेतुः स्यात्। प्रसङ्गसाधने तु द्वयमप्यदुष्टम्। तथाहि—यद्यपौरुषेयत्वमभ्युपगम्यते वेदस्य तदाऽऽनर्थक्यमभ्युपगन्तव्यम्। अर्थवत्त्वहेतोः पुरुषस्याभावात्। नचानर्थक्यम्, अतः स्यात्पौरुषेय एवेति प्रसङ्गेन प्रदर्श्यते॥१५०२॥ ॥ १५०३॥

एतदेव प्रसङ्गसाधनं समर्थयितुं दृष्टविरोधाभावं प्रतिपादयन्नाशङ्कापूर्वकमाह—अर्थेत्यादि।

**अर्थप्रतीतितो नो चेदेषा व्याख्यानतो भवेत्।**
**स्वतन्त्रो हि पुमान्दृष्टो व्याचक्षाणोऽर्थमिच्छया॥ १५०४॥**
**भूतार्थद्योतने शक्तिः प्रकृत्यैव स्थिताऽस्य चेत्।**
**अज्ञातसमयस्यापि भवेदर्थगतिस्ततः॥ १५०५॥**
**प्रकृत्या दीपको दीपो न सङ्केतमपेक्षते।**
**समयान्तरभावे च तस्मादर्थान्तरे गतिः॥ १५०६॥**

**नहि सङ्केतभावेऽपि दीपो गन्धरसादिकम् ।**
**प्रकाशयति विज्ञातुं सा शक्तिर्नच शक्यते ॥ १५०७ ॥**

**नो चे**दिति । आनर्थक्यमिति सम्बन्धः । ततश्च दृष्टविरोधः प्रतिज्ञाया इति भावः । सत्यं स्याद्दृष्टविरोधो यदि वेदादेवार्थप्रतीतिरुपदेशमन्तरेणोपजायते, यावतैषाऽर्थप्रतीतिर्व्याख्यातुः सकाशात्समयवशाद्भवेत् । न वेदात्केवलात्समयनिरपेक्षात् । तथाहि—वेदार्थं मीमांसकादिः स्वेच्छया व्याचक्षाणो दृष्टः, नच स्वाभाविकस्यार्थस्य पुरुषेच्छानुरोधित्वं युक्तम् । तत्रैतत्स्यात्—नहि पुरुषेणापूर्वोऽर्थः स्वेच्छया कथ्यते, किं तर्हि? । य एव हि स्वाभाविको व्यवस्थितः स एव पुरुषेण प्रकाश्यते इति तेन भवत्येव दृष्टविरोध इति । एवं तर्हि यदि प्रकृत्याऽस्य वेदस्य भूतार्थद्योतने शक्तिः स्थिता तदा सङ्केतानभिज्ञस्यापि ततो वेदवाक्यादर्थप्रतीतिः प्राप्नोति । सङ्केतसापेक्षो वेदोऽर्थप्रतीतिहेतुर्न केवल इति चेत् । तन्न । नहि प्रकृत्याऽर्थप्रतीतिहेतवो दीपादयः सङ्केतमपेक्षन्ते । अन्यथा सङ्केतस्यैवान्वयव्यतिरेकाभ्यामर्थप्रतीतौ सामर्थ्यं स्यात्, न स्वाभाविकस्य सम्बन्धस्य । किंच—भवतु नाम सङ्केतसहायादर्थप्रतीतिस्तथापि दोष इत्याह—**समये**त्यादि । मीमांसकोपरचितात्समयान्निरुक्तकाराद्युपरचितः समयः समयान्तरं तस्य सद्भावे सति प्रकृतादर्थादर्थान्तरे ततः शब्दात्प्रतीतिर्न प्राप्नोति । नहि प्रदीपोऽप्रकाश्यं गन्धरसादिकं सङ्केतवशात्प्रकाशयितुमीशः । भवतु नामार्थान्तरे वृत्तिः समयवशात्तथाऽपि—प्रामाण्यं न सिध्यतीति प्रतिपादयति—**विज्ञातु**मिति । पुरुषेच्छावशाद्यद्यर्थान्तरेऽपि शब्दस्य प्रवृत्तिस्तदा साङ्कर्यात्सा भूतार्थद्योतनशक्तिर्निश्चेतुं न शक्यते इति कथं तत इष्टार्थप्रतिपत्तिर्भवेत् । अथवाऽन्यथा व्याख्यायते । यासौ प्रकृत्या भूतार्थद्योतनशक्तिः सा कदाचिदेकार्थनियता वा स्यादनेकार्थनियता वेति पक्षद्वयम् । तत्रैकार्थनियमपक्षे दोषमाह—**समयान्तरभाव** इति । द्वितीयेऽप्याह—**विज्ञातुं सा शक्तिर्नच शक्यत** इति । साङ्कर्यादिति भावः । यथोक्तम्—"गिरामेकार्थनियमे न स्यादर्थान्तरे गतिः । अनेकार्थाभिसम्बन्धे विरुद्धव्यक्तिसम्भवः ॥" इति ॥ १५०४ ॥ ॥ १५०५ ॥ १५०६ ॥ १५०७ ॥

एवं प्रथमं शाब्दलक्षणमसम्भवीति प्रतिपाद्याकम्पज्ञानजन्मत इत्यस्य हेतोरसिद्धतामुपसंहारेण दर्शयन्नाह—**अत** इत्यादि ।

**अतोऽर्थप्रत्ययायोगात्तस्य निःकम्पता कुतः ।**
**स तु सामयिको युक्तः पुंवाग्भूतान्न भिद्यते ॥ १५०८ ॥**
**न्यायज्ञैर्न तयोः कश्चिद्विशेषः प्रतिपद्यते ।**
**श्रोत्रियाणां त्वकम्पोऽयमज्ञातन्यायवर्त्मनाम् ॥ १५०९ ॥**

अपौरुषेयत्वे सति यथोक्तनीत्याऽर्थप्रतीतिरेव न सम्भवति यदा, तदा कुतस्तस्या अकम्पत्वम् । यश्चायमर्थप्रत्ययो भवन्नुपलभ्यते वेदवाक्यात्स तु साङ्केतिक एव युक्त इति पूर्वं प्रतिपादितम् "एषा व्याख्यानतो भवे"दित्यादिना । इतश्चायं साङ्केतिक एव युक्त इति । यस्माद्वैदिकं वाक्यं पुंवाग्भूतात्—पुंवाक्त्वप्राप्तात् न भिद्यते । पौरुषेयवचनान्न भिद्यते इति यावत् । एतदपि कुत इत्याह—**न्यायज्ञै**रित्यादि । **तयो**रिति । वैदिकपौरुषेययोः । सर्वप्रकारेण पुरुषैः शक्यकरणत्वान्न कश्चिद्विशेषो वैदिकस्य लौकिकात् । श्रोत्रियाणामित्युपहसति ॥ १५०८ ॥ १५०९ ॥

द्वितीयेऽपि "यद्वा प्रत्ययितोदिता"दित्येतस्मिञ्शाब्दलक्षणेऽसम्भवितां लक्षणदोषमाह—**आप्ते**त्यादि ।

**आप्तानङ्गीकृतेरेव द्वितीयमपि न क्षमम् ।**
**शाब्दलक्षणमिष्टौ वा सोऽयमित्यविनिश्चितः ॥ १५१० ॥**

मीमांसकैः क्षीणदोषपुरुषानभ्युपगमादाप्तो नाङ्गीकृत एवेति कुतस्तद्वचनस्य प्रामाण्यं स्यात् । **न क्षम**मिति । न युक्तम् । असम्भवीति यावत् । अथाऽप्याप्त इष्यते, तदा तस्याप्तस्येष्टौ सत्यां शृङ्गग्राहिकयाऽयमसावित्याप्तो न निश्चित इत्यसत्प्रख्य एव । नह्यन्यगुणदोषनिश्चये प्रमाणमस्ति तेषामतीन्द्रियत्वात् । कायवाग्व्यवहाराश्चान्यथाऽपि बुद्धिपूर्वं क्रियन्त इति कुतस्तद्वचनस्य प्रामाण्यम्, असाङ्कर्येणार्वाग्दर्शिभिस्तेषामनवधारणात् ॥ १५१० ॥

**प्रायः संप्रत्ययो दृष्टो यद्वाक्यात्तस्य गृह्यते ।**
**परोक्षप्रतिपत्त्यर्थं वाक्यं प्रत्ययतः स चेत् ॥ १५११ ॥**
**नान्यत्र प्रत्ययाभावात्पूर्वमप्रत्ययोऽपि हि ।**
**एकत्रास्खलिते तत्र सर्वत्र नियमो न हि ॥ १५१२ ॥**

अथापि स्याद्यस्य पुरुषस्याक्षीणदोषस्यापि सतो वाक्याद्बाहुल्येन संप्रत्ययो दृष्टः सोऽस्माभिः प्रत्ययित इष्टो न क्षीणदोषः, तस्मात्तस्य प्रत्ययितस्य वाक्यं गृह्यते, शा-

ब्दलक्षणे तेनासम्भविता न सम्भवतीति । एतदप्यसम्यक् । नह्येकत्राविसंवादमात्रोपलम्भात्सर्वत्र तथाभावनियमो युक्तो व्यभिचारस्य सम्भाव्यमानत्वादन्यथा व्यभिचारिलक्षणं स्यात् ॥ १५११ ॥ १५१२ ॥

एवं तावद्विप्रकारमपि शाब्दलक्षणं विशेषेण दुष्टं प्रतिपाद्य सामान्यं दूषणमाह —वचसामित्यादि ।

**वचसां प्रतिबन्धो वा को बाह्येष्वपि वस्तुषु ।**
**प्रतिपादयतां तानि येनैषां स्यात्प्रमाणता ॥ १५१३ ॥**
**भिन्नाक्षग्रहणादिभ्यो नैकात्म्यं न तदुद्भवः ।**
**व्यभिचारान्न चान्यस्य युज्यतेऽव्यभिचारिता ॥ १५१४ ॥**

नहि वाच्यैर्वस्तुभिः सह कश्चित्तादात्म्यलक्षणस्तदुत्पत्तिलक्षणो वा प्रतिबन्धो वचसामस्ति, येन तानि वस्तूनि प्रतिपादयतामेषां वचसां प्रामाण्यं स्यात् । तत्र तावन्न तादात्म्यलक्षणः प्रतिबन्धोऽस्ति, भिन्नाक्षग्रहणादिभ्यो हेतुभ्यः । तत्र भिन्नाक्षग्रहणं भिन्नेन्द्रियेण ग्रहणम् । तथाहि—श्रोत्रेन्द्रियेण शब्दो गृह्यतेऽर्थस्तु चक्षुरादिना । आदिशब्देन कालदेशप्रतिभासकारणभेदो गृह्यते । कुमारिलस्त्वाह—भिन्नेन्द्रियग्राह्यत्वाद्भिन्नमित्यनैकान्तिकमेतत्तथाहि—एकं रूपं यदा बहवः पश्यन्ति तदा भिन्नेन्द्रियग्राह्यत्वाद्रूपस्य भेदः प्राप्नोति । अथापि स्याच्चक्षुरिन्द्रियजातेरभेदादेकेन्द्रियग्राह्यत्वमेवेति । एवं तर्हि सत्ताया अनेकेन्द्रियग्राह्यत्वेऽपीन्द्रियजातेरभेदादभिन्नेन्द्रियग्राह्यत्वमस्तीति सिद्धमेकत्वम् । तस्माद्बुद्धिभेदाभेदाभ्यां पदार्थभेदाभेदव्यवस्था नेन्द्रियभेदाभेदाभ्यामिति । आह च—"न चानेकेन्द्रियग्राह्यं भिन्नतां प्रतिपद्यते । माभूद्भिन्नशरीरस्थग्राह्यत्वाद्रूपभिन्नता ॥ जात्यभेदादभेदश्चेदिन्द्रियत्वेन तत्समम् । तुल्यबुद्धेरतो भिन्ना न सत्तेन्द्रियभेदतः ॥" इति । एतच्चासम्यक्—बुद्धिभेदाद्भेदेऽपि साध्ये समानत्वात् । तथाह्यत्रापि शक्यत एवं वक्तुम्—बुद्धिभेदाद्वस्तुभेद इत्यनैकान्तिकमेतत् । तथाहि—यदा बहव एकं रूपं पश्यन्ति, तदा बुद्धिभेदोऽस्त्येवानेकचक्षुर्ज्ञानोत्पत्तेः । नच तदा रूपस्य भेदः । यदि चक्षुर्विज्ञानजातेरभेदादेकत्वं परिकल्प्यते, एवं तर्हि रूपरसादीनामप्येकत्वं प्राप्नोति । सत्यपि तद्बुद्धिभेदे विज्ञानजातेरभेदात् । ततश्च यदुक्तम्—"बुद्धिभेदान्न चैकत्वं रूपादीनां प्रसज्यत" इति तद्व्याहन्येत । तस्माज्जात्युत्तरमेतत् । अथ सत्यपि स्वलक्षणभेदे यादृशे लक्षण-

भेदे यादृशो लोके भेदाभेदव्यवहारः प्रसिद्धः, एकानेकप्रत्यवमर्शहेतुत्वेन तादृशौ बुद्धिभेदाभेदावुपादीयेते। इन्द्रियेऽपि सर्वं समानमित्यलं प्रसङ्गेन। **न तदुद्भव** इति। नापि तदुत्पत्तिलक्षणसम्बन्धो व्यभिचारात्। अर्थाभावेऽपि विवक्षामात्राद्भावात्। नचान्यस्य तदुत्पत्तिरहितस्याव्यभिचारिताऽस्त्यतिप्रसङ्गात्। तस्मान्न वाच्येऽर्थे शब्दस्य प्रामाण्यम्॥ १५१३॥ १५१४॥

यद्येवं कथमुक्तम्—"न प्रमाणान्तरं शाब्दमनुमानात्तथाहि सः (तत्?)। कृतकत्वादिवत्स्वार्थमन्यापोहेन भाषते" इति। एतदाशङ्क्य यथानुमानेऽन्तर्भाव इष्टस्तथा प्रतिपादयन्नाह—**वचोभ्य** इत्यादि।

**वचोभ्यो निखिलेभ्योऽपि विवक्षैषाऽनुमीयते।**
**प्रत्यक्षानुपलम्भाभ्यां तद्धेतुः सा हि निश्चिता॥ १५१५॥**

**निखिलेभ्य** इति। पौरुषेयत्वेनाप्यभिमतेभ्यः। सा च विवक्षा तत्कार्यत्वाद्वचनात्प्रतीयते। नतु वाच्यतया। यस्मादात्मसन्तानेऽन्वयव्यतिरेकाभ्यां वचसां हेतुः सा विवक्षा निश्चिता। यत्तूक्तमन्यापोहेन भाषत इति तत्र भाषणं द्योतनं ज्ञापनमिति यावत्। तथाचास्य विवरणम्—"तत्कृतकत्वादिवदर्थान्तरसम्बद्धेन व्यवच्छेदेन द्योतयती"ति। अवश्यं चैतद्विज्ञेयमन्यथा कृतकत्वादिवदिति साधनविकलो दृष्टान्तः स्यात्। नहि कृतकत्वादेर्भाषणं सम्भवति, तस्य शब्दधर्मत्वात्। ततश्चान्यापोहेन भाषणादिति हेतुरसाधारणः स्यात्॥ १५१५॥

ननु च विवक्षायामपि शब्दस्य नैव प्रामाण्यं युक्तम्। तथाहि—न तावद्विवक्षाविशेषे प्रामाण्यं व्यभिचारात्। भ्रान्तस्यान्यविवक्षायामन्यवाक्यदर्शनात्। नापि विवक्षासामान्ये, वैफल्यात्। नहि विवक्षामात्रविज्ञानं क्वचिद्व्यवहाराङ्गतां प्रतिपद्यते। ततोऽर्थविशेषानिश्चयात्। एतदाशङ्क्य **भ्रान्तस्ये**त्यादिना, विवक्षाविशेषे तावत्प्रामाण्यमाह—**भ्रान्ताभ्रान्ते**त्यादि।

**भ्रान्तस्यान्यविवक्षायां वाक्यं चेदन्यदीक्ष्यते।**
**तथा विवक्षमप्येतत्त(क्षासामान्ये त?)स्मान्नैव प्रवर्त्तते १५१६**
**भ्रान्ताभ्रान्तप्रयुक्तानां वैलक्षण्यं परिस्फुटम्।**
**विदग्धाः प्रकृतादिभ्यो निश्चिन्वन्ति गिरामलम्॥ १५१७॥**

अवश्यं हि भ्रान्ताभ्रान्तप्रयुक्तानां वैलक्षण्यमङ्गीकर्त्तव्यम्, अन्यथा न कारण-

भेदो भेदकः स्यात् । तच्च वैलक्षण्यं कुशलाः पुरुषा निश्चिन्वन्त्येव प्रकृतादिभ्यः। प्रकृतम्—प्रकरणम् । आदिशब्देनाव्याकुलता मुखप्रसन्नतादि गृह्यते ॥ १५१६ ॥ ॥ १५१७ ॥

वैलक्षण्यमेव गिरां कथमित्याह—वैलक्षण्येन हेतूनामिति ।

**वैलक्ष्यण्येन हेतूनां विशेषं तासु ये न तु ।**
**अवगच्छन्ति दोषोऽयं तेषां लिङ्गस्य नास्ति तु ॥ १५१८॥**
**सन्दिह्यमानवपुषो धूमस्याप्येकदाऽन्यथा ।**
**भावान्निश्चयकालेऽपि न स्यात्तेजसि लिङ्गता ॥ १५१९॥**

कारणभेदादिति यावत् । तस्मात्सुविवेचितं कार्यं न कारणं व्यभिचरतीति भवत्येव विवक्षाविशेषे प्रामाण्यम् । ये पुनस्तासु लिङ्गभूतासु गीर्षु विशेषं नावधारयन्ति तेषामयं दोषो नतु लिङ्गस्य । नहि लिङ्गं सत्तामात्रेण गमकमिष्यते, किं तर्हि?, निश्चितम् । तस्मात्प्रतिपत्तुर्दोषोऽयम् । अन्यथा हि क्वचिद्बाष्पादिरूपेण सन्दिह्यमानस्य धूमस्यान्यत्वाभावादगमकत्वान्निश्चितस्यापि वह्नौ साध्ये न लिङ्गता प्राप्नोति। अपिच यदा सर्व एवायं शाब्दो व्यवहारस्तैमिरिकद्वयद्विचन्द्रदर्शनवत्स्वप्रतिभासानुरोधेन भ्रान्त एवेष्यते, तदा कथं विवक्षाविशेषे व्यभिचारोद्भावनादप्रामाण्यप्रसञ्जनं स्यात्, तत्र विवक्षाविशेषे पारमार्थिकस्य प्रामाण्यस्यानभ्युपगमात् । तथाचाह— "सङ्केतापेक्षया तस्य हृदि कृत्वा प्रकाशनम् । अनुमानत्वमुद्दिष्टं नतु तत्त्वव्यपेक्षया॥" इति ॥ १५१८ ॥ १५१९ ॥

विवक्षासामान्येऽपि साध्ये प्रामाण्यं प्रतिपादयन्नाह—तेषामित्यादि ।

**तेषामपि विवक्षायाः केवलाया विरुध्यते ।**
**नानुमैकान्तसद्भावात्प्राणितादिप्रसिद्धये ॥ १५२० ॥**

तेषामपि भ्रान्ताभ्रान्तप्रयुक्तानां सर्वेषां विवक्षासामान्ये नानुमानत्वविरोधः, एकान्तसद्भावात्—अव्यभिचारात् । नच—"सान्निध्यतस्तस्य पुंसश्चिन्तामणेरिव। निस्सरन्ति यथाकामं कुड्यादिभ्योऽपि देशनाः ॥" इत्यनेनाभ्युपगमेन व्यभिचार आशङ्कनीयः । यतस्तत्रापि विवक्षैवाद्या करणम् । पूर्वप्रणिधानाहितसंस्कारबलेनैव तत्र वचनप्रवृत्तेः । तथाहि—अत्यभ्यस्तग्रन्थश्चाद्याया(स्वाध्याया ?)दिकालेऽन्यद्विकल्पयतेऽ(तोऽ ?)पि वचनपादविहरणादिक्रियाप्रवृत्तेः । नहि पूर्वसमीहा न तेषां कारण-

मन्यथा हि गोपालघटिकादौ धूमोपलम्भाद्धूमादेरपि लिङ्गस्य व्यभिचारित्वं चोदनीयं स्यात् । तस्मात्सर्वत्रैव कार्यलिङ्गदेशकालाद्यपेक्षया न व्यभिचारः सम्भवीत्येकान्तसद्भाव एव । नच वैफल्यम्, प्राणितादिसिद्धये प्रवृत्तेः साफल्यसम्भवात् । आदिशब्देन कारणदोषादयो गृह्यन्ते ॥ १५२० ॥

भवतु नाम विवक्षां प्रति शब्दस्य प्रामाण्यम् । तथापि कोऽत्र धर्मी किं साध्यं कथं वा सम्बन्धः सिद्धो येन त्रैरूप्यसद्भावेनानुमानेऽन्तर्भावान्न प्रमाणान्तरत्वं स्यादित्याह—**विवक्षायामिति** ।

**विवक्षायां च गम्यायां विस्पष्टैव त्रिरूपता ।**
**पुंसि धर्मिणि सा साध्या कार्येण वचसा यतः ॥ १५२१ ॥**
**पादपार्थविवक्षावान्पुरुषोऽयं प्रतीयते ।**
**वृक्षशब्दप्रयोक्तृत्वात्पूर्वावस्थास्वहं यथा ॥ १५२२ ॥**

पुरुषो धर्मी यत्र वक्ता दृश्यते, सा—विवक्षा साध्या, स्वसन्ताने च सम्बन्धः पूर्वं सिद्धः । यत्र तु वक्ता न दृश्यते तत्र प्रदेशो धर्मी पुरुषविशिष्टः साध्यः । तथाहि—प्रदेशस्यापि शब्दकारणत्वमस्त्येव । पर्वतकुहरादावन्यादृशशब्दश्रवणात ॥ १५२१ ॥ १५२२ ॥

**अतो यत्र परैर्बाह्ये त्रैरूप्यादि निराकृतम् ।**
**शब्दानामिष्यते तत्र नैवास्माभिः प्रमाणता ॥ १५२३ ॥**
**यत्र त्वेषामभीष्टेयं व्यक्तं तत्र त्रिरूपता ।**
**विवक्षायां तु साध्यायां त्रैलक्षण्यं प्रकाशितम् ॥ १५२४ ॥**
**एवं स्थितेऽनुमानत्वं शब्दे धूमादिवद्भवेत् ।**
**त्रैरूप्यसहितत्वेन तादृग्विषयसत्त्वतः ॥ १५२५ ॥**

## इति शाब्दविचारः ।

**अत** इत्यादिना बाह्यापेक्षया शब्दस्यानुमानत्वे साध्ये त्रैरूप्यरहितत्वेनेत्यस्य हेतोर्वैफल्यमाह सिद्धसाध्यतया । विवक्षापेक्षया त्वसिद्धतां **यत्रे**त्यादिना प्राह । तां प्रति शब्दस्य त्रैरूप्यस्य प्रकाशितत्वात् ॥ १५२३ ॥ १५२४ ॥ १५२५ ॥

## इति शाब्दविचारः ।

उपमानमधिकृत्याह—कीदृगित्यादि ।

**कीदृग्गवय इत्येवं पृष्टो नागरिकैर्यदा ।**
**ब्रवीत्यारण्यको वाक्यं यथा गौर्गवयस्तथा ॥ १५२६ ॥**
**एतस्मिन्नुपमानत्वं प्रसिद्धं शाबरे पुनः ।**
**अस्यागमाबहिर्भावादन्यथैवोपवर्णितम् ॥ १५२७ ॥**

कीदृशो गवय इत्येवं पृष्टस्य यद्वाक्यं यादृशो गौस्तादृशो गवय इति, अस्य वाक्यस्योपमानत्वं वृद्धनैयायिकानां प्रसिद्धम् । शाबरे तु भाष्ये शबरस्वामिना शाब्द एवास्यान्तर्भावान्न युक्तं पृथक्प्रमाणान्तरत्वमीदृशस्योपमानस्येति मत्वाऽन्यादृशमेवोपमानं वर्णितम् । उपमानमपि सादृश्यमसन्निकृष्टेऽर्थे बुद्धिमुत्पादयति । यथा गवयदर्शनं गोस्मरणस्येत्यमुना ग्रन्थेन ॥ १५२६ ॥ १५२७ ॥

एनमेव व्याचिख्यासुराह—गां दृष्ट्वेत्यादि ।

**गां दृष्ट्वाऽयमरण्यान्यां गवयं वीक्षते यदा ।**
**भूयोऽवयवसामान्यभाजं वर्तुलकण्ठकम् ॥ १५२८ ॥**
**तदाऽस्य गवयज्ञानं रूपमात्रावबोधकम् ।**
**प्रत्यक्षमेव यच्चापि विशेषेण विकल्पकम् ॥ १५२९ ॥**
**गवा सदृशरूपोऽयं पशुरित्येतदीदृशम् ।**
**अक्षव्यापारसद्भावे जातः प्रत्यक्षमिष्यते ॥ १५३० ॥**

पूर्वं गां दृष्ट्वा पश्चादरण्यं गतो यदा गवयं पश्यति, किंविशिष्टम्, भूयोऽवयवसामान्यभाजम्—भूयांस्यवयवसामान्यानि भजत इति कृत्वा, वर्तुलकण्ठकम्—सास्नारहितम्, तदा यत्प्रथमं गवयस्वरूपमात्रग्राहि निर्विकल्पकमालोचनाज्ञानमुत्पद्यते तत्तावत्प्रत्यक्षम् । यच्चापि गवा सदृशोऽयं पशुरित्येवमाकारं विशेषेण विकल्पयदुत्पद्यते तदपि प्रत्यक्षमेव, अक्षव्यापारेणोत्पत्तेः ॥ १५२८ ॥ १५२९ ॥ १५३० ॥

स्यादेतत्स्मरणबलादसदेव सादृश्यं विकल्पयदुत्पद्यते नाक्षव्यापारेणेत्याशङ्क्याह—तत्र यद्यपीत्यादि ।

**तत्र यद्यपि गां स्मृत्वा तज्ज्ञानमुपजायते ।**
**सन्निधेर्गवयस्थत्वाद्भवेदिन्द्रियगोचरम् ॥ १५३१ ॥**

यद्यपि स्मृतिपूर्वकं तत्सादृश्यग्राहि ज्ञानं, तथापि गवयस्थत्वेन सन्निहितत्वा-

त्साहश्यमिन्द्रियगोचरः। सन्निधिः—सन्निहितत्वम्। गवयस्थत्वादिति सन्निहितत्वे हेतुः। यस्माद्गवयस्थं सादृश्यं तस्मादस्य सन्निधिः॥ १५३१॥

ननु च द्विष्ठत्वात्सादृश्यस्य कथमेकत्र गवयेऽस्य ग्रहणं युक्तमित्याह—**सामान्यवद्धी**त्यादि।

**सामान्यवद्धि सादृश्यं प्रत्येकं च समाप्यते।**
**प्रतियोगिन्यदृष्टेऽपि यस्मात्तदुपलभ्यते॥ १५३२॥**

सामान्येन तुल्यं वर्त्तत इति सामान्यवत्। यद्यपि सादृश्यं द्विष्ठं तथाऽपि सामान्यवत्प्रत्येकं समाप्तमिति कृत्वा प्रतियोगिनि गवादावदृष्टेऽपि सन्निहितत्वादेकत्राप्युपलभ्यत एव॥ १५३२॥

स्यादेतत्—यदि सादृश्यं वस्तु भवेत्तदोपलभ्येत यावता तदेवास्य वस्तुत्वं न सिद्धमित्याह—**सादृश्यस्ये**त्यादि।

**सादृश्यस्य च वस्तुत्वं न शक्यमपबाधितुम्।**
**भूयोऽवयवसामान्ययोगो जात्यन्तरस्य तत्॥ १५३३॥**

भूयसां गवादिशृङ्गाद्यवयवसामान्यानां गवयादिजात्यन्तरेणैकव्यक्तिसमवायलक्षणः सम्बन्धः सादृश्यम्। सम्बन्धश्च सम्बन्धिभ्यो नात्यन्तं भिन्नः, सम्बन्धादिप्रत्ययाभावप्रसङ्गात्। सजातीयस्य सर्वावयवसामान्यसद्भावात्सादृश्यं नास्तीति ज्ञापनार्थं जात्यन्तरग्रहणम्॥ १५३३॥

साम्प्रतमुपमायाः स्वरूपं दर्शयन्नाह—**तस्या**मिति।

**तस्यामेव व्यवस्थायां यद्विज्ञानं प्रवर्त्तते।**
**पशुनैतेन तुल्योऽसौ गोपिण्ड इति सोपमा॥ १५३४॥**

अनेन परिदृश्यमानेन पशुना सदृशो गौरित्येवमाकारं परोक्षगोविषयं यज्ज्ञानमुपजायते तदुपमानं प्रमाणम्॥ १५३४॥

प्रमेयमस्य दर्शयन्नाह—**तस्मा**दित्यादि।

**तस्माद्यत्स्मर्यते तत्स्यात्सादृश्येन विशेषितम्।**
**प्रमेयमुपमानस्य सादृश्यं वा तदाश्रितम्॥ १५३५॥**

यस्माद्यथोक्तलक्षणयुक्तमुपमानं, तस्माद्यद्गवादि स्मर्यते गवयादिसादृश्यविशिष्टं, तदुपमानस्य प्रमेयम्। यद्वा सादृश्यमात्रं गवादिसमाश्रितम्॥ १५३५॥

ननु च प्रत्यक्षेण सादृश्यमुपलब्धं, गौश्च स्मृत्या विषयीकृत एव, तत्किमन्यदधिकं प्रमेयमस्ति, यदधिगमादुपमानस्य प्रामाण्यं स्यादित्याह—प्रत्यक्षेणेति ।

**प्रत्यक्षेणाववुद्धे च सादृश्ये च गवि स्मृते ।**
**विशिष्टस्यान्यतोऽसिद्धेरुपमायाः प्रमाणता ॥ १५३६ ॥**

यद्यपि प्रत्यक्षेण सादृश्यं गृहीतं, गौश्च स्मृत्या विषयीकृतः, तथापि सादृश्यविशिष्टस्य गोपिण्डस्यान्यतः प्रत्यक्षात्स्मरणाच्चासिद्धत्वात् । उपमानस्य तदधिगमे प्रामाण्यम् ॥ १५३६ ॥

अत्रैव दृष्टान्तमाह—प्रत्यक्षेऽपीति ।

**प्रत्यक्षेऽपि यथा देशे स्मर्यमाणेऽपि पावके ।**
**विशिष्टविषयत्वेन नानुमानाप्रमाणता ॥ १५३७ ॥**

यथा प्रदेशादौ धर्मिणि प्रत्यक्षेऽपि स्मृत्या चाग्नौ गृहीतेऽपि वह्निविशिष्टप्रदेशादिविषयत्वान्नानुमानस्याप्रामाण्यमपि तु प्रामाण्यमेव, तद्वदुपमानस्यापीति ॥ १५३७॥

अथापि स्याद्भवतु प्रमाणमुपमानं, तत्कथं प्रत्यक्षादेः पृथक् प्रमाणमित्याह—नहीति ।

**नहि प्रत्यक्षतासिद्धं विज्ञानस्योपपद्यते ।**
**इन्द्रियार्थाभिसम्बन्धव्यापारविरहात्तदा ॥ १५३८ ॥**
**त्रैरूप्यानुपपत्तेश्च नच तस्यानुमानता ।**
**पक्षधर्मादि नैवात्र कथञ्चिदवकल्पते ॥ १५३९ ॥**
**(प्राग्गोगतं हि सादृश्यं न) धर्मत्वेन गृह्यते ।**
**गवये गृह्यमाणं च न गवामनुमापकम् ॥ १५४० ॥**

न तावत्प्रत्यक्षं युक्तमिन्द्रियार्थाभिसम्बन्धेनानुत्पत्तेः । नाप्यनुमानं त्रैरूप्याभावात् । तथाहि—अत्र पक्षधर्मः सादृश्यं वा परिकल्प्यते, परिदृश्यमानो गवयादिर्वा, तच्च सादृश्यं लिङ्गत्वेन परिकल्प्यमानं गोगतं वा कल्प्येत गवयगतं वेति पक्षद्वयम् । तत्र न तावद्गवादिप्रमेयस्थस्य सादृश्यस्य लिङ्गत्वं, गवयदर्शनात्प्राक्तस्यागृहीतत्वात् । नचागृहीतस्य लिङ्गत्वं युक्तमतिप्रसङ्गात् । गयवस्थं तर्हि सादृश्यं लिङ्गं भविष्यति, तत्र तस्य गृहीतत्वादित्याह—गवये गृह्यमाणं च न गवामनुमापकम्, व्यधिकरणत्वात्काकस्य कार्ष्ण्यादिवत् ॥ १५३८ ॥ १५३९ ॥ १५४० ॥

गवयदर्शनादूर्ध्वं तर्हि गवि गृहीतत्वादेतत्स्थं लिङ्गं भविष्यतीत्याह—**प्रतिज्ञेति** ।

**प्रतिज्ञार्थैकदेशत्वाद्गोगतस्य न लिङ्गता ।**

**गवयश्चाप्यसम्बन्धान्न गोलिङ्गत्वमृच्छति ॥ १५४१ ॥**

सादृश्यस्य प्रमेयत्वान्न युक्तं तस्यैव लिङ्गत्वम् । गवयस्तर्हि लिङ्गं भविष्यतीत्याह —**गवय** इति । अत्रापि व्यधिकरणत्वान्न गवयस्य लिङ्गत्वम् ॥ १५४१ ॥

प्रामाण्यं तर्हि माभूदुपमानस्येत्याह—**न चाप्रमाणमित्यादि** ।

**न चाप्रमाणं तज्ज्ञानमज्ञातार्थप्रकाशनात् ।**

**गवयादर्शनात्पूर्वं तत्सादृश्यानवग्रहात् ॥ १५४२ ॥**

पूर्वं गवयसादृश्यविशिष्टस्य गोरग्रहणात् । अज्ञातस्य सादृश्योपाधेर्गोः प्रकाशनमस्तीति युक्तं प्रामाण्यम् ॥ १५४२ ॥

**प्रमेये**त्यादिना प्रतिविधत्ते ।

**प्रमेयवस्त्वभावेन नाभिप्रेताऽस्य मानता ।**

**भूयोऽवयवसामान्ययोगः सादृश्यमस्ति चेत् ॥ १५४३ ॥**

**सामान्यानि निरस्तानि भूयस्ता तेषु सा कुतः ।**

**तैश्च योगः प्रमाणं चेदस्ति तत्प्रतिपादकम् ॥ १५४४ ॥**

**सामान्यस्य च वस्तुत्वं प्रत्यक्षग्राह्यताऽपि च ।**

**अभावान्यप्रमेयत्वादसाधारणवस्तुवत् ॥ १५४५ ॥**

प्रमेयाभावात् षट्प्रमाणव्यतिरिक्तप्रमाणवदतो नोपमानं प्रमाणम् । भूयोऽवयवसामान्ययोगात्मकं सादृश्यमस्ति प्रमेयमतो हेतुरसिद्ध इति चेत् । तन्न । सामान्यपरीक्षायां सामान्यानां निरस्तत्वान्न तेषां भूयस्त्वम् । नापि तैर्योगोऽस्तीति नासिद्धता हेतोः । स्यादेतत्—अस्त्येव सामान्यप्रतिपादकं प्रमाणमतोऽसिद्ध एव हेतुः । तत्रेदं प्रमाणम्—सामान्यं वस्तु, तथा प्रत्यक्षग्राह्यम्, इति प्रतिज्ञाद्वयम् । अभावान्यप्रमेयत्वादिति हेतुः । अभावात्प्रमेयादन्यप्रमेयस्वभावत्वादित्यर्थः । असाधारणवस्तुवदिति दृष्टान्तः । असाधारणवस्तुस्वलक्षणम् ॥ १५४३ ॥ १५४४ ॥ १५४५ ॥

**अभावे**त्यादिना दूषणमाह—

**अभावपक्षनिक्षिप्तसामान्यार्थप्रवादिनाम् ।**

**असिद्धिराद्यसाध्ये च प्रतिज्ञार्थैकदेशता ॥ १५४६ ॥**

सामान्यार्थेत्यत्रार्थशब्दः प्रमेयवचनः प्रतिज्ञाद्वयेऽपि बौद्धानामस्वभावसामान्यवादिनामभावादन्यत्वं सामान्यस्यासिद्धमिति हेतोरसिद्धिः । प्रतिज्ञार्थैकदेशभावश्चाद्ये साध्ये वस्तुलक्षणे । तथाहि—अभावादन्यद्वस्त्वेव भवति, अभावव्यवच्छेदलक्षणत्वाद्भावस्य, तदेव शब्दान्तरेण हेतुत्वेनोपात्तम् । तदेव च साध्यमिति प्रतिज्ञार्थैकदेशता ॥ १५४६ ॥

किं च—स्मृतिस्वभावत्वाद्वा न प्रमाणमुपमानं, स्मृत्यन्तरवत् । तत्र स्मृतिस्वभावत्वं प्रतिपादयन्नाह—**एवमित्यादि** ।

**एवं तु युज्यते तत्र गोरूपावयवैः सह ।**
**गवयावयवाः केचित्तुल्यप्रत्ययहेतवः ॥ १५४७ ॥**
**तत्रास्य गवये दृष्टे स्मृतिः समुपजायते ।**
**असकृत् दृष्टपूर्वेषु गोरूपावयवेष्वियम् ॥ १५४८ ॥**
**अतएव तुरङ्गादौ तत्सादृश्येन नो मतिः ।**
**वर्त्तते गवये दृष्टे को विशेषोऽन्यथा पुनः ॥ १५४९ ॥**

प्रकृत्यैवासत्यपि सादृश्याख्ये वस्तुनि केचिद्गवयावयवा गोगतैरवयवैः सह तुल्यप्रत्यवमर्शविकल्पहेतवः, न सादृश्यं नामार्थान्तरमन्यत्र तुल्यप्रत्यवमर्शहेतुभ्योऽवयवेभ्यः, तेभ्योऽर्थान्तरस्य बुद्धावप्रतिभासनात् । तस्माद्गवयदर्शनाद्गोगतावयवेष्वेव भूयोदर्शनबलात्स्मृतिरूपमेव जायते ज्ञानं, नतु सादृश्याख्यवस्तुग्राहि । अन्यथा हि तुरगादावपि भूयोऽवयवसामान्ययोगोऽस्तीति तत्रापि गवयदर्शनाद्गवीव मतिः किं न प्रवर्त्तेत । नह्यत्र कश्चिद्विशेषोऽस्ति, उभयत्रापि सादृश्यसद्भावात् । **अन्यथेति** । यद्यसकृन्न दृष्टाः स्युः । स्मृतित्वे तु नायं दोषो यदेवासकृद्दृष्टपूर्वं तत्रैव स्मृतिर्भवति । प्रतिनियतशक्तित्वाच्च स्मृतिप्रबोधहेतूनाम् ॥ १५४७ ॥ १५४८॥ ॥ १५४९ ॥

स्यादेतत्—भवतु स्मृतिस्तथापि स्मृतिरेव कस्मादप्रमाणमित्याह—**विज्ञातेत्यादि** ।

**विज्ञातार्थप्रकाशत्वान्न प्रमाणमियं ततः ।**
**प्रमाणान्तरभावस्तु कुत एव भविष्यति ॥ १५५० ॥**

**इयमिति** । स्मृतिः ॥ १५५० ॥

अभ्युपगम्य सादृश्यस्य वस्तुत्वं परमतेनैवोपमानाप्रामाण्यमाह—**अस्तु वेत्यादि** ।

**अस्तु वा वस्तु सादृश्यं तत्तु सामान्यवद्गवि।**
**प्रतियोगिन्यदृष्टेऽपि दृष्टमेव पुरःस्थितम्॥ १५५१॥**
**तथाच स्मृतिरूपत्वं न कथञ्चिन्निवर्त्तते।**
**सत्तामात्रेण विज्ञातं सादृश्यं च गवात्मनि॥ १५५२॥**
**गवयेन तु सादृश्यमित्येवं न विनिश्चितम्।**
**प्रमिणोत्युपमानं तु वैलक्षण्यं ततः स्मृतेः॥ १५५३॥**

भवतु सादृश्यं वस्तुगति च सामान्यमिव सर्वात्मना परिसमाप्तं, तथापि गवयदर्शनात्पूर्वं गवि पुरोऽवस्थिते प्रत्यक्षेण गृह्यमाणे ततोऽव्यतिरेकात्तदपि पुरोऽवस्थितं सादृश्यं गृहीतमेव गोस्वरूपवत्। अन्यथा ह्यव्यतिरेको न सिद्ध्यति। ततश्च गृहीतग्रहणात्स्मृतिरूपत्वान्न प्रमाणम्। अथापि स्यात्सत्तामात्रेण पूर्वं सादृश्यं गृहीतम्, एतद्गवयेनैतत्सादृश्यं गोरित्यनेन रूपेण न गृहीतं। उपमानं त्वनेनाकारेण प्रमिणोति, ततः स्मृतिरूपत्वमसिद्धमिति॥ १५५१॥ १५५२॥ १५५३॥

तत्राह—**यदि नामे**त्यादिना।

**यदि नाम गृहीतं नो नाम्ना तेनैव तत्पुरा।**
**गृहीतं तु स्वरूपेण यदस्यात्माभिधीयते॥ १५५४॥**

यदि नाम गवयेन सादृश्यमित्यनेन नाम्ना विशिष्टं गोद्रव्यं गवयदर्शनात्पूर्वं न गृहीतं, स्वरूपेण तु गृहीतमेव। यस्तस्य स्वभावः स गृहीत इति यावत्। किं तत्स्वरूपमित्याह—**यदस्यात्माभिधीयत** इति। यत्स्वरूपं तस्य गोपिण्डस्यात्मेत्यभिधीयते। तेन—स्वरूपेण स्वभावलक्षणेन तद्गृहीतमिति यावत्॥ १५५४॥

यदि नाम गृहीतं ततः किमित्याह—**न नाम रूपमि**त्यादि।

**न नाम रूपं वस्तूनां यत्तस्याग्रहणे सति।**
**परिज्ञातात्मतत्त्वानामप्यविज्ञातता भवेत्॥ १५५५॥**

नहि वस्तूनां स्वरूपं नाम भवति, येन तस्य नाम्नः पूर्वमग्रहणे गृहीतस्यापि वस्तुनो न ग्रहणं स्यात्। विशेषतश्च निश्चयात्मकप्रत्यक्षवादिनो न गृहीतमित्येवं न युक्तं वक्तुम्॥ १५५५॥

**एतावता च लेशेन प्रमाणत्वव्यवस्थितौ।**
**नेयत्ता स्यात्प्रमाणानामन्यथाऽपि प्रमाणतः॥ १५५६॥**

किञ्च—अनेन तुल्य इति ज्ञानादेतावता लेशेन प्रमाणान्तरकल्पनायामतिप्रसङ्गः स्यात् । "प्रत्यक्षमनुमानं च शाब्दं चोपमया सह । अर्थापत्तिरभावश्च षडेते साध्यसाधकाः ॥" इति नेयत्ता स्यात्प्रमाणानाम् ॥ १५५६ ॥

तमेवातिप्रसङ्गं दर्शयन्नाह—**तरुपङ्क्त्यादी**त्यादि ।

**तरुपङ्क्त्यादिसंदृष्टावेकपादपदर्शनात् ।**
**द्वितीयशाखिविज्ञानादाद्योऽसाविति निश्चयः ॥ १५५७ ॥**
**प्रमाणान्तरमासक्तं सादृश्याद्यनपेक्षणात् ।**
**गृहीतग्रहणान्नो चेत्समानमुपमास्वपि ॥ १५५८ ॥**

आदिशब्देन पिपीलिकादिपङ्क्तिग्रहणम् । तरुपङ्क्त्यादिदर्शनकाले प्रथमवृक्षग्रहणादाद्योऽयं वृक्ष इति निश्चयो नोपजायते । द्वितीयवृक्षोपलब्धौ तु सत्यामाद्ये शाखिन्याद्योऽयं शाखीति योऽयं जायते निश्चयः स प्रमाणान्तरं स्यात् । कस्मात् । सादृश्याद्यनपेक्षणात् । सादृश्यं नापेक्षत इति नोपमानमिदम् । अक्षव्यापारानपेक्षणान्न प्रत्यक्षम् । लिङ्गानपेक्षणान्नानुमानम् । शब्दनिरपेक्षत्वान्न शाब्दम् । अन्यथाऽनुपपद्यमानदृष्टश्रुतार्थानपेक्षत्वान्नार्थापत्तिः । प्रमाणप्रमेयनिवृत्त्यनपेक्षणान्नाभावः । तथा—अस्मात्पूर्वमिदं पश्चाद्दीर्घं ह्रस्वमिदं महत् । इत्येवमादिविज्ञाने प्रमाऽनिष्ठा प्रसज्यते । इति वक्तव्यम् । स्मृतित्वाद्गृहीतग्रहणान्न प्रमाणान्तरमेतदिति चेत् । **समानमुपमास्वपि** । गृहीतग्राहित्वम् । उपमास्विति व्यक्तिभेदाद्बहुवचनम् ॥ १५५७ ॥ ॥ १५५८ ॥

**गवयस्योपलम्भे च तुरङ्गादौ प्रवर्त्तते ।**
**तद्वैसादृश्यविज्ञानं यत्तदन्या प्रमा न किम् ॥ १५५९ ॥**
**अभावान्तर्गतं नो चेन्नैवं भावावलम्बनात् ।**
**अन्योन्याभावतायां वा समं सादृश्यबुद्धिषु ॥ १५६० ॥**

किञ्च—यथा गवयदर्शनाद्गवि साधर्म्यज्ञानं प्रमाणान्तरं व्यवस्थाप्यते, तथा गवयदर्शनात्तुरङ्गादौ वैसादृश्यस्य विज्ञानमपि कस्मान्न प्रमाणान्तरं व्यवस्थाप्येत । अभावप्रमाणान्तर्भावान्न प्रमाणान्तरमिति चेत् । नैतद्युक्तम् । कस्मात् । भावावलम्बनात् । अभावस्याभावविषयत्वात् । स्यादेतत् । वैसादृश्यं हि सादृश्याभावः, तस्मादस्त्येवाभावान्तर्गतिरित्याह—**अन्योन्ये**त्यादि । अन्योन्याभावतायां सत्यां यद्य-

भावरूपं प्रमेयं व्यवस्थाप्यते तदा, समं—तुल्यमेतदीदृशं प्रमेयं, सादृश्यबुद्धिषु—उपमानत्वेनेष्टासु ॥ १५५९ ॥ १५६० ॥

कथमित्याह—**सादृश्यस्ये**त्यादि।

**सादृश्यस्य विवेको हि यथा तत्र प्रमीयते।**
**सर्वावयवसामान्यविवेको गम्यते तथा॥ १५६१॥**

यथा तत्र वैधर्म्यज्ञाने सादृश्यविवेकः प्रतीयते तथा साधर्म्यज्ञानेऽपि सर्वावयवसामान्यवियोगो गम्यत इत्यभावान्तर्भावः स्याद्वैसादृश्यज्ञानवत् ॥ १५६१ ॥

अत्रैवोपपत्तिमाह—**भूय** इत्यादि।

**भूयोऽवयवसामान्ययोगो येनाधिगम्यते।**
**सर्वावयवसामान्ययोगे तत्त्वं प्रसज्यते॥ १५६२॥**

येनेति कारणोपदेशः। येन—यस्मात्, साधर्म्यज्ञाने भूयोऽवयवसामान्ययोगोऽवगम्यते। न तु सर्वावयवसामान्ययोगस्तस्मादत्राप्यन्योन्याभावः। अन्यथा यदि सर्वावयवसामान्ययोगः स्यात्, तदा तत्त्वं—गोत्वं गवयस्य प्रसज्येत ॥ १५६२ ॥

**श्रुतातिदेशवाक्यस्य समानार्थोपलम्भने।**
**संज्ञासम्बन्धविज्ञानमुपमा कैश्चिदिष्यते॥ १५६३॥**

कैश्चिदिति। नैयायिकैः। त एवमुपमानस्य लक्षणमाहुः—"प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमान"मिति। प्रसिद्धं साधर्म्यं प्रसिद्धेन वा साधर्म्यं यस्य स प्रसिद्धसाधर्म्यो गवयः, तस्मात्—तमाश्रित्य, साध्यस्य—संज्ञासंज्ञिसम्बन्धस्य, साधनं—सिद्धिः, उपमानम्। तथाह्यागमाहितसंस्कारस्मृत्यपेक्षात्साधर्म्यज्ञानात्समाख्यासम्बन्धप्रतिपत्तिरुपमानमित्ययमेवार्थोऽन्यैरन्यथा निर्दिष्टः। गौरिव गवय इत्यतिदेशवाक्यमागमः, तेनाहितो यः संस्काराख्यो गुणः, ततो याऽतिदेशवाक्यार्थस्मृतिरुपजायतेऽरण्ये गवयदर्शनात्, तामपेक्षते यत्साधर्म्यज्ञानं तत्तथोक्तम्। समाख्या—संज्ञा, शब्द इति यावत्। तेन सहार्थस्य यः सम्बन्धः, तस्य प्रतिपत्तिरुपमानमिति तुल्य एवार्थः ॥ १५६३ ॥

तत्रापीत्यादिना दूषणमाह—

**तत्रापि संज्ञासम्बन्धप्रतिपत्तिरनाकुला।**
**तस्यातिदेशवाक्यस्य तदैव श्रवणे यदि॥ १५६४॥**

**तथा परिगृहीतार्थग्रहणान्न प्रमाणता ।**
**स्मृतेरिवोपमानस्य करणार्थवियोगतः ॥ १५६५ ॥**

तत्रातिदेशवाक्यश्रवणकाले संज्ञासंज्ञिसम्बन्धप्रतिपत्तेः पूर्वमेवोत्पन्नत्वात्पश्चादुत्पद्यमानायां गृहीतग्रहणान्न प्रमाणत्वं स्मृतिवत् । स्यादेतद्गृहीतग्राहित्वं, भविष्यति प्रामाण्यं चेति, कोऽत्र विरोध इत्याह—करणार्थवियोगत इति । करणार्थः—साधकतमत्वम्, अनिष्पादिते कर्मणि प्रवृत्त्या ॥ १५६४ ॥ १५६५ ॥

स्यादेतत्—पूर्वं संज्ञासम्बन्धप्रतिपत्तिर्न जातैव, ततो गृहीतग्रहणादित्यसिद्धो हेतुरित्याह—अथ सेति ।

**अथ सा नैव संजाता तथाऽपि प्रतिपद्यते ।**
**सोऽयं यस्य मया संज्ञा संश्रुतेति कथं तदा ॥ १५६६ ॥**

यदि पूर्वं न संजाता संज्ञासम्बन्धप्रतिपत्तिरभविष्यत्तदाऽयमसौ गवयो यस्य मया पूर्वं संज्ञा श्रुतेत्येवमाकाराप्रतिपत्तिर्नोदायिष्यत ॥ १५६६ ॥

अत्रैवोपपत्तिमाह—तथा हीति ।

**तथा ह्यश्रुततत्संज्ञो गवयस्योपलम्भने ।**
**तन्नाम श्रुतमस्येति न ज्ञातुं कश्चन प्रभुः ॥ १५६७ ॥**

अविद्धकर्णस्त्वाह—आगमात्सामान्येन प्रतिपद्यते विशेषप्रतिपत्तिस्तूपमानादिति । अतस्तन्मतमाशङ्कते—उपयुक्तोपमान इति ।

**उपयुक्तोपमानश्चेत्तुल्यत्वग्रहणे सति ।**
**विशिष्टविषयत्वेन सम्बन्धमवगच्छति ॥ १५६८ ॥**

उपयुक्तमुपमानमतिदेशवाक्यं यस्य स तथोक्तः ॥ १५६८ ॥

अस्यैवार्थं द्वितीयेन श्लोकेनाचष्टे—आगमाद्धीति ।

**आगमाद्धि स सम्बन्धं वेत्ति सामान्यगोचरम् ।**
**विशिष्टविषयं तं तु विजानात्युपमाश्रयात् ॥ १५६९ ॥**

विशिष्टो विषयो गवयः ॥ १५६९ ॥

नन्वित्यादिना प्रतिविधत्ते ।

**नन्वन्यत्र न संज्ञायाः सम्बन्धस्यावबोधने ।**
**तस्या ह्यर्थान्तरे बोधो युज्यतेऽतिप्रसङ्गतः ॥ १५७० ॥**

नेत्यस्य युज्यत इत्यनेन सम्बन्धः । नह्यन्यत्र संज्ञासम्बन्धप्रतिपत्तौ सत्यां तस्याः संज्ञाया अर्थान्तरे प्रतिपत्तिर्युक्ताऽतिप्रसङ्गात् ॥ १५७० ॥

तमेवातिप्रसङ्गं दर्शयन्नाह—नहीति ।

**नहि चित्राङ्गदे कश्चित्तन्नामग्रहणे सति ।**
**कालान्तरेण तं शब्दं वेत्ति चारुकिरीटिनि ॥ १५७१ ॥**
**तस्मात्प्राग् यत्र तेनेदं विकल्पप्रतिबिम्बके ।**
**ज्ञातं नाम बहिर्बुद्ध्या सामान्यमिति संज्ञिते ॥ १५७२ ॥**
**गवयस्योपलम्भेऽपि तत्रैव प्रतिपद्यते ।**
**दृश्यकल्पाविभागज्ञो बाह्य इत्यभिमन्यते ॥ १५७३ ॥**

अङ्गदः—कटकाख्यमाभरणम् । चित्रोऽङ्गदो यस्यासौ तथोक्तः । नहि चित्राङ्गदो यः स देवदत्त इत्युक्तः कश्चित्कालान्तरे तं चित्राङ्गदशब्दं चारुकिरीटिनि यज्ञदत्ते प्रतिपद्यते । किरीटं—मुकुटं, चारु च तत् किरीटं यस्यास्ति स तथोक्तः । तस्मान्मा-भूदतिप्रसङ्ग इति । यत्रैवार्थे विकल्पसमारोपिते बाह्यार्थव्यवसायिन्या बुद्ध्या गृहीतं नाम—संज्ञा, गवयोपलम्भेऽपि तत्रैव तन्नाम प्रतिपद्यते, नतु बाह्ये स्वलक्षणे गवयाख्ये । तदेव च विकल्पप्रतिबिम्बकं सामान्यमिति व्यवह्रियते । तत्परिकल्पितम् । तस्य निराकृतत्वात् । कथं तर्हि बाह्यस्वलक्षणाभिमान इत्याह—दृश्येत्यादि॥१५७१॥ ॥ १५७२ ॥ १५७३ ॥

अथ स्वलक्षणे शब्दादिप्रवृत्तौ को विरोध इत्याह—एवमित्यादि ।

**एवं च प्रतिपत्तव्यं यत्स्वलक्षणगोचराः ।**
**विकल्पा ध्वनयश्चापि विस्तरेण निराकृताः ॥ १५७४ ॥**

यतः शब्दार्थपरीक्षायां विस्तरेण स्वलक्षणगोचरत्वं शब्दानां विकल्पानां च निराकृतम्, तस्माद्विकल्पसमारोपित एव शब्दार्थः ॥ १५७४ ॥

**तेषां तद्गोचरत्वेऽपि भवत्येवानुमैव वा ।**
**त्रिरूपलिङ्गजन्यत्वमस्य चैवं प्रतीयते ॥ १५७५ ॥**
**यो गवा सदृशोऽसौ हि गवयश्रुतिगोचरः ।**
**सङ्केतग्रहणावस्थो बुद्धिस्थो गवयो यथा ॥ १५७६ ॥**

भवतु वा तेषां विकल्पशब्दानां स्वलक्षणगोचरत्वम् । तथाऽप्यनुमान एवान्त-

र्भावान्नोपमानं प्रमाणान्तरम् । कथं त्रिरूपलिङ्गजत्वमन्तरेणास्यानुमानेऽन्तर्भाव इत्याशङ्क्य त्रिरूपलिङ्गजन्यत्वं प्रतिपादयन्नाह—त्रिरूपेत्यादि । गोसदृशत्वं हेतुः, गवयश्रुतिगोचरत्वं साध्यधर्मः, सङ्केतग्रहणकाले विकल्पबुद्धिप्रतिभासी बुद्धिस्थो गवयो दृष्टान्तः । दृश्यमानो गवयो धर्मी ॥ १५७५ ॥ १५७६ ॥

स्यादेतत्—गौरिव गवय इत्येतस्मिन्सङ्केतकाले गवयो बुद्धौ न समारूढ एव । ततश्चासिद्धो दृष्टान्त इत्याह—बुद्धिस्थोऽपीत्यादि ।

**बुद्धिस्थोऽपि न चेत्तस्यामवस्थायां भवेदसौ ।**
**क्रियते समयः कस्मिन्नयं च सदृशो गवा ॥ १५७७ ॥**

न केवलं न चक्षुर्गोचर इत्यपि शब्दार्थः । यदि बुद्धौ गोसारूप्यानुगतं न किंचित्प्रतिभासेत तदाऽयं सदृशो गवेति किमाश्रित्य सङ्केतः क्रियेत, क्रियते च समयः, तस्माद्बुद्धिस्थो गोसारूप्यानुगत आकारः कश्चित्समयकाले प्रतिभासते इत्यभ्युपगन्तव्यम् ॥ १५७७ ॥

एवं तावच्छब्दार्थयोः सम्बन्धं प्रमेयमुपमानस्याभ्युपगम्य गृहीतग्रहणादनुमानान्तर्भावाच्चाप्रामाण्यमस्य प्रतिपादितम् । साम्प्रतं सम्बन्धिव्यतिरिक्तः सम्बन्धोऽपरो नास्ति, तौ च सम्बन्धिनौ प्रमाणान्तरेणागृहीतौ, तथाहि—समयकाले श्रोत्रज्ञानेन शब्दो गृहीतः, पश्चाच्च गवयश्चक्षुषा पुरोवर्त्ती गृहीतस्तत्किमपरं प्रमेयमस्ति, येनोपमानस्य प्रामाण्यं स्यादिति । एतत्प्रतिपादयन्नाह—न सम्बन्धीत्यादि ।

**न सम्बन्ध्यतिरिक्तश्च सम्बन्धोऽस्तीति साधितम् ।**
**प्रागेव समये शब्दो गृहीतः श्रोत्रचेतसा ॥ १५७८ ॥**
**चक्षुषा दृश्यते चासावग्रतोऽवस्थितः पशुः ।**
**पृथग्विज्ञातयोरेषा युक्ता न घटना प्रमा ॥ १५७९ ॥**
**गृहीतप्रतिसन्धानात्सुगन्धिमधुरत्ववत् ।**
**तन्नामयोगसंवित्तिः स्मार्त्ततां नातिवर्त्तते ॥ १५८० ॥**

अनेन गृहीतग्रहणादप्रामाण्यमाह—साधितमिति । गुणपदार्थपरीक्षायाम् । स्यादेतत्—यद्यपि पृथक्सम्बन्धिनौ गृहीतौ श्रोत्रादिचेतसा, तयोश्च घटनोपमया क्रियते, तस्माद्घटनया प्रामाण्यमुपमानस्य स्यादित्याह—पृथगित्यादि । सुगन्धिमधुरादिवदिति । सप्तम्यर्थे वतिः । यथा यदेतद्वस्त्वनुभूयमानं तन्मधुरं तत्सुगन्धी-

त्यादौ विषये गृहीतसंयोजनात्मकं ज्ञानं न प्रमाणं तथेदमपि न भवितुमर्हतीत्यर्थः । तत्—तस्मात्, नामयोगसंवित्तिः—संज्ञासम्बन्धज्ञानं, स्मार्त्ततां नातिवर्त्तते—यथोक्तनीत्या ॥ १५७८ ॥ १५७९ ॥ १५८० ॥

स्यादेतत्—नहि संज्ञासम्बन्धः साधर्म्यद्वारेण कचित्क्रियते, किं तर्हि ?, साक्षात्संज्ञिनमुपदर्श्यायं गौरित्येवं क्रियमाणो दृष्टः, नतु परोक्षविषय इत्याह—**अनन्ते-त्यादि** ।

**अनन्तोपायजन्याश्च समाख्यायोगसंविदः ।**
**साधर्म्यमनपेक्ष्यापि जायन्ते नरपादिषु ॥ १५८१ ॥**

**समाख्यायोगसंविद** इति । संज्ञासम्बन्धज्ञानानि । **नरपादिष्विति** । राजादिषु ॥ १५८१ ॥

तदेवानन्तोपायजन्यत्वं प्रदर्शयितुमुदाहरणमाह—**सितातपत्रेत्यादि** ।

**सितातपत्रापिहितब्रध्नपादो नराधिपः ।**
**तेषां मध्य इति प्रोक्त उपदेशविशेषतः ॥ १५८२ ॥**
**कालान्तरेण तद्दृष्टौ तन्नामास्येति या मतिः ।**
**सा तदाऽन्याप्रमा प्राप्ता साधर्म्याद्यनपेक्षणात् ॥ १५८३ ॥**

यथाहि कश्चित्कंचिद्ब्रूते—गच्छ भ्रातरमुना कार्येण, पश्य नराधिपतिं बहुभिर्गजतुरगाधिरूढैः पुरुषैः सह गच्छन्तमिति । स प्रत्याह—कस्तेषां मध्ये नराधिपतिरिति । स कथयति—सितातपत्रेणापिहिता ब्रध्नपादाः—आदित्यरश्मयो यस्य स, तेषां मध्ये नराधिपतिरिति । तस्य तमुपदेशं गृहीत्वा गतस्य दृष्ट्वा तं यथोक्तविशेषणविशिष्टं राजानमयमसौ नराधिपतिनामेति या बुद्धिरुत्पद्यते साऽपि भवन्मतेन प्रमाणान्तरमापतितम् । कस्मात्? । सादृश्याद्यनपेक्षणात् । अनेन प्रमाणषट्कानन्तर्भावं दर्शयति ॥ १५८२ ॥ १५८३ ॥

अविद्धकर्णस्तु—द्वे एव प्रमाणे, स्वलक्षणसामान्यलक्षणाभ्यां चान्यत्प्रमेयं नास्तीति, एतद्विघटनार्थं प्रमाणयति—प्रत्यक्षमनुमानव्यतिरिक्तप्रमाणान्तरसद्वितीयं प्रमाणत्वात्, अनुमानवत् । अनुमानं वा प्रत्यक्षव्यतिरिक्तप्रमाणान्तरसद्वितीयं प्रमाणत्वात्, प्रत्यक्षवत् । तथा स्वलक्षणं सामान्यलक्षणव्यतिरिक्तप्रमेयार्थान्तरसद्वितीयं प्रमेयत्वात्, सामान्यलक्षणवत् । सामान्यलक्षणं वा स्वलक्षणव्यतिरिक्तप्रमेयान्तरसद्वितीयं प्रमेयत्वात्, स्वलक्षणवदिति । एतदेवाह—**अन्य** इति ।

अन्यः प्रमान्तरास्तित्वं साधयत्यनुमाबलात् ।
प्रत्यक्षमनुमाभिन्नप्रमाणान्तरसङ्गतम् ॥ १५८४ ॥
अनुमावत्प्रमाणत्वादनुमाऽप्येवमेव च ।
(नैव)मप्रतिबन्धोऽयं हेतुर्बाधाप्रकाशनात् ॥ १५८५ ॥
चतुष्ट्वं च प्रमाणानां व्याहन्येतैवमेव ते ।
यत्तत्र परिहारस्ते स एवात्र भविष्यति ॥ १५८६ ॥

## इति उपमानविचारः ।

सङ्गतं—सम्बद्धं, सद्वितीयमिति यावत् । उपलक्षणमेतत्प्रमेयान्तरसाधनस्यापि बोद्धव्यम् । साध्यविपक्षे हेतोर्बाधकस्याप्रकाशनान्न साध्यसाधनयोः प्रतिबन्ध उपदर्शित इत्यनैकान्तिकाः सर्वे एव हेतवः, संदिग्धविपक्षव्यावृत्तिकत्वात् । किंच—प्रत्यक्षानुमानोपमानशाब्दानि चत्वारि प्रमाणानीति सङ्ख्यानियमो व्याहन्येत, अनेनैव प्रकारेण प्रमाणान्तरसद्भावात् । तथाहि शक्यमिदमभिधातुम्—प्रत्यक्षमनुमानोपमानशाब्दव्यतिरिक्तप्रमाणान्तरसद्वितीयं प्रमाणत्वादनुमानवदिति । यच्चापि प्रमेयत्रैविध्यमिष्टं—सामान्यं विशेषः सामान्यविशेषवानिति, तदपि व्याहन्येत, तेनैव प्रकारेण प्रमेयान्तरसाधनसम्भवात् । योऽत्र भवतः परिहारः सोऽस्माकमपि भविष्यतीत्यलं बहुना ॥ १५८४ ॥ १५८५ ॥ १५८६ ॥

## इत्युपमानविचारः ।

अर्थापत्तिमधिकृत्याह—प्रमाणषट्केत्यादि ।

प्रमाणषट्कविज्ञातो यत्रार्थो नान्यथा भवन् ।
अदृष्टं कल्पयत्यन्यं साऽर्थापत्तिरुदाहृता ॥ १५८७ ॥

यत्र देशकालादौ प्रत्यक्षानुमानोपमानशाब्दार्थापत्त्यभावलक्षणैः षड्भिः प्रमाणैः परिच्छिन्नोऽर्थोऽन्यथा नोपपद्यते यद्येवंभूतोऽर्थो न भवेदित्येवं या परोक्षार्थविषया कल्पना साऽर्थापत्तिः प्रमाणम् । उदाहृतेति । शबरस्वामिना । यथोक्तम्—"दृष्टः श्रुतो वार्थोऽन्यथा नोपपद्यत इत्यदृष्टकल्पना । तद्यथा—जीवति देवदत्ते गृहादर्शनेन बहिर्भावकल्पने"ति । दृष्टः—शाब्दव्यतिरिक्तप्रमाणपञ्चकाधिगतः, श्रुतः—शाब्दप्रमाणावगतः ॥ १५८७ ॥

तत्र षट्प्रमाणपूर्विकाया अर्थापत्तेर्यथाक्रममुदाहरणान्याह—तत्रेत्यादि ।

**तत्र प्रत्यक्षतो ज्ञाताद्दाहाद्दहनशक्तिता।**
**वह्नेरनुमितात्सूर्ये यानात्तच्छक्तियोगिता ॥ १५८८ ॥**
**शक्तयः सर्वभावानां कार्यार्थापत्तिसाधनाः।**
**अपूर्वास्ताश्च गम्यन्ते सम्बन्धग्रहणादृते ॥ १५८९ ॥**

तत्र प्रत्यक्षपूर्विकाऽर्थापत्तिर्यथा—प्रत्यक्षेण दाहमनुभूय वह्नेर्दाहशक्तिकल्पना। अनुमानपूर्विका यथा—देशान्तरप्राप्त्याऽनुमिताद्गमनात्सूर्यस्य गमनशक्तियोगकल्पना। शक्तयश्च सर्वदा सर्वपदार्थानां कार्यार्थापत्तिसाधना इति। इयमप्यर्थापत्तिः कदाचित्प्रत्यक्षपूर्विकैव, यदा प्रत्यक्षेण कार्यमुपलभ्य कारणस्य शक्तिरवगम्यते। यदा त्वनुमानादिना कार्यमवगम्य कारणशक्तिरवगम्यते तदाऽनुमानादिपूर्विका भवति कार्यार्थापत्तिः। कार्यस्यान्यथाऽनुपपत्तिः साधनं प्रमाणं यासां तास्तथोक्ताः। नच कारणशक्तिः पूर्वमेव गृहीतेति शक्यं वक्तुम्, यस्मादपूर्वास्ताश्च शक्तयो गम्यन्ते सर्वदैव। तेनाधिगतार्थाधिगन्तृत्वं नास्तीति भवत्येव प्रामाण्यम्। तत्रैतत्स्यात्कार्येण लिङ्गेनानुमेयाः शक्तयो नार्थापत्तिप्रमाणगम्या इत्याह—**सम्बन्धग्रहणादृत** इति। यस्मात्सम्बन्धग्रहणमन्तरेण गम्यन्ते तस्मान्नानुमेयाः ॥ १५८८ ॥ १५८९ ॥

तमेव सम्बन्धग्रहणाभावं प्रतिपादयन्नाह—**नचे**ति।

**न चासां पूर्वसम्बन्धो न वाऽन्यो गृह्यतेऽधुना।**
**कार्यैः सह यतः स्यातां पक्षधर्मान्वयाविह ॥ १५९० ॥**

न चासां शक्तीनामनुमानकालात्पूर्वं कार्यैः सह सम्बन्धो गृहीतो यथा वह्निधूमयोर्महानसादौ, तासामतीन्द्रियत्वात्। अनेनान्वयाभाव उक्तः। नाप्यधुनाऽनुमानकाले गृह्यते सम्बन्धोऽतीन्द्रियत्वादेव। अनेन पक्षधर्माभाव उक्तः। नहि कारणाधारशक्तीनां कार्यं धर्मोऽयुक्तेः ॥ १५९० ॥

**श्रोत्रादिशक्तिपक्षे वा यावान् हेतुः प्रयुज्यते।**
**सर्वोऽसावाश्रयासिद्धो धर्म्यसिद्धेः प्रसज्यते ॥ १५९१ ॥**

किंच यदा श्रोत्रादिगताः शक्तयः पक्षीक्रियन्ते तदा श्रोत्रादिशक्तिपक्षे यावान्हेतुः प्रयुज्यते शक्तिसाधनाय सर्वोऽसौ हेतुराश्रयासिद्धः स्यात्, आश्रयभूतानां शक्तीनामसिद्धत्वात्। तस्मात्कार्यार्थापत्तिसाधनाः सर्वाः शक्तयो नानुमेयाः ॥१५९१॥

**पीनो दिवा न भुङ्क्ते चेत्येवमादिवचःश्रुतौ।**
**रात्रिभोजनविज्ञानं श्रुतार्थापत्तिरुच्यते ॥ १५९२ ॥**

तत्र शाब्दप्रमाणपूर्विकार्थापत्तिर्यथा—पीनो देवदत्तोऽकृतरसायनो दिवा न भुङ्क्ते इत्येवमादिवचनश्रवणादर्वाग्रात्रौ भुङ्क्ते इत्येवमाद्यर्थकल्पना ॥ १५९२ ॥

स्यान्मतम्—पीनो देवदत्तो दिवा न भुङ्क्ते इत्यस्यैव वाक्यस्यायमर्थः प्रतीयते रात्रौ भुङ्क्ते इत्यत आह—**न रात्र्यादिपदार्थश्चे**ति ।

**न रात्र्यादिपदार्थश्च दिवावाक्ये च गम्यते ।**
**न दिवादिपदार्थानां संसर्गो रात्रिभोजने ॥ १५९३ ॥**
**न भेदो येन तद्वाक्यं तस्य स्यात्प्रतिपादकम् ।**
**अन्यार्थव्यापृतत्वाच्च न द्वितीयार्थकल्पना ॥ १५९४ ॥**
**तस्माद्वाक्यान्तरेणायं बुद्धिस्थेन प्रतीयते ।**
**तेनानागामिकत्वेऽपि यत्तद्वाक्यं प्रतीयते ॥ १५९५ ॥**
**प्रमाणं तस्य वक्तव्यं प्रत्यक्षादिषु यद्भवेत् ।**
**नत्वनुच्चरिते वाक्ये प्रत्यक्षं तावदिष्यते ॥ १५९६ ॥**
**नानुमानं नहीदं हि दृष्टान्तेन सह क्वचित् ।**
**यदि त्वनुपलब्धेपि सम्बन्धे लिङ्गतेष्यते ॥ १५९७ ॥**
**तदुच्चारणमात्रेण सर्ववाक्यगतिर्भवेत् ।**
**सम्बन्धरहितत्वेन नान्यतस्तद्विशिष्यते ॥ १५९८ ॥**

द्विविधो हि वाक्यार्थो भवेत्, यदुत संसर्गो भेदश्च । तत्र संसर्गः परस्परं पदार्थानामभेदः क्षीरोदकवत् । भेदश्च व्यवच्छेद्यव्यवच्छेदकभावेनावस्थानम् । यद्वा—नियतसाध्यसाधनसम्बन्धः संसर्गः । भेदो विजातीयव्यावृत्तिः । सोऽयं द्विप्रकारोऽपि वाक्यार्थो न सम्भवति । तथाहि—दिवादीनां पदानां येऽर्था दिवादयस्तेषां न संसर्गरूपो रात्रिभोजनार्थः, अत्यन्तविलक्षणत्वात् । नापि भेदरूपो दिवादिपदानामरात्र्यादिव्यवच्छेदेनाप्रवृत्तेः । अथ मतम्—रात्रौ भुङ्क्ते इत्ययमपरो द्वितीयोऽर्थो दिवादिवाक्यस्यैवेत्याह—**अन्यार्थे**ति । दिवादिभोजनप्रतिषेध एवोपक्षीणत्वान्न शक्नोत्यपरं तदैव रात्र्यादिभोजनप्रतिपादनं कर्तुमिति न द्वितीयार्थकल्पना । तस्माद्वाक्यान्तरस्यायमर्थो रात्रौ भुङ्क्ते इति । **बुद्धिस्थेने**ति । अशाब्दत्वं दर्शयति—**अनागमिकत्वेपी**ति । अशाब्दत्वेऽपि । यथोक्तनीत्या शाब्दत्वाभावस्य प्रतिपादितत्वात् । यत्तद्रात्रौ भुङ्क्ते इत्येतद्वाक्यं प्रतीयते तस्य वाक्यस्य ग्राहकं प्रमाणं वक्तव्यम् ।

यत्प्रमाणं प्रत्यक्षादीनामन्यतमद्भवेत् । नच भवति । तस्मात्प्रमाणान्तरमेवेदमिति भावः । तदेव प्रत्यक्षादीनामन्यतमत्वमस्य निराकुर्वन्नाह्—**नत्वित्यादि** । तत्रानुच्चारितस्य रात्रिभोजनवाक्यस्य न युक्तं प्रत्यक्षत्वमश्रूयमाणत्वात् । नाप्यनुमानत्वं सम्बन्धाभावात् । तथाहि—नेदं रात्रिभोजनवाक्यं तेन दिवावाक्येन सह क्वचिद्दृष्टं, येन सम्बन्धो भवेत् । नाप्यन्यल्लिङ्गमस्ति । अथापि स्यादनुपलब्धेऽपि सम्बन्धे लिङ्गत्वमस्य भविष्यतीत्याह—**यदीति** । यदि ह्यसिद्धसम्बन्धस्य लिङ्गत्वं भवेत्तदा दिवावाक्योच्चारणादशेषवाक्यप्रतिपत्तिर्भवेत्, न रात्रिभोजनवाक्यस्यैव । कस्मात्? । यतः सम्बन्धरहितत्वे सत्यन्यतो वाक्याद्रात्रिभोजनवाक्यं न विशिष्यते । सम्बन्धाभावात्सर्वमेव वाक्यमविशिष्टमिति यावत् ॥ १५९३ ॥ १५९४ ॥ १५९५ ॥ ॥ १५९६ ॥ १५९७ ॥ १५९८ ॥

उपमानपूर्विकामाह—**गवयेत्यादि** ।

**गवयोपमिता या गौस्तज्ज्ञानग्राह्यशक्तता ।**
**उपमाबलसम्भूतसामर्थ्येन प्रतीयते ॥ १५९९ ॥**

गवयेनोपमितस्य गोपिण्डस्य येयमुपमानज्ञानेन ग्राह्यशक्तता सा उपमानबलेन यत्सम्भूतं सामर्थ्यमर्थापत्तिस्तेन मीयते ॥ १५९९ ॥

अर्थापत्तिपूर्विकामाह—**अभिधेत्यादि** ।

**अभिधा नान्यथा सिद्ध्येदिति वाचकशक्तताम् ।**
**अर्थापत्त्याऽवगम्यैव तदनन्यगतेः पुनः ॥ १६०० ॥**
**अर्थापत्त्यन्तरेणैव शब्दनित्यत्वनिश्चयः ।**
**अनित्यो हि न सङ्केतव्यवहारानुवृत्तिमान् ॥ १६०१ ॥**

अभिधानमभिधा । अर्थप्रतिपादनमिति यावत् । सा शब्दस्य अन्यथा—वाचकशक्त्या विना, न सिद्ध्येदित्येवं बोधकशक्तताम्, अवगम्य—बुद्ध्वा, तदनन्यगतेः—तस्याबोधकशक्तेरन्या गतिर्नास्ति शब्दनित्यत्वमन्तरेणेति, पुनरर्थापत्त्यन्तरेणैव शब्दस्य नित्यत्वनिश्चयः । कथं पुनर्नित्यत्वमन्तरेणाभिधा न सिद्ध्यतीत्याह—**अनित्यो हीत्यादि** । तथाहि—सङ्केतकाले दृष्टस्य यदि व्यवहारकालेऽनुवृत्तिर्न भवेत् । तदा सङ्केतकरणमनर्थकमेव स्यात् । व्यवहारार्थत्वात्तस्य । यश्चानुवर्त्तते व्यवहारकाले शब्दस्तेन सह पूर्वं सम्बन्धस्यागृहीतत्वात् । अथवा—**तदनन्यगतेरिति** । तस्य

—व्यवहारकालभाविनः शब्दस्य, सङ्केतकालदृष्टाच्छब्दादनन्यगतेरव्यतिरेकनिश्चयात् । कथमव्यतिरेकनिश्चय इत्याह—**अनित्यो हीत्यादि** ॥ १६०० ॥ १६०१ ॥

अभावपूर्विकामर्थापत्तिमाह—**प्रमाणेत्यादि** ।

**प्रमाणाभावनिर्णीतचैत्राभावविशेषितात् ।**
**गेहाच्चैत्रबहिर्भावसिद्धिर्या त्विह वर्णिता ॥ १६०२ ॥**
**तामभावोत्थितामन्यामर्थापत्तिमुदाहरेत् ।**
**पक्षधर्माद्यनङ्गत्वाद्भिन्नैषाऽप्यनुमानतः ॥ १६०३ ॥**
**बहिर्देशविशिष्टेऽर्थे देशे वा तद्विशेषिते ।**
**प्रमेये यो ग्रहाभावः पक्षधर्मस्त्वसौ कथम् ॥ १६०४ ॥**
**जीवतश्च गृहाभावः पक्षधर्मोऽत्र कल्प्यते ।**
**तत्संवित्तिर्बहिर्भावं न चाबुद्ध्वोपजायते ॥ १६०५ ॥**
**गेहाभावस्तु यः शुद्धो विद्यमानत्ववर्जितः ।**
**स मृतेष्वपि दृष्टत्वाद्बहिर्वृत्तेर्न साधकः ॥ १६०६ ॥**

प्रत्यक्षादेः प्रमाणस्याभावेन निवृत्त्या निर्णीतो निश्चितो यश्चैत्राभावस्तेन विशेषिताद्गेहात्, इह गेहे चैत्रो नास्तीत्यतः, चैत्रस्य जीवने सति, या बहिर्भावसिद्धिः—बहिश्चैत्रो विद्यत इत्येवंनिश्चयरूपा, इह—भाष्ये, वर्णिता—शबरस्वामिना, तदन्यासामर्थापत्तीनामुपलक्षणार्थमुदाहृतेति यावत् । यथा—जीवति देवदत्ते, गृहेऽदर्शनेन बहिर्भावस्यादृष्टस्य कल्पनेति । इदमभावपूर्विकाया अर्थापत्तेरुदाहरणम् । प्रायेणास्यास्तार्किकैरनुमानत्वमिष्टमिति तन्निराकरणमाह—**पक्षेत्यादि** । यतः पक्षधर्मादयोऽस्या नाङ्गं न कारणम्, अतो भिन्नैवैषाऽनुमानात्, प्रत्यक्षवत् । तथाहि—बहिर्देशेन विशिष्टोऽर्थश्चैत्रादिः, चैत्रादिना वा विशिष्टो बहिर्देशः, तस्मिन् द्विविधेऽपि प्रमेये सति, गृहे चैत्रादेरर्थस्याभावो यः कथं व्यधिकरणः सन्पक्षधर्मो भवेत् । नैव भवेदित्यभिप्रायः । अपि च गृहाभावः पक्षधर्मत्वेन कल्प्यमानः कदाचिज्जीवतो देवदत्तस्य यो गृहाभावः स कल्प्यते, सामान्येन वेति पक्षद्वयम् । तत्र प्रथमे पक्षे दोषमाह—**जीवत इत्यादि** । **तत्संवित्तिरिति** । तस्य—जीवतो देवदत्तस्य संवित्तिः—निश्चयः, सा देवदत्तस्य बहिर्भावमबुद्ध्वा न जायते । अनेन हेतोरसिद्धतां सिद्धौ वा सिद्धसाध्यतामाह । द्वितीयेऽपि पक्षे हेतोरनैकान्तिकत्वं, मृतेष्वपि देवदत्तादिषु तेषां

गृहाभावस्य दृष्टत्वादिति दर्शयन्नाह—गेहाभावस्त्विति । विद्यमानत्वेति । जीवत्ता ॥ १६०२ ॥ १६०३ ॥ १६०४ ॥ १६०५ ॥ १६०६ ॥

एवं षट्प्रकाराऽर्थापत्तिः । तत्र चतसृभिः शक्तिः प्रमेया, एकया शब्दनित्यता, अपरया बहिर्व्यवस्थितं द्रव्यम् । तत्रेत्यादिना दूषणमाह—अत्र लक्षणं तावदयुक्तम् । तथाहि—तेनादृष्टेन विना दृष्टश्रुतादिकोऽर्थो नोपपद्यत इत्यदृष्टकल्पना । तत्रेदं निरूप्यते । किं तेनादृष्टेन सह क्वचिद्दृष्टश्रुतस्यार्थस्य सम्बन्धो दृष्टो अथ न? । यदि तु दृष्टः, अनुमानत्वप्रसङ्गः, सम्बन्धदर्शनोपायत्वात् । अथ न संसिद्धः, एवं तर्हि वह्नेर्दाहकत्ववददाहकत्वमपि कल्पनीयम्, अदृष्टसम्बन्धत्वेनाविशेषात् । अथ मतमदाहकत्वेन सह वह्नेरदृष्टत्वान्नादाहकत्वं कल्प्यत इति । एवं तर्हि दाहकत्वमपि न कल्पनीयम्, तेनापि सह क्वचिददृष्टत्वात् । तस्मात्सम्बन्धे सिद्धे सति सम्बन्धिनमविनाभाविनं दृष्ट्वा द्वितीयस्य सम्बन्धिनः कल्पना युक्ता । एवं च कल्प्यमाने सम्बन्धदर्शनोपायत्वादनुमान एवान्तर्भावः स्यात् । उदाहरणान्यप्ययुक्तानि । तत्र तावत्प्रत्यक्षादिप्रसिद्धस्यार्थस्य चतसृभिरर्थापत्तिभिः शक्तिः प्रतीयत इत्यत्र साधारणं दूषणमाह—तत्र शक्तातिरेकेणेत्यादि ।

**तत्र शक्तातिरेकेण न शक्तिर्नाम काचन ।**
**याऽर्थापत्त्याऽवगम्येत शक्तश्चाध्यक्ष एव हि ॥ १६०७ ॥**

यतः शक्तिरन्या न वस्तुनः सकाशात्, स च शक्तः पदार्थः प्रत्यक्ष एवेति गृहीतग्रहणादेव न प्रमाणम् । अध्यक्षग्रहणमुपलक्षणम् ॥ १६०७ ॥

दाहादीनामित्यादिना प्रत्यक्षपूर्विकाया अर्थापत्तेरुदाहरणस्य विशेषेण दूषणमाह—

**दाहादीनां तु यो हेतुः पावकादिः समीक्ष्यते ।**
**असंशयाविपर्यासं शक्तिः काऽन्या भवेत्ततः ॥ १६०८ ॥**
**व्यतिरिक्ते तु कार्येषु तस्या एवोपयोगतः ।**
**भावोऽकारक एव स्यादुपयोगे न भेदिनी ॥ १६०९ ॥**
**अर्थक्रियासमर्थं हि स्वरूपं शक्तिलक्षणम् ।**
**एवमात्मा च भावोऽयं प्रत्यक्षाद्व्यवसीयते ॥ १६१० ॥**

असंशयाविपर्यासमिति क्रियाविशेषणमेतत् । अथ व्यतिरिक्ता शक्तिरभ्युपगम्यते—तदा कार्येषु शक्तेरेवोपयोगाद्भावस्याकारकत्वं प्राप्नोति ततश्चावस्तुत्व-

प्रसङ्गः । अर्थक्रियाकारित्वलक्षणत्वाद्वस्तुत्वस्य । अथ माभूदवस्तुत्वप्रसङ्ग इत्युपयोगोऽङ्गीक्रियते तदा तस्मिन्नुपयोगेऽङ्गीक्रियमाणे न तर्हि सा शक्तिर्भेदिनी—भिन्ना। कस्मात्? । येनार्थक्रियासमर्थं यद्रूपं—स्वभावः, सैव शक्तिर्नान्यदपरं शक्तिलक्षणम्। यस्तु भावस्य शक्तिरिति व्यतिरेकिवद्व्यपदेशः स भेदान्तरप्रतिक्षेपेण तन्मात्रजिज्ञासायां भाव एव तथोच्यते ॥ १६०८ ॥ १६०९ ॥ १६१० ॥

स्यादेतन्नार्थक्रियाकारित्वं शक्तेर्लक्षणं, किं तर्हि? । अन्यदेवेत्याह—**अन्येत्यादि**

**अन्यलक्षणसंसिद्धौ प्रमाणं नच किञ्चन ।**
**ज्ञातेनापि न तेनार्थो रूपात्तत्कार्यसिद्धितः ॥ १६११ ॥**

अन्यस्य शक्तिलक्षणस्य संसिद्धौ न किंचित्प्रमाणमस्ति यत्प्रमाणमभावात्सर्वसामर्थ्यविरहलक्षणादेनां शक्तिं विशेषयेत् । नच तेन तथाभूतेनार्थक्रियार्थिनां ज्ञातेन किञ्चित्प्रयोजनमस्ति । रूपात्—उपयोगिनो भावस्य स्वभावादेव, अर्थक्रियासिद्धेः । यथोक्तम्—अर्थक्रियासमर्थस्य विचारैः किं तदर्थिनाम् । शण्ढस्य रूपवैरूप्ये कामिन्याः किं परीक्षयेति ॥ १६११ ॥

**कार्यार्थापत्तिगम्यं चेदपरं शक्तिलक्षणम् ।**
**न कार्यस्यान्यथाभावाद्भवत्येतद्धि भावतः ॥ १६१२ ॥**

स्यादेतत्—अस्त्येवान्यच्छक्तेर्लक्षणम्—यदुत नित्यं कार्यान्यथानुपपत्त्या यद्गम्यं रूपं सा शक्तिरिति, कार्यानुमेयत्वं शक्तेर्लक्षणम् । नैतद्युक्तं शक्तिलक्षणम् । कस्मात्? । कार्यस्यान्यथाभावात् । अन्यथापि—व्यतिरिक्तशक्तिमन्तरेण, कार्यस्योपपत्तेः । कथमित्याह—**भवत्येतद्धि भावत** इति । एतत्कार्यं यस्मात् भावात्—पदार्थात्, भवति—उत्पद्यते, तस्मादन्यथाऽपि कार्यस्यास्तित्वसम्भव इति किं व्यतिरिक्तया शक्त्या कल्पितया ॥ १६१२ ॥

**जलादिव्यतिरिक्तो हि प्रत्यक्षः पावकः क्षमः ।**
**दाहादौ तत्किमन्येन सामर्थ्येन प्रयोजनम् ॥ १६१३ ॥**

एतदेवार्थं स्पष्टीकुर्वन्नाह—**जलादीत्यादि** ॥ १६१३ ॥

**नैकान्तेन विभिन्ना चेच्छक्तिः साऽप्युभयात्मिका ।**
**न विरोधाद्भवेत्सा च प्रत्यक्षाऽनन्यताऽपि यत् ॥ १६१४ ॥**

स्यादेतत्—भवत्येष दोषो यद्यस्माभिरेकान्तेन पदार्थाच्छक्तिर्भिन्नाऽभ्युपगम्यते ।

किं तर्हि? । भिन्नाभिन्नत्वेनोभयात्मिकेत्येतच्च न युक्तम् । कस्मादित्याह—विरोधात् । यदि व्यतिरिक्ता, कथमव्यतिरिक्ता तदैव, अथाव्यतिरिक्ता, कथं व्यतिरिक्तेति, व्याहतमेतद्यदन्योन्यपरिहारस्थितलक्षणयोर्धर्मयोरेकस्मिन्धर्मिणि युगपदुपलयनम् । इदमेव खल्वन्यत्वं यत्तन्न भवत्यात्मान्तरवदित्यावेदितमेतत् । भवतु नामोभयात्मत्वं शक्तेः, तथाऽपि सा शक्तिरुभयात्मिका प्रत्यक्षैव, यस्मादनन्यताऽपि शक्तेः पदार्थोद्दृष्टा, नैकान्तेनान्यत्वमेव, येनाप्रत्यक्षता भवेत् । ततश्च नित्यं कार्यगम्यत्वं शक्तेरित्येतद्व्याहन्येत ॥ १६१४ ॥

**प्रत्यक्षत्वे स्थिते चास्यामनुमेयत्ववारणम् ।**
**क्षतये नैव येनास्मिन्विषये नानुमेष्यते ॥ १६१५ ॥**

अपिच—"शक्तयः सर्वभावानां कार्यार्थापत्तिसाधना" इत्यादि यदेतदनुमेयत्ववारणं शक्तेः कृतम्, तन्न क्षतयेऽस्माकम् । कस्मात्? येन—यस्मात् अस्मिन्प्रत्यक्षविषये नानुमानमिष्यतेऽस्माभिः, परोक्षार्थप्रतिपत्तिरूपत्वादनुमानस्य । अनेन सिद्धसाध्यतामाह ॥ १६१५ ॥

यदुक्तं—"श्रोत्रादिशक्तिपक्षे चे"ति, अत्राह—ये त्वित्यादि ।

**ये तु श्रोत्रादयो भावाः प्रत्यक्षस्य न गोचराः ।**
**तेषां सत्त्वैव लिङ्गेन गम्यते शक्तिलक्षणा ॥ १६१६ ॥**

ननु च सत्ता तु साध्यत एवेति पूर्वं प्रतिपादितम्, तत्कथं सत्ता गम्यत इत्युच्यत इत्याह—कारणान्तरेत्यादि ।

**कारणान्तरसापेक्षं तद्धि शब्दादिवेदनम् ।**
**भावेऽप्यन्यस्य तद्धेतोरभावादङ्कुरादिवत् ॥ १६१७ ॥**

नह्याहत्य सत्ता साध्यते किं तर्हि? कारणान्तरसापेक्षत्वं श्रोत्रादिज्ञानस्य धर्मिणः साध्यते, अन्यस्य मनस्कारादेस्तद्धेतोः श्रोत्रादिज्ञानहेतोर्भावेऽप्यभावाच्छ्रोत्रादिज्ञानस्य । प्रयोगः—यद्यस्मिन्सत्यपि कदाचिद्भवति, तत्कारणान्तरसापेक्षं, यथा क्षित्यादौ सत्यपि कदाचिदङ्कुरः । सत्यपि मनस्कारादौ कदाचिद्भवति श्रोत्रज्ञानमिति स्वभावहेतुः । तस्मिन् कारणान्तरसापेक्षत्वे साधिते यत्कारणान्तरं तत् श्रोत्रादि प्रसिद्धमित्यनेन प्रकारेण सत्ता गम्यत इत्युच्यते, न त्वाहत्येत्यदोषः ॥१६१७॥

यदुक्तम्—"अनुमितात्सूर्ये याना"दिति, अत्राह—उपादानेत्यादि ।

**उपादानासमाने च देशे जातिर्निरन्तरम् ।**
**रवेर्देशान्तरव्याप्त्या ज्वालादेरिव गम्यते ॥ १६१८ ॥**
**स्थिरात्मनो विशेषत्वान्नान्यथेयं प्रसज्यते ।**
**तस्य देशान्तरप्राप्तिः शक्तिस्त्वन्या निराकृता ॥ १६१९ ॥**

अनेनानुमानान्तर्भावमाह । तथाहि—यस्य यस्य देशान्तरप्राप्तिरुपलभ्यते, तस्य स्वोपादानकारणदेशपरिहारेण जातिः, यथा ज्वालादेर्देशान्तरं प्राप्नुवतः, देशान्तरप्राप्तिश्च रवेरिति स्वभावहेतुः । न चायमनैकान्तिकः, यतः स्थिरात्मन एकरूपस्य भावस्य नेयं देशान्तरप्राप्तिर्युक्ता, पूर्वदेशाप्रतिनियतस्वभावापरित्यागात् । त्यागे वाऽपूर्वोत्पत्तिरेवेति । इदमेव बाधकं प्रमाणम् । स्यादेतच्छक्तौ साध्यायामियमर्थापत्तिरुदाहृता, नोत्पत्तौ, तत्कथमस्या अर्थापत्तेरनुमानान्तर्भाव उच्यत इत्याह—**शक्तिस्त्वन्या निराकृतेति** ॥ १६१८ ॥ १६१९ ॥

पीनो दिवेत्यादौ श्रुतार्थापत्त्युदाहरणे आह—**पीन** इत्यादि ।

**पीनो दिवा न भुङ्क्ते चेत्यस्मिन्नर्थे न निश्चयः ।**
**द्वेषमोहादिभिर्योगादन्यथाऽपि वदेत्पुमान् ॥ १६२० ॥**

अनेन शाब्दप्रमाणपूर्वकत्वस्यासिद्धतामाह ॥ १६२० ॥

स्यादेतन्नहि वाक्येनार्थगतिमपेक्ष्य वाक्यान्तराक्षेपः क्रियते । किं तर्हि? । केवलेनैव । तच्च प्रत्यक्षतः सिद्धमेवेत्याह—**अर्थगत्यनपेक्षेणेति** ।

**अर्थगत्यनपेक्षेण यदि वाक्यान्तरं पुनः ।**
**सार्थमाक्षिप्यते तेन स्यादाक्षेपो वचोन्तरे ॥ १६२१ ॥**

अर्थगतिर्नापेक्ष्यत इत्यर्थगत्यनपेक्षं वाक्यं, तेन केवलेन वाक्यमात्रेण यदि सार्थकं वाक्यान्तरमाक्षिप्यते, तदा स्यादाक्षेपो वचोऽन्तरे—रात्रिभोजनवाक्यादन्यस्यापि वाक्यान्तरस्याक्षेपः प्राप्नोति । सम्बन्धरहितत्वेनाविशेषात् । अथ वस्तुप्रतिबन्धादर्थमाक्षिपतीत्यर्थगत्यपेक्षणे तद्दोषः ॥ १६२१ ॥

अथेत्यादिना—पराभिप्रायमाशङ्कते ।

**अथोपगमरूपेण तत्रार्थगतिरिष्यते ।**
**प्रमाणान्तरतो यद्वा भवत्वर्थगतिस्ततः ॥ १६२२ ॥**

अथ माभूदतिप्रसङ्ग इति न्यायादर्थगतिमपेक्ष्य परोपगमनरूपेणार्थगतिरिष्यते,

परस्य वक्तुराप्तत्वेनाभ्युपगतत्वात् । यद्वा—प्रमाणान्तरतः प्रत्यक्षादेर्ज्ञानं पीनो देवदत्तो दिवा न भुङ्क्ते इति । अत्र प्रतिविधत्ते—भवत्वित्यादि । भवत्वर्थस्य रात्रिभोजनस्य गतिस्ततः—दिवाभोजनवैकल्येन विशेषितात्पीनत्वात् । ननु वाक्यान्तरस्य बुद्धिस्थस्य गमकत्वम्, एवं सत्यनुमान एवान्तर्भावान्न प्रमाणान्तरत्वं स्यादित्यभिप्रायः ॥ १६२२ ॥

तमेवान्तर्भावं दर्शयन्नाह—क्षपेत्यादि ।

**क्षपाभोजनसम्बन्धी पुमानिष्टः प्रतीयते ।**
**दिवाभोजनवैकल्यपीनत्वेन तदन्यवत् ॥ १६२३ ॥**

इष्टः—विवक्षितः पुरुषविशेषो रात्रिभोजनविशिष्टः । भोजनवैकल्ये सति पीनत्वादिति हेतुः । तदन्यपुरुषवदिति दृष्टान्तः । कार्यहेतुश्चायम् ॥ १६२३ ॥

कथमत्र कार्यकारणभावः सिद्ध इत्याह—भोजने इत्यादि ।

**भोजने सति पीनत्वमन्वयव्यतिरेकतः ।**
**निश्चितं तेन सम्बद्धाद्वस्तुनो वस्तुतो गतिः ॥ १६२४ ॥**

अग्निधूमयोरिवान्वयव्यतिरेकाभ्यां पीनत्वभोजनयोः कार्यकारणभावो निश्चितो यतस्तस्माद्वस्तुनः पीनत्वात्कार्यत्वेन सम्बन्धाद्वस्तुतो भोजनस्य गतिर्युक्ता । ननु वाक्यादप्रतिबद्धाद्वाक्यान्तरस्य प्रतीतिर्युक्ताऽतिप्रसङ्गात् ॥ १६२४ ॥

तमेवातिप्रसङ्गं दर्शयितुमाह—सर्वसम्बन्धेत्यादि ।

**सर्वसम्बन्धशून्यं हि कथं वाक्यं प्रतीयते ।**
**एकस्माद्वाक्यतः सर्वं प्रतीयेतान्यथा पुनः ॥ १६२५ ॥**

सर्वेण सम्बन्धेन तादात्म्यतदुत्पत्तिलक्षणेन शून्यं रहितं वाक्यं कथं प्रतीयेत । नैव । अन्यथा यदि सर्वसम्बन्धशून्यमपि प्रतीयेत तदा यतःकुतश्चिदेकस्माद्वस्तुनो घटादेः सर्वं घटादि प्रतीयेत । नचैवम् । तस्मात्प्रतिबन्धात्प्रतिपत्तिरभ्युपगन्तव्या ॥ १६२५ ॥

तथाहीत्यतिप्रसङ्गमेव समर्थयते ।

**तथाह्यसति सम्बन्धे सति चानवधारिते ।**
**गम्यमानमिदं वाक्यं प्रसज्येताप्रमाणकम् ॥ १६२६ ॥**

सति सम्बन्ध इत्यभ्युपगमः । एकदा तावन्नास्त्येव वाक्यस्य वाक्यान्तरेण स-

म्बन्धः, सन्नप्यनवधारितः सम्बन्धोऽसत्प्रख्य एव । ततश्चानवधारिते सम्बन्धे प्रतीयमानमप्रमाणकं स्यात्—निर्निबन्धनप्रतीतिकं ( स्यात् ) निर्निबन्धना चेत्प्रतीतिः सर्वं सर्वस्मात्प्रतीयेतेत्यतिप्रसङ्गोऽनिवार्य एव ॥ १६२६ ॥

**सम्बद्धस्ये**त्यादिना परवचनावकाशमाशङ्कते ।

**सम्बद्धस्य प्रमाणत्वं स्थितं नो चेन्नृपाज्ञया ।**
**प्रत्यक्षस्य प्रमाणत्वं कथं वा सङ्गतिं विना ॥ १६२७ ॥**

तत्र परो ब्रूते सम्बद्धस्य प्रामाण्यमिति यदि, परं नृपाज्ञैवेयम्, नत्वत्र काचिद्युक्तिः । तथाहि—सम्बद्धस्य प्रमाणत्वमिति यदि नृपाज्ञा न भवेत्, कथं तर्हि प्रत्यक्षस्य प्रामाण्यं सङ्गतिं विना—सम्बन्धमन्तरेणेति वक्तव्यम् ॥ १६२७ ॥

अत्रोत्तरमाह—**नन्विति** ।

**नन्वसम्बद्धगम्यत्वे किमन्यस्यापि नो गतिः ।**
**नहि सम्बन्धशून्यत्वे विशेषः कश्चनेक्ष्यते ॥ १६२८ ॥**
**सम्बन्धादेव मानत्वमध्यक्षेऽपि व्यवस्थितम् ।**
**संवादो हि प्रमाणत्वं स चार्थादात्मलाभतः ॥ १६२९ ॥**

नन्वसम्बद्धं यदि गम्येत तदाऽतिप्रसङ्गः स्यादविशेषादित्यत्र भवता न किञ्चिदुत्तरं दत्तम् । यच्चोक्तं कथं प्रत्यक्षस्य विना सम्बन्धेन प्रामाण्यमिति, तदप्यसङ्गतमेव । तथाहि—सम्बन्धं विना न केनचित्प्रत्यक्षप्रामाण्यमभ्युपगतम् । किं तर्हि ? । सम्बन्धादेव मानत्वमध्यक्षेपि—प्रत्यक्षेपि व्यवस्थितम् । अत्रोपपत्तिमाह—**संवादो** **हीत्यादि** । अर्थप्रापणशक्तिः संवादः प्रामाण्यम् । स च संवादो नियमेन प्रत्यक्षस्य कथं युक्तो यदि ततोऽर्थात्तस्यात्मलाभो न भवेत् ॥ १६२८ ॥ १६२९ ॥

अन्यथा को दोष इत्याह—**अतद्धेतोरिति** ।

**अतद्धेतोरहेतोश्च तत्संवादो न युज्यते ।**
**नियमेन समस्तानां संवादो वाऽन्यथा भवेत् ॥ १६३० ॥**

सोऽर्थो हेतुर्यस्य स तथा, न तद्धेतुरतद्धेतुः । अन्यहेतुक इति यावत् । तस्मादतद्धेतोः प्रत्यक्षादहेतोर्वा सर्वहेतुवैकल्येन तत्संवादः—अर्थसंवादः, न नियमेन स्यात् । किं तर्हि ? । समस्तानां—सर्वेषामर्थानां, संवादः स्यादित्यत्रापि समानः प्रसङ्गः ॥ १६३० ॥

अथवा—पीनो देवदत्तो दिवा न भुङ्क्ते इत्येतदन्वयवाक्यं कार्यलिङ्गमात्मीयं कारणं विविक्षां विशिष्टामनुमापयन्हेतुधर्मानुमानेन धूमे वन(धूमेनेन्धन ?)विकारवत्सामर्थ्याद्रात्रौ भुङ्क्ते इत्येतद्व्यतिरेकवाक्यमपि गमयति, नतु साक्षादिति प्रतिपादयन्नाह—द्वितीयेत्यादि ।

**द्वितीयवाक्यनिर्भासा विवक्षा वाऽनुमीयते ।**
**एतेनान्वयवाक्याच्च व्यतिरेकगतिर्मता ॥ १६३१ ॥**

**एतेनेति** । हेतुधर्मानुमानेन नतु साक्षात् । यस्मादन्वयवाक्यात्तादृशी विवक्षा गम्यते, यस्यां व्यतिरेकवाक्यमपि निर्भासते । अन्यथा यदि रात्रिभोजनं विवक्षायां नारूढं स्यात्, भोजनप्रतिषेधमात्रं केवलं प्रतिपादयितुमिष्टं तदा देवदत्तो न भुङ्क्ते इत्येवोक्तं स्यात् । नतु दिवा, पीन इति । **व्यतिरेकगतिरिति** । व्यतिरेकवाक्यगतिः ॥ १६३१ ॥

गवयोपमिता या गौरित्यत्राह—**उपमाया इति** ।

**उपमायाः प्रमाणत्वे विस्तरेण निराकृते ।**
**अर्थापत्तेस्तदुत्थाया वारितैव प्रमाणता ॥ १६३२ ॥**

भवतु चोपमायाः प्रामाण्यम्, तथाप्युपमानपूर्विकाया अर्थापत्तेर्गृहीतग्रहणान्न युक्तं पृथक्प्रामाण्यं, व्यतिरिक्तस्य शक्तिलक्षणस्य प्रमेयस्याभावादिति प्रतिपादयन्नाह—**उपमानेत्यादि** ।

**उपमानप्रमाणस्य गौस्त्वालम्बनमिष्यते ।**
**स्वसत्तयैव चालम्ब्यं स्वज्ञानजनकं मतम् ॥ १६३३ ॥**
**तत्किमत्रान्यया शक्त्या यद्गत्यर्थमपेक्ष्यते ।**
**अर्थापत्तेः प्रमाणत्वमुपमानसमाश्रयम् ॥ १६३४ ॥**

**यद्गत्यर्थमिति** । शक्तिप्रतीत्यर्थम् । शेषं सुबोधम् ॥ १६३३ ॥ १६३४ ॥

अभिधानान्यथेत्यादावर्थापत्तिपूर्विकाया अर्थापत्तेरुदाहरणस्यानैकान्तिकत्वमाह—**अनन्यत्वेत्यादि** ।

**अनन्यत्ववियोगेऽपि शब्दानां न विरुध्यते ।**
**अर्थप्रत्यायनं यद्वत्पाणिकम्पादिकारणम् ॥ १६३५ ॥**

यथाह्यनित्यानामपि पाणिकम्पाक्षिनिकोचादीनामर्थप्रत्यायनं न विरुद्धं तथा श-

ब्दानामनन्यत्ववियोगेऽपि न विरुध्यत एवेत्यनैकान्तिकमेवैतदुदाहरणम् । तत्रान्यत्वमनित्यत्वं, नान्यत्वमनन्यत्वं—नित्यत्वमिति यावत् ॥ १६३५ ॥

ननु चोक्तम्—अनित्यो हि न सङ्केतव्यवहारानुवृत्तिभागिति, अत्राह—तुल्येत्यादि ।

**तुल्यप्रत्यवमर्शस्य हेतुत्वात्कम्पनं यथा ।**
**प्रत्यायकत्वं शब्दानां तथैव न विरुध्यते ॥ १६३६ ॥**

यद्यपि स्वलक्षणानां क्षणिकत्वादन्वयो नास्ति, तथाऽपि कानिचित्स्वलक्षणानि प्रकृत्या पारम्पर्येणाभेदाकारस्य भ्रान्तस्य प्रत्यवमर्शज्ञानस्य कारणानि भवन्ति सन्त्येकत्वेन गृह्यमाणानि प्रत्यायकानि भवन्ति सङ्केतवशात् । **यथाकम्पनम्** । प्रत्यायकमिति शेषः ॥ १६३६ ॥

यथा कम्पनमित्यस्य दृष्टान्तस्य परः साध्यविकलतामुद्भावयन्नाह—प्रत्यक्षेत्यादि ।

**प्रत्यक्षद्रव्यवर्त्तिन्यो दृश्यन्ते ननु याः क्रियाः ।**
**तासां वर्णवदेवेष्टं नित्यत्वं प्रत्यभिज्ञया ॥ १६३७ ॥**

यथा वर्णानां प्रत्यभिज्ञया नित्यत्वमिष्टमस्माभिः । तथा पाण्यादिकर्मणामपीत्यनित्यत्वेन साध्येन विकलो दृष्टान्त इत्यव्यभिचार एव ॥ १६३७ ॥

यद्येवं नित्यत्वे सति पाण्यादिकर्मणां किमिति नित्यमुपलब्धिर्न जायत इत्यत्राह—व्यञ्जकेत्यादि ।

**व्यञ्जकाभावतश्चासां सन्ततानुपलम्भता ।**
**यदेवोत्पादकं वः स्यात्तदेव व्यञ्जकं मतम् ॥ १६३८ ॥**

**आसामिति** । क्रियाणाम् । **सन्ततानुपलम्भता** । यथा भवतामुत्पादकाभावान्नित्योपलब्धिर्न भवति, तथाऽस्माकं व्यञ्जकाभावादिति समानः परिहार इति परस्याभिप्रायः ॥ १६३८ ॥

नैवमित्यादिना प्रतिविधत्ते ।

**नैवमप्रतिबद्धे हि सामर्थ्ये सन्ततं भवेत् ।**
**तज्ज्ञानं तद्वियोगे तु नैव स्यात्तत्कदाचन ॥ १६३९ ॥**
**ततश्च व्यञ्जकास्तासां सङ्गच्छन्ते न हेतवः ।**
**प्रत्यभिज्ञा तु नित्यत्वे पूर्वमेव निराकृता ॥ १६४० ॥**

अत्र द्वयी कल्पना, यास्ताः क्रिया अभिव्यङ्ग्या इष्टास्ताः प्रकृत्या ज्ञानोत्पादनसमर्था वा स्युर्नवा । तत्र सामर्थ्ये सति, सन्ततं—नित्यं, तद्भावि ज्ञानं प्राप्नोति । तासां समर्थस्य स्वभावस्य नित्यत्वेन केनचिदप्रतिबद्धत्वात् । अनाधेयातिशयस्य विशेषमनाधाय प्रतिबद्धुमशक्यत्वात् । अथासामर्थ्यं, तदा तद्वियोगे—सामर्थ्यवियोगे, नैव तद्भावि ज्ञानं स्यादिति किं व्यञ्जकस्य सामर्थ्यम् । तस्मात्तासां क्रियाणां नित्यत्वेनेष्टानां न कथंचित्सङ्गच्छन्ते व्यञ्जकत्वेन कल्पिता हेतवः । अनित्यानां त्वपूर्वस्वभावोत्पत्तिर्व्यञ्जकादिति न्याय्यास्तान् प्रति व्यञ्जकाः । यच्चोक्तम्—"तासां वर्णवदेवेष्टं नित्यत्वं प्रत्यभिज्ञये"त्यत्राह—**प्रत्यभिज्ञेति** । नित्यत्वे साध्ये हेतुत्वेन प्रत्यभिज्ञोपन्यस्ता सा पूर्वं स्थिरभावपरीक्षायां निराकृता ॥ १६३९ ॥ १६४० ॥

यदुक्तम्—"प्रमाणाभावनिर्णीतचैत्राभावविशेषितात्" इत्यत्राह—**गेहेत्यादि** ।

**गेहाभावात्तु चैत्रस्य बहिर्भावो न युज्यते ।**
**मरणाशङ्कया यस्मादन्यथाऽप्युपपद्यते ॥ १६४१ ॥**
**जीवतश्चेद्गृहाभावो बहिर्भावप्रसिद्धये ।**
**अर्थापत्त्यावहो ह्येतन्नैव तत्राप्यनिश्चयात् ॥ १६४२ ॥**
**वेश्मन्यपश्यतश्चैत्रं न ह्यर्वाग्दर्शिनः प्रमा ।**
**तस्य जीवनसम्बन्धे कथंचिदपि वर्त्तते ॥ १६४३ ॥**

**अन्यथाऽपीति** । बहिर्भावमन्तरेणोपपद्यते गेहे चैत्राभावः । अनेनानैकान्तिकत्वमाह । अथ जीवतो देवदत्तस्य यो गृहाभावः स इहार्थापत्त्युदाहरणे हेतुत्वेनोच्यते नाभावमात्रम् । नैवं युक्तम् । कस्मात्? । तत्रापि देवदत्तजीवने संशयात्संदिग्धासिद्धता हेतोः स्यात् । अनिश्चये कारणमाह—**वेश्मनीति** । तस्य चैत्रस्य जीवने निश्चायकप्रमाणाभावादर्वाग्दर्शिनः संशय एव ॥ १६४१ ॥ १६४२ ॥ १६४३ ॥

अथापि स्यात्—यदि नामार्वाग्दर्शिनः प्रत्यक्षप्रमाणं चैत्रस्य जीवनविषये नास्ति, अनुमानादि तु विद्यत एवेत्याह—**अथेत्यादि** ।

**अथ शब्दादिना तस्य जीवत्तानिश्चये सति ।**
**सद्मन्यभावेऽभावाच्च निश्चितेऽस्याः प्रमाणता ॥ १६४४ ॥**

**शब्दादिनेति** । तदुच्चारितशब्दः श्रूयते, प्रत्ययितो वा तस्मिन्काले कुड्याद्यन्तरितस्तपस्यन्कथयति जीवति चैत्र इति । अभावाच्च—प्रमाणात्प्रत्यक्षादिनिवृत्तिरू-

पात्, सद्मनि—गृहे, चैत्राभावनिश्चये सति, सिद्धो जीवनविशिष्टश्चैत्राभाव इति, भवेदेवास्या अभावोत्थाया अर्थापत्तेः प्रमाणता ॥ १६४४ ॥

तदाऽपीत्यादिना प्रतिविधत्ते ।

**तदाऽपि गेहायुक्तत्वं दृष्ट्याऽदृष्टेर्विनिश्चितम् ।**
**अतस्तत्र बहिर्भावो लिङ्गादेवावसीयते ॥ १६४५ ॥**
**सद्मना यो ह्यसंसृष्टो नियतं बहिरस्त्यसौ ।**
**गेहाङ्गणस्थितो दृष्टः पुमान् द्वारि स्थितैरिव ॥ १६४६ ॥**
**विपक्षोऽपि भवत्यत्र सदनान्तर्गतो नरः ।**
**अर्थापत्तिरियं तस्मादनुमानान्न भिद्यते ॥ १६४७ ॥**

## इत्यर्थापत्तिपरीक्षा ।

अनेनानुमानान्तर्भावमाह । तथाहि—चैत्रोऽत्र धर्मी, तस्य बहिर्भावः साध्यः, जीवने सति गृहासङ्गो हेतुः कार्यः । गृहाङ्गणस्थितः पुमान् साधर्म्यदृष्टान्तः । गृहान्तर्गतस्तु वैधर्म्यदृष्टान्तः । सदनं—गृहम् । व्याप्तिर्दृष्टान्ताभ्यामेव निश्चिता । न चासिद्धो हेतुः । यतो गेहायुक्तत्वं तावद्दृश्यानुपलब्ध्या निश्चितम्, जीवनं तु पराभ्युपगमात्सिद्धम् । परमार्थतस्तु संदिग्धो हेतुः । नहि जीवत्तानिश्चायकं किंचित्प्रमाणमस्ति । ननु च शब्दादिरस्तीत्युक्तम् । एवं तर्हि यत एव शब्दादेः प्रमाणाज्जीवनं निश्चितं तत एव बहिर्भावः सिद्ध इति किमर्थापत्त्या कर्त्तव्यम् । तस्मात्—पराभ्युपगमात् । सिद्धं हेतुमभ्युपगम्यानुमानेऽन्तर्भावः प्रतिपादित अर्थापत्तेः ॥ १६४५ ॥ १६४६ ॥ १६४७ ॥

## इत्यर्थापत्तिपरीक्षा ।

अभावमधिकृत्याह—**प्रमाणे**त्यादि ।

**प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते ।**
**वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता ॥ १६४८ ॥**

तत्र मीमांसकानां सदसल्लक्षणयोर्भावाभावयोर्वस्तुत्वं, सर्वस्य च पदार्थस्य सदसद्रूपेण द्व्यात्मकत्वमित्यभ्युपगमः । तत्र सदसद्रूपेणोभयात्मके वस्तुनि व्यवस्थिते, यस्मिन्वस्तुरूपे—वस्त्वंशेऽसद्रूपाख्ये, प्रमाणपञ्चकमर्थापत्तिपर्यन्तं न जायते । किमर्थम्? । वस्तुसत्ताऽवबोधार्थम्—वस्तुनः सत्तांशावबोधार्थम् । तत्र—अभावांशे

प्रमेये, अभावस्य प्रमाणता । अनेन विषयोऽस्य केवलो निर्दिष्टो नतु स्वरूपम् ॥ १६४८ ॥

स्वरूपमस्य तर्हि कीदृशमित्याह—प्रत्यक्षादेरित्यादि ।

**प्रत्यक्षादेरनुत्पत्तिः प्रमाणाभाव इष्यते ।**
**साऽऽत्मनोऽपरिणामो वा विज्ञानं वाऽन्यवस्तुनि ॥१६४९॥**

प्रत्यक्षादेरर्थापत्तिपर्यन्तस्यानुत्पत्तिः प्रमाणाभाव इष्यते । प्रमाणाभाव इति षष्ठीतत्पुरुषः कर्मधारयो वा । क्वचित्पाठः प्रमाणेऽभाव इति । तत्र निर्धारणे सप्तमी, जातावेकवचनम् । प्रमाणानां मध्येऽभावः प्रमाणमित्यर्थः । यथोक्तं शबरस्वामिना—अभावोऽपि प्रमाणाभावो नास्तीत्यर्थस्यासन्निकृष्टस्येति । अथ केयमनुत्पत्तिरित्याह—साऽऽत्मनोऽपरिणामो वा विज्ञानं वाऽन्यवस्तुनीति । सा—प्रत्यक्षादेरनुत्पत्तिः, निषेध्याभिमतघटादिपदार्थज्ञानरूपेणापरिणतं साम्यावस्थमात्मद्रव्यमुच्यते । घटादिविविक्तभूतलज्ञानं वा ॥ १६४९ ॥

ननु चाभाव इति वस्तुविरह उच्यते । तत्कथं वस्तुत्वमस्य, नहि वस्तु विरहो भवतीत्याशङ्क्य वस्तुत्वमभावस्य प्रतिपादयन्नाह—प्रमाभावादिति ।

**प्रमाभावाच्च वस्तूनामभावः संप्रतीयते ।**
**चतुर्धा च विभिन्नोऽसौ प्रागभावादिभेदतः ॥ १६५० ॥**

यदि प्रमाणाभावो वस्तु न भवेत्ततश्च सर्वसामर्थ्यशून्यत्वादस्येति ततो नाभावप्रतीतिः स्यात्, प्रागभावादिभेदेन चतुर्धा च भेदोऽभावस्य न स्यात्, नचैवम्, तस्मादभावप्रतीत्यन्यथानुपपत्त्या चतुर्धा भेदेन लोकस्य व्यवहारान्यथानुपपत्त्या चाभावस्य वस्तुत्वम् । एतच्चार्थापत्त्याख्यं प्रमाणद्वयमित्येके । अन्ये तु चतुर्धा च विभिन्नोऽसावित्येतदनुमानमिति वर्णयन्ति । एवं च प्रमाणयन्ति—अभावो वस्तु, विद्यमानत्वात्, घटादिवदिति ॥ १६५० ॥

कथं पुनरस्य चतुर्धा भेद इति प्रतिपादयन्नाह—क्षीरे दधीत्यादि ।

**क्षीरे दध्यादि यन्नास्ति प्रागभावः स कल्प्यते ।**
**नास्तिता पयसो दध्नि प्रध्वंसाभावलक्षणम् ॥ १६५१ ॥**
**गवि योऽश्वाद्यभावश्च सोऽन्योन्याभाव उच्यते ।**
**पररूपं न तस्यास्ति नास्तिताऽस्यात्मना ततः ॥ १६५२ ॥**

**शिरसोऽवयवा निम्ना वृद्धिकाठिन्यवर्जिताः ।**
**शशशृङ्गादिरूपेण सोऽत्यन्ताभाव इष्यते ॥ १६५३ ॥**
**न च स्याद्व्यवहारोऽयं कारणादिविभागशः ।**
**प्रागभावादिभेदेन नाभावो विद्यते यदि ॥ १६५४ ॥**

क्षीरमृदादौ कारणे दधिघटादिलक्षणं कार्यं नास्तीत्येवं यत्प्रतीयते लोके स प्रागभाव उच्यते । यदि तु प्रागभावो न भवेत्, क्षीरादौ दध्यादिकार्यं भवेदेव । एवं दध्नि क्षीराख्यस्य यन्नास्तित्वमयं प्रध्वंसाभावः । अन्यथा दध्नि क्षीरं भवेदेव । गवादौ वस्त्वादेरभावोऽन्योन्याभाव उच्यते । यस्मात्तस्य गवादेः पररूपमश्वादिस्वभावो नास्ति, तस्मात्तयोरन्योन्याभाव उच्यते । अन्यथा गवादौ भवेदेवाश्वादि यद्यन्योन्याभावो न भवेत् । शशशिरसोऽवयवा निम्ना वृद्धिकाठिन्याभ्यां रहिता विषाणादिरूपेणात्यन्तमसन्तोऽत्यन्ताभाव उच्यते । यद्यपि चात्र वस्तुवृत्तेरन्योन्याभावस्तथाऽपि लोकप्रसिद्ध्योक्तमत्यन्ताभाव इति । प्रायेण हि लोके सामानाधिकरण्येनैवेतरेतराभावव्यवहारः, यथा—गौरयं नाश्व इति । नतु शशीयं न विषाणमित्येवम् । यदि त्वत्यन्ताभावो न भवेत्, शशे शृङ्गं भवेदेव । तथाचाह कुमारिलः—"क्षीरे दधि भवेदेव दध्नि क्षीरं घटे पटः । शशे शृङ्गं पृथिव्यादौ चैतन्यं मूर्त्तिरात्मनि ॥ अप्सु गन्धो रसश्चाग्नौ वायौ रूपेण तौ सह । व्योम्नि सस्पर्शकास्ते च न चेदस्य प्रमाणता ॥" इति । तत्र—चैतन्यम्—आत्मा । मूर्त्तिः—काठिन्यम् । रूपेण तौ सहेति । तौ—गन्धरसौ, रूपसहितौ वायौ स्याताम् । सस्पर्शकास्त इति । ते—रूपरसगन्धाः सह स्पर्शेन व्योम्नि—आकाशे स्युः । किंच—नच स्यात्कारणादिविभागेन लोकव्यवहारो यद्यभावस्य प्रागभावादिभेदेन भेदो न स्यात् । यथा—यो दध्यर्थी स क्षीरोपादानं करोति, नतु क्षीरार्थी दध्युपादानम्, तथा गवार्थी नाश्वमुपादत्ते, नाप्यश्वार्थी गाम् । इत्येवमादिकारणादिविभागेन व्यवहारः ॥ १६५१ ॥ ॥ १६५२ ॥ १६५३ ॥ १६५४ ॥

अथापि स्याद्यदि नाम चतुर्द्धा भेदोऽस्य जातस्तथापि वस्तुत्वेन भवितव्यमेतत्कुत इत्याह—**न चावस्तुन** इत्यादि ।

**न चावस्तुन एते स्युर्भेदास्तेनास्य वस्तुता ।**
**कार्यादीनामभावः स यो भावः कारणादिना ॥ १६५५ ॥**

न ह्यवस्तुनो भेदो युक्तो वस्त्वधिष्ठानत्वात्तस्य। तस्मादभावो वस्तु। कीदृशं पुनरस्य वस्तुत्वमित्याह—**कार्यादीनामिति**। क्षीरादेः कारणस्य यो भावः स एव दध्यादेः कार्यस्याभावः, कार्यस्य दध्यादेर्यो भावः स एव क्षीरादेः कारणस्याभाव इत्येतदभाववस्तुत्वम्॥ १६५५॥

पुनरप्यनुमानेन वस्तुत्वमस्य प्रतिपादयन्नाह—**यद्वेत्यादि**।

**यद्वाऽनुवृत्तिव्यावृत्तिबुद्ध्योर्ग्राह्यो यतः स्वयम्।**
**तस्माद्गवादिवद्वस्तु प्रमेयत्वाच्च गम्यताम्॥ १६५६॥**

अभावो वस्त्विति पक्षः, अनुवृत्तिव्यावृत्तिबुद्धिग्राह्यत्वात्प्रमेयत्वाच्चेति हेतुद्वयं, गवादिवदिति दृष्टान्तः॥ १६५६॥

तत्रानुवृत्तिबुद्धिश्चतुर्ष्वप्यभावोऽभाव इत्येकाकारः प्रत्ययः। व्यावृत्तिबुद्धिः प्रागभावोऽयं न प्रध्वंसाभाव इत्यादिभेदाकारः प्रत्ययः। तत्र कुमारिलेन त्रिविधोऽभावो वर्णितः। आत्मनोऽपरिणाम एकः, पदार्थान्तरविशेषज्ञानं द्वितीयः, "साऽऽत्मनोऽपरिणामो वा विज्ञानं वाऽन्यवस्तुनी"ति वचनात्, प्रमाणनिवृत्तिमात्रात्मकस्तृतीयः, त्रिलक्षणेन या बुद्धिर्जन्यते साऽनुमेष्यते। "नचानुत्पत्तिरूपस्य कारणाधीनता क्वचि"दिति वचनात्। तत्रैतस्मिंस्तृतीयेऽभावे चोद्यमाशङ्क्य परिहरन्नाह—**मानं कथमभावश्चेदिति**।

**मानं कथमभावश्चेत्प्रमेयं चात्र कीदृशम्।**
**मेयो यद्वदभावो हि मानमप्येवमिष्यताम्॥ १६५७॥**

अथोच्यते कथं प्रत्यक्षानुत्पत्तिलक्षणोऽभावः प्रमाणमिति। अत्रोच्यते—**प्रमेयं चात्र कीदृशमिति**। अभावरूपं प्रमेयमिति चेत्। एवं तर्हि यथाभूतं प्रमेयं तथाभूतमेव प्रमाणमितीष्यताम्। तत्किमुच्यते—मानं कथमभाव इति। नहि लक्षणं प्रमाणं (न) युक्तम्॥ १६५७॥

भवत्वभावस्य प्रामाण्यं प्रत्यक्षादिभ्यस्तु भेदोऽस्य कथमित्याह—**अभावेत्यादि**।

**अभावशब्दवाच्यत्वात्प्रत्यक्षादेश्च भिद्यते।**
**प्रमाणानामभावो हि प्रमेयाणामभाववत्॥ १६५८॥**
**अभावो वा प्रमाणेन स्वानुरूपेण मीयते।**
**प्रमेयत्वाद्यथा भावस्तस्माद्भावात्मकात्पृथक्॥ १६५९॥**

प्रत्यक्षादीनां प्रमाणानामभावः प्रमाणं प्रत्यक्षादिभ्यो भिन्नम्, अभावशब्दवाच्यत्वात्, प्रमेयाभाववत् । अथवा—अभावाख्यप्रमेयो धर्मी, तस्य स्वानुरूपप्रमाणप्रमेयत्वं साध्यं, प्रमेयत्वादिति हेतुः, भावाख्यप्रमेयो दृष्टान्तः । यच्च स्वानुरूपं प्रमाणं तद्भावात्मकात्प्रत्यक्षादेरन्यदिति सिद्धम् ॥ १६५८ ॥ १६५९ ॥

तदत्रेत्यादिना प्रतिविधत्ते ।

**तदत्र नित्यसत्त्वस्य परिणामो निराकृतः ।**
**तद्विपर्ययसद्भावः कादाचित्को न युज्यते ॥ १६६० ॥**

अनेनात्मनोऽपरिणामो वेति प्रथमस्याभावलक्षणस्यासम्भवितामाह । तथाहि—पर्युदासवृत्त्या परिणामविपरीतोऽपरिणामः कादाचित्कोऽभिप्रेतो लक्षणत्वेन । अन्यथा हि यदि कादाचित्को नाभिप्रेतः पर्युदासवृत्त्या स्यात्, तदा सर्वदैव वस्तुनोऽस्तित्वप्रतीतिः स्यात् । स चापरिणामो यथोक्तो न सम्भवत्यात्मनः, यस्मान्नित्यसत्त्वस्य परिणामो निराकृतस्तस्मात्कुतस्तस्य विपरीतस्यापरिणामस्य पर्युदासवृत्त्या संश्रयणं भवेत् । तत्र—सत्त्व आत्मा, नित्यश्चासौ सत्त्वश्चेति नित्यसत्त्वः । यद्वा—नित्यं सत्त्वं—सत्ता यस्य स तथोक्तः । नित्य इति यावत् । **तद्विपर्ययसद्भाव** इति । तस्य परिणामस्य विपर्ययोऽपरिणामः स कादाचित्को न युक्तः । किं तर्हि सर्वदा भवेन्नित्यैकरूपत्वादात्मैकः ॥ १६६० ॥

अथ मतम्—अपरिणामो न परिणामविपरीतवस्त्वात्मकः । किं तर्हि ? । परिणामप्रतिषेधमात्रात्मकः । तेन नासम्भवि लक्षणं भवतीति, अत्राह—**तत्प्रतिक्षेपे**त्यादि ।

**तत्प्रतिक्षेपमात्रात्मा स चेदत्र विवक्षितः ।**
**सर्वदा वस्तुताऽस्तित्वे गम्येतास्यानिवर्त्तनात् ॥ १६६१ ॥**

तस्य परिणामस्य प्रतिक्षेपः प्रतिषेधः, स एव तन्मात्रं, तदेवात्मा स्वभावो यस्याऽपरिणामस्य स तथोक्तः । अस्येति । प्रतिक्षेपात्मनोऽपरिणामस्य नित्यैकरूपत्वादात्मनः परिणामाभावात् ॥ १६६१ ॥

**अस्तु** वेत्यभ्युपगम्यापरिणाममतिव्यापितां लक्षणदोषमाह ।

**अस्तु वाऽपरिणामोऽस्य तथापि व्यभिचारिता ।**
**स्वापमूर्च्छाद्यवस्थासु तद्भावेऽप्यर्थसम्भवात् ॥ १६६२ ॥**
**प्रत्ययान्तरसद्भावे तद्विविक्तान्यदर्शनात् ।**
**घटज्ञानादिरूपेण तस्यासाविष्यते यदि ॥ १६६३ ॥**

**द्वितीयादस्य कः पक्षाद्विशेषोऽभिहितस्तदा ।**
**यद्विकल्पेन निर्दिष्टं पक्षद्वयमिदं त्वया ॥ १६६४ ॥**

**व्यभिचारितेति** । अतिव्यापिता । मूर्च्छादीत्यादिशब्देन व्यवधानपराङ्मुखाद्यवस्था गृह्यन्ते । **तद्भावेऽपीति** । घटादिज्ञानरूपेणापरिणतात्मद्रव्यसद्भावेऽपि । अर्थालम्बनप्रत्ययव्यतिरिक्तप्रत्ययान्तरसद्भावे सति घटादिविविक्तप्रदेशज्ञानमेवापरिणाम इष्यते । घटादिज्ञानरूपेणापरिणतत्वात् । **तस्येति** । आत्मनः । **असाविति** । अपरिणामः । एवं सति विज्ञानं वाऽन्यवस्तुनीत्येतस्माद्द्वितीयात्पक्षादस्य विशेषो नोक्तः स्यात् । ततश्च पक्षद्वयनिर्देशोऽनर्थकः स्यात् ॥ १६६२ ॥ १६६३ ॥ १६६४ ॥

अन्यवस्तुनीत्यादिना द्वितीयेऽभावलक्षणे व्यभिचारितामाह ।

**अन्यवस्तुनि विज्ञाने वृत्ते सर्वस्य नास्तिता ।**
**अदृश्यस्यापि गम्येत द्वितीयाभावसंश्रये ॥ १६६५ ॥**

**अदृश्यस्यापीति** । देशकालस्वभावविप्रकृष्टस्य । **द्वितीयाभाव** इति । विज्ञानं वाऽन्यवस्तुनीत्येतस्मिन् ॥ १६६५ ॥

**तत्तुल्ययोग्यरूपस्य कारणान्तरसन्निधौ ।**
**तद्विविक्तान्यविज्ञाने नास्तिता चेत्प्रतीयते ॥ १६६६ ॥**

अथापि स्यान्न सर्वस्यादृष्टस्याभावः साध्य इष्टः । किं तर्हि ? । **तत्तुल्ययोग्यरूपस्य**—तेनोपलभ्येन घटादिविविक्तप्रदेशेन तुल्यं रूपं योग्यता यस्य स तथोक्तः । उपलब्धिलक्षणप्राप्तस्येति यावत् । **तद्विविक्तान्यविज्ञान** इति घटादिविविक्तप्रदेशज्ञाने ॥ १६६६ ॥

शक्येत्यादिना प्रतिविधत्ते ।

**शक्यदर्शनवस्त्वाभप्रत्यक्षस्यैव नास्तिता ।**
**एवं सति समाख्येयो नान्येषां व्यभिचारिणी ॥ १६६७ ॥**
**अन्यवस्तुनि विज्ञानं जातं वा ज्ञायते कथम् ।**
**अप्रत्यक्षा मता बुद्धिर्येनार्थापत्तितो यदि ॥ १६६८ ॥**
**सापि ज्ञानात्मिकैवेति तस्या अपि कुतो गतिः ।**
**अर्थापत्त्यन्तरप्रोक्तावनवस्था प्रसज्यते ॥ १६६९ ॥**
**यदि वस्तु प्रमाभावो मेयाभावस्तथैव च ।**
**प्रत्यक्षेऽन्तर्गतो भावस्तथासति कथं न ते ॥ १६७० ॥**

शक्यदर्शनस्य—उपलब्धिलक्षणप्राप्तस्य वस्तुनः, आभा—आकारो यस्य तत्तथा, शक्यदर्शनवस्त्वाभं च तत्प्रत्यक्षं चेति कर्मधारयः । **नान्येषामिति** । अनुमानादीनाम् । यतस्तेषां परोक्ष एवार्थो विषयः । नच तेषां निवृत्तौ परोक्षस्य देशकालस्वभावविप्रकृष्टस्य निवृत्तिरस्तीति । अतो व्यभिचारिणी तेषां निवृत्तिः । ततश्च प्रत्यक्षादेरनुत्पत्तिरित्यत्रादिग्रहणमनर्थकं स्यात् । अपिच तदन्यवस्तुनि विज्ञानं यदि निश्चितं भवेदेवं प्रतियोगिनोऽभावं साधयतीत्येवमवश्याभ्युपगन्तव्यम् । अन्यथा हि सत्तामात्रेण ततोऽभावसिद्धौ सत्यां सर्वस्य पुंसस्तस्मादेकपुरुषोत्पन्नादपि ज्ञानादभावसिद्धिप्रसङ्गः स्यात् । तत्र येन मीमांसकेनाप्रत्यक्षा बुद्धिरभ्युपगता तेन तदेव तदन्यवस्तुनि जातं विज्ञानं कथं ज्ञायेत । नैव । **अर्थापत्तितो यदीति** । ज्ञायत इति प्रकृतेन सम्बन्धः । यथोक्तम्—अज्ञातेऽर्थे बुद्धेरसिद्धेरर्थज्ञानाल्लिङ्गात्तद्बुद्धिरनुमीयत इति । अत्र हि लिङ्गवचनमन्यथाऽनुपपत्तिवाचकम् । अर्थज्ञानादन्यथाऽनुपपन्नादित्यर्थः । अनुमीयते—प्रमीयत इति यावत् । एवं तर्हि साऽप्यर्थापत्तिर्ज्ञानात्मिकेति तस्या अपि कुतो गतिरिति वक्तव्यम् । अन्यस्या अर्थापत्तेरिति चेदेवं सत्यनवस्था स्यात् । किंच—यदि वस्तुत्वमभावस्याभ्युपगम्यते तदा यथा प्रमाणाभावो वस्तु तथा प्रमेयाभावोऽपीति, ततश्चाभावो वस्तुत्वात्प्रत्यक्ष एव किमिति नाभ्युपगम्यते । येन तदधिगतयेऽन्यत्प्रमाणान्तरमभावाख्यं परिकल्प्येत ॥ १६६७ ॥ १६६८ ॥ ॥ १६६९ ॥ १६७० ॥

**कार्यादीना**मित्यादिना प्रत्यक्षान्तर्गतत्वमेव समर्थयते ।

**कार्यादीनामभावो हि भावो यः कारणादिना ।**
**स चापरविविक्तात्मा प्रत्यक्षेणैव गम्यते ॥ १६७१ ॥**

तथाचोक्तम्—कार्यादीनामभावो हि भावो यः करणादिनेति, स च कारणादेर्भावोऽपरविविक्तात्मा—कार्यादिविविक्तस्वभावः, प्रत्यक्ष एवेति किमभावस्यापरं प्रमेयमस्ति येन प्रमाणान्तरं स्यात् । प्रयोगः—यस्य यतो व्यतिरिक्तं प्रमेयं नास्ति तत्ततो न प्रमाणान्तरं, यथा सप्तमं प्रमाणं, नास्ति च प्रमेयं प्रत्यक्षप्रमेयाद्व्यतिरिक्तमभावस्येति व्यापकानुपलब्धिः ॥ १६७१ ॥

अत्र परो हेत्वसिद्धिमुद्भावयन्नाह—**स्वरूपेत्यादि** ।

**स्वरूपपररूपाभ्यां नित्यं सदसदात्मके ।**
**वस्तुनि ज्ञायते किंचिद्रूपं कैश्चित्कदाचन ॥ १६७२ ॥**

**प्रत्यक्षाद्यवतारश्च भावांशो गृह्यते यदा ।**
**व्यापारस्तदनुत्पत्तेरभावांशे जिघृक्षिते ॥ १६७३ ॥**

स्यात्प्रमेयाभावो यद्येकात्मकमेव वस्तु स्यात्, यावता स्वरूपपररूपाभ्यां यथा-क्रमं सदसदात्मत्वेनोभयात्मकं वस्तु, तस्मिन्नुभयात्मके वस्तुनि स्थिते, किंचिद्रूपं—स्वभावः, कैश्चित्प्रमाणैर्ज्ञायते, न सर्वं सर्वैः । एतदेव दर्शयति—प्रत्यक्षेत्यादि । भावांशो यदा गृह्यते तदा प्रत्यक्षादीनां पञ्चानां व्यापारो नाभावस्य, अभावांशे ग्रहीतुमिष्टे, तदनुत्पत्तेर्व्यापारः—तेषां प्रत्यक्षादीनामनुत्पत्तेरभावस्येति यावत्॥१६७२॥ ॥ १६७३ ॥

स्यादसिद्धता हेतोर्यद्येकस्योभयात्मकत्वं स्यात्, यावता विरुद्धमेकस्योभयात्मत्व-मिति प्रतिपादयन्नाह—स्वरूपमेवेत्यादि ।

**स्वरूपमेव वस्तूनां ननु व्यावृत्तमिष्यते ।**
**तेनात्मना सदेतच्च प्रत्यक्षममुनाऽत्मना ॥ १६७४ ॥**

नहि पररूपेण वस्तु वस्त्वन्तराद्व्यावृत्तं, किं तर्हि?, स्वरूपेण, अतश्च स्वरूपमेव—स्वभाव एव वस्तूनां वस्त्वन्तराद्व्यावृत्तमुपलभ्यते । स्वस्वभावावस्थानात् । येन चात्मना व्यावृत्तं तेन तद्वस्तु सदेव नासत् । एतच्च वस्तु प्रत्यक्षममुनाऽन्यव्यावृत्ते-नात्मनेति न द्वितीयरूपोपलब्धिः ॥ १६७४ ॥

एवं तावत्प्रत्यक्षविरुद्धमुभयात्मकत्वप्रतिज्ञानमुद्भावितम्, इदानीमनुमानविरुद्धं प्रतिपादयन्नाह—अर्थक्रियेति ।

**अर्थक्रियासमर्थं च सदन्यदसदुच्यते ।**
**समावेशो न चैकत्र तयोर्युक्तो विरोधतः ॥ १६७५ ॥**
**स्वसाध्यायां समर्थं चेदन्यस्यामक्षमं ननु ।**
**तदेतद्धि द्विरूपत्वं नैवैकत्रास्ति वस्तुनि ॥ १६७६ ॥**
**अन्यदेवासमर्थं तु यद्यन्यस्यामितीष्यते ।**
**द्वे तदा वस्तुनी प्राप्ते तन्नैकस्य द्विरूपता ॥ १६७७ ॥**

यदर्थक्रियाकारि तत्सत्, यथा सत्त्वेनाभिमतं रूपं, अ(न)र्थक्रियाकारि चास-त्त्वेनाभिमतं रूपमिति स्वभावहेतुः । यौ च परस्परविरुद्धौ न तयोरेकस्मिन्वस्तुनि युगपदुपलयनं, यथा छायातपयोः शीतोष्णयोर्वा, परस्परविरुद्धे च सदसद्रूपे, इति

व्यापकविरुद्धोपलब्धिः । **स्वसाध्याया**मित्यादिना परो हेतोरसिद्धिमुद्भावयति । तथाहि—तदेवैकं वस्तु स्वसाध्यायामर्थक्रियायां समर्थम्, अन्यसाध्यायां त्वसमर्थं, ततश्चार्थक्रियाकारित्वलक्षणो हेतुरसिद्धः । नहि परसाध्यामर्थक्रियामपेक्ष्यार्थक्रियाकारित्वं वस्तुनः सिद्धम् । नच सदसद्रूपयोः परस्परविरोधः, अपेक्षाभेदात् । तथाहि—स्वसाध्यामर्थक्रियामपेक्ष्य सदुच्यते, अन्यसाध्यां त्वपेक्ष्यासदिति, यदि तु स्वसाध्यामेवापेक्ष्यासदुच्येत स्यात्परस्परविरोधः । अत्र परिहारमाह—**ननु तदेवे**ति । यदेव स्वसाध्यायां समर्थं वस्तुस्वरूपं तदेव परसाध्यायामसमर्थं नान्यत् । नह्यपेक्षाभेदेन शब्दभेदाद्वस्तु भिद्यते । निरंशत्वात्तस्य । तदिति । तस्मादर्थे तत् । तस्मात् नैकत्र द्विरूपत्वमस्ति । अथान्यदेव रूपमन्यसाध्यायामर्थक्रियायामसमर्थं नतु तदेवेत्याह—**अन्यदेवे**ति । एवं तर्हि यदर्थक्रियासमर्थं तदेकं वस्तु, यच्चासमर्थं तद्द्वितीयमिति वस्तुद्वयमेव केवलं भवता प्रतिपादितम्, नत्वेकस्योभयात्मत्वम् ॥ १६७५ ॥ ॥ १६७६ ॥ १६७७ ॥

प्रमाणनिवृत्तिमात्रात्मके तृतीयेऽभावलक्षणे दूषणमाह—**अभावस्ये**त्यादि ।

**अभावस्य च वस्तुत्वे पूर्वमङ्गीकृते सति ।**
**नीरूपता पुनस्तस्य किमर्थमुपवर्ण्यते ॥ १६७८ ॥**

**पूर्वमङ्गीकृत** इति । साऽत्मनोऽपरिणामो वा विज्ञानं वाऽन्यवस्तुनीति वचनात् । **नीरूपता पुनस्तस्ये**ति । मानमप्येवमिष्यतामिति वचनाद्विषयाधिगमलक्षणत्वात्प्रमाणस्य न युक्तं नीरूपस्य प्रामाण्यमिति वक्ष्यमाणोऽभिप्रायः ॥ १६७८ ॥

तमेवाभिप्रायं दर्शयन्नाह—**नीरूपस्ये**त्यादि ।

**नीरूपस्य हि विज्ञानरूपहानौ प्रमाणता ।**
**न युज्यते प्रमेयस्य सा हि संवित्तिलक्षणा ॥ १६७९ ॥**

**से**ति । प्रमाणता । यत्प्रमेयाधिगतिरूपं न भवति न तत्प्रमाणं, यथा घटादि, प्रमेयाधिगतिशून्यश्चाभाव इति व्यापकानुपलब्धिः ॥ १६७९ ॥

स्यादेतच्चक्षुरादयो न प्रमेयाधिगतिरूपाः, अथ च प्रमेयाधिगतिहेतुत्वात्प्रमाणमुच्यन्ते, तद्वदभावोपीत्यनैकान्तिको हेतुरित्याह—**तद्धेतुत्वादि**त्यादि ।

**तद्धेतुत्वात्प्रमाणं चेच्चक्षुरादिवदुच्यते ।**
**न नीरूपस्य हेतुत्वसम्भवोऽस्ति कदाचन ॥ १६८० ॥**

**ज्ञानरूपविविक्तश्च सोऽभावो गम्यते कथम् ।**
**तद्गोचरप्रमाभावादेवं तर्ह्यनवस्थितिः ॥ १६८१ ॥**
**वस्त्वभावात्प्रमाणस्य प्रमाभावाच्च वस्तुनः ।**
**नास्तिता यदि गम्येत भवेदन्योन्यसंश्रयः ॥ १६८२ ॥**
**तस्मादेकस्य या दृष्टिः सैवान्यादृष्टिरुच्यते ।**
**सा च स्वतन्त्रसंसिद्धिः स्वरूपेणाजडत्वतः ॥ १६८३ ॥**

नच प्रमाणहेतुत्वादुपचारेण कल्पना युक्ता, यतो नीरूपस्य सर्वसामर्थ्यविरहलक्षणत्वान्न हेतुत्वसम्भवो युक्तः । सम्भवे वा नीरूपताहानिप्रसङ्गात् । तस्याविशेषात्तद्भावे विज्ञानानुपरमप्रसङ्गाच्च । किंच—नासिद्धस्य गमकत्वं युक्तमतिप्रसङ्गादिति पूर्वमुक्तम्, सा च तस्याभावस्य सिद्धिः कथमिति वक्तव्यम्, न तावत्स्वत एव तस्य सिद्धिः, प्रमेयाभावस्यापि स्वत एव सिद्धिप्रसङ्गात् । ततश्चाभावकल्पना व्यर्था स्यात्, प्रमेयाभावसिद्ध्यर्थत्वात्तस्याः, तस्य च प्रमेयाभावस्य प्रमाणाभाववत्स्वत एव सिद्धत्वात् । नापि स्वसंवित्त्या तस्य सिद्धिः, यतो ज्ञानरूपविविक्तोऽसौ कथं स्वसंवित्त्या गम्येत । ज्ञानात्मन एव तथाधिगमात् । अथान्यस्मात्तद्विषयप्रमाणाभावात्तत्सिद्धिः, तस्यापि तद्विषयस्य प्रमाणाभावस्य कथं सिद्धिः ?, तस्याप्यन्यतः सिद्धावनवस्था स्यात् । यथोक्तम्—"अन्यथार्थस्य नास्तित्वं गम्यतेऽनुपलम्भतः । उपलम्भस्य नास्तित्वमन्येनेत्यनवस्थिति"रिति । अथ माभूदनवस्थितिः, प्रमेयाभावात्तस्य सिद्धिरभ्युपगम्यते । एवं सतीतरेतराश्रयत्वं प्राप्नोति । तथाहि—वस्तुनः प्रमेयस्याभावात्प्रमाणाभावसिद्धिः तस्य सिद्धौ च प्रमेयाभावसिद्धिरिति स्फुटतरमेवात्रावतरतीतरेतराश्रयदोषः । तदयं गड्डुप्रवेशेऽक्षतारावितिर्गमः । तस्मादेकोपलब्धिरेवान्यस्यानुपलब्धिरिति नाभावो नाम पृथक्प्रमाणं प्रत्यक्षात् । स्यादेतत्साऽप्येकोपलब्धिः कथं सिद्धा, तत्राप्यभाववत्समानप्रसङ्ग इत्याह—सा चेत्यादि । सा चैकस्य दृष्टिः स्वयमेव स्वतन्त्रा सिद्धा नान्यत इति नानवस्थाप्रसङ्गः । कस्मात् ? । स्वरूपेण—प्रकृत्यैव, अजडरूपत्वात्–प्रकाशस्वभावत्वात् । नच सत्तामात्रेण संवित्तावतिप्रसङ्गोऽन्येषामतद्रूपत्वात् ॥ १६८० ॥ १६८१ ॥ १६८२ ॥ १६८३ ॥

अथ परतो बुद्धिसंसिद्धौ कः प्रद्वेष इत्याह—बुद्धेरित्यादि ।

**बुद्धेरपरतः सिद्धिर्लिङ्गाद्बुद्ध्यन्तरादपि ।**
**अन्यथाऽनुपपत्तेर्वा सर्वथाऽपि न सम्भवः ॥ १६८४ ॥**

**त्रयपर्यनुयोगस्य प्रत्येकं सति सम्भवे ।**
**अनवस्थितयो बह्व्यो विसर्पिण्यः स्युरत्र ते ॥ १६८५ ॥**
**तुल्ययोग्यात्मनस्तस्मादेकस्यैवोपलम्भनात् ।**
**असन्निश्चययोग्यत्वमन्येषां संप्रतीयते ॥ १६८६ ॥**
**एकस्य कस्य संवित्तावचन्द्रं गम्यते नभः ।**
**सर्वशब्दविवेकश्च क्वचिन्निश्चीयते कथम् ॥ १६८७ ॥**

केचिल्लिङ्गसमधिगम्यां बुद्धिमिच्छन्ति, तच्च लिङ्गमर्थज्ञानं वा क्रियारूपं इन्द्रियार्थौ वा व्यक्तो वा विषय इत्यादिकम् । केचिद्बुद्ध्यन्तरप्रत्यक्षां बुद्धिमिच्छन्ति, न स्वसंविद्रूपां, स्वात्मनि कारित्व(कर्मत्व ?)विरोधात् । केचिज्ज्ञातार्थान्यथानुपपत्त्या, ज्ञातोऽर्थो न सिद्ध्यति यदि बुद्धिर्न भवेत्, तस्य स्वयं जडरूपत्वात् । अतः पक्षत्रयमुक्तम् । तस्य लिङ्गादित्रयस्य यः प्रत्येकं पर्यनुयोगः, तस्यापि लिङ्गादेः कुतः सिद्धिरिति, तस्य सम्भवे सति बह्व्योऽनवस्थितयः प्रसर्पन्ति । तथाहि—तदपि लिङ्गादित्रयं बुद्धेरसिद्धावसिद्धमिति तस्यापि परतः सिद्धिरन्वेष्टव्या, तत्राप्यपरलिङ्गादिसमाश्रयणे सर्वत्र पर्यनुयोगे चानवस्थाप्रसङ्गः । तस्मादेकस्योपलम्भादन्येषामसत्त्वं प्रतीयते, तद्देशकालस्य निषेधे कर्त्तव्ये तुल्ययोग्यात्मनामेव निषेधः कार्यः । अन्येषां तत्र निषेद्धुमशक्यत्वात् । तादात्म्यनिषेधे तु सर्वस्यैव निषेधः कार्यो दृष्टः, तदन्यत्वेन सर्वस्य व्यवस्थापनात् । तदात्मा न परात्मेति कृत्वा । ननु चाकाशे चन्द्राभावं यदाऽध्यवस्यति तदा नैकस्य तत्रोपलम्भः, येनोच्यते एकोपलाम्भादन्याभावसिद्धिरिति, न ह्याकाशं नाम किंचित्परमार्थतोऽस्ति, यच्चन्द्रविविक्तं दृश्येत । यदपि परैर्वस्तु सत्कल्पितं, तदप्यतीन्द्रियं, यश्च क्वचित्प्रदेशे शब्दाभावनिश्चयः, स कस्योपलम्भात् । न तावद्भूभागोपलम्भादिति वक्तव्यम्, तस्य शब्देनातुल्ययोग्यावस्थत्वात् । तथाहि—भूभागश्चाक्षुषः, शब्दस्तु श्रावणः, तुल्ययोग्यावस्थयोश्च परस्परापेक्षमन्यत्वमिष्टम्, एकज्ञानसंसर्गिणोऽपरस्परापेक्षमन्यत्वमिति वचनात् । नापि कालस्योपलम्भादिति वाच्यम्, नहि परा(दा ?)र्थव्यतिरिक्तः कालोऽस्ति यस्योपलम्भः स्यात् । योऽपि परैरिष्टांश(स्सोऽ)प्यतीन्द्रियः ॥ १६८४ ॥ १६८५ ॥ १६८६ ॥ १६८७ ॥

प्रकाशेत्यादिना प्रतिविधत्ते ।

**प्रकाशतमसो राशेस्तमेव व्योम मन्यते ।**
**प्रतिपत्ता यतोऽन्यस्य न सत्त्वं न च दर्शनम् ॥ १६८८ ॥**

**सर्वशब्दविवेकोऽपि कार्यादृष्टेः प्रतीयते।**
**सा च सिद्धाऽन्ततोऽन्येषां विज्ञानानां स्ववेदनात्॥१६८९॥**

**राशेरिति**। संवित्ताविति सम्बन्धः। यस्मात्तमेव प्रकाशतमसो राशिमाकाशमिति प्रतिपत्ता प्रतिपद्यते, नान्यत्। तथाहि—दिवा निशि वेदमिन्द्रनीलसङ्काशमिदं जलधरनिकाशमिति वा प्रतिपद्यते। न चाकाशस्य परिकल्पितस्य वर्णसंस्थानादिरस्ति। **ततोऽन्यस्येति**। प्रकाशतमोराशिव्यतिरेकेण परपरिकल्पितस्याकाशस्यासत्त्वात्। सत्त्वेवाऽतीन्द्रियत्वात्। सर्वशब्दविवेकोऽपि श्रोत्रज्ञानस्य कार्यस्यानुपलब्ध्या गम्यते। सा चानुपलब्धिरन्येषां चक्षुरादिज्ञानानां संवेदनात्सिद्धेत्यस्त्येवात्राप्येकोपलम्भोऽन्यविज्ञानसंवेदनलक्षणः। ननु नहि कार्यसत्तया कारणसत्ता व्याप्ता, येन सा कार्यसत्ता निवर्त्तमाना तामपि निवर्त्तयेत्। यतो नावश्यं कारणानि वर्द्धंति (अर्थवन्ति?) भवन्ति। न ब्रूमः सर्वा कारणसत्ता कार्यसत्तया व्याप्तेति, किं तर्हि?, विशिष्टैवाऽप्रतिबद्धसामर्थ्यलक्षणा, तस्या एवात्र निषेधः क्रियते, न सर्वस्याः। तथाहि—यत्रापि केवलप्रदेशोपलम्भाद्धटाभावसिद्धिः, सापि घटोपलम्भाख्यकार्यानुपलब्धिरेव। यत उपलब्धिलक्षणप्राप्तस्यैव घटस्याभावः साध्यते, न सर्वस्य। कश्चोपलब्धिलक्षणप्राप्तः?। य एवाप्रतिबद्धसामर्थ्यः। यत उपलब्धिलक्षणं स्वभावविशेषो वर्णितः—यः स्वभावः स प्रत्यक्ष एव भवतीति। अन्यथा ह्यत्रापि घटोपलब्ध्या घटसत्ता न व्याप्ता स्यात्ततश्चाव्यापकस्य निवृत्तौ नाव्याप्तस्य निवृत्तिरिति ततो घटाभावो न सिद्ध्येत्। तस्मात्सर्वैव स्वभावानुपलब्धिरसद्व्यवहारहेतुः। परमार्थतः कार्यानुपलब्धिरेव द्रष्टव्या॥ १६८८॥ १६८९॥

इत्थमित्यादिनाऽभावशब्दवाच्यत्वादित्यस्य हेतोरनैकान्तिकत्वमाह—

**इत्थं च वस्तुरूपत्वे स्थितेऽभावप्रमात्मनः।**
**अभावशब्दवाच्यत्वमन्तर्भावेऽप्यबाधितम्॥ १६९०॥**

**इत्थमिति**। एकस्य या दृष्टिः सैवान्या दृष्टिरुच्यत इत्यादिना। **अन्तर्भावेऽप्यबाधितमिति**। अभावस्य प्रत्यक्षान्तर्भावेऽप्यभावशब्दवाच्यत्वमविरुद्धमित्यर्थः। एतेन हेतोर्विपक्षादव्यावृत्तिमाह॥ १६९०॥

**अभावो वा प्रमाणेन स्वानुरूपेण मीयते।**
**इत्यत्र सिद्धसाध्यत्वं तादृश्यस्त्यनुरूपता॥ १६९१॥**

**इत्यभावविचारः।**

तादृश्यस्त्यनुरूपतेति । अन्योपलब्धिलक्षणानुपलब्धिरभावः (इति)। यच्चाप्येके चोदयन्ति—ननु वस्त्वभावमात्रालम्बनस्य प्रत्ययस्य प्रत्यक्षादौ न कश्चिदन्तर्भावोऽस्ति, वस्तुविरहमात्रालम्बनत्वादस्य, प्रत्यक्षादेश्च वस्तुविषयत्वात् । नचास्याप्रामाण्यमविसंवादित्वात्, नहि भवद्भिर्वस्तूनां निरन्वयं विनाशमिच्छद्भिर्वस्तुविरहो नेष्यत इति । तदप्यनेन प्रत्युक्तम् । नहि तेन विकल्पे(न) तद्देशकालादिविशेषणरहितमभावमात्रमालम्ब्यते । किं तर्हि । क्वचिद्देशादौ घटादि नास्तीत्यनेन रूपेण सविशेषणमेव । तच्च केवलस्यैव देशादेर्ग्रहणसामर्थ्यादेवं भवतीति न पृथगस्य प्रामाण्यम्, प्रत्यक्षगृहीतस्यैव केवलस्य देशादेस्तथा विकल्पनात् । सत्यपि वा निर्विशेषणस्याभावस्य ग्रहणे न तद्ग्राहिणो ज्ञानस्य प्रामाण्यं युक्तमवस्तुविषयत्वात् । अर्थक्रियार्थिनां च प्रमाणचिन्ताया वस्त्वधिष्ठानत्वादिति यत्किंचिदेतत् ॥ १६९१ ॥

## इत्यभावविचारः ।

युक्त्यनुपलब्धी अधिकृत्याह—अस्मिन्सतीत्यादि ।

**अस्मिन्सति भवत्येव न भवत्यसतीति च ।**
**तस्मादतो भवत्येव युक्तिरेषाऽभिधीयते ॥ १६९२ ॥**
**प्रमाणान्तरमेवेयमित्याह चरको मुनिः ।**
**नानुमानमियं यस्माद्दृष्टान्तोऽत्र न लभ्यते ॥ १६९३ ॥**
**उपलब्ध्या यया योऽर्थो ज्ञायते तदभावतः ।**
**नास्तित्वं गम्यते तस्यानुपलब्धिरियं मता ॥ १६९४ ॥**
**प्रमाणान्तरमेषाऽपि दृष्टान्ताद्यनपेक्षणात् ।**
**दृष्टान्तेऽपि हि नास्तित्वमनयैव प्रसिद्ध्यति ॥ १६९५ ॥**

तद्भावभावित्वेन यत्कार्यताप्रतिपत्तिरियं युक्तिः, इयं च सविकल्पकत्वान्न प्रत्यक्षं, नाप्यनुमानं, दृष्टान्ताभावात्, तथाहि—दृष्टान्तोऽपि—अत एव तद्भावभावित्वात्तत्कार्यताप्रतिपत्तिः, तत्रापि दृष्टान्तोऽन्वेषणीयस्तत्राप्यपर इत्यनवस्था स्यात्, तस्मात्प्रमाणान्तरमेवेयमित्याह चरको—वैद्यः । तथा या चोपलब्धिनिवृत्त्या नास्तित्वप्रतीतिरियमनुपलब्धिः । अस्या अपि प्रमाणान्तरत्वे युक्तिवदेव न्यायोऽन्वेषणीयः ॥ १६९२ ॥ १६९३ ॥ १६९४ ॥ १६९५ ॥

कार्येत्यादिना प्रतिविधत्ते ।

**कार्यकारणताभावप्रतिपत्तिर्न संयता ।**
**तदत्रास्यां न भेदोऽस्ति साध्यसाधनयोर्यतः ॥ १६९६ ॥**

कार्यकारणभावोऽभावश्चेति कार्यकारणताभावौ, तयोः प्रतिपत्तिरिति विगृह्य समासः, तत्र कार्यकारणताप्रतिपत्तिर्युक्त्या, अभावप्रतिपत्तिरनुपलब्ध्येति यथाक्रमं सम्बन्धः । अस्यामिति । युक्तावनुपलब्धौ च प्रमाद्वयेऽपि न साध्यसाधनयोर्भेदः ॥ १६९६ ॥

कथमित्याह—तद्भावेत्यादि ।

**तद्भावभावितां मुक्त्वा न हेतुफलताऽपरा ।**
**दृश्यादृष्टिं विहायान्या नास्तिता न प्रतीयते ॥ १६९७ ॥**

युक्तौ तावन्न साध्यसाधनयोर्भेदः, तथाहि—तद्भावभाविता हेतुः, कार्यकारणता साध्या, न चानयोर्भेद उपलभ्यते, पर्यायत्वात्तरुपादपवत् । अनुपलब्धावपि च न भेदः, तथाहि—यद्यनुपलम्भनिवृत्तिमात्रं विवक्षितं तदा तस्यासिद्धत्वात्पूर्ववदनवस्थादिदोषो वाच्यः । अथान्योपलब्धिरेवानुपलब्धिस्तदा दृश्यानुपलब्धावेवान्तर्भावः । अनया च नाभावः साध्यते, तस्य प्रत्यक्षेणैव सिद्धत्वात् । अत एवाह—दृश्यादृष्टिं विहायेत्यादि ॥ १६९७ ॥

अथ मतं नाभ्यां कार्यकारणताऽभावौ साध्येते, किं तर्हि, व्यवहार इति, तत्राह—तद्भावव्यवहार इत्यादि ।

**तद्भावव्यवहारे तु योग्यतायाः प्रसाधने ।**
**सङ्केतकाले विज्ञातो विद्यतेऽर्थो निदर्शनम् ॥ १६९८ ॥**

## इति युक्त्यनुपलब्धिविचारः ।

तयोर्हेतुफलताभावयोर्भावस्तद्भावस्तत्र व्यवहारो यः स तद्भावव्यवहारः । ज्ञानाभिधानप्रवृत्तिलक्षणमनुष्ठानं तस्मिन्योग्यता साध्यते । प्रयोगश्च—ये यद्व्यापारानन्तरनियतोपलभ्यस्वभावास्ते तत्कार्यव्यवहारयोग्याः, तद्यथा सङ्केतकालानुभूताः कुलालादिव्यापारानन्तरोपलभ्यस्वभावा घटादयः, तथाच ताल्वादिव्यापारानन्तरनियतोपलभ्यस्वभावाः शब्दा इति स्वभावहेतुः । तथानुपलब्धावपि व्यवहारे साध्ये प्रयोगः—येषामुपलब्धिलक्षणप्राप्ताभिमतानां येष्वनुपलब्धिस्ते तदभावव्यवहारयोग्याः, तद्यथा विषाणाभावव्यवहारयोग्याः शशशमस्तकादयः, उपलब्धिलक्ष-

णप्राप्ताभिमतानां पराभिमतसामान्यादिपदार्थानामनुपलब्धिश्च तदाश्रयत्वेनेष्टेषु सावलेयादिष्विति स्वभावानुपलब्धिः । तद्विविक्तानां सावलेयादीनामुपलम्भान्नासिद्धिः, नाप्यनैकान्तिकता हेतोरभिव्यक्तेर्निराकरिष्यमाणत्वात्, एतावन्मात्रनिबन्धनत्वाच्चाभावव्यवहृतेः, नापि विरुद्धता सपक्षे भावादिति ॥ १६९८ ॥

## इति युक्त्यनुपलब्धिविचारः ।

तत्र सम्भवश्च लक्षणया समुदायः। सम्भवप्रतिपत्तौ समुदायिप्रतिपत्तिः । यथा—सहस्रसद्भावे ज्ञाते शतादिसत्ताप्रतिपत्तिः । इदं च किल दृष्टान्ताभावान्नानुमानम्।

अत्र दूषणमाह—समुदायेत्यादि ।

**समुदायव्यवस्थाया हेतवः समुदायिनः ।**
**शतादिसम्भवज्ञानं सहस्रात्कार्यलिङ्गजम् ॥ १६९९ ॥**

## इति सम्भवविचारः ।

यस्मात्समुदायिभ्योऽन्यस्य समुदायस्याभावात्समुदायव्यवस्थायाः समुदायिन एव कारणं तस्मात्सहस्राच्छतादिसंभवप्रतीतिः कार्यलिङ्गजैव ॥ १६९९ ॥

## इति सम्भवविचारः ।

अन्ये त्वैतिह्यादि च प्रमाणान्तरमिच्छन्ति, तत्रानिर्दिष्टवक्तृकं प्रवादपारम्पर्यमैतिह्यम्। यथा—इह वटे यक्षः प्रतिवसतीति । अनियतदेशकालमाकस्मिकं सदसत्सूचकं ज्ञानं प्रतिभा । यथा—कुमार्या एव भवति, अद्य मे भ्राता आगमिष्यतीति । तच्च किल तथैव भवतीति प्रमाणम्। अत्र दूषणमाह—ऐतिह्येत्यादि ।

**ऐतिह्यप्रतिभादीनां भूयसा व्यभिचारिता ।**
**नैवेदृशां प्रमाणत्वं घटतेऽतिप्रसङ्गतः ॥ १७०० ॥**

## इत्यैतिह्यादिविचारः ।

आदिशब्देन प्रत्यभिज्ञादीनां ग्रहणम्। तेषामपि परैः कैश्चित्प्रमाणत्वेन गृहीतत्वात्। **अतिप्रसङ्गत** इति । स्वप्रान्तिकस्यापि कदाचित्सत्यतादर्शनात्प्रमाणान्तरत्वं स्यात्॥ १७०० ॥

## इत्यैतिह्यादिविचारः ।

एवं विस्तरेण प्रमाणान्तरं निराकृत्य सङ्क्षेपेण निराकुर्वन्नाह—**अथवेत्यादि** ।

**अथवाऽस्थान एवायमायासः क्रियते यतः ।**
**प्रत्यक्षश्च परोक्षश्च द्विधैवार्थो व्यवस्थितः ॥ १७०१ ॥**

द्विविध एव ह्यर्थः प्रत्यक्षः परोक्षश्च ॥ १७०१ ॥

ननु चापरोऽप्यस्ति प्रत्यक्षाप्रत्यक्षः, नैव प्रत्यक्षो नाप्यप्रत्यक्ष इत्याह—**उभये-त्यादि** ।

**उभयानुभयात्मा हि नैवासौ युज्यते परः ।**
**एकस्यैकत्र विज्ञाने व्याहते हि क्रियाक्रिये ॥ १७०२ ॥**
**साक्षाद्धि ज्ञानजनकः प्रत्यक्षो ह्यर्थ उच्यते ।**
**यथोक्तविपरीतस्तु परोक्षः कृतिभिर्मतः ॥ १७०३ ॥**
**आद्यार्थविषयं तावन्नेदं शाब्दोपमादिकम् ।**
**प्रत्यक्षेऽन्तर्गतिप्राप्तेर्वैफल्यं वा स्मृतेरिव ॥ १७०४ ॥**
**परोक्षविषयत्वेऽपि सर्वेषां विषयः कथम् ।**
**यदि साक्षात्परोक्षोऽयं न स्यात्प्रत्यक्षवस्तुवत् ॥ १७०५ ॥**
**परव्यपाश्रयेणापि प्रतिपत्तौ किमस्य सा ।**
**सम्बद्धेतरतो नो वा भेदाभासा न वा तथा ॥ १७०६ ॥**
**असम्बद्धात्तदुद्भूतावव्यवस्था प्रसज्यते ।**
**न च संगच्छते व्याप्तिर्भेदाभासा भवेद्यदि ॥ १७०७ ॥**
**परोक्षविषया यावत्सम्बद्धार्थसमाश्रया ।**
**अपरामृष्टतद्भेदा प्रतीतिरनुमा स्फुटा ॥ १७०८ ॥**

## इति प्रमाणान्तरपरीक्षा ।

न ह्येकस्यान्योन्यप्रत्यनीकानेकधर्मसम्पातो युक्तः, एकत्वहानिप्रसङ्गात्, तथाहि—विशिष्टस्याव्यवधानेन यथागृहीतार्थावसायकारणस्य ज्ञानस्य साक्षाल्लिङ्गादिव्यवधानं विना जनकोऽर्थः प्रत्यक्ष उच्यते । एवं च कृत्वा क्षणिकः शब्द इत्यादिज्ञानमप्रत्यक्षार्थमिति सिद्धम् । नचैकस्य पदार्थस्यैकत्र क्रियाक्रिये युक्ते, येन विज्ञानजनकत्वाजनकत्वाभ्यां प्रत्यक्षाप्रत्यक्षस्वभावो भवेत् । नाप्यनुभयस्वभावो युक्तः, एकस्वभावनिषेधस्यापरस्वभावविधिनान्तरीयकत्वाद्वस्तुनः । अनेकस्य तु नैकत्र क्रिया-

क्रियाविरोधः, यथा रूपरसयोश्चक्षुर्विज्ञाने, तथैकस्यानेकस्मिन्, यथा रूपस्य चक्षुः-श्रोत्रविज्ञानयोः, तदर्थमेकस्यैकत्रेति चाह । तस्माद्विविध एवार्थः । तत्र शब्दादीनां प्रामाण्यं भवत्प्रत्यक्षे वार्थे भवेत्परोक्षे वेति पक्षद्वयम् । न तावदाद्येऽर्थे, कस्मात्प्रत्यक्षेऽन्तर्गतिप्राप्तेः, शाब्दादीनामभिन्नार्थविषयत्वात् । अथ प्रत्यक्षेणाधिगते सत्युत्तरकालं तैः पुनरधिगमः क्रियते, अत आह—**वैफल्यं वा** । गृहीतग्रहणात्स्मृतिवदप्रामाण्यप्रसङ्गात् । द्वितीयेऽपि पक्षे स परोक्षोऽर्थो विषयो भवन्साक्षाद्वा स्याद्व्यवधानाद्वा पराश्रयेण, तत्र तावन्न साक्षात्तस्यापरोक्षत्वप्रसङ्गात्प्रत्यक्षार्थवत् । यस्मादत एवासौ परोक्ष उच्यते यतः साक्षान्न ज्ञानं जनयति, साक्षात्स चेज्ज्ञानं जनयेत्कथमसौ परोक्ष इति वचनीयमेतत् । पराश्रयेणापि परोक्षार्थप्रतिपत्तिः सम्बद्धाद्वा स्यादसम्बद्धाद्वा, भेदाभासा वा स्यादभेदाभासा वेति चत्वारः पक्षाः सम्भवन्ति । भेदाभासा यथा—धूमसामान्यात्तार्णपार्णादिवह्निविशेषप्रतीतिः । अभेदाभासा यथा—धूमाद्विजातीयपरावृत्तवह्निमात्राध्यवसायिनी । तत्रासम्बन्धात्प्रतिपत्तावव्यवस्था स्यात्, यतः कुतश्चित्सर्वः प्रतीयेत । अथ भेदाभासा, तदा व्याप्तिः साध्येन हेतोर्न सङ्गच्छेत, विशेषेणान्वयायोगात् । ततश्चानैकान्तिकं स्यात् । अथाभेदाभासा तदाऽनुमान एवान्तर्भाव इति प्रतिपादयन्नाह—**परोक्षविषयेत्यादि** । **अपरामृष्टतद्भेदेति** । भेदप्रतिभासशून्या विजातीयपरावृत्तार्थमात्राध्यवसायिनी । यथा धूमाद्वह्निमात्रप्रतीतिः । एवम्भूता चेत्स्पष्टमेवानुमानं, सम्बन्धदर्शनोपायत्वात्, धूमाद्वह्निप्रतीतिवत् ॥ १७०२ ॥ १७०३ ॥ १७०४ ॥ १७०५ ॥ १७०६ ॥ १७०७ ॥ १७०८ ॥

## इति प्रमाणान्तरपरीक्षा ।

"अणीयसापि नांशेन मिश्रीभूतापरात्मक"मित्येतत्समर्थनार्थं चोद्योपक्रमपूर्वकमाह—**नन्वित्यादि** ।

**नन्वनेकात्मकं वस्तु यथा मेचकरत्नवत् ।**
**प्रकृत्यैव सदादीनां को विरोधस्तथा सति ॥ १७०९ ॥**

यदुक्तम्—"अर्थक्रियासमर्थं च सदन्यदसदुच्यते । समावेशो न चैकत्र तयोर्युक्तो विरोधतः ॥" इति । तदत्राह्रीकादयश्चोदयन्ति । सर्वमेव वस्तु सामान्यविशेषात्मकत्वेनानेकात्मकं, यथा शबलाभासं रत्नं, तत्कथं सदादीनां विरोधः, येनोच्यते "समावेशो न चैकत्रे"ति । आदिशब्देन क्रियाक्रियैकत्वादयो गृह्यन्ते । यद्यपि चेदं

चोद्यं ननु तदेवेत्यादिना परिहृतं, तथापि विस्तरेण प्रतिपादनाय वादान्तरं वा दर्शयितुं पुनरुच्यते ॥ १७०९ ॥

तत्र सामान्यविशेषात्मकत्वसाधनाय यथाक्रममह्रीकः प्रयोगद्वयमाह—**भाव** इति।

**भावो भावान्तरातुल्यः खपुष्पान्न विशिष्यते।**
**अतुल्यत्वविहीनश्चेत्तेभ्यो भिन्नो न सिद्ध्यति ॥ १७१० ॥**

किंचिद्विवक्षितं वस्तु घटादि, स यदि घटादिर्भावः पटादिना भावान्तरेणातुल्यः स्यात्—ततो यदि व्यावृत्तः स्यात्, तदा खपुष्पान्न तस्य विशेषः स्यात्, सर्वथा वस्त्वन्तराद्व्यावृत्तत्वात्, नच वस्त्वन्तराद्व्यावृत्तस्यान्या गतिः सम्भवति खपुष्पतां मुक्त्वा। तस्मात्तस्य वस्तुनः खपुष्पातुल्यत्वमभ्युपगच्छता भावान्तरतुल्यत्वं वस्तुत्वं नाम सामान्यमभ्युपगन्तव्यमिति सिद्धं सामान्यात्मकत्वम्। विशेषात्मकत्वं तर्हि कथमिति चेदत्रोच्यते—**अतुल्यत्वविहीनश्चेत्तेभ्यो भिन्नो न सिद्ध्यति**—स एव घटादिर्भावो यदि पटादिना भावेन यदतुल्यत्वं तेन विहीनः स्यात्, तेन घटादिना यद्यतुल्यो न भवेदिति यावत्। तदाऽयं घटोऽयं च पट इति पटादिभ्यो घटादिर्भिन्नो न सिद्ध्येत, स्वस्वरूपवत्। भिद्यते च। तस्माद्विशेषात्मकत्वमपि सिद्धम् ॥ १७१० ॥

सर्वथाऽपीत्यादिनाऽस्यैव प्रयोगद्वयस्यार्थं विस्तरेण समर्थयते।

**सर्वथाऽपि ह्यतुल्यत्वे ह्यभिप्रेतेऽस्य वस्तुनः।**
**वस्त्वन्तरेण नियतं वस्तुत्वमवहीयते ॥ १७११ ॥**
**वस्तुनो हि निवृत्तस्य कान्या सम्भाविनी गतिः।**
**लक्ष्यते नास्तितां मुक्त्वा तारापथसरोजवत् ॥ १७१२ ॥**
**तस्मात्खपुष्पातुल्यत्वमिच्छता तस्य वस्तुनः।**
**वस्तुत्वं नाम सामान्यमेष्टव्यं तत्समानता ॥ १७१३ ॥**

अन्यथा हि न सा बुद्धिरित्यादिना सामान्यात्मकत्वसाधनायोपपत्त्यन्तरमाह।

**अन्यथा हि न सा बुद्धिर्बलिभुग्दशनादिषु।**
**वर्त्तते नियता त्वेषा भावेष्वेवेति किं कृतम् ॥ १७१४ ॥**
**सारूप्यान्नियमोऽयं चेत्सामान्यं च तदेव नः।**
**स्वभावानुगता शक्तिरनेनैवोपवर्णिता ॥ १७१५ ॥**

**अत्यन्तभिन्नता तस्माद्घटते नैव कस्यचित् ।**
**सर्वं हि वस्तुरूपेण भिद्यते न परस्परम् ॥ १७१६ ॥**

अन्यथेति । यदि च भावो भावान्तरातुल्यः स्यात्तदा किमिति घटादिष्वेव भावो भाव इत्यभिन्ना बुद्धिर्भवति नतु काकदन्तादिष्विति तत्र कारणं वक्तव्यम्, सारूप्यं कारणमिति चेत्तदेव तर्हि सामान्यमिति सिद्धं, सामान्यपर्यायत्वात्सारूप्यस्य । अनुयायिनी शक्तिरस्ति घटादिष्वेव, न काकदन्तादिषु, अतः स्वभावानुगता शक्तिः कारणमिति चेत् । साऽप्यनेनैव सारूप्येणोपवर्णिता—व्याख्याता । सारूप्यवदत्रापि समानमुत्तरमिति यावत् । तस्या एव सामान्यरूपत्वप्रसङ्गात् । तस्माद्वस्तुरूपेण सर्वं घटादि परस्परमभिन्नमिति सिद्धम् ॥ १७१४ ॥ १७१५ ॥ १७१६ ॥

भेदसमर्थनार्थमाह—अवधीकृत इत्यादि ।

**अवधीकृतवस्तुभ्यो वैरूप्यरहितं यदि ।**
**तद्वस्तु न भवेद्भिन्नं तेभ्योऽभेदस्तदात्मवत् ॥ १७१७ ॥**
**तेभ्यः स्वरूपं भिन्नं हि वैरूप्यमभिधीयते ।**
**वैरूप्यं न च भिन्नं चेत्येतदन्योन्यबाधितम् ॥ १७१८ ॥**
**तस्माद्भिन्नत्वमर्थानां कथंचिदुपगच्छता ।**
**वैरूप्यमुपगन्तव्यं विशेषात्मकताऽप्यतः ॥ १७१९ ॥**

अवधीकृतेभ्य इति । पटादिभ्योऽर्थान्तरेभ्यो यदि घटादि वैरूप्येण रहितं भवेत्तदाऽभेदात्तेभ्यः पटादिभ्यस्तद्घटादि भिन्नं न भवेदात्मस्वरूपवदभिन्नत्वप्रसङ्गात् । तथाहि—तेभ्यः पटादिभ्यो यद्विभिन्नं स्वरूपं घटादीनां तदेव खलु वैरूप्यमुच्यते नान्यत् । ततश्च सत्यपि वैरूप्ये पटादीनां नच घटादिभ्यो भेदोऽस्तीति स्ववचनव्याहतिः, भेदवैरूप्ययोः पर्यायत्वात् ॥ १७१७ ॥ १७१८ ॥ १७१९ ॥

एवं सामान्यविशेषात्मकं प्रसाध्य तयोः सामान्यविशेषयोरसाङ्कर्येण व्यवहारहेतुत्वं प्रतिपादयन्नाह—वस्त्वेकात्मकमेवेदमिति ।

**वस्त्वेकात्मकमेवेदमनेकाकारमिष्यते ।**
**ते चानुवृत्तिव्यावृत्तिबुद्धिग्राह्यतया स्थिताः ॥ १७२० ॥**
**आद्या एतेऽनुवृत्तत्वात्सामान्यमिति कीर्त्तिताः ।**
**विशेषास्त्वभिधीयन्ते व्यावृत्तत्वात्ततोऽपरे ॥ १७२१ ॥**

अयमत्र परमार्थः—मेचकरत्नवदेकमेव वस्त्वनेकाकारम्, ते चाकाराः केचिदनुवृत्तिबुद्धिग्राह्याः केचिद्व्यावृत्तिबुद्धिग्राह्याः । तत्र येऽनुवृत्तिबुद्धिग्राह्यास्तेऽनुवृत्ततया सामान्यमिति कीर्त्यन्ते, ये तु ततोऽपरे व्यावृत्तिबुद्धिग्राह्यास्ते व्यावृत्तत्वाद्विशेषा इति कल्प्यन्ते, तत्रानुवृत्तिबुद्धिर्भावो भाव इत्याद्यभेदाकारा, व्यावृत्तिबुद्धिर्घटोऽयं न पट इत्येवमादिभेदाकारा ॥ १७२० ॥ १७२१ ॥ १७२२ ॥

तदत्र प्रतिविधत्ते **परस्परस्वभावत्व** इत्यादि ।

**परस्परस्वभावत्वे स्यात्सामान्यविशेषयोः ।**
**साङ्कर्यं तत्त्वतो नेदं द्वैरूप्यमुपपद्यते ॥ १७२२ ॥**
**परस्परास्वभावत्वेऽप्यनयोरनुषज्यते ।**
**नानात्वमेवम्भावेऽपि द्वैरूप्यं नोपपद्यते ॥ १७२३ ॥**

अत्र पक्षद्वयम्, किं यदेव सामान्यं स एव विशेषः, आहोस्विदन्यत्सामान्यमन्यो विशेष इति । तत्र प्रथमे पक्षे सामान्यविशेषयोः परस्परस्वभावत्वे साङ्कर्यं स्यात् । ततश्चेदं सामान्यमयं विशेष इति विभागाभावात्परमार्थत एकस्य वस्तुनो द्वैरूप्यं नोपपद्यते । अथ माभूत्साङ्कर्यमिति द्वितीयः पक्षः समाश्रीयते । तत्र परस्परास्वभावत्वेऽप्यङ्गीक्रियमाणे नानात्वं—स्वभावभेदः सामान्यविशेषयोः संप्रसज्यते । एवं ह्यनयोरसांकर्यं भवेद्यद्यनयोर्नानात्वं स्यात्, ततश्चैवम्भावेऽपि—नानात्वेऽपि वस्तुद्वयमेव केवलं जातमिति नैकस्य वस्तुनो द्वैरूप्यं युक्तम् । अथापि स्यात्—यदि नाम सामान्यविशेषयोः परस्परं स्वभावविवेको जातस्तथापि सामान्यविशेषात्मकं वस्त्वभिन्नमेवेति । तदेतत्तु परस्परविरुद्धम् । तथाहि—एकस्माद्वस्तुनः सामान्यविशेषयोरभेदेऽङ्गीक्रियमाणे कथमनयोः परस्परं स्वभावविवेकः सिद्ध्येत्, एकस्मादभेदे तयोरप्यभेदप्रसङ्गादेकवस्तुस्वभाववत् । सामान्यविशेषयोश्च परस्परं स्वभावविवेकेऽङ्गीक्रियमाणे ताभ्यामभिन्नमेकं वस्तु न सिद्ध्येत्, ताभ्यामभिन्नत्वात्तस्याप्येकत्वेनाभिमतस्य द्वित्वप्रसङ्गात्सामान्यविशेषस्वरूपवत् । तस्मादेकमुभयात्मकमिति परस्परव्याहतमेतत् ॥ १७२२ ॥ १७२३ ॥

सत्यपीत्यादिना सुमतेर्मतमाशङ्कते ।

**सत्यप्येकस्वभावत्वे धर्मभेदोऽत्र सिद्ध्यति ।**
**भेदसंस्था(ऽ)विरोधश्च यथा कारकशक्तिषु ॥ १७२४ ॥**

**न दृष्टेऽनुपपन्नं च यत्सामान्यविशेषयोः ।**
**ऐकात्म्येऽपीक्ष्यते भेदलोकयात्रानुवर्त्तनम् ॥ १७२५ ॥**

स हि चोद्योपक्रमे परिहारं किलात्राह—तत्सामान्यविशेषयोः परस्परस्वभावविरहानभ्युपगमे सङ्कीर्णता प्राप्नोति । नैष दोषः । तयोरेकस्वभावतया सत्यामपि सङ्कीर्णतायां धर्मभेदः प्रसिद्ध्यति कारकशक्तिवत् । तथाहि—बलाहको विद्योतते, बलाहकाद्विद्योतत, इत्यादिकार्यभेदाद्भिद्यमानात्मानः कारणशक्तयः समुपलभ्यन्ते द्रव्यस्वभावाव्यतिरिक्ततया सङ्कीर्णतायामपि सत्याम् । तदनभ्युपगमे लोकशास्त्रविरोधोऽवश्यम्भावी । अपिच । न हि दृष्टेऽनुपपन्नं नाम । तथाहि—सामान्यविशेषयोरेकवस्तुस्वभावत्वेऽप्यसङ्कीर्णताया भेदेऽपि लोकयात्रानुवर्त्तनमुपलभ्यत एव । भेदेन लोकयात्रा भेदलोकयात्रा, साऽनुवर्त्त्यते येनैकात्म्येन तत्तथोक्तम् । प्रयोगः—एकस्य वस्तुनो यो भेदव्यवहारः स धर्मभेदनिबन्धनः, यथा कारकशक्तिषु, भेदव्यवहारश्चायमेकस्मिन्वस्तुनि सामान्यविशेषलक्षण इति स्वभावहेतुः ॥ १७२४ ॥ १७२५ ॥

नन्वित्यादिना प्रतिविधत्ते ।

**ननु सत्येकरूपत्वे धर्मभेदो न सिद्ध्यति ।**
**अकल्पितो विभेदो हि नानात्वमभिधीयते ॥ १७२६ ॥**

अनेन हेतोर्विरुद्धतामाह । इष्टविपरीतसाधनात् । तथाहि—पारमार्थिको धर्मभेदो वादिनः साधयितुमिष्टः, स चाकल्पितो धर्मभेदो न सिद्ध्यति, वस्तुन एकत्वाभ्युपगमात्, तस्य चैकस्य वस्तुनो भेदविरोधात्, यतो भेद इति नानात्वमभिधीयते, यच्च नाना तत्कथमेकं स्यात् ॥ १७२६ ॥

दृष्टान्ते न केवलं साध्यशून्यता, अपि तु साध्यविपर्ययेण हेतुर्व्याप्त इति दर्शयन्नाह—नानात्मत्वमित्यादि ।

**नानात्मत्वं च शक्तीनां विवक्षामात्रनिर्मितम् ।**
**एकतत्त्वात्मकत्वे हि न भेदोऽत्रापि युक्तिमान् ॥ १७२७ ॥**

स्यादेतत्—यद्यपि भेद इति नानात्वमभिधीयते, तदेव नानात्वमेकस्य वस्तुनो भाविकं कथं विरुद्धं, येन तद्विपरीतं साधयद्विरुद्धं भवेदित्याह—एकमित्यादि ।

**एकमित्युच्यते तद्धि यत्तदेवेति गीयते ।**
**नानात्मकं तु तन्नाम न तद्भवति यत्पुनः ॥ १७२८ ॥**

**तद्भावश्चाप्यतद्भावः परस्परविरोधतः ।**
**एकवस्तुनि नैवायं कथञ्चिदवकल्प्यते ॥ १७२९ ॥**

यत्तदेतदिति तत्त्वेन विधीयते तदेकमित्युच्यते, यथा चैतन्यपुरुषयोः । वस्तुनः सतस्तत्त्वनिषेधे नानात्वं, यथा भूतचैतन्ययोः । ततश्च विधिप्रतिषेधयोरेकत्रायोगात्तद्भावलक्षणात्तद्भावलक्षणयोरेकत्वनानात्वयोः परस्परविरोध इति कल्पित एवैकस्य धर्मभेदः ॥ १७२८ ॥ १७२९ ॥

कथं तद्भावातद्भावयोर्विरोध इत्याह—**विधानेत्यादि** ।

**विधानप्रतिषेधौ हि परस्परविरोधिनौ ।**
**शक्यावेकत्र नो कर्तुं केनचित्स्वस्थचेतसा ॥ १७३० ॥**

स्यादेतत्—धर्मभेदकल्पनायाः किं निबन्धनम्, अवश्यं चास्या भिन्नेन निबन्धनेन भाव्यम्, अन्यथा वस्तुसाङ्कर्यं स्यात् । ततश्च यत्तद्भिन्नं निबन्धनं स एव च पारमार्थिको धर्मभेदोऽस्माकमित्याह—**सजातीयेत्यादि** ।

**सजातीयविजातीयानेकव्यावृत्तवस्तुनः ।**
**ततस्ततः परावृत्तेर्धर्मभेदस्तु कथ्यते ॥ १७३१ ॥**
**एकस्यापि ततो युक्ता कल्पितासङ्ख्यरूपता ।**
**वास्तवं नैकभावस्य द्वैरूप्यमपि सङ्गतम् ॥ १७३२ ॥**

सजातीयविजातीयं च तदनेकं चेति कर्मधारयः, तस्माद्व्यावृत्तं च तद्वस्तु चेति विग्रहः । तस्यैकस्य वस्तुनः, ततस्ततः—सजातीयाद्विजातीयाच्च, या परावृत्तिः, सा धर्मभेदव्यवस्थाया निबन्धनम् । तस्माद्यतः कल्पिताऽप्यनेकता सम्भवति, तस्माद्वास्तवं द्वैरूप्यमेकस्य न सङ्गतम् । अपिशब्देन सामान्येन धर्मभेदपूर्वकत्वमात्रे साध्ये सिद्धसाध्यतामपि सूचयति ॥ १७३१ ॥ १७३२ ॥

स्यादेतत्—नरसिंहादिभिरनेकान्तः, तथाहि नरसिंहादय एकस्वभावा अपि भाविकेन द्वैरूप्येणाविरुद्धाः समुपलभ्यन्त इत्याह—**नरसिंहादय** इति ।

**नरसिंहादयो ये हि द्वैरूप्येणोपवर्णिताः ।**
**तेषामपि द्विरूपत्वं भाविकं नैव विद्यते ॥ १७३३ ॥**
**स ह्यनेकाणुसन्दोहस्वभावो नैकरूपवान् ।**
**यच्चित्रं न तदेकं हि नानाजातीयरत्नवत् ॥ १७३४ ॥**

**ऐक्ये स्यान्न द्विरूपत्वान्नानाकारावभासनम् ।**
**मक्षिकापदमात्रेऽपि पिहितेऽनावृतिश्च न ॥ १७३५ ॥**

आदिशब्देन मेचकरत्नादिपरिग्रहः । स हीति । नरसिंहः । सन्दोहः—समूहः। रूपमस्यास्तीति रूपवान् । एकेन रूपवानिति विग्रहः । अनेन दृष्टान्तस्य प्रतिवाद्यसिद्धतामाह । नहि बौद्धं प्रति नरसिंह एकोऽवयवी सिद्धः, अनेकाणुसमूहत्वात् । तत्रैकत्वनिराकरणे प्रमाणमाह—यच्चित्रं न तदेकं, यथा नानाजातीयरत्नसमूहः, चित्रश्च नरसिंह इति, स्वभावविरुद्धोपलम्भो व्यापकविरुद्धस्य वा । ऐक्ये सति द्विरूपत्वनिमित्तनानाकारावभासानुपपत्तिर्बाधकं प्रमाणम्, प्रतिभासभेदनिबन्धनत्वाद्भेदव्यवस्थायाः । एकदेशावरणे सर्वावरणप्रसङ्गश्च बाधकं प्रमाणम्, न ह्येकस्यावृतत्वमनावृतत्वं चेति युगपद्विरुद्धधर्मसंसर्गो युक्तः ॥ १७३३ ॥ १७३४ ॥ १७३५ ॥

यद्यनेकाणुसमूहमात्रं नरसिंहः कथं तर्हि द्विरूपानुगतैक(व)स्त्वध्यवसायी प्रत्यय इत्याह—नृसिंहेत्यादि ।

**नृसिंहभागानुस्यूतप्रत्यभिज्ञानहेतवः ।**
**ते चाणवः प्रकृत्यैव विशिष्टप्रत्ययोद्भवात् ॥ १७३६ ॥**
**एतेनैव प्रकारेण चित्ररत्नादयो गताः ।**
**नानात्मना हि वैचित्र्यमेकत्वेन विरुध्यते ॥ १७३७ ॥**

नृसिंहयोर्ये भागास्तैरनुस्यूतं निर्भासीकृतं यत्प्रत्यभिज्ञानं तत्तथोक्तम्, एवम्भूतस्य प्रत्यभिज्ञानस्य यदा प्रकृत्यैव त एवाणवो हेतवो भवन्ति, तदा किमपरमवयविना कल्पितेन । सा च तादृशी प्रकृतिः कुतस्तेषामिति चेदाह—**विशिष्टप्रत्ययोद्भवात्**—विशिष्टात्कारणादुत्पत्तेः । तत्र विशिष्टः प्रत्ययो गतिविशेषसंवर्त्तनीयं कर्म, स्वजातिसमुद्भूतः कललादिश्च । अनेनैव नरसिंहविचारेण मेचकरत्नादयो गताः—व्याख्याताः, इति न तेषां पृथक् दूषणं वक्तव्यम् ॥ १७३६ ॥ १७३७ ॥

यदुक्तम्—"सर्वं च वस्तुरूपेण भिद्यते न परस्पर"मित्यत्राह—

**अर्थक्रियासमर्थत्वं वस्तुत्वमभिधीयते ।**
**यदि तस्यानुगामित्वं सर्वं स्यात्सर्वकार्यकृत् ॥ १७३८ ॥**
**एकोऽर्थजनकस्तस्य भावः सामर्थ्ययोगतः ।**
**तच्चाविशिष्टमन्यस्मिन्नित्यनुत्पादकः कथम् ॥ १७३९ ॥**

नीलाद्येव च वस्तुत्वमनुगामि यदीष्यते ।
सितपीताद्यपि प्राप्तं नील(सं)साध्यकार्यकृत् ॥ १७४० ॥
एकमेव ततो जातं द्वितीयात्मविवर्जितम् ।
सर्वं विश्वमतो नैकमनेकाकारमस्ति नः ॥ १७४१ ॥
तदेव चेन्न वस्तुत्वं कणाशिमतसत्त्ववत् ।
नैकस्यानेकरूपत्वमेव वः स्याद्विभेदतः ॥ १७४२ ॥
विरुद्धधर्मसङ्गश्च वस्तूनां भेदलक्षणम् ।
कथञ्चिदन्यथेष्टोपि न भेदो नीलपीतयोः ॥ १७४३ ॥
अनुगाम्यन्यथाभावात्स च सामान्यभेदयोः ।
विद्यते तत्कथं नास्ति तयोर्भेदः परिस्फुटम् ॥ १७४४ ॥

अर्थक्रियाकारि यद्रूपं तद्वस्तुत्वमुच्यते नान्यत्, तच्चेत्सर्वत्रानुगामि सर्वं सर्वार्थक्रियाकारि प्राप्नोति तेनैव हि रूपेण सर्वे जनका इष्यन्ते । तस्य च सर्वत्राविशिष्टत्वादिति यत्किंचिद्यतः कुतश्चिदुत्पद्येत । किंच यदेतन्नीलपीतादि, तदेव किं वस्तुत्वमाहोस्विदन्यत् । यदि तदेव तदा तस्यानुगामित्वात्सितपीताद्यपि नीलसाध्यवस्त्ररञ्जनाद्यर्थक्रियाकारि प्राप्नोति । अपिच द्वितीयस्य स्वभावस्याभावात्सर्वं जगदेकमेव वस्तुजातमिति, एकमनेकाकारमिति प्रतिज्ञानार्थहानिः स्यात् । अथान्यदेव वस्तुत्वं नीलादिभ्यः, कणादाभिमतसत्त्ववत् । यथा कणाशिनः—कणादस्य, अभिमतं सत्ताख्यं व्यतिरिक्तं वस्तुत्वं नामेति । एवमपि सुतरामेकस्यानेकत्वमयुक्तम्, एकान्तेनैव भेदात् । किंच—यौ विरुद्धधर्मसंसर्गिणौ तौ भिन्नौ यथा शीतोष्णौ, विरुद्धधर्मसंसर्गश्च सामान्यविशेषयोर्विद्यतेऽनुगाम्यन्यथाभावादिति स्पष्ट एव तयोर्भेदः । अन्यथाभावः—अननुगामित्वम् । यदि च विरुद्धधर्मसंसर्गेऽपि भेदो नेष्यते, तदा नीलपीतयोर्योऽप्ययं कथंचिदविशेषरूपेण भेद इष्टः स न स्यात् "बुद्धिभेदान्न चैकत्वं रूपादीनां प्रसज्यत" इति वचनात् कुमारिलेन नीलादीनां भेदस्योपवर्णितत्वात् ॥ १७३८ ॥ १७३९ ॥ १७४० ॥ १७४१ ॥ १७४२ ॥ १७४३ ॥ १७४४॥

यथेत्यादिना कौमारिलमतेन पुनरप्यनैकान्तिकत्वमुद्भावयति ।

यथा कल्माषवर्णस्य यथेष्टं वर्णनिग्रहः ।
चित्रत्वाद्वस्तुनोऽप्येवं भेदाभेदावधारणे ॥ १७४५ ॥

**यदा तु शबलं वस्तु युगपत्प्रतिपद्यते ।**
**तदाऽन्यानन्यभेदादि सर्वमेव प्रलीयते ॥ १७४६ ॥**

कल्माषवर्णः—शबलो वर्णः । तस्य यथा नीलमिति वा पीतमिति वा लोहितमिति वेत्यादिना यथेष्टं वर्णनिग्रहो—रूपावधारणं, तथा चित्रस्य—अनेकरूपस्य वस्तुनः स्वपररूपाभ्यां सदसदात्मनः सामान्यविशेषरूपाभ्यां द्व्यात्मन इच्छावशाद्भेदाभेदावधारणे । यदा भेदमवधारयितुमिच्छति तदा तमवधारयति, यदा तु युगपत्सामान्यविशेषात्मकं वस्तु कु(झ?)गिति प्रतिपद्यते तदाऽन्यानन्यभेदादिचोद्यं प्रलीयते। नावतरतीत्यर्थः । प्रत्यक्षेण शबलस्य वस्तुनः प्रतीयमानत्वात् । तत्रेदमन्यानन्यादिचोद्यम्—भिन्नेभ्योऽश्वादिपिण्डेभ्योऽनन्यत्वात्सामान्यस्यापि पिण्डवत्स्वरूपभेदप्रसङ्गः, सामान्याद्वाप्यभिन्नत्वादभेदो भेदानां सामान्यस्येव प्रसज्यते । तथा भेदाभेदौ परस्परं सामान्यविशेषयोः कथं विरुद्धौ स्याताम् । आदिशब्देनैकत्वानेकत्वे परस्परविरुद्धे, तथा तदेव सामान्यं स एव विशेष, इत्येवमादि ग्रहीतव्यम् ॥ १७४५ ॥ ॥ १७४६ ॥

यद्येवं सर्वत्रैव शबलस्य प्रतीतिः स्यान्नतु क्रमयौगपद्याभ्यामित्याशङ्क्याह—**वस्तुन** इत्यादि ।

**वस्तुनोऽनेकरूपस्य रूपमिष्टं विवक्षया ।**
**युगपत्क्रमवृत्तिभ्यां नान्योस्ति वचसां विधिः ॥ १७४७ ॥**

युगपत् क्रमेण वा यदस्य सामान्यविशेषादिरूपं व्यवस्थाप्यते, तद्विवक्षावशात् । यदा यौगपद्येन सदसद्रूपे विवक्षति सामान्यविशेषरूपं वा तदा तस्य रूपं व्यवस्थाप्यते । अथ क्रमेण विवक्षति सद्रूपमसद्रूपं सामान्यविशेषं वा तदाऽस्य तद्व्यवस्थाप्यते । सर्वमेव हि तस्य स्वरूपं क्रमाक्रमाभ्यां व्यपदिश्यते, विचित्ररत्नकोश इव मरकतपद्मरागादिरिति । अथ क्रमाक्रमौ मुक्त्वाऽन्येन प्रकारेण कस्मान्न निर्दिश्यत इत्याह—**नान्योऽस्ति वचसां विधिरिति** । युगपत्क्रमवृत्तिभ्यामित्यपेक्षणीयम् । **विधिः**—प्रकारः ॥ १७४७ ॥

**नैवमि**त्यादिना प्रतिविधत्ते ।

**नैवं चित्रत्वमेकत्वं प्रतिषिद्धं ह्यनन्तरम् ।**
**अनेकरूपं वैचित्र्यमेकत्वेनासहस्थितम् ॥ १७४८ ॥**

**ते हि यावन्त आकारास्तस्मिन्वस्तुनि भाविकाः।**
**तावन्त्येवा(थ) जातानि वस्तुनीत्येकनास्ति(ता स्थि?)ता१७४९॥**

एकं चित्रमिति परस्परविरुद्धमेतदिति 'यच्चित्रं न तदेक'मित्यादिना प्रतिपादितम्। यतो विचित्रमित्यनेकत्वमुच्यते। एकत्वानेकत्वयोश्च परस्परपरिहारस्थितिलक्षणो विरोधः। तस्मान्नैकस्मिन्भाविका बह्व आकाराः सम्भवन्ति। अथापि स्युस्तथाप्येकस्यानेकत्वं न प्रतिपादितमेव तथाहि तावन्त्येवापराणि वस्तूनि जातानीति। यदि परं भाविकत्वेन प्रतिपादितं स्यात्। न त्वेकस्यानेकत्वं, परस्परविरोधात् ॥ १७४८ ॥ १७४९ ॥

यदुक्तं—"वस्तुनो हि निवृत्तस्य काऽन्या सम्भाविनी गति"रित्यत्राह—**एकस्मादि**त्यादि।

**एकस्माद्वस्तुनोऽन्यत्वे तादात्म्यविकलं भवेत्।**
**नाकाशपुष्पसङ्काशं तद्ध्यप्यर्थक्रियाक्षमम् ॥ १७५० ॥**

यदि हि वस्तुमात्रात्परावृत्तिर्हेतुत्वेन क्रियते खपुष्पाविशेषत्वे साध्ये तदा हेतुरसिद्धः, नहि घटस्य वस्तुमात्राद्व्यावृत्तिः सिद्धा, किं तर्हि?, स्वस्वभावं मुक्त्वाऽन्यस्माद्वस्तुविशेषात। अथ वस्तुविशेषाद्व्यावृत्तिर्हेतुत्वेनोपादीयते तदाऽनैकान्तिको हेतुः। तथाहि—एकस्माद्घटादेर्वस्तुनो व्यावृत्तं घटादिकं वस्तु परतादात्म्यविकलं सिद्ध्येन्नतु सर्वथा निःस्वभावं तस्याप्यर्थक्रियाकारित्वात् ॥ १७५० ॥

शक्तमित्यादिनैतदेवानैकान्तिकत्वं समर्थयते।

**शक्तं रूपं न चैकस्य वस्तुष्वन्येषु वर्त्तते।**
**कार्योपलम्भनिर्भासभेदादेरिति वर्णितम् ॥ १७५१ ॥**
**अनद्वस्त्वात्मकत्वं तु तदश्लेषेण युज्यते।**
**नाविशेषमवस्तुत्वं वस्तुलक्षणभावतः ॥ १७५२ ॥**

यदि ह्यर्थक्रियासामर्थ्यलक्षणं वस्तुत्वं नामानुयायि स्यात्ततो व्यावृत्तस्य निःस्वभावता स्यादर्थक्रियासामर्थ्यलक्षणत्वाद्वस्तुनः, यावता शक्तं रूपं यदेकस्य नीलादेस्तदन्येषु सितादिषु न वर्त्तत इति पूर्वमुक्तम्, "नीलाद्येव च वस्तुत्वमनुगामि यदीष्यत" इत्यादिना। कस्मात्?। कार्यभेदादुपलम्भनिर्भासभेदाच्च। उपलम्भो ज्ञानं तस्य निर्भास आकारः। आदिशब्देनोत्पादस्थितिनिरोधादयो गृह्यन्ते। तस्मात्तदश्ले-

षेण हेतुनाऽतद्वस्त्वात्मकमित्येव साधयितुं युज्यते, नाविशेषं—निर्विशेषणम्, अवस्तुत्वं साधयितुं युक्तम् । कुतः ? । तत्राप्यर्थक्रियाकारित्वस्य वस्तुलक्षणस्य भावात् ॥ १७५१ ॥ १७५२ ॥

ननु चात्यन्तभेदे सति कथमनुगामी वस्तुवस्त्विति प्रत्ययो भवेत् । कथं च खपुष्पाद्भेदो वस्तुनः सिद्ध्यति । यदि सादृश्यं न भवेदित्याह—तदपीत्यादि ।

**तदप्यर्थक्रियायोग्यमिति वस्त्विति कल्पने ।**
**असमर्थपरावृत्तिः सादृश्यं तद्विकल्पितम् ॥ १७५३ ॥**
**ततश्चात्यन्तभेदेऽपि तुल्यताऽस्ति विकल्पिता ।**
**भावो भावान्तरैस्तुल्यः खपुष्पात्तद्विशिष्यते ॥ १७५४ ॥**

**असमर्थपरावृत्तिरिति** । असमर्थाः—वन्ध्यासुतादयः, तेभ्यः परावृत्तिरतदात्मता । यतश्च सादृश्यं कल्पितमस्ति, तस्माद्यदुक्तं "भावो भावान्तरातुल्य" इति तदसिद्धम् ॥ १७५३ ॥ १७५४ ॥

**नन्वित्यादिना** सुमतेश्चोद्यमाशङ्कते ।

**ननु येनात्मना वस्तु समानापरवस्तुनः ।**
**व्यावृत्तं तत्सजातीयैस्तेनैव सदृशं यदि ॥ १७५५ ॥**
**विज्ञायेत विजातीयैरपि तुल्यतया तदा ।**
**तस्यात्मनोऽविशिष्टत्वान्न च तज्ज्ञायते तथा ॥ १७५६ ॥**
**सजातीयासमानोऽपि तस्माद्येन भवत्ययम् ।**
**आत्मना तत्समानश्च तयोर्भेदः स्वभावयोः ॥ १७५७ ॥**

स आह—येनात्मना सजातीयविजातीयाभ्यां व्यावृत्तं वस्तु तेनैवात्मना तद्वस्तु यदि सजातीयैः सदृशं भवेत्तदा विजातीयैरपि तुल्यतया विज्ञायेत, तस्यात्मनोऽविशिष्टत्वात् । नच ज्ञायते । तस्माद्येन स्वभावेन सजातीयासमानोपि भवति, येन च स्वभावेन तत्सदृशो भवति तयोः स्वभावयोर्भेदोऽभिवाञ्छितव्यः । ननु स यदि सजातीयः कथं तेनासमानो भवति, अथ तेनासमानो भवति कथं सजातीय, इति परस्परव्याहतमेतत् । नैष दोषः । यतः परेण सर्वमेव वस्तु सामान्यविशेषात्मकमिष्टम्, तस्माद्वस्तुत्वादिना सामान्येन सर्वमेव सजातीयमित्युच्यते, विशेषरूपेण तदेव विजातीयमिष्टमिति, तदपेक्षया पुनरसमान इत्यभिधीयत इत्यदोषः । **समाना-**

परवस्तुन इति। समानं च तदपरं चेति समानापरवस्तु। अपरमित्यसमानं शेषं सुगमत्वान्न विभक्तम्॥ १७५५॥ १७५६॥ १७५७॥

तेनैवेत्यादिना प्रतिविधत्ते—

**तेनैवासौ स्वभावेन समान इति गम्यते।**
**एकप्रत्यवमर्शस्य हेतुत्वेनान्यभेदतः॥ १७५८॥**

तेनैव स्वभावेन समान इत्युच्यते। एकप्रत्यवमर्शप्रत्ययकारणत्वात्। एतदुक्तं भवति—ये ह्येकप्रत्यवमर्शं प्रति कारणभावं न प्रतिपद्यन्ते त एवासमाना इति व्यवह्रियन्ते, ये तु प्रतिपद्यन्ते ते समाना इति॥ १७५८॥

अथ तस्यैवैकप्रत्यवमर्शस्य हेतवः किमिति सर्वे न भवन्ति, भेदस्याविशिष्टत्वादित्याशङ्क्याह—एकेत्यादि।

**एकप्रत्यवमर्शस्य हेतवः केचिदेव हि।**
**समर्थरूपनियमाद्भेदेऽप्यक्षामृतादिवत्॥ १७५९॥**

नहि स्वभावाः पर्यनुयोगमर्हन्ति कस्मादग्निर्दहत्युष्णो वा नोदकमिति। एवं तु युक्तं वक्तुं कुतोऽस्यायं स्वभाव इति, निर्हेतुकत्वे त्वनपेक्षस्य नियमायोगेनातिप्रसङ्गात्। तस्मात्स्वहेतोरिति वक्तव्यं, तस्यापि कुत इत्यनादिहेतुपरम्परा। अक्षमिन्द्रियम्। अमृतं गुडूची। आदिशब्दः प्रत्येकमभिसम्बध्यते। यथा गुडूच्यादीनामेव ज्वरादिशमने शक्तिर्नान्येषाम्, इन्द्रियविषयालोकमनस्कारादीनां च विशिष्टज्ञानोत्पादने, तथैकप्रत्यवमर्शेऽपि केषांचिदेव शक्तिनियम इति। यद्वाऽक्षशब्देन विभीतकस्याभिधानम्, आदिशब्दः समुदायेन सम्बध्यते॥ १७५९॥

ननु नीलादीत्यादिना दृष्टान्तासिद्धिमाशङ्कते।

**ननु नीलादिविज्ञानजननं लोचनं कथम्।**
**व्यावृत्तरूपभागेव नीलादिभ्यो यदीष्यते॥ १७६०॥**
**नीलादिज्ञानजनकान्नीलादेर्भेदवद्यथा।**
**श्रोत्रं न तस्य जनकं तथा चक्षुरपीष्यताम्॥ १७६१॥**
**जनकाद्धि परावृत्तः कोऽपरो जनको भवेत्।**
**भावस्तस्मात्पदार्थानामन्वयोऽपीति निश्चयः॥ १७६२॥**

यदि नीलादिभ्यो व्यावृत्तिरूपभागेव लोचनमिष्यते, नानुवृत्तिभागित्यवधारणे-

नाह । तदा नीलादिविज्ञानजनकं लोचनं न प्राप्नोति, तज्जनकस्वभावात्परावृत्तत्वात् । यो हि यज्जनकस्वभावात्परावृत्तः स तज्जनको न भवति, यथा नीलादिज्ञानजनकान्नीलादेर्व्यावृत्तं श्रोत्रं न तस्य नीलादिज्ञानस्य जनकम् । नीलादिज्ञानजनकाच्च नीलादेर्व्यावृत्तं चक्षुरिति व्यापकविरुद्धोपलब्धिप्रसङ्गः । नचैवं भवति । तस्माद्विपर्ययः । यो हि यज्जनकः स तज्जनकस्वभावापरावृत्तः । यथा नीलज्ञानजनकं नीलं स्वसात्स्वभावात् । नीलज्ञानजनकं च चक्षुरिति स्वभावहेतुः । एवं नीलादयोऽपि पक्षत्वेन वाच्याः । तस्मादस्ति भावानामन्वय इति प्रसङ्गविपर्ययेण दृष्टान्तासिद्धिमाह ॥ १७६० ॥ १७६१ ॥ १७६२ ॥

अथापि स्यात्—ततो व्यावृत्तं च भविष्यति तज्जनकं चेत्यनैकान्तिकं प्रसङ्गसाधनमित्याह—अन्यथेत्यादि ।

**अन्यथा निर्विशिष्टत्वाद्भेदेन श्रवणाद्यपि ।**
**जनकं तस्य किं नेष्टं चक्षू रूपादिभेदवत् ॥ १७६३ ॥**

श्रोत्रादीनामपि नीलादिज्ञानजनकत्वप्रसङ्गो विपर्यये बाधकं प्रमाणं भेदेनाविशिष्टत्वात् । नीलादिभ्यो यो भेदश्चक्षुषस्तेन भेदेन श्रोत्रादीनां चक्षुरादिना तुल्यत्वात् । यथा चक्षुर्नीलादेर्व्यावृत्तं तथा श्रोत्रमपीति यावत् ॥ १७६३ ॥

व्यावृत्तिरित्यादिना प्रतिविधत्ते ।

**व्यावृत्तिश्चक्षुरादीनां न सिद्धा जनकादियम् ।**
**अविशेषेण यत्तेषामाधा(त्मा ?)पि जनको मतः ॥ १७६४॥**
**स्वभावान्नच भावानां व्यावृत्तिरुपपद्यते ।**
**स्वभावाद्धि परावृत्तौ नैःस्वाभाव्यं प्रसज्यते ॥ १७६५ ॥**
**अन्यस्माज्जनकात्तेषां व्यावृत्तिरुपवर्ण्यते ।**
**अतज्जनकरूपत्वं वाच्यं तच्चेष्टमेव नः ॥ १७६६ ॥**
**न ह्यप्युत्पादकं तस्य स्वरूपेणैव वर्ण्यते ।**
**नियतास्तत्र ते सर्वे स्वहेतुभ्यः समुत्थिताः ॥ १७६७ ॥**
**एकात्मानुगतत्वात्तु यद्येकजनका इमे ।**
**आत्मैकत्रापि सोस्तीति किमन्यैः सहकारिभिः ॥ १७६८॥**
**विशेषान्तरवैकल्यादेके न जनकं यदि ।**
**ननु भेदादशक्तास्तेऽभेदे वा विकलाः कथम् ॥ १७६९ ॥**

यथा त्वयं विशेषेपि न सर्वं सर्वकारणम्।
नानात्वस्याविशेषेपि तथैव नियमो भवेत्॥ १७७०॥
भेदेऽपि जनकः कश्चित्स्वभावनियमाद्भवेत्।
अन्वये त्वेक एकस्य जनकोऽजनकश्च किम्॥ १७७१॥
भेदोऽप्यत्रास्ति चेदस्तु स किं तस्यैव वस्तुनः।
नहि तस्यान्वयादन्यो ननु भेदो न कारकः॥ १७७२॥
स एव भाविकश्चार्थो यो नामार्थक्रियाक्षमः।
स च नान्वेति योऽन्वेति कार्यं तस्मान्न जायते॥ १७७३॥
यं चात्मानमभिप्रेत्य पुमानेष प्रवर्तते।
विद्येते तद्गतावेव भेदाभेदावकल्पितौ॥ १७७४॥
अन्यथा ह्यात्मना भेदो व्यावृत्त्या च समानता।
अस्त्येव वस्तु नान्वेति प्रवृत्त्यादिप्रसङ्गतः॥ १७७५॥

अविशेषेण तज्जनकस्वभावात्परावृत्तिमात्रं यदि हेतुत्वेन वर्ण्यते तदा न सिद्धो हेतुः। नहि चक्षुरादीनां नीलादिज्ञानजनकात्स्वभावादविशेषेण व्यावृत्तिः सिद्धा। यतस्तेषामपि चक्षुरादीनां यः स्वभावः सोऽपि जनक इष्टः। को ह्यत्र नियमस्तेनैव तत्कार्यं कर्त्तव्यं नान्येनेति, अन्योऽपि कुर्यात्सोपीति न विरोधं पश्यामः। यदि तु पुनरविशेषेण व्यावृत्तिः स्यात्तदा स्वस्वभावादपि स्यात्ततश्च निःस्वभावताप्रसङ्गः स्यात्। तस्मान्न स्वभावाद्भावानां व्यावृत्तिर्युक्ता। अथ स्वस्वभावं मुक्त्वाऽन्यस्माज्जनकाद्वा व्यावृत्तिश्चक्षुरादीनां सा हेतुत्वेनाभिमता, तदाऽनैकान्तिकता हेतोः, तदा ह्यन्यस्मात्स्वभावाद्व्यावृत्तस्तत्स्वभावो माभूत्, न तु तदजनकः। यतः सर्व एव स्वरूपेणैव जनको न पररूपेण, येन चात्मीयेन स्वभावेनासौ जनक इष्यते तस्माच्च न व्यावृत्त इति कथमजनकः स्यादित्यनैकान्तिकता हेतोः। अथातत्स्वभावता पर्युदासवृत्त्या साध्यते, तदा सिद्धसाध्यता, परस्परं भावानां स्वभावविवेकस्येष्टत्वात्। अतज्जनकरूपत्वमिति। स चासौ जनकश्च तज्जनको रूपादिः, तस्य रूपं स्वभावः, स यस्य नास्ति सोऽतज्जनकरूपस्तद्भावस्तत्वम्। तस्य—अन्यस्य यज्जनकरूपं तेन रहितत्वमिति यावत्। अथवा—तच्च तज्जनकं चेति तज्जनकं, तज्जनकं च तद्रूपं चेति कर्मधारयं कृत्वा नञा बहुव्रीहिः कार्यः। त्रिपदो वा बहुव्रीहिः। अथै-

कस्मिन्कार्ये कर्त्तव्ये स एव तेषां चक्षुरादीनां परस्परासङ्कीर्णो जनकः स्वभावः कुत आयातो येन त एव तु कार्ये नियताः स्युरित्याशङ्क्याह—**नियता** इति । यदुक्तं भेदेन निर्विशिष्टत्वाच्छ्रवणाद्यपि जनकं तस्य किं नेष्टमिति, तदनेन परिहृतम् । तस्मात्स्वभावनियमाद्भेदेऽपि कश्चिज्जनको भवेन्नापर इति न किंचिद्विरुद्धम् । यदि तु पुनरेकस्वभावानुगतत्वेन भिन्ना अपि चक्षुरादयो जनकाः स्युस्तदैकस्तेषां स्वभावो जनक एकस्मिन्नपि कारणेऽस्तीति तत एवैकस्मात्कार्योत्पत्तिः स्यात् । ततश्च शेषसहकारिकारणवैयर्थ्यप्रसङ्गः स्यात् । अथ विशेषान्तरवैकल्यान्नैकस्मात्कार्योत्पत्तिरिति चेत्, ये ते विशेषा विकला इष्यन्ते तेषामशक्तत्वात्, कस्मात्?, भेदात्—समर्थाभिमतादनुयायिनः स्वभावादन्यत्वादिति यावत्, नचाशक्तस्य वैकल्ये कार्यानुत्पत्तिर्युक्ता, कस्यचिदनुत्पत्तिप्रसङ्गात् । अथापि स्यात्—नह्यस्माभिः सामान्यविशेषाणां परस्परमत्यन्तभेद इष्टः, ततश्च भेदादित्यसिद्धो हेतुरित्याह—**अभेदे वा विकलाः कथमिति** । सामान्याद्विशेषाणामभेदेऽङ्गीक्रियमाणे न तर्हि वक्तव्यं विशेषान्तरवैकल्यादेकं न जनकमिति । अतस्तस्मिन्सामान्ये तिष्ठत्यविकले सति तदव्यतिरेकिणां विशेषाणामपि वैकल्यासिद्धिः । नहि यो यदेकयोगक्षेमो न भवति स तत्स्वभावो युक्तः । अपिच समान एवायं प्रसङ्गो भवतामपि, अन्वयस्याविशिष्टत्वात्किमिति सर्वः सर्वं न जनयेत् । यथा भवतामन्वयस्याविशेषेऽपि सर्वं सर्वस्य जनकं न भवति तथाऽस्माकमपीति यत्किञ्चिदेतत् । किंच—भेदाविशेषेऽपि कश्चिज्जनयति नापर इति जनकस्वभावप्रतिनियमादेवं भवेत्, एकस्य यः स्वभावो नासौ परस्येति कृत्वा, नचैवं सति किंचिद्विरुध्यते । यदा त्वनुगतस्यैकात्मनो जनकत्वं तदैकस्यैकस्मिन्कार्ये जनकत्वमजनकत्वं चेति कथं विधिप्रतिषेधौ युक्तावेकाधारौ । भिन्नाधिकरणौ तु न विरुद्धावित्यत **एकस्येत्याह** । अथापि स्यान्नास्माभिरेकान्तेनान्वय एवेष्टो येनैकस्यैकत्र जनकत्वाजनकत्वविरोधः स्यात् । किं तर्हि ? । भेदोऽप्यत्रास्ति । तेनाजनकत्वं न विरुद्धमिति । अस्तु भेदः, स किं जनकस्वभावाद्भेदस्तस्यैवानुगतस्य जनकात्मनोऽभीष्टः, आहोस्विदन्यस्येति वक्तव्यम् । न तावत्तस्यैव, नहि स्वभावाद्भावस्य परावृत्तिर्युक्ता, निःस्वभावत्वप्रसङ्गात् । नाप्यन्यस्य, भेदे तस्य जनकस्वभावस्याविकलस्याजनकत्वं युक्तमतिप्रसङ्गात् । भवतु वा तस्यैव स्वस्वभावाद्भेदस्तथाऽप्येकस्य जनकत्वाजनकत्वविरोधो न परिहृत एव । तथाहि—भेदादपि तस्यैकस्याकारको भवेत् । ननु नान्योऽन्वयात्, किं तर्हि ?, स एवान्वयस्ततश्च स एवैकस्य

जनकत्वाजनकत्वविरोधस्तदवस्थ एव। अन्वेतीत्यन्वयो जनक एव स्वभाव उच्यते। नन्वित्यभिमुखीकरणम्। अपि च—अन्वयव्यतिरेकाभ्यां विशेषेभ्य एव कार्यसिद्धेस्त एव स्वलक्षणयुक्ताः, न सामान्यार्थम्, क्रियाकारिलक्षणत्वाद्वस्तुत्वस्य, ततश्च किं सामान्यं स्वलक्षणाद्भिन्नमाहोस्विदभिन्नमिति किमर्थक्रियार्थिनस्तत्र भेदाभेदचिन्तया, यस्माद्यमेव स्वभावमर्थक्रियायोग्यमभिसन्धायैष पुमानर्थक्रियार्थी प्रवर्त्तते, तद्गतावेव भेदाभेदौ चिन्त्येतेऽर्थक्रियार्थिभिर्न व्यसनितया। अन्यथा हि यद्यकल्पितौ भेदाभेदौ नेष्येते, तदा तस्यार्थक्रियायोग्यस्यात्मना—स्वेन रूपेण भेदः पारमार्थिकोऽस्त्येव, व्यावृत्त्या च विकल्पबुद्धिप्रतिभासाऽनुरोधिन्या कृतव्यवस्था सामान्यताऽध्यवसिततद्भावाऽस्त्येवेत्यविवाद एव। इयतैवार्थक्रियार्थिनो भेदसामान्यचिन्ता समाप्तेति किमनर्थक्रियाकारिणः सामान्यस्य भेदाभेदचिन्तया। अथापि स्याद्वस्त्वेव सामान्यमस्तु, किं परिकल्पितया व्यावृत्त्येत्याह—वस्त्वित्यादि। यदि पटादिरूपं घटादिरन्वियात्, तदा मधूदकाद्याहरणार्थी पटादावपि प्रवर्त्तेतेति प्रवृत्त्यादेः प्रसङ्गः स्यात्। आदिशब्दात्तुल्योत्पत्तिनिरोधादिप्रसङ्गः॥१७६४॥१७६५॥ ॥ १७६६ ॥ १७६७ ॥ १७६८ ॥ १७६९ ॥ १७७० ॥ १७७१ ॥ १७७२॥ ॥ १७७३ ॥ १७७४ ॥ १७७५ ॥

अथ सौगतैरिव परैरपीदमिष्यते—तस्माद्यतो यतोऽर्थो नाव्यावृत्तस्तन्निबन्धना जातिभेदाः प्रकल्पन्ते तद्विशेषावगाहिन इति, अत्राह—कल्पनारचितस्येत्यादि।

**कल्पनारचितस्यैव वैचित्र्यस्योपवर्णने।**
**को नामातिशयः प्रोक्तो विप्रनिर्ग्रन्थकापिलैः॥ १७७६ ॥**

वैचित्र्यस्येति। भेदस्य॥ १७७६ ॥

वर्द्धमानकभङ्गेनेत्यादिना कुमारिलमतमाशङ्कते।

**वर्द्धमानकभङ्गेन रुचकः क्रियते यदा।**
**तदा पूर्वार्थिनः शोकः प्रीतिश्चाप्युत्तरार्थिनः॥ १७७७ ॥**
**हेमार्थिनस्तु माध्यस्थ्यं तस्माद्वस्तु त्रयात्मकम्।**
**नोत्पादस्थितिभङ्गानामभावे स्यान्मतित्रयम्॥ १७७८ ॥**

स ह्याह—उत्पादस्थितिनाशस्वभावत्वात्सर्वमेव वस्तु त्र्यात्मकम्। एकस्मादपि प्रीत्यादिकार्यत्रयदर्शनात्, तथाहि—यदा वर्द्धमानकं भङ्क्त्वा रुचकः क्रियते, तदा

वर्द्धमानकार्थिनः शोक उत्पद्यते, रुचकार्थिनः प्रीतिः, सुवर्णार्थिनस्तु माध्यस्थ्यम् । यदि च वस्त्वेकरूपमेव स्यात्, तदैकाकारैव बुद्धिः स्यात्, न त्रिप्रकारा । वर्द्धमानरुचकौ—भाजनविशेषौ ॥ १७७७ ॥ १७७८ ॥

स्यादेतत्—यदि नाम त्र्यात्मकं वस्त्विति सिद्ध्यति, तथाऽपि नाशादिरूपेण त्र्यात्मकमित्येतत्कुत इत्याह—**न नाशेन विनेत्यादि** ।

**न नाशेन विना शोको नोत्पादेन विना सुखम् ।**
**स्थित्या विना न माध्यस्थ्यं तेन सामान्यनित्यता॥१७७९॥**

**तेन सामान्यनित्यतेति** । यस्मात् स्थित्यादिना न माध्यस्थ्यं, तेन—माध्यस्थ्यस्य स्थित्यविनाभावित्वेन, सामान्यस्यापि—सवर्णत्वस्य, नित्यता प्रतीयते१७७९

**इत्येत**दित्यादिना प्रतिविधत्ते ।

**इत्येतदपि नो युक्तमसामान्याश्रयत्वतः ।**
**उत्पादस्थितिभङ्गानामेकार्थाश्रयता न हि ॥ १७८० ॥**
**समानकालताप्राप्तेः परस्परविरोधिनाम् ।**
**इदं तु क्षणभङ्गित्वे सति सर्वमनाकुलम् ॥ १७८१ ॥**
**वर्द्धमानकभावस्य कलधौतात्मनः कथम् ।**
**अनन्वये विनाशे हि कस्यचिच्छोकसम्भवः ॥ १७८२ ॥**
**सर्वथा पूर्वरूपस्य रुचकस्य तदात्मनः ।**
**जन्मन्युत्पद्यते प्रीतिर्नावस्थानं तु कस्यचित् ॥ १७८३ ॥**

असामान्याश्रयत्वत इत्येतद्ग्रहणकवाक्यम् । अस्य व्याख्यानमुत्पादस्थितीत्यादि । यदि हि वस्त्वेकमप्युत्पादादिस्वभावेन त्र्यात्मकं स्यात्तदा युगपत्परस्परविरोधिन उत्पादस्थितिविनाशाः प्राप्नुवन्ति, नच विरोधिनामेकत्र युगपद्भावो युक्तः, अन्यथा हि विरोधित्वमेव न स्यात् । कथं तर्हि मतित्रयस्योत्पत्तिर्युक्तेति चेत्, यथा युक्ता तथा श्रूयतामिति दर्शयन्नाह—**इदं त्विति** । वर्द्धमानात्मको भावो वर्द्धमानकभावः, स किंविशिष्टः, कलधौतात्मा—कलधौतं सुवर्णं स एवात्मा स्वभावो यस्येति विग्रहः, तस्य स्वतः—स्वरसेन, विनाशे सति कस्यचित्तदर्थिनः शोक उत्पद्यते । अपूर्वस्य तु रुचकाख्यभावस्य तदात्मनो—हेमात्मनः, जन्मनि—उत्पादे सति, कस्यचिद्रुचकाध्यवसितस्य प्रीतिरुत्पद्यते । नतु कस्यचित्सुवर्णात्मनोऽवस्थानमस्ति निरन्वयत्वादुत्पादविनाशयोः ॥ १७८० ॥ १७८१ ॥ १७८२ ॥ १७८३ ॥

यद्येवं कथं तर्हि माध्यस्थ्यबुद्धिरित्याह—शातकुम्भेत्यादि।

**शातकुम्भात्मकौ भावौ यदा पश्यति मूढधीः।**
**समानापरभावेन स्थिरत्वं मन्यते तदा॥ १७८४॥**
**हेम्नोऽवस्थितरूपत्वे तद्रूपं रुचकाद्यपि।**
**पूर्वोत्तराद्यवस्थासु दृश्येतानेकताऽन्यथा॥ १७८५॥**

## इति स्याद्वादपरीक्षा।

शातकुम्भात्मकौ सुवर्णस्वभावौ वर्द्धमानरुचकाख्यौ भावौ क्रमेण यदा पश्यति मूढमतिः, पश्यन्नपि स्वभावविवेकं सदृशापरोत्पत्तिविप्रलब्धो विवेचयितुमशक्तत्वादतएव समानापरभावेन भ्रान्तिनिमित्तेन विप्रलब्धोऽवस्थाद्वयेऽपि हेम्नः स्थिरत्वं मन्यते। **समानापरभावेनेति**। अहेमव्यावृत्तिमात्रसाधर्म्येण समानस्यापरस्य भाव उत्पादः समानापरभावः। कथं पुनरवसीयते समानापरभावेन विप्रलब्धः स्थिरत्वं मन्यते, न तु पुनर्वस्तुन एव तथाभावादित्याह—**हेम्न** इत्यादि। यदि हेम्नः स्थिरत्वं स्यात्तदा तदव्यतिरिक्तं रुचकाद्यपि वर्द्धमानावस्थासु दृश्येत, उपलब्धिलक्षणप्राप्तत्वात्। अन्यथा—यदि रुचकस्य वर्द्धमानावस्थायां न दृष्टिर्वर्द्धमानस्य रुचकावस्थायामुपलब्धिलक्षणप्राप्तस्य, तदानीं तयोः परस्परतो भेदः, ततश्च ताभ्यामव्यतिरेकाच्च तत्स्वभाववद्धेम्नोऽपि भेदः सिद्धः स्यादित्यालोच्याह—**अनेकताऽन्यथेति**। यच्चावधीकृतवस्तुभ्य इत्यादि भेदसाधनमुक्तं तत्र सिद्धसाध्यतैवेति दूषणमुच्यते॥ १७८४॥ १७८५॥

## इति स्याद्वादपरीक्षा।

असङ्क्रान्तिमित्यस्य समर्थनार्थमाह—हेमेत्यादि।

**हेम्नोऽनुगमसाम्येन स्थिरत्वं मन्यते तदा।**
**अवस्थाभेदवान्भावः कैश्चिद्बौद्धैरपीष्यते॥ १७८६॥**

नाऽवस्थानं तु कस्यचिदित्यत्रेदं चोद्यम्। ननु कथमिदमुच्यते नावस्थानं तु कस्यचिदिति, यावता कैश्चिद्धर्मत्रातप्रभृतिभिर्बौद्धैरपि कालत्रयावस्थितो भाव इष्टोऽवस्थाभेदात्, हेमानुगमसाधर्म्येण॥ १७८६॥

एतदेव द्वितीयेन श्लोकेन दर्शयति।

**अवस्थाभेदभावेऽपि यथा वर्ण्यं जहाति न।**
**हेमाद्यवसु तथा भावो द्रव्यत्वं न त्यजत्ययम्॥ १७८७॥**

अतीताजातयोर्ज्ञानमन्यथाऽविषयं भवेत् ।
द्वयाश्रयं च विज्ञानं तायिना कथितं कथम् ॥ १७८८ ॥
कर्मातीतं च निःसत्त्वं कथं फलदमिष्यते ।
अतीतानागते ज्ञानं विभक्तं योगिनां च किम् ॥ १७८९ ॥
न द्रव्यापोहविषया अतीतानागतास्ततः ।
अध्वसङ्ग्रहरूपाद्विभावादेर्वर्त्तमानवत् ॥ १७९० ॥

तत्र भावान्यथावादी भदन्तधर्मत्रातः, स किलाह—धर्मस्याध्वसु वर्त्तमानस्य भावान्यथात्वमेव केवलं नतु द्रव्यस्येति । यथा सुवर्णद्रव्यस्य कटककेयूरकुण्डलाद्यभिधाननिमित्तस्य गुणस्यान्यथात्वं न सुवर्णस्य, तथा धर्मस्यानागतादिभावादन्यथात्वम् । तथा हि—अनागतभावपरित्यागेन वर्त्तमानभावं प्रतिपद्यते धर्म्मो, वर्त्तमानभावपरित्यागेन चातीतभावम्, नतु द्रव्यान्यथात्वं, सर्वत्र द्रव्यस्याव्यभिचारात् । अन्यथाऽन्य एवानागतेऽन्यो वर्त्तमानोऽन्योऽतीत इति प्रसज्यते । कः पुनर्भावस्तेनेष्टः ? । गुणविशेषः, यतोऽतीताद्यभिधानज्ञानप्रवृत्तिः । लक्षणान्यथावादी भदन्तघोषकः । स किलाह । धर्मोऽध्वसु वर्त्तमानोऽतीतोऽतीतलक्षणयुक्तोऽनागतप्रत्युत्पन्नाभ्यां लक्षणाभ्यामवियुक्तः, यथा पुरुष एकस्यां स्त्रियां रक्तः शेषास्वविरक्त एवमनागतप्रत्युत्पन्नावपि वाच्ये । अस्य ह्यतीतादिलक्षणवृत्तिलाभापेक्षो व्यवहार इति पूर्वकाङ्क्षेदः । अवस्थान्यथावादी भदन्तवसुमित्रः । स किलाह—धर्मोऽध्वसु वर्त्तमानोऽवस्थामवस्थां प्राप्यान्योऽन्यो निर्दिश्यतेऽवस्थान्तरतो, न द्रव्यतः, द्रव्यस्य त्रिष्वपि कालेष्वभिन्नत्वात् । यथा मृद्गुडिका एकाङ्के प्रक्षिप्ता एकमित्युच्यते, शताङ्के शतं, सहस्राङ्के सहस्रं, तथा कारित्रेऽवस्थितो भावो वर्त्तमानस्ततः प्रच्युतोऽतीतस्तदप्राप्तोऽनागत इति । अस्य व्यवस्थापेक्षया व्यवहारो यथा मृद्गुडिकायां, नहि तस्याः स्वभावान्यथात्वं भवति, किं तर्हि ?, स्थानविशेषसम्बन्धात्सङ्ख्याभिद्योतकं संज्ञान्तरमुत्पद्यते । अन्यथान्यथिको बुद्धदेवः, स किलाह—धर्मोऽध्वसु वर्त्तमानः पूर्वापरमपेक्ष्यान्योन्य उच्यत इति । यथैका स्त्री माता चोच्यते दुहिता चेति । अस्य पूर्वापरापेक्षो व्यवहारः, यस्य पूर्वमेवास्ति नापरः सोऽनागतः, यस्य पूर्वमस्ति अपरं च स वर्त्तमानः, यस्यापरमेव न पूर्वं सोऽतीत, इत्येते चत्वारः सर्वेऽस्तिवादा भावलक्षणाऽवस्थान्यथान्यथिकसंज्ञिताः । तत्र प्रथमः परिणामवादित्वात्साङ्ख्यमतान्न भि-

द्यते। यस्तस्य प्रतिषेधः सोऽस्यापि द्रष्टव्यः । तथाहि—पूर्वस्वभावापरित्यागेन वा परिणामो भवेत्, परित्यागेन वा। यद्यपरित्यागेन तदाऽध्वसङ्करप्रसङ्गः। अथ परित्यागेन, तदा सदाऽस्तित्वविरोधः। द्वितीयस्यापि वादिनोऽयं सङ्कर एव, सर्वस्य सर्वलक्षणयोगात् । पुरुषस्त्वर्थान्तरभूतरागसमुदाचाराद्रक्त उच्यतेऽविरक्तश्च समन्वागममात्रेण, नतु धर्मस्य लक्षणसमुदाचारो लक्षणसमन्वागमो वा प्राप्तिलक्षणोऽस्ति, अन्यत्वप्रसङ्गाल्लक्षणस्य प्राप्तिवदिति न साम्यं दृष्टान्तस्य दार्ष्टान्तिकेन तृतीयस्य कारित्रेणाध्वव्यवस्थेति तस्य विस्तरेण दूषणं वक्ष्यते । चतुर्थस्याप्येकस्मिन्नेवाध्वनि त्रयोऽध्वानः प्राप्नुवन्ति। तथाहि । अतीतेऽध्वनि पूर्वपश्चिमौ क्षणावतीतानागतौ मध्यमः क्षणः प्रत्युत्पन्न इति। एषा दूषणदिगेषां स्पष्टा । तृतीयमेवारभ्य भूयस्त्रैकाल्यपरीक्षाऽऽरभ्यते। हेमदृष्टान्तेन तु सिद्धान्तोपक्षेपमात्रं कृतम्, नतु धर्मत्रातदर्शनमेवाभिमतम् । तथाच वक्ष्यति "कारित्रेण विभागोऽयमध्वनां यत्प्रकल्प्यत" इति। नच धर्मत्रातस्य कारित्रेणाध्वव्यवस्था, किं तर्हि?, वसुमित्रस्य। तत्र यद्यतीतानागतं न स्यात्, अभून्महासम्मतो भविष्यति शङ्खश्चक्रवर्त्तीत्यतीताजातयोर्विज्ञानं निरालम्बनमेव स्यात् । ततश्च विज्ञानमेव न स्यादालम्बनाभावादिति भावः। तथाहि—प्रतिवस्तु विज्ञप्त्यात्मकं विज्ञानम्, असति च ज्ञेये न किञ्चिदनेन ज्ञेयमित्यविज्ञानमेव स्यात् । किञ्च—द्वयं प्रतीत्य विज्ञानमुत्पद्यत इति भगवतोक्तम् "कतमद्द्वयम्, चक्षूरूपाणि यावन्मनोधर्मा" इति। असति चातीतानागते तदालम्बनं विज्ञानं द्वयं प्रतीत्य न स्यादित्यागमविरोधः । अपिचातीतं कर्म फलदं न स्याद्यदि तन्निःसत्त्वं सत्ताशून्यं भवेत्, फलोत्पत्तिकाले विपाकहेतोरभावात्। नचासतः कार्योत्पादनशक्तिरस्ति, सर्वसामर्थ्यविरहलक्षणत्वादसत्त्वस्य । किंच—आसीन्मान्धाता चक्रवर्त्ती, भविष्यति शङ्खश्चक्रवर्त्ती मैत्रेयस्तथागत, इत्यादिना विभागेन योगिनामतीतादिविषयं विभक्तं विज्ञानं न स्यात्। न ह्यसतां विभागोऽस्ति। तस्मादतीतानागता भावाः श्रीहर्षादयो न द्रव्यप्रतिषेधरूपाः, अध्वसंगृहीतरूपादित्वेनोपदिष्टत्वाद्वर्त्तमानवत् । उक्तं हि भगवता—"अतीतं चेद्भिक्षवो रूपं नाभविष्यन्न श्रुतवानार्यश्रावकोऽतीतरूपेऽनपेक्षोऽभविष्यत् । यस्मात्तर्ह्यस्त्यतीतं रूपं तस्माच्छ्रुतवानार्यश्रावकोऽतीतरूपेऽनपेक्षो भवतीति विस्तरः तथा यत्किंचिद्रूपमतीतमनागतादि तत्सर्वमभिसंक्षिप्य रूपस्कन्ध इति सङ्ख्यां गच्छती"त्यादि। अध्वना सङ्ग्रहो येषां तेऽध्वसङ्ग्रहा रूपादयः। आदिशब्देन वेदनादिपरिग्रहः । तेषां भावो

रूपादित्वम् । अत्राप्यादिशब्देन दुःखसमुदयानित्यानात्मादित्वेनोपदिष्टत्वादिति गृह्यते ॥ १७८७ ॥ १७८८ ॥ १७८९ ॥ १७९० ॥

अथापि स्यात्—आकाशवत्सदावस्थितत्वादतीतादिव्यवस्था तर्हि कथमित्याह—नचैवमित्यादि ।

**नचैवमिह मन्तव्यमध्वभेदः कुतो न्वयम् ।**
**कारित्रेण विभागोऽयमध्वनां यत्प्रकल्प्यते ॥ १७९१ ॥**
**कारित्रे वर्त्तते यो हि वर्त्तमानः स उच्यते ।**
**कारित्रात्प्रच्युतोऽतीतस्तद्प्राप्तस्त्वनागतः ॥ १७९२ ॥**
**फलाक्षेपश्च कारित्रं धर्माणां जनकं न तु ।**
**न वाक्षेपोस्त्यतीतानां नातः कारित्रसम्भवः ॥ १७९३ ॥**

यतः संप्राप्तकारित्रो वर्त्तमान उच्यते, उपरतकारित्रोऽतीतः, अप्राप्तकारित्रोऽनागत इत्यध्वानः कारित्रेण व्यवस्थिताः । किं पुनरत्र कारित्रमभिप्रेतम्, यदि दर्शनादिलक्षणो व्यापारः, यथा पञ्चानां चक्षुरादीनां दर्शनादिकम्—यतश्चक्षुः पश्यति श्रोत्रं शृणोति घ्राणं जिघ्रति जिह्वा स्वादयतीत्यादिविज्ञानस्यापि विज्ञातृत्वं, विजानातीति कृत्वा रूपादीनामिन्द्रियगोचरत्वम् । एवं सति प्रत्युत्पन्नस्य तत्सभागस्य चक्षुषो निद्राद्यवस्थायां कारित्राभावाद्वर्त्तमानता न स्यात् । अथ फलदानग्रहणलक्षणं कारित्रम्—यथा चक्षुषा सहभवा धर्मा जात्यादयः पुरुषाकारफलम्, अनन्तरोत्पन्नं चक्षुरिन्द्रियं पुरुषकारफलमधिपतिफलं निष्यन्दफलं च, एतत्फलं जननात्प्रयच्छद्धेतुभावावस्थानाद्गृह्णच्चक्षुर्वर्त्तमानमुच्यत इति । एवं तर्ह्यतीतानामपि सभागसर्वत्रगविपाकहेतूनां फलदानाभ्युपगमाद्वर्त्तमानत्वप्रसङ्गः । अथ समस्तमेव फलदानग्रहणलक्षणं कारित्रमिष्यते । एवमतीतस्य सभागहेत्वादेरर्द्धवर्त्तमानत्वप्रसङ्ग इत्येतद्दोषभयादाचार्यसहन्तभद्र आह—धर्माणां कारित्रमुच्यते फलाक्षेपशक्तिः, नतु फलजननं, नचातीतानां सभागहेत्वादीनां फलाक्षेपोऽस्ति, वर्त्तमानावस्थायामेवाक्षिप्तत्वात् । नचाक्षिप्तस्याक्षेपो युक्तोऽनवस्थाप्रसङ्गात् । तस्मादतीतानां न कारित्रसम्भव इति नास्ति लक्षणसङ्कर इति ॥ १७९१ ॥ १७९२ ॥ १७९३ ॥

तैरित्यादिना प्रतिविधत्ते ।

**तैः कारित्रमिदं धर्मादन्यत्तद्रूपमेव वा ।**
**अभ्युपेयं यदन्याऽस्ति गतिः काचिन्न वास्तवी ॥ १७९४ ॥**

अन्यत्वे वर्त्तमानानां प्रागूर्ध्वं वाऽस्वभावता।
हेतुत्वसंस्कृतत्वादेः कारित्रस्येव गम्यताम्॥ १७९५॥
अन्यथा नित्यतापत्तिः स्वभावावस्थितेः सदा।
नैतद्रूपातिरिक्तं हि विद्यते नित्यलक्षणम्॥ १७९६॥

तत्कारित्रं धर्मादन्यद्वा स्यादनन्यद्वेति तैरभ्युपगन्तव्यम्, अन्यानन्ययोरन्योन्यपरिहारस्थितलक्षणत्वात्। एकनिषेधस्यापरविधिनान्तरीयकत्वात्। नान्या वस्तुनो गतिरस्ति। तत्र यद्यन्यत्तदा वर्त्तमानानां प्रागूर्ध्वावस्थयोः निःस्वभावता प्राप्नोति। हेतुत्वसंस्कृतत्वाद्धेतोः कारित्रवत्। आदिशब्देन वस्तुत्वादयो गृह्यन्ते। अन्यथा यदि प्रागूर्ध्वं च निःस्वभावता न स्यात्तदा सर्वस्य संस्कृतस्य नित्यता प्राप्नोति, स्वभावस्य सर्वदा व्यवस्थितत्वात्। नच सदासत्त्वव्यतिरेकेण नित्यत्वलक्षणमस्ति यदाह—"नित्यं तमाहुर्विद्वांसो यः स्वभावो न नश्यती"ति॥ १७९४॥ १७९५॥ ॥ १७९६॥

स्यादेतत्—यदि नाम नित्यता शक्तिः। हेतुत्वसंस्कृतत्वादेस्तु हेतोः कथं साध्यविपक्षेण विरोध इत्याह—नित्यस्येत्यादि।

नित्यस्य हेतुता पूर्वं क्रमाक्रमविरोधतः।
निषिद्धा संस्कृतत्वं हि व्यक्तं नित्ये निरास्पदम्॥१७९७॥
स्कन्धादिव्यतिरिक्तस्य कारित्रस्योपवर्णने।
स्वसिद्धान्तविरोधश्च दुर्निवारः प्रसज्यते॥ १७९८॥

पूर्वमिति। स्थिरभावपरीक्षायाम्। सर्वस्य च संस्कृतस्यानित्यत्वाभ्युपगमात्संस्कृतत्वं नित्ये न सम्भवतीति स्पष्टमेवावसीयते। किंच—स्कन्धायतनव्यतिरिक्तस्य कारित्रस्योपवर्णने सिद्धान्तविरोधः, तथाहि भगवतोक्तम् "सर्वं सर्वमिति ब्राह्मण यदुत पञ्चस्कन्धा द्वादशायतनानि, अष्टादशचा(श्चा?)भव" इति॥ १७९७॥ ॥ १७९८॥

अनन्यत्वेऽपि कारित्रं धर्माद्व्यतिरेकतः।
स्वरूपमिव धर्मस्य प्रसक्तं सार्वकालिकम्॥ १७९९॥
ततश्चाध्वविभागोऽयं तद्वशान्न प्रकल्प्यते।
न हि तस्य च्युतिः प्राप्तिरप्राप्तिर्वा विभागतः॥ १८००॥

अथानन्यत्कारित्रमभ्युपगम्यते तदा धर्मस्वरूपवत्तदव्यतिरेकात्तदपि सार्वकालिकं प्राप्नोति । ततश्च कारित्रात्प्रच्युतोऽतीतस्तत्प्राप्तो वर्त्तमानस्तदप्राप्तोऽनागत इति कारित्रवशादयमध्वविभागो न स्यात् । यतोऽस्य कारित्रस्य यदि विभागेन यदि प्राप्त्यप्राप्तयः स्युस्तदा स्यादयमध्वविभागः, न च तानि विभागेन सम्भवन्ति, सदावस्थितैकरूपस्य विभागाभावात् ॥ १७९९ ॥ १८०० ॥

**कारित्राव्यतिरेकाद्वा धर्मः कारित्रवद्भवेत् ।**
**पूर्वापरव्यवच्छिन्नमध्यमात्रकसर्ववान् ॥ १८०१ ॥**

किञ्च—कारित्रादव्यतिरिक्तत्वाद्धर्मोऽपि पूर्वापरकोटिशून्यसत्तायोगी प्राप्नोति कारित्रवत् । पूर्वापरव्यवच्छिन्नं—पूर्वापरकोटिशून्यं, मध्यमात्रकं च तत्सर्वं चेति विग्रहः । तदस्यास्तीति तद्वान् ॥ १८०१ ॥

कारित्रमित्यादिना परस्परविरुद्धाभ्युपगमोद्भावनेनोपहसति ।

**कारित्रं सर्वदा नास्ति सदा धर्मश्च वर्ण्यते ।**
**धर्मान्नान्यच्च कारित्रं व्यक्तं देवविचेष्टितम् ॥ १८०२ ॥**
**कारित्रान्तरसापेक्षा तत्राप्यध्वस्थितिर्यदि ।**
**तुल्यः पर्यनुयोगोऽयं ननु सर्वत्र धावति ॥ १८०३ ॥**

एवं तर्हि रूपादिधर्मो न सदास्तीति प्रसक्तं कारित्रादव्यतिरिक्तत्वादित्याह—**सदा धर्मश्चेति** । एवमपि धर्मादन्यत्कारित्रं प्रसज्यत इत्याह—**धर्मान्नान्यच्च कारित्रम्** । देवाः—ईश्वरादयः, ते हि युक्तायुक्तमनालोच्य स्वातन्त्र्येणैव वर्त्तन्त इति, तेषां यथाचेष्टितं युक्तिनिरपेक्षं स्वातन्त्र्येण प्रवृत्तिस्तद्वदेतदिति यावत् । किंच—यदि कारित्रस्य कारित्रमन्तरेणानागतादित्वमिष्यते, न तर्हि वक्तव्यमध्वानः कारित्रेण व्यवस्थिता इति, व्यभिचारात् । यथा कारित्रस्य स्वरूपसत्तापेक्षयाऽनागतादित्वं व्यवस्थाप्यते, एवं भावानामप्यनागतादित्वं भविष्यतीति किं कारित्रकल्पनया । अथ माभूद्व्यभिचारदोष इति कारित्रस्यापि कारित्रमभ्युपगम्यते, तदा तत्रापि व्यतिरेकादिचिन्तया तुल्यः पर्यनुयोगः । अनवस्थादोषश्च॥१८०२॥१८०३॥

यदुक्तमनन्यत्वेऽपि कारित्रं सार्वकालिकं प्राप्नोति धर्मस्वरूपवदविशेषादिति ।अत्र भदन्तसहन्तभद्र आह—

**स्वरूपाद्व्यतिरिक्तोऽपि दृष्टः सप्रतिघत्ववत् ।**
**विशेषश्चेदिदं नैव प्रकृतस्योपकारकम् ॥ १८०४ ॥**

**नहि सप्रतिघत्वादिः पदार्थस्यानुगामिनः ।**
**कादाचित्को मतः कश्चिद्भावस्यैव तथोद्भवात् ॥ १८०५ ॥**

स्वरूपाद्व्यतिरिक्तोपि विशेषको धर्मो दृष्टो यथा सप्रतिघत्वादिः पृथिव्यादीनाम्, ते हि पदार्थत्वेनाविशिष्टा अपि सप्रतिघा अप्रतिघाः सनिदर्शना अनिदर्शना इति स्वरूपाद्व्यतिरिक्तैर्धर्मैर्विशिष्टाः प्रतीयन्ते तद्वत्कारित्रेणापि धर्म इति । तदेतत्प्रकृतानुपकारकम् । तथाहि—इदमत्र प्रकृतम्, पदार्थात्कारित्रस्याभेदेऽभ्युपगम्यमाने सत्येकस्यैव पदार्थस्यात्मभूतकारित्रस्याविशेषात्तद्वशादयमध्वविभागो नावकल्पत इति । पृथिव्यादयस्तु परस्परमन्योन्यलक्षणभेदासङ्गाभिन्ना इति युक्तं यत्केचित्सप्रतिघा भवन्ति केचिदप्रतिघा एव यथा वेदनादयः । नतु य एवाप्रतिघास्त एव सप्रतिघा इति, यतो न कश्चिदेकोऽनुगामी पदार्थात्मास्ति, पृथिव्यादीनां यत्सप्रतिघत्वादिधर्मः कादाचित्को भवेत् । किं तर्हि?, भावस्य निरवयवस्य तथा सजातीयविजातीयव्यावृत्तस्योद्भव इति न स्वरूपाव्यतिरिक्तो धर्म एकस्य भेदको युक्तः॥१८०४॥१८०५॥

कथं रूपस्य सप्रतिघत्वमिति व्यतिरेकीव व्यपदेशो यदि स्वरूपाव्यतिरिक्तो धर्मो भेदको न भवेदित्याह—**अनाक्षिप्ते**त्यादि ।

**अनाक्षिप्तान्यभेदेन भाव एव तथोच्यते ।**
**तद्रूपस्येति शब्देन चेतसो वासनापि च ॥ १८०६ ॥**

**अनाक्षिप्तान्यभेदे**नेति । भेदान्तरप्रतिक्षेपेणेत्यर्थः । **तथोच्यत** इति । व्यतिरेकीव । **त**दिति । सप्रतिघत्वम् । **शब्दे**नेति । रूपस्य (स)प्रतिघत्वमित्यनेन । अत्र दृष्टान्तमाह—**चेतसो वासनापिचे**ति । अपिचेति समुदायो निपात इवार्थे दृष्टव्यः ॥ १८०६ ॥

पुनः स एवाह—न कारित्रं धर्मादन्यत्, तद्व्यतिरेकेण स्वभावानुपलब्धेः, नापि धर्ममात्रम्, स्वभावास्तित्वेपि कदाचिदभावात् । न च न विशेषः, कारित्रस्य प्रागभावात्, सन्तानवत् । यथा धर्मनैरन्तर्योत्पत्तिः सन्तान इत्युच्यते, न चासौ धर्मव्यतिरिक्तस्तदविभागेन गृह्यमाणत्वात्, नच धर्ममात्रम्, एकक्षणस्यापि सन्तानत्वप्रसङ्गात्, नच नास्ति, तत्कार्यसद्भावादिति । आह च—सन्ततिकार्यं चेष्टं, न विद्यते सापि सन्ततिः काचित् । तद्वदवगच्छ युक्त्या कारित्रेणाऽध्वसंसिद्धिमिति, अत्राह—**तत्त्वान्यत्वे**त्यादि ।

तत्त्वान्यत्वप्रकाराभ्यामवाच्यमथ वर्ण्यते ।
सन्तानादीव कारित्रं स्यादेवं सांवृतं ननु ॥ १८०७ ॥
अतश्च कल्पितत्वेन तत्क्वचिन्नोपयुज्यते ।
कार्ये सन्ततिवद्यस्माद्वस्त्वेवार्थक्रियाक्षमम् ॥ १८०८ ॥
सन्निधानं च तस्येदं भाविकं नेति तत्कृतम् ।
अध्वत्रयव्यवस्थानं तात्त्विकं नोपपद्यते ॥ १८०९ ॥

**सन्तानादीवे**ति । आदिशब्देन समूहादिपरिग्रहः । यथा सन्तानिभ्यस्तत्त्वान्यत्वेनावाच्यत्वात्पुद्गलवत्सन्तानो निःस्वभावः (तथा कारित्रं निस्स्वभावं) स्यात्, स्वभावे हि सति तत्त्वमन्यत्वं वाऽवश्यम्भावि, ततश्च तत्कारित्रं कल्पितत्वान्न क्वचित्कार्ये सन्ततिवदुपयुज्येत । नहि कल्पितस्य सन्तानस्य क्वचित्कार्येऽस्त्युपयोगस्तस्य निःस्वभावत्वात् । स्वभावप्रतिबद्धत्वात्कार्योदयस्य । तस्माद्वस्त्वेव सन्तानिस्वभावमर्थक्रियाक्षमम् । न सन्तानः कल्पितः । ततश्च कारित्रस्य प्रज्ञप्तिसत्त्वात्प्रागनु पश्चादपि न परमार्थतः सन्निधानमस्तीति तद्वशादध्वत्रयव्यवस्थानमपि कल्पितमेव स्यान्न भाविकम् ॥ १८०७ ॥ १८०८ ॥ १८०९ ॥

तथापि स्याद्भवतु कारित्रं प्रज्ञप्तिसत्, तत्कृतं चाप्यध्वव्यवस्थानं प्रज्ञप्तिसत्, ततश्च को दोष इत्याह—**कारित्राख्ये**ति ।

कारित्राख्या फलाक्षेपशक्तिर्या शब्दगोचरा ।
शक्तेरेव च वस्तुत्वात्सा प्रज्ञप्तिसती कथम् ॥ १८१० ॥
यच्चेदमिष्यते रूपं दाहपाकादिकार्यकृत् ।
अतीतानागतावस्थं किं तदेवाभ्युपेयते ॥ १८११ ॥
तदेव चेत्कथं नाम तस्यैवैकात्मनः सतः ।
अक्रिया च क्रिया चापि क्रियाविरतिरित्यपि ॥ १८१२ ॥
एकस्मिन्निर्विशिष्टेऽस्मिन्परस्परपराहताः ।
प्रकाराः कथमेते हि युज्यन्ते नाम वस्तुनि ॥ १८१३ ॥
एकावस्थापरित्यागे परावस्थापरिग्रहात् ।
नैवैतन्निर्विशिष्टं चेद्वस्त्वध्वस्विति कल्प्यते ॥ १८१४ ॥
किं वै भावाद्विभिद्यन्तेऽवस्था नाकर्तृतासितः ।
तासामेव हि सद्भावात्कार्यसत्तोपलभ्यते ॥ १८१५ ॥

फलाक्षेपशक्तिर्हि धर्माणां कारित्रमिति भवता वर्णितम् । साच फलाक्षेपशक्तिः प्रज्ञप्तिसती ( कथं ) भवेत् । नैव भवेदिति यावत् । ततश्च तद्वशादध्वव्यवस्थानं तात्त्विकमेवेष्टं भवतीति भावः । किंच—यदेतद्दाहपाकाद्यर्थक्रियाकारि वह्न्यादिरूपमुपलभ्यते, किं तदेवातीतानागतावस्थमाहोस्विदन्यत् । यदि तदेव, कथमेकस्मिन्निर्विशिष्टेऽस्मिन्रूपादिके वस्तुन्यक्रियादयः परस्परविरुद्धा धर्मा युज्यन्ते । येन यथाक्रममनागतवर्त्तमानातीतव्यवस्था स्यात् । यदि हि विरुद्धधर्माध्यासेऽप्येकत्वं स्यात्, उत्सन्ना तर्हि भेदव्यवस्था, ततश्च सर्वमेव जगदेकमेव स्यात् । एकत्वे च सहोत्पत्त्यादिप्रसङ्गः । अथाप्यवस्थापरित्यागपरिग्रहभेदेन भिन्नत्वादध्वसु वस्तु न निर्विशिष्टमिति कल्पते, एवमपि किं ता अवस्था भावाद्भिन्ना आहोस्विदभिन्ना इति वक्तव्यम् । पर आह—नेति । भिद्यन्ते भावादिति सम्बन्धः । कस्मात् ?, भावस्याकर्तृताप्तितः—अकर्त्तृत्वप्रसङ्गात् । अन्वयव्यतिरेकाभ्यां तासामेवावस्थानां कार्यं प्रति सामर्थ्यसिद्धेः ॥ १८१० ॥ १८११ ॥ १८१२ ॥ १८१३ ॥ १८१४॥१८१५॥

अत्र दूषणमाह—अभेदमित्यादि ।

अभेदमनुमन्यन्ते कथमध्वसु वस्तुनः ।
ता अभूत्वा भवन्त्यश्च नश्यन्त्यश्च तदात्मिकाः ॥ १८१६ ॥
अवस्थायां च मध्यायां स्वरूपेणैव कारकम् ।
तत्तदेव स्वरूपं च दशयोरन्ययोरपि ॥ १८१७ ॥
तदा क्रियाक्रियाभ्रंशौ कथमस्य तयोर्मतौ ।
पररूपेण कर्तृत्वे प्राप्ताऽस्याकर्तृता पुनः ॥ १८१८ ॥
अतीतानागतावस्थमन्यच्चेदनलादिकम् ।
तत्साङ्कर्यादिदोषोऽयमस्मिन्पक्षे निरास्पदः ॥ १८१९ ॥
तदिदानीमभूत्वैव कार्ययोग्यं प्रजायते ।
न च तिष्ठति भूत्वेति सिद्धाऽस्यानन्वयात्मता ॥ १८२० ॥

वस्तुनः सकाशादभेदं कथमवस्था (स्व)नुमन्यन्ते—प्रतिपद्यन्ते । नैव । यस्मादभूत्वा भवन्त्यवस्था भूत्वा च विनश्यन्ति । नच तथा वस्त्विष्टम्, सर्वदाऽस्तित्वाभ्युपगमात् । ततश्च कथं ता अभूत्वा भवन्त्यो विनश्यन्त्यश्च तदात्मिका युक्ताः । नैव । भिन्नयोगक्षेमत्वात् । अन्यथा हि तदात्मत्वेनासामपि सदाऽस्तित्वप्रसङ्गो वस्तु-

स्वभाववत्, ततोऽव्यतिरेकाद्वस्तुनो वाऽभूत्वाभावादिप्रसङ्गोऽवस्थास्वरूपवत्। भवतु चावस्थाभेदपरकल्पना, तथापि विरुद्धधर्माध्यासो न परिहृत एव, तथाहि—वस्तु मध्यावस्थायां किं स्वरूपेण कारकमाहोस्वित्पररूपेण, यदि स्वरूपेण तदेव स्वरूपमन्ययोरपि दशयोरतीतानागतावस्थयोरस्तीति कथमस्य कारकस्वभावस्य क्रियाक्रियाभ्रंशौ स्याताम्। अथ पररूपेण, तदाऽस्याकर्तृता पुनः प्राप्तेत्यवस्तुत्वप्रसङ्गः। एवं तावत्तदेव वह्न्यादिरूपमतीतानागतावस्थायां न युक्तम्। अथान्यत्, अस्मिन्पक्षे न भवत्येकत्र क्रियाक्रियादिपरस्परपराहतधर्मसाङ्कर्यादिदोषः, भिन्नत्वाद्वस्तुनः। किंतु यत्तद्दाहपाकादिकार्ययोग्यमनलादिकं वस्तु तदभूत्वा जायते, भूत्वा च विगच्छतीति सदाऽस्तित्वाभ्युपगमविरोधः स्यात्, अन्वयाभावात्॥१८१६॥१८१७॥ ॥ १८१८ ॥ १८१९ ॥ १८२० ॥

स्यादेतत्—यद्यपि कार्ययोग्यमभूत्वा जायते, भूत्वा च विगच्छतीति, तथाप्यतीतानागतावस्थायामकार्ययोग्यं वस्तु विद्यत एव, ततश्च न सदाऽस्तित्वाभ्युपगमविरोध इत्याह—स एवेति।

**स एव भाविको भावो य एवायं क्रियाक्षमः।**
**स च नास्ति तयोर्योऽस्ति न तस्मात्कार्यसम्भवः॥ १८२१॥**

स एवेति। अर्थक्रियाक्षमः। तयोरिति। अतीतानागतावस्थयोः। योस्तीति। अकार्ययोग्यः॥ १८२१ ॥

अथापि स्यात्—अतीतस्य सभागहेत्वादेः कार्ययोग्यत्वमिष्यत एव, ततश्चासिद्धमेतन्न तस्मात्कार्यसम्भव इत्याह—अतीतश्चेति।

**अतीतश्च पदार्थोऽयमभूत्वा भवनात्स्फुटम्।**
**वर्त्तमानोऽन्यवत्प्राप्तः कादाचित्कतयापि च॥ १८२२॥**
**सदा सत्त्वमसत्त्वं वाऽहेतुत्वेऽन्यानपेक्षणात्।**
**हेतोर्नियतसत्त्वश्च वर्त्तमानोऽर्थ उच्यते॥ १८२३॥**
**प्रतिसङ्ख्यानिरोधादिवैलक्षण्यं परैर्मतम्।**
**संस्कृतत्वं च रूपादेर्जातिस्थित्यादियोगतः॥ १८२४॥**
**तत्र जातिर्विशेषं कं जनयन्त्यभिधीयते।**
**जनिकाऽस्येति तद्रूपादजातादपरं परम्॥ १८२५॥**

अशक्योत्पादनस्तावदनन्योऽतिशयस्ततः ।
सत्त्वात्प्रागपि निष्पत्तेर्निष्पत्त्युत्तरकालवत् ॥ १८२६ ॥
अन्यस्त्वतिशयो नास्ति व्यतिरेकादसङ्गतेः ।
असत्कार्यप्रसङ्गश्च तस्य पूर्वमसत्त्वतः ॥ १८२७ ॥
अन्यथात्वे स्थितौ नाशे चान्यानन्यविकल्पयोः ।
जरादिविषया दोषा एत एवानुषङ्गिणः ॥ १८२८ ॥

अन्यवदिति । अविवादास्पदीभूतवर्त्तमानवत् । कादाचित्कतयाऽपि चेति । वर्त्तमानोऽन्यवत्प्राप्त इति सम्बन्धः । न चायं हेतुरनन्वयः, तथाहि—हेतुप्रत्ययजनितो योऽर्थः स वर्त्तमान उच्यते, यश्च कादाचित्कः सोऽवश्यं हेतुप्रत्ययनिमित्तः, यस्मादहेतुकस्य द्वे एव गती, यदुत सदा सत्त्वमसत्त्वं वा, अन्यानपेक्षणात्, तस्माद्यः कादाचित्कः सोऽवश्यं हेतुप्रत्ययनिर्मितसत्त्वः, यश्च हेतुप्रत्ययनिर्मितसत्त्वः सोऽवश्यं वर्त्तमान एवेति सिद्धम् । वर्त्तमानत्वेन कादाचित्कत्वस्य व्याप्तिः । किंच—यद्यतीतानागतं द्रव्यतोऽस्ति तदा सर्वसंस्काराणां शाश्वतत्वप्रसङ्गः । ततश्च प्रतिसङ्ख्यानिरोधादिभ्यो रूपादीनां विशेषो न प्राप्नोति । अथ रूपादेः संस्कृतलक्षणयोगात्संस्कृतत्वं नाकाशादीनां, तेन भवति प्रतिसङ्ख्यानिरोधादेर्वैलक्षण्यं रूपादेरिति परैर्मतं, तदेतदसम्यक्, तथाहि—जातिर्जरास्थितिरनित्यता चेति चत्वारीमानि संस्कृतलक्षणानि । तत्र जातिर्जनयति, स्थितिः स्थापयति, जरा जरयति, अनित्यता विनाशयतीत्येवं जननादिरेषां व्यापार इष्टः । तत्र जातिस्तावत्कं विशेषं जनयन्ती सत्यस्य रूपादेर्जनिकेत्यभिधीयते, किं तस्माद्रूपादेः परं—व्यतिरिक्तमाहोस्विदपरम्—अव्यतिरिक्तं विशेषं जनयन्तीति पक्षद्वयम् । तत्र न तावदव्यतिरिक्तं, यस्मादसौ विशेषो जातिव्यापारात्प्रागपि निष्पन्नत्वादशक्यक्रियः, निष्पत्त्युत्तरकालवत् । नहि निष्पन्नस्य क्रियायुक्ताऽनवस्थाप्रसङ्गात् । नापि व्यतिरिक्तोऽतिशयः क्रियते, व्यतिरेके ह्यस्य रूपादेरयमतिशय इति सम्बन्धासिद्धेः । तथाहि—न तादात्म्यलक्षणः सम्बन्धो व्यतिरेकाभ्युपगमात् । अनभ्युपगमे वा पूर्वोक्तदोषप्रसङ्गात् । नापि तदुत्पत्तिलक्षणो जातेरेव तदुत्पत्तेः । न चान्यः सम्बन्धोऽस्ति, आधाराधेयत्वादीनां तदुत्पत्त्यन्तर्गतत्वात् । अथ तदुत्पत्तिरभ्युपगम्यते, तन्मात्रभाविनो विशेषस्य नित्योत्पत्तिप्रसङ्गाज्जातिः किङ्करी स्यात् । जातिमपेक्ष्योत्पादयतीति चेत्, न ह्यनुपका-

रिण्यां जातावपेक्षायुक्ताऽतिप्रसङ्गात् । उपकारे वा तस्योपकारस्यातिशयवत्तत्वान्यत्वचिन्तायामनवस्थाप्रसङ्गात् । तस्माद्व्यतिरेके सति सम्बन्धो न सिद्ध्यति । किंच—तस्यातिशयस्य पूर्वमसत्वादसत्कार्यमभ्युपगतं भवेत् । एवं जरयान्यथात्वे क्रियमाणे स्थित्याऽवस्थितेरनित्यतया च नाशे क्रियमाणे, एषामन्यथात्वादीनामन्याऽनन्यविकल्पे सति ये दोषास्ते जातिवज्जरादिष्वपि वाच्याः ॥ १८२२ ॥ १८२३ ॥ ॥ १८२४ ॥ १८२५ ॥ १८२६ ॥१८२७ ॥ १८२८ ॥

**स्वकार्यारम्भिण इमे सामर्थ्यनियमात्मना ।**
**जात्यादयश्च तद्रूपं प्राक्पश्चादपि विद्यते ॥ १८२९ ॥**
**समर्थरूपभावाच्च प्रारभन्ते न किं तदा ।**
**स्वानुरूपां क्रियां तस्याः प्रारम्भे चामिताध्वता॥ १८३०॥**

किंच—जात्यादीनां स्वकार्यारम्भित्वं यत्तत्समर्थस्वभावनियमादिष्टं, स च समर्थः स्वभावस्तेषां सर्वदाऽस्तीति सदैव स्वकार्यारम्भित्वप्रसङ्गः । नच हेतुप्रत्ययवैकल्यं तेषामपि सदावस्थितत्वात् । ततश्चातीतानागतावस्थयोर्जात्यादिभिर्जननादिस्वकार्यकरणादेकस्मिन्नेवाध्वन्यपरिमिताध्वप्रसङ्गः ॥ १८२९ ॥ १८३० ॥

**किंचातीतादयो भावाः क्षणिकाः स्युर्न वा यदि ।**
**आद्याः पुनस्तयोः प्राप्ता सैवापरिमिताध्वता ॥ १८३१ ॥**
**यः क्षणो जायते तत्र वर्त्तमानो भवत्यसौ ।**
**उत्पद्य यो विनष्टश्च सोऽतीतो भाव्यनागतः ॥ १८३२ ॥**

अपिच—अतीतानागताः क्षणिका वा स्युर्न वा क्षणिका इति पक्षद्वयम् । तत्र यद्याद्याः—क्षणिका इति यावत्, तदा सैवामिताध्वता प्राप्ता । यः क्षण इति तामेव दर्शयति ॥ १८३१ ॥ १८३२ ॥

**अथाप्यक्षणिकास्ते स्युः कृतान्तस्ते विरुध्यते ।**
**क्षणिकाः सर्वसंस्काराः सिद्धान्ते हि प्रकाशिताः॥१८३३॥**

अथाक्षणिका इति पक्षः, एवं सति कृतान्तविरोधः—कृतान्तः सिद्धान्त उच्यते । तथाहि क्षणिकाः सर्वसंस्कारा इति सिद्धान्तः ॥ १८३३ ॥

**युक्तिबाधाऽपि सन्तश्चेन्नियमात्क्षणभङ्गिनः ।**
**वर्त्तमाना इव प्राक् प्रतिबन्धोऽत्र साधितः ॥ १८३४ ॥**

किंच—न केवलं सिद्धान्तविरोधो मानविरोधोऽपि प्रतिज्ञायाः। तथाहि—यत्सत्तत्सर्वं क्षणिकं यथा वर्त्तमानं, सन्तश्चातीतानागता इति नियमात्क्षणभङ्गिनः प्राप्ताः। प्राक्—क्षणभङ्गाधिकारे, प्रतिबन्धोऽस्य हेतोः प्रसाधित इति नानैकान्तिकत्वम्। तथाहि—अर्थक्रियाकारित्वं सत्त्वलक्षणम्, अक्षणिकस्य च क्रमयौगपद्याभ्यामर्थक्रियाविरोधादर्थक्रियानिवृत्तौ तल्लक्षणस्य सत्त्वस्य निवृत्तिरिति साध्यविपक्षान्निवृत्तं सत्त्वम्॥ १८३४॥

**अर्थक्रियासमर्थाः स्युरतीतानागता इमे।**
**न वा सामर्थ्यसद्भावे वर्त्तमानास्तदन्यवत्॥ १८३५॥**
**अवर्त्तमानतायां तु सर्वशक्तिवियोगिनः।**
**नष्टाजाताः प्रसज्यन्ते व्योमतामरसादिवत्॥ १८३६॥**
**तुल्यपर्यनुयोगाश्च सर्वे व्योमादयोऽकृताः।**
**अनैकान्तिकताक्लृप्तेर्न तेपि विनिबन्धनम्॥ १८३७॥**
**नियमार्थक्रियाशक्तिर्भावानां प्रत्ययोद्भवा।**
**अहेतुत्वे समं सर्वमुपयुज्येत सर्वतः॥ १८३८॥**
**नियतार्थक्रियाशक्तिजन्म प्रत्ययनिर्मितम्।**
**वर्त्तमानस्य भावस्य लक्षणं नान्यदस्ति च॥ १८३९॥**
**अतीतानागतानां च तदखण्डं समस्ति वः।**
**तत्किं न वर्त्तमानत्वममीषामनुषज्यते॥ १८४०॥**

किंच—इमेऽतीतानागता अर्थक्रियासमर्था वा स्युर्न वा समर्था इति पक्षौ। यदि समर्थास्तदा सामर्थ्यसद्भावे वर्त्तमानाः प्राप्नुवन्ति, अविवादास्पदीभूतवर्त्तमानवत्। प्रयोगः—ये येऽर्थक्रियासमर्थास्ते वर्त्तमानाः, यथाऽविवादास्पदीभूता वर्त्तमानाः, अर्थक्रियासमर्थाश्चातीतादय इति स्वभावहेतुप्रसङ्गः। न चायमनैकान्तिकः, यतो वर्त्तमानत्वनिवृत्तौ नष्टाजातानां सर्वसामर्थ्यवियोगित्वं प्रसज्येत, आकाशाम्भोरुहवत्। प्रयोगः—ये वर्त्तमाना न भवन्ति ते क्वचित्समर्था अपि न भवन्ति, यथा व्योमाम्भोरुहं, न भवन्ति चातीतादयो वर्त्तमाना इति व्यापकानुपलब्धिः। न चाकाशप्रतिसङ्ख्यानिरोधाप्रतिसङ्ख्यानिरोधैरसंस्कृतैरनेकान्तस्तेषामपि पक्षीकरणात्। अतोऽनैकान्तिकत्वकल्पनाया नातिनिबन्धनम्। तथाहि—येयं प्रतिनियतार्थक्रिया-

शक्तिर्भावानां सा प्रत्ययोद्भवेत्यङ्गीकर्त्तव्यम्, अन्यथा यदि निर्हेतुका स्यात्तदा नियमहेतोरभावात्प्रतिनियता शक्तिर्भावानां न स्यात्। ततश्च सर्वं सर्वस्मिन्कार्ये उपयुज्येत। तस्मात्क(तस्मादक ?)ताकाशादीनां सामर्थ्यनियमो न युक्त इति न तैरनैकान्तिकत्वकल्पनाया निबन्धनम्। नच प्रथमे हेतौ संदिग्धविपक्षवृत्तिकता, यस्मान्नियतायामर्थक्रियायां या शक्तिस्तस्या यदेतज्जन्म हेतुप्रत्ययनिर्मितं तदेव वर्त्तमानस्य लक्षणम्, एतच्च वर्त्तमानत्वलक्षणमविकलमतीतादिष्वप्यस्तीति निमित्तान्तराभावात्किमिति वर्त्तमानता (न) प्रसज्यते ॥ १८३५ ॥ १८३६ ॥ १८३७ ॥ १८३८ ॥ ॥ १८३९ ॥ १८४० ॥

**स्वर्गापवर्गसंसर्गयत्नोऽयमफलस्ततः।**
**ईहासाध्यं न किञ्चिद्धि फलमत्रोपलक्ष्यते ॥ १८४१ ॥**

किंच—यस्यातीतानागतं द्रव्यतोऽस्ति तस्य फलमपि नित्यमस्तीति स्वर्गापवर्गप्राप्त्यर्थो यत्नो विफलः स्यात्, ईहासाध्यस्य कस्यचित्फलस्याभावात्। किं तत्र व्रतनियमादिलक्षणाया ईहायाः सामर्थ्यं स्यात्। उत्पादने सामर्थ्यमिति चेत्। उत्पादनं तर्ह्यभूत्वा भवतीति सिद्धम्। अथ तदप्यस्ति, कस्येदानीं क सामर्थ्यम्। वर्त्तमानीकरणसामर्थ्यमिति चेत्। किमिदं वर्त्तमानीकरणं नाम। देशान्तराकर्षणं चेत्। नित्यं तर्हि वस्तु प्रसक्तं, सर्वदाऽवस्थितत्वात्। अरूपाणां वेदनादीनां निष्क्रियत्वात्कथमाकर्षणं भवेत्। यच्च तदाकर्षणं तदभूत्वा भवतीति सिद्धम्। स्वर्गः सुमेरुपृष्ठादिः, अपवर्गो मोक्षः, तयोः प्राप्तिः संसर्गः, तत्र यत्नो व्रतनियतादिः॥१८४१॥

**अथ नार्थक्रियाशक्तिस्तेषामभ्युपगम्यते।**
**यद्येवमत एवैषामसत्त्वं व्योमपुष्पवत् ॥ १८४२ ॥**

अथ नार्थक्रियासमर्था इति द्वितीयपक्ष आश्रीयते। एवं तर्ह्यत एवार्थक्रियाशून्यत्वादसत्त्वं प्राप्नोति खपुष्पवत्। सर्वसामर्थ्यविवेकलक्षणत्वादसत्त्वस्य ॥ १८४२ ॥

एवं तावदतीतानागतानामसत्तासाधकं प्रमाणमभिधाय सत्तासाधकं प्रमाणमपाकर्तुमाह—हेतव इत्यादि।

**हेतवो भावधर्मास्तु नासिद्धे सिद्धिभागिनः।**
**वर्त्तमानत्वसिद्धेर्वा विरुद्धा धर्मिबाधनात् ॥ १८४३ ॥**

हेतवो हि पूर्वोक्ता अध्वसंगृहीतत्वादित्यादय आश्रयासिद्धाः, अतीतादेर्धर्मिणोऽ-

सिद्धत्वात्। यथाह—'नासिद्धे भावधर्मोऽस्ती'ति। अथापि सिद्धाः स्युः, तथापि वर्त्तमानत्वसिद्धेर्धर्मस्वरूपविपरीतसाधनाद्विरुद्धा हेतवः॥ १८४३॥

कथमिदानीमध्वसंगृहीतत्वमतीतानागतानां रूपादीनां निर्दिष्टम्, नहि शशविषाणमत्यन्तासदतीतमनागतं वा व्यवस्थाप्यत इत्याह—भूत्वेत्यादि।

**भूत्वा यद्विगतं रूपं तदतीतं प्रकाशितम्।**
**सति प्रत्ययसाकल्ये भावि यत्तदनागतम्॥ १८४४॥**
**सत्त्वे तु वर्त्तमानत्वमासज्येतेति साधितम्।**
**विद्यमानत्वमात्रं हि वर्त्तमानस्य लक्षणम्॥ १८४५॥**

सुबोधम्॥ १८४४॥ १८४५॥

रूपवेदनादिभावस्तर्हि कथं निर्दिष्ट इत्याह—रूपादित्वमित्यादि।

**रूपादित्वमतीतादेर्भूतां तां भाविनीं तथा।**
**अध्यारोप्य दशामस्य कथ्यते न तु भावतः॥ १८४६॥**

तां दशामिति। तामवस्थाम्॥ १८४६॥

द्वयाश्रयं तर्हि कथं विज्ञानमुक्तमित्याह—द्वयं प्रतीत्येति।

**द्वयं प्रतीत्यविज्ञानं यदुक्तं तत्त्वदर्शिना।**
**सेष्टा सविषयं चित्तमभिसन्धाय देशना॥ १८४७॥**

द्विविधं हि विज्ञानं सालम्बनमनालम्बनं च, यत्सालम्बनं तदभिसन्धाय द्वयाश्रयविज्ञानदेशना भगवतः॥ १८४७॥

अथ निरालम्बनमपि ज्ञानमस्तीति कथमवसितमित्याह—नित्येश्वरादीत्यादि।

**नित्येश्वरादिबुद्धीनां नैवालम्बनमस्ति हि।**
**शब्दनामादिधर्माणां तदाकारवियुक्तितः॥ १८४८॥**

आदिशब्देन प्रधानकालादयः परिकल्पिता गृह्यन्ते। न चैतन्मन्तव्यं शब्दाद्यालम्बना इमा बुद्धय इति कथयति—शब्दनामादीत्यादि। तस्येश्वरादेराकारो नित्यत्वसकलहेतुत्वादिः, यस्तया बुद्ध्याऽध्यवसीयते, तेनाकारेण वियोगः शब्दस्य नाम्नो वा विप्रयुक्तसंस्कारविशेषस्य। आदिशब्देन निमित्तादेः परोपगतस्यार्थप्रतिबिम्बकादिस्वभावस्य॥ १८४८॥

यदि तर्हि निर्विषयमपि विज्ञानमस्ति तत्कथं ज्ञानमिति व्यपदिश्यते, तथाहि

विजानातीति विज्ञानमिति गीयते, असति च विज्ञेये किं विज्ञानं स्यादित्याह— **बोधानुगतिमात्रेणेति** ।

**बोधानुगतिमात्रेण विज्ञानमिति चोच्यते ।**
**सा चास्याजडरूपत्वं प्राकाश्यात्परिकल्पितम् ॥ १८४९ ॥**

बोधानुगमोऽपि विना बोधेन (न) सम्भवतीति चेदाह—**सा चेति** । सा—बोधानुगतिः । अस्य—विज्ञानस्य । किमुच्यते?, यत्तदजडरूपत्वम्, प्रकाश्यवस्त्वन्तराभावात्प्रकाशान्तरविरहाच्च नभोवर्त्त्यालोकवत्प्रकाशरूपत्वादभिधीयते बोधरूपतेति ॥ १८४९ ॥

क्रमातीतं च कथं फलदमित्यत्राह—**विपाकहेतुरित्यादि** ।

**विपाकहेतुः फलदो नातीतोऽभ्युपगम्यते ।**
**सद्वासिताच्च विज्ञानप्रबन्धात्फलमिष्यते ॥ १८५० ॥**

वासितं परम्परया फलोत्पादनसमर्थमुत्पादितम् ॥ १८५० ॥

यद्येवं कथमुक्तं भगवता, 'अस्ति तत्कर्म यत्क्षीणं निरुद्धं विपरिणतमित्याह'— **तामेवेति** ।

**तामेव वासनां चेतःसन्ततावधिकृत्य तत् ।**
**अस्ति कर्मेति निर्दिष्टं भक्त्या मूलाविनाशवत् ॥ १८५१ ॥**

**भक्त्येति** । उपचारेण । यथा मूलद्रव्यप्रसूतस्य हिरण्यादेः फलप्रबन्धस्य स(म)भावे विनष्टमपि मूलद्रव्यमविनष्टमित्युच्यते तद्वत्कर्मापि ॥ १८५१ ॥

उपचारेण देशनायाः किं प्रयोजनमित्याह—**उच्छेददृष्टीति** ।

**उच्छेददृष्टिनाशाय चैवं शास्त्रा प्रकाशितम् ।**
**अन्यथा शून्यतासूत्रे देशना नीयते कथम् ॥ १८५२ ॥**

नास्त्यतीतं कर्मेत्युक्ते पारम्पर्येण यत्फलोत्पादनसामर्थ्यमाहितमतीतेन कर्मणा तस्याप्यभावं प्रतिपद्येरन्नित्युच्छेददृष्टिमापन्नाः स्युर्विनेया इत्यस्ति कर्मेत्युक्तं भगवता । अन्यथा हि यद्यतीतं स्वरूपेण स्यात्तदा परमार्थशून्यता सूत्रे देशना कथं नीयते । चक्षुरुत्पद्यमानं न कुतश्चिदागच्छति निरुध्यमानं न क्वचित्सन्निचयं गच्छतीति हि चक्षुरभूत्वा भवति भूत्वा च प्रतिविगच्छतीति । वर्त्तमानेऽध्वन्यभूत्वा भवतीति चेन्न । अध्वनो भावानर्थान्तरत्वात्त एवाध्वानस्तथाऽवस्थितिवचनात् । अथ स्वात्म-

न्यभूत्वा भवति, तथा सिद्धमनागतं चक्षुर्नास्तीति । अपिच सदाऽवस्थितत्वे संस्काराणां हेतुफलयोरभावात् दुःसमुदयसत्याभावः, तदभावान्निरोधमार्गयोरपि, ततश्च सत्यचतुष्टयाभावात्परिज्ञाप्रहाणसाक्षात्क्रियाभावना न युज्यन्ते, तदभावाच्च फलस्थानां प्रतिपन्नकानां च पुद्गलानामभाव इति सकलमेव प्रवचनं निरुध्यत इति नातीतादिवस्तुजातकल्पना साध्वी ॥ १८५२ ॥

अतीतानागतज्ञानं विभक्तं योगिनां कथमित्यत्राह—**पारम्पर्येणे**त्यादि ।

**पारम्पर्येण साक्षाद्वा कार्यकारणतां गतम् ।**
**यद्रूपं वर्त्तमानस्य तद्विजानन्ति योगिनः ॥ १८५३ ॥**
**अनुगच्छन्ति पश्चाच्च विकल्पानुगतात्मभिः ।**
**शुद्धलौकिकविज्ञानैस्तत्वतोऽविषयैरपि ॥ १८५४ ॥**
**तद्धेतुफलयोर्भूतां भाविनीं चैव सन्ततिं ।**
**तामाश्रित्य प्रवर्त्तन्तेऽतीतानागतदेशनाः ॥ १८५५ ॥**
**समस्तकल्पनाजालरहितज्ञानसन्ततेः ।**
**तथागतस्य वर्त्तन्तेऽनाभोगेनैव देशनाः ॥ १८५६ ॥**

## इति त्रैकाल्यपरीक्षा ।

अतीतार्थापेक्षया कार्यतां गतम्, अनागतापेक्षया कारणताम् । **विकल्पानुगतात्मभिरिति** । सविकल्पैरित्यर्थः । **तत्त्वतोऽविषयैरिति** । आविष्टाभिलापैर्ज्ञानैः स्वलक्षणस्याविषयीकरणात् । तत्—तस्मात् । हेतुफलयोः सन्ततिं भूतां भाविनीं चाश्रिता अतीतादिदेशना योगिनामपरिशुद्धानां प्रवर्त्तन्ते । भगवतस्तु तथागतस्य शुद्धलौकिकमपि ज्ञानं नास्ति, नित्यसमाहितत्वात्सर्वाविद्याप्रहाणेन । विकल्पस्य चाविद्यास्वभावत्वात् । यदाह—"विकल्पः स्वयमेवायमविद्यारूपतां गतः । स्वाकारं बाह्यरूपेण यस्मादारोप्य वर्त्तते ॥" इति तस्य पूर्वप्रणिधानपुण्यज्ञानसम्भारसामर्थ्यादवाप्तचिन्तामणिसदृशात्मभावस्यानाभोगेनैव देशनाः प्रवर्त्तन्ते ॥ १८५३ ॥ ॥ १८५४ ॥ १८५५ ॥ १८५६ ॥

## इति त्रैकाल्यपरीक्षा ।

अनाद्यन्तमित्येतत्समर्थनार्थं चोद्योपक्रमपूर्वकमाह—**यदी**त्यादि ।

**यदि नानुगतोभावः कश्चिदप्यत्र विद्यते ।**
**परलोकस्तदा न स्यादभावात्परलोकिनः ॥ १८५७ ॥**

कश्चिदिति । आत्मादिः । तत्रात्मनः पूर्वं प्रतिषिद्धत्वादभावादेव नानुगामित्वं, विज्ञानादीनां च क्षणिकत्वात्त्रैकाल्यपरीक्षायां चान्वयस्य निषिद्धत्वान्नान्वयः ॥ १८५७॥

ननु देहादयः परलोकिनो भविष्यन्तीत्याह—देहेत्यादि ।

**देहबुद्धीन्द्रियादीनां प्रतिक्षणविनाशने ।**
**न युक्तं परलोकित्वं नान्यश्चाभ्युपगम्यते ॥ १८५८ ॥**
**तस्माद्भूतविशेषेभ्यो यथा शुक्तसुरादिकम् ।**
**तेभ्य एव तथा ज्ञानं जायते व्यज्यतेऽथवा ॥ १८५९ ॥**

आदिशब्देन वेदनासंज्ञासंस्काराणां ग्रहणम् । नान्यश्चाभ्युपगम्यत इति । आत्मा । तल्लोकायतपक्षानुलोमनमेव ज्ञा(जा?)तम् । तथाहि तस्यैतत्सूत्रं—'परलोकिनोऽभावात्परलोकाभाव' इति । तथाहि—पृथिव्यापस्तेजोवायुरिति चत्वारि तत्त्वानि तेभ्यश्चैतन्यमिति । तत्र केचिद्वृत्तिकारा व्याचक्षते—उत्पद्यते तेभ्यश्चैतन्यम्, अन्येऽभिव्यज्यत इत्याहुः, अतः पक्षद्वयमाह—जायते व्यज्यतेऽथवेति । शुक्तमाम्लत्वम् । सुरेति । मदजननशक्तिः । आदिशब्देन मूर्छादिजननसामर्थ्यपरिग्रहः ॥ १८५८ ॥ १८५९ ॥

ननु चक्षुरादीनि विषयांश्च रूपादीन्प्रतीत्य विज्ञानमुत्पद्यत इत्यतिप्रतीतमेतत्, तत्कथमुच्यते तेभ्य एव विज्ञानमित्याह—सन्निवेशविशेष इति ।

**सन्निवेशविशेषे च क्षित्यादीनां निवेश्यते ।**
**देहेन्द्रियादिसंज्ञेयं तत्त्वं नान्यद्धि विद्यते ॥ १८६० ॥**

तथा च तेषां सूत्रम्—तत्समुदाये विषयेन्द्रियसंज्ञेति । नहि महाभूतव्यतिरेकेणेन्द्रियादीनि सन्ति, तत्संस्थानविशेष एव तत्प्रज्ञप्तेः । नच संस्थानं नामान्यत्संस्थानिभ्यः । इदं च महाभूतचतुष्टयं प्रत्यक्षसंसिद्धम् । न चैतद्व्यतिरेकेणान्यत्तत्वमस्ति प्रत्यक्षसिद्धम् । नच प्रत्यक्षादन्यत्प्रमाणमस्ति, येनान्यस्य परलोकादेः संसिद्धिः स्यात् ॥ १८६० ॥

**कार्यकारणता नास्ति विवादपदचेतसोः ।**
**विभिन्नदेहवृत्तित्वाद्गवाश्वज्ञानयोरिव ॥ १८६१ ॥**
**न विवक्षितविज्ञानजन्या वा मतयो मताः ।**
**ज्ञानत्वादन्यसन्तानसम्बद्धा इव बुद्धयः ॥ १८६२ ॥**

अपिच—यद्यतीतदेहवर्त्तिनश्चेतसः प्रथमजन्मचित्तं प्रति कारणभावः स्यात्, मरणचित्तस्य चागामिचित्तं प्रति, तदा चित्तप्रतिबन्धानुपरमात्परलोककल्पना स्यात्, यावता प्रथमयोस्तावद्विवादास्पदीभूतयोश्चेतसोर्न कार्यकारणताऽस्ति भिन्नदेहवर्त्तित्वात्, गवाश्ववर्त्तिनोरिव ज्ञानयोः। अथवा—जन्मबुद्धयो धर्मिण्यः, तासामतीतदेहवर्त्तिचरमविज्ञानजन्यत्वप्रतिषेधः साध्यः, ज्ञानत्वादिति सामान्यं हेतुः, अन्यसन्तानवर्त्तिन्यो बुद्धयो निदर्शनम्। प्रयोगस्त्वेवम्—यदि ज्ञानं, न तद्विवक्षितातीतदेहवर्त्तिचरमज्ञानजन्यम्, ज्ञानत्वात्, यथाऽन्यसन्तानवर्त्ति ज्ञानम्। ज्ञानरूपाश्चेमा विवक्षितदेहवर्त्तिन्यो जन्मबुद्धय इति विरुद्धव्याप्तोपलब्धिः विवक्षितविज्ञानजन्य(त्व)विरुद्धेन ज्ञानत्वस्य व्याप्तत्वात्॥ १८६१॥ १८६२॥

एवं तावदतीतजन्मनिषेधः कृतः। साम्प्रतमनागतजन्मनिषेधायाह—**सरागस्येत्यादि**।

**सरागमरणं चित्तं न चित्तान्तरसन्धिकृत्।**
**मरणज्ञानभावेन वीतक्लेशस्य तद्यथा॥ १८६३॥**

सरागस्य मरणचित्तं चित्तान्तरं न प्रतिसन्धत्ते, मरणचित्तत्वादर्हच्चरमचित्तवदिति व्यापकविरुद्धोपलब्धिः। वीतक्लेशस्य तद्यथेति। मरणज्ञानम्॥ १८६३॥

कुतस्तर्हि चित्तस्योत्पत्तिरित्याह—**कायादेवेत्यादि**।

**कायादेव ततो ज्ञानं प्राणापानाद्यधिष्ठितात्।**
**युक्तं जायत इत्येतत्कम्बलाश्वतरोदितम्॥ १८६४॥**

तथाच सूत्रम्—कायादेवेति। कम्बलाश्वतरोदितमिति॥ १८६४॥

ननु च कायानिष्पत्तावपि कललाद्यवस्थायां विज्ञानमस्त्येव मूर्छितम्, तच्चातीतभेदविज्ञानजन्यतया सिद्धम्, कथं कायादेवेति नियम इत्याह—**कललादिष्वित्यादि**।

**कललादिषु विज्ञानमस्तीत्येतच्च साहसम्।**
**असञ्जातेन्द्रियत्वाद्धि न तत्रार्थोऽवगम्यते॥ १८६५॥**
**न चार्थावगतेरन्यद्रूपं ज्ञानस्य युज्यते।**
**मूर्च्छादावपि तेनास्य सद्भावो नोपपद्यते॥ १८६६॥**
**नचापि शक्तिरूपेण तदा धीरवतिष्ठते।**
**निराश्रयत्वाच्छक्तीनां स्थितिर्न ह्यवकल्पते॥ १८६७॥**

**ज्ञानाधारात्मनोऽसत्त्वे देह एव तदाश्रयः ।**
**अन्ते देहनिवृत्तौ च ज्ञानवृत्तिः किमाश्रया ॥ १८६८ ॥**

इन्द्रियार्थौ हि विज्ञानोत्पत्तेः कारणम्, अर्थाधिगमरूपत्वाज्ज्ञानस्य, कललाद्यवस्थायां चेन्द्रियार्थयोरभावात्कथं तत्कार्यं विज्ञानं स्यादिति कारणानुपलब्ध्या मूर्च्छाद्यवस्थायां विज्ञानाभावः सिद्ध इति समुदायार्थः । नच शक्तिरूपेण तदा विज्ञानमस्तीति कल्पयितुं युक्तं, ज्ञानाश्रयस्यात्मनो नैयायिकादिप्रकल्पितस्य विज्ञानप्रबन्धस्य वा तदानीमभावात् । नच निराश्रया शक्तिर्युक्ता । तस्मात्सामर्थ्याद्देह एव तदानीमाश्रयः । अन्यस्य ज्ञानाधारात्मनः—ज्ञानाधारश्च भावस्य विज्ञानप्रबन्धस्यात्मनो वा तदानीमसत्त्वात् । ततश्चान्ते मरणावस्थायां देहस्याश्रयस्य निवृत्तौ निराश्रयं कथं ज्ञानमवतिष्ठेतेति सिद्धोऽनागतजन्माभावः ॥ १८६५ ॥ १८६६ ॥ १८६७ ॥ ॥ १८६८ ॥

**तदनन्तरसम्भूतदेहान्तरसमाश्रयः ।**
**यदि देहोऽपरो दृष्टः कथमस्तीति गम्यते ॥ १८६९ ॥**
**भिन्नदेहप्रवृत्तं च गजवाज्यादिचित्तवत् ।**
**एकसन्ततिसम्बद्धं तद्विज्ञानं कथं भवेत् ॥ १८७० ॥**
**एको ज्ञानाश्रयस्तस्मादनादिनिधनो नरः ।**
**संसारी कश्चिदेष्टव्यो यद्वा नास्तिकता परा ॥ १८७१ ॥**

अथापि स्यान्मरणसमनन्तरसमुद्भूतमन्तराभविकं देहमाश्रित्य चित्तवृत्तिर्भविष्यतीति, तदेतदसम्यक् । नहि मरणानन्तरमपरो देह उत्पद्यमानो दृष्टः । नचादृष्टस्यास्तित्वनिश्चयो युक्तः । तस्यासद्व्यवहारविषयत्वात् । नचैकसन्तानवर्त्तिनश्चेतसो देहान्तरसमाश्रयणं युक्तम्, गजवाज्यादिचित्तवदेकसन्तानसम्बन्धित्वहानिप्रसङ्गात् । प्रयोगः—यद्भिन्नदेहप्रवृत्तं विज्ञानं न तदेकसन्तानसम्बद्धं, यथा गजवाजिनोश्चित्तं, भिन्नदेहवृत्तं चान्तराभावमरणभवयोश्चित्तमिति व्यापकविरुद्धोपलम्भप्रसङ्गः । नचैवं, तस्माद्विपर्ययः । यदेकसन्तानसम्बद्धं तद्भिन्नदेहप्रवृत्तं न भवति, यथा गजचित्तमश्वदेहानाश्रितम्, एकसन्तानसम्बद्धं च प्राणिनश्चित्तमिति विरुद्धव्याप्तोपलब्धिः । भिन्नदेहप्रवृत्तत्वविरुद्धेनाभिन्नदेहप्रवृत्तत्वेनैकसन्तानसंबद्धत्वस्य व्याप्तत्वात् । एक इत्याद्युपसंहारः । आदिरुत्पादो निधनं नाशः, न विद्येते आदिनिधने यस्यासा-

वनादिनिधनः। नर इत्यात्मा। यद्वा नास्तिकता परेत्यनेन परलोकिनोऽभावात्पर-लोकाभाव इत्येतत्सूत्रं सूचयति ॥ १८६९ ॥ १८७० ॥ १८७१ ॥

तदत्रेत्यादिना प्रतिविधत्ते।

**तदत्र परलोकोऽयं नान्यः कश्चन विद्यते।**
**उपादानतदादेयभूतज्ञानादिसन्ततेः ॥ १८७२ ॥**
**काचिन्नियतमर्यादाऽवस्थैव परिकीर्त्यते।**
**तस्याश्चानाद्यनन्तायाः परः पूर्व इहेति च ॥ १८७३ ॥**
**दृष्टमात्रसुखासक्तैर्यथैतावति कल्प्यते।**
**परलोकोऽन्यदेशादिस्तथाऽत्रास्माभिरुच्यते ॥ १८७४ ॥**
**यदि तद्व्यतिरिक्तस्तु परलोको निषिध्यते।**
**तदा साधनवैफल्यं तदसत्त्वे विवादतः ॥ १८७५ ॥**
**सन्ततेर्नन्ववस्तुत्वान्नावस्थान्तरसम्भवः।**
**तत्रावस्थापितो लोकः परो वा तात्त्विकः कथम् ॥ १८७६ ॥**
**नैव सन्ततिशब्देन क्षणाः सन्तानिनो हि ते।**
**सामस्त्येन प्रकाश्यन्ते लाघवाय वनादिवत् ॥ १८७७ ॥**

तत्र कोऽयं परलोको नाम यस्य भवता निषेधः क्रियते, किं विज्ञानादिस्कन्धच-तुष्टयादुपादानोपादेयत्वेन कार्यकारणभूतादन्य आहोस्वित्तदेव। न तावदाद्यः पक्षः, तस्यानभ्युपेतत्वात्। नह्युपादानोपादेयभूताया विज्ञानादिसन्ततेरन्यः परलोकोऽ-त्रास्ति, यस्याभ्युपगमः स्यात्। किं तर्हि?। तस्या ज्ञानादिसन्ततेरनाद्यनन्तायाः काचिदेव वर्षशताद्यवधिरूपमर्यादाव्यवस्थैव परलोकः पूर्व इहेति वा व्यवस्थाप्यते। यथा भवद्भिर्दृष्टमात्रसुखाभिषङ्गादेतावतीन्द्रियगोचर एवान्यदेशादिः परलोकादित्वेन कल्पते। यथोक्तम्—"एतावानेव पुरुषो यावानिन्द्रियगोचरः, तथा पुनरुक्तदेशान्तरं कालान्तरमवस्थान्तरं वा परलोक" इति। यदि तु कार्यकारणभूतविज्ञानादिसन्तान-व्यतिरिक्तस्य परलोकस्य निषेधः क्रियते तदा सिद्धसाध्यत्वात्साधनवैफल्यं, तथाभू-तस्य परलोकस्यानभ्युपगतत्वात्। ननु च सन्ततेरवस्तुत्वात्तस्यामवस्थाविशेषो यो व्यवस्थापितः सोऽप्यवस्त्वेव, ततश्च तत्र तस्यां सन्ततावावस्थाविशेषेऽवस्थापितोऽयं परलोकोऽपि न पारमार्थिकः स्यात्। नैष दोषः। सन्ततिशब्देन क्षणा एव वस्तु-

भूताः सन्तानिनो व्यवहारलाघवाय सामस्त्येन युगपत्प्रकाश्यन्ते, वनादिशब्देनेव धवादयः ॥ १८७२ ॥ १८७३ ॥ १८७४ ॥ १८७५ ॥ १८७६ ॥ १८७७ ॥

कथं तर्हि सन्ततेरवस्तुत्वं पूर्वमुक्तं सन्तानादीव कारित्रमित्यत्र प्रस्ताव इत्याह—**एकत्वेनेत्यादि** ।

**एकत्वेनावक्तृसत्वान्निःस्वभावतया मता ।**
**तत्त्वान्यत्वाद्यनिर्देश्या वियत्कमलपङ्क्तिवत् ॥ १८७८ ॥**
**सा चानादिरनन्ता च न सिद्धिं कथमृच्छति ।**
**यद्यहेतुकमेतत्स्याच्चित्तमाद्यतया मतम् ॥ १८७९ ॥**
**नित्यहेतुसमुद्भूतं नित्यं सत्स्वत एव वा ।**
**भूतमात्रोद्भवं वाऽपि यद्वाऽन्यज्ञानमात्रजम् ॥ १८८० ॥**
**गर्भादावादिविज्ञानं तत्राहेतु न युज्यते ।**
**कादाचित्कतया सत्त्वं सर्वथाऽस्यान्यथा भवेत् ॥ १८८१ ॥**
**नापि नित्यमनःकालदिगीशात्मादिभिः कृतम् ।**
**तत एव सदा सत्त्वप्रसङ्गात्तद्भावतः ॥ १८८२ ॥**
**एकं नित्यस्वभावं च विज्ञानमिति साहसम् ।**
**रूपशब्दादिचित्तानां व्यक्तं भेदोपलक्षणात् ॥ १८८३ ॥**
**क्षोणीतेजोजलादिभ्यो भूतेभ्यो भूतिरस्य न ।**
**व्यक्तिर्वा सर्वचित्तानां यौगपद्यप्रसङ्गतः ॥ १८८४ ॥**
**स्थिररूपं परैरिष्टं तद्धि भूतचतुष्टयम् ।**
**सहकारिव्यपेक्षाऽपि स्थिरे पूर्वमपाकृता ॥ १८८५ ॥**

या त्वेकत्वेन कल्पिता सन्ततिः सा तत्त्वान्यत्वाभ्यामवाच्यत्वादवस्तुत्वेनाभिमता—आकाशाम्भोरुहपङ्क्तिवदिति, न तस्या अवस्थाविशेषे परलोकव्यवस्थाऽस्माभिः क्रियते । अथास्या एव विज्ञानादिसन्ततेः परलोकसंज्ञितायाः प्रतिषेधः क्रियते, तदा तस्यास्तावत्स्वरूपनिषेधद्वारेण परलोकनिषेधो न शक्यते कर्तुं, दृष्टस्यापह्नोतुमशक्यत्वात् । किं तर्हि? । अनाद्यनन्तत्वधर्मनिषेधद्वारेण । सा चेयमनाद्यनन्ता कथं न सिद्ध्यति । यदि यत्तज्जन्मचित्तमाद्यतया मतं निर्हेतुकं वा स्यात्, नित्यविज्ञानेश्वरादिहेतुसमुद्भूतं वा, यद्वा स्वत एव नित्यं, भूतमात्रादुत्पन्नं वा, अन्यसन्ता-

नवर्त्तिज्ञानहेतुकं वेति पञ्च पक्षाः। यदि हि स्वसन्तानवर्त्तिपूर्वपूर्वज्ञानहेतुकं पूर्वमेव चित्तं स्यात्तदा स्यादनादिता चित्तसन्ततेर्नान्यथेत्यभिप्रायेणैषां पक्षाणामुपन्यासः। तत्र न तावदाद्यः पक्षो नित्यसत्त्वादिप्रसङ्गात्। अपेक्षया हि भावाः कादाचित्का भवन्ति, यश्च निर्हेतुकः स न किंचिदपेक्ष्यत इति किमिति विरमेत। नापि द्वितीयपक्षोऽत एव नित्यसत्त्वप्रसङ्गात्। कारणवैकल्याद्धि कार्याणामसत्त्वं, यच्चाविकलकारणं तत्किमिति न भवेदिति वक्तव्यम्। नापि तृतीयः पक्षः, कस्मात्?, तदभावतः—सदा सत्त्वाभावतः। एकमित्यादिना तमेव तदभावं दर्शयति। अनेन प्रतिज्ञायाः प्रत्यक्षे विरोधमाह। क्षोणीत्यादिना चतुर्थं पक्षं निराकरोति। क्षोणी—पृथिवी। नित्येश्वरादिहेतुसमुद्भवपक्षवदत्रापि तुल्यो दोषः, यतो महाभूतचतुष्टयं परैर्नित्यमिष्टम्। नच सहकारिकारणापेक्षणानुक्रमेण नित्यादुत्पत्तिरिति युक्तं वक्तुम्, नित्यस्यानुपकारिणि सहकारिणि नापेक्षेति निर्लोठितप्रायत्वात्॥ १८७८॥ ॥ १८७९॥ १८८०॥ १८८१॥ १८८२॥ १८८३॥ १८८४॥ १८८५॥

**अथ क्षणिकमेवेदं परैरप्यभिधीयते।**
**कथं स्वोपगमस्तेषामेवं सति न बाध्यते॥ १८८६॥**
**बाध्यतां काममेतत्तु न्याय्यमित्युपगम्यते।**
**क्षणिकं सर्वयुक्तिभ्यः सर्वभावविनिश्चितम्॥ १८८७॥**

अथेदं महाभूतचतुष्टयं परैश्चार्वाकैः क्षणिकमभ्युपगम्यते यथोक्तदोषभयात् तदाऽपि दोष एवेत्यभिप्रायः। तथाहि—न तावद्बुद्धिदेहयोः कार्यकारणभावसिद्धौ किंचित्प्रमाणमस्ति, परस्य येन तद्व्यवहारः सिद्ध्येत्। प्रयोगः—यत्र यद्भावसिद्धौ न किंचित्प्रमाणमस्ति न तत्र तद्व्यवहारः प्रेक्षावता कार्यः, यथा वह्नौ शीतव्यवहारः। नास्ति च बुद्धिदेहयोः कार्यकारणभावसिद्धौ किंचित्प्रमाणमिति व्यापकानुपलब्धिः। नचासिद्धता हेतोः, तथाहि—प्रत्यक्षानुपलम्भसाधनः कार्यकारणभावः स चान्वयाद्व्यतिरेकाद्वा विशिष्टादेव निश्चीयते, न दर्शनादर्शनमात्रेण। तत्रान्वयात्कार्यनिश्चये कर्त्तव्ये येषामुपलम्भे सत्युपलब्धिलक्षणप्राप्तं पूर्वमनुपलब्धं सदुपलभ्यत इत्येवमाश्रयणीयम्, अन्यथा हि यद्युपलब्धिलक्षणप्राप्तमनुपलब्धमित्येवं नापेक्षेत, तदा तत्र कार्यस्य प्रागपि सत्त्वमन्यतो वा देशेऽपगमनं (सम्भाव्येत)। येन कारणात्प्रागवस्थिताः कुड्यादयस्तेषां कारणता न निषिद्धा स्यात्। उपलब्धिलक्षण-

प्राप्तानुपलम्भोपदर्शने तु सा निषिद्धा भवति। तत्र तस्या व्यभिचारात्। एवं तावदन्वयात्कार्यनिश्चयः। व्यतिरेकादपि कार्यनिश्चये सत्सु तदन्येषु समर्थेषु तद्धेतुषु यस्यैकस्याभावे न भवतीत्येवमाश्रयणीयम्, अन्यथा हि केवलं तदभावे न भवतीत्युपदर्शने सन्दिग्धमत्र तस्य सामर्थ्यं स्यात्, अन्यस्यापि तत्समर्थस्याभावात्, ततश्चैवमपि सम्भाव्येत—अन्यदेव तत्र समर्थमस्ति, तदभावात्तन्निवृत्तं, यत्पुनरेतन्निवृत्तौ सत्यामस्य निवृत्तिरुपलभ्यते सा यदृच्छासंवादः। मातृविवाहोचितदेशजन्मनः पिण्डखर्जूरस्यान्यत्र देशे मातृविवाहाभावे सत्यभाववत्। तस्मात्समर्थेष्विति विशेषणीयम्। एवं हि तस्यैव कारणत्वं निश्चीयते, तद्व्यतिरेकस्यैवानुविधानात्। नह्यनुपकारिणो व्यतिरेकः केनचिदनुविधीयतेऽतिप्रसङ्गात्। एवमन्वयव्यतिरेकाभ्यामसंदिग्धं कार्यकारणत्वं प्रतीयते नान्यथा। न चेदृशोऽन्वयो व्यतिरेको वा कायचित्तयोर्निश्चितोऽस्ति। तथाहि—न तावत् स्वदेहबुद्ध्योरन्वयनिश्चयः शक्यते कर्तुं गर्भादौ प्राक्चित्तोत्पत्तेः केवलकायोपलम्भाभावात्, नहि चित्तमन्तरेणोपलम्भो भवति। परशरीरेऽपि चेतसोऽनुपलब्धिलक्षणप्राप्तत्वान्न पौर्वापर्यग्रहणमस्ति। ततो नान्वयनिश्चयः। नापि व्यतिरेकनिश्चयः। तत्रापि हि न तावदात्मदेहव्यतिरेकेण स्वबुद्धिव्यतिरेको ज्ञातुं शक्यः, सर्वथा स्वयमभावात्। नापि परदेहव्यतिरेकेण तत्सम्बन्धिन्या बुद्धेर्व्यतिरेको निश्चेतुं पार्यते। तद्बुद्धेरनुपलब्धिलक्षणप्राप्तत्वेन देहनिवृत्तावपि बुद्धिव्यतिरेके संशयात्। अतएव कुड्यादौ देहाभावेऽपि न बुद्धिव्यतिरेकनिश्चयः। तत्रापि तत्सत्तायामनुपलब्धिलक्षणप्राप्तत्वेन संशयात्। परिस्पन्दादिकार्य(र्यो ?)दर्शनादप्यभावनिश्चयो न युक्तः, नावश्यं (हि) कारणानां कार्यवत्त्वात् (त्वम् ?) अपिच देहविशेषपरिग्रहहेतोस्तृष्णाविपर्यासलक्षणस्य स्वकारणस्याभावात्किं तत्र कुड्यादौ बुद्धेरभाव आहोस्विद्देहव्यतिरेकादिति संशयः। तस्मान्नासिद्धो हेतुः। नापि विरुद्धः सपक्षे भावात्। नाप्यनैकान्तिकोऽतिप्रसङ्गात्, प्रेक्षावत्वहानिप्रसङ्गाच्च। तव तर्हि बुद्धेर्न देहः कारणमित्यत्र किं बाधकं प्रमाणमिति चेन्न, समस्त्येव प्रमाणम्। तथा च मनोमतेर्न देहः कारणमित्यत्र स्वतन्त्रा मानसी बुद्धिरित्यादिना प्रमाणमुपदर्शयिष्यति। तस्या एव देहान्तरप्रतिसन्धानं प्रत्याधिपत्त्याद्देहानाश्रितत्वे सिद्धे परलोकसिद्धेः। किंच—मनोमतेर्देहः कारणं भवतु, एकोऽवयविरूपो वा भवेदनेको वा परमाणुसंचयात्मकः, यद्वा—सेन्द्रियोऽनिन्द्रियो वा, किमुपादानकारणमाहोस्वित्सहकारिकारणमिति विकल्प्यते तत्र न तावदेकोऽवयवी युक्तः,

तस्य पूर्वनिषिद्धत्वात्। चतुर्महाभूतात्मकत्वहानिप्रसङ्गाच्च न ह्येकस्य स्वभावचतुष्टयं युक्तमनेकव्यवहारोच्छेदप्रसङ्गात्। न(च) स्यादनेकपरमाणुसंचयात्मकोऽङ्गीकर्त्तव्यः। ते च परमाणवः प्रत्येकं वा हेतवः स्युः समुदिता वा। न तावत्प्रत्येकं, प्रतिबीजाङ्कुरोत्पादवत्प्रतिपरमाणुविकल्पोत्पत्तिप्रसङ्गात्। नापि समुदिताः, नासिकाद्येकाङ्गवैकल्येऽपि मानसानुत्पादापत्तेः, क्षित्यादीनामन्यतरापायेऽङ्कुरानुत्पत्तिवत्। नहि सामग्रीप्रतिबद्धं कार्यमन्यतराभावे भवति, तत्प्रतिबद्धस्वभावत्वहानिप्रसङ्गात्। अथ यथा सन्निधानं सर्वेऽपि चैतन्यस्य हेतवः। एवं तर्हि विकलाविकलाङ्गदेहजनितयोर्विशेषेण भवितव्यं कारणभेदात्। अन्यथा कार्यस्य भेदो निर्हेतुकः स्यात्। न वाऽविकलाङ्गस्य सतः पश्चाद्विकलाङ्गतायामुपजातायां कश्चिन्मनोमतेर्विशेषोऽस्ति। श्रुतादिसंस्कारस्य तदानीमप्यविकलस्यैवानुवृत्तेः। गजादिदेहवर्त्तिनी च मनोमतिरतिशयवती प्राप्नोति, न मनुष्यधीः। ये बाल्यशरीरमनुजन्मानस्ते मन्दधियः, महाशरीरास्तु पटुधियः। कारणस्य निर्ह्रासातिशयाभ्यां कार्यस्य निर्ह्रासातिशययोगदर्शनात्। नहि यद्भेदाद्यस्य भेदो न भवति, तत्तस्य कार्यं युक्तमतिप्रसङ्गात्। कार्यभेदस्य च निर्हेतुकत्वप्रसङ्गाच्च। नापि सेन्द्रिय इति पक्षः। तथाहीन्द्रियात्प्रत्येकं वा मनोमतिः स्यात्समस्ताद्वा। न तावत्प्रत्येकम्, एकैकेन्द्रियापायेऽपि मनोमतेरविकलत्वात्। तथाहि—प्रसुप्तिकादिरोगादिना कार्येन्द्रियादीनामुपघातेऽपि मनोधीरविकृतैकाऽविकलां स्वसत्तामनुभवति। नच यस्य विकारेऽपि यन्न विक्रियते तत्तत्कार्यं युक्तमतिप्रसङ्गात्। किंच—चक्षुरादिविज्ञानवत्प्रतिनियतार्थग्राहिता निर्विकल्पकत्वमर्थसन्निधानसापेक्षप्रवृत्तिकता च प्राप्नोति, अभिन्नकारणत्वात्। युगपदनेकविकल्पोत्पत्तिप्रसङ्गाच्च। नापि समस्तादिति पक्षः—एकेन्द्रियाभावेऽप्यभावप्रसङ्गात्। एकसहकार्यपायेऽङ्कुराद्यपायवत्। नाप्यनिन्द्रिय इति पक्षः, कलेवरच्युतस्यापि पाण्यादेस्तद्धेतुत्वप्रसङ्गात्। विशिष्टस्य हेतुत्वे सेन्द्रिय एवेष्टः स्यात्। नहि सेन्द्रियादन्यो विशिष्टः शक्यते दर्शयितुम्। नाप्युपादनकारणमिति पक्षः। तथाहि—यः कार्यगताशेषविशेषानुयायिनः स्वभावस्य सदा चात्मसत्ताप्रत्युपस्थानतस्तदुपकारी यस्य विकारापादनमन्तरेण कार्यमशक्यविकारं स एव कारणविशेष उपादानत्वेन प्रसिद्धः। यथा पूर्वपूर्वो मृदात्मा कलाप उत्तरोत्तरस्य घटसंज्ञितस्य कार्यकलापस्योपादानम्। अत एव यो यद्विकारयितुमिच्छति स तदुपादानविकारेणैव तद्विकारयति नान्यथा। न ह्युपादाने पूर्वस्मिन्नप्रतिबद्धसामर्थ्ये सति कार्यस्योत्तरस्योत्पि-

त्सुनः केनचित्प्रतिघातः शक्येत कर्तुम् । यथा घटादेरुत्तरस्योत्पत्स्यमानस्य कार्यस्य पूर्वकं मृदात्मानमप्रतिबद्ध्य(द्ध्वा?) समर्थक्षणोत्पादनतः शक्यते न विकारापादानं(?) कर्तुम् । सर्वत्रैव च विकारोत्पादनेऽयमेव क्रमो यदुतासमर्थान्तरोपादानक्षणोत्पादनम्(?) । अन्यथा न किंचित्साक्षाद्विरुद्धं सम्भवति । यदि हि सम्भवेत् कार्यस्यापि कारणविकारापादनवत्साक्षाद्विकारापादनं स्यात्, नोपादानविकारापादनद्वारेणैव । यत्पुनः प्रदीपमधिकृत्यैव देशान्तरवर्त्तिन्यास्तत्प्रभाया अन्तरावरणेन विकारापादनं क्रियते, तन्न तस्याः साक्षात्प्रदीप उपादानकारणम् । किं तर्हि ? । पूर्वपूर्वः प्रभाक्षणः । तथैवासमर्थक्षणान्तरोत्पादनलक्षणविकारापादनात् । आवरणेन प्रभा प्रतिहन्यते । यत्पुनर्वस्त्वधिकृत्यैव यद्विकार्यते न तत्तदुपादानं, यथा गवयमधिकृत्य गौर्विकार्यमाणः । अविकृत्य च शरीरं मनोमतेरनिष्टाचरणादिना दुर्मनस्कृतादिलक्षणस्य विकारस्योपादानं क्रियत इति व्यापकविरुद्धोपलब्धिः । ननु चाहारश्चापा(पाका?)दिना देहस्य पुष्ट्यादिविकारे सति रागादिलक्षणा मनोमतेर्विकारापत्तिर्दृश्यत एव । यदि नाम दृश्यते ततः किम् । नह्येतावता हेतोरसिद्धत्वम् । तथाहि—यदविकारेऽपि यस्य विकारापादनं संभवति न तत्तदुपादानमित्येतावन्मात्रमिह विवक्षितम् । संभवन्ति च कस्यचिदवस्थायामनिष्टाचरणादिना देहविकारापादनमन्तरेणैव बुद्धेर्विकारापादनमिति कुतोऽसिद्धत्वं हेतोः । नचाप्येवम्भूतात्कादाचित्कात्तदीयविकारानुविधानात्तदुपादनत्वं युक्तमतिप्रसङ्गात् । एवं हि विषयस्याप्युपादानत्वं स्यात् । तथाहि—शार्दूलशोणितादिबीभत्सविषयदर्शनादिबलेनापि कस्यचित्कातरमनसः संजायत एव मोहादिलक्षणो मनसो विकारः, न चैतावता सा मनोमतिस्तदाश्रिता भवति । कामशोकादिवितर्केण च मनस्युपहते देहविकारदर्शनाद्देहस्यापि तदुपादानताप्रसङ्गात् किन्तु नियमेन साक्षाच्च यस्यैव यो विकारमनुविधत्ते स तदुपादानो युक्तः । नच रागादिलक्षणो विकारो नियमेन शरीरपोषादितो भवति । कस्यचित्परिपुष्टशरीरस्यापि प्रतिसङ्ख्यानवतोऽसम्भवात् । तथा परिक्षीणवपुषोऽप्ययोनिसौमनस्कारबहुलस्य पुंसस्तिर्यग्गतस्य च कस्यचिदपचितपरिमाणस्याप्यतीव रागादिदर्शनात् । नच यदभावेऽपि यद्भवति तत्तस्य कार्यं युक्तमतिप्रसङ्गात् । नापि साक्षाद्देहाद्रागादिः संभवति, अयोनिसौमनस्कादिव्यवहितत्वात् । तथाहि—देहपुष्टौ सत्यामन्तश्चेष्टव्यलक्षणविषयोपजनितसुखाद्यनुभवः । तत्रात्मदेहवतस्तस्मिन्सुखादौ तत्साधने च नित्यादिविपर्यासपरिगतमनसो ममेदमनुग्रा-

हकमुपघातकं चेत्यात्मोपकारकप्रतिकूल्यादिविकल्पस्ततस्तत्परितोषदौर्मनस्यादिसम्भवस्तस्माच्च सुखादिविषयाध्यवसायादिप्रसूतय इत्येतच्चान्वयव्यतिरेकाभ्यां प्रतीतमेव। सौमनस्यादिसम्भव एव रागादिदर्शनात्, सत्यपि पुष्ट्यादौ तदसम्भवे चादर्शनात्। अतो न पुष्ट्यादि साक्षान्मनोमतेर्विकारकम्। अत एव च साक्षादनुपकारित्वात्सहकारिकारणमपि न देहस्तस्या इति सिद्धम्। साक्षादेवोपकारिणामङ्कुरादिषु क्षित्यादीनां सहकारित्वप्रसिद्धेः, अन्यथाऽतिप्रसङ्गः स्यात्। तस्मात्सजातीयपूर्वबीजप्रबोधप्रवृत्तय एव रागादयः। देहपुष्टियौवनकालादयस्तु केषांचित्प्रतिसङ्ख्यानाभ्यासविकलानां तद्वासनाप्रबोधहेतवो भवन्ति। भवतु वा साक्षादुपकारी देहो मनोमतेः स्वोपादानप्रवृत्तायाः कदाचित्। तथाऽपि न देहनिवृत्तावपि तस्या निवृत्तिः सिद्ध्यति। यथा वह्निनिवृत्तावपि न घटादिविनिवृत्तिः स्वोपादानप्रवृत्तत्वादिति नानिष्टापत्तिः। नाप्यनैकान्तिकता हेतोरतिप्रसङ्गात्। नापि विरुद्धता सपक्षे भावात्। अतो नोपादानकारणं देहः। नापि सहकारिकारणमिति सिद्धं मनोमतेः पूर्वपूर्वबुद्धिप्रभवत्वमेव। स्यादेतत्—ययोः सहस्थितिनियमस्तावुपादानोपादेयभूतौ यथा प्रदीपप्रभे। अस्ति च सहस्थितिनियमः शरीरमनोविज्ञानयोरिति स्वभावहेतुः। तदयमन्यतरासिद्धो हेतुः। विरूपे धातौ शरीरमन्तरेणापि मनोमतेरवस्थानाभ्युपगमात्। नापीष्टसिद्धिर्मनोमतेरपि देहं प्रत्युपादानत्वप्रसङ्गात्। अनैकान्तिकता च। हेतुभेदादपि सहावस्थानसम्भवात्। यथाऽग्नितामद्रवत्तयोः। तथाहि—वह्निसहकारिताम्रं द्रवत्तामारभते, न केवलम्, एवमिहापि देहस्योपादानं कललादि मनोविज्ञानसहकारि देहमुत्तरमारभते, इत्यतस्तयोः सह स्थानं नोपादानोपादेयभावादित्यतोऽनेकान्त एव। अथापि स्यात्—यद्यप्युत्तरकालं मनोधीः पूर्वपूर्वबुद्धिप्रभवा भवति, तथापि या प्रथमकालभाविनी तस्या देहोपादानत्वादतो नाऽनादित्वसिद्धिरिति। तदेतदसम्यक्। न ह्यस्याः कल्पनायाः किंचित्साधकं प्रमाणमस्तीति प्रतिपादितमेतत्। बाधकमपि नास्तीति चेन्न। विद्यत एव बाधकम्। तथाहि—यदि देहात्सकृदुत्पन्ना सती मनोधीः पश्चात्सजातिसमुद्भवा स्यात्तदोत्तरकालं सर्वदैव पूर्वपूर्वमनोविज्ञानसमुद्भवैव स्यात्, न विजातीयचक्षुरादिविज्ञानसमुद्भवा, न हि धूमोऽग्नेः सकृदुद्भूय पश्चादन्यतो विजातीयादुद्भवति। नच मनोमतिरुत्तरकालं मनोविज्ञानसमुद्भवैवानुभूयते। किं तर्हि। अनियतसमनन्तरप्रत्ययप्रसवा। नच यद्यतः प्रथमतरमुदयमासादयत्समुपलब्धं तत्ततोऽन्यतो भवितुमर्हति, अहेतुकत्वप्रसङ्गात्।

प्रथमतरं वा नियतचक्षुरादिविज्ञानसमनन्तरमुदयमासादयन्ती मनोधीरनुभूयत इति। अतोऽप्रतिनियतविज्ञानमात्रभाविनीति सिद्धम्। किंच—यदि प्रथमकाल एव मनोमतेरुपादानकारणं देहो नोत्तरकालं तदा देहनिरपेक्षा सा किं न प्रवर्त्तेत, नह्यनुपकारिणि देहे तस्याः काचिदपेक्षा युक्ता। यस्यापि तद(व?)बुद्ध्यन्तरपूर्विका बुद्धिस्तस्यापि केवला किं न प्रवर्त्तेत इति चेन्न। प्रवर्त्तेत एव। यथा विरूपे धातौ। याऽनुरूपे स्पृहावती सा तत्सापेक्षा वर्त्तेत इत्यनुपालम्भ एव। अथोत्तरकालं देहस्याप्युपकारित्वमङ्गीक्रियते तदाऽनेकविज्ञानप्रबन्धप्रसवप्रसङ्गः। शरीरस्यापरविज्ञानोपादानभूतस्याविकलस्य तज्जनकत्वेनावस्थितत्वात्। तथाहि—यद्यदेवोत्पद्यते देहाद्विज्ञानं तत्तदपरं पृथक्पृथग्विज्ञानं सन्तनोतीत्येकस्य प्राणिनः प्रतिक्षणमप्रमेयविज्ञानसन्तानाः प्रसूयेरन्। नचैवमनुभवोऽस्ति। अथापि स्यादुत्तरकालं देहस्य नोपादानकारणत्वेन पृथगुपकारित्वमिष्टम्। किं तर्हि?। प्रबन्धेन स्वोपादानतः प्रवर्त्तमानाया मनोधिय उत्तरोत्तरकार्यप्रसवं प्रति सहकारित्वादुपकारी देह इत्यतो न देहनिरपेक्षा सा प्रवर्त्तेत इति। एतदपि मिथ्या। नहि यो यस्य यथा जनकत्वेन प्रसिद्धः स तं जनयन्नन्यथा जनयति विशेषाभावात्। तथाह्यालोकादिरनुपहतचक्षुर्विज्ञानं प्रत्यालम्बनभावेन जनकत्वमनुभूय न पुनस्तस्यान्यथा जनको भवति। यदाह—"ग्राह्यताया न खल्वन्यज्जननं ग्राह्यलक्षणम्। साक्षान्न ह्यन्यथा बुद्धे रूपादिरुपकारक" इति। अन्यथा कार्यस्य कारणकृतस्वभावभेदाभेदस्य व्यवस्थानं न स्यात्, तद्गतोपकाराननुविधानात्। ततश्चाहेतुकत्वप्रसङ्गः। नच प्रथमकालं देहस्य विज्ञानं प्रति साक्षाज्जनकत्वव्यतिरेकेणान्यदुपादानत्वं त्वया गृहीतम्। किं तर्हि?। साक्षादुपकारित्वमेव। तच्चोत्तरकालमप्यस्तीति किं नोपादानकारणं स्यात्। अथान्यत्पूर्वमपि माभूत्पश्चाद्वदविशेषात्। नचोत्तरकालमपि पूर्वविज्ञानसहकारी देह एवोत्तरोत्तरबुद्धेरुपादानं भविष्यतीति शक्यं वक्तुम्, पूर्वं विस्तरेणोपादानत्वस्य निषिद्धत्वात्। प्रथमजन्मबुद्धेरपि बुद्ध्यन्तरपूर्वकत्वप्रसङ्गात्। अतएवानित्यभूतपक्षेप्येतदाचार्यीयं दूषणं सुतरां श्लिष्यति। यदाह—"देहात्सकृदुत्पन्ना धीर्यदि स्वजात्या नियम्यते।(?) परतश्चेत्समर्थस्य देहस्य विरतिः कुत" इति। तस्मात्सिद्धा मनोबुद्धेरनादिता। अथवा सर्वैव बुद्धिरविशेषेणानादिः सिद्धा। तथाहि—आदिबुद्धिर्भवन्ती, अक्षबुद्धिर्वा भवेत्, मनोबुद्धिर्वा। न तावदाद्यः पक्षः, सुप्तमूर्च्छान्यचित्तानां सत्यप्यक्षेऽनुगुणमनस्काराभावादक्षबुद्धेरनुत्पत्तेः। अतो न केवलमिन्द्रियमक्षबुद्धेः कार-

णम्। अपि तु मनस्कारविशेषसापेक्षमिति निश्चीयते । अन्वयव्यतिरेकसमधिगम्यत्वात्कार्यकारणभावस्य। न चापि यतो यत्प्रथमतरमुत्पद्यमानं निश्चितं तत्ततोऽन्यस्मात्प्रथमतरमुदयमासादयत्यहेतुकत्वप्रसङ्गात्। धूम इवानग्नेः । प्रथमतरं चाक्षबुद्धिरुत्पद्यमानाऽनुगुणमनस्कारसापेक्षैवोत्पद्यत इति । तस्मान्न केवलमिन्द्रियमस्याः कदाचित्कारणमिति सिद्धम् । अन्यथा निर्हेतुकत्वप्रसङ्गो बाधकं प्रमाणम् । नापि मनोबुद्धिरिति पक्षः। नहि साऽक्षैरनुपलब्धेऽर्थे स्वातन्त्र्येण प्रवर्त्तते, अन्धबधिराद्यभावप्रसङ्गात्। प्रवर्त्ततां वा, किं सा सविकल्पिका, आहोस्विदविकल्पिकेति वक्तव्यम्। तत्र न तावदाद्यः पक्षः। तथाहि—विकल्पः प्रवर्त्तमानः सर्व एव बोधकशब्दाकारानुस्यूत एव वर्त्तते, अन्तर्जल्पाकारतया नित्यमनुभूयमानत्वात्। सा च वाचकशब्दाकारता विकल्पस्य सङ्केतग्रहणवशाद्वा भवेत्, यद्वा वाचकात्मनः शब्दरूपस्य ज्ञानात्मधर्मरूपत्वाद्बोधरूपवच्छब्दार्थग्रहणाद्वेति विकल्पात् । तत्र न तावत्सङ्केतग्रहणादिति पक्षः, पूर्वं सङ्केतस्याग्रहीतत्वात् । नापि द्वितीयः पक्षः। तथाहि—द्विविधः शब्दात्मा स्वलक्षणरूपः सामान्यलक्षणरूपश्च, तत्र यस्तावत्स्वलक्षणरूपस्तस्यावाचकत्वानुभवाकारतया ज्ञानस्य सविकल्पकत्वं नाप्यसौ ज्ञानस्यात्मगतो धर्मो नीलादिवद्बहीरूपेण भासनात्। अन्यथा हि नीलादीनामपि ज्ञानधर्मत्वं स्यात्। अविशेषात्। ततश्च विज्ञानमात्रमेव विश्वं स्यात् न भूतपरिणामरूपम्। ननु साकारज्ञानपक्षे नीलादिप्रकारो ज्ञानस्यात्मगत एव धर्मो बहीरूपेण भासते तत्किमुच्यते बहीरूपेण भासनाज्ज्ञानात्मधर्मो न भवतीति। सत्यमेतत्। किंतु बाह्यार्थोपरागितया ज्ञानस्य तथा प्रतिभासनान्नात्मगतोऽसौ ज्ञानस्येति व्यवस्थाप्यते। किं तर्हि?। बाह्यस्यैवेति। तत्रैव तस्य निजत्वात्। ज्ञाने तु तस्यार्थोपधानकृतत्वेनागन्तुकत्वात्। तस्मान्न स्वलक्षणरूपः शब्दात्मा वाचको नाप्यसौ ज्ञानात्मधर्मः। सामान्यलक्षणरूपस्तु यद्यपि वाचकस्तथाप्यसौ ज्ञानात्मधर्मो न भवति । बाह्यपरशब्दस्वलक्षणश्रोत्रावसेये तस्य योज्यमानत्वात्, न ज्ञानात्मनि । न ह्यन्यगतं सामान्यमन्यत्र योज्यते, ज्ञानेऽतिप्रसङ्गात्। एवं हि गोत्वमश्वादावपि योज्येत । नचागृहीतशब्दस्वलक्षणे धर्मिणि तद्धर्मो वाचकात्मा योजयितुं शक्यते। धर्माणां धर्मिपरतन्त्रतया स्वातन्त्र्येणाग्रहणात्। नापि विकल्पेन स्वलक्षणात्मा धर्मी ग्रहीतुं शक्यते। तस्य सामान्यलक्षणविषयत्वात्। तस्मादनादिस्वलक्षणानुभवाहितवासनाप्रबोधजन्मानो विकल्पा इति सिद्धम्। नापि शब्दार्थग्रहणादिति पक्षः, न ह्यर्थे शब्दाः सन्ति तदात्मानो

वा, अव्युत्पन्नस्यापि प्रतीतिप्रसङ्गात् । यथेष्टमर्थेषु नियोगाभावप्रसङ्गाच्च । किंच—अनित्यादिरूपेणार्थस्याविशेषेऽपि न विकल्पः सर्वानाकारान्युगपद्विकल्पयति । आकारान्तरव्यवच्छेदेन प्रतिनियतैकाकारोपग्रहेणैव विकल्पस्योत्पत्तेः । अतश्चैकाकारविकल्पेन कारणं वक्तव्यम् । न चाभ्यासात्तदन्यद्वक्तुं शक्यम्, यथा कुणपादिविकल्पानाम् । ततश्च पूर्वाभ्यासवशेन विकल्पकस्य प्रवृत्तेरनादिर्विकल्पकबुद्धिरिति सिद्धम् । अथाविकल्पिकेति पक्षस्तदा न कदाचिद्विकल्पिका बुद्धिरुत्पद्यते । प्रोक्तनीत्या सङ्केतवशादुत्तरकालमुत्पद्यत इति चेन्न । निर्विकल्पकज्ञाने स्थितस्य भ्रंशः (पुंसः?) सङ्केतस्य कर्त्तुमशक्यत्वात् । तथाहि न यावच्छब्दसामान्यमर्थसामान्यं वा बुद्धाववभासते न तावत्सङ्केतः शक्यते कर्तुम् । नच विकल्पे विज्ञाने सामान्यं प्रत्यवभासते । यच्च प्रत्यवभासते स्वलक्षणं न तत्र तेन वा सङ्केतः क्रियते । व्यवहारार्थत्वात्तस्य । न च सङ्केतकालदृष्टस्य स्वलक्षणस्य व्यवहारकालेऽस्ति संभव इति न स्वलक्षणे सङ्केतकरणात्पूर्वं विकल्पोऽवश्याभ्युपगन्तव्यः । स चाभ्यासमन्तरेण न सिद्ध्यतीति सिद्धाऽनादिता । अपि च—यदि पूर्वजन्माभ्यासाहितवासनान्वयात्प्रथमजन्मभाविनी नेष्यते बुद्धिस्तदा सद्योजातस्य सतः शिशोस्तिर्यग्गतस्यापीदं सुखस्य साधनमिव दुःखस्येति व्यवसायः कथं भवेत् । येन सुखसाधनं स्तनादिकमन्विच्छति । तच्चालभमानो रोदनमारभते, प्राप्य च सहसा व्यपगतरुदितोऽभ्यवहारादिक्रियां कुरुते । न ह्यनेन कदाचित्स्तनादेः क्षुत्पीडाद्युपशमनादिहेतुत्वमनुभूतम् । नचापि प्रपातपतनादेरुपहतिकारणता । येन सद्यो जातोऽपि वानरादिशिशुरवपातपतनप्रभवदुःखान्मरणभीतो मातुरतीव क्रोडमाश्लिष्यति, प्रपातादिस्थानं च परिहरति । न ह्यननुभूतेष्टानिष्टसाधनफलानि नियमेन जिहासन्त्युपादित्सन्तेवाऽतिप्रसङ्गात् । अयसोऽयस्कान्तापसर्पणदृष्टान्तोऽप्ययुक्त एव, नहि तन्निर्हेतुकं, सर्वदा सत्त्वादिप्रसङ्गात् । सहेतुकत्वे वा यथा तस्य हेतुरयस्कान्तो निर्दिश्यतेऽन्वयव्यतिरेकसिद्धस्तथाऽस्यापि हानोपादानानुष्ठानस्य हेतुर्भाव्यः । नचासौ निर्देष्टुं शक्यते, अन्यत्राभ्यासात् । तस्मात्पूर्वाभ्यासकृत एवायं बालानामिष्टानिष्टोपादानपरित्यागलक्षणो व्यवहार इति सिद्धा बुद्धेरनादितेत्यभिप्रायः । तथाच स्वतन्त्रा मानसीत्यादिना, अपिच स्तनपानादावित्यादिना च साधारणं दूषणं वक्ष्यतीत्यलं बहुना । किंच—तेषां—चार्वाकाणां क्षणिकत्वमभ्युपगच्छताम्, स्वोपगमः—स्वसिद्धान्तो बाध्यते—भूतानां नित्यत्वाभ्युपगमो बा(ध्यते ।) ॥ १८८६ ॥ १८८७ ॥

**यदि न्यायानुरागाद्वः स्वपक्षेऽप्यनपेक्षता।**
**भूतान्येव न सन्तीति न्यायोऽयं पर इष्यताम्॥ १८८८॥**

अथ युक्त्युपेतत्वात्क्षणिकत्वमभ्युपगम्यते तदा विज्ञप्तिमात्रतानयस्तर्हि पर उत्कृष्टोऽभ्युपगम्यतां, तत्रापि युक्त्युपेतत्वस्याभ्युपगमकारणस्य तुल्यत्वात्॥ १८८८॥

कथमित्याह—**नावयव्यात्मते**त्यादि।

**नावयव्यात्मता तेषां नापि युक्ताऽणुरूपता।**
**अयोगात्परमाणूनामित्येतदभिधास्यते॥ १८८९॥**

**तेषामिति**। महाभूतानाम्। **अभिधास्यत** इति। समनन्तरमेव बहिरर्थपरीक्षायाम्॥ १८८९॥

यदि न सन्त्येव भूतानि कथं तर्हि प्रतिभासन्त इत्याह—**अबहिस्तत्त्वरूपा**णीत्यादिना।

**अबहिस्तत्त्वरूपाणि वासनापरिपाकतः।**
**विज्ञाने प्रतिभासन्ते स्वप्नादाविव नान्यतः॥ १८९०॥**

**अन्यत** इति। विज्ञानादन्यत्र बाह्य इति यावत्॥ १८९०॥

कथं तर्हि पृथिवीत्यादिव्यवहारो लोकशास्त्रयोरित्याह—**विज्ञानस्यैवे**त्यादि।

**विज्ञानस्यैव निर्भासं समाश्रित्य प्रकल्प्यते।**
**स्वप्नमायोपमं नेदं महाभूतचतुष्टयम्॥ १८९१॥**

यदि भूतानि न सन्ति कस्तर्हि ज्ञानहेतुरित्याह—**तदन्यस्ये**त्यादि।

**तदन्यस्य तदाभावे हेतुत्वं नोपपद्यते।**
**प्राग्भूतं भूतनिर्भासं ज्ञानं तु जनयेत्परम्॥ १८९२॥**

**तदन्यस्येति**। तस्माद्विज्ञानादन्यस्य भूतचतुष्टयस्य॥ १८९२॥

एवं भूतमात्रोद्भवं तावदाद्यं चित्तं न भवतीति प्रतिपादितम्, इदानीं च जन्यविज्ञानमात्रजमित्येतत्पक्षनिराकरणायाह—**सन्तानान्तरे**त्यादि।

**सन्तानान्तरविज्ञानं तस्य कारणमिष्यते।**
**यदि तत्किमुपादानं सहकार्यथवाऽस्य किम्॥ १८९३॥**
**उपादानमभीष्टं चेत्तनयज्ञानसन्ततौ।**
**पित्रोः श्रुतादिसंस्कारविशेषानुगमो भवेत्॥ १८९४॥**

उपादानतदादेयधर्मोऽयं यद्व्यवस्थितः ।
अन्वयव्यतिरेकाभ्यां निश्चितश्च स्वसन्ततौ ॥ १८९५ ॥
स्वोपादानबलोद्भूते सहकारित्वकल्पने ।
सन्तानान्तरचित्तस्य न काचिद्व्याहतिर्भवेत् ॥ १८९६ ॥

तत्—सन्तानान्तरचित्तं मात्रादिसंबन्धि, उपादानकारणं वा स्यात्सहकारिकारणं वा, न तावदुपादानकारणं, पुत्रज्ञानसन्तानेऽपि मातापितृश्रुतादिसंस्कारादिविशेषानुत्प(वृ?)त्तिप्रसङ्गात्, यथा पित्रोरेव स्वोत्तरबुद्धिषु । यस्मादुत्तरेषु क्षणेषु यत्पूर्वक्षणसंस्कारानुवर्त्तनम् । एवमुपादानोपादेयधर्मो व्यवस्थितः । स्वसन्तानेऽन्वयव्यतिरेकाभ्यां निश्चितत्वात् । अथ मतम्—यथैकस्मात्प्रदीपाद्दीपान्तरोत्पत्तौ न पूर्वदीपसंस्कारेण स्थौल्यादिलक्षणेन विशिष्टस्योत्तरस्य दीपस्य संभवः, किं तर्हि?, निःसंस्कारस्य प्रदीपमात्रस्योत्पत्तिः, अन्यतस्तु तस्य दीपान्तरस्य स्वेत्व(न्ध?)नादेः सकाशाद्विशेषः, तद्वत्तु तद्बुद्धेरिति । तन्न । यस्मात्प्रदीपादिसंस्कारः स्वाश्रयेऽपि तावत्सन्तानमवबध्नाति । अस्थिरत्वात्तस्य । तथाहीन्धनाय(प?)चये तस्यैव दीपस्य त(अस?)त्त्वं दृश्यते । नत्वेवमस्थिरः श्रुतादिसंस्कारः, तस्य चिरकालमवस्थानात् । अतो न दीपादिवन्निःसंस्कारस्य बुद्धिमात्रस्य सम्भवो युक्तः । किंच—प्रदीपादौ बहुतराल्पपरमाणुसंचयोत्पादानुकल्पितौ विशेषाविशेषौ, न त्वेकस्य वस्तुलक्षणस्य तत्र विशेषोऽस्त्यविशेषो वा । इह त्वेकस्मिन्नेव वस्तुलक्षणे श्रुतादिसंस्कारेण विशेषो मातृबुद्धिवर्त्तिनि, अविशेषस्तु सुतबुद्धिवर्त्तिनीति किं केन शास्यम् । किंच—उपादानकारणत्वेऽयं प्रसङ्ग उच्यते, न च दीपान्तरं दीपान्तरस्योपादानकारणं, भिन्नसन्तानत्वादिति यत्किंचिदेतत् । अपिच येषां संस्वेदजातीनां मातैव नास्ति तेषां कथमन्यविज्ञानजा बुद्धिरित्यलं प्रसङ्गेन । अथ सहकारिकारणमिति पक्षस्तदा सिद्धसाध्यता ॥१८९३॥ ॥ १८९४ ॥ १८९५ ॥ १८९६ ॥

तस्मादित्यनादित्वसाधने प्रमाणयति ।

तस्मात्तत्रादिविज्ञानं स्वोपादानबलोद्भवम् ।
विज्ञानत्वादिहेतुभ्य इदानीन्तनचित्तवत् ॥ १८९७ ॥

प्रयोगः—यद्विज्ञानवेदनासंज्ञासंस्कारस्कन्धचतुष्टयस्वभावं वस्तु तत्स्वोपादानबलोद्भूतं विज्ञानादित्वात्, यथा यौवनाद्यवस्थासु तदेव स्कन्धचतुष्टयम्, विज्ञानादि-

स्वभावश्च प्रथमजन्मचित्तादिकलाप इति स्वभावहेतुः । तत्रादिविज्ञानमिति विज्ञानग्रहणमुपलक्षणं । वेदनादयोऽपि गृहीतव्याः ॥ १८९७ ॥

साध्यविपर्यये हेतोर्बाधकं प्रमाणमाह—**अन्यहेत्वित्यादि** ।

**अन्यहेतुप्रतिक्षेपादहेतुत्वे च संस्थिते।**
**अन्यथा नियतो धर्मो नायं तस्य प्रसज्यते ॥ १८९८ ॥**

अन्येषां नित्यमनःकालदिगीशादीनां पूर्वं प्रतिक्षेपात्स्वोपादानस्य चानभ्युपगमेऽहेतुकत्वं स्यात्, ततश्चायं विज्ञानादित्वलक्षणो नियतो धर्मो न स्यात् । आकस्मिकस्य स्वभावस्य नियामकाभावेन प्रतिनियमायोगात् । अतो निर्हेतुकत्वे नियतविज्ञानादिधर्मानुपपत्तिर्बाधकं प्रमाणं कादाचित्कत्वानुपपत्तिश्च ॥ १८९८ ॥

एवमतीतं जन्म प्रसाध्यानागतमपि प्रसाधयितुं प्रमाणयन्नाह—**मरणेत्यादि** ।

**मरणक्षणविज्ञानं स्वोपादेयोदयक्षमम् ।**
**रागिणो हीनसङ्गत्वात्पूर्वविज्ञानवत्तथा ॥ १८९९ ॥**

यत्सरागं चित्तं तत्स्वोपादेयचित्तान्तरोदयसमर्थं सरागत्वात्पूर्वावस्थाचित्तवत्, सरागं च मरणचित्तमिति स्वभावहेतुः । नचासिद्धो हेतुः, यतो यद्भोगादिप्रतिपक्षनैरात्म्यदर्शनवियुक्तं चित्तं तत्सर्वं सरागमेव प्रतिपक्षवियुक्तत्वात्, सुरताभोगचित्तवदिति । नाप्यनैकान्तिक एतावन्मात्रहेतुकत्वाच्चित्तान्तरोदयस्येत्यविकलकारणानुपपत्तिर्बाधकं प्रमाणम् ॥ १८९९ ॥

एतदेव दर्शयति—**येन रूपेणेत्यादि** ।

**येन रूपेण विज्ञानं जनयत्परिनिश्चितम् ।**
**प्राक्पश्चादपि तद्बिभ्रदखण्डं किं न कारकम् ॥ १९०० ॥**

**तद्बिभ्रदिति** । स्वरूपम्—स्वभावमिति यावत् ॥ १९०० ॥

परपक्ष इत्यादिना प्रयोगद्वयेऽपि दृष्टान्तयोः साध्यविकलतां चोदयति ।

**परपक्षे च तज्ज्ञानं कायादेवेति संस्थितिः ।**
**दृष्टान्तौ तत्कथं सिद्धौ साध्यधर्मसमन्वितौ ॥ १९०१ ॥**
**ननु कायस्य हेतुत्वं प्रागेव विनिवारितम् ।**
**चेतसो युगपत्प्राप्तेरभावाच्चातिरेकिणः ॥ १९०२ ॥**
**आभोगशुभचित्तादिभावित्वेन विनिश्चितम् ।**
**स्मृतिरागादिविज्ञानं तन्निषेद्धुं न पार्यते ॥ १९०३ ॥**

निर्ह्रासातिशयौ दृष्टौ बुद्धीनां पू(र्वभाविनः ।)
(श्रुतशिल्पादिकाभ्यासविशेषह्रासवृद्धितः) ॥ १९०४ ॥
(मनस्कारे तु)विगुणे ज्ञातव्यार्थान्तराग्रहात् ।
ज्ञानस्य ज्ञानहेतुत्वं न याति वचनीयताम् ॥ १९०५ ॥
वि(भिन्नदेहवृत्तित्वादिति हेतोरसिद्धता ।)
(अमूर्तचेतसो)वृत्तिः का वा कायेष्वपातिनः १९०६ ॥

तथाहि—स्वोपादानोद्भवत्वं स्वोपादेयोदयक्षमत्वं च साध्यधर्मः । यस्य च नित्यं कायादेव विज्ञानमुत्पद्यत इति दर्शनं तस्य न कश्चिद्यथोक्तसाध्यधर्मत्वसमन्वितो दृष्टान्तः सिद्ध इति कथमिदानीन्तनचित्तवत्पूर्वविज्ञानवदित्येतयोर्दृष्टान्तयोरुपन्यास इति । नैष दोषः । पूर्वमेव कायस्य हेतुत्वं निषिद्धं "चेतसो यौगपद्यप्रसङ्ग" इत्यनेन । अपेक्षणीयस्य सहकारिकारणस्यातिरेकिणोऽभावात्, नित्यस्यापेक्षानुपपत्तेः । अनित्यपक्षे तु पूर्वोक्तं वर्त्तमानं च दूषणम् । न चाभ्युपगममात्रेण प्रमाणसिद्धस्याप्यसिद्धत्वं युक्तमतिप्रसङ्गात्, तथाच न किंचित्कस्यचित्साधनं स्यात् । यथाऽऽह—'नानिष्टेर्दूषणं सर्व'मिति । किंच—यदाऽऽभोगचित्तसमनन्तरं स्मरणमुत्पद्यमानं सुपरिनिश्चितं तदा शुभादिचित्ताद्रागः । तथाहि—सा सुन्दरीति तरुणीति तनूदरीति सुमुखीति चेत्यादि शुभं चिन्तयतां रागिणां राग उत्पद्यते, तथा ममानेनापकृतमथ करिष्यत्ययमपकरोतीत्यादि चिन्तयतश्च द्वेष उत्पद्यमानो निश्चितः, स कथमपह्नोतुं शक्यते विशेषतः प्रत्यक्षमात्रवादिना । तथा पूर्वभाविनः श्रुतशिल्पाद्यभ्यासविशेषस्योत्कर्षापकर्षाभ्यामुत्तरबुद्धीनां समुत्कर्षापकर्षौ दृष्टौ, तथाऽर्थान्तरव्यासङ्गेन मनस्कारवैगुण्यादर्थान्तराग्रहणं दृष्टमिति ज्ञानस्य ज्ञानहेतुत्वं युक्तियुक्तत्वादवचनीयम् । न तु भूतानां, युक्तिविरोधात् । अत एव ज्ञानस्य ज्ञानहेतुत्वप्रतिपादनात् । कार्यकारणतेत्यादौ प्रथमे प्रसङ्गे विभिन्नदेहवृत्तित्वादित्यस्य हेतोरसिद्धता, तथाहि—यदि तावदाधाराधेयलक्षणा वृत्तिरभिप्रेता सा सुतरां चित्तस्यापतनधर्मणः कायेष्वसिद्धा, सत्यपि कार्यकारणभावे चित्तस्यामूर्त्तत्वेनापतनधर्मकत्वात् । न चापतनधर्मकस्याधारो युक्तोऽकिंचित्करत्वात् ॥ १९०० ॥ १९०१ ॥ १९०२ ॥ १९०३ ॥ १९०४ ॥ ॥ १९०५ ॥ १९०६ ॥

जलादीनां तर्हि किं कुर्वन्नाधारः स्यादित्याह—स्यादित्यादि ।

**स्यादाश्रयो जलादीनां पतनप्रतिषेधतः ।**
**चेतसाममगतीनां च किमाधारैः प्रयोजनम् ॥ १९०७ ॥**
**तादात्म्येन स्थितिर्वृत्तिरिह चेत्परिकल्प्यते ।**
**साऽप्ययुक्ता न हि ज्ञानं युक्तं कायात्मकं तव ॥ १९०८ ॥**

प्रक्ष(क्षि?)त्यादिमूर्त्तस्य स्वोपादानदेशपरिहारेणोत्पद्यमानस्योपादानदेशोत्पादहेतुत्वादाधारो गमनप्रतिबन्धाद्व्यवस्थाप्यते । न त्वमूर्त्तस्य शक्यं तथा व्यवस्थापयितुम् । अथ तादात्म्यलक्षणा वृत्तिरभिप्रेता, साऽपि न सिद्धा । नहि तव बहिरर्थाभिनिवेशिनो वक्तुं युक्तं कायात्मकं विज्ञानमिति । मम तु युक्तं विज्ञानमात्रवादिन आलयविज्ञानस्वभावत्वात्कायस्येत्यभिप्रायः ॥ १९०७ ॥ १९०८ ॥

कस्मान्न युक्तमित्याह—**तादात्म्ये** इत्यादि ।

**तादात्म्ये हि यथा कायो विस्पष्टं वेद्यते परैः ।**
**रागद्वेषादिचेतोऽपि तथा किं न प्रवेद्यते ॥ १९०९ ॥**
**स्वेनैव वेद्यते चेतो देहस्तु स्वपरैरपि ।**
**यौ चैवं तौ विभिद्येते कुक्षिमूलनटाविव ॥ १९१० ॥**

तथाहि देहे गृह्यमाणे परै रागादीनामपि ग्रहणं प्राप्नोत्यव्यतिरेकात् । नच विप्रशस्याऽनेकान्तः, तस्यास्तदानीमप्रत्यक्षत्वात् । नतु चैतन्यस्याप्रत्यक्षत्वं, आत्मनाप्यग्रहणप्रसङ्गात् । किंच—यावुभयनिश्चितैकनिश्चितौ तौ भिन्नौ यथा कुक्षिमूलानुभवनटौ, उभयनिश्चितैकनिश्चिते च देहचैतन्ये इति स्वभावहेतुः । **स्वेनैवेति** । आत्मनैव ॥ १९०९ ॥ १९१० ॥

**अद्वयज्ञानपक्षे तु नायं हेतुः प्रसिद्ध्यति ।**
**स्वस्य स्वस्यावभासस्य वेदनात्तिमिरादिवत् ॥ १९११ ॥**
**उदयानन्तरध्वंसि नैरन्तर्येण लक्ष्यते ।**
**चेतोदेहस्य तादूप्ये क्षणिकत्वं न किं मतम् ॥ १९१२ ॥**

यद्येवं विज्ञानमात्रवादप्रतिक्षेपोऽनेनैव हेतुना क्रियमाणो दुर्वारः स्यादित्यत आह—**नायं हेतुः प्रसिद्ध्यतीति** । असिद्धता हेतुदोषो भवतीति । तथाहि—उभयनिश्चितत्वं विज्ञानवादिनो न सिद्धं स्वप्रतिभासस्यैव सर्वदा वेदनात् । तैमिरिकद्वयद्विचन्द्रदर्शनवत् । अपिच विलक्षणार्थवित्तिकाले निरन्तरमुत्पादसमनन्तरविनाशि

चित्तं स्पष्टं लक्ष्यते । ततश्च देहस्य ताद्रूप्येऽभ्युपगम्यमाने क्षणिकत्वप्रसङ्गः ॥ १९११ ॥ १९१२ ॥

एवं तावत्तादात्म्यलक्षणवृत्तिर्न सिद्धा, अथ तदुत्पत्तिलक्षणा वृत्तिः, सा च तदुत्पत्तिस्तदाश्रयद्वारेण वा स्यान्मनोविज्ञानस्य, यथा चक्षुरादिविज्ञानस्य चक्षुराद्याश्रयेण । तदव्यभिचाराद्वा, यथा धूमस्याग्न्यव्यभिचारिणः । तदत्र द्विविधाऽपि वृत्तिरसिद्धा । तथाहि—मनोधीर्नेन्द्रियबुद्धिवत्कायाश्रिता, नियमेन साक्षात्तद्विकाराविधानात् । नापि तदविनाभाविनी, विरूपे धातौ कायमन्तरेणापि भावाभ्युपगमात् । तथाऽप्यभ्युपगम्य सिद्धतां हेतोरनैकान्तिकतामाह—**तदाश्रयेण संभूतेस्तेन वाऽव्यभिचारत** इति ।

**तदाश्रयेण संभूतेस्तेन वाऽव्यभिचारतः ।**
**तत्र वृत्तिर्यदीष्येत तथाऽपि व्यभिचारिता ॥ १९१३ ॥**
**प्रागवस्थमपि ज्ञानं प्रतिक्षणविनश्वरे ।**
**देहवृत्तं करोत्येव प्रतिसन्धिं निरन्तरम् ॥ १९१४ ॥**
**एकसन्तानभावेन न चेत्तत्र विभिन्नता ।**
**अन्यत्राऽप्येकसन्तानभावान्माभूद्विभिन्नता ॥ १९१५ ॥**

तथाहि—चित्तान्तरप्रतिसन्धानस्य चित्तदेहवृत्तेश्च विरोधाभावात्, यथा मरणक्षणात्प्रागवस्थं जीवदवस्थाभाविविज्ञानं प्रतिसन्धिं करोत्येव भिन्नदेहवृत्तमपि, देहस्य क्षणिकत्वादित्यनैकान्तिको हेतुः । अथैकसन्तानत्वेन देहस्याभेदादभिन्नदेहवृत्तित्वं कल्प्यते तदाऽन्तराभाविकदेहेऽपि समानम् । तथाहि—पञ्चायतनलक्षणो देहसन्तानस्यावस्थाभेद एवायमामुत्रिको देहः, बालवृद्धावस्थाभेदवत् । द्वितीयेऽपि प्रयोगे ज्ञानत्वादित्यस्य हेतोः साध्यविपक्षे बाधकप्रमाणानुपदर्शनादनैकान्तिकत्वं स्पष्टमेवेति नोक्तम् ॥ १९१३ ॥ १९१४ ॥ १९१५ ॥

सरागमरणज्ञानमित्यादिकं तृतीयं प्रयोगमधिकृत्याह—**क्षीणास्रवस्ये**त्यादि ।

**क्षीणास्रवस्य विज्ञानमसन्धानं कुतो मतम् ।**
**परकीयकृतान्ताच्चेन्न प्रामाण्यापरिग्रहात् ॥ १९१६ ॥**

न विद्यते चित्तान्तरसन्धानं यस्य तदसन्धानम् । अनेन दृष्टान्तस्यान्यतराप्रसिद्धसाध्यधर्मतामाह । तथाहि—चार्वाकस्य कुतः प्रसिद्धमर्हतां न चित्तान्तरं प्रतिस-

न्धत्ते मरणचित्तमिति । अथापि स्यात्परकीये बौद्धे सिद्धान्ते पठ्यते क्षीणा मे जातिरुषितं ब्रह्मचर्यं कृतं करणीयं नापरमस्माद्भवं प्रजानामीति, अतः सिद्धमसन्धानमिति । तदेतदयुक्तम्—परकीयस्य सिद्धान्तस्य प्रामाण्येनापरिग्रहाल्लोकायतस्य कथं तथाऽप्रामाण्येन परिगृहीतान्निश्चयः, परलोकस्यापि निश्चयप्रसङ्गात् । अथान्यत एव प्रमाणान्तरात्तदवगतं तदेव तर्हि किं न साधनमुक्तम्, किमगमकेन जाड्यसंसूचकेनोपन्यस्तेन, न ह्यन्यस्य तदसाधनं येन तन्नाभिधीयते ॥ १९१६ ॥

सिद्धान्ताश्रयणेनापि कांश्चिद्बौद्धान्प्रति साध्यधर्मसमन्वितो न सिद्धो दृष्टान्त इति दर्शयन्नाह—**ये चेह सुधिय** इत्यादि ।

**ये चेह सुधियः केचिदप्रतिष्ठितनिर्वृतीन् ।**
**जिनांस्तद्यानिष्ठत्वं यानयोश्च प्रचक्षते ॥ १९१७ ॥**
**तान्प्रत्ययमसिद्धश्च साध्यधर्मसमन्वितः ।**
**दृष्टान्तः प्रतिवादीष्टसिद्धान्ताश्रयणेऽपि ते ॥ १९१८ ॥**

इहेति । सौगते प्रवचने । सुधियो महायानिकाः । केचिदिति माध्यमिकाः । ते हि बुद्धानामप्रतिष्ठितत्वं निर्वाणमाहुः । संसारनिर्वाणयोरप्रतिष्ठानात् । श्रावकप्रत्येकबुद्धयानयोश्च बुद्धैकयाननिष्ठत्वमाहुः । 'एकमेवेदं ज्ञानं यदुत महायान'मिति वचनात् ॥ १९१७ ॥ १९१८ ॥

एवं दृष्टान्तदोषमुक्त्वाऽनैकान्तिकत्वं साधनदोषमाह—**बाधकानभिधानाच्चेति** ।

**बाधकानभिधानाच्च सन्दिग्धव्यतिरेकिता ।**
**शङ्क्यमानविजातीयसद्भावाद्व्यभिचारिता ॥ १९१९ ॥**

बाधकानभिधानादिति सन्दिग्धव्यतिरेकित्वस्य हेतुः । **शङ्क्यमाने**त्यादि तु व्यभिचारितायाः । विजातीये सद्भावो विजातीयसद्भावः । कस्य ? । हेतोरिति गम्यते । शङ्क्यमानश्चासौ विजातीयसद्भावश्चेति विग्रहः । न वा मरणत्वप्रसङ्गो बाधकं प्रमाणम्, परमार्थतः कस्यचिदात्मादिकस्य म्रियमाणस्याभावात् । केवलं तु विसदृशसन्तानोत्पत्तौ विशिष्टनिकायसमाख्यावस्थाविशेषोपरमाल्लोके शास्त्रे च तथा व्यवहारः ॥ १९१९ ॥

यदुक्तं कललादिषु विज्ञानमस्तीत्येतच्च साहसमित्यत्राह—**कललादिष्वित्यादि** ।

**कललादिषु विज्ञानमस्तीत्येतन्न साहसम् ।**
**असञ्जातेन्द्रियत्वेऽपि ज्ञानं तत्र न किं भवेत् ॥ १९२० ॥**

इन्द्रियार्थबलोद्भूतं सर्वं विज्ञानमित्यदः ।
साहसं वेद्यते यस्मात्स्वप्नादावन्यथाऽपि तत् ॥ १९२१ ॥
रूपमर्थगतेरन्यदप्यस्य व्यवसीयते ।
मूर्छादावपि तेनास्य सद्भाव उपपद्यते ॥ १९२२ ॥

यदि सर्वमेव ज्ञानमिन्द्रियार्थबलेनैव ज्ञायते तदा साहसं भवेत्, यावता स्वप्नाद्यवस्थायां नीलादिप्रतिभासं मनोविज्ञानमसत्यपि चक्षुरादीन्द्रिये विनाऽपि रूपादिनार्थेन संवेद्यते । नचापि तस्य तदानीं कायेन्द्रियमाश्रय इति शक्यं वक्तुम्, नीलादिप्रतिभासत्वात् । कायविज्ञानस्य च स्प्रष्टव्यविषयत्वात् । तस्मादर्थावगतिरूपं सर्वं विज्ञानमित्ययुक्तम् । तेन मूर्छादावपि विज्ञानसद्भावो न विरुध्यते ॥ १९२० ॥ ॥ १९२१ ॥ १९२२ ॥

अथापि स्याच्छक्तिरूपेणावस्थानं विज्ञानस्याविरुद्धं स्वरूपेण तु विरुद्धमित्याह— **न चापीति** ।

न चापि शक्तिरूपेण तथा धीरवतिष्ठते ।
स्वरूपेणैव बुद्धीनां व्यवस्थानं तदा मतम् ॥ १९२३ ॥
सुप्तमूर्च्छाद्यवस्थासु चेतो नेति च ते कुतः ।
निश्चयो वेदनाभावादिति चेत्स कुतो गतः ॥ १९२४ ॥
यदीत्थं भवतस्तासु निश्चयः संप्रवर्त्तते ।
न वेद्मि चित्तमित्येवं सति सिद्धा सचित्तता ॥ १९२५ ॥
स्यान्मतं यदि विज्ञानं दशास्वास्वस्ति तत्कथम् ।
न स्मृतिः प्रतिबुद्धादेः तदाकारा भवेदिति ॥ १९२६ ॥
तदकारणमत्यर्थं पाटवादेरसम्भवात् ।
स्मरणं न प्रवर्त्तेत सद्योजातादिचित्तवत् ॥ १९२७ ॥

यदि हि सुप्तमूर्च्छाद्यवस्थायां चित्तं नास्तीति निश्चायकं किंचित्प्रमाणं भवेद्भवेद्विरोधः । स्ववेदनानुपलम्भोऽस्ति निश्चायकं प्रमाणमिति चेन्न । स्वसंवेदनानुपलम्भः कुतः सिद्धः । नहि तस्यामवस्थायां संवेदनाभावनिश्चयोऽस्ति । यदि च तासु मूर्च्छावस्थासु न वेद्म्यहं चित्तमित्येवं निश्चयः प्रवर्त्तते भवतस्तदा तेनैव तथा प्रवृत्तेन निश्चयेन सचित्तता सिद्धा । अथाऽपि स्याद्यदि स्वापाद्यवस्थासु चित्तं स्यात्किमिति

प्रतिबुद्धादेः पुरुषस्य स्मरणं न भवेत् । आदिशब्देन विगतमूर्च्छस्य विगतमदस्येति परिग्रहः । तदेतदस्मरणमकारणमनुभूताभावसिद्धये । यदि ह्यनुभूत इत्येतावन्मात्रेणैव स्मरणं स्यात्स्यादेतत्, यावता सत्यप्यनुभवे पाटवाभ्यासार्थित्वादिवैकल्यात्स्मरणं न भवति । यथा सद्योजाताद्यवस्थायामनुभूतस्यापि चित्तस्य ॥ १९२३ ॥ ॥ १९२४ ॥ १९२५ ॥ १९२६ ॥ १९२७ ॥

अस्तित्वेऽपि भवतां तर्हि किं प्रमाणं यदि स्मरणाप्रवृत्तावपि सन्देह इति प्रतिचोदयन्नाह—यद्येवमित्यादि ।

**यद्येवं कथमस्तित्वमस्यासु व्यवसीयते ।**
**पूर्वोपवर्णितादेव हेतोरित्यवगम्यते ॥ १९२८ ॥**
**स्वप्नमूर्छाद्यवस्थासु चित्तं च यदि नेष्यते ।**
**मृतिः स्यात्तत्र चोत्पत्तौ मरणाभाव एव वा ॥ १९२९ ॥**
**स्वतन्त्रा मानसी बुद्धिश्चक्षुराद्यनपेक्षणात् ।**
**स्वोपादानबलेनैव स्वप्नादाविव वर्त्तते ॥ १९३० ॥**

अस्येति । विज्ञानस्य । आस्विति । स्वापाद्यवस्थासु । तत्र पूर्वोपवर्णितो हेतुः—प्रबुद्धादेः पुरुषस्यादिविज्ञानं स्वोपादानबलोद्भवं विज्ञानत्वादाभोगाद्यनन्तरभाविस्मार्त्तादिविज्ञानवत् । नचायमनैकान्तिको हेतुः, पूर्वं कारणान्तरनिषेधेन प्रतिबन्धस्य साधितत्वात् । किंच—यदि स्वापाद्यवस्थायां चित्तं न भवेत्तदा मरणमेव स्यात् । अथ तत्र तथाभूते निर्मूलमपगतविज्ञाने देहे पुनरुत्पत्तिरिष्यते विज्ञानस्य तदा तत्रोत्पत्ताविष्यमाणायां मरणाभावः प्राप्नोति, मृतस्यापि पुनर्विज्ञानोत्पत्तिप्रसङ्गात्सुप्तप्रबुद्धवत् । मनोबुद्धेरेव जन्मान्तरप्रतिसन्धाने सामर्थ्यात् । तथाचोक्तम्—"छेदसन्धानवैराग्यहानिम्···पत्तयः । मनोविज्ञान एवेष्टा" इति । अतो मनोबुद्धिः पूर्वबुद्धिमात्राश्रयेति प्रतिपादयन्नाह—**स्वतन्त्रे**त्यादि । स्वातन्त्र्येऽनपेक्ष्यत्वं हेतुः । सर्वदैवेयं मनोबुद्धिः स्वोपादानकारणमात्रभाविनी, स्वोपादानव्यतिरिक्तचक्षुरादिकारणान्तरानपेक्षणात्, स्वप्नावस्थावत् ॥ १९२८ ॥ १९२९ ॥ १९३० ॥

तथाहीत्यनेन हेतोरसिद्धतां परिहरति ।

**तथाहि न विकल्पानामिन्द्रियार्थव्यपेक्षिता ।**
**तद्व्यापारभावेऽपि भावाद्व्योमोत्पलादिषु ॥ १९३१ ॥**

**तद्व्यापारभावेऽपीति** । तयोरिन्द्रियार्थयोरव्यापारेऽपीति यावत् । नहि यद्व्यापारेऽपि यस्य भावस्तत्तस्य कारणं युक्तमतिप्रसङ्गात् ॥ १९३१ ॥

स्यादेतद्भवतु व्योमोत्पलादिविकल्प इन्द्रियार्थानपेक्षस्तदभावेऽपि भावात् । यस्तु चक्षुषि प्रणिहिते नीलादौ पुरोवर्त्तिनि विषये नीलमेतदिति विकल्पः प्रवर्त्तते । स कथमिन्द्रियार्थानपेक्षो येन पक्षैकदेशेऽसिद्धो हेतुर्न भवेदित्याह—**तयो**रित्यादि ।

**तयोर्भावेप्यतीतादिविकल्पो यः प्रवर्त्तते ।**
**असदर्थोपरागेण तुल्य एवावसीयते ॥ १९३२ ॥**
**शब्दार्थप्रतिभासित्वाद्वस्तुरूपं न भासते ।**
**विकल्पेष्विति सर्वं हि विस्तरेणोपपादितम् ॥ १९३३ ॥**

**तयो**रिति । इन्द्रियार्थयोः । असदर्थः शून्य उपरागो निर्भासो यस्योत्प्रेक्षितार्थादिविकल्पस्य सोऽसदर्थोपरागो—व्योमादिविकल्पः । तेन तुल्योऽयमपि निर्विषय इत्यर्थः । कथम् ? । सर्वो हि विकल्पः शब्दोल्लेखेन प्रवृत्तेः शब्दार्थावभासी, यश्च शब्दार्थावभासी न तत्र वस्तुरूपं भासते वस्तुरूपे शब्दस्याप्रवृत्तेः, तत्र तस्यासङ्केतितत्वादिति विस्तरेण शब्दार्थपरीक्षायां प्रतिपादितम् । सपक्षे सद्भावान्न विरुद्धो हेतुः, नाप्यनैकान्तिकः, स्वोपादानानुद्भवत्वे निर्हेतुकत्वप्रसङ्गात् ॥१९३२॥ ॥ १९३३ ॥

कायाश्रितत्वान्न निर्हेतुकत्वमिति चेदित्याशङ्क्याह—**प्रसुप्तिके**त्यादि ।

**प्रसुप्तिकाद्यवस्थासु शरीरविकृतावपि ।**
**नान्यथात्वं मनोबुद्धेस्तस्मान्नेयं तदाश्रिता ॥ १९३४ ॥**

प्रसुप्तिकादिरोगोपघातेन हि देहविकारोऽपि मनोमतेरविकारादियं मनोमतिर्न देहाश्रिता, यद्विकारेण नियमात्साक्षाद्यन्न विक्रियते न तत्तदाश्रितं, यथा गोविकारेणाविक्रियमाणोऽश्वो न च देहस्य विकारेण नियमात्साक्षाद्विक्रियते मनोबुद्धिः प्रसुप्तिकावस्थायामिति व्यापकानुपलब्धिः ॥ १९३४ ॥

**स्वल्पीयसी**त्यादिना तदाश्रितत्वं साक्षात्तद्विकारविकारित्वेन व्याप्तमिति दर्शयति ।

**स्वल्पीयस्यपि नेत्रादेर्विकारे तिमिरादिके ।**
**चक्षुराद्याश्रिता बुद्धिर्विकृतैव हि जायते ॥ १९३५ ॥**
**तद्देहस्य विनाशेपि मनोधीरतदाश्रया ।**
**स्वोपादानबलेनैव वर्त्तमानाऽविरोधिनी ॥ १९३६ ॥**

तस्य चात्र व्यापकस्याभाव इति सिद्धा देहानाश्रिता बुद्धिः । तत्तस्माद्देहनिवृत्तावपि न निवर्त्तयिष्यत इत्यविरोधः । यो हि यदाश्रितो न भवति तन्निवृत्तौ न नियमेन तस्य निवृत्तिः । तद्यथा गोनिवृत्तौ गवयस्य न नियमेन निवृत्तिः । नच देहो मनोमतेराश्रय इति व्यापकानुपलब्धिः ॥ १९३५ ॥ १९३६ ॥

यदुक्तं मरणान्तरोद्भूतदेहान्तरेत्यादिना श्लोकद्वयेन तत्राह—**केवलापीत्यादि** ।

**केवलाऽपि मनोबुद्धिर्यदैवमविरोधिनी ।**
**नातोऽन्यदेहसद्भावसिद्धये यत्निनो वयम् ॥ १९३७ ॥**
**नच शक्यनिषेधोऽसावदृष्टावपि संश्रयात् ।**
**स्यादेषा मन्दनेत्रस्य स्वच्छ(ल्प ?)धूमाद्यदृष्टिवत् ॥ १९३८ ॥**

अयमत्राभिप्रायः—परलोकोऽत्र साधयितुमिष्टः, स च कथं सिद्ध्यति, यदि बुद्धिरनाद्यनन्ता सिद्ध्येत् । अस्या एवावस्थाविशेषः परलोकप्रज्ञप्तौ । न तु देहे आरु-(रू ?)प्यधातौ, देहाभावेऽपि परलोकाभ्युपगमात् । सा चेच्चित्तसन्ततिरनाद्यनन्ता सिद्धा सिद्धो नः परलोक इति नान्यदेहसिद्धये यत्नः क्रियतेऽस्माभिर्निष्फलत्वात् । नच तस्यादृष्टिमात्रेण निषेधः शक्यते कर्तुम् । तथा ह्येषाऽदृष्टिर्जातिविशेषे भावनादिवैकल्यान्मन्दनेत्रस्य भवतः सत्यपि तस्मिन्देहे स्यादपि, ननु ब्रूमोऽ(तनुधूमा ?)-दर्शनवदिति नानुपलब्धिमात्रेण प्रतिषेधः सिद्ध्यति । तथाहि सजातिशुद्धदिव्याक्षदृश्योत्तराभवो वर्ण्यते । अत एव साङ्ख्यपरिकल्पितातिवाहिकशरीरस्याप्यप्रतिक्षेपः । पूर्वकालभवस्यापि देशविप्रकर्षान्नोपलम्भः स्यात्, दूरतरदेशोत्पत्तेः, स्वभावविप्रकर्षाद्वा, पिशाचादिदेहवत् । अविप्रकर्षेऽप्यर्वाग्दर्शिना सोऽयं प्राणी पतङ्गाद्यात्मतां गत इति निश्चेतुमशक्यत्वात् । अचिन्त्यशक्तिभैषज्योपयोगेन परावृत्तदेहवत् ॥ १९३७ ॥ १९३८ ॥

कथं तर्हि भिन्नाश्रयाश्रयाणि ज्ञानान्येकसन्तानसम्बद्धान्युच्यन्त इत्याह—**भिन्नदेहाश्रितत्वेऽपीति** ।

**भिन्नदेहाश्रितत्वेऽपि तद्विशेषानुकारतः ।**
**एकसन्ततिसम्बद्धं प्राच्यज्ञानं प्रबन्धवत् ॥ १९३९ ॥**
**अपि च स्तनपानादावभिलाषे प्रवर्त्तते ।**
**उद्वेग उपघाते च सद्योजन्मभृतामपि ॥ १९४० ॥**

**रुदितस्तनपानादिकार्येणासौ च गम्यते ।**
**स च सर्वो विकल्पात्मा स च नामानुषङ्गवान् ॥ १९४१ ॥**

**तद्विशेषानुकारत** इति । तस्य जन्मान्तरवर्त्तिनो ज्ञानस्य यो विशेषस्तमनुकुर्वन्नैहिकानि ज्ञानानि । तथा चोक्तम्—"अभ्यासयोगेन शुभाशुभानि कर्माणि सात्म्येन भवन्ति पुंसाम् । यदप्रयत्नेन विनोपदेशाज्जन्मान्तरे स्वप्न इवाचरन्ति ॥" तत्र यदुक्तं चार्वाकेण—इहलोकपरलोकशरीरयोर्भिन्नत्वात्तद्गतयोरपि चित्तयोर्नैकः सन्तान इत्यादि । गर्भादौ प्रथमं विज्ञानं विवादगोचरापन्नैकसन्तानिकं न भवति भिन्नशरीरत्वान्महिषवराहादिविज्ञानवदिति । तदनेन प्रतिक्षिप्तं भवति । अपिच—इतोऽपि परलोकः सिद्धः । तथाहि—यो यो विकल्पः स शब्दानुभवाभ्यासपूर्वकः, विकल्पत्वात्, यौवनाद्यवस्थाभाविविकल्पवत् । विकल्पश्चायं सद्योजातानां स्तनपानाद्यभिलाषादिविकल्प इति स्वभावहेतुः । नचाश्रयासिद्धो हेतुः । यतो रुदितस्तनपानादिकार्येणासौ सद्योजातानां स्तनपानाद्यभिलाषादिर्धर्मी सिद्धः । नहि श(र ?)क्तिर्विद्वेषादिरूपेणाविकल्पयतो रुदितस्तनपानादिसम्भवो युक्तः । नापि स्वरूपासिद्ध इति प्रतिपादयति—**स च सर्वो विकल्पात्मेति** । सः—स्तनपानाभिलाषादिः । सर्वो विकल्पात्मा—विकल्पस्वभावः । प्रार्थनाद्याकारतयाऽनुभूयमानत्वात् । नाप्यनैकान्तिक इति दर्शयन्नाह—**स च नामानुषङ्गवानिति** । **स** इति । विकल्पः । यस्मात्सर्वो विकल्पः शब्दोल्लेखेन प्रवृत्तेर्नामानुषक्तः । स च नामानुषङ्गो विकल्पस्य सङ्केताभ्यासमन्तरेण न सम्भवतीति पूर्वं विस्तरेण प्रतिपादितमस्माभिः ॥ १९३९ ॥ १९४० ॥ १९४१ ॥

अथापि स्याद्भवतु नाम नामानुषङ्गोऽभ्यासपूर्वकस्तथाऽप्यसौ नेष्टप्रसाधनः । किं तर्हि ? । ऐहलौकिकाभ्यासपूर्वत्वमेव विपरीतं साधयतीत्याह—**न नामरूपमित्यादि** ।

**न नामरूपमभ्यस्तमस्मिन्जन्मनि विद्यते ।**
**तेषां चान्यभवाभावे तदुच्छेदः प्रसज्यते ॥ १९४२ ॥**

एतदुक्तं भवति । ऐहिलौकिकाभ्यासः सद्योजातानां प्रमाणप्रतीतिबाधितः । नच बाध्यमानप्रतिज्ञार्थस्य हेतोर्विरुद्धत्वं युक्तम्, विरुद्धोऽसति बाधन इति न्यायात् । **नामरूपमिति** । नाम्नो रूपम्—बाध(वाच ?)कः स्वभावो, बुद्धिपरिवर्त्त्यपि बाह्येषु शब्देष्वध्यस्तः । **तेषां** चेति । सद्योजातानां । **तदुच्छेद** इति । तेषामभिलाषादीनामुच्छेदस्तदुच्छेदः ॥ १९४२ ॥

तन्नामेत्यादिना यथोक्तं प्रमाणार्थमुपसंहरति—

**तन्नामसंस्तवाभ्यासवासनाबलभाव्यसौ ।**
**तेषां विकल्परूपत्वाद्विकल्प इव सम्प्रति ॥ १९४३ ॥**

तदिति । तस्मादित्यर्थः ॥ १९४३ ॥

यन्नामेत्यादिना प्रमाणफलं दर्शयति—

**यन्नामसंस्तवाभ्यासवासनापरिपाकजः ।**
**विकल्पो वर्त्तते तेषां तत्प्रसिद्धं भवान्तरम् ॥ १९४४ ॥**

नाम्नः—शब्दस्य, संस्तवः—परिचयोऽनुभव इति यावत्, तस्याभ्यासः—पुनरुत्पादः । यस्मिन्भवे नामसंभवाभ्यासो यन्नामसंभवाभ्यास इति, सप्तमीति योगविभागात्समासः । तेनाहिता या वासना तस्याः परिपाकः स्वानुरूपः कार्योत्पादने वृत्तिलाभः, ततो जात इति व्युत्पत्तिक्रमः । तेषामिति । सद्योजातानाम् ॥ १९४४ ॥

नामाभ्यासेत्यादिना परकीयं प्रसङ्गसाधनमाशङ्कते—

**नामाभ्यासबलादेव यदि तेषां प्रवर्त्तते ।**
**तत्किं न विस्फुटा वाचः स्मृतिर्वा वाग्मिनामिव ॥ १९४५ ॥**

यदि पूर्वसङ्केताभ्यासाद्विकल्पस्य प्रवृत्तिस्तदा बालदारकस्य पूर्वसङ्केतानुस्मरणप्रसङ्गः । नह्यभ्यासानुवृत्तिः स्मरणमन्तरेण युक्ता । वाग्मिनामिव विस्पष्टवाक्प्रवृत्तिप्रसङ्गश्च । ततश्च सङ्केतकरणानर्थक्यं स्यात् । न चैवं भवति । तस्मात्स्मरणाभावात्, विस्पष्टवाचोऽप्रवृत्तेश्च, पूर्वाभ्यासपूर्वत्वं विरुद्धमिति प्रसङ्गविपर्ययेण धर्मस्वरूपनिराकरणमुखेन प्रतिज्ञादोषमाह ॥ १९४५ ॥

पटीयसेत्यादिना प्रसङ्गविपर्यये च हेतोरनैकान्तिकत्वमाह—

**पटीयसोपघातेन परिपाकाकुलत्वतः ।**
**न स्यादासामियं वृत्तिः सन्निपातदशास्विव ॥ १९४६ ॥**

नहि पूर्वाभ्यासः सर्वदा स्मरणादिना व्याप्तो येन स्मरणादिकं प्रवर्त्तयेत् । तन्निवृत्तौ वा निवर्त्तेत । यावता पूर्वाभ्यासानुवृत्तिश्च भवेन्न च स्मरणम्, यथा सन्निपातावस्थायाम् । तथा स्वप्नेऽपि पूर्वाभ्यासानुवृत्तिर्भवेन्न च स्मरणम् । सन्निपातग्रहणमुपलक्षणम् । पटीयसेति । गर्भपरिवासात् । परिपाकाकुलत्वत इति ।

वासनापरिपाकस्याकुलत्वम् । यथानुभूतप्रतिनियतदेशकालस्वभावादिभेदरूपेणाप्रवृत्तिः । तत्र यदुक्तं चार्वाकेण जातिस्मरणमसिद्धम् । एकग्रामागतानां सर्वेषां स्मरणादिति । तदनेन प्रतिक्षिप्तं भवति । तथाहि—एकग्रामागता अपि सर्वे न स्मरन्ति । यतस्तत्र केचन तेषां मध्ये ये मन्दमतयस्ते मुषितस्मृतयो भवन्त्येव । आसामिति । वाचाम् ॥ १९४६ ॥

स्वल्पीयानपीत्यादिना प्रसङ्गविपर्यये हेतोः पक्षैकदेशासिद्धतामाह—

**स्वल्पीयानपि येषां तु नोपघातो महात्मनाम् ।**
**श्रूयन्ते विस्फुटा वाचस्तेषां सा च स्मृतिः स्फुटा ॥ १९४७ ॥**

महात्मनामिति । पुण्यवताम् ॥ १९४७ ॥

पुनरपि परलोकसिद्धावुपपत्त्यन्तरमाह—रागद्वेषादयश्चेत्यादि ।

**रागद्वेषादयश्चामी पटवोऽभ्यासयोगतः ।**
**अन्वयव्यतिरेकाभ्यां भवन्तः परिनिश्चिताः ॥ १९४८ ॥**
**इहत्याभ्यासरहितास्ते ये प्रथमभाविनः ।**
**को हेतुर्जन्मनस्तेषां यदि न स्याद्भवान्तरम् ॥ १९४९ ॥**
**न ह्यालम्बनसान्निध्यात्तेषां जन्मोपपद्यते ।**
**प्रतिसङ्ख्यानसद्भावे तद्भावेऽप्यतदुद्भवात् ॥ १९५० ॥**
**प्रतिसङ्ख्यानिवृत्तौ च तेषां प्राबल्यदर्शनात् ।**
**नष्टाजातेपि विषये विपर्यासाभिवृद्धितः(नः?) ॥ १९५१ ॥**
**शुभात्मीयस्थिरादींश्च समारोप्याङ्गनादिषु ।**
**रागादयः प्रवर्त्तन्ते तद्रूपा विषया नच ॥ १९५२ ॥**
**तदनालम्बना एव सदृशाभ्यासशक्तितः ।**
**इहत्या अपि वर्त्तन्ते रागादित्वाद्यथोत्तरे ॥ १९५३ ॥**

प्रयोगः—रागद्वेषेर्ष्यामदमानादीनां तथा प्रज्ञाकरुणामैत्र्यादीनां च यत्पाटवं तदभ्यासपूर्वकम्, यथेहैव जन्मनि पटुमन्दयथोक्तगुणस्य पुरुषस्याभ्यासवशाद्दृष्टम् । अस्ति देहादावत्र जन्मनि तेषु तेष्वदृष्टैहलौकिकाभ्यासस्यापि कस्यचित्पुरुषस्य तत्पाटवमिति कार्यहेतुः । अन्वयव्यतिरेकाभ्यां कार्यकारणभावस्य निश्चितत्वादिति नासिद्धो हेतुः । अतएवाह—अन्वयव्यतिरेकाभ्यां भवन्तः परिनिश्चिता इति ।

अपरलौकिकाभ्यासपूर्वत्वसाधनाद्विरुद्धो हेतुरिति चेन्न । इहत्याभ्यासरहितास्ते ये प्रथमभाविनः पटवो रागादय इत्ययुक्तमपरलौकिकाभ्यासपूर्वत्वसाधनम् । न चाहेतुकं युक्तम्, नित्यं सत्त्वादिप्रसङ्गात् । तस्माद्यदि जन्मान्तरं (न) भवेत्तेषाम्—रागादीनां पटूनां, जन्मनः—उत्पत्तेः, को हेतुः स्यात् । तस्माज्जन्मान्तरीय एवाभ्यासो हेतुरिति सिद्धः परलोकः । नचालम्बनं कारणम्, आलम्बनस्य भावेऽपि रागादीनां कदाचिदशुभादिप्रतिसङ्ख्यानसद्भावे सत्यनुत्पत्तेः । अशुभाद्यालम्बना रागादिप्रतिपक्षभूता प्रज्ञा प्रतिसङ्ख्यानम् । असत्यप्यालम्बने रागादीनामुत्पत्तिदर्शनान्न युक्त आलम्बनवशात्तद्भावः । तथाहि—अतीतानागतेऽपि विषये सङ्कल्पवशादभिवृद्धसुखादिविपर्यासस्य पुंसः प्रतिसङ्ख्याननिवृत्तौ तेषां रागादीनां प्रबलत्वं दृश्यते । नहि यद्भावाभावयोर्यस्य भावाभावाविपर्ययस्तत्तस्य कारणं युक्तमतिप्रसङ्गात् । इतोऽपि नालम्बनवशाद्भावादीनां प्रवृत्तिः । तथाहि—यदि यथालम्बनमेव प्रवर्त्तेरन्नेवमालम्बनवशात्प्रवृत्ताः स्युर्यथा नीलादिज्ञानं न चैवं प्रवर्त्तन्ते । किं तर्हि—आत्मीयनित्यसुखाद्याकाराननुभूतानेवारोपयन्तोऽङ्गनादिषु प्रवर्त्तन्ते । न च शुभादिरूपा विषयाः । न च यद्यदाकारशून्यं तत्तस्यालम्बनं युक्तमतिप्रसङ्गात् । तत्—तस्मादारोपितविषयत्वेन निरालम्बना रागादयः । ततश्च सिद्धमाद्याः प्रथमभाविनोऽपीह जन्मनि ये रागादयस्ते सजातीयाभ्यासवशात्प्रवर्त्तन्त इति ॥ १९४८ ॥ १९४९ ॥ ॥ १९५० ॥ १९५१ ॥ १९५२ ॥ १९५३ ॥

यदि तर्हि विषया न कारणं कथं विषयोपनिपाते रागादय उत्पद्यमाना दृश्यन्त इत्याह—विषयोपनिपात इत्यादि ।

**विषयोपनिपाते तु सुखदुःखादिसम्भवाः ।**
**तस्मात्समानजातीयवासनापरिपाकजाः ॥ १९५४ ॥**
**रागद्वेषादयः क्लेशाः प्रतिसङ्ख्यानविद्विषाम् ।**
**अयोनिशोनम(सौमन?)स्कारविधेयानां यथाबलम् १९५५ ॥**
**साक्षात्तु विषया नैव रागद्वेषादिहेतवः ।**
**एकः क्लेशो हि तत्र स्यात्सर्वेषां तस्य बोधवत् ॥ १९५६ ॥**

एष हि क्रमः—विषयोपनिपाते सतीन्द्रियजं सुखमुत्पद्यते । तस्माच्च सुखात्प्रतिसङ्ख्यानवैकल्ये सत्यात्मादिविपर्यासलक्षणायोऽनिशो(सौ?)मनस्कारे स्थितानां

पूर्वरागाद्याहितवासनापरिपाको भवति ततो रागादयः क्लेशाः प्रवर्त्तन्त इति न साक्षाद्विषयाः कारणम् । स्यादेतत्—स्वराद्धान्तोपवर्णनमात्रमेव केवलम्, नत्वत्र काचिद्युक्तिरित्याह—**एक** इत्यादि । **एक** इति । एकाकारः । **तत्रे**ति । विषये । **तस्ये**ति । विषयस्य । **बोधवदि**ति । नीलादिग्राहकाकारवत् । नचैकाकारस्तत्र क्लेशः प्रवर्त्तते । तथाहि—एकस्मिन्स्त्रीरूपे कस्यचिद्रागः कस्यचिद्द्वेषः कस्यचिदीर्ष्येत्यनेकाकारस्य प्रवृत्तिर्दृश्यते ॥ १९५४ ॥ १९५५ ॥ १९५६ ॥

स्यादेतन्न पूर्वाभ्यासादिह जन्मन्याद्यरागादयः । किं तर्हि ? । अन्येषां मैथुनादिसमाचारदर्शनात्परोपदेशाद्वेत्याह—**अन्यवृत्त्युपलम्भेने**त्यादि ।

**अन्यवृत्त्युपलम्भेन परेभ्यः श्रवणेन वा ।**
**न च तेषामियं वृत्तिर्व्यभिचारोपलम्भनात् ॥ १९५७ ॥**

अन्येषां वृत्तिश्चरितमिति यावत् ॥ १९५७ ॥

**अदृष्टे**त्यादिना तमेव व्यभिचारं दर्शयति ।

**अदृष्टाश्रुतवृत्तान्ता वराहहरिणादयः ।**
**सभागगतिसंपर्के प्रयान्त्येव हि विक्रियाम् ॥ १९५८ ॥**

वृत्तान्तो मैथुनादिसमुदाचारः । सभागा सदृशी गतिर्यासां वराहीप्रभृतीनां तास्तथोच्यन्ते । ताभिः सह संपर्कः समवधानम् । **विक्रिये**ति । विप्लुतिः । मैथुनसमुदाचार इति यावत् ॥ १९५८ ॥

**संसारानुचिता धर्माः प्रज्ञाशीलकृपादयः ।**
**स्वरसेनैव वर्त्तन्ते तथैव न मदादिवत् ॥ १९५९ ॥**

अवश्यं चैतदवसेयमभ्यासबलादेव रागादीनां स्वरसप्रवृत्तिरिति । तथाहि—ये प्रज्ञाशीलादयः संसारानुचिताः संसारे नाभ्यस्ताः ते स्वरसेनायत्नेन न वर्त्तन्ते । **मदादिवदि**ति वैधर्म्यदृष्टान्तः । मदो—दर्पः । अन्यथा मदादिवत्प्रज्ञादीनामपि स्वरसेन प्रवृत्तिः स्यात् ॥ १९५९ ॥

केचिदाहुः—श्लेष्मणः सकाशाद्रागः पित्ताद्द्वेषो वातान्मोह इति । तत्राह—**बलासादी**त्यादि ।

**बलासादिप्रभावेण नच तेषां समुद्भवः ।**
**पूर्ववद्व्यभिचारस्य सर्वथाऽप्युपलम्भतः ॥ १९६० ॥**

**तस्मादृते यदभ्यासपूर्वका आद्यभाविनः ।**
**स एवान्यभवः सिद्ध इति नास्तित्वता हता ॥ १९६१ ॥**

तत्र बलासः—श्लेष्मा । पूर्ववदिति । यथा विषयेषु व्यभिचार उक्तः "प्रतिसङ्ख्यानसद्भावे तद्भावेऽप्यतदुद्भवादि"त्यादिना । किंच—श्लेष्माद्युपचयापचयाभ्यां न रागादीनामुपचयापचयौ भवतः । नच यद्भेदाद्यस्य भेदो न भवति तत्तस्य कार्यं युक्तमतिप्रसङ्गात् । तथा श्लेष्मणोऽपि तीव्रद्वेषो दृष्टो नतु तीव्ररागः, पित्तप्रकृतिरपि तीव्ररागो दृष्टो न तीव्रद्वेषादिरिति साङ्कर्यं दृश्यते । न च यमन्तरेण यस्य भावः स तस्य हेतुर्युक्तः । यदवस्थो रागी दृष्टस्तदवस्थोऽपि द्वेषीत्यतोऽपि व्यभिचारान्न श्लेष्मादिधर्मा रागादयः । तस्मादित्युपसंहारः । **यदभ्यासपूर्वका** इति । यस्मिन्नभ्यासो यदभ्यासः, स पूर्वकं कारणं येषामिति विग्रहः ॥ १९६० ॥ १९६१ ॥

इहत्येत्यादिना परकीयं चोद्यमाशङ्कते ।

**इहत्याभ्यासपूर्वत्वे साध्ये दृष्टेष्टबाधनम् ।**
**भवान्तरीयहेतुत्वे साध्यशून्यं निदर्शनम् ॥ १९६२ ॥**
**अविशेषेण साध्ये तु हेतोरस्य विरुद्धता ।**
**तथैवान्यभवाभ्यासहेतुत्वविनिवर्त्तनात् ॥ १९६३ ॥**

तत्रेदं चोद्यम्—ऐहलौकिकाभ्यासपूर्वत्वं वाऽऽद्यभाविनां साध्यं, पारलौकिकाभ्यासपूर्वत्वं वा, अविशेषेण वाऽभ्यासपूर्वत्वमात्रम्, तस्मिन्सिद्धे सामर्थ्यात्पारलौकिकाभ्यासपूर्वत्वमिष्टं सिद्धं भवतीति, पक्षत्रयम् । तत्र प्रथमे पक्षे दृष्टेष्टबाधनं नह्याद्यभाविनां रागादीनामिहत्याभ्यासपूर्वत्वं दृष्टं, नापि चेष्टं परलोकवादिनेति दृष्टेष्टयोर्बाधनम् । द्वितीयेऽपि पक्षे साध्यविकलो दृष्टान्तः, नहि कचिल्लोकायतस्य पारलौकिकाभ्यासपूर्वत्वसमन्वितो दृष्टान्तोऽस्ति । तृतीयेऽपि पक्षे विरुद्धता हेतोः, तथैव—दृष्टान्तवदेव, अन्यभवाभ्यासपूर्वत्वस्येष्टस्याभावसाधनात् ॥ १९६२ ॥ ॥ १९६३ ॥

सामान्येनैवेत्यादिना प्रतिविधत्ते ।

**सामान्येनैव साध्यत्वं नच हेतोर्विरुद्धता ।**
**नहि तेन विरोधोऽस्य येन तद्विनिवर्त्तयेत् ॥ १९६४ ॥**

## इति लोकायतपरीक्षा ।

तृतीय एवात्र पक्षोऽभिप्रेतः, न च हेतोर्विरुद्धता कस्मात्? । नहि तेनान्यभवाभ्यासपूर्वत्वेनास्य रागादित्वस्य कश्चिद्विरोधोऽस्ति । येन तत्पारलौकिकाभ्यासपूर्वत्वं निवर्त्तयेत् । अपिच—अयं लोकः परलोक इत्यवस्थाभेदकृतव्यवस्थामात्रमेतत् । बालयौवनादिभेदवत् । अनादित्वं त्वनेन प्रकारेण साध्यत इति नात्राभिनिवेष्टव्यम् । (प्रतिवादिसन्निभमित्येतत्) (?) ॥ १९६४ ॥

## इति लोकायतपरीक्षा ।

प्रतिविवादिसन्निभमित्येतत् । प्रतीत्यसमुत्पादविशेषणसमर्थनार्थमिदानीं विज्ञानवादीदमुपक्षिपति । तत्र विज्ञप्तिमात्रमेवेदं त्रैधातुकं, तच्च विज्ञानं प्रतिसत्त्वसन्तानभेदादनन्तमविशुद्धं चानधिगततत्त्वानां विशुद्धं च प्रहीणाचरणानां प्रतिक्षणविसरारु च सर्वप्राणभृतामोजायते, नत्वेकमेवाविकारि यथोपनिषद्वादिनामिति विज्ञानवादिनां बौद्धानां मतम् । तत्राभ्यां प्रकाराभ्यां विज्ञप्तिमात्रताभीष्टा, बाह्यस्य पृथिव्यादिस्वभावस्य ग्राह्यस्याभावे ग्राहकत्वस्याप्यभावात् । सत्यपि वा सन्तानान्तरे ग्राह्यग्राहकलक्षणवैधुर्यात् । तत्र प्रयोगः—यद्यज्ज्ञानं तत्तत् ग्राह्यग्राहकत्वद्वयरहितं ज्ञानत्वात्, प्रतिबिम्बज्ञानवत्, ज्ञानं चेदं स्वस्थनेत्रादिज्ञानं विवादास्पदीभूतमिति स्वभावहेतुः । नचाव्याप्तिरस्य हेतोर्मन्तव्या । तथाहि—न तावत्पृथिव्यादिबाह्योऽर्थोऽस्य ग्राह्यो विद्यते, तस्यैकानेकस्वभावशून्यत्वात् । प्रयोगः—यदेकानेकस्वभावं न भवति न तत्सत्त्वेन ग्राह्यं प्रेक्षावता, यथा व्योमोत्पलम्, एकानेकस्वभावरहिताश्च पराभिमताः पृथिव्यादय इति व्यापकानुपलब्धिः । तृतीयराश्यन्तराभावेनैकत्वानेकत्वाभ्यां सत्त्वस्य व्याप्तत्वाद्व्याप्यव्यापकभावानुपपत्तिर्विपर्यये बाधकं प्रमाणमिति नानैकान्तिकताऽनन्तरस्य हेतोः । नापि विरुद्धता, सपक्षे भावात् । अत्रास्य हेतोरसिद्धतामुद्भावयन्, यथोक्तम् 'भूतान्येव न सन्तीति न्यायोऽयं पर इष्यता'मिति—अस्याश्च प्रतिज्ञायाः प्रत्यक्षादिविरोधमादर्शयन्, प्रथमस्य हेतोरव्याप्तिमेव प्रतिपादयितुं पर आह—यदि ज्ञानातिरेकेणेत्यादि ।

**यदि ज्ञानातिरेकेण नास्ति भूतचतुष्टयम् ।**
**तत्किमेतन्नु विच्छिन्नं विस्पष्टमवभासते ॥ १९६५ ॥**
**तस्यैवं प्रतिभासेऽपि नास्तितोपगमे सति ।**
**चित्तस्यापि किमस्तित्वे प्रमाणं भवतां भवेत् ॥ १९६६ ॥**

विच्छिन्नमित्यनेन ज्ञानाद्व्यतिरिक्तस्य ग्राह्यस्य सिद्धिमादर्शयति, विस्पष्टमित्यनेन तु प्रत्यक्षताम् । एतदेव प्रसङ्गेन द्रढयन्नाह—तस्यैवमित्यादिना ॥ १९६५ ॥ ॥ १९६६ ॥

**भासमान** इत्यादिना प्रतिविधत्ते ।

**भासमानः किमात्माऽयं बाह्योऽर्थः प्रतिभासते ।**
**परमाणुस्वभावः किं किं वाऽवयविलक्षणः ॥ १९६७ ॥**
**न तावत्परमाणूनामाकारः प्रतिवेद्यते ।**
**निरंशानेकमूर्त्ताभ(नां?) प्रत्ययाप्रतिवेदनात् ॥ १९६८ ॥**
**व्यपेतभागभेदा हि भासेरन्परमाणवः ।**
**नान्यथाऽध्यक्षता तेषामात्माकारासमर्पणात् ॥ १९६९ ॥**

तत्र प्रत्यक्षसिद्धोऽर्थो बाह्यो भवन्ननेको वा परमाणुतोऽभिन्नो भवेत्, एको वा तैरारब्धोऽवयवी, स्थूलोऽनारब्धो वेति पक्षाः । तत्र न तावदाद्यः, निरंशानामनेकेषामणूनां मूर्त्तानां ग्राहकस्य प्रत्ययस्याप्रतिवेदनात् । नित्यं स्थूलाकारस्यैव ज्ञानस्यानुभूयमानत्वात् । प्रत्यये तेषामप्रतिवेदनादिति सप्तम्यन्तस्य पाठोऽसमस्तः । प्रयोगः—यः प्रत्यक्षाभिमते प्रत्यये न प्रतिभासते स्वेनाकारेण, न स प्रत्यक्षत्वेन ग्रहीतव्यः, यथा गगननलिनम्, न प्रतिभासते च प्रत्यक्षाभिमते प्रत्यये स्थूलाकारोपग्राहिणि परमाणुरनेको मूर्त्त इति व्यापकानुपलब्धिः । आत्माकारप्रतिभासित्वेन प्रत्यक्षस्य व्याप्तत्वात् । तामेव व्याप्तिं प्रतिपादयन्नाह—व्यपेतेत्यादि ॥ १९६७ ॥ १९६८ ॥ ॥ १९६९ ॥

अथापि स्यात्समुदिता एवोत्पद्यन्ते विनश्यन्ति चेति सिद्धान्तान्नैकैकपरमाणुप्रतिभास इति, यथोक्तं भदन्तशुभगुप्तेन—"प्रत्येकपरमाणूनां स्वातन्त्र्येणास्ति सम्भवः । अतोऽपि परमाणूनामेकैकाप्रतिभासनम् ॥" इति । तदेतदनुत्तरमिति दर्शयन्नाह—साहित्येनापीति ।

**साहित्येनापि जातास्ते स्वरूपेणैव भासिनः ।**
**त्यजन्त्यनंशरूपत्वं न चेत्ता(न च ता?)सु दशास्वमी ॥ १९७० ॥**
**लब्धापचयपर्यन्तं रूपं तेषां समस्ति चेत् ।**
**कथं नाम न ते मूर्त्ता भवेयुर्वेदनादिवत् ॥ १९७१ ॥**

**तासु दशास्विति** । सहितावस्थासु । किंच—यदि निरंशाः परमाणवो न तर्हि

मूर्त्ता इत्यभ्युपगन्तव्यमिति स्ववचनविरोधं प्रतिज्ञायामाह—लब्धापचयेत्यादि । लब्धोऽपचयपर्यन्तो येन रूपेण स्वभावेन, तत्तथोक्तम् । एतदुक्तं भवति—यद्यपचीयमानावयवविभागेनापचीयमानस्वभावा न भवन्ति, यदि निरंशा इति यावत्, तदा न मूर्त्ता वेदनादिवत्सिद्ध्यन्ति, विशेषाभावात् ॥ १९७० ॥ १९७१ ॥

तुल्येत्यादिना भदन्तशुभगुप्तस्य परिहारमाशङ्कते ।

**तुल्यापरक्षणोत्पादाद्यथा नित्यत्वविभ्रमः ।**
**अविच्छिन्नसजातीयग्रहे चेत्स्थूलविभ्रमः ॥ १९७२ ॥**

स ह्याह—यथा सदृशापरापरक्षणोत्पादाद्विप्रलब्धस्य गृहीतेऽपि प्रत्यक्षेण शब्दादौ नित्यत्वविभ्रमस्तथा परमाणूनामविच्छिन्नदेशानां सजातीयानां युगपद्ग्रहणे स्थूल इति मानसो विभ्रमो भवति । ततश्च 'निरंशानेकमूर्त्तानां प्रत्ययाप्रतिवेदनादि'त्यसिद्धो हेतुरिति ॥ १९७२ ॥

स्वव्यापारेत्यादिना दूषणमाह—स्वव्यापारबलेनैवेति ।

**स्वव्यापारबलेनैव प्रत्यक्षं जनयेद्यदि ।**
**न परामर्शविज्ञानं कथं तेऽध्यक्षगोचराः ॥ १९७३ ॥**
**क्षणिका इति भावाश्च निश्चीयन्ते प्रमाणतः ।**
**अणवस्त्विति गम्यन्ते कथं पीतसितादयः ॥ १९७४ ॥**
**सूक्ष्मप्रचयरूपं हि स्थूलत्वादाद्यचाक्षुषम् ।**
**पर्वतादिवदत्रापि समस्त्वेषाऽनुमेति चेत् ॥ १९७५ ॥**
**स्थूलत्वं वस्तुधर्मो हि सिद्धं धर्मिद्वयेऽपि न ।**
**न ह्यस्त्यवयवी स्थूलो नाणवश्च तथाविधाः ॥ १९७६ ॥**
**अथ देशवितानेन स्थितरूपं तथोदितम् ।**
**तथाऽपि भ्रान्तविज्ञानभासिरूपेण संशयः ॥ १९७७ ॥**
**वैतथ्यात्स तथा नो चेद्व्यतिरेकेऽप्रसाधिते ।**
**तस्मादतिशयः कोऽस्य कार्यसंवादनं यदि ॥ १९७८ ॥**
**कार्यावभासिविज्ञानसंवादेऽपि ननूच्यते ।**
**सामर्थ्यनियमाद्धेतोः स च सम्भाव्यतेऽन्यथा ॥ १९७९ ॥**

लिङ्गागमव्यापारानपेक्षमित्यवधार(णे)न दर्शयति। तथाहि—प्रत्यक्षमविशेषेणोत्पन्नमपि सद्यत्रैवांशे यथा परिगृहीताकारपरामर्शं जनयति स एव प्रत्यक्ष इष्यते व्यवहारयोग्यतया, यत्र तु न जनयति तद्गृहीतमप्यगृहीतप्रख्यम्। ततश्च नासिद्धो हेतुः। यतः प्रत्ययाप्रतिवेदनादित्यत्र प्रत्यक्षाभिमते प्रत्यये परामर्शहेतावप्रतिभासनादित्ययमर्थोऽभिप्रेतः। यच्चोक्तं—स्थूल इति मानस एष विभ्रम इति, तदप्यसम्यक्। तथाहि—प्रमाणेनाणौ सिद्धे सति स्याद्विभ्रमव्यवस्था। यथा क्षणिकत्वस्य प्रमाणेन सिद्धत्वान्नित्यत्वग्रहो भ्रान्तो व्यवस्थाप्यते। नच तथा प्रमाणेन परमाणवः सिद्धास्तेषामेव विचार्यमाणत्वात्। नचेयं स्थूलभ्रान्तिर्मानसी, स्पष्टप्रतिभासनात्। नच विकल्पानुबद्धस्य स्पष्टाकारो युक्तः, सामान्याकारस्यास्पष्टत्वात्। नच सामान्याकारमन्तरेण विकल्पो युक्तः। स्यादेतत्। अनित्यतादिवदणवोऽपि सिद्धा एव प्रमाणतः। तथाहि—यद्यत्स्थूलं तत्तत्सूक्ष्मप्रचयात्मकम्, यथा पर्वतादयः, स्थूलं चाद्यचाक्षुषमवयविद्रव्यमिति स्वभावहेतुः। चाक्षुषग्रहणमचाक्षुषस्य द्व्यणुकादेर्व्यवच्छेदाय। तत्र यदि स्थूलत्वादिति पारमार्थिकं स्थूलत्वं च वस्तुधर्ममाश्रित्योच्यते हेतुस्तदा साध्यधर्मिणि दृष्टान्तधर्मिणि च धर्मिद्वयेऽपि प्रतिवादिनो न सिद्धं स्थूलत्वमिति तदा हेतुरसिद्धो दृष्टान्तश्च साधनविकलः। अथ यदेतद्देशवितानेन प्रतिभासमानमविचाररमणीयमागोपालादि प्रसिद्धं रूपं स्थूलत्वादित्युच्यते तदा भ्रान्तेऽपि स्वप्नादिज्ञाने परमाणुप्रचयमन्तरेणापि तथा प्रतिभासि रूपमस्तीति हेतोरनैकान्तिकता। अथाभ्रान्तत्वे सतीति विशेषणमुपादीयते तदा विज्ञानवादिनं प्रति स्वस्थनेत्रादिज्ञानाकारस्य यावत्स्वप्नादिज्ञानाकाराद्व्यतिरेको विशेषो न प्रसाध्यते तावन्न कचिदभ्रान्तत्वं सिद्धमिति विशेषणमप्यसिद्धम्। स्यादेतदस्त्येव स्वस्थनेत्रादिज्ञानस्य स्वप्नादिज्ञानादर्थक्रियासंवादेन विशेष इति। तत्र कोऽयमर्थक्रियासंवादो नाम। यदि बाह्यार्थप्राप्तिः सा न सिद्धा बाह्यार्थासिद्धेस्तस्यैव साध्यत्वेन प्रस्तुतत्वात्। अथाभिमतार्थक्रियावभासिज्ञानमेवार्थक्रियासंवादस्तदाऽयमन्यथाऽपि बाह्यार्थालम्बनमन्तरेणापि सम्भाव्यत इति तथा हेतोरनैकान्तिकतैव। कथमन्यथाऽपि संभाव्यत इत्याह—**सामर्थ्यनियमाद्धेतोरिति**। हेतोः समनन्तरप्रत्ययस्य सामर्थ्यभेदनियमात्। कश्चिदेव हि समनन्तरप्रत्ययः किंचिद्विज्ञानं जनयितुं समर्थो न सर्वः सर्वम्। यथा भवता बाह्योऽर्थ इति तत एव नियमः सिद्धः ॥ १९७३ ॥ १९७४ ॥ ॥ १९७५ ॥ १९७६ ॥ १९७७ ॥ १९७८ ॥ १९७९ ॥

तुल्यमित्यादिना सुमतेर्दिगम्बरस्य मतेनाप्रतिवेदनादित्यस्य हेतोरसिद्धतामुद्भावयति ।

**तुल्यं रूपं यदा ग्राह्यमतुल्यं नैव गृह्यते ।**
**अणूनां द्वयरूपत्वे तदा किं नोपपद्यते ॥ १९८० ॥**
**तत्सामान्यविशेषात्मरूपत्वात्सर्ववस्तुनः ।**
**तुल्यातुल्यस्वरूपत्वाद्विरूपा अणवः स्मृताः ॥ १९८१ ॥**
**समानं तत्र यद्रूपं तदक्षज्ञानगोचरम् ।**
**एकाकारमतो ज्ञानमणुष्वेवोपपद्यते ॥ १९८२ ॥**
**असमानं तु यद्रूपं योगिप्रत्यक्षमिष्यते ।**
**इति दुर्मतयः केचित्कल्पयन्ति समाकुलम् ॥ १९८३ ॥**

स ह्येवमाह—सामान्यविशेषात्मत्वात्सर्वपदार्थानां तुल्यातुल्यरूपेण द्विरूपाः परमाणवः । तत्र समानं यद्रूपं तदिन्द्रियैर्गृह्यते नासमानम् । ततश्चैकाकारं विज्ञानमणुष्वविरुद्धमिति प्रत्यक्षसिद्धाः परमाणव इति । **समाकुलमिति** । अप्रतिष्ठम् । एकस्यापि रूपस्य प्रतिनिश्चितस्याभावात् ॥ १९८० ॥ १९८१ ॥ १९८२ ॥ १९८३ ॥

ननु च द्विरूपं वस्त्विति निश्चितरूपमुक्तमेव, सत्यमुक्तमयुक्तं तूक्तमिति दर्शयन्नाह ।

**द्वे हि रूपे कथं नाम युक्ते एकस्य वस्तुनः ।**
**द्वे तदा वस्तुनी प्राप्ते अपरस्पररूपतः ॥ १९८४ ॥**
**परस्परात्मतायां तु तद्द्वैरूप्यं विरुध्यते ।**
**विशेषश्चोपलभ्येत चक्षुरादिभिरिन्द्रियैः ॥ १९८५ ॥**

तथाहि—द्वाभ्यां रूपाभ्यां वस्तुनोऽन्यान्यत्वाद्द्वे एव वस्तुनी प्राप्ते । रूपद्वयस्यैव केवलस्यापरापरस्य (स्यापरस्परस्व ?)भावात्ततश्च नैकस्य द्विरूपत्वमुक्तम् । एकस्माद्वा वस्तुनो रूपद्वयस्याव्यतिरेकादेकवस्तुस्वरूपवद्रूपद्वयस्य परस्परात्मकतैवेति कथमेकं द्विरूपं स्यात् । किञ्च—सामान्यरूपाव्यतिरेकाद्विशेषरूपस्योपलम्भप्रसङ्गः । ततश्चेयमसङ्कीर्णा व्यवस्था न प्राप्नोति—समानं रूपमक्षज्ञानगोचरोऽसमानं तु योगिप्रत्यक्षमिष्यत इति ॥ १९८४ ॥ १९८५ ॥

किञ्च—एकं द्विरूपमिति न केवलमेतत्परस्परव्याहतं इदं तु व्याहततरं यत्परस्परविरुद्धरूपद्वयात्मकमेकमिति दर्शयति—**परस्परेत्यादि** ।

**परस्परविरुद्धात्मनैकरूपं कथं भवेत्।**

तथाहि—तुल्यातुल्ये रूपे परस्परपरिहारस्थितलक्षणे तत्कथं तदात्मकमेकं भवेत्। संवित्तेश्चेत्यादिना कुमारिलमतमाशङ्कते।

**संवित्तेश्च विरुद्धानामेकस्मिन्नाप्यसम्भवः॥ १९८६॥**
**एकाकारं न चे(भवे?)देकमिति नेश्वरभाषितम्।**
**तथाहि तदुपेतव्यं यद्यथैवोपलभ्यते॥ १९८७॥**

स ह्याह—एकस्मिन्वस्तुनि परस्परविरुद्धानामाकाराणामसम्भव इत्येतन्नास्ति। कस्मात्?। संवित्तेः कारणात्। तथाहि—एकाकारेणैवैकेन वस्तुना भवितव्यमिति नेयमाज्ञा राज्ञाम्, किं तु यद्यथोपलभ्यते तत्तथैवाभ्युपगन्तव्यम्। प्रतीतिनिबन्धनत्वाद्वस्तुव्यवस्थायाः। एकानेकाकारा च सत्तारूपादिभेदतः प्रतीतिर्भवन्ती समुपलभ्यते। तस्मात्तथैव व्यवस्थाप्यत इति॥ १९८६॥ १९८७॥

तन्नेत्यादिना प्रतिविधत्ते।

**तन्नासतोऽपि संवित्तेः कम्बुपीतादिरूपवत्।**
**विरुद्धधर्मसङ्गात्तु नान्यद्भेदस्य लक्षणम्॥ १९८८॥**

एवं सति न किंचिद्विज्ञानं भ्रान्तं स्याद्भेदव्यवहारोच्छेदप्रसङ्गश्च। अथ बाध्यमानत्वात्कस्यचिद्भ्रान्तत्वं स्यात्। तदेकस्मिन्ननेकविज्ञानं बाध्यमानं कथमभ्रान्तं भवेत्। एवं तावदणूनां (न) प्रत्यक्षतो नाप्यनुमान(तः)सिद्धिरिति न बाह्यार्थापह्नवे प्रत्यक्षविरोधः प्रतिज्ञायाः। नापि हेतोरसिद्धता॥ १९८८॥

इदानीं पर एकानेकस्वभावरहितत्वादित्यस्य हेतोः सन्दिग्धासिद्धतामुद्भावयन्नाह—माभूदित्यादि।

**माभूत्प्रमाणतः सिद्धिरणूनामस्तु संशयः।**
**अभाव(निश्चय)स्त्वेषां कथं प्रेक्षावतां भवेत्॥ १९८९॥**

संयुक्तमित्यादिना प्रतिविधत्ते।

**संयुक्तं दूरदेशस्थं नैरन्तर्यव्यवस्थितम्।**
**एकाण्वभिमुखं रूपं यदणोर्मध्यवर्त्तिनः॥ १९९०॥**
**अण्वन्तराभिमुख्येन तदेव यदि कल्प्यते।**
**प्रचयो भूधरादीनामेवं सति न युज्यते॥ १९९१॥**

**अण्वन्तराभिमुख्येन रूपं चेदन्यदिष्यते ।**
**कथं नाम भवेदेकः परमाणुस्तथासति ॥ १९९२ ॥**

प्रयोगः—यदेकानेकस्वभावरहितं तदसद्व्यवहारयोग्यम्, यथा वियदब्जम्, एकानेकस्वभावरहिताश्च पराभिमताः परमाणव इति स्वभावहेतुः । न चासिद्धो हेतुरिति मन्तव्यम् । तथाह्येकत्वं तावदणूनामसिद्धं, भूधरादिप्रचितरूपाणां दिग्भागभेदस्य विद्यमानत्वात् । तमेव दिग्भागभेदं भूधराद्युपचयान्यथानुपपत्त्या परमाणूनां प्रसंजयन्नेकत्वनिषेधं तावदाह—**संयुक्तं दूरदेशस्थ**मित्यादि । तत्र केचिदाहुः परस्परं संयुज्यन्ते परमाणव इति, सान्तरा एव नित्यं न स्पृशन्तीत्यपरे, निरन्तरत्वे तु स्पृष्टसंज्ञेत्यन्ये, तत्रैतस्मिन्पक्षत्रयेऽपि मध्यवर्त्तिनः परमाणोर्बहुभिः परिवारितस्य यदि दिग्भागभेदो न स्यात्तदा चित्तचैत्तादिकलापस्येव प्रचयो न स्यादनंशत्वात् । तथाहि—येनैकरूपेणैकाण्वभिमुखो मध्यवर्त्ती परमाणुस्तेनैवापरपरमाण्वभिमुखो यदि स्यात्तदा परिवारकाणामणूनामेकदेशत्वप्रसङ्गात्प्रचयो न स्यात् । प्रयोगः—यदेकरूपपरमाण्वभिमुखस्वरूपं भवेत्तदेकदेशम्, यथा तस्यैव पूर्वदेशस्थितः परमाणुः, एकप्रासादाभिमुखपूर्वप्रासादवच्च, एकरूपपरमाण्वभिमुखस्वभावाश्च सर्वे परिवार्यावस्थिताः परमाणव इति स्वभावहेतुः । अतः प्रचयो न स्यात् । अथान्येन रूपेणाभिमुखस्तदा दिग्भागभेदस्य विद्यमानत्वाद्घटादिवदेकत्वं न प्राप्नोति । भन्दतशुभगुप्तस्तु प्राह—यथैकस्वभावस्यासदद्रव्यादिव्यावृत्तस्याऽनेकं सामान्यं न तत्त्वेन कल्प्यते, एवमिहापि परमाणूनामनेकवर्त्तित्वादनेकत्वं कल्प्यते, न भूतार्थेन । तथाहि—न दिक्पदार्थो नामास्ति कणादादिकल्पितः, तस्यैकस्वरूपत्वादनेकरूपः पूर्वादिप्रत्ययो न स्यात् । केवलमणव एव पौर्वापर्येणावस्थिता दिक्शब्दवाच्यास्ततश्च दिग्भागभेदवत्त्वादिति केवलं बहुभिः परिवारणमेवोक्तं स्यान्न सावयवत्वमिति । तदेतदसम्यक् । तथाहि—निरवयवत्वाच्चित्तस्येवाणूनां परमार्थतो नोर्द्ध्वाधोभागाः सन्तीति बहुभिः परिवारणमेव न स्यात्, चित्तचैत्तादिवत् । ततश्च परिवारकाणामणूनां परमार्थेनाभावात्कथं तद्द्वारेणानेकमध्यवर्त्तित्वं येनानेकत्वं देशकृतं कल्प्येत । अथासत्यपि परमार्थत ऊर्द्ध्वाधोभागवत्त्वे बहुभिः परिवारणं स्यात्तर्हि चित्तचैत्तानामपि स्यात् । ततश्च परमाणुवच्चित्तादीनामपि देशस्थत्वं स्यात् । नो चेत्परमाणूनामपि न स्यात् । ततश्च प्रचयो न स्याच्चित्तादिवदित्येकान्तः । स्यादेतत्—यथा वर्त्तमान-

चित्तक्षणस्यातीतानागताभ्यां चित्तलक्षणाभ्यां कालकृतनैरन्तर्यमस्ति, अथ च वर्त्तमानचित्तक्षणस्य (न)कलामुहूर्त्तादिवत्सावयवत्वम्, एवमणूनां सत्यपि बहुभिः परिवारणे न देशकृतं सावयवत्वं भविष्यति । तदेतदसम्यक् । नहि वर्त्तमानचित्तलक्षणस्य पूर्वोत्तराभ्यां नैरन्तर्यं परमार्थतोऽस्ति, तदानीं तयोरसत्त्वात् । न चासता सह पौर्वापर्यं भाविकं युक्तं केवलं सहभूतयोर्न कार्यकारणभावोऽस्तीति तद्द्वारेण परिकल्प्य समुत्थापितं पूर्वापरयोः क्षणयोः सत्त्वं प्राक् पश्चादभाववत् । नचैवमणूनां देशकृतं पौर्वापर्यं परिकल्पितं प्रचयाभावप्रसङ्गात् । किं च—न तावदहेतुकत्वं भावानां युक्तिमत्, नित्यं सत्त्वादिप्रसङ्गादिति । योऽपि सांवृतत्वं भावानां प्रतिपन्नस्तेनाप्यवश्यं सर्वभावानां सहेतुकत्वमेष्टव्यम् । सति च सहेतुकत्वे न तावत्समकाले कार्यकारणे युक्ते । नापि प्राक्कार्योत्पत्तेः, कारणस्यासत्त्वेनासामर्थ्यात् । पश्चादपि कार्ये समुत्पन्ने हेतोरनुपयोगात् । अतः प्राग्भावः सर्वहेतूनामवश्यमङ्गीकर्त्तव्यः । यथोक्तम्—"असतः प्रागसामर्थ्यात्पश्चाच्चानुपयोगतः । प्राग्भावः सर्वहेतूनां नातोऽर्थः स्वधिया सहे"ति । तदेवं निरंशत्वेऽपि सर्वभावानां न्यायतोऽवस्थितं कालकृतं पौर्वापर्यं देशकृतं तु कथं स्याद्यदि सावयवत्वं न स्यादिति चोद्यते । अथासत्यपि सावयवत्वे देशकृतं पौर्वापर्यं स्यात्, चित्तचैत्यानामपि स्यादविशेषादित्युक्तम् । मूर्त्तत्वकृतोऽस्ति विशेष इति चेन्न । तदेवासिद्धमसति सावयवत्वे । केवलं पर्यायेण सावयवत्वमेवोक्तं स्यात्, नान्यो विशेष इति यत्किंचिदेतत् । तस्मात्सर्वभावानां न्याय्ये कालकृते पौर्वापर्ये सति यदेतदपरमधिकं कस्यचिद्देशकृतं पौर्वापर्यं तत्सावयवत्वमन्तरेण न सम्भवतीति युक्तमुक्तम् । "दिग्भागभेदो यस्यास्ति तस्यैकत्वं न युज्यते" इत्यलं विस्तरेण ॥ १९९० ॥ १९९१ ॥ १९९२ ॥

अत्र केचिदाहुः—एवं तर्ह्यणीयांसः प्रदेशाः सन्तु परमाणवस्तत्राप्यवयवकल्पनायां पुनरपि प्रदेशानामेवाणुत्वं भविष्यति, यदि परमनवस्थैव, नतु पुनः सावयवत्वप्रसङ्गेन शक्यतेऽणूनां प्रज्ञप्तिसत्त्वमापादयितुम् । अथापि प्रज्ञप्तिसत्वम्, एवमपि नियमेनैव प्रज्ञप्त्युपादानमङ्गीकर्त्तव्यम् । यत्तत्प्रज्ञप्त्युपादानं तस्यैव परमाणुत्वं भविष्यति । अथासत्त्वमेवाणूनां साध्यते, एवमपि दिग्भागभेदादित्यसिद्धत्वं हेतोः । नहि खरविषाणादयोऽत्यन्तासन्तः पूर्वादिदिग्भागभेदवन्तो भवन्ति । नापीदं प्रसङ्गसाधनं दिग्भागभेदस्यानभ्युपगतत्वादिति । अत्र प्रतिविधानमाह—अपेतेत्यादि ।

अपेतभागभेदश्च यः परैरणुरिष्यते ।
तत्रैवेयं कृताचिन्ता नानिष्टासम्भवस्ततः ॥ १९९३ ॥
भागानां परमाणुत्व मङ्गीकुर्वन्ति ते यदा ।
स्वप्रतिज्ञाच्युतिस्तेषां तदाऽवश्यं प्रसज्यते ॥ १९९४ ॥
प्रसङ्गसाधनत्वेन नाश्रयासिद्धतेह च ।
पराभ्युपेतयोगादिबलादैक्यं ह्यपोह्यते ॥ १९९५ ॥
तदेवं सर्वपक्षेषु नैवैकात्मा स युज्यते ।
एकानिष्पत्तितोऽनेकस्वभावोऽपि न सम्भवी ॥ १९९६ ॥
असन्निश्चययोग्योऽतः परमाणुर्विपश्चिताम् ।
एकानेकस्वभावेन शून्यत्वाद्वियदब्जवत् ॥ १९९७ ॥

अवश्यं हि परिनिष्ठितरूपं किंचिद्वस्तु परमाणुत्वेन तद्वादिनाऽङ्गीकर्त्तव्यम् । अन्यथा ह्यनवस्थायामनवधारितरूपत्वादनुपाख्यत्वमेव स्वयं प्रतिपादितं स्यात् । ततश्चेष्टसिद्धिरेव परस्य कृता स्यात् । तस्माद्यदेव परिनिष्ठितं त्वया व्यवस्थापितमणुत्वेन तत्रैवानपाश्रितानवस्थाविकल्पे यदा चिन्ता क्रियते तदा कथमनवस्था, स्याद्यदि परमनवस्थया स्वाभ्युपगमविरोधः कृतः स्यात् । नतु परस्य किंचिदनिष्टमापादितम् । एतावतैव परस्येष्टसिद्धेः प्रसङ्गसाधनमेवेदम् । नचासिद्धता हेतोः । तथाहि परेण परमाणूनां संयुक्तत्वं नैरन्तर्यं तथा बहुभिः सान्तरैः परिवारणं चेत्यभ्युपगतमन्यथा कथं च प्रत्ययो भवेत्, ततश्च यद्यपि दिग्भागभेदो वाचा नाभ्युपगतस्तथापि संयुक्तत्वादिधर्माभ्युपगमबलादेवापतति । नह्यसत्यूर्द्धाधोभागादिभेदे संयुक्तत्वादिपक्षत्रयं युक्तं चित्तादिवदित्युक्तम् । यच्चोक्तमणुप्रज्ञप्तेरवश्यमुपादानमङ्गीकर्त्तव्यम्, यत्तदुपादानं स एव परमाणुर्भविष्यतीति । तदत्रास्त्येव मिथ्याशास्त्रश्रवणचिन्तनाहितवासनापरिपाको वातायनादिरेणुप्रतिभासा बुद्धिरणुभ्रान्तेर्निबन्धनम् । नहि य(त)त्प्रज्ञप्त्यां च तदेव कारणं युक्तमप्रज्ञप्तिसत्त्वप्रसङ्गादन्यथाऽऽत्मप्रज्ञप्तेरात्मैव कारणं स्यात्, न स्कन्धाः । ततश्चाणुवदात्मप्रतिषेधोऽपि न स्यात् । एवं तावदेकत्वं परमाणूनामसिद्धम् । तत्सन्देहात्मकत्वात्तस्येति नासिद्धोऽणूनामभावव्यवहारे साधनो हेतुः ॥ १९९३ ॥ १९९४ ॥ १९९५ ॥ १९९६ ॥ १९९७ ॥

एवं तावद्बाह्यार्थस्यानेकस्वभावरहितत्वं प्रसाध्येदानीमेकस्वभावरहितत्वं प्रसाधयन्नाह—**परमाणोरयोगाच्चे**त्यादि ।

**परमाणोरयोगाच्च न सन्नवयवी यतः ।**
**परमाणुभिरारब्धः स परैरुपगम्यते ॥ १९९८ ॥**

यैरप्यनारब्धः परमाणुभिस्स्थूल इष्टस्तेषां सोऽपि परमाणुवद्दिग्भागभिन्नत्वादेको न युक्तः, पाण्यादिकम्पादौ सर्वकम्पादिप्रसङ्गात् । स्पष्टत्वाद्बहुशश्चर्वितत्वान्न पृथक्तस्य दूषणमुक्तम् । तदेवं बाह्यार्थव्यवहारसाधने यदेकानेकस्वभावं न भवतीत्यादौ प्रयोगे नासिद्धो हेतुरिति सिद्धो बाह्यस्य पृथिव्यादेर्ग्राह्यस्यासद्व्यवहारस्तदसिद्धौ ग्राहकत्वमपि ज्ञानस्य तदपेक्षं कल्पितं नास्तीति सिद्धा विज्ञप्तिमात्रता ॥ १९९८ ॥

तदेवमर्थायोगाद्विज्ञप्तिमात्रतां प्रतिपाद्य सम्प्रति ग्राह्यग्राहकलक्षणवैधुर्यात्प्रतिपादयन्नाह—अनिर्भासमित्यादि ।

**अनिर्भासं सनिर्भासमन्यनिर्भासमेव च ।**
**विजानाति नच ज्ञानं बाह्यमर्थं कथञ्चन ॥ १९९९ ॥**

न निराकारेण नापि साकारेण नापि विषयाकारादन्याकारेण बाह्यस्य ग्रहणं युक्तम्, अन्यश्च प्रकारो नास्ति, तस्मादात्मसंवेदनमेव सदैव ज्ञानं सत्यपि बाह्ये सन्तानान्तर इति सिद्ध्यति विज्ञप्तिमात्रता । कैश्चिदन्याकारमपि ज्ञानमन्याकारस्यार्थस्य संवेदकमिष्टम् यथा किल पीताकारमपि ज्ञानं शुक्लशङ्खग्राहीति । यथाह कुमारिलः—"सर्वत्रालम्बनं बाह्यं देशकालान्यथात्मकम् । जन्मन्येकत्र भिन्ने वा सदा कालान्तरेऽपि च ॥" इति अतस्तृतीयं पक्षान्तरमाशङ्कितम् ॥ १९९९ ॥

ननु चात्मसंवेदनेऽप्येतेऽनिर्भासादयो विकल्पाः कस्मान्नावतरन्तीत्याह— विज्ञानमित्यादि ।

**विज्ञानं जडरूपेभ्यो व्यावृत्तमुपजायते ।**
**इयमेवात्मसंवित्तिरस्य याऽजडरूपता ॥ २००० ॥**

नहि ग्राहकभावेनात्मसंवेदनमभिप्रेतम्, किं तर्हि ? स्वयम्—प्रकृत्या प्रकाशात्मतया, नभस्तलवर्त्यालोकवत् ॥ २००० ॥

अथ कस्माद्ग्राह्यग्राहकभावेन नेष्यत इत्याह—क्रियाकारकभावेनेत्यादि ।

**क्रियाकारकभावेन न स्वसंवित्तिरस्य तु ।**
**एकस्यानंशरूपस्य त्रैरूप्यानुपपत्तितः ॥ २००१ ॥**
**तदस्य बोधरूपत्वाद्युक्तं तावत्स्ववेदनम् ।**
**परस्य त्वर्थरूपस्य तेन संवेदनं कथम् ॥ २००२ ॥**

त्रैरूप्यम्—वेद्यवेदकवित्तिभेदेन ॥ २००१ ॥ २००२ ॥

अथापि स्याद्ग्राह्यस्याप्यात्मसंवित्तिवद्भिनैव ग्राह्यग्राहकभावेन संवित्तिर्भविष्यतीत्याह—**नहि तद्रूपमित्यादि** ।

**नहि तद्रूपमन्यस्य येन तद्वेदने परम् ।**
**संवेद्येत विभिन्नत्वाद्भावानां परमार्थतः ॥ २००३ ॥**

यद्यप्यसदादिव्यावृत्त्या सदादिरूपमेकं भावेषु कल्प्यते तथाऽपि तस्य प्रतिपादनार्थम्, परमार्थतो भेदादेकत्वं नास्त्येवेत्याह—**परमार्थत** इति ॥ २००३ ॥

स्यादेतद्यदि नाम भिन्नो बाह्योऽर्थो ज्ञानात्, तथापि वेद्यो भविष्यति ज्ञानवदित्याह—**बोधरूपतयेत्यादि** ।

**बोधरूपतयोत्पत्तेर्ज्ञानं वेद्यं हि युज्यते ।**
**न त्वर्थो बोध उत्पन्नस्तदसौ वेद्यते कथम् ॥ २००४ ॥**

एवं स्वसंवेदनं प्रसाध्य, बाह्यस्येदानीं यथा निराकारेण ज्ञानेन वेदनमयुक्तं तथा प्रतिपादयन्नाह—**निर्भासीत्यादि** ।

**निर्भासिज्ञानपक्षे तु तयोर्भेदेऽपि तत्त्वतः ।**
**प्रतिबिम्बस्य ताद्रूप्याद्भाक्तं स्यादपि वेदनम् ॥ २००५ ॥**
**येन त्विष्टं न विज्ञानमर्थाकारोपरागवत् ।**
**तस्यायमपि नैवास्ति प्रकारो बाह्यवेदने ॥ २००६ ॥**

**प्रतिबिम्बस्येति** । ज्ञानाकारस्य । **ताद्रूप्यादिति** । सारूप्यात् । **भाक्तमिति** । अमुख्यम् । **अयमपीति** । अमुख्यस्ताद्रूप्यादुपकल्पितः ॥ २००५ ॥ २००६ ॥

अथापि स्याद्यथा खड्गो हस्त्यादिकं छिनत्ति, यथा वा वह्निर्दाह्यं दहति, न चैते खड्गादयो हस्त्यादिरूपाः, तथा ज्ञानमप्रतिपन्नविषयाकारमपि विषयं परिच्छेत्स्यतीति, एतत् स्यान्मतिरित्यादिना शङ्कते ।

**स्यान्मतिर्दन्तिदाह्यादेर्यथाऽसिज्वलनादयः ।**
**अताद्रूप्येऽपि कुर्वन्ति छेददाहाद्यदस्तथा ॥ २००७ ॥**

छेददाहादीत्येतदपेक्ष्य दन्तिदाह्यादेरिति षष्ठी । अद इति । एतज्ज्ञानम् । आदिशब्देन प्रदीपादयो नीलादीनां यथाप्रकाशका इत्यादि गृह्यते ॥ २००७ ॥

तदिदमित्यादिनोत्तरमाह ।

**तदिदं विषमं यस्मात्ते तथोत्पत्तिहेतवः।**
**सन्तस्तथाविधाः सिद्धा न ज्ञानं जनकं तथा ॥ २००८ ॥**

खड्गादयो हि हस्त्यादीनामुत्पादका एव सन्तो दाहकादित्वेन प्रसिद्धास्तथाहि—खड्गादिधाराभिघाते विश्लिष्टसन्धयो गजास्समुपजायन्ते तथा वह्निसम्पर्कादिन्धनमङ्गारादिरूपम्, एवं घटादयोऽप्यालोकवशाज्ज्ञानजननयोग्या भवन्ति, नत्वेवं ज्ञानेन विषयस्य कश्चिदुपकारः क्रियते, किन्तु विषयेणैव विज्ञानं विस्पष्टमुपजन्यत इति कथमकिंचित्करं तस्य वेदकं भवेत्। नच तत्कार्यत्वमेव तद्वेदकत्वं विज्ञानस्येति युक्तं कल्पयितुं माभूच्चक्षुरादिवेदकत्वमप्यस्येति ॥ २००८ ॥

भदन्तशुभगुप्तस्त्वाह—विज्ञानमनापन्नविषयाकारमपि विषयं प्रतिपद्यते तत्परिच्छेदरूपत्वात्, तस्मान्नाशङ्का कर्त्तव्या कथं परिच्छिनत्ति किंवत्परिच्छिनत्तीति। आह च—"कथं तद्ग्राहकं तच्चेत्तत्परिच्छेदलक्षणम्। विज्ञानं तेन नाशङ्का कथं तत्किंवदित्यपी"ति। तदत्राह—तत्परिच्छेदेत्यादि।

**तत्परिच्छेदरूपत्वं विज्ञानस्योपपद्यते।**
**ज्ञानरूपः परिच्छेदो यदि ग्राह्यस्य संभवेत् ॥ २००९ ॥**
**अन्यथा तु परिच्छेदरूपं ज्ञानमिति स्फुटम्।**
**वक्तव्यं नच निर्दिष्टमित्थमर्थस्य वेदनम् ॥ २०१० ॥**

सिद्धे हि व्यतिरिक्तार्थपरिच्छेदात्मकत्वे सति सर्वमेतत्स्यात्तदेव तु न सिद्धम्। तथाहि—न ज्ञानं सत्तामात्रेण परिच्छिनत्ति सर्वपरिच्छेदप्रसङ्गात्। नापि तत्कार्यतया, चक्षुरादेरपि परिच्छेदापत्तेः। नच साकारतेष्टा, येन ताद्रूप्यादविभक्तं भवेत्तत्संवेदकम्। तस्माद्ग्राह्यस्य यः परिच्छेदः स यदि ज्ञानरूपो भवेत्, एवं ज्ञानस्यार्थपरिच्छेदरूपत्वं भवेत्। अन्यथा कथमर्थपरिच्छेदरूपत्वं ज्ञानस्येति स्पष्टमभिधीयते। ततश्चार्थस्य परिच्छेदाव्यतिरेकात्तु ज्ञानात्मतैव जातेति सिद्धा विज्ञप्तिमात्रता। स्यादेतत्—कोऽप्यस्य विशेषोऽस्ति येनार्थमेव परिच्छिनत्ति न(स ?)चेदन्तया निर्देष्टुं न शक्यत इत्याह—**नच निर्दिष्टमित्थमर्थस्य वेदनमिति**। भवतीति विशेषः। यद्यप्यसाधारणं वस्तु सर्वमेव निर्देष्टुं न शक्यते, तथाप्युद्भावनासंवृत्त्या कथ्यत एव। अन्यथा हि रूपादीनामपि विशेषो न वक्तव्यः स्यात्। नचेत्थमनवधारितेन रूपेणार्थस्य संवेदनं ज्ञानमिति विस्पष्टमसंशयं निर्दिष्टं भवति। तस्मादनि-

रूपितेन रूपेण भावव्यवस्थाने सुव्यवस्थिता भावा इति यत्किंचिदेतत् ॥ २००९ ॥
॥ २०१० ॥

स्यादेतत्परिच्छेद्यार्थाभावे कस्यासौ परिच्छेदो भवेदित्याह—**परिच्छेदः स कस्येत्यादि** ।

**परिच्छेदः स कस्येति नच पर्यनुयोगभाक् ।**
**परिच्छेदः स तस्यात्मा सुखादेः साततादिवत् ॥ २०११ ॥**

आत्मैव हि स तस्य प्रकाशात्मतया परिच्छेद इत्युच्यते । यथा सुखादेः सातत्वेति, नहि सुखस्येति व्यतिरेकनिर्देशमात्रेण ततोऽन्या सा तथा भवेत् । तस्माद्यद्यपि नीलस्य परिच्छेदः पीतस्येति वा व्यतिरेकीव व्यपदेशस्तथापि स्वभाव एव स तथा नीलादिरूपेण प्रकाशमानत्वा(त्त)थोच्यते स्वसंवेदनरूपत्वाज्ज्ञानस्य ॥ २०११ ॥

अथ कोऽयं स्वसंविदर्थो यद्बलात्तथोच्यत इत्याह—**स्वरूपेत्यादि** ।

**स्वरूपवेदनायान्यद्वेदकं न व्यपेक्षते ।**
**नचाविदितमस्तीदमित्यर्थोऽयं स्वसंविदः ॥ २०१२ ॥**

**व्यापृतमित्यादिना** स्वरूपवेदनायान्यन्न व्यपेक्षत इत्यत्र कुमारिलश्चोद्यमाशङ्कते ।

**व्यापृतं ह्यर्थवित्तौ च नात्मानं ज्ञानमृच्छति ।**
**ततः प्रकाशकत्वेऽपि बोधायान्यत्प्रतीक्षते ॥ २०१३ ॥**

स ह्याह—यद्यपि ज्ञानं प्रकाशात्मकं, तथाप्यात्मप्रकाशनाय परमपेक्षते । नतु स्वयमात्मानमृच्छति—प्रतिपद्यते, तस्यार्थप्रकाशन एव व्यापृतत्वात् । नह्येकत्र व्यापृतस्य तदपरित्यागेनान्यत्र तदैव व्यापारणं युक्तम् ॥ २०१३ ॥

अत्र प्रदीपेन व्यभिचरितामाशङ्क्य पक्षान्तरमाह—**ईदृशमित्यादि** ।

**ईदृशं वा प्रकाशत्वं तस्यार्थानुभवात्मकम् ।**
**नचात्मानुभवोऽस्त्यस्येत्यात्मनो न प्रकाशकम् ॥ २०१४ ॥**

ननु चासत्यात्मप्रकाशात्मकत्वे बाह्यप्रकाशकत्वमप्यस्य कथं व्यवस्थाप्यत इत्याह—**सतीत्यादि** ।

**सति प्रकाशकत्वे च व्यवस्था दृश्यते यथा ।**
**रूपादौ चक्षुरादीनां तथाऽत्रापि भविष्यति ॥ २०१५ ॥**

यथा चक्षुरादीनां रूपादौ विषये प्रकाशकत्वव्यवस्थानमसत्यप्यात्मप्रकाशकत्वे, तथाऽत्रापि ज्ञाने भविष्यति ॥ २०१५ ॥

स्यादेतत्किमित्यात्मानमन्तरङ्गं परित्यज्य बाह्यमेव प्रकाशयतीत्याह—**प्रकाशकत्वमित्यादि** ।

**प्रकाशकत्वं बाह्योऽर्थे शक्त्यभावात्तु नात्मनि ।**
**शक्तिश्च सर्वभावानां नैवं पर्यनुयुज्यते ॥ २०१६ ॥**

किमित्यात्मप्रकाशने शक्तिर्नास्तीत्याह—**शक्तिश्च सर्वभावानामित्यादि** । यथाह—"अग्निर्दहति नाकाशं कोऽत्र पर्यनुयुज्यताम्" इति ॥ २०१६ ॥

**ननु चे**त्यादिना प्रतिविधत्ते ।

**ननु चार्थस्य संवित्तिर्ज्ञानमेवाभिधीयते ।**
**तस्यां तदात्मभूतायां को व्यापारोऽपरो भवेत् ॥ २०१७ ॥**

यदुक्तं व्यापृतं ह्यर्थवित्ताविति तदसंगतम्, नह्यर्थवित्तिरन्या ज्ञानात् । तथाहि वित्तिरुपलब्धिरर्थप्रतीतिर्विज्ञप्तिरिति ज्ञानमेवैतैः पर्यायैरभिधीयते । तस्यां चार्थवित्तौ तदात्मभूतायां—ज्ञानात्मभूतायां कीदृशोऽपरो ज्ञानस्यार्थसंवेदनात्मको व्यापारो भवेदात्म्यव्यतिरिक्तो येनार्थवित्तौ व्यापृतमिति भवेत् । न चात्मन्येव व्यापृतिर्युक्ता ॥ २०१७ ॥

स्यादेतज्ज्ञानात्मत्वमेवार्थवित्तेः कथं सिद्धं, येन पर्यायता ज्ञानार्थसंवित्त्योरित्याह—**अर्थस्यानुभवो** रूपमित्यादि ।

**अर्थस्यानुभवो रूपं (तच्च ज्ञा)नात्मकं यदि ।**
**तदर्थानुभवात्मत्वं ज्ञाने युक्तं नचास्ति तत् ॥ २०१८ ॥**
**उपेतार्थपरित्यागप्रसङ्गात्तस्य तु स्वतः ।**
**जातेऽप्यनुभवात्मत्वे नार्थवित्तिः प्रसिद्ध्यति ॥ २०१९ ॥**

अर्थस्यानुभवोऽवश्यं रूपं स्वभावोऽङ्गीकर्त्तव्यः । अन्यथा कथं तत्र ज्ञानं व्याप्रियेत । नह्यसति शशविषाणादौ कस्यचिद्व्यापारणं युक्तम् । ततश्च तदर्थानुभवात्मकं रूपं स्वभावो यदि ज्ञानादव्यतिरिक्तं भवेत्तदा ज्ञानेऽर्थानुभवात्मकत्वं यत्तदुक्तम्—ईदृशं वा प्रकाशत्वं तस्यार्थानुभवात्मकमिति, तद्युक्तं स्यात् । कदाचिन्निर्बध्यमानोऽर्थानुभवादव्यतिरिक्तं ज्ञानमभ्युपगच्छेदपि पर इत्याह—**नचास्ति तदिति** । तत्—ज्ञानादव्यतिरिक्तत्वमनुभवस्य । उपेतोऽर्थः—अभ्युपगतो ज्ञानस्यात्मसंवेदनविरहलक्षणः, तस्य परित्यागप्रसङ्गः । ज्ञानस्यार्थानुभवाव्यतिरेकाभ्युपगमे स्वसंवित्तिप्र-

सङ्गात् । स्यादेतन्नार्थानुभवात्मत्वाज्ज्ञानस्य प्रकाशकत्वमिष्टम्, किं तर्हि ?, अनुभवात्मत्वादेव केवलादित्याह—**तस्य तु स्वत** इत्यादि । तस्य—ज्ञानस्य । यद्यप्यनुभवात्मकत्वमेव केवलं जातं नार्थानुभवात्मत्वं तथा (च) नीलस्येयं संवित्तिर्न पीतस्येत्यादिभेदेनार्थसंवित्तिर्न सिद्ध्येत् ॥ २०१८ ॥ २०१९ ॥

किमिति न सिद्ध्येदित्याह—**नहि तत्रे**त्यादि ।

**नहि तत्र परस्यास्ति प्रत्यासत्तिर्निबन्धनम् ।**
**यथा साकारविज्ञानपक्षेऽर्थप्रतिबिम्बकम् ॥ २०२० ॥**

परस्येति । अनाकारज्ञानवादिनः । यस्येदं दर्शनमाकारवान्बाह्योऽर्थो निराकारा बुद्धिरिति ॥ २०२० ॥

ईदृशं वा प्रकाशत्वं तस्यार्थानुभवात्मकमित्यत्राह—**प्रकृत्ये**त्यादि ।

**प्रकृत्या जडरूपत्वान्नास्यात्मानुभवो यदि ।**
**ज्ञानसंवेदनाभावात्परार्थानुभवस्तदा(था ?) ॥ २०२१ ॥**

यदि विज्ञानं जडरूपतयाऽऽत्मानं न संवेदयते तदा तस्य स्वतोऽप्रत्यक्षत्वेऽर्थानुभवोऽप्यप्रत्यक्षतया न(इ ?)ष्टः स्यात् ॥ २०२१ ॥

स्यादेतद्यदि नाम ज्ञानमप्रत्यक्षम्, अर्थानुभवोऽपि किमित्यप्रत्यक्षो भवेत् । नहि रूपस्याप्रत्यक्षत्वे शब्दस्याप्यप्रत्यक्षता स्यादित्याह—**अर्थस्यानुभवो नामे**त्यादि ।

**अर्थस्यानुभवो नाम ज्ञानमेवाभिधीयते ।**
**तस्याप्रसिद्धिरूपत्वे प्रसिद्धिस्तस्य का परा ॥ २०२२ ॥**

न हि ज्ञानस्यान्यद्रूपं निर्द्धारयामोऽन्यत्रार्थानुभवात् । अनिर्द्धारयन्तः स्ववाचमन्यत्वं (स्वभावमन्यं तं ?) निश्चयं व्यवहरन्तः स्वपरानु(न् ?)विप्रलभेमहि । तस्य ज्ञानस्याप्रसिद्धरूपत्वे सति प्रसिद्धिस्तस्यार्थानुभवस्य का परा भवेत्, नैव काचित् ॥ २०२२ ॥

अथापि स्याज्ज्ञानान्तरेण तस्य सिद्धिर्भविष्यतीत्याह—**ज्ञानान्तरेणे**त्यादि ।

**ज्ञानान्तरेणानुभवे सोऽर्थः स्वानुभवे सति ।**
**प्र(अ ?)सिद्धः सिद्ध्यसंसिद्धेः कदा सिद्धो भवेत्पुनः २०२३**
**तज्ज्ञानज्ञानजातौ चेदसिद्धः स्वात्मसंविदि ।**
**परसंविदि सिद्धस्तु स इत्येतत्सुभाषितम् ॥ २०२४ ॥**

सिद्धेः—ज्ञानस्य, असिद्धेः। प्र(अ?)सिद्धव्यक्तिकं व्यक्तमिति (न) युज्यते। तथाहि—न तावदर्थस्य स्वानुभवकालेऽपि सिद्धिस्तदभिव्यक्तिस्वभावस्यानुभवस्य तदानीमसिद्धत्वात्कदा तस्य सिद्धिर्भविष्यतीति वक्तव्यम्। तज्ज्ञानज्ञानजातौ—अर्थज्ञानज्ञानोत्पत्तिकाले, सिद्धिर्भविष्यतीति चेत्। एतदतिसुभाषितम्। यो हि नाम स्वानुभवकाले न सिद्धः स कथमस्वा(न्या?)नुभवकाले सेत्स्यतीति॥ २०२३॥ ॥ २०२४॥

सिद्ध्यतु नाम यद्यनवस्था न भवेत्सा तु दुर्वारेति दर्शयन्नाह—**तस्याप्यनुभव** इत्यादि।

**तस्याप्यनुभवे(ऽसिद्धे?)प्रथमस्याप्यसिद्धता।**
**तत्रान्यसंविदुत्पत्तावनवस्था प्रसज्यते॥ २०२५॥**

**तस्ये**ति। द्वितीयस्यार्थज्ञानज्ञानस्य। **प्रथमस्ये**ति। अर्थानुभवस्य। **(अ)सिद्धते**ति। नास्य सिद्धिरस्तीत्यसिद्धस्तद्भावोऽसिद्धता॥ २०२५॥

किंच यदि ज्ञानान्तरेणानुभवोऽङ्गीक्रियते तदा तत्रापि ज्ञानान्तरे स्मृतिरुत्पद्यत एव ज्ञानज्ञानं ममोत्पन्नमिति, तस्याप्यपरेणानुभवो वक्तव्यः, नह्यननुभूते स्मृतिर्युक्ता, ततश्चेमा ज्ञानमालाः कोऽनन्यकर्मा जनयतीति वक्तव्यम्। न तावदर्थस्तस्य मूलज्ञानविषयत्वात्। नापीन्द्रियालोकौ तयोश्चक्षुर्ज्ञान एवोपयोगात्। नापि निर्निमित्ता, सदा सत्त्वादिप्रसङ्गात्। सैव पूर्वधीरुत्तरोत्तरां बुद्धिं जनयतीति चेदाह—**गोचरान्तरे**त्यादि।

**गोचरान्तरसंचारस्तथा न स्यात्स चेक्ष्यते।**
**गोचरान्तरसंचारे यदन्त्यं तत्स्वतोऽन्यतः॥ २०२६॥**
**न सि(द्ध्येत्तस्य चा)सिद्धौ सर्वेषामप्यसिद्धता।**
**अतश्चान्ध्यमशेषस्य जगतः संप्रसज्यते॥ २०२७॥**
**अन्त्यस्य तु स्वतःसिद्धावन्येषामपि सा ध्रुवम्।**
**ज्ञानत्वादन्यथा नैषां ज्ञानत्वं स्याद्घटादिवत्॥ २०२८॥**

एवं हि विषयान्तरसंचारो न प्राप्नोति, तथाहि—पूर्वपूर्वा बुद्धिरुत्तरोत्तरस्य ज्ञानस्य विषयभावेनावस्थिता प्रत्यासन्ना चोपादानकारणतया तां तादृशीमन्तरङ्गिकां त्यक्त्वा कथं च बहिरङ्गमर्थं गृह्णीयात्। नचाप्यर्थः सन्निहितोऽपि तां प्रतिरोद्धुं

समर्थस्तस्य बहिरङ्गत्वात् । अथ बहिरङ्गोऽपि सन् प्रतिबध्नीयात्तदा न कदाचित् कश्चिद्‌वृ(द्ध ?)द्धिमनुभवेत् । तथाहि—न काचिदवस्थाऽस्ति यस्यामर्थो न सन्निहित इति । स्मृतिरप्युच्छिन्ना स्यादनुभवाभावात् । किंच—येऽतीतादिविकल्पा विषयसन्निधानमन्तरेण भवन्ति तेषां संचारकारणाभावाद्विकल्पपरंपरायामासंसारमवस्थानान्न कस्यचिदर्थचिन्ता स्यात् । भवतु नामार्थान्तरसंचारोऽनुपपद्यमानोऽपि । तथाऽपि यत्तदन्यज्ज्ञानं तत्केनानुभूयेतेति वक्तव्यम् । अथ स्यात्—सैवोत्तरा बुद्धिरर्थान्तरग्राहिणी पूर्वां धियमर्थं चोभयमपि गृह्णातीति, तदेतदसम्यक् । तथाहि—यदा शब्दज्ञानादनन्तरं रूपग्राहि ज्ञानं भवति तदा तस्मिन्रूपग्राहिणि ज्ञाने शब्दज्ञानस्य प्रतिभासात्तदा रूढस्यापि शब्दस्य प्रतिभासः प्राप्नोति । यस्यापि निराकारज्ञानं तस्यापि न शब्दग्रहणमन्तरेण तद्ग्राहकस्य ग्रहणं युक्तम्, नहि दण्डग्रहणमन्तरेण तद्ग्राहकस्य दण्डिनो ग्रहणं न्याय्यमिति रूपग्राहिणि चक्षुर्ज्ञाने शब्दस्यापि प्रतिभासः स्यात् । तथा चिन्ताज्ञानेप्यकारादिविषयिणि यथोक्तनीत्याऽभिलापद्वयमेकस्मिन्नु(क्र)-क्रमेण स्यात् । तथाहि—यदेकारचिन्तासमनन्तरमकारं चिन्तयति तदा तदकारचिन्ताज्ञानमिकारग्राहकमपि चिन्तयतीति स्वज्ञानसमारूढस्येकाराभिलापस्याकाराभिलापिनि ज्ञाने प्रतिभासः प्राप्नोति । किंच—सर्वमेव वस्तु वारद्वयं प्रतिभासेत, स्वज्ञानकालेऽवभासनात् । न चैवं प्रतिभासोऽस्तीत्ययुक्तमुत्तरया बुद्ध्या द्वयोर्ग्रहणम् । अथापि स्यादेकमन्त्यं ज्ञानमननुभूतमस्मृतं चास्तां को दोषः स्यादित्याह—**गोचरान्तरसंचार** इति । स्वसंवित्तेरनभ्युपगमान्न स्वतः सिद्धता,(ना)पि परतः, अनवस्थादोषात्, तस्यान्तस्यासिद्धौ सत्यां पूर्वकस्याप्यसिद्धिः, अप्रत्यक्षोपलम्भकत्वात्, ततश्चार्थस्याप्यसिद्धिरिति न कदाचित्किंचिदुपलभ्येत । ततश्चान्ध्यमायातमशेषस्य जगतः । अथान्तस्य यथोक्तदोषभयात्स्वसंवित्त्या स्वत एव सिद्धिरभ्युपगम्यते तदा तद्वदेव सर्वस्य ज्ञानत्वाविशेषात्स्वसंविदस्तु । प्रयोगः—यज्ज्ञानं तदात्मबोधं प्रत्यनपेक्षितान्यव्यापारं ज्ञानत्वात्, अन्त्यज्ञानवत्, ज्ञानं च विवादास्पदीभूतं ज्ञानमिति स्वभावहेतुः । अन्यथा हि यत्स्वतो न सिद्धस्तस्य घटादिवज्जडरूपतया ज्ञानत्वमेव हीयेतेति बाधकं प्रमाणम् ॥ २०२६ ॥ २०२७ ॥ २०२८ ॥

सति प्रकाशकत्वे व्यवस्था दृश्यते यथेत्याह—**विज्ञानं जनयदित्यादि** ।

**विज्ञानं जनयद्रूपे चक्षुस्तस्य प्रकाशकम् ।**
**नतु तस्यावबोधत्वात्तज्ज्ञानेनास्य कोपमा ॥ २०२९ ॥**

रूपविषयं विज्ञानं जनयच्चक्षू रूपस्य प्रकाशकमुच्यते। विज्ञानं तु न किंचिद्रूपे करोति विरूपस्यैव ज्ञानकत्वात्। नचाकुर्वत्किंचित्प्रकाशकं युज्यतेऽतिप्रसङ्गात्। तस्मात्। उपमा—सादृश्यम्॥ २०२९॥

**यत्संवेदन**मित्यादिना नीलाद्याकारतद्धियोरभेदसाधनाय निराकारज्ञानवादिनं प्रति प्रमाणयति।

**यत्संवेदनमेव स्याद्यस्य संवेदनं ध्रुवम्।**
**तस्माद्व्यतिरिक्तं तत्ततो वा न विभिद्यते॥ २०३०॥**
**यथा नीलधियः स्वात्मा द्वितीयो वा यथोडुपः।**
**नीलधीवेदनं चेदं नीलाकारस्य वेदनात्॥ २०३१॥**

यस्य संवेदनं यत्संवेदनम्, तदेव यस्य संवेदनं नियमेन, नान्यत्, तस्मात्—प्रथमयच्छब्दवाच्यात्। अभिन्नं कृतमेकान्तेन। तत्—द्वितीयं यच्छब्दवाच्यम्। यद्वा विपर्ययेणाभेदः साध्यः। एतदुक्तं भवति। (यत्) यस्मादपृथक्संवेदनमेव तत्तस्मादभिन्नं, यथा नीलधीः स्वस्वभावात्। यथा वा तैमिरिकज्ञानप्रतिभासी द्वितीय उडुपः—चन्द्रमाः। नीलधीवेदनं चेदमिति पक्षधर्मोपसंहारः। धर्म्यत्र नीलाकारतद्धियौ। तयोरभिन्नत्वं साध्यधर्मः। यथोक्तः सहोपलम्भनियमो हेतुः। ईदृश एवाचार्यीये सहोपलम्भनियमादित्यादौ प्रयोगे हेत्वर्थोऽभिप्रेतः। तत्र भदन्तशुभगुप्तस्त्वाह—विरुद्धोऽयं हेतुर्यस्मात्—"सहशब्दश्च लोकेऽन्यो(स्या ?)न्नैवाने(न्ये ?)न विना क्वचित्। विरुद्धोऽयं ततो हेतुर्यद्यस्ति सहवेदनम्॥" इति। तदेतसम्यक्। यस्य विपक्ष एव भावः स विरुद्धो हेतुः। नचास्य विपक्ष एव, सपक्षेऽपि भावात्। तथाहि—चन्द्रद्वयस्य सहोपलम्भाभिमानोऽस्ति लोके, नच तयोर्भेदोऽस्ति परमार्थतः। अथच सह शशिद्वयोपलम्भात्सहेति वक्तारो भवन्ति। एवमिहापि ज्ञानाद्व्यतिरिक्तमपि बहिरिव भासमानमाकारं द्वितीयं कृत्वा कल्पितभेदनिबन्धनः सहशब्दः प्रयुक्तः। नहि सर्वः शाब्दो व्यवहारो यथावस्तुनिवेशी, येन सहशब्दप्रयोगमात्रेण वस्तुप्रतिबद्धस्य लिङ्गस्यान्यत्वं स्यात्, यतो विरुद्धो हेतुर्भवेत्। पुनः स एवाह—यदि सहशब्द एकार्थस्तदा हेतुरसिद्धः—तथाहि नटचन्द्रमल्लप्रेक्षासु नह्येकेनैवोपलम्भो नीलादेः। नापि नीलतदुपलम्भयोरेकेनैवोपलम्भः। तथाहि—नीलोपलम्भेऽपि तदुपलम्भानामन्यसन्तानगतानामनुपलम्भात्।

यदा च सत्त्वं प्राणभृतां सर्वे चित्तक्षणाः सर्वज्ञेनावसीयन्ते तदा कथमेकेनैवोपलम्भः सिद्धः स्यात् । किं चान्योपलम्भनिषेधे सत्येकोपलम्भनियमः सिद्ध्यति । नचान्योपलम्भप्रतिषेधसम्भवः, स्वभावविप्रकृष्टस्य विधिप्रतिषेधायोगात् । अथ सहशब्द एककालविवक्षया तदा बुद्धविज्ञेयचित्तेन चित्तचैत्तैश्च सर्वथाऽनैकान्तिकता हेतोः । यथा किल बुद्धस्य भगवतो यद्विज्ञेयं सन्तानान्तरचित्तं तस्य बुद्धज्ञानस्य च सहोपलम्भनियमेऽ(ऽप्य)स्त्येव च नानात्वम्, तथा चित्तचैत्तानां सत्यपि सहोपलम्भे नैकत्वमित्यतोऽनैकान्तिको हेतुरिति । तदेतत्सर्वमसम्यक् । न ह्यत्रैकेनैवोपलम्भ एकोपलम्भ इत्ययमर्थोऽभिप्रेतः । किं तर्हि ? । ज्ञानज्ञेययोः परस्परमेक एवोपलम्भो न पृथगिति । य एव हि ज्ञानोपलम्भः स एव ज्ञेयस्य य एव ज्ञेयस्य स एव ज्ञानस्येति यावत् । नच नटचन्द्रमल्लप्रेक्षासु कश्चिज्ज्ञानोपलम्भोऽस्ति यो न ज्ञेयोपलम्भकः ज्ञेयोपलम्भो वा न ज्ञानोपलम्भक इति कुतोऽसिद्धता । नापि संदिग्धासिद्धता । तथाहि—यदेवात्मसंवेदनं ज्ञानस्य तदेवार्थस्येति परेणापि बाह्यार्थवादिनाऽङ्गीकृतम् । एतेनैकस्यैवोपलम्भ एकोपलम्भ इत्येवं विकल्प्य योऽसिद्धतादोष उक्तः स तत्पक्षानङ्गीकृतेरेवापास्तो द्रष्टव्यः । नच बुद्धस्य भगवतश्चित्तेन परसन्तानवर्त्तिनश्चित्तक्षणा अवसीयते । तस्य भगवतः सर्वावरणविगमेन ग्राह्यग्राहककलङ्करहितत्वात् । यथोक्तम्—"ग्राह्यं न तस्य ग्रहणं न तेन ज्ञानान्तरग्राह्यतयापि शून्य" इ(मि ?)ति । अक्षुण्णविधानं त्वाधिपत्यमात्रेण । यथोक्तम्—पूर्वप्रणिधानाहितसततानाभोगवाहि परकार्यमिति सर्वार्थकारित्वात्सर्वज्ञ इष्यत इति वक्ष्यति । तस्मान्नासिद्धता हेतोरिति । ननु चाचार्यधर्मकीर्त्तिना "विषयस्य ज्ञानहेतुतयोपनिधिः प्रागुपलम्भः पश्चात्संवेदनस्येति चे"दित्येवं पूर्वपक्षमादर्शयता—एककालार्थः सहशब्दोऽत्र दर्शितो नत्वभेदार्थः, एककाले हि विवक्षिते कालभेदोपदर्शनं परस्य युक्तं नत्वभेदे सतीति चेन्न । कालभेदस्य वस्तुभेदेन व्याप्तत्वात्काल(भेदोप)दर्शनमुपलम्भे नानात्वप्रतिपादनार्थमेव सुतरां युक्तम्, व्याप्यस्य व्यापकाव्यभिचारात् । नापि बुद्धविज्ञेयचित्तेनानैकान्तिको हेतुः, नहि तत्रैकोपलम्भ(नियमोऽ)स्ति, पृथक् पृथक्संवेदनैरेव तस्य चित्तस्य संवेदनात् । अतएव चित्तविपर्ययविचारस्तेषामपि प्रत्येकमात्मन एव संवेदनात् । अथवा भवतु भगवच्चित्तेन परचित्तस्य संवेदनं तथापि नानैकान्तिकता । नियमेन व्यावर्त्तितत्वात् । ययोर्हि परस्परमुपलम्भनानात्वमपि सम्भवति तन्नियमेन व्यावर्त्तितं नतु पुनरुपलम्भानां सन्तानकाले भेदेन स्वलक्षणा-

(नां)नानात्वम्। तेनायमर्थो भवति—यदुपलम्भ एव यस्योपलम्भो नान्योऽपीति। नच भगवज्ज्ञानोपलम्भ एवान्यसन्तानगतचित्तोपलम्भो नाप्यन्यसन्तानगतचित्तोपलम्भ एव भगवज्ज्ञानोपलम्भः, अपि त्वन्योऽपि, पृथक्त्वस्य स्वस्यापि चित्तस्य संवेदनात्। अतएव न रूपालोकैर्व्यभिचारः। केवलस्याप्यालोकदर्शनात्। रूपस्याप्यालोकरहितस्य कैश्चित्प्राणिविशेषैरुपलम्भात्तस्माद्विपक्षे भावासम्भवान्नानैकान्तिको हेतुः ॥ २०३० ॥ २०३१ ॥

स्यादेतत्—यद्यपि विपक्षे सत्त्वं न निश्चितं, संदिग्धं तु, ततश्चानैकान्तो हेतुः संदिग्धविपक्षव्यावृत्तिकत्वात्। तथाहि—विषयविषयिभावेन नियतत्वादन्यथापि सहोपलम्भनियमः सम्भवत्येव, यतो ज्ञानस्य ग्राहक एव स्वभावो विषयग्रहणधर्मकत्वात्तस्य, विषयस्यापि तद्ग्राह्य एव स्वभावः, तयोश्चैकसामग्र्यधीनत्वान्नियतं सह भाविता। नच सहोत्पादाविशेषेऽपि चक्षुरादीनां विषयत्वप्रसङ्गस्तथाविधस्वभावाभावात्। तथाहि—सामग्र्या नीलादिविषयाध्यवसायरूपमेव ज्ञानं जन्यते न चक्षुराद्यध्यवसायरूपम्। नीलादिरपि तु तदध्यवसीयमानरूपो जनितो न चक्षुरादिरिति। आह च—"नान्योऽस्ति ग्राहको ज्ञानाच्चाक्षुषैर्विषयैर्विना। अतश्च सहसंवित्तिर्नाभेदान्नीलतद्धियोः ॥" "पूर्विकैव तु सामग्री प्रज्ञानं विषयक्षणम्। सा (आ ?) लोकरूपवत्कुर्याद्येन स्यात्सहवेदनम् ॥" इति। अत्राह—**न ज्ञानात्मे**त्यादि।

**न ज्ञानात्मा परात्मेति नीलधीवेदने कथम्।**
**नीलाकारस्य संवित्तिस्तयोर्नो चेदभिन्नता ॥ २०३२ ॥**

नहि व्यतिरिक्तस्य प्रतिबन्धमन्तरेण सहोपलम्भनियमो युक्तोऽतिप्रसङ्गात्। नचात्र व्यतिरिक्तस्य संवेदने कश्चित्प्रतिबन्धोऽस्ति। तथाहि—प्रतिबन्धोभवन्भवेत्तादात्म्यं तदुत्पत्तिर्वा। न तावत्तादात्म्यमत्र परेणेष्टम्, तस्यैव साध्यत्वात्। नापि तदुत्पत्तेः सहवेदनम्, सह भूतयोः कार्यकारणभावाभावात्। चक्षुरादीनामप्युपलब्धिप्रसङ्गाच्च। नापि पूर्वसामग्रीवशाद्यौगपद्यमात्रेण विषयविषयिभावः, चित्तचैत्तानां चक्षुरादीनां च परस्परं विषयविषयित्वप्रसङ्गात्। नापि सामग्र्या प्रतिनियतविषयविषयिरूपेण जनितत्वान्नातिप्रसङ्ग इति युक्तं वक्तुम्, विषयविषयित्वस्यैव विचार्यमाणत्वेनासिद्धत्वात्। सिद्धे हि प्रतिबन्धे विषयविषयिभावो युक्तो यावता स एव विषयविषयिभावव्यवस्थायां प्रतिबन्धो विचार्यते। नच तादात्म्यतदुत्पत्तिव्यतिरे-

केणापरः प्रतिबन्धोऽस्ति, यतो विषयविषयिभावः सिद्ध्येत् । नापि तादात्म्यतदुत्पत्तिभ्यां विषयविषयिभावो युक्त इति विचारितमतो न व्यतिरिक्तस्य कथंचित्सहोपलम्भोऽस्तीति कुतः संदिग्धविपक्षव्यावृत्तिकता हेतोः ॥ २०३२ ॥

द्वितीयमपि साकारतासिद्धये साधनमाह—**संवेदनमिदमि**त्यादि ।

**संवेदनमिदं सर्वं न चार्थान्तरगोचरम् ।**
**संवेदनं च (नीलस्य) स्वात्मसंवेदनं यथा ॥ २०३३ ॥**

यद्यत्संवेदनं तत्तज्ज्ञानान्नार्थान्तरविषयं यथाऽऽत्मसंवेदनं, संवेदनं चेदं नीलाद्याकारस्येति विरुद्धव्याप्तोपलब्धिः । अर्थान्तरगोचरत्वविरुद्धेनानर्थान्तरगोचरत्वेन संवेदनस्य व्याप्तत्वात् ॥ २०३३ ॥

तामेव व्याप्तिं साधयन्नाह—**मुख्यतोऽर्थमि**त्यादि ।

**मुख्यतोऽर्थं न गृह्णाति स्वस्वभावव्यवस्थितेः ।**
**अर्थाकारोपरागेण वियोगाच्च न भक्तितः ॥ २०३४ ॥**
**शुद्धस्फटिकसंकाशमर्थाकारैरनङ्कितम् ।**
**यैरिष्टं वेदनं कैश्चिदिदं तान्प्रति साधनम् ॥ २०३५ ॥**

निर्व्यापारत्वात्सर्वधर्माणां न परमार्थतः कस्यचित्केनचिद्ग्रहणं, केवलं प्रकाशरूपतया तथा प्रथमानं विज्ञानमात्मनो ग्राहकमुच्यते । नचैव मुख्यतोऽर्थस्य ग्राहकं ज्ञानं युक्तम्, सर्वभावानां स्वस्वभावव्यवस्थितेः, न हि तदात्मा यः सोऽपरस्यापि । स्यादेतत्—नहि मुख्यतो यादृशं ज्ञानस्यात्मसंवेदनं तादृगेवार्थस्येष्टम्, किं तर्हि ?, स्वाभासज्ञानजनकत्वमेवार्थस्य संवेद्यत्वम्, ततश्च यदि मुख्यं संवेदनं हेतुत्वेनोपादीयते तदा हेतोरसिद्धता, अथापि यथाकथंचित्संवेदनशब्दवाच्यतासाम्यात् । तथाऽपि न तथाविधादिष्टसिद्धिः, नहि गोशब्दसाम्याद्व्रयादीनां विषाणित्वसिद्धिः । अथ ज्ञानारूढं नीलाद्याकारं धर्मिणमाश्रित्य साकारज्ञानपक्षे द्विविधोऽपि हेतुरभिप्रेतस्तदा सिद्धसाध्यता । यथोक्तम्—साकारज्ञानपक्षे च तन्निर्भासस्य वेद्यता । तस्याभेदे च संसाध्ये सिद्धसाधनता भवेत् ॥ इत्येतत्सर्वं भदन्तशुभगुप्तस्य चोद्यमाशङ्क्याह—**अर्थाकारोपरागेणे**त्यादि । अर्थाकारोऽर्थसदृशश्चासावुपरागो निर्भासश्चेत्यर्थाकारोपरागः । इदमिति । द्विविधमपि साधनं निराकारवादिनं प्रतियतस्तेन न सिद्धसाध्यता, नाप्युपचारेणान्यस्य संवेदनमस्ति, उपचारनिबन्धनाभावात् ॥ २०३४ ॥ २०३५ ॥

एवं तावदनिर्भासं ज्ञानं न बाह्यमर्थं विजानातीति प्रतिपादितम् । नापि सनिर्भासमिति द्वितीयं पक्षमाश्रित्य प्रतिपादयन्नाह—**अस्तु तर्हीत्यादि** ।

**अस्तु तर्हि ससारूप्यं विज्ञानं बाह्यवेदकम् ।**
**तस्यापि सर्वथाऽयोगान्न युक्ता वेदकस्थितिः ॥ २०३६ ॥**

नहि भाविक आकारो युक्तो यतस्तद्वशादर्थव्यवस्थानं स्यात् । नचालीकेन साकारेणार्थः संविदितो भवेत्, भ्रान्तेऽपि ज्ञाने तथाविधस्य भावात् ॥ २०३६ ॥

कथमलीकत्वं साकाराणामिति चेदाह—**ज्ञानादित्यादि** ।

**ज्ञानादव्यतिरिक्तत्वान्नाकारबहुता भवेत् ।**
**ततश्च तद्बलेनास्ति नार्थसंवेदनस्थितिः ॥ २०३७ ॥**
**आकाराव्यतिरिक्तत्वात् ज्ञाने वाऽनेकता भवेत् ।**
**अन्यथा कथमेकत्वमनयोः परिकल्प्यते ॥ २०३८ ॥**

चित्रास्तरणदर्शने एकस्माज्ज्ञानादव्यतिरिक्तत्वाज्ज्ञानस्वरूपवदाकाराणां बहुता न प्राप्नोति । एवमाकाराव्यतिरिक्तत्वाज्ज्ञानस्याप्यनेकता प्राप्नोति । ये तु मन्यन्ते समानजातीयान्यपि ज्ञानान्याकारसङ्ख्यान्येव बहूनि चित्रास्तरणादिषु युगपत्समुद्भवन्त्येव विजातीयरूपशब्दादिज्ञानवदिति । ततश्च प्रसङ्गे सिद्धसाध्यतेति । तेषां चित्रास्तरणे यथा नीलादयो बहव आकाराः संवेद्यन्ते । एवमेकाकारेऽपि सितादाववार्गमध्यपरभागरूपा बहव आकारा इति तदात्मकं तत्रापि ज्ञानमनेकात्मकं प्राप्नोति । इष्यत एवेति चेत् । किमिदानीमेकं ज्ञानं भवतीति वक्तव्यम् । यदनवयवाणुविषयमिति चेत् । तदेतदनुभवविरुद्धम् । नहि क्वचिदनवयवमणुरूपं भासमानमालक्ष्यते ज्ञाने । नवाऽप्यमूर्त्तानां पौर्वापर्यावस्थानं देशकृतं युक्तम् । येन तस्य सत्यताप्रसिद्धयेऽनेकज्ञानकल्पना साध्वी स्यात् । देशवितानप्रतिभासस्यालीकत्वे कथमाकाराणां सत्यता स्यान्नहि देशवितानावस्थितनीलादिप्रतिभासव्यतिरेकेणान्यो नीलादिज्ञानाकारः संवेद्यते । अतोऽनेकज्ञानकल्पनावैयर्थ्यमेव ॥ २०३७ ॥ २०३८ ॥

दूषणान्तरमाह—**सर्वात्मनेत्यादि** ।

**सर्वात्मना च सारूप्ये ज्ञानेऽज्ञानादिता भवेत् ।**
**साम्ये केनचिदंशेन सर्वं स्यात्सर्ववेदकम् ॥ २०३९ ॥**

अज्ञानता—जडरूपत्वम् । आदिशब्देन नसरागता नसद्वेषतेत्यादि गृह्यते॥२०३९॥

अन्यनिर्भासमित्येतत्तृतीयं पक्षान्तरमाश्रित्याह—**अन्याकारमपी**त्यादि ।

**अन्याकारमपि ज्ञानं कथमन्यस्य वेदकम् ।**
**सर्वः स्यात्सर्वसंवेद्यो न हेतुश्च नियामकः ॥ २०४० ॥**

अथापि स्यात्—यज्ज्ञानं येन जनितं तत्तस्यैव संवेदकं भवेत्, तेन न सर्वः सर्वसंवेद्यो भविष्यतीत्याह—**न हेतुश्च नियामक** इति । चक्षुरादीनामपि संवेद्यत्वप्रसङ्गादिति भावः ॥ २०४० ॥

**यथाही**त्यादिना भदन्तशुभगुप्तस्य परिहारमाशङ्कते ।

**यथाहि भवतां ज्ञानं निराकारं च तत्त्वतः ।**
**वेत्ति चाभूतमाकारं भूतं सर्वं तथैव चेत् ॥ २०४१ ॥**

स ह्याह—यथैव भवतां विज्ञानवादिनां विज्ञानं परमार्थतो निराकारम् 'अधातुकनकाकाशशुद्धिवद्बुद्धिरिष्यत' इति वचनात्, अथ च तमाकारं वेत्ति, तथा बाह्यमपीति ॥ २०४१ ॥

अत्राह—**असाधारण**मित्यादि ।

**असाधारणमेवेदं स्वरूपं चित्तचैत्तयोः ।**
**संवेदनं ततोऽन्येषां न मुख्यं तत्कथश्चन ॥ २०४२ ॥**
**एकसामग्र्यधीनत्वं कार्यकारणतादि च ।**
**समाश्रित्य भवेन्नाम भाक्तं भूतस्य वेदनम् ॥ २०४३ ॥**
**नीरूप्यस्य तु भावस्य नैकसामग्र्यधीनता ।**
**नचान्यत्तेन नैवास्ति गौणमप्यस्य वेदनम् ॥ २०४४ ॥**

नह्यभूतस्य मुख्यसंवेदनमस्ति । तथाहि—यदेव प्रकाशात्मकमसाधारणमहङ्कारास्पदं सातादिरूपेण प्रथते रूपमात्मा चित्तचैत्तानां तदेव तेषां संवेदनं मुख्यम् । ततो ज्ञानात्मनोऽन्येषामभूताकाराणां न तन्मुख्यं संवेदनं युक्तम् । तेषामभूतत्वादेव । नापि गौणमुपचारनिमित्ताभावात् । तथाहि—एकसामग्र्यधीनत्वं, कार्यकारणभावः, आदिशब्देन सारूप्यम्, एतदुपचारनिबन्धनं भवेत् । न चाभूतस्यैतत्सर्वमस्ति । न चान्यदस्त्युपचारनिमित्तम् । केवलमविद्यावशादविषयमेवाभूताकारोपदर्शकं ज्ञानं भ्रान्तं जायते ॥ २०४२ ॥ २०४३ ॥ २०४४ ॥

स एव तर्हि विभ्रमोऽसत्याकारसंवेदने उपचारनिमित्तं भविष्यतीति चेत्, अत्राह—**अथवे**त्यादि ।

**अथवाऽभूतमाकारं वेत्तीति व्यपदिश्यते ।**
**विभ्रमान्न हि तत्त्वेन वेत्ति निर्विषयं हि तत् ॥ २०४५ ॥**
**त्वयाऽपि यदि विज्ञानमेवंभूतस्य वेदकम् ।**
**विभ्रमादुच्यते व्यासं व्यक्तं निर्विषयं तव ॥ २०४६ ॥**

तदिति । अभूताकाराविषयत्वेनोक्तं ज्ञानं । तथाहि—परमार्थतो नाभूताकारोऽस्ति वेद्यः, तस्य हि विधिना वेद्यत्वोपगमे भूतत्वप्रसङ्गात् ॥ २०४५ ॥ २०४६ ॥

पुनः स एवाह—"साकारं तन्निराकारं तुल्यकालमतुल्यजम् । इति बौद्धेऽपि विज्ञाने किं न चिन्ता प्रवर्त्तते ॥" इति । यथा साकारादिविज्ञानेन नार्थस्य ग्रहणं युक्तमिति चिन्ता क्रियते तथा भगवतोऽपि ज्ञानेनार्थस्य ग्रहणं प्रति किं न क्रियत इत्यत्राह—**साकार**मित्यादि ।

**साकारं तन्निराकारं युक्तं नान्यस्य वेदकम् ।**
**इति बौद्धेऽपि विज्ञाने न तु चिन्ता प्रवर्त्तते ॥ २०४७ ॥**

नहि भगवतो ज्ञानं तस्य ग्राहकमिष्यते येनात्रापि चिन्ता क्रियेत । यावता तस्य सर्वावरणविगमान्न ग्राह्यग्राहकविकल्पोऽस्तीतीष्टम् ॥ २०४७ ॥

ननु च यद्यपि बाह्योऽर्थो नास्ति ग्राह्यस्तथापि चित्तान्तरमस्त्येव सन्तानान्तरवर्त्ति, तद्भगवज्ज्ञानस्य किमिति ग्राह्यं न भवेत्, अत्राह—**अन्यरागादी**ति ।

**अन्यरागादिसंवित्तौ तत्सारूप्यसमुद्भवात् ।**
**प्राप्नोत्यावृतिसद्भाव औपलम्भिकदर्शने ॥ २०४८ ॥**

अन्यसन्तानवर्त्ति रागादिसंवेदनं हि यदि, परं सारूप्यादेव युक्तम्, नान्यथा, अतिप्रसङ्गात् । ततश्च यदि सर्वात्मना सारूप्यं तदा भगवतोऽपि ज्ञानं रक्तं स्यात् । एवं सति क्लेशावरणमप्रहीणं स्यादित्यावृतिसद्भावः प्राप्नोति । उपलम्भेन चरन्तीत्यौपलम्भिकास्तेषां दर्शने—मते । यद्वा—औपलम्भिके भगवतो दर्शने ज्ञानेऽभ्युपगम्यमाने सतीत्ययमर्थः । अथैकदेशेन सारूप्यं तथापि ग्र्याकारस्याप्रहीणत्वाज्ज्ञेयावरणसद्भावः प्राप्नोति, ग्राह्याकारकलङ्कितत्वात्, तथाह्येकस्य द्वैरूप्यं भाविकमयुक्तमिति तदवश्यं भ्रान्तं व्यवस्थापनीयम् । ततश्च भ्रान्तिबीजस्यादोषस्याल्पस्याप्रहाणादप्रहीणावरण एव भगवान्स्यात् ॥ २०४८ ॥

यदि न किंचिज्जानाति कथं तर्हि सर्वज्ञः स्यादित्याह—**कल्पपादपव**दित्यादि ।

**कल्पपादपवत्सर्वसङ्कल्पपवनैर्मुनिः ।**
**अकम्पोऽपि करोत्येव लोकानामर्थसम्पदम् ॥ २०४९ ॥**
**तेनादर्शनमप्याहुः सर्वे सर्वविदं जिनम् ।**
**अनाभोगेन निःशेषसर्ववित्कार्यसम्भवात् ॥ २०५० ॥**

अदर्शनमिति । नास्य दर्शनमुपलम्भोऽस्तीत्यदर्शनः । पूर्वप्रणिधानबलादनाभोगेन कल्पतभ(रु ?)वद्यथाभव्यमशेषजगदर्थसंपादनात्सर्वज्ञमाहुर्नोपलम्भबलात् । स्वभावान्तरस्य सर्वथाऽप्युपलम्भायोगात् ॥ २०४९ ॥ २०५० ॥

एवं बाह्यार्थनिषेधकं प्रमाणमभिधाय तत्साधकं परप्रणीतमुपाकर्तुमाह—**धिय** इत्यादि ।

**धियोऽसितादिरूपत्वे सा तस्यानुभवः कथम् ।**
**धियः सितादिरूपत्वे बाह्योऽर्थः किंप्रमाणकः ॥ २०५१ ॥**

तथाहि—प्रत्यक्षतो बाह्यार्थसिद्धिः स्यादनुमानतो वा, अन्यस्य प्रमाणस्य सतोऽत्रैवान्तर्भावात् । तत्र न तावत्प्रत्यक्षतः, तथाहि—प्रत्यक्षाभिमतेन ज्ञानेन निराकारेण वार्थस्य ग्रहणं स्यात्साकारेण वा । न तावन्निराकारेण, प्रत्यासत्तिनिबन्धनाभावात् । धियोऽसितादिरूपत्वे सति सा धीस्तस्यार्थस्यानुभवः कथं भवेत्, नैव भवेदिति प्रागुक्तम् । अथ साकारेण तथा, नीलाद्याकारस्यैवैकस्य ज्ञानगतस्योपलम्भाद्बाह्योऽर्थः परोक्ष एव भवेन्न प्रत्यक्षः । नहि द्वे नीले कदाचित्संवेद्येते, एकं ज्ञानप्रतिबिम्बकमपरं तदर्पकमित्येवं तावन्न प्रत्यक्षतः सिद्धिः ॥ २०५१ ॥

अनुमानतस्तर्हि सिद्धिरस्त्विति चेत् । अत्र भदन्तशुभगुप्तः प्रमाणयति । यो ज्ञानाकारः स संवादित्वे सति, तथाविधापरपदार्थजनितस्तद्यथा ग्राहक आकारो ज्ञानाकारश्चायमविप्लुतेन्द्रियस्य नीलादिप्रतिभासविशेषः संवादीति स्वभावहेतुः । तदिदमाशङ्कते—**नीलादी**त्यादि ।

**नीलादिप्रतिभासस्य संवादित्वेन साध्यते ।**
**ज्ञानाकारतया तुल्यजातीयाज्जन्म बोधवत् ॥ २०५२ ॥**

**संवादित्वेने**ति । इत्थंभूतलक्षणे तृतीया । संवादित्वेनोपलक्षिता या ज्ञानाकारता तया हेतुभूतया ज्ञानाकारस्य तुल्यजातीयाज्जन्म साध्यते । बोधवत्—ग्राहकाकारवदित्यर्थः ॥ २०५२ ॥

बाह्यार्थेत्यादिना दूषणमाह ।

**बाह्यार्थप्रापणं यद्वा तत्सामर्थ्यं यदीष्यते ।**
**संवादित्वमसिद्धं तद्बहिरर्थापलापिनः ॥ २०५३ ॥**
**अर्थक्रियावसाये चेत्प्रत्यये हेतुतेष्यते ।**
**संवादित्वं तथाऽप्येतन्निरालम्बेऽपि शक्यते ॥ २०५४ ॥**

तत्र यदि बाह्यार्थप्रापणं तत्प्रमाणशक्तिर्वा संवादित्वं हेतुविशेषणमभिप्रेतं तदा बहिरर्थापलापिनो विज्ञप्तिमात्रतावादिनस्तदसिद्धमित्यन्यतरासिद्धो हेतुः । अथाभिमतार्थक्रियावभासिप्रत्ययहेतुत्वं संवादित्वमिष्टं तदा विपर्यये बाधकप्रमाणानुपदर्शनात्संदिग्धविपक्षव्यावृत्तिकतेत्यनैकान्तिको हेतुः । निरालम्बेऽपि ज्ञाने तथाविधसंवादित्वाविरोधात् ॥ २०५३ ॥ २०५४ ॥

अविरोधमेव समर्थयितुमाह—**यथा बाह्यजलादीना**मिति ।

**यथा बाह्यजलादीनां सामर्थ्यं नियमो मतः ।**
**ज्ञानेष्वपि तथैवैते संविदोऽव्यतिरेकता(नः ?) ॥ २०५५ ॥**
**अनुमाप्रतिभासेन स्पष्टः साधारणोऽप्ययम् ।**
**स्पष्टं हुताशनादीनां रूपं तेन समं नहि ॥ २०५६ ॥**

किं चानुमानज्ञानप्रतिभासस्य सत्यपि निरालम्बत्वे संवादित्वमस्तीति निश्चितविपक्षसद्भावात्प्रमेयत्वादिवत्स्पष्टा साधारणानैकान्तिकता हेतोः । स्यादेतत्—असिद्धा निरालम्बनताऽनुमानविकल्पस्येत्याह—**स्पष्टं हुताशनादीना**मित्यादि । प्रयोगः—यद्यदाकारशून्यं न तत्तद्विषयम्, यथा रूपज्ञानं न शब्दविषयम्, बाह्याकारशून्यं चानुमानमानमिति व्यापकविरुद्धोपलब्धिः । नचासिद्धो हेतुः । तथाहि—स्पष्टं हुताशनादीनां यत्तद्रूपं न तत्तेन—अनुमानज्ञानाकारेण समम्—तुल्यम्, तस्यास्पष्टत्वात् । अन्यथा हि यथा प्रतिष्ठितेन तार्णपार्णादिभेदतो रूपेण प्रत्यक्षे ज्ञाने प्रत्यवभासते, तथैवानुमानज्ञानेऽपि भासेत, यावता प्रतिष्ठितं रूपमुत्सृज्य गमकानुगसामान्यरूपेणैव भासते परोक्षो बाह्यादिरनुमाने । न चैकस्याकारद्वयं सामान्यविशेषात्मकं परस्परविरुद्धं युक्तमिति प्राक्प्रतिपादितम् । नापि विरुद्धो हेतुः, सपक्षे भावात् । नाप्यनैकान्तिकोऽतिप्रसङ्गात् ॥ २०५५ ॥ २०५६ ॥

**प्रमेयत्वादिहेतुभ्य** इत्यादिनोद्योतकरस्य प्रमाणान्याशङ्कते ।

**प्रमेयत्वादिहेतुभ्यः सन्तानान्तरचित्तवित् ।**
**आन्तरानुभवाद्भिन्नं देशविच्छेदभासि चेत् ॥ २०५७ ॥**

सह्याह—यदेतद्देशविच्छेदप्रतिभासि नीलादिकं तदान्तरानुभवाद्भिन्नं प्रमेयत्वात्, अनित्यत्वात्, कार्यत्वात्, प्रत्ययत्वात्, हेतुमत्त्वात्, यथा सन्तानान्तरचित्तमिति ॥ २०५७ ॥

**अत्रापि व्यभिचारित्वं न रूपेणास्य चेतसः ।**
**तथापी(हि ?)तद्विचन्द्राद्यैरस्वस्थनयनेक्षितैः ॥ २०५८ ॥**

अत्रापीति । सर्वेष्वेव हेतुषु । व्यभिचारित्वम्—अनैकान्तिकत्वम् । आन्तरानुभवेऽपि प्रमेयत्वादीनां सद्भावात्, यथा—तैमिरिकादिज्ञाने प्रतिभासिभिर्द्विचन्द्राद्यैरनैकान्तिकता । प्रमेयत्वं तु द्विचन्द्रादीनां द्विचन्द्रादीति विकल्पकज्ञानविषयतया द्रष्टव्यम्। नच यस्मिन्विज्ञाने ते भासन्ते तदपेक्षया तेषामर्थाधि(ग)मो(ऽ)क्षाभावात् । यदाह—केशादिना योऽन(नायना ?)र्थाधि(ग)मो(ऽ)क्षत इति ॥ २०५८ ॥

अन्यथेत्यादिना कुमारिलस्य मतेन व्यभिचारविषयस्यासिद्धिमाशङ्कते ।

**अन्यथा बाह्य एवार्थः संवेद्यश्चेदिहोच्यते ।**
**आकारो भासमानोऽसौ न तदर्थात्मको ननु ॥ २०५९ ॥**
**स चैवम्भासमानत्वाद्विज्ञानेन प्रवेद्यते ।**
**बाह्यस्य तु निजं रूपं नैवं तत्रावभासते ॥ २०६० ॥**
**अभासमानो वेद्यश्च कथं नामोपपद्यते ।**
**तं च वेत्त्यन्यथा चेति परस्परविरोधि च ॥ २०६१ ॥**
**अतएव स्ववेद्यत्वं दुःसाध्यं नैव चेतसाम् ।**
**आत्मभूतावभासस्य तथा संवित्तिदर्शनात् ॥ २०६२ ॥**
**तस्माद्बुद्धिरियं भ्रान्ता कल्पयन्त्यर्थमेव न ।**
**कल्पयत्यन्यथासन्तं तेनात्मानमवइयति (वेक्षते ?)२०६३॥**

स ह्याह—इह पीतद्विचन्द्रादिज्ञाने व्यभिचारविषयत्वेनोपन्यस्तो बाह्य एव शङ्खादिरर्थः पीतादिरूपेणालम्ब्यते । ततो व्यभिचारो न सिद्ध इति । अत्राह—**आकार** इत्यादि । अयमत्र सङ्क्षेपार्थः—य एवाकारो यस्मिन् ज्ञाने प्रत्यवभासते स एव तेन संवेद्यत इति युक्तम्, अन्यथा हि सर्वं ज्ञानं सर्वविषयं स्यात् । प्रतिभासमानत्वेन

संवेद्यत्वं व्याप्तम् । नच पीताकारे ज्ञाने शुक्लाकारः प्रतिभासते, दृश्याभिमतस्यानुपलब्धेरिति व्यापकस्य प्रतिभासमानत्वस्य निवृत्तौ व्याप्यस्य संवेद्य(त्वस्य)निवृत्तिरिति । प्रयोगः—यो यस्मिन्नाकारो न प्रतिभासते न स संवेद्यः, यथा शब्दज्ञाने न रूपम्, न प्रतिभासते च पीताकारे ज्ञाते शुक्लशङ्खरूपमिति व्यापकानुपलब्धिः । **तं च वेत्तीत्यनेन** स्ववचनविरोधमाह । **अत एवेति** प्रसङ्गेन स्वसंवित्तिं साधयति । तेन यज्जैमिनीयैरिष्टम्—अप्रत्यक्षा नो बुद्धिर्निराकारा चेति तदपास्तं भवति । **तस्मादि**त्यादिनोपसंहारः । कल्पयन्ती सती, अर्थमेवान्यथा सन्तं कल्पयतीत्येवं नेति संबन्धः । अनेन च कुमारिलोक्तं प्रतिषेधति ॥ २०५९ ॥ २०६० ॥ २०६१ ॥ ॥ २०६२ ॥ २०६३ ॥

**अथे**त्यादिना कुमारिलस्यैव प्रमाणमालामाह ।

**अथ यद्ग्राहकं रूपे तद्ग्राह्यात्तस्य भिन्नता ।**
**तत्संवित्तावसंवित्ते रसादिग्राहकं यथा ॥ २०६४ ॥**
**ग्राह्यं तद्ग्राहकाच्चैवं तत्परामृशता यतः ।**
**न परामृश्यतेऽवश्यं रसादिग्राहकादिवत् ॥ २०६५ ॥**
**द्वयं परस्परेणैव भिन्नं साध्यं रसादिवत् ।**
**ऐक्यरूपेण वाऽज्ञानात्सन्तानान्तरबुद्धिवत् ॥ २०६६ ॥**
**ज्ञानं स्वांशं न गृह्णाति ज्ञानोत्पत्तेः स्वशक्तिवत् ।**
**ग्राह्यत्वप्रतिषेधश्च द्वयहीना हि वासना ॥ २०६७ ॥**
**चैत्रज्ञानं तदुद्भूतज्ञानांशग्राह्यबोधकम् ।**
**ज्ञानत्वान्न भवेद्यद्वत्तस्य देहान्तरोद्भवम् ॥ २०६८ ॥**

यदेतद्रूपे ग्राहकं ज्ञानं तत्तस्मात्तद्ग्राह्याद्रूपाद्भिन्नं तस्य रूपस्य संवित्तौ सत्यां तस्यासंवित्तेः, यथा रसादिग्राहकम् । यद्वा—ग्राह्यं रूपादि स्वग्राहकाद्भिन्नं तद्ग्राहकं परामृशता यतो यस्मान्न परामृश्यते, यथा रसादिग्राहकात् । अथवा—द्वयम्—रूपादि तद्ग्राहकं च परस्परविभिन्नम्, एकतरपरामर्शे सत्य(परस्या)परामर्शनात्, रसरूपादिवत् । एकत्वेनापरिज्ञानाद्वा, सन्तानान्तरचित्तवत् । अथवा—न स्वांशग्राहकं ज्ञानं ज्ञानादुत्पन्नत्वात् । वासनाख्ये(ख्या ?) च ज्ञानशक्तिः । एवं ज्ञानस्य ग्राह्यत्वप्रतिषेधोऽपि कर्त्तव्यस्तद्यथा—ज्ञानांशो न ज्ञानग्राह्यो ज्ञानादुत्पन्नत्वात् । कथम-

स्मिन्ननन्तरे प्रयोगद्वयेऽपि साध्यधर्मान्वितो दृष्टान्तः सिद्ध इत्याह—**द्वयहीना हि वासनेति** । द्वयेन ग्राह्यग्राहकत्वेन । अथवाऽपरः प्रयोगः—नचैतज्ज्ञानं चैत्रज्ञानोद्भूतज्ञानांशस्य बोधकं ज्ञानत्वात् । यद्वत्तस्य चैत्रज्ञानोद्भूतज्ञानांशस्य मैत्रादिदेहान्तरोद्भवं ज्ञानम् ॥ २०६४ ॥ २०६५ ॥ २०६६ ॥ २०६७ ॥ २०६८ ॥

**अपृथग्वेदना**दित्यादिना दूषणमाह ।

**अपृथग्वेदनात्पूर्वं तदत्र प्रतिपादितात् ।**
**ऐकरूप्यापरिज्ञानपर्यन्तेषु न सिद्धता ॥ २०६९ ॥**

अपृथग्वेदनादिति । नीलतद्धियोः सहोपलम्भनियमात् । अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिद्ध्यतीत्यतः स्वसंवित्प्रसाधनेन प्रतिपादितात्, अभेदस्य नीलतद्धियोः प्रसाधितत्वात्, ऐकरूप्यापरिज्ञानपर्यन्ता हेतवो न सिद्धाः ॥ २०६९ ॥

**सबहि**रित्यादिना परः सिद्धिमुद्भावयति ।

**सबहिर्देशसम्बद्ध इत्यनेन ननूच्यते ।**
**ग्राह्याकारस्य संवित्तिर्ग्राहकानुभवादृते ॥ २०७० ॥**

आकारवान्बाह्योऽर्थः स बहिर्देशसम्बद्धः प्रत्यक्षमुपलभ्यत इत्यनेन ग्रन्थेन भाष्यकृता शबरेण ग्राह्यसंवित्तिर्ग्राहकानुभवाद्विनापीति प्रतिपादितम् । ततश्च संवित्तावसंवित्तेरित्येतत्सिद्धम् ॥ २०७० ॥

द्वितीयादयोऽपि हेतवः कथं सिद्धा इत्यत आह—**न स्मरामीत्यादि** ।

**न स्मरामि मया कोऽपि गृहीतोऽर्थस्तदेति च ।**
**स्मरन्ति ग्राहकोत्पादं ग्राह्यरूपविवर्जितम् ॥ २०७१ ॥**
**तस्मादभिन्नतायां च ग्राह्येऽपि स्मरणं भवेत् ।**
**ग्राहकस्मृतिसद्भावे तत्र त्वेवैष गृह्यते ॥ २०७२ ॥**
**अन्वयव्यतिरेकाभ्यां सिद्धैवं भिन्नता तयोः ।**
**एवं च हेतवोऽप्येते प्रसिद्धाः साध्यधर्मिणि ॥ २०७३ ॥**

ग्राह्यास्मरणेऽपि ग्राहकस्मृतिर्दृष्टा, यदि च तस्माद्ग्राहकादेकान्तेन ग्राह्यस्याभिन्नता स्यात्तदा ग्राह्येऽपि स्मरणं भवेत्, ग्राहकवत्, नच भवति, तस्माद्भिन्नयोगक्षेमत्वाद्भिन्नौ ग्राह्यग्राहकौ। स्यादेतद्भवत्येव ग्राह्येऽपि स्मरणमित्याह—**ग्राहकस्मृतिसद्भाव** इत्यादि । **तत्रेति** । ग्राहकस्मृतिसद्भावकाले । एष एव—ग्राहक एव गृह्यते, न ग्राह्यमित्येवकारो

भिन्नक्रमः । अन्वयव्यतिरेकाभ्यामिति । ग्राह्यग्राहकस्मरणयोर्भावाभावाभ्याम् । तथाहि—ग्राहकस्मरणभावेऽपि ग्राह्यस्मृतेरभावः ॥ २०७१ ॥ २०७२॥ २०७३ ॥

अप्रसिद्धोपलम्भस्येत्यादिना प्रतिविधत्ते ।

**अप्रसिद्धोपलम्भस्य नार्थवित्तिः प्रसिद्ध्यति ।**
**तन्न ग्राह्यस्य संवित्तिर्ग्राहकानुभवादृते ॥ २०७४ ॥**

स बहिर्देशसम्बन्धः प्रत्यक्षमुपलभ्यत इत्यस्यानैकान्तिकतामाह—अस्वस्थेत्यादि ।

**अस्वस्थलोचनैर्दृष्टं तथा पीताद्यवेक्ष्यते ।**
**निष्कृष्टं ग्राहकांशाच्च संवेद्यं न तथा परम् ॥ २०७५ ॥**

निष्कृष्टमित्यत्र छेदः । तथेति । यथा सत्याभिमतं पीतादि बहिर्देशसम्बद्धं विस्पष्टमुपलभ्यते, तथा कामलाद्युपहतनयनोपलब्धमपि समीक्ष्येत । यदि नाम समीक्ष्यते ततः किमित्याह—ग्राहकांशाच्च संवेद्यं नेति छेदः । ग्राहकांशादिति । निष्कृष्टमित्यध्याहार्यम् । संवेद्यं नेति भवतीति शेषः । तेनायमर्थो भवति—तच्च पीतादि तैमिरिकाद्युपलब्धं ग्राहकांशान्निष्कृष्टं पृथक्संवेद्यं न भवति, अथ च बहिर्देशसम्बद्धमुपलभ्यते, तस्मादनैकान्तिकमेतत् । तथा परमिति । सत्याभिमतमपि पीतादि । अनेन विच्छिन्नस्पष्टप्रतिभासमात्रेण द्वयोरपि साम्यं योजयति ॥ २०७५ ॥

न स्मरामि मया कोऽपीत्यत्राह—अलक्षितेत्यादि ।

**अलक्षितविशेषा च बाह्यरूपे च सा स्मृतिः ।**
**सर्वतो भिन्नरूपे तु न साऽभ्यासाद्यसम्भवात् ॥ २०७६ ॥**

अनेन ग्राहकस्मरणे ग्राह्यास्मरणस्यासिद्धिमाह । स्यादेतत्—यदि ग्राह्ये सा स्मृतिः किमित्यलक्षितविशेषा भवति । यावता यथैव तद्ग्राह्यं सर्वतः सजातीयविजातीयाद्भिन्नं तथैव तत्स्मरेत् । एवं हि तद्विषयता तस्याः स्यात्, अन्यथा कथमगृह्णती तद्भेदं तद्विषया भवेत्, अतिप्रसङ्गादित्याह—सर्वत इत्यादि । एतदुक्तं भवति । न तावद्विकल्पस्य यथाऽवस्थितवस्तुग्रहणसामर्थ्यं, तस्यावस्तुविषयत्वात् । केवलं तथाभूतपदार्थानुभवबलाद्यत्रैवार्थित्वादयो निश्चयहेतवः सन्ति तत्र तदाकाराध्यवसायी स्मार्त्तः प्रत्ययो निर्विषय एव । परमार्थतः स्वप्रतिभासेऽनर्थेऽर्थाध्यवसायेन प्रवृत्तेर्भ्रान्त एव सर्वो जायते । तस्य त्वध्यवसायवशेन विषयव्यवस्था, न परमार्थतः । नच ग्राह्याध्यवसायः स्मृतेरपि विद्यते, केवलं तथाविधाभ्यासपाटवादेरप्रत्यासत्ति-

तारतम्यादिकारणाभावादलक्षितविशेषा भवति, येन स्मरणान्तराद्विशिष्यते ॥२०७६॥

स्यादेतत्कथमवसीयते ग्राह्याध्यवसायोऽत्रास्ति स्मृतेरित्याह—**गृहीत** इत्यादि ।

**गृहीत इति कोऽप्येवं नान्यथा स्मरणं भवेत् ।**
**शुद्धस्फटिकसंकाशं वेद्यते स्मरणं नच ॥ २०७७ ॥**
**कम्बुपीतादिविज्ञानैर्हेतोः पश्चिमयोरपि ।**
**अनैकान्तिकता व्यक्तं दिगेषाऽन्यत्र साधने ॥ २०७८ ॥**

यदि ह्यनुपलक्षितविशेषं ग्राह्यमपि सा स्मृतिर्नाध्यवस्येत्, तदा कोऽपि गृहीत इत्येवमपि सामान्याकारेण ग्राह्यप्रत्यवमर्शने न प्रवर्त्तेत । नचापि केवलो ग्राह्याकारानङ्कितमूर्त्तितया ग्राहकः शुद्धस्फटिकसंकाशः स्मर्यते । येनोच्यते—"स्मरन्ति ग्राहकोत्पादं ग्राह्यरूपविवर्जितम्" इति । तस्मात्तत्स्मरणे तदस्मरणमसिद्धम् ॥ यौ च ज्ञानोत्पत्तेर्ज्ञानत्वादितीमौ पश्चिमौ हेतू तयोः पीतशङ्खादिज्ञानं ज्ञानोत्पन्नमपि सत्त्वांशं पीताद्याकारं गृह्णाति, यथा च ज्ञानमपि सत् ज्ञानांशस्य पीतादेर्ग्राह्यस्य बोधकं भवति, तथाऽन्यदपीति व्यभिचारिता हेत्वोः । साधितं च पीतशङ्खादिज्ञानस्य निरालम्बनत्वम्, अतएवात्मगतस्य पीताद्याकारस्य वेदनात्स्वसंवेदनं सिद्धमित्येतदपि प्रतिपादितम् । **एषा दिगिति** । अन्यत्रापि—बहिरर्थसाधने परोपन्यस्ते, एषा—दूषणदिक् । यदुक्तं परेण–कथमद्वयं साध्यत्वेनेष्टम्, किं भासमानस्य नीलाद्याकारस्य ज्ञानरूपस्य च अनुभवसिद्धस्याभावात्कथमिदं नाम योज्यते तथासति सर्वाभावप्रसङ्गः स्यात् । अत्र वक्तव्यम् । न सर्वाभावो यस्मात्स्वव्यतिरिक्तस्य ग्राह्यस्य पृथिव्यादेः स्वलक्षणतोऽसत्वात् । सन्तानान्तरस्य तु ग्राह्यरूपेणाभावात् ग्राह्याकारशून्यं तदपेक्ष्य प्रकल्पितं तु यद्विज्ञानस्य कर्तृत्वं विजानातीति विज्ञानमिति कृत्वा तस्याभावाद्ग्राहकाकारशून्यं, न तु विज्ञानस्वलक्षणस्यापि, सर्वस्य सर्वेणाभावात् । तथाचोक्तम्—"नीलपीतादि यज्ज्ञाने बहिर्वदवभासते । तत्र सत्यमतो नास्ति विज्ञेयं तत्त्वतो बहिः ॥ तदपेक्षा च संवित्तेर्मता या कर्तृरूपता । सा न सत्यमतः संविद्द्वयेऽपि विभाव्यत" इति । एवं च कृत्वा, अयमपि प्रज्ञापारमितापाठः सुनीतो भवति—"विज्ञानं विज्ञानस्वभावेन शून्यं लक्षणशून्यतामुपादाये"ति ॥ २०७७ ॥ ॥ २०७८ ॥

एवं—यद्यज्ज्ञानमित्यादौ मौले प्रयोगे हेतोः साध्येन व्याप्तिं प्रसाध्योपसंहरति—**विवादास्पदमित्यादि** ।

**विवादास्पदमारूढं विज्ञानत्वादतो मनः ।**
**अद्वयं वेद्यकर्तृत्ववियोगात्प्रतिबिम्बवत् ॥ २०७९ ॥**

विवादास्पदविशेषणेनैतदाह—स्वस्थनेत्रादिविज्ञानमत्र विशेषः साध्यधर्मी, न सर्वः, सामान्यं तु विज्ञानत्वादिति हेतुः, तेन न प्रतिज्ञार्थैकदेशता हेतोरिति । वेद्यकर्तृत्ववियोगादित्यद्वयत्वविशेषणम् । वेद्यकर्तृत्वद्वयविरहेणाद्वयमिष्टम्, न तु सर्वथाऽभावादित्यर्थः । **प्रतिबिम्बव**दिति । विषयिणि विषयोपचारात्प्रतिबिम्बज्ञानं प्रतिबिम्बशब्देनोक्तम् । यद्वा—सप्तम्यन्ताद्वतिः कर्त्तव्यः—तेन ज्ञानमेव सामर्थ्यादाधेयतया लभ्यते । न चासिद्धो हेतुर्भेदान्तरप्रतिक्षेपेण स्वभावस्यैव तथा निर्देशान्न ज्ञातृत्वस्य । नापि विरुद्धः सपक्षे भावात् ॥ २०७९ ॥

**ननु चे**त्यादिनाऽपरो दृष्टान्तस्य साध्यविकलतामुद्भावयति ।

**ननु च प्रतिबिम्बेऽपि ज्ञानं सालम्बनं मतम् ।**
**चक्षूरश्मिनिवृत्तौ हि स्वमुखादेस्तथेक्षणात् ॥ २०८० ॥**

यस्मान्नायना रश्मयो दर्पणादितलप्रतिहता निवर्त्तमानाः स्वमुखादिना सम्बध्यन्ते ततस्ते तथा मुखादिप्रतीतिहेतवो भवन्ति । अतः स्वमुखादेरेव तथा दर्पणाद्यन्तर्गतादिरूपेणेक्षणं भवति । ततश्च न प्रतिबिम्बज्ञानं ग्राह्यग्राहकद्वयरहितं सिद्धम् ॥२०८०॥

**नाभिमुख्येने**त्यादिना प्रतिविधत्ते ।

**नाभिमुख्येन तद्दृष्टेः स्वमुखादेस्तथेक्षणम् ।**
**प्रमाणदेशभेदादिदृष्टेश्चान्यपदार्थवत् ॥ २०८१ ॥**

न स्वमुखादेस्तथेक्षणमाभिमुख्येन तस्य स्वमुखादेर्दर्शनात् । तद्देशप्रमाणवर्णादिभेदेन दृष्टेश्च न स्वमुखादेस्तथेक्षणमिति सम्बन्धः । **अन्यपदार्थव**दिति । शब्दादिपदार्थवत् । एतदुक्तं भवति—(यदि) मुखादिग्राहकं तज्ज्ञानं स्यात्तदा यथैव तन्मुखादि व्यवस्थितं तथैव गृह्णीयात्, नह्यन्याकारस्य ज्ञानस्यान्यद्ग्राह्यं युक्तमतिप्रसङ्गात् । यावता दक्षिणाभिमुखस्थितो दर्पणतलं निभालयन्नुत्तराभिमुखं स्वमुखं पश्यति । तथाऽल्पीयसि दर्पणतले महतोऽपि स्वमुखस्याल्पप्रतिबिम्बकमुपलभ्यते तथा दर्पणतलसम्बद्धं दूराधःप्रविष्टमिवेक्ष्यते । नच तावद्बहलं तथाऽऽदर्शतलं नापि मुखादि तत्सम्बद्धम् । तथा विमलसलिले सरसि तटान्तस्थितशाखिशिखरिणां प्रतिबिम्बान्यधोगतशाखादिशिखरशेखराण्युपलभ्यन्ते, नच ते तथास्थिताः । तस्मात्प्रतिबिम्बज्ञानं स्वमुखादिग्राहकं तद्विलक्षणप्रतिभासित्वात् शब्दज्ञानवत् ॥ २०८१ ॥

भदन्तशुभगुप्तस्त्वाह—"धीमात्रत्वेन संसाध्ये यज्ज्ञानत्वादिसाधनम् । विजातीयाविरुद्धत्वात्सर्वं शेषवदुच्यते ॥" इति, तं प्रत्याह—विज्ञानत्वमित्यादि ।

**विज्ञानत्वं प्रकाशत्वं तच्च ग्राह्ये निरास्पदम् ।**
**अनिर्भासाद्ययोगेन व्याप्तिस्तेनास्य निश्चिता ॥ २०८२ ॥**
**शक्तावनन्तरे ज्ञाने ग्राह्यांशे विषयस्थितिः ।**
**तात्त्विकी नेष्यतेऽस्माभिस्तेन मानं समर्थ्यते ॥ २०८३ ॥**
**विज्ञप्तिमात्रतासिद्धिर्धीमद्भिर्विमलीकृता ।**
**अस्माभिस्तद्दिशा यातं परमार्थविनिश्चये ॥ २०८४ ॥**

## इति बहिरर्थपरीक्षा ।

पूर्वमेव हि—'अनिर्भासं सनिर्भास'मित्यादिना व्याप्तेः प्रसाधितत्वात् नानैकान्तिको हेतुः । आचार्यदिङ्नागपादैरालम्बनप्रत्ययव्यवस्थार्थमुक्तम्—"यदन्तर्ज्ञेयरूपं तु बहिर्वदवभासते । सोऽर्थो (वि) ज्ञानरूपत्वात्तत्प्रत्ययतयाऽपि च ॥" इति । अनेन हि ग्राह्यांशे विषयव्यवस्था प्रतिपादिता । पुनरप्युक्तम्—"अथवा शक्त्यर्पणात्क्रमेणापि सोऽर्थावभासः स्वानुरूपकार्योत्पत्तये शक्तिं विज्ञानाचारां करोतीत्यविरोध".इति । अनेनानन्तरज्ञाने स्वानुरूपकार्योत्पत्तिनिमित्तशक्तिसमर्पणात्कारणत्वं च तस्य प्रतिभासस्य समर्थितम् ॥ अत्र तेनैव भदन्तेन दूषणमुक्तम्—"यद्यपीन्द्रियविज्ञप्तेर्ग्राह्यांशः करणं भवेत् । अतदाभतया तस्या नाक्षवद्विषयः स तु ॥" इत्यादिना। अत्राह—**शक्तावि**त्यादि । शक्तावनन्तरे ज्ञान इति व्यधिकरणसप्तम्यौ । **अनन्तरे ज्ञान** इति । समनन्तरप्रत्यये आलयाख्ये, या शक्तिस्तथाविधार्थप्रतिभासप्रत्ययसमर्थिता । **तात्त्विकी नेष्यत** इति । यतः परमाण्वादेर्व्यतिरिक्तस्यालम्बनत्वं न युज्यत इति विस्तरेण ( प्रतिपादितम् ) प्रतिपाद्या(दितं चा ?)चार्येण—"माभूत्सर्वथाऽऽलम्बनप्रतिषेधे प्रतीतिबाधा, तथा—आलम्बनाधिपतिसमनन्तरहेतुप्रत्ययत्व-(स्व ?)लक्षणाश्चतस्रः प्रत्ययिता इति सूत्रे वचनादभ्युपेतबाधापीति, अविरोधप्रतिपादनाय यथाविध आलम्बनप्रत्ययोऽभिप्रेतः सूत्रे लोके च तथा प्रतिपादितं संवृत्त्या। न परमार्थतः। परमार्थतस्तु निरालम्बनाः सर्व एव प्रत्यया" इति॥२०८२॥ ॥ २०८३ ॥ २०८४ ॥

## इति बहिरर्थपरीक्षा ।

# तत्त्वसंग्रहप्रथमभागस्य शुद्धिपत्रम् ।



| पत्र. | प. | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| २ | १८ | त्पन्नभेदात् | ऽत्यन्तभेदात् |
| १८ | २७ | तुल्यसत्त्वे | तुल्येऽसत्त्वे |
| ३१ | १८ | मध्यारोपितं | मनध्यारोपितं |
| ४१ | २४ | महत्त्वादनेक | महदनेक |
| ४२ | १६ | तत्वादीना | तन्वादीना |
| ,, | १८ | ,, | ,, |
| ४३ | ७ | त्प्रबृद्धानां | त्प्रबुद्धानां |
| ,, | ९ | अपराणू | अपराण्वु |
| ४५ | ७ | महत्यनेक | महदनेक |
| ४६ | १६ | स्मार्तभेद | स्मार्तमभे |
| ४७ | २४ | नतु | तनु |
| ४९ | १४ | ( त्वेन ? ) | त्वस्य |
| ,, | ,, | पूर्वकत्वमेव | पूर्वकत्वेन |
| ५३ | १८ | विमत | विगत |
| ५६ | १९ | येतु | येषु |
| ५९ | १ | कल्पिते | कल्प्यते |
| ६२ | ८ | स्वभाव | स्वतोभाव |
| ६६ | २२ | कथं न | कथं नु |
| ६९ | ५ | निधानतः | सिधानतः |
| ७० | ११ | निश्चयः | निश्चयैः |
| ७१ | २२ | अन्योन्य | अन्यान्य |
| ७६ | २७ | प्रागनुकम्पा | प्रागनुकम्प्या |
| ७८ | ८ | परः | परं |
| ७९ | १७ | कैवर्त्तः । | कैवर्त्तः ॥ १६९ ॥ |
| ,, | १९ | यति ॥ १६९ ॥ | यति— |
| ८० | १६ | प्रशस्तमिता | प्रमिता |
| ,, | २६ | तत्वादि | तन्वादि |
| ,, | २८ | ,, | ,, |
| ८३ | ४ | परि | पर |

*

| पत्र. | प. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ८३ | ५ | वित्त | चित्त |
| ८८ | २३ | सङ्गतो | ऽसङ्गतो |
| ८९ | २१ | यश्चाप्याह | यच्चाप्याह |
| ९१ | २७ | जीवशरीर | जीवच्छरीर |
| ९५ | १७ | नाशेहि | नाशेऽस्य |
| ,, | २७ | सुतत्त | वतस्त |
| ९६ | ३ | परित्यक्त | अपरित्यक्त |
| ९६ | २६ | तद्ग्राह्यो | तद्ग्राह्यो |
| ९७ | २४ | श्चायो | ग्राह्यो |
| ९८ | १ | योऽह | योऽतीताह |
| १०० | १२ | भेदउपा | भेदेऽनुपा |
| १०२ | २५ | इत्यर्थः । | इत्यर्थः ॥ १५६ ॥ |
| ,, | २६ | त्राह ॥ १५६ ॥ | त्राह— |
| १०५ | १७ | शून्यो | शून्ये |
| ,, | २३ | ,, | ,, |
| १०८ | ३ | स्वात्तद्यु | त्वे न ह्यु |
| ११२ | १९ | पुरष | पुरुषे |
| ११९ | १७ | भावादि | भावादविशेषादि |
| १२१ | २७ | उदययव्य | उदयव्यय |
| १२६ | ९ | भवतो | भगवतो |
| १२९ | १० | पृष्टे नो | पृष्टेनो |
| ,, | १९ | यचोक्तम् | यथोक्तम् |
| ,, | ,, | दृष्टि | दंष्ट्रि |
| ,, | २७ | मात् । प | मात्पर |
| १३४ | १ | भवा | भावा |
| १३४ | १३ | माचरणाद्यपि | मावरणाद्यपि |
| १३५ | ८ | वस्तुनै | वस्तुतै |
| १३७ | २१ | विधेः | विधिः |
| १४० | १८ | ऽनश्वर | नश्वर |
| १४३ | २ | प्रत्यययो | प्रत्ययो |
| ,, | ११ | साधनयन्ना | साधयन्ना |
| ,, | २१ | क्रिया कृता | क्रियाकृतः |

| पत्र. | प. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १४६ | १८ | तादात्म्येन | तादात्म्यं न |
| ,, | २४ | ततस्तस्यो | यदि ततस्तस्यो |
| १४९ | ८ | क्षयेक्षणात् | क्रमेक्षणात् |
| १५३ | १२ | सिद्धेरजाता | सिद्धेरजातौ |
| १५७ | २५ | साभिलाषं | साभिलापं |
| ,, | २७ | प्रत्येकं | प्रत्यक्षं |
| १५८ | ४ | ,, | ,, |
| ,, | ६ | मतिजल्पा | मन्तर्जल्पा |
| ,, | ११ | दर्शिष्यत | दर्यिष्यत |
| १६३ | १० | वर्त्तमानल | वर्त्तमानैकल |
| १६४ | ७ | धर्मिणोः स | धर्मिणोऽस |
| १७४ | ९ | यत्तत्कार्यं | यत्नः कार्यः |
| ,, | २५ | तत्कार्यं क्षण | तत्कार्यक्षण |
| १७५ | ८ | जन्मतो | जन्मनो |
| १७७ | २२ | तद्भावि | तद्भावभावि |
| १८३ | २० | क्षणिकात्म | क्षणिकानात्म |
| ,, | २४ | सपदि नश्यति | संपरिसेत्स्यति |
| १८४ | २१ | निर्मुक्ति | मुक्ति |
| १८६ | ३ | अनित्या | तेनित्या |
| १९६ | १४ | न निश्चीयते | निश्चीयते |
| १९९ | ५ | मिष्यते । | मिष्यते ॥ ५९६ ॥ ५९७ ॥ ५९८ ॥ |
| २०२ | २६ | धर्म | धर्मि |
| २१८ | २७ | तौ च चेदिह | तौ न चेदिह |
| २३८ | १४ | गोतत्त्वा | गोतश्वा |
| ,, | १५ | श्चैव | श्चैत्र |
| २५३ | १७ | हस्तित्वादिव | हस्तित्वादि न |
| २५९ | ११ | तथैव | तदेव |
| २६१ | ८ | सर्वं | असर्वे |
| २७७ | ४ | सङ्केत | सङ्केता |
| २८१ | २५ | नान्या सत्त्वावयवानां | नानासत्त्वानां |
| २८५ | २३ | ननु | नतु |
| २८८ | २ | त्रुटि | बुद्धि |

| पत्र. | प. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २८९ | २ | स्वभाव | स्वभावा |
| २९० | ७ | तथामतो | तथाऽसतो |
| २९१ | ८ | रितिशब्दोऽयंभवे | रित्ययं शब्दः कृतार्थोऽ |
| ,, | १४ | नत्वि | नन्वि |
| ,, | १५ | नतु | ननु |
| ,, | १६ | ज्ञानं | ज्ञाने |
| २९२ | ३ | वाच्यं | गोत्वं |
| ,, | ११ | त्माऽभावः | त्मा भावः |
| २९३ | १२ | शब्दार्थौ | शब्दार्थो |
| २९४ | १९ | वाक्यार्थः प्रतिभालक्षणो | बाह्येऽर्थे वाक्यार्थः प्रतिभा |
| २९४ | २८ | विधिरूपावसायिनी | नान्यमंशं बिभर्त्ति सा |
| २९५ | ११ | तो हि सः | तात्मनाम् |
| ,, | २० | द्वस्तु | द्वस्त्व |
| २९६ | २३ | अत एवा | अनवाप्त |
| ,, | ,, | यद्विमत्य | यत्किमप्य |
| २९९ | २६ | भवतां च | गम्यतां च |
| ३०० | ४ | एकस्मान्नहि | एकस्मात्तर्हि |
| ३०३ | २६ | वाच्यत्वं न | वाच्यत्वान्न |
| ३०५ | ६ | न वासत्ता | न चासत्ता |
| ३०६ | ५ | यथा नैव | यथा चैवं |
| ३०९ | २४ | अथाप्य | अथान्या |
| ३१४ | २७ | अगौ | अगो |
| ३१५ | ६ | प्रतिषेधायगौ | प्रतिषेधायागो |
| ३१६ | १५ | समवायिनः | समवायिताः |
| ,, | १६ | स्त्वत्र कः परः | ऽसूत्रकः पटः |
| ,, | २४ | तुष्टा | नष्टा |
| ३१९ | ६ | शब्दप्रति | शब्दः प्रति |
| ३२० | १ | शब्दस्यापोहोऽभि | शब्दस्यापोहो नाभि |
| ३२० | ३ | एतदन्य | अन्य |
| ३२३ | १४ | बाह्यार्थे | वाक्यार्थे |
| ,, | १६ | ,, | ,, |

# शुद्धिपत्रम् ।

| पत्र. | प. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३३० | ११ | तस्यैव | तस्य |
| ३३५ | ३ | यदाधी | यदाचा |
| ३३६ | १६ | न चासत्स | न चासत्ता |
| ३५८ | ५ | यस्तेषां | मस्तेषां |
| ३६९ | १८ | करोति नः | करोति न |
| ३७२ | १३ | मया | मता |
| ,, | १४ | सिद्धिरूपां | द्विरूपां |
| ३७७ | ७ | यपि चाप्यस्य | यदिवा यस्य |
| ,, | १० | विशिष्टार्थं | विशिष्टार्थ |
| ,, | १५ | यद्रपं | यद्रूप |
| ३७९ | १८ | सम्भवि— | सम्भवि |
| ३८६ | १७ | मात्रे | मार्गे |
| ३९६ | १८ | शाता शाता | सातासाता |
| ४०५ | २४ | सहेतुतता | सुहेतुता |
| ४०७ | १८ | त्याषु | त्यान्येषु |
| ४१५ | २० | शब्दादि | शब्ददीपादि |
| ,, | | त्रिलक्षणे | त्रिलक्षणो |
| ४१९ | १३ | दृष्टंते | दृष्टान्ते |
| ४२४ | २ | न्तेन । अत्र | न्तेनात्र |
| ४२८ | २७ | ( दा? ) | |
| ४३१ | १७ | मूल्योः | मूलायाः |
| ४३२ | २६ | चेच्चकु | चेद्वक्तु |
| ४३३ | २ | ना शक्त | नवक्तुः |
| ,, | ,, | नतु | नतु |
| ,, | ६ | सक्त | वक्तुः |
| ,, | ,, | ,, | ,, |
| ,, | २२ | ख्याति | ख्यानि |
| ४५८ | १३ | दृष्टान्तेन | दृष्टं तेन |
| ४९१ | ५ | लक्षणात्त | लक्षणात |
| ४९५ | २ | ( तास्थिता? ) | |
| ५०४ | ६ | रूपाद्वि | रूपादि |
| ५०६ | १७ | पुरुषा | पुरुष |
| ५०७ | २१ | चा(था?)भ | धात |

| पत्र. | प. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५१९ | ११ | सन्नतिं | सन्ततिं |
| ५२१ | २१ | भेद | देह |
| ५२२ | ८ | ज्ञानाधारश्च | ज्ञानाधारस्व |
| ५२३ | २२ | पुनरुक्त | पुनरुक्तं |
| ५२४ | ११ | तत्राहेतु | तच्चाहेतु |
| ५३२ | १५ | मिव | मिदं |
| ५३३ | १९ | भावे | भासे |
| ,, | २२ | जन्य | अन्य |
| ५३९ | १५ | ज्ञानं | यानं |
| ५४३ | ५ | मरणान्त | मरणानन्त |
| ,, | १० | कथं सि | कथं न सि |
| ,, | ११ | देहे | देहे, |
| ,, | १२ | धातौ, | धातौ |
| ५४४ | १३ | विंद्वेषा | विद्वेषा |
| ५४७ | २३ | नमस्कार | मनस्कार |
| ५५० | २३ | प्रतिवादिसन्निभमित्येतत् | |
| ,, | ७ | प्रतिवादि | प्रतिबिम्बादि |
| ,, | ,, | मित्येतत् । प्र | मित्येतत्प्र |
| ,, | २१ | यथोक्तम् | यच्चोक्तम् |
| ५५१ | २१ | स्वातन्त्र्येणा | स्वातन्त्र्ये ना |
| ,, | २६ | तेषां | नैषां |
| ,, | २७ | ते मूर्ता | तेऽमूर्त्ता |
| ५५२ | १८ | समस्त्वे | समस्त्ये |
| ५५७ | १५ | पर्यंस्यात् | पर्यं यदि स्यात् |
| ५६१ | ३ | दाहका | छेदका |
| ,, | ११ | कथं तद्वा | कथञ्चिद्वा |
| | २५ | विशेष | शेषः |
| ५६२ | ८ | सा तथा | सातता |
| ५८० | २५ | द्वयेपि | द्वयेति |
| ,, | २७ | यद्यज्ञा | यद्यत् ज्ञान |
| ५८१ | २८ | बिम्बज्ञानं सु | बिम्बज्ञानं न सु |
| ५८२ | १४ | विज्ञानाचारां | विज्ञानाधारां |